# THE ŚIŚUPÁLA BADHA,

OR

# DEATH OF ŚIŚUPÁLA;

ALSO ENTITLED THE

# MÁGHA CÁVYA,

OR

Epick Poem

OF

*MÁGHA;*

IN TWENTY CANTOS:

*WITH A COMMENTARY,*

BY

MALLI NÁTHA.

EDITED BY

VIDYÁ CARA MISRA, *and* ŚYÁMA LÁLA, *Pundits.*

PUBLISHED WITH THE SANCTION AND PATRONAGE OF THE COLLEGE OF FORT WILLIAM.

Calcutta:

*PRINTED BY P. PEREIRA, AT THE HINDOOSTANEE PRESS.*

1815.

# ADVERTISEMENT,

FROM THE

TENTH VOLUME

OF THE

*ASIATICK RESEARCHES.*

THE work now published is an Epick Poem, the subject of which is the death of S'ISU'PA'LA slain in war by CRĬSHN'A: it is entitled *S'isupála-bad'ha*, but is usually cited under the name of its author, whose designation, with praises of his family, appears in the concluding stanzas of the poem. Yet, if tradition may be trusted, MA'G'HA, though expressly named as the author, was the patron, not the poet. As the subject is heroick, and even the unity of action well preserved, and the style of the composition elevated, this poem is entitled to the name of epick.

THE argument of the poem is as follows: in the first canto, NA'REDA, commissioned by INDRA, visits CRĬSHN'A and incites him to war with his cousin, but mortal enemy, S'ISUPA'LA king of the *Chédis*. In the second, CRĬSHN'A consults with his uncle and brother, whether war should

be immediately commenced, or he should first assist YUD'HISHT'HIRA in completing a solemn sacrifice which had been appointed by him: the result of the consultation is in favour of the latter measure: and accordingly, in the 3d canto, CRĬSHN'A, departs for YUD'HISHT'HIRA's capital. In the thirteenth he arrives and is welcomed by the PA'N'DAVAS. In the following canto, the sacrifice is begun; and, in the next, S'IS'UPA'LA impatient of the divine honours paid to CRĬSHN'A retires with his partisans from the place of sacrifice. A negociation ensues; which is however ineffectual, and both armies prepare for action. This occupies two cantos. In the eighteenth both armies issue to the field of battle, and the conflict commences. The battle continues in the next canto, which describes the discomfiture and slaughter of S'IS'UPA'LA's army. In the last canto, the king grown desperate, dares CRĬSHN'A to the combat. They engage, and in the *Indian* manner fight with supernatural weapons. S'IS'UPA'LA assails his enemy with serpents, which the other destroys by means of gigantic cranes. The king has recourse to igneous arms, which CRĬSHN'A extinguishes by a neptunian weapon. The combat is prolonged with other miraculous arms, and finally CRĬSHN'A slays S'IS'UPA'LA with an arrow.

COLEBROOKE *on Sanscrit and Prácrĭt Prosody.*

॥ काव्यनाम ॥

॥ शिशुपालवध ॥

॥ —❁— ॥

॥ कविनाम ॥

॥ माघ ॥

॥ टीकानाम ॥

॥ सर्वङ्कषा ॥

॥ टीकाकारनाम ॥

॥ मल्लिनाथ ॥

॥ १ ॥

अत्र काव्ये सर्ग संख्या ॥

॥ विंशति २० ॥

॥ —❁— ॥

अत्र काव्ये मूल श्लोकसंख्या

॥ चतुरधिकअशीतिषट्शताधिकसहस्रम् १६८४ ॥

॥ —❁— ॥

॥ अत्र भगवतः श्रीवासुदेवस्य शिशुपालवधः फलम् ॥

॥—❁—॥ ॥—❁—॥ ॥—❁—॥

॥ शाकेशैलाग्निसप्तेन्दुसम्मितेदायनोत्तमे ॥

शाके १७३७ ॥

युग्मर्षिगजभूमानेविक्रमादित्यवत्सरे

सम्बत् १८७२ ॥

॥ द्विवेदिनेत्रधरणीसम्मितेयवनाब्दके ॥

॥ सन १२२२ ॥

॥ शुक्रस्यासितेपक्षेदशमीभृगुवासरे ॥

नगरेकलिकत्ताख्येकालीजस्याथचाज्ञया ।
ओयिल्सेन्साहेबस्यापिसाहित्येनपुनस्तदा ॥ १ ॥
श्रीविद्याकरमिश्रेणापूर्वार्द्धंशोधितंमुदा ।
शेषार्द्धंशोधयित्वाथश्यामलालेनधीमता ॥ २ ॥
शिशुपालवधाख्येहिकाव्यंटीकासमन्वितम् ।
हिन्दुस्थान्याःग्रन्थकुर्व्यांन्यासितम्मुद्रिकाक्षरैः ॥ ३ ॥

बाणमहीवसुभूमानेअङ्गरेजस्यापिवत्सरे ।
जुनाख्येमासिषोडश्यांन्यासितंग्रंथमुत्तमम् ॥ १ ॥
सन १८८५ इसवी ताः १६ जुन




॥ ॐ ॥ श्रीगणेशायनमः ॥ इन्दीवरदलश्याममिन्दिरानन्दकन्दलम् । वन्दारुजनमन्दारंवन्देऽहंयदुनन्दनम् ॥ १ ॥ दन्ताचलेनधरणीतलमुन्नमय्यपातालकेलिषुधृतादिवराहलीलम् । उल्लाघनोत्फणफणाधरगीयमानक्रीडापदानमिभराजमुखंनमामः ॥ २ ॥ शारदाशारदाम्भोजवदनावदनाम्बुजे । सर्वदासर्वदास्माकंसन्निधिंसन्निधिंक्रियात् ॥ ३ ॥ मल्लिनाथसुधीस्सोऽयंमहोपाध्यायशब्दिकः । विधत्तेमाघकाव्यस्यव्याख्यांसर्वङ्कषाभिधाम् ॥ ४ ॥ येशब्दार्थपरीक्षणप्रणयिनोयेवागुणालंक्रियाशिक्षाकौतुकिनोविहर्त्तुमनसोयेचध्वनेरध्वगाः । क्षुभ्यद्भावतरङ्गिनेरससुधापूरेनिमज्जन्तियेतेषामेवकृतेकरोमिविवृतिंमाघस्यसर्वंकषाम् ॥ ५ ॥ नेतास्मिन्यदुनन्दनःसभगवान्वीरःप्रधानोरसःशृङ्गारादिभिरङ्गवान्विजयतेपूर्णापुनर्वर्णना । इन्द्रप्रस्थगमाद्युपायविषयैश्चैद्यावसादःफलन्धन्योमाघकविर्वयन्तुकृतिनस्तत्सूक्तिसंसेवनात् ॥ ६ ॥ इहान्वयमुखेनैवसर्वंव्याख्यायतेमया । नामूलंलिख्यतेकिञ्चिन्नानपेक्षितमुच्यते ॥ ७ ॥ अथतत्रभवान्माघकविः । काव्यंयशसेऽर्थकृतेव्यवहारविदेशिवेतरक्षतये । सद्यःपरनिर्वृतयेकान्तासंमिततयोपदेशयुजे । इत्यालङ्कारिकवचनप्रामाण्यात् । काव्यस्यानेकश्रेयःसाधनताङ्काव्यालापांश्चवर्जयेदितिनिषेधस्यासत्काव्यविषयताञ्चपश्यन् । शिशुपालवधाख्यंकाव्यंचिकीर्षुःचिकीर्षितार्थाविघ्नपरिसमाप्तिसम्प्रदायाविच्छेदलक्षणफलसाधनत्वात् । आशीर्नमस्क्रियावस्तुनिर्देशोवापितन्मुखमित्याशीराद्यन्यतमस्यप्रबन्धमुखलक्षणत्वाच्च । काव्यफलंशिशुपालवध

वीजरूपंभगवतः श्रीकृष्णस्यनारददर्शनरूपंवस्तुआदौश्रीशब्दप्रयोगपूर्वकंनिर्दिशन्क थामुपक्षिपति । श्रियइति । अत्रादौश्रीशब्दप्रयोगाद्वर्णगणादिशुद्धिरभ्युदयः । तदुक्तम् । देवतावाचकाःशब्दायेचभद्रादिवाचकाः । तेसर्वेनैवनिंद्याःस्युर्लिपितोवर्णतो पिवेति ॥ श्रियःलक्ष्म्याःपतिः ॥ अनेनरुक्मिणीरूपयाश्रियासमेतइतिसूचितम् । रा घवत्वेभवत्सीतारुक्मिणीकृष्णजन्मनीतिविष्णुपुराणात् । जगन्निवासोजगतामाधारःकुक्षि स्थाऽखिलभुवनइतियावत् । तथापिजगत्लोकंशासितुंदुष्टनिग्रहशिष्टानुग्रहाभ्यांनि यन्तुम् । श्रीमतिलक्ष्मीयुक्ते । वसुदेवसद्मनिवसुदेवरूपिणःकश्यपस्यवेश्मनि । वसन् कृष्णरूपेणतिष्ठन् । हरिर्विष्णुः । अम्बरादवतरन्तमायान्तं । इन्द्रस्तन्देशकथनार्थमि

॥ श्रीगणेशायनमः ॥ श्रियःपतिःश्रीमतिशासितु
ञ्जगज्जगन्निवासोवसुदेवसद्मनि । वसन्ददर्शावत
रन्तमम्बराद्धिरण्यगर्भाङ्गभुवंमुनिंहरिः ॥ १॥

तिभावः । हिरण्यस्यगर्भोहिरण्यगर्भोब्रह्माब्रह्माण्डप्रभवत्वात्तस्याङ्गभुवंतनूजं । अथ वातस्याङ्गादवयवादुत्सङ्गाख्याद्भवतीतिहिरण्यगर्भाङ्गभूःतंमुनिंनारदमित्यर्थः । उत्स ङ्गान्नारदोजज्ञेदक्षोऽङ्गुष्ठात्स्वयंभुवइतिभागवतात् । ददर्शकदाचिदितिशेषः । अत्रा त्मीयेपिवसुदेवसद्मनिसकलजगदाश्रयतयामहीयसोहरेराधेयत्वकथनादधिकप्रभेदोऽ लङ्कारः । तदुक्तम् । आधाराधेययोरानुरूप्याभावोऽधिकोमतइति । जगन्निवासस्यज गदेकदेशनिवासित्वमितिविरोधश्च । तथातकारस्कारादेःकेवलस्यासकृदावृत्त्याजगज्ज गदितिसद्मद्मन्नितिद्वयसादृश्याच्चवृत्त्यनुप्रासभेदौशब्दालङ्कारौ । एषाञ्चान्योन्यनैरपेक्ष्ये णैकत्रसमावेशात्तिलतण्डुलवत्संसृष्टिः । सर्गेऽस्मिन्वंशस्थवृत्तम् । जतौतुवंशस्थमुदी रितंजराविनिलक्षणात् ॥ १ ॥ ************************ ॥

गदानीष्णुनैर्विस्मयादीक्षितुम्प्रवृत्तमित्याह ॥ गतमिति ॥ अविद्यमानावूरू यस्य सअनूरुःससारथिर्य्यस्य तस्यानूरुसारथेःसूर्य्यस्य । गतंगतिःभावेक्तःतिरश्चीनंतिर्य्यग्भूतंविभाषाऽञ्चेरदिक्स्त्रियामितितिर्य्यक्शब्दादञ्चत्यन्तात्प्रातिपदिकात्स्वार्थेखप्रत्ययः। हविर्भुजोऽग्नेरूर्द्ध्वज्वलनंऊर्द्ध्वस्फुरणंप्रसिद्धं। इदन्तुसर्वतोविसारिधामाधःपततिकिमेतदितिसूर्य्याग्निविलक्षणमदृष्टपूर्वमिदंधामकिमात्मकंस्यादित्याकुलंविस्मयात्संभ्रान्तंयथातथाजनैरीक्षितंईक्षणंकृतम् । सकर्म्मकादप्यविवक्षितेकर्म्मणिक्तः । प्रसिद्धेरविवक्षातःकर्म्मणोऽकर्म्मिकाक्रियेतिवचनात् । केचित्कर्म्मणिक्तान्तंकृत्वाईक्षितंमुनिन्ददर्शेतिपूर्वेणयोजयन्ति । अत्रोपमेयस्यमुनिधाम्नःसूर्य्याग्निभ्यामुपमानाभ्यामधःप्रसरणधर्म्मेणाधिक्य

द्विधाकृतात्मा किमयं दिवाकरो विधूमरोचिः किमयं<br>
हुताशनः । गतन्तिरश्चीनमनूरुसारथेः प्रसिद्ध<br>
मूर्द्ध्वज्वलनं हविर्भुजः । पतत्यधोधामविसारि<br>
सर्वतः किमेतदित्याकुलमीक्षितंजनैः ॥ २ ॥

वर्णनात्व्यतिरेकः। तदुक्तंकाव्यप्रकाशे। उपमानाद्यदन्यस्यव्यतिरेकःसएवसइति॥२॥धामरश्मौगृहेदेहेस्थानेजन्मप्रभावयोरितिहेमचन्द्रः । दिवाकरस्तुवृत्तरत्नाकरटीकायांद्विधाकृतात्मेतिचरणद्वयेनसहइदमेवश्लोकंषट्पदच्छन्दसउदाहरणमाह । तत्राद्यचरणद्वयेनसन्देहालङ्कारेगतमितितन्निरासश्चबोध्यइत्युपरिष्टात् ॥ २ ॥ ***** ॥

अथभगवान्निरवैषीदित्याह ॥ चयइति ॥ विभुस्तत्त्वावधारणसमर्थःसहरिःपुराप्रथमंत्विषाञ्चयइत्यवधारितंतेजःपुञ्जमात्रत्वेनविनिश्चितं । ततःप्रत्यासन्नेविभवितावित्रमृष्टाआकृतिःसंस्थानंयस्यतंतथोक्तंअतएवशरीरीचेतनइत्यवधारितम् । ततोविभक्ताःविविच्यगृहीताःअवयवामुखादयोयस्यतंतथोक्तं । अतएवपुमानित्यवधारितंअमुमागच्छन्तंव्यक्तिविश

दं नारदं वास्तवाभिप्रायेण तिपुंल्लिङ्गेनोनिर्वाहः । क्रमात् पूर्वोक्तसामान्यविशेषज्ञानक्रमेण । लोकद्वयस्येदमुक्तम । हरिस्तु सर्वं वेदैवे निनत्त्वम् । नारद इत्यवेधि नारदं कुद्धवानित्यर्थः । नारदस्य कर्मत्वेपि निपातेनेति शब्देनाभिहितत्वान्न द्वितीया । तिङामुपसंख्यानस्योपलक्षणत्वात् । यथाह वामनः । निपातेनाभिहिते कर्मणि न कर्मविभक्तिः । परिगणनस्य प्रायिकत्वादिति बुध्यते कर्त्तरि लिङ् । दीपजनेत्यादिना चिण् चिणो लुगिति लुक् । अत्र विभाविताकृतिं विभक्तावयवमित्यादिना आकृतिविभावनावयवविभावनयोः पदार्थयोर्विशेषणवृत्त्या शरीरित्वं पुंस्त्वावधारणहेतुत्वेनोपन्यासात्पदार्थहेतुकं काव्यलिङ्गं अलंकारः । हेतोर्वाक्यपदार्थयोः काव्यलिङ्गमुदाहृतमिति लक्षणात् ॥ ३ ॥ ******** ॥

चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम् । विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः ॥ ३ ॥ नवानधोधो बृहतः पयोधरान् समूढकर्पूरपरागपाण्डुरम् । क्षणं क्षणोत्क्षिप्तगजेन्द्रकृत्तिना स्फुटोपमं भूतिसितेन शंभुना ॥ ४ ॥

अथ सप्तभिर्मुनिं विशिनष्टि ॥ नवानित्यादि ॥ कीदृशममुं नवान्सद्यः संभृतसलिलानिति यावत् । बृहतो विपुलान् । पयोधरान्मेघान् । अधोऽधः मेघानां समीपाधः प्रदेशे स्थितमिति शेषः । उपर्य्यध्यधसः सामीप्ये इति द्विर्भावः तद्योगे द्वितीया । अभिसर्वतसोः कार्य्या धिगुपर्यादिषु त्रिषु द्वितीयादिवचनात् । समूढः पुञ्जीकृतः । समूढः पुञ्जिते भुग्ने इति विश्वः । कर्पूरस्य परागश्चूर्णं तद्वत्पाण्डुरं । अत एव क्षणं मेघसमीपावस्था नक्षणे अत्यन्तसंयोगे द्वितीया क्षणोत्सवेषु । निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षण इत्युभयत्राप्यमरः । भूत्या भस्मना सितेन भूतिर्भस्मनि सम्पदीत्यमरः । शम्भुना स्फुटा उपमा सादृश्यं यस्य

तंस्फुटंशम्भूपमित्यर्थः। सापेक्षत्वेपिसमासः। सदृशपर्य्यायवेतुलोपमाशब्देयोरतुलो पमाभ्यामितिनिषेधात्तादृश्यवाचित्वेतृतीयेत्याहुः। केचिदिमंश्लोकंचयत्त्विषामित्यतः प्राक्लिखित्वाव्याचक्षतेतेषांपुंस्त्वावधारणात्प्राक्तेजःपिण्डमात्रस्यशम्भूपमोचित्यंचिन्त्य म्॥ ४॥ ************************************॥

॥ दधानमिति ॥ पुनस्त्वअम्भोरुहकेसरद्युतीःपद्मकिञ्जल्कप्रभापिशङ्गीरित्यर्थः। जटा दधानंस्वयत्नुशरच्चन्द्रमरीचिभिःवरोचिर्य्यस्यतंधवलमित्यर्थः। अतएवविपाकेनपरिणा मेनपिङ्गाःपिङ्गलाः। तुहिनस्थल्यांरोहन्तीतितुहिनस्थलीरुहःब्रततीततीर्लतावृहान्च त्तीतुब्रततीलतेत्यमरःदधानंधराधरेन्द्रंहिमवान्तंहिनस्थलीतिलिङ्गात्। तथानारदो

> दधानमम्भोरुहकेसरद्युतीर्ज्जटाःशरच्चन्द्रमरीचिरो
> चिषम्।विपाकपिङ्गास्तुहिनस्थलीरुहोधराधरेन्द्रं
> व्रततीततीरिव॥५॥ पिशङ्गमौञ्जीयुजमर्ज्जुनच्छ
> विंवसानमेणाजिनमञ्जनद्युतिम्। सुवर्णसूत्राक
> लिताधराम्बरंविडम्बयन्तंसितिवाससस्तनुम्॥ ६॥

पमानत्वाद्यन्तमिवस्थितम्॥ ५ ॥ ***************************॥

पिशङ्गेति। पुनःमुञ्जस्यतृणविशेषःतन्मयीमेखलामौञ्जीपिशंग्यमौञ्ज्यायुज्यतइतिपिशङ्ग मौञ्जीयुक्तं॥ तत्सूद्विषद्त्यादिक्विप्स्त्रियाःपुंवदितिपिशङ्गीशब्दस्यपुंवद्भावःअर्ज्जुन च्छविन्धवलकान्तिंवलक्षोधवलोऽर्ज्जुनइत्यमरः॥ अञ्जनद्युतिंअञ्जनवर्णमेणाजिनंकृ ष्णमृगचर्म्मवसानंआच्छादयन्तंवसआच्छादनइतिधातोःशानच्। सुवर्णसूत्रेणकनक मेखलयाआकलितंबद्धमधराम्बरंअन्तरीयकंयस्यास्तांशितिवाससोनीलाम्बरस्यरामस्यतनुं विडम्बयन्तमनुकुर्वाणमित्यार्थोपमा॥ ६ ॥ ******************॥

विहङ्गेति ॥ पुनः विहङ्गराजाङ्गरुहैरिव गरुत्मल्लोमतुल्यैः कैः आयतैर्दीर्घैः हिरण्यस्य वि
कारो हिरण्मयी । दाण्डिनायनेत्यादिना मयटि यलोपनिपातः । तस्यामुर्व्यांरुहतारुढः
इगुपधलक्षणः कप्रत्ययः तासां वल्लीनां तन्तुभिस्तन्तुल्यैः सूक्ष्मावयवैः उपादानगुणान् हिर
ण्मयैः कृतोपवीतं शोभार्थं कल्पितयज्ञसूत्रं सर्वं हिमशुभ्रं । अतएव घनान्ते शरदि तडि
तां गुणैरुपलक्षितं । तडित्सौदामनी विद्युदित्यमरः । उच्चैरेव उच्चकैरुन्नताङ्गं मेघमिव
स्थितम् ॥ ७ ॥ ***************************** ॥

निसर्गेति ॥ पुनः निसर्गात् स्वभावादेव चित्राणि कत्सताराणि उज्ज्वलानि भास्वराणि सू
क्ष्माणि पक्ष्माणि लोमानि यस्य तेन लसन्त्यो बिसच्छेदा मृणालखण्डाः । छेदः खण्डोऽस्त्रि

> विहङ्गराजाङ्गरुहैरिवायतैर्हिरण्मयोर्वीरुहवल्लि-
> तन्तुभिः । कृतोपवीतं हिमशुभ्रमुच्चकैर्घनं घनान्ते
> तडितां गुणैरिव ॥७॥ निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्म-
> णा लसद्बिसच्छेदसिताङ्गसङ्गिना । चकासतं चारु-
> चमूरुचर्मणा कुथेन नागेन्द्रमिवेन्द्रवाहनम् ॥ ८ ॥

यामिति त्रिकाण्डशेषः ॥ तद्वत्सिते अङ्गे वपुषि सङ्गिना शक्तेन चारुणा चमूरुचर्म
णा मृगत्वचा कुथेन पृष्ठास्तरणेन । प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोरित्यमरः
। इन्द्रवाहनं नागेन्द्रं ऐरावतमिव इन्द्रस्य वाहनमिति स्वस्वामिभावमात्रस्य विवक्षित
त्वात् वाहनमाहितादित्तिनत्वम् । यथाह वामनः । नेन्द्रवाहनशब्दे णत्वमाहि
तत्वस्याविवक्षितत्वादिति । चकासतेः शतरि नाभ्यस्ताच्छतुरिति नुमभावः । जक्षित्या
दयः षडित्यभ्यस्तसंज्ञा ॥ ८ ॥ ************************* ॥

अजस्रमिति ॥ पुनरजस्रं प्राचुर्येण स्फालितास्ताडिताः सौष्ठवपरीक्षार्थं युक्तांगुष्ठेमन

त्वीताडनप्रसिद्धं तेषां वल्लकीगुणानां वीणातन्त्रीणां क्षतेन सङ्घर्षणेन उज्ज्वलैरंगुष्ठनखां शुभिर्भिन्नया मिश्रया तद्रागरक्तयेत्यर्थः अत एव पुरः पुरोभागे प्रवालैर्विद्रुमैः। मुक्तायां वि द्रुमः पुंसि प्रवालं पुन्नपुंसकमित्यमरः। पूरितार्द्धयेव स्थितया अच्छस्फटिकाक्षमालया स्व च्छस्फटिकानामक्षमालया जपमालयेत्यर्थः। अच्छोऽभल्लूके स्फटिकेऽमलेऽच्छाभिमुखेऽ व्ययमिति हेमचन्द्रः। तया प्रसिद्धस्फटिकग्रहणात् तद्वैर्मोक्षार्थित्वं व्यज्यते। स्फटिको मोक्षदः परेति मोक्षार्थिनं स्फटिकाक्षमालाभिधानात्। विभातं भासमानं भातेः शतृप्र त्ययः अत्र तत्वांशुभिन्नयेति स्वगुणत्यागेनान्यगुणस्वीकारलक्षणस्तद्गुणालङ्कार उक्तः तद्गु णः स्वगुणत्यागादिति ॥ ९ ॥ ************************ ॥

रणद्भिरिति ॥ पुनर्नभस्तनोवाये, रा घट्टनया आघातेन पृथगसङ्कीर्णैः रणद्भिर्ध्वनद्भिर

अजस्रमास्फालितवल्लकीगुणक्षतोज्ज्वला
ङ्गुष्ठनखांशुभिन्नया। पुरःप्रवालैरिवपूरिता
र्द्धयाविभान्तमच्छस्फटिकाक्षमालया॥९॥

नुरणनेनोत्पद्यमानैरित्यर्थः श्रुत्यारम्भमनुरणनं स्वर इति लक्षणात्। तदुक्तं रत्नाकरे। श्रु त्यनन्तरभावी यः स्निग्धोऽनुरणनात्मकः। स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यत इति श्रु तिर्नाम स्वरारम्भकावयवः शब्दविशेषः। तदुक्तं। प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्र कः। सा श्रुतिः सम्परिज्ञेया स्वरावयवलक्षणेति। विभिन्नानि प्रतिनियतसंख्यया व्यव स्थितानि श्रुतीनां मण्डलानि समूहा येषां तैर्विभिन्नश्रुतिमण्डलैः श्रुतिसंख्यानियमस्तु दर्शि तः। चतुश्चतुश्चतुश्चैव षड्जमध्यमपञ्चमाः। द्वे द्वे निषादगान्धारौ त्रिस्त्रिर्ऋषभधैवतौ। स्वराः षड्जादयः सप्तोक्तलक्षणाः। तदुक्तं। श्रुतिभ्यः स्युः स्वराः षड्जर्षभगान्धारमध्यमाः। पञ्चमो धैवतश्चाथ निषाद इति सप्त ते। तेषां संज्ञाः सरिगमपधनीत्यपरा मता इति।

तैःस्वरैःस्फुटीभवन्त्योग्रामविशेषाणांषड्जाद्यपरनामकानांस्वरसङ्घातभेदानांत्रयाणांमूर्छ्छनास्वराणांरोहावरोहक्रमभेदायस्यांतांमहतींनिजवीणां । विश्वावसोस्तुबृहतीतुम्बुरोस्तुकलावती । महतीनारदस्यस्यात्सरस्वत्यास्तुकच्छपीतिवैजयन्ती । मुहुर्मुहुरवेक्ष्यमाणं । तत्त्वोयोजनाभेदलक्षणमहिम्नापुरुषप्रयत्नमन्तरेणैवाविस्पष्टादंध्वनतीति कौतुकादनुसन्धानमित्यर्थः । अथग्रामलक्षणं । यथाकुटुम्बिनःसर्वेप्येकीभूताभवन्ति हि । तथास्वराणांसन्दोहोग्रामइत्यभिधीयते । षड्जग्रामोभवेदादौमध्यमग्रामएवच । गान्धारग्रामइत्येतत्ग्रामत्रयमुदाहृतमिति । तथानंद्यावर्त्तोथजीमूतःसुभद्राग्रामकास्त्रयः । षड्जमध्यमगान्धारस्त्रयाणांजन्महेतवइति । मूर्छ्छनालक्षणञ्च । क्रमात्स्वराणां सप्तानामारोहश्चावरोहणं । सामूर्छ्छेत्युच्यतेग्रामस्थाएताःसप्तसप्तच । ग्रामत्रयेपिप्रत्येकं

रणद्भिराघट्टनयानभस्वतः पृथग्विभिन्नश्रुति
मण्डलैःस्वरैः । स्फुटीभवद्ग्रामविशेषमूर्छ्छ
नामवेक्ष्यमाणांमहतींमुहुर्मुहुः ॥ १० ॥

सप्तसप्तमूर्छ्छनाइत्येकविंशतिर्मूर्छ्छनाभवन्ति । तत्रनामानितुनात्रापेक्षितमुच्यतइतिप्रतिज्ञाभयान्नलिख्यन्तेइतिसर्वमवदातं । अत्रपुंव्यापारमन्तरेणस्वराद्याविर्भावोक्त्याकोपिलोकातिक्रांतोयंशिल्पसौष्ठवातिशयोवीणायाःप्रतीयते । तेनसहस्वतःप्रसिद्धाएयस्याभेदेनाध्यवसितत्वात् । तन्मूलातिशयोक्तिरलङ्कारः । साचमहत्याःपुंव्यापारंविनामूर्छ्छाद्यसंबंधेपिसंबंधाभिधानादसंबंधेसंबंधरूपतयापुंव्यापाराख्यकारणंविनापिमूर्छ्छनादिकार्योत्पत्तिद्योतनाद्विभावनाव्यज्यतइत्यलंकारेणालंकारध्वनिरितिसंक्षेपः ॥ १० ॥ **** ॥

॥ निवर्त्त्येति ॥ अतीन्द्रियाइन्द्रियमतिक्रांतादेशकालस्वरूपाद्विप्रकृष्टार्थाः । अत्याद्यःक्रांताद्यर्थेद्वितीययेतिसमासःद्विगुप्राप्तापन्नालंपूर्वगतिसमासेषुप्रतिषेधोवक्तव्यइति

विशेष्यलिङ्गत्वंनेयं ज्ञाननस्यनिधिःसर्वार्थद्रष्टेत्यर्थः । कृतानतीन्कृतप्रणामान् अनु
व्रजतःअनुगच्छतः । नभसिआकाशेसीदन्ति गच्छन्तीतिनभःसदःसुरान्सत्सूद्विषदि
त्यादिनाक्विप् । निवर्त्यप्रतिप्राप्यसमुनिः । सादितदैत्यसम्पदःसादिताःविध्वस्तीकृताःदै
त्यानांसम्पदोयेन तस्यचक्रिणःकृष्णस्यपदंस्थानंमहेन्द्रालयचारुइन्द्रभवनमिवभास
मानंसमासदत्समाङ्पूर्वात्षद्धातोर्लुङ् अत्रनतीनतीपदःपदमितिद्वयोर्व्यञ्जनयुग्म
योरसकृदावृत्त्यावैकानुप्रासः अन्यत्रवृत्त्यनुप्रासः इत्यनयोःसंसृष्टिः ॥ ११ ॥ ***॥
॥पतदिति॥ पतन्त्यःपतंगःसूर्यःसप्रतिमाउपमानंयस्यस । पतङ्गौपक्षिसूर्यौचेत्यम
रः । तपोनिधिर्मुनिःअस्यहरेःपुरोभुविपुरःप्रदेशेयावन्नव्यलीयतनातिष्ठत्लिङ्गतावि

निवर्त्त्यसोऽनुव्रजतः कृतानतीनतीन्द्रियज्ञाननिधि
र्नभस्सदः।समासदत्सादितदैत्यसंपदःपदंमहेन्द्रा
लयचारुचक्रिणः॥ ११॥ पतत्पतङ्गप्रतिमस्तपो
निधिःपुरोऽस्ययावन्नभुविव्यलीयत।गिरेस्तडित्वा
निवतावदुच्चकैर्जवेनपीठादुदतिष्ठदच्युतः॥१२॥

निधानेऽर्द्धविकादिकात्कर्तरिलङ् । तावदच्युतोगिरेःशैलात्तडितोऽस्यसन्तीतितडित्वान्मे
घइव । झयःइतिमतुपोमकारस्यवकारःतसौमत्वर्थेइतिभसंज्ञायामेकसंज्ञाधिकारेण
पदत्वाज्जश्त्वंउच्चकैरुन्नतात्पीठात्आसनात्जवेनोदतिष्ठत् । मुनिचरणस्यभूस्पर्शा
त्प्रागेवस्वयमुत्थितवान् । ऊर्ध्वम्प्राणाह्युत्क्रामन्तियूनःस्थविरआगते । प्रत्युत्थानाभिवा
दाभ्यांपुनस्तान्प्रतिपद्यतेइतिशास्त्रमनुस्मरन्नितिभावः । उदोनूर्ध्वकर्मणीतिनियमादि
होर्ध्वकर्मणिनात्मनेपदंपतत्पतङ्गइत्यत्रपतङ्गस्यपतनासम्भवादियमभूतोपमाइत्याचा
र्य्यदण्डिप्रभृतयोबभणुः । अतएवास्यसिद्धस्योपमानत्वायोगादुत्प्रेक्षेत्याधुनिकालंकारि

काःसर्वेवर्णयन्ति ॥ १२ ॥ ************************* ॥

॥ अथेति ॥ अथानन्तरमभ्युत्थानानन्तरं धातुःसुतेननारदेन । प्रयत्नेनोन्नमिताःस्तथापि मुनिपादन्यासभारादानमन्त्यःफणायेषांतेषांफणिनांगणैःअधोअधःप्रदेशेकथंचिद्धृतेस्थापितेभुवःस्तलेभूपृष्ठेअभिदेवकीसुतंदेवकीसुतंअभिलक्षीकृत्येत्यर्थः। लक्षणेनाभिप्रतीआभिमुख्येइत्यव्ययीभावःचरणौ।पदौपदंघ्रिश्चरणोऽस्त्रियामित्यमरः । न्यधायिधानिंनिहितौदधातेःकर्मणिलुङ् । स्यसिचूसीयादिनाचिण्वदिटियुक्अत्रफणानांनमनेनोन्नमनासंबंधेपिमुनिगौरवायतत्संबंधाभिधानातिशयोक्तिभेदः ॥ १३ ॥ ********* ॥

॥ तमिति ॥ आदिपूरुषःपुराणपुरुषःअन्येषामपिदृश्यतेइतिदीर्घः । सद्मनःअर्घपूजा

अथप्रयत्नोन्नमितानमत्फणैर्धृतेकथंचित्फणिनांगणैरधः।न्यधायिधातामभिदेवकीसुतंसुतेनधातुश्चरणौभुवस्तले॥१३॥ तमर्घ्यमर्घ्यादिकयादिपूरुषःसपर्य्ययासाधुसपर्य्यपूपुजत्।गृहानुपैतुंप्रणयादभीप्सवोभवन्तिनाऽपुण्यकृतांमनीषिणः॥१४॥

महर्हतीतिअर्घ्यःदण्डादिभ्योयः । तंनारदंअर्घार्थंद्रव्यमर्घ्यम् । पादार्घाभ्यांचेतियत्प्रत्ययः मूल्येपूजाविधावर्घइत्यमरः । अर्घ्यमादिर्य्यासांतयासपर्य्ययापूजयापूजनामस्यापचितिःसपर्य्येत्यमरःसाधुयथातथापर्य्यपूजत्परिपूजितवान्णौचङंतंकर्त्तव्यंयुक्तंचैनदित्यर्थान्तरंन्यस्यतिगृहानिति । मनसइषिणोमनीषिणःसन्तःपृषोदरादित्वात्साधुःअपुण्यकृतामपुण्यमकृतवतांसुकर्मपापमन्त्रपुण्येषुकृञ्इतिसूत्रेणक्विप् गृहान्प्रणयादुपैतुमभीप्सवःप्राप्तुमिच्छवःआप्नोतेःसन्नन्तादुप्रत्ययःआप्ज्ञप्रृधामीतोकारःनभवन्तिकिंतुपुण्यकृतामेवअतःकृच्छ्रलभ्याःसन्तःपूज्याइत्यर्थः ॥ १४ ॥ **************** ॥

॥ नयावदिति ॥ उत्थितावेतौ मुनिकृष्णौ जनः तुषाराञ्जनयोः पर्वताविव यावन्नोदपश्यन्नो त्प्रेक्षितवान् । तावच्चिरन्तनः पुराणो मुनिः कृष्णः पुरा किल भगवान् बदरिकारण्ये नारायणावतारेण तपस्तिष्ठितवानिति पुराणात्सायं चिरमित्यादिना ट्युप्रत्ययः तुडागमश्च । स्व हस्तेन दत्ते आसने मुनिं नारदं अभिन्यवीविशत् अभिमुखे नोपवेशितवान् अभिनीपूर्वात् विशतेर्ण्यन्ताल्लुङि णिश्रीति चङ् ॥ १५ ॥ ********************* ॥

॥ महामहेति ॥ महत्या महानीलशिलायाः सिंहलद्वीपसम्भवेन्द्रनीलोत्पलस्य रुगिव रुग्यस्य तस्येत्युपमालङ्कारः । सिंहलस्याकरोद्भूता महानीलास्तु ते स्मृताइति भगवानगस्त्यः कंसकृषो हरेः पुरोऽग्रे उन्नते विष्टरे आसने वृक्षासनयोर्विष्टर इति षत्वं निषेदिवानुपवि

नयावदेतावुदपश्यदुत्थितौ जनस्तुषाराञ्जनपर्वताविव । स्वहस्तदत्ते मुनिमासने मुनिश्चिरन्तनस्तावदभिन्यवीविशत् ॥ १५ ॥ महामहानीलशिलारुचः पुरो निषेदिवान्कंसकृषः सविष्टरे । श्रितोदयाद्रेरभिसायमुच्चकैरचूचुरच्चन्द्रमसोऽभिरामताम् ॥ १६ ॥

ष्टवान् भाषायांसदवसश्रुवइतिक्वसुः समुनिरभिसायं सायंकालाभिमुखं अव्ययीभावसमासः सायंकालस्यकार्ष्ण्यात्कृष्णोपमानत्वम् । श्रितआश्रितउदयाद्रिरुदयाचलो येन तस्य चन्द्रमसोभिरामतां शोभामचूचुरत् चोरितवान् प्राप्तवानित्यर्थः । चुरस्तेये णिश्रीति चङ् अन्यस्यान्यधर्म्मसम्बन्धासम्भवात् चन्द्रमसोभिरामतामिवाभिरामतामित्यौपम्यपर्य्यवसानादसम्भवद्वस्तुसम्बन्धरूपो निदर्शनाभेदः सचोक्तोपमयाऽङ्गाङ्गिभावेन सङ्कीर्य्यते ॥ ॥ १६ ॥ ************************ ॥

॥ विधायेति ॥ यज्वानो विधिनेष्टवन्तः यज्वा तु विधिनेष्टवानित्यमरः । शास्त्रनुशिष्टाविति

धातोर्वनिप् । नेर्धां प्रियो हरिः प्रसेदुषः प्रसन्नस्य तस्यैः कद्दुरित्युक्तं तस्य मुनेरपचितिं पूजामप्
ज्ञानमस्यापिचतिरित्यमरः । विधाय विशेषेण मनोवाक्कायकर्मभिस्तत्परमनवाहत्वा प्रकाम
मत्यर्थमप्रीयत प्रीतो बभूव प्रीयतेर्दैवादिकात्कर्त्तरि लुङ् । मुनिपूजायाः प्रीतिहेतुत्वेऽर्थान्त
रंन्यस्यति । महानुभावा माहात्मानः आर्यान्पूज्यान्परिचर्यया मुहुर्ग्रहीतुं वशीकर्त्तुं ग्रहे
र्लिटि दीर्घश्च । नितान्तमर्थिनोऽभिलाषवन्तो हि भवन्ति अर्थोऽभिलाषः स एषामस्तीति म
त्वर्थइनिः ननु शिनिः कुद्दृत्तेस्तद्धितवृत्तिर्बलीयसीतिभाष्ये ॥ १७ ॥ ****** ॥
॥ अशेषेति ॥ अशेषेभ्यस्तीर्थेभ्य उपहृता आहृतास्तया कमण्डलोः पाणौ निधाय कमण्ड

विधायतस्यापचितिंप्रसेदुषःप्रकाममप्रीयतयज्वनांप्रियः । ग्रहीतु
मार्य्यान्परिचर्य्ययामुहुर्महानुभावाहिनितान्तमर्थिनः ॥ १७ ॥
अशेषतीर्थोपहृताःकमण्डलोर्निधायपाणावृषिणाभ्युदीरिताः । अ
घौघविध्वंसविधौपटीयसीर्नतेनमूर्द्ध्नाहरिरग्रहीदपः ॥ १८ ॥
सकाञ्चनेयत्रमुनेरनुज्ञयानवाम्बुदश्यामवपुर्न्यविक्षत । जिगायज
म्बूजनितश्रियःश्रियंसुमेरुशृङ्गस्यतदातदासनम् ॥ १९ ॥

लोरुदकपात्रादुद्धृत्य पाणौ निधायेत्यर्थः । ऋषिणाभ्युदीरिताः क्षिप्ता अत एवाघौघानां
पापसमूहानां विध्वंसविधौ विनाशकरणे पटीयसीः समर्थतराः पटुशब्दादीयसुनि उगितश्चे
ति ङीप् अपो जलानि हरिर्नतेन मूर्द्ध्ना अग्रहीत् स्वीकृतवान् ग्रहेर्लुङ् ॥ १८ ॥ *** ॥
॥ सकाञ्चनेति ॥ नवाम्बुदश्यामतनुः स हरिर्मुनेरनुज्ञया काञ्चने काञ्चनविकारे वैकारि
कोऽण् प्रत्ययः यत्रासने न्यविक्षत उपविष्टवान् नुङि नेर्विशः इत्यात्मनेपदं शलइगुपधाद
निटः क्सः तदासनं तदा हर्युपवेशनसमये जम्बूर्नीलफलविशेषः जंबूः सुरभिपत्रा चराजज
म्बूर्महाफलेत्यभिधानरत्नमालायां । तया जनिता श्रीर्यस्य तस्य तथोक्तस्याभ्यधिकपुंसाञ्चा

न्यक्षेपंवङ्गावानुमभावःस्तुमेरुमृङ्गस्यश्रियश्निगायाभिभावितवानित्यर्थः संत्रिटोजैरिति कृत्वंउपमानानुप्रासयोःसंसृष्टिः ॥ १९ ॥ ********************* ॥

॥ सतप्तेति ॥ तप्तंपुटपाकशोधितंकार्तस्वरं सुवर्णं । स्वर्णंकार्तस्वरंजांबूनदमष्टापदो स्त्रियमित्यमरः । तद्धास्वरं दीप्यमानमंबरं यस्यसःकठोरताराधिपस्य पूर्णेन्दोर्लांछन स्यच्छविरिवच्छविर्यस्यसइत्युपमानपूर्वपदो बहुव्रीहिःउत्तरपदलोपश्च । सहरिर्वाडव जातवेदसोवाडवाग्नेःशिखाभिःज्वालाभिराश्लिष्टोऽम्भसांनिधिरिवसमुद्र इवविदिद्युतेबभौ ॥ २० ॥ कठोरःकठिनेप्रौढेइतिरत्निः ॥ ********************* ॥

॥ रथांगपाणेरिति ॥ रथांगंचक्रंपाणौयस्यतस्यहरेःप्रहरणार्थेभ्यःपरेनिष्ठासप्तम्यौभव

सतप्तकार्तस्वरभास्वराम्बरःकठोरताराधिपलाञ्छन च्छविः । विदिद्युतेवाडवजातवेदसःशिखाभिराश्लि ष्टइवाम्भसांनिधिः॥ २०॥ रथाङ्गपाणेःपटलेनरो चिषामृषित्विषःसंवलितावि रेजिरे । चलत्पलाश ान्तरगोचरास्तरोस्तुषारमूर्तेरिवनक्तमंशवः ॥ २१ ॥

तइतिपाणेःपरनिपातःरोचिषांछवीनांपटलेनसमूहेनसंवलितामिलिताऋषित्विषोनक्तंरा त्रौसप्तम्यर्थेऽव्ययंतरोश्चलतांपलाशानांपत्राणामन्तराणिविवराणिगोचरआश्रयोयेषांतेतु षारमूर्तेर्यस्यतस्येन्दोंशवइवविरेजिरेचकाशिरे ॥ २१ ॥ ********* ॥

॥ प्रफुल्लेति ॥ प्रफुल्लमितिप्रफुल्लंफुल्लविकसनेइतिधातोःपचाद्यजंतंफलेर्निष्ठायांअ नुपसर्गात्फुल्लक्षीवकृशोल्लाघाइतिनिपातनात्प्रफुल्लमित्येवेतिक्षीरस्वामी । तापिंछस्य तमालस्यपुष्पंतापिञ्छं । फलेलुगितिलुक्‌तलुक् । द्विहीनंप्रस्वेसर्वमितिनपुंसकत्वंका षस्कन्धसमात्वःस्यात्तापिञ्छइत्यमरः । तेनसदृशैःप्रफुल्लतापिञ्छनिभैःनित्यसमासत्वा

स्वपदविग्रहः । अतएवसुरुत्तरपदेत्वमीति । निभसंकाशनीकाशप्रतीकाशोपमादयइत्यमरः । सप्तसप्तच्छदाःपर्णानिपर्वणियस्यसोसप्तच्छदोवृक्षभेदः सप्तपर्णोविशालत्वक् शारदोविषमच्छद इत्यमरः । संख्याशब्दस्यवृत्तिविषयेवीप्सार्थत्वंसप्तपर्णादिवदित्युक्तंभाष्ये । प्रफुल्लतापिञ्छवत्तस्यपुष्पाणिसप्तच्छदानिवेषांपांसुवत्पाण्डुभिःशुभ्रैरभीषुभिःअन्योन्यरश्मिभिः अभीषुःप्रग्रहेरश्मावितिविश्वः । परस्परेणाच्छुरितेसंघितेअमलेच्छवीअन्योन्यकान्तीययोस्तौ । छव्योरभीषूणामवयवावयविभावाद्भेदनिर्देशः तौहरिनारदौतदाएकवर्णौविवभूवतुः उभयप्रभामेलनादुभयोरपिसंयोगगौरत्वात् गंगायमुनासंगम इवस्फटिकेन्द्रनीलमणिप्रभामेलनप्रायःकश्चिदेकोवर्णःप्रादुर्बभूव । तद्भिन्नाचेयमनयोरेकवर्णत्वोत्प्रेक्षा

प्रफुल्लतापिञ्छनिभैरभीषुभिः शुभैश्चसप्तच्छदपांसु
पाण्डुभिः । परस्परेणाच्छुरितामलच्छवीतदैकवर्णौ
बभूवतुः ॥ २२ ॥ युगान्तकालप्रतिसंहृता
त्मनोजगन्तियस्यांसविकाशमासत । तनौममुस्तत्र
कैटभद्विषस्तपोधनाभ्यागमसंभवामुदः ॥ २३ ॥

॥ २२ ॥ ****************************** ॥

॥ युगान्तेति ॥ युगान्तकालेप्रतिसंहृतात्मनः । आत्मन्युपसंहृताःआत्मानोजीवायेन तस्यकैटभद्विषोहरेर्यस्यान्तनौजगंतिसविकाशंसविस्तरमासतनिष्ठन् । आसउपवेशने लङ् । तत्रतनौदेहेतपोधनाभ्यागमेनसम्भवन्तीतिसम्भवाःसम्भूताःपश्चाद्भूताश्च मुदःसन्तोषाःनममुःअतिरिच्यतइत्यर्थः । चतुर्दशभुवनभरणपर्याप्तेवपुषिअन्तर्नमान्तीतिकविप्रौढोक्तिसिद्धातिशयेनस्तनःसिद्धस्याभेदेनाध्यवसितातिशयोक्तिःसाचमुदामन्तःसम्बन्धेपयसम्बन्धोक्त्यासम्बन्धासम्बन्धरूपा ॥ २३ ॥ ******************** ॥

॥निदाघेति॥ निदाघमुष्णं धाम किरणं यस्य तथोक्तं। निदाघो ग्रीष्मकाले स्यात् उष्णस्वेदा म्बुनोरपि इति विश्वः। अर्कमिवाधिदीधितिं अधिकतेजसं मुनिं अभिलक्ष्य। अभिरभागे इति लक्षणे कर्मप्रवचनीयसंज्ञा कर्मप्रवचनीययुक्ते द्वितीया। मुदा विकाशमुपेयुषी उपगतवा क्वसुप्रत्ययान्तो निपातः। अत एवाधिश्रिता प्राप्ता श्रीर्याभ्यां ते तथोक्ते इकोऽचि विभक्ताविति नुमागमः विलोचने बिभ्रत् नाभ्यस्ताच्छतुरिति नुमभावः स हरिः पुण्डरीकाक्षः इत्येवं स्फुटोऽभवत् खल्वर्थसन्निधाने श्रीविकाशभावाच्चेन पुण्डरीकसाधर्म्यात्। पुण्डरीके इवाक्षिणी यस्येत्यवयवार्थलाभे पुण्डरीकाक्ष इति व्यक्तमन्वर्थसंज्ञोऽभूदित्यर्थः। बिभ्रत् स्फुटोऽभवदिति पदार्थहेतुकस्य काव्यलिङ्गस्य निदाघधामानमिवेत्युपमापेक्षत्वाद् तयोरङ्गाङ्गिभावेन सङ्करः

निदाघधामानमिवाधिदीधितिंमुदाविकाशंमुनिमभ्यु
पेयुषी।विलोचनेबिभ्रदधिश्रितश्रिणीसपुण्डरीकाक्ष
इतिस्फुटोऽभवत्॥२४॥ सितंसितिम्नासुतरांमुने
र्वपुर्विसारिभिःसौधमिवाऽथलंभयन्।द्विजावलिव्या
जनिशाकरांशुभिःशुचिस्मितांवाचमवोचदच्युतः॥२५॥

॥२४॥ ****************************** ॥

॥सितमिति॥ अथोभयोरुपवेशानन्तरं अच्युतो हरिः कर्त्ता विसारिभिरभीक्ष्णं प्रसरद्भिर्बहुलमाभीक्ष्ण्ये इति णिनिः द्विजावलिर्दन्तपंक्तिः। दन्तविप्राण्डजा द्विजा इत्यमरः सैव व्याजः कपटं यस्य सः तद्रूप इत्यर्थः स चासौ निशाकरश्च तस्यांशुभिः किरणैः सितं स्वभावशुभ्रं मुनेर्वपुः सौधं प्रासादमिव सुतरामत्यन्तं अव्ययादाम् प्रत्ययः सितिम्ना धावल्येन प्रयोज्यकर्त्रा लंभयन् व्यापारयन् अतिधवलयन्नित्यर्थः। लभेश्च गत्युपसर्जनप्राप्त्यर्थत्वेन गत्यर्थत्वात्। गतिबुद्धीत्यादिना अणिकर्त्तुः कर्मत्वं। तथाह वामनः लभेर्गत्यर्थत्वात् णिच्यणौ कर्त्तुः क

र्मोत्वात्कर्मत्वङ् निप्राप्त्युपसर्जनगत्यर्थत्वेतु कर्मत्वमेवेतिरहस्यम् । नभेश्चेति नुमागमः मुचि
स्मितांवाचमवोचत् उक्तवान् स्मितपूर्वाभिभाषी च राघवइति न्यायादितिभावः ब्रुवोवच्यादे
शः लुङ्च्लेः अङ् वचउम् इत्युमागमे गुणः अत्र सौधर्मितेत्युपमायाः स्मितिभ्नालभयच्चित्यसम्बन्धरूपा
तिशयोक्तिः द्विजावलिव्याजनिशाकरेतिकलादिशब्दैः सत्यन्वप्रतिपादनरूपापह्नवस्य च
मिथोनैरपेक्ष्यात्संसृष्टिः ॥ २५ ॥ *********************** ॥

॥ हरतीति ॥ भवदीयदर्शनं शरीरभाजां दृष्टुर्णां इत्यर्थः अखिलकालत्रितयेभूतादिका
लत्रितयेपियोग्यतां पवित्रतां व्यनक्ति गमयति कुतः सम्प्रतिदर्शनकालेअघंपापं हरति एष्यते।
भाविनः शुभस्य हेतुः तथापूर्वचरितैः प्रागनुष्ठितैः शुभैः सुकृतैः कृतं एवं त्रैकाल्येपि सत्कार्य्ये

हरत्यघंसंप्रतिहेतुरेष्यतः शुभस्यपूर्वाचरितैः कृतंशु
भैः। शरीरभाजांभवदीयदर्शनंव्यनक्तिकालत्रितयेऽ
पियोग्यताम् ॥ २६ ॥ जगत्यपर्य्याप्तसहस्रभा
नुनानयन्नियन्तुंसमभाविभानुना। प्रसह्यतेजोभिर
संख्यतांगतैरदस्त्वयानुन्नमनुत्तमंतमः ॥ २७ ॥

त्वेनकारणत्वेनच पुंसि सुकृतसमवायमवगमयते । अतएतादृशं दर्शनं कस्य न प्रार्थ्यमिति
भावः अत्र हरतीत्यादिवाक्यत्रयस्यार्थस्य शरीरेत्यादिवाक्यत्रयोक्तावाक्यार्थहेतुकं काव्य
लिङ्गमलंकारः ॥ २६ ॥ ************************* ॥

॥ जगतीति ॥ जगत्यपर्य्याप्ता अपरिच्छिन्नाः सहस्रभानवः अंशवो यस्य तेन भानुना अर्के
णभानवोऽर्कहरांशवइति वैजयन्ती । यत्तमो नियन्तुं निवारयितुम् । नसमभावि नशे
केभावेलुङ् । अविद्यमानमुत्तमं यस्मात् तदनुत्तमं सर्वाधिकमदस्तमो मोहात्मकं असंख्य
तांगतैस्तेजोभिः प्रसह्य बलात्त्वयानुन्नं छिन्नं अतः श्लाघ्यदर्शनो भवानिति भावः तुदविदेत्या

दिनाविकस्यान्निष्ठानत्वभावः अत्रोपमानाङ्गानेर्मुनेराधिक्यप्रतिपादनाद्व्यतिरेकालंकारः ॥ २७ ॥ ****************************** ॥

॥ क्षतइति ॥ प्रजानाञ्जनानांअपत्यानांचक्षेमक्षताकुशलकारिणाप्रजास्यात्सन्तानैजनेष्वित्यमरः। सुपात्रेयोग्यपुरुषेकटाहादिदृढभाजनेचनिक्षेपेणनिधाननचनिराकुलात्मनास्वस्थचित्तेन। योग्यभाजनयोःपात्रमित्यमरः। प्रजास्रजाब्रह्मणापुत्रिणाचत्वंधनसम्पदामिवश्रुतीनांवेदानांसदोपयोगेदानभोगाभ्यांव्ययेपिअक्षयः एकत्रान्न्यागादन्यत्रानंत्याच्चेतिभावःगुरुरुपदेष्टासम्प्रदायप्रवर्त्तकइतियावत्। अन्यत्रमहान्। निधीयतइतिनिर्निधिःनिक्षेपःकृतःउपसर्गेघोःकिःश्रुतिसम्प्रदायद्वाराधर्माधर्मव्यवस्थापकतयातन्निष्ठाहेतूनांभवादृशांदर्शनंकस्यनश्लाघ्यमितिभावः। अत्रशब्दमात्रसाधर्म्यात्श्लेषोत्थंप्रकृतविषयइत्याहुः ॥ २८ ॥ ************************ ॥

क्षतःप्रजाक्षेमक्षताप्रजास्रजासुपात्रनिःक्षेपनिराकुलात्मना। सदोपयोगेपिगुरुस्त्वमक्षयोनिधिःश्रुतीनांधनसंपदामिव ॥ २८ ॥ विलोकनेनैवतवामुनामुनेकृतःकृतार्थोऽस्मिनिवर्हितांहसा। तथापिशुश्रूषुरहंगरीयसीर्गिरोऽथवाश्रेयसिकेनतृप्यते ॥ २९ ॥

॥ विलोकनेनेति ॥ हेमुनेनिवर्हितांहसाअपहृतपाप्मनाअतएवामुनातवविलोकनेनैवकृतार्थःकृतोस्मि। तथाप्यहंगरीयसीरर्थवत्तराःद्वितवचनविभज्येनिर्इयसुन्प्रत्ययःउगितश्चेतिङीप्। प्रियस्थिरेत्यादिनागुरोर्गरादेशःगिरस्तववाचोपिश्रुश्रूषुःश्रोतुमिच्छुरस्मिश्रुणोतेःसन्नन्तादुप्रत्ययःनचैतद्युक्तमित्याह। अथवातथाहीत्यर्थःअथवेतिपक्षान्तरप्रतिषेधोरितिगणव्याख्यानात्श्रेयसिविषयेकेनतृप्यतेनकेनापीत्यर्थः। कृतार्थेनापाङ्ग्यत्नस्थावादि

निभावः। भावविदइ ॥ २९ ॥ ************************** ॥

॥ एवंप्रियमुक्त्वासप्रयोजनंविनयेनपृच्छति। गतस्पृहोपीति। गतस्पृहोविरक्तोपित्वमा गमनप्रयोजनंवदेतिवक्तुंयथाधृष्टतयाव्यवसीयतेउद्यम्यते। स्वनेर्भावेलइउदितमुत्पन्नंउ क्तंवाश्रात्मनोममगौरवंयेनसःगुरुःश्लाघ्यएषत्वैवागमनमागमएवनोस्माकंधृष्टतान्ततोनि विस्तारयति। ननुविस्तारेलइ। भवतोनिस्पृहत्वेपिप्रेक्षावत्प्रवृत्तेःप्रयोजनव्याप्त्याराव श्यःप्रश्नइतिभावः ॥ ३० ॥ ************************** ॥

॥ इतिब्रुवन्तमिति ॥ इतिब्रुवन्तंहरिंसव्रतीमुनिरुवाच। किमितिहेपुरुषोत्तमपुरुषे षुश्रेष्ठ। ननिर्द्धारणेइतिषष्ठीसमासप्रतिषेधः। त्वयाइत्यङ्गतस्पृहोपीतिनवाच्यंनिस्पृ

> गतस्पृहोप्यागमनप्रयोजनंवदेतिवक्तुंव्यवसीयतेयया
> । ततोतिनस्त्वामुदितात्मगौरवागुरुस्तवैवागमएषधृ
> ष्टताम् ॥ ३० ॥ इतिब्रुवन्तंतमुवाचसव्रतीनवाच्य
> मित्थंपुरुषोत्तमत्वया। त्वमेवसाक्षात्करणीयइत्य
> तःकिमस्तिकार्य्यंगुरुयोगिनामपि ॥ ३१ ॥

हस्याद्यनप्रयोजनसम्भवादितिभावः। नदेवाहयोगिनामपित्वमेवसाक्षात्करणीयःप्रत्य क्षीकर्त्तव्यइत्यतोऽस्मादन्यत्गुरुकार्य्यंकिमस्तिनकिञ्चिदित्यर्थः। तस्मान्नप्रयोजनान्तर प्रश्नानवकाशइतिभावः ॥ ३१ ॥ ************************ ॥

॥ यदुक्तंयोगिनामपित्वमेवसाक्षात्करणीयइतितदेवद्रढयति ॥ उदीर्णरागेति ॥ उदी र्णउद्रिक्तोरागोऽभिलाषःसएवप्रतिरोधकःप्रतिबन्धकःपाटच्चरस्तस्कर्यस्मिन्। प्रतिरोधपरा स्कन्दिपाटच्चरमलिम्लुचाइत्यमरः अभीक्ष्णंअभ्यस्ततया अनभ्यस्तत्वेनाप्रतिहतत्वेनच जनैरतिदुर्गमंमोक्षपथमपवर्गमार्गंवितन्तारस्त्वोपेयुषःप्राप्तवतः। उपेयिवानित्यादिनाक्वसु

क्तो निपातः मनस्विनः सुमनसः धीरस्य प्रशंसायां विनिः त्वमेव निरपायः पुनरावृत्तिरहितः सं श्रयः प्राप्तिर्य्यस्याः सा न योक्त्वानस्तपुनरावर्त्तनइ तिश्रुतेः अग्रभूमिः प्राप्तिस्थानं । अग्रमात्मन इति विग्रहः । सोऽहमित्यादिश्रुतेस्तत्प्राप्तेरेव मोक्षत्वादिति भावः । तस्मान्मुमुक्षूणामपि साक्षात्करणीयइति प्रसिद्धम् । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति श्रुतिः । यथा कस्यचित् कुतश्चित्संकटान्निर्गतस्य केनचित्कान्तारेण आगतस्य किंचिन्निर्बा धंस्थानप्राप्तिरभयाय कल्पते तथा त्वमपि मुमुक्षोरिति ध्वनिः ॥ ३२ ॥ ****** ॥ ननु प्रकृतिविविक्तपुरुषसाक्षात्कारान्मोक्षो नात्मत्कारणादित्याशंक्य सोपि त्वमेवेत्याह ॥ उ दासितारमिति ॥ पुराविदः पूर्वज्ञाः कपिलादयः त्वां निगृहीतमानसैरं तर्निबद्धचित्तैः यो

उदीर्णरागप्रतिरोधकं जनैरभीक्ष्णमक्षुण्णतयातिदुर्ग मम् । उपेयुषो मोक्षपथं मनस्विनस्त्वमग्रभूमिर्न्निरपा यसंश्रया ॥ ३२ ॥ उदासितारं निगृहीतमानसैर्गृ हीतमध्यात्मदृशा कथंचन । वहिर्विकारं प्रकृतेः पृथ क् विदुः पुरातनं त्वां पुरुषं पुराविदः ॥ ३३ ॥

गिभिः आत्मनि अधिइत्यध्यात्मं विभक्त्यर्थेऽव्ययीभावः । अनश्चेति समासांतोऽच् अध्या त्मदृक् ज्ञान तया अध्यात्मदृशा तत्त्वदृष्ट्या कथञ्चन गृहीतं साक्षात्कृतं केनरूपेण गृहीत मित्यत आह । उदासितारं उदासीनं प्रकृतौ स्वार्थप्रवृत्तायामपि स्वयमकर्तृत्वादस्पृष्टइ त्यर्थः । आसेरुद्व् च् विकारेभ्यो वहिः वहिर्विकारं महदादिभ्यः पृथग्भूतमित्यर्थः अपपरिव हिरंचवः पञ्चम्येत्यव्ययीभावः किञ्च प्रकृतेस्त्रैगुण्यात्मनो मूलकारणात् पृथक् भिन्नं । प्रकृ तिः पञ्चभूतेषु प्रधाने मूलकारणइति यादवः । पुरातनमनादिं । सायञ्चिरमित्यादि नात्युप्रत्ययः । पुरुषं पुरुषपदवाच्यं विज्ञानघनं विदुर्विदन्तिविदोलटोवेति भस्येर्ज्जुसादेशः ।

यथाहुः मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुष इति । अजामेकां लोहितशुक्लकृष्णामित्यादिश्रुतेश्च । सोपि त्वमेव । तत्त्वमसीत्यादिवाक्यै रैक्यश्रवणात् । तस्मात्त्वमेव साक्षात्करणीय इति सूक्तमिति भावः ॥ ३३ ॥ ************************** ॥

॥ एवं भगवतो निर्गुणस्वरूपमुक्त्वा सम्प्रति प्रस्तुतोपयोगितया सगुणमाश्रित्य षड्भिः स्तौति ॥ निवेशयामासिथेति । जगत्त्रयस्य एकस्य पतिरेकाधिपतिः एकशिल्पी च । स्वप तिरधिपतौ नक्षिणवृहस्पतिस्तचिवयोरिति वैजयन्ती । त्वं हेलया अङ्गुतं वराहावतारे इति भावः । फणाभृतामोकसः आश्रयस्य सद्मनस्तु । ओकः सद्मनि चाश्रये इति विश्वः । ए

निवेशयामासिथ हेलयोद्धृतं फणाभृताञ्छादनमेकमोकसः । जगत्त्रयैकस्थपतिस्त्वमुच्चकैरहीश्वरस्तम्भशिरःसु भूतलम् ॥ ३४ ॥ अनन्यगुर्व्यास्तव केन केवलः पुराणमूर्त्तेर्महिमावगम्यते । मनुष्यजन्मापि सुरासुरान्गुणैर्भवान्भवच्छेदकरैः करोत्यधः ॥ ३५ ॥

कं छादनमावरणं भूतलं उच्चकैः उन्नतेषु अहीश्वरः शेष एव स्तम्भः । तस्य शिरःसु मूर्द्धसु अग्रेषु सहस्रेपीति भावः निवेशयामासिथ निवेशितवानसि विशतेर्ण्यन्ताल्लिटि थल् क्रिया चानु प्रयुज्यते लिटीति अस्तेरनुप्रयोगः अत्र श्लिष्टाश्लिष्टयोरूपयोर्हेतु हेतुमद्भावात् श्लिष्टं परम्परितरूपकम् ॥ ३४ ॥ ************************** ॥

॥ अनन्येति ॥ न विद्यतेऽन्यो गुरुर्यस्यास्तस्याः अनन्यगुर्व्याः इत्यनेकारान्तः पाठः समासान्तविकारेन घृतश्चेति कप्प्रसङ्गः पश्चात्त्वनुपसर्ज्जनादुकाराद्वोतो गुणवचनादिति नश्चाते ति ङीति ह्रस्वश्चेति वा नदीत्वादाप्नद्याः इत्याडागमः केचित्तु समासान्तविधिरनित्य इ

निरूपंवारयन्ति । नस्याःसर्वोत्तरस्यास्त्ववपुरस्राणमूर्त्तेन्केवलोऽमानुषस्वरूपस्यैव केवलांन्तरएकःस्यात्केवलञ्चावधारणेइतिविश्वः । महिमाकेनावगम्यतेनकेनापीत्यर्थः कुतःमनुष्याज्जन्मयस्यतमनुष्यजन्माभवान् । अवर्ज्यैवहुब्रीहिर्व्यधिकरणोजन्माद्युत्तरपदइतिवामनः । भवच्छेदकरैःसंसारनिवर्त्तकैर्गुणैर्ज्ञानादिभिः सुरासुरान्सुरासुरविरोधस्यकार्यापाधिकत्वेनाशाश्वतिकत्वाच्चेषाञ्चविरोधःशाश्वतिकइतिनद्वन्द्वैकवद्भावइत्याद्युः अधःकरोति । शेषेप्रथमइतिप्रथमपुरुषःभवच्छेदस्ययुष्मदस्मदन्यत्वेनशेषत्वादिति । मानुषएवनेमहिमादुरवगाहःअमानुषेकिमितितात्पर्य्यार्थः द्वितीयार्द्धेऽसकृद्व्यञ्जनावृत्याछेकानुप्रासः ॥ ३५ ॥ ************************ ॥

॥ लघूकरिष्यन्निति ॥ त्वमतिभारेणऊर्ज्जेनस्वरूपेणभंगुरांस्वयंभज्यमानां । भञ्जभास

लघूकरिष्यन्नतिभारभङ्गुरामभूरिकिलत्वंत्रि
दिवादवातरः । उदूढलोकत्रितयेनसांप्रतं
गुरुर्द्धरित्रीक्रियतेतरांत्वया ॥ ३६ ॥

मिदोघुरच् । भिदुरादयःकर्मकर्त्तरिइतिवामनःअमूःभुवमित्यर्थः । लघूकरिष्यन्निभांरंकरिष्यन्किलअभूततद्भावेइतिच्विःच्वौचेतिदीर्घः तृतीयाद्योस्त्रिदिवःस्वर्गस्तस्मात्वैन्यर्थेकविधानं । वृत्तिविषयेसंख्याशब्दस्यपूरणार्थत्वंत्रिभागादिवत्अवतारःअवतीर्णोसिसाम्प्रतंसम्प्रतिउदूढलोकत्रितयेनकुक्षाविनिक्षेपःत्वयाधरित्रीगुरुःप्रजाभारवतीचक्रियतेतरांअतिशयेनक्रियते । तिङश्चेतितरप् । किमेत्तिङव्ययादित्यादिनाआम्प्रत्ययः लघुकर्त्तागुरुकर्त्तेतिविरोधाभासोऽलङ्कारः । आभासत्वेविरोधस्यविरोधाभासउच्यतइतिलक्षणात् ॥ ३६ ॥ ************************ ॥

॥ निजेनि ॥ निजौजसास्वतेजसाजगद्द्रोहुत्यन्तीतिजगद्रुहःकंसादयस्तत्सूद्विषदि

त्यादिनाक्विप् । नेवांउज्जासयितुंनानहिंसितुमित्यर्थः उज्जासितिप्रहरणेत्यादिनाकर्मणि
शेषेषष्ठी । जासुहिंसायामितिचुरादिः महीतलंनोपाजिहीथाःवदिनावनारचेत्ओहाङ्
गतोलङिथासिरूपन्तनस्हिंसर्माहिनैःसमाधिनिष्ठैरपिसकर्मकाद्याशिताद्वत्
क्षितेकर्मण्यकर्त्तरिक्तः । अथवासमाहितचित्तैःविभक्तावनेषुविभक्ताभ्रान्तरइतिवदुत्तरप
दलोपोद्रष्टव्यःगम्यमानार्थस्याप्रयोगएवलोपइतिकैयटः । अनिरूपितोगृहीतस्त्वमीश्
आदृशाञ्चर्मचक्षुषामितिभावः । तिनयोक्तिरियंदृशोदृष्टेःपदंगोचरःकथंस्यानकथञ्चि
दित्यर्थः । नत्वत्सावित्वत्साक्षात्कारएवागमनप्रयोजनमितिभावः ॥ ३७ ॥ **** ॥
॥ ननुकोयंनिग्रहोयन्ममैवायंदुष्टनिग्रहाधिकारइत्याशंक्यानन्यसाध्यत्वमाह ॥

निजौजसोज्जासयितुंजगद्द्रुहामुपाजिहीथानमहीत
लंयदि । समाहितैरप्यनिरूपितस्ततःपदंदृशःस्याः
कथमीशमादृशाम् ॥ ३७ ॥ उपप्लुतंपातुमदोमदो
द्धतैस्त्वमेवविश्वंभरविश्वमीशिषे । ऋतेरवेःक्षालयि
तुंक्षमेतकःक्षपातमस्काण्डमलीमसंनभः ॥ ३८ ॥

उपप्लुतमिति ॥ विश्वंबिभर्तीतिविश्वंभरस्तत्संबुद्धौहेविश्वंभर विश्वचानःसंज्ञायांभृ
तृवृजीत्यादिनाखच्प्रत्ययेमुमागमःमदोद्धतैःकंसादिभिःउपप्लुतंपीडितमदोविश्वंपातुंत्व
मेवईशिषेशक्तोसिविश्वंभरत्वादितिभावःईशऐश्वर्येलिटिथासिरूपं । अत्रवैधर्म्येणदृ
ष्टान्तमाह । क्षपायास्तमस्काण्डैःतमोवर्गैः । काण्डोऽस्त्रीदंडवाणार्ववर्गावसरवारिषि
त्यमरः । काण्डादिषुवेतिविसर्जनीयस्यसत्वंमलीमसंमलिनं । मलीमसंतुमलिनंकच्चरं
मलदूषितमित्यमरः । ज्योत्स्नातमिस्रेत्यादिनामत्वर्थीयोनिपातः । नभःक्षालयितुंरवेः
ऋतेरविंविनाअन्यारादितरर्त्तेइतिपञ्चमीकःक्षमेतशक्नुयात्नकोपीत्यर्थः अन्नवाकाण्ड

द्वेसमानधर्म्मस्यैकस्यशिवेः क्षमेनेतिशब्दद्वयेनवस्तुप्रतिवस्तुभावेननिर्द्दिशात्तत्वापिव्य
तिरेकमुखत्वाद्वैधर्म्येणप्रतिवस्तूपमालंकारः । तदुक्तंसर्वस्ववाक्यार्थगतत्वेनसामान्यस्य
वाक्यद्वयेपृथग्निर्द्देशेप्रतिवस्तूपमा ॥ ३८ ॥ ****************** ॥
॥ करोतीति ॥ त्वच्चजनोमृगाणामिवकंसादिमहीभृतांवधाज्जनोःस्तवंस्तोत्रं । स्तवःस्तो
त्रंनुतिस्तुतिरित्यमरः । करोतीतियत्हेहरे हेहरिहेसिंहेतिचगम्यतेसास्तुतिक्रियाहि
रण्याक्षपुरःसराःहिरण्याक्षप्रभृतयोयेऽसुरास्तएवद्विपास्तेषांद्विषःहन्तुरित्यर्थः । नस्य
भवप्रत्युतवैपरीत्येनप्रत्युतेत्युक्तवैपरीत्येइतिगणव्याख्यानात् तिरस्क्रियाऽवमानःयदि
तिसामान्येनपुंस्त्वं । सोतिविधेयलिंगं । गजघातिनः सिंहस्यमृगवधवर्णनमिवमहासु

करोतिकंसादिमहीभृतांवधाज्जनोमृगाणामिवयत्तव
स्तवम् । हरेर्हिरण्याक्षपुरःसराऽसुरद्विपद्विषःप्र
त्युतसातिरस्क्रिया ॥ ३९ ॥ प्रवृत्तएवस्वयमुज्झितत्व
श्रमःक्रमेणपेष्टुंभुवनद्विषामसि । तथापिवाचालत
यायुनक्तिमांमिथस्त्वदाभाषणलोलुपंमनः ॥ ४० ॥

रहन्तुस्तवकंसादिक्षुद्रनृपवधोद्घाटनंतिरस्कारएवेत्यर्थः अत्रासुरद्विपानांहरिदर्द्वे
रिरितिश्लिष्टपरंपरितरूपकंमृगाणामिवेत्युपमयाऽङ्गाङ्गिभावेनसङ्कीर्यते ॥ ३९ ॥॥
॥ एवंस्तुत्यादेवमभिमुखीकृत्यागमनप्रयोजनंवक्तुमुपोद्घातयति ॥ प्रवृत्तइति ॥ त्व
मुज्झितःत्यक्तःश्रमःसन्क्रमेणभुवनानिद्विषंतीतिभुवनद्विषःदुष्टाःतेषांपेष्टुंनाशयितुं
हिंसितुमित्यर्थः । ज्यासिनिप्रहरणेत्यादिनाकर्मणिषष्ठीस्वयमपरप्रेरितएवप्रवृत्तोसि ।
एवंतर्हिपिष्टपेषणंकिमितिचेत्तत्राह । तथापिस्वतःप्रवृत्तेपिमिथोरहसित्वदाभाष
णेन्वयासहसंलापेलोलुपंलुब्धं । लुब्धोभिलाषुकस्तृष्णक्समौलोलुपलोलुभावित्यमरः ।

मसीमीवाचालत्वयासहयुनक्तिवाचालंकरोतीत्यर्थः वाचोबह्वोऽस्यसन्तीतिवाचालःआ
लजाटचौवक्तुमाविशीत्यालच्। स्यात्जल्पकस्तुवाचालोवाचाटोबहुभाषिणीत्यमरः॥
॥ ४० ॥ ******************************* ॥

॥ अथस्ववाक्यश्रवणेसहेतुकम्प्रार्थयते ॥ तदिति ॥ ततस्मादिन्द्रमुपगतःउपेन्द्रइ
न्द्रावरजःअतएवेन्द्रसन्दिष्टंश्रोतव्यमितिभावः। किञ्चविश्वस्मैजनायहितंविश्वजनीनं
आत्मन्विश्वजनभोगोत्तरपदात्खः यद्वचःक्षणमनतिचिरंमयोच्यते। तद्वचोऽहिद्विषोवृ
त्रघ्नः। सर्वैर्वृत्रासुरेषुहिहरिनिर्जयन्तो। समस्तकार्येषुधुर्यतांधुरंधरत्वंगतेनअतोऽपिभव
तानिशम्यतांप्रार्थनायांलोट्धुरंवहतीतिधुर्यःधुरोयत्ढकौ।विनियत्युपमयःस्फुटमत्रपदार्थ

तदिन्द्रसंदिष्टमुपेन्द्रयद्वचःक्षणंमयाविश्वजनीनमु
च्यते। समस्तकार्य्येषुगतेनधुर्य्यतामहिद्विषस्तद्भ
वतानिशम्यताम्॥ ४१॥ अभूदभूमिःप्रतिपक्षज
न्मनांभियातनूजस्तपनद्युतिर्दितेः। यमिन्द्रशब्दा
र्थनिसूदनंहरेर्हिरण्यपूर्वङ्कशिपुंप्रचक्षते॥४२॥

हेतुवाक्यार्थलिङ्गमलङ्कारः॥ ४१ ॥ ************************* ॥
॥ अथशिशुपालोहन्तव्यइतिवक्तुंतस्यावश्यवध्यत्वेऽनन्यवध्यत्वज्ञापनोपयिकतयाऔद्ध
त्यप्रकटनार्थंजन्मान्तरवृत्तांतंतावदुद्घाटयति॥ अभूदिति ॥ प्रतिपक्षान्छत्रोःजन्मया
सान्तासांभियामभूमिरविषयःनिर्भीकइत्यर्थःतपनद्युतिःस्फुर्यतापोदितेस्तनूजोदैत्योभूत्
कोसावतआह। हरेरिन्द्रस्यइन्द्रशब्दार्थनिसूदनंइन्दतीतिइन्द्रःइदिपरमैश्वर्ये।
ऋज्रेन्द्रेत्यादिनारक्प्रत्ययान्तःऔणादिकनिपातःतस्यइन्द्रइतिशब्दस्येन्द्रइतिसंज्ञाप
दस्ययोर्थःपरमैश्वर्यलक्षणःतस्यनिसूदनंनिवर्त्तकंकर्त्तरिल्युट्। हरेरैश्वर्यनिहन्तार

मित्यर्थः।यंदैत्यंहिरण्यपूर्वंकशिपुंप्रचक्षतेहिरण्यकशिपुमाहुरित्यर्थः। अत्रहिरण्यशब्द पूर्वकत्वंकशिपुशब्दस्यैवनतुसंज्ञिनःतदर्थस्येतिशब्दपरस्यकशिपुशब्दस्यार्थगतत्वेनाप्रयो ज्यस्यप्रयोगादवाच्यवचनाख्यार्थदोषमाहुः। यदेतावाच्यवचनमवाच्यवचनंहितदिति समाधानंएवंविधविषयेशब्दपरेणार्थलक्षणेतिकथंचित्सम्पाद्यमित्युक्तमस्माभिर्दैवपूर्वंगि रिंतोइतिवत्तद्रूपपदमस्मैवेदमभ्यादिदेशेत्येतद्व्याख्यानावसरेसञ्जीविन्याख्यटीकायांचवि शेषस्त्वत्रायंदैत्यमपदिश्यहिरण्यपूर्वंकशिपुंप्रचक्षतेसंज्ञात्वेनप्रयुंक्ते॥ ४२॥ ** ॥

॥ समत्सरेणेति ॥ समत्सरेणअन्यशुभद्वेषसहितेन। मत्सरोऽन्यशुभद्वेषइत्यमरः। असुरनीत्यसुरःअसेरुरन्असुरइतिनाम्नःचिरायचिरकालेन।चिरायचिररात्रायचि

समत्सरेणासुरइत्युपेयुषाचिरायनाम्नःप्रथमाभि
धेयतां। भयस्यपूर्वावतरस्तरस्विनामनस्सुयेनद्युस
दांन्यधीयत॥ ४३॥ दिशामधीशांश्चतुरोयतः
सुरानपास्यतंरागहृताःशिषेविरे। अवापुरारभ्यत
तश्चलाइतिप्रवादमुच्चैरयशस्करंश्रियः॥ ४४॥

रस्याद्याश्चिरार्थकाइत्यमरः। प्रथमाभिधेयतामुपेयुषाअन्वर्थतयामुख्यार्थतांगतेनतर स्विनाबलवता। तरसीबलरंहसीतिविश्वः। येनहिरण्यकशिपुनादितिसीदन्तीतिद्युसदः न्देवानांमनःसुभयस्यपूर्वावतरःप्रथमप्रवेशःचटदोरपन्यधीयतनिहितःधात्रःकर्मणि लङ्अस्मादेवदेवानांप्रथमंभयस्योत्पत्तिरभूदित्यर्थः॥ ४३ ॥ ********** ॥

॥ दिशामिति ॥ श्रियःसम्पदःयतोयदैत्यर्थःदिशामधीशान्दिक्पतीनपिचतुरःसुरा निन्द्रवरुणयमकुबेरान्अपास्यत्यक्त्वातंहिरण्यकशिपुंरागहृताः रागकृष्टाःसत्यःततुबला दितिभावःशिषेविरेयतोवीरप्रियाःश्रियइतिभावः। ततआरभ्यतदाप्रभृतिअयशःकरोती

न्वयशस्करं दुःकीर्त्तिहेतुकमित्यर्थः हाम्नो हेतुना च्छीत्यानुलोम्येष्विमिटप्रत्ययः अनःकी कमीत्यादि विसर्ज्जनीयस्य सत्वं उच्चैः प्रचुरं चलाः अखिरा इति प्रवादस्तु नवाद मापुः दिगी श्वानामपि सर्वस्वहारित्वात्तदौद्धत्यस्य प्राकट्यमितिभावः ॥ ४४ ॥ ****** ॥

॥ पुराणीति ॥ किञ्चनाकिनां सुराणां गणैः यं हिरण्यकशिपुं आशंक्य बाधकत्वेनोत्प्रेक्ष्य सका लअादिर्यस्मिन् तत्तदादि नदाप्रभृति स्वरूपशोभैकफलं मुख्यं प्रयोजनं येषां तेषां सुराणां नांतानि नयोक्तानि प्रागौद्गरसाध्य शत्रोरभावादिति भावः । नपुंसकमनपुंसकेनेत्यादिना न पुंसकैकशेषः । पुराणि दुर्गाणि प्राकार परिखादिना ऽगम्यानि चक्रिरे सुदुरोरूपसंख्याम

पुराणि दुर्गाणि निशातमायुधं बलानि शूराणि घनाश्च कं
चुकाः । स्वरूपशोभैकफलानि नाकिनां गणैर्यमाशङ्क्य
तदादि चक्रिरे ॥ ४५ ॥ स संचरिष्णुर्भुवनान्तरेषु यां
यदृच्छयाम श्रियदाश्रयः श्रियः । अकारि तस्मै मुकुटो
पलस्खलत्करैस्त्रिसंध्यं त्रिदशैर्दिशे नमः ॥ ४६ ॥

मितिगमेर्डः । आयुधं निशानं निशितञ्चकेइ इति विभक्तिविपरिणामेनान्वयः शोतन्तूकरणे इति धातोःक्तः शाच्छोरन्यतरस्यामितीत्वविकल्पात्पक्षे आत्वं । बलानि सैन्यानि शूराणि शौर्य वंति चक्रिरे संपादितानि कंचुका वारवाणाः लोहवर्माणीत्यर्थः । कंचुको वारवाणोऽस्त्रीत्य मरः । घनाः दुर्भेदाश्च क्रिरे इत्थं नित्यसंनद्धा जागरूकाणीत्यर्थः ॥ ४५ ॥ ****** ॥

॥ सेति ॥ अन्येषु भुवनेषु भुवनान्तरेषु सुप्सुपेति समासः संचरिष्णुः सञ्चरणशीलः अलंकृ ञित्यादिना चरेरिष्णुच् श्रियः लक्ष्म्याः आश्रयः स हिरण्यकशिपुः यदृच्छया स्वैरवृत्त्या यदृ च्छा स्वैरवृत्तिरित्यमरः । यां दिशम श्रियत् अगमत् श्रियतेर्लुङ् णिश्रीत्यादिना चङि द्विर्भावः इ यङादेशः मुकुटोपलेषु मौलिरत्नेषु स्खलन्तः करा येषां तैः शिरस्सु बद्धांजलिभिरित्यर्थः ।

उपलःप्रस्तरेरत्नेइतिविश्वः । त्रिसोदशावाल्यकौमारयौवनानिजन्मसत्तावृद्धयोवायेषां तैस्त्रिदशैःदेवैः । त्रिसःसंख्याःसमाहृतात्रिसंध्यंतद्धितार्थे इत्यादिनासमाहारेद्विगुःद्विगुरेकवचनंवाटावन्तइतिनपुंसकत्वंअत्यंतसंयोगेद्वितीया । तस्यैदिशेकरैःहस्तैः नमःस्वस्तीत्यादिनाचतुर्थीनमःनमस्कारोऽकारिकृतःकृञःकर्मणिलुङ्चिण्भावकर्मणोरितिचिण् । तथाचसंध्यावन्दनेपिदिग्नियमंपरित्यज्यतदागमनभयात्तस्यैदिशेनमस्कारःकृतइतिभावः ॥ ४६ ॥**************************॥

॥ अथसोपित्वयैवहतइत्याह ॥ सटाच्छटेति ॥ हेनृसिंहनरःसिंहइवेत्युपमितसमासः नाथासौसिंहश्चेत्यपिप्रस्तावात् सिंहस्येमांसैंहींतनुंकायंबिभ्रताधारयता

सटाच्छटाभिन्नघनेनबिभ्रतानृसिंहसैंहीमतनुंतनुं
त्वया । समुग्धकान्तास्तनसङ्गभङ्गुरैरुरोविदारंप्र
तिचस्करेनखैः ॥ ४७ ॥ विनोदमिच्छन्नथदर्प
जन्मनोरणेनकण्ड्वास्त्रिदशैःसमंपुनः । सरावणोना
मनिकाममभीषणंबभूवरक्षःक्षतरक्षणंदिवः ॥ ४८ ॥

त्वयाइत्यर्थःकिंभूतंअतनुंविस्तीर्णांअतएवसटाच्छटाभिःकेसरसमूहैः भिन्नाघनामेघायेनअभ्रंकषविग्रहत्वादितिभावः । सटाजटाकेसरयोः । तनुःकायेकृशेऽल्पेचेतिविश्वः त्वयासदैत्यःमुग्धैर्नवैः । मुग्धःसौम्येनवेमूढेइतिवैजयन्ती । योकान्तास्तनैःतयोःसङ्गेनापिभंगुरैःकुटिलैर्नखैरुरोविदारंउरोविदार्यपरिक्लिश्यमानेचेतिणमुल्प्रत्ययःप्रतिचस्करेहतःकिरतेःकर्मणिलिट्ऋदृच्छत्यृतामितिगुणःहिंसायांप्रतेश्चेतिसुडागमः । वज्रकठिनोपितनखैर्विदारितइतिवाङ्मनसोरगोचरमहिमस्तेकिमसाध्यमितिभावः ॥ ४७ ॥**॥

अथास्यजन्मान्तरचेष्टितान्याचष्टे ॥ विनोदमिति ॥ अथसहिरण्यकशिपुःपुन

भैवेपि त्रिदशैः समं सह । साकं सार्द्धं समं सहेत्यमरः । रणेन दर्पोद्दंतः स राजन्मय स्याः तस्याः कंडूभुजकंडूतेर्विनोदमपनोदमिच्छन् प्राग्भवन वक्षैः मदपनोदाभावादित्यर्थः। दिवः स्वर्गस्य क्षतं नष्टं रक्षणं रक्षायै ततत्क्षतत्तुरक्षणमित्यर्थः सापेक्षत्वेपि गमकत्वात्तु मासः रावणो नाम रावण इति प्रसिद्धं रक्षोऽभूद्राक्षसोऽयो नैजातइत्यर्थः । विश्रवसोपत्यं पुमान् रावण इति विग्रहः । तस्यापत्यमित्यणिकृते विश्रवसो विश्रवण रवणाविति प्रकृते रवणादेशः । पौराणिकास्तु रावयतीति व्युत्पादयंति तदुक्तमुत्तरखंडे । यस्माल्लोकत्रयं चैत द्रावितं भयमागतं । तस्मात्त्वं रावणो नाम नाम्ना वीरो भविष्यसीति । रोतेर्ण्यंतात्कर्तरि ल्युडिति रावण रक्षसोर्नियतलिंगत्वाद्विशेषणविशेष्यभावेपि स्वलिंगता ॥ ४८ ॥ *** ॥

॥ अथास्यौद्धत्यमष्टादशश्लोकेनच्याचष्टे । प्रभुरिति ॥ यो रावणः भुवनत्रयस्य प्रभुः स्वामी

> प्रभुर्बुभूषुर्भुवनत्रयस्य यः शिरोऽतिरागाद्दश
> मं चिकर्त्तिषुः । अतर्क्ययद्विघ्नमिवेष्टसाहसः
> प्रसादमिच्छासदृशं पिनाकिनः ॥ ४९ ॥

बुभूषुः भावितुमिच्छुः सन्नंतादुप्रत्ययः इष्टसाहसः प्रियसाहसः अतएव स्वेच्छासदृशमिच्छानुरूपं पिनाकिनः प्रसादं वरं विघ्नमिवातर्क्ययत् उत्प्रेक्षितवानिति परमसाहसिकोक्तिः इत आरभ्य श्लोकषट्केपि यच्छब्दस्य स रावणो नाम रक्षोऽबभूवेति पूर्वेणान्वयः । रंगराजस्तु चक्रमस्याक्रमताधिकंधरमिति उपरिष्टादन्वय इत्याह ॥ तदसत् गुणानां च परार्थत्वादिति न्यायाद्दारुण्यादिवत्प्रत्येकं प्रधानानां मियः संबंधायोगादित्यलं । शाखा चंक्रमणेन पुराकिल रावणः काम्यकर्मणि प्रजापतिप्रीणनाय नव शिरांसि अग्नौ हुत्वा दशमारंभे संतुष्टात्तस्मात्त्रैलोक्याधिपत्यं वव्रे इत्युत्तरकांडोक्ता कथाऽत्रानुसंधेया ॥ ४९ ॥ ** ॥

॥ अथ कैलासोत्क्षेपवृत्तांतमाह ॥ समुत्क्षिपन्निति । यो रावणः पृथिवीभृतां पर्वतानां वरं श्रे

ष्ठं कैलासं समुत्क्षिपन् दर्पादिति शेषः । शूलिनो वरप्रदानस्य पूर्वोक्तस्य त्रसंत्या शैलचलनेन बिभ्यत्यानुषाराद्रिसुतया पार्वत्या ससंभ्रमं यः स्वयंग्रहः प्रियप्रार्थनां विना कंठग्रहणंतस्य सुखेनेति समासः तेन आश्लेषः संमिलनं । तेन यत्सुखं तेन त्रैलोक्याधिपत्यस्य वरस्योत्कृष्टमेतिभावः । निःक्रयं प्रत्युपकारं निर्गतिं चकार । निःक्रयो बुद्धियोगे स्यात्सामर्थ्ये निर्गतावपीति वैजयंती । यद्वा निःक्रय वकार क्रयेण व्यवहारेण याज्ञादोषदैन्यं ममार्जेत्यर्थः । अत्र तु स्ववरदानयोर्विनिमयात्परिवृत्तिरलंकारः ॥ ५० ॥ ****************** ॥

॥ पुरीमिति ॥ यो बलीबलवान् रावणः नमुचिद्विषा इन्द्रेण विगृह्य विरुध्य पुरीममरावतीमवस्कंद अवरुरोध नंदनं नंदनवनं लुनीहि चिच्छेद इह लघोरिति कारः रत्नानि श्रेष्ठवस्तूनि मणीन्वा

समुत्क्षिपन्यः पृथिवीभृतां वरं वरप्रदानस्य चकार शू
लिनः । त्रसत्तुषाराद्रिसुतासंभ्रमं स्वयंग्रहाश्लेषसु
खेन निष्क्रयम् ॥ ५० ॥ पुरीमवस्कंद लुनीहि नंद
नं मुषाण रत्नानि हरामरांगनाः । विगृह्य चक्रे नमुचिद्वि
षा बली य इत्थमस्वास्थ्यमहर्दिवं दिवः ॥ ५१ ॥

रत्नं श्रेष्ठे मणावपीति विश्वः । मुषाण मुष स्तेये हलः श्नः शानज्झाविति श्नाशानजादेशः अमरांगनाः हर जहार । सर्वत्र पौनःपुन्येनेत्यर्थः इत्थमनेन प्रकारेण अहनि च दिवा च अहर्दिवं अहन्यहनीत्यर्थः । अचतुरेत्यादिना सप्तम्यर्थवृत्तौ द्वंद्वसमासांतो निपातः दिवः स्वर्गस्य अस्वास्थ्यं उपद्रवं चक्रे अत्रावस्कंदेत्यादौ क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोरिति अनुवृत्तौ समुच्चयेऽन्यतरस्यामिति विकल्पेन कालसामान्ये कालमात्रादेशो होइ । तस्य यथोपग्रहं सर्वलिङादेशो हिस्वौ च प्रकरणादिनात्वर्थविशेषावसानं अतो हेरिति यथायोग्यं हिलुक् पौनःपुन्यं भृशार्थो वा क्रियासमभिहारः अवस्कंदनादिक्रियाविशेषाणां समुच्चयः क्रि

भासमभिहारः तत्साम्यप्रकारोनेः समुच्चये सामान्यवचनस्येत्यनुप्रयोगश्चकेड्गिति । प्र पचितिङ्वैचित्र्यात्सौशब्दाख्येगुणःसुपांतिङांचोत्पत्तिःसौशब्द्यमिति लक्षणात् समुच्चयस्या लंकारः । हयउच्चैःश्रवा मुनोमातलिर्नन्दनं वनमित्यमरः ॥ ५१ ॥ ********* ॥

॥ सलीलेति ॥ संयति युद्धे समुदायः क्रियासंयन्त मित्याजिसमित्युध इत्यमरः । येन रावणेन अनुद्रुतोऽनुधावितः बलस्य शत्रुरिंद्रः अभ्रमोर्भर्तुरैरावणस्य सलीलयातानि भंगीरगमनानि न प्रशशंसन यातुच्चैःश्रवसः स्वाश्वस्य चित्रं नानाविधं पदक्रमं पदविक्षेपं अर्द्धपलायितादिगतिविशेषमित्यर्थः न प्रशशंस किंतु केवलं शीघ्रतां शीघ्रगामित्वमेव प्रशशंस अन्यथा शीघ्रं मामयं ग्रहीष्यतीति भयादिति भावः ॥ ५२ ॥ ************* ॥

सलीलयातानि न भर्तुरभ्रमोर्न चित्रमुच्चैः श्रवसः पदक्रमम् । अनुद्रुतः संयति येन केवलं बलस्य शत्रुः प्रशशंस शीघ्रताम् ॥ ५२ ॥ अशक्नुवन्सोढुमधीरलोचनः सहस्ररश्मेरिव यस्य दर्शनम् । प्रविश्य हेमाद्रिगुहागृहान्तरं निनाय बिभ्यद्दिवसानि कौशिकः ॥ ५३ ॥

॥ अशक्नुवन्निति ॥ अधीरलोचनः अस्थिरदृष्टिः कौशिको महेंद्रः उलूकश्च । महेन्द्रगुग्गुलूलूकव्यालग्राहेषु कौशिक इत्यमरः । सहस्ररश्मेः सूर्यस्येव यस्य रावणस्य विक्रमकर्मणो दर्शनं सोढुमशक्नुवन् । हेमाद्रेर्गुहैव गृहं तस्यांतरं प्रविश्य बिभ्यत्तत्रापि वेपमान एव बिभीतेः शतरि नाभ्यस्ताच्छतुरिति नुमभावः दिवसानि वासराणि निनाय । वा तु क्लीबे दिवसवासरौ इत्यमरः । यथा पेचकः सूर्योदये भीतः सन्निष्ठति तथा सोपीति भावः कौशिक इत्यभिधायाः प्रस्तुतैकगोचरत्वेन भयस्यैवेपि विशेष्य स्येषा संभवात् उलूकविषय शब्दशक्तिमूलो ध्वनिः सहस्ररश्मेरिवेत्युपमानिर्वाहकत्वाद्वाच्य सिद्ध्यंगम् ॥ ५३ ॥ ********** ॥

॥ बृहच्छिलेति ॥ बृहती या शिलेवनिष्ठुरे कंठे घट्टनादभिघाताद्विकीर्णा विक्षिप्ता लोलाश्चला अग्निकणाः स्फुलिंगाः यस्य तत् अप्रसहिष्णु अनभिभावकं । प्रसहनमभिभव इति वृत्तिकारः । अलंकृञ्निराकृञित्यादिना इष्णुच् । वैष्णवं चक्रं सुदर्शनं जगत्प्रभोः सकललोकैकस्वामिनः अस्य सुरद्विषः कंधरायामधि अधिकंधरं अधिग्रीवं विभक्त्यर्थेऽव्ययीभावः अव्ययीभावश्चेति नपुंसकत्वात् ह्रस्वो नपुंसके प्रातिपदिकस्येति ह्रस्वत्वं । कण्ठो गलोऽथ ग्रीवायां शिरोधिः कंधरेत्यपीत्यमरः । नाक्रमत प्रतिहतं न क्रमते न प्रवर्त्तते स्म किंतु प्रतिहतमेवेत्यर्थः । वृत्तिसर्गतायनेषु क्रम इति वृत्तावात्मनेपदं वृत्तिरप्रतिबंधः ॥ ५४ ॥ ****** ॥

॥ विभिन्नेति ॥ सशंखो मदेन दर्पेण भेदानेन च । मदो दर्पेभदानयोरिति विश्वः । दंतीव

बृहच्छिलानिष्ठुरकण्ठघट्टनाद्विकीर्णलोलाग्निकणं
सुरद्विषः । जगत्प्रभोरप्रसहिष्णुवैष्णवंनचक्रमस्या
ऽक्रमताधिकन्धरम् ॥ ५४ ॥ विभिन्नशङ्खः कलुषीभव
न्मुहुर्मदेनदन्तीवमनुष्यधर्म्मणः । निरस्तगाम्भीर्य्य
मपास्तपुष्पकंप्रकंपयामासनमानसंनसः ॥ ५५ ॥

गज इव विभिन्नो विघट्टितः शंखो निधिभेदः कंबुश्च येन सः सन् । शंखो निध्यंतरे कंबुललाटास्थ्नि नखेऽपि चेति विश्वः । अकलुषं कलुषं संपद्यमाना विलंबाभवन्कलुषीभवन् निरस्तगांभीर्यं निर्विकारित्वं च यस्य तत् । अपास्तानि पुष्पकाणि पुष्पाणि पुष्पकं विमानं च यस्मात् तत् पुष्पके वैभाषिकः कप्रत्ययः मनुष्यस्येव धर्मः स्वभावो मनुष्यत्वादिर्यस्येति स्वामी तस्य मनुष्यधर्मणः धर्मादनिच् केवलादित्यनिच् । न सः चित्तं न दर्पीयं सरश्च । मानसं सरसि स्वान्ते इति विश्वः । मुहुर्न कंपयामास न क्षोभयामासेति न किंतु कंपयामासैवेत्यर्थः । कुबेरस्य महामहिमतयाऽसंभावितात्प्रकंपत्वनिवारणाय नञ्द्वयं संभाव्यनिषेधनिवर्त्तने द्वौ प्रतिषेधाविति वामनः । अत्रदंति

रव्यर्थयोः श्रुतता प्रश्नतयोः श्लेषः ॥ ५५ ॥ ********************** ॥

॥ रणेष्विति ॥ किंच रणेषु प्रचेतसा वरुणेन प्रहिताः प्रयुक्ताः उरगराजा महासर्पास्तेरज्ज
वइव उरगराजरज्जवः नागपाश इत्यर्थः । तस्य सवरुणस्य सरोषहूंकारेण पराङ्मुखीकृ
ताः व्यावर्जिताः । अतएव सभयाः सन्तः जवेन वेगेन प्रहर्त्तुः प्रयोक्तुः प्रचेतस एव कंठं प्रपेदिरे
प्राप्ताः अत्र परहिंसाप्रयुक्तस्यायुधस्यैव परावृत्त्येन स्वकंठग्रहणात्तन्नैयत्यं चित्ररूपो विषमालं
कारः । प्रचेता वरुणः पाशीत्यमरः । जवः स्याद्वेगे वेगिनोरिति हैमः ॥ ५६ ॥ *** ॥
॥ परेतभर्तुरिति ॥ अमुना राज्ञा रणेन धनुः शार्ङ्गं विधातुं निर्मातुं उत्खातमुत्पाटितं विषाण
येः शृङ्गयोर्मध्ये एकं तत्तयं यस्य स परेतभर्त्तुः यमस्य महिषो वाहनभूत इति भावः । भारे विषा

रणेषु तस्य प्रहिताः प्रचेतसा सरोषहूङ्कारपराङ्मुखी
कृताः । प्रहर्तुरेवोरगराजरज्जवो जवेन कण्ठं सभ
याः प्रपेदिरे ॥ ५६ ॥ परेतभर्तुर्महिषोऽमुना ध
नुर्विधातुमुत्खातविषाणमण्डलः । हृतेऽपि भारे महत
स्त्रपाभरा द्वहाद् दुःखेन भृशानतं शिरः ॥ ५७ ॥

णरूपे भृत्यो घन्हृत्ने पि महतस्त्रपाया एव भरात् भरतस्तस्मात् नोपि दुर्भरादिति भावः भृत्यः
कैयादिकान् क्तदेरविनि अप्रत्ययः भृशमत्यर्थमानतं नम्रं शिरो दुःखेनोवाह वहति स्म । अ
संयोगाल्लिट्कित्वाद्वचिस्वपीत्यादिना संप्रसारणं हृतेऽपि भारे नमनइति विरोधः तदनुप्राप्ता
र्थं त्रपा अवनिगतभग्नशृङ्गसामान्यमहिषस्य धर्म्यात् । ययाभारत्वोत्प्रेक्षा । मन्दाक्षं ह्रीस्त्रपा
व्रीडा लज्जेत्यमरः ॥ ५७ ॥ ************************ ॥
॥ स्पृशन्निति ॥ अहः करोतीत्यहस्करः सूर्यः दिवाविभानिशेत्यादिना टप्रत्ययः । क
स्कादित्वात्सत्वं शुचौ समये ग्रीष्मकाले अनुपहतनाचावेऽवस्थितोऽपि । शुचिः शुद्धेऽनुपहते शृं

ङ्गणकण्ठयोरपि। ग्रीष्मेऽजनवदेपिस्त्यादिनिविश्वः। समयाः शपथाचारकालसिद्धांतसंवि
द इत्यमरः। असमग्रपातिभिः संकुचितवृत्तिभिरित्यर्थः। कराणामंसूनां हस्तानां चाग्रैः।
बलिहस्तांशवः करा इत्यमरः। सशंकः स्पृशन् अविश्वासभयादिति भावः। अघर्माः अनु
ष्णाः घर्मोदकबिंदवः मंथोदनेत्यादिना विकल्पादुदकशब्दस्योदादेशाभावः। तैरेव मौक्ति
कैरस्य वधूरलंचकार ग्रीष्मेऽङ्गयाम्रासह्यं नीत्यर्थः। अप्रस्तुतसूर्यविशेषणमात्रसाम्यादप्र
स्तुतप्रसाधकप्रतीतेः समासोक्तिरलंकारः ॥ ५८ ॥ *************** ॥
॥ कलासमग्रेणेति ॥ कलाभिः षोडशांशैः शिल्पविद्याभिश्च समग्रेण संपूर्णेन। कालेऽप्यत्येवि
षयूद्धो चंद्रांशैः कालनेकलाइत्यिवैजयन्ती। गृहानमुंचता सदानङ्गृहेष्वेव वसनाद्गृहभयसे

स्पृशन्सशङ्कः समये शुचावपि स्थितः कराग्रैरसमग्रपा
तिभिः। अघर्मघर्मोदकबिन्दुमौक्तिकैरलंचकारा
स्य वधूरहस्करः ॥ ५८ ॥ कलासमग्रेण गृहानमुंच
ता मनस्विनीरुत्कयितुं पटीयसा। विलासिनस्तस्य वि
तन्वता रतिं न नर्मसाचिव्यमकारि नेन्दुना ॥ ५९ ॥

वाधर्मत्वाच्चेति भावः। मनस्विनीर्मानिनीरुत्काउत्सुकाः कर्तुं उत्कयितुं उत्क उन्मना इ
ति निपातनादुत्कशब्दात्करोतीति णयन्तात्तुमुन्। पटीयसा मनोभेदचतुरेणेत्यर्थः।
केनरतिं वितन्वता विरचयता चंद्रिकाभिश्चतुरोक्तिभिश्च रागं वर्द्धयतेन्दुना विलासिनो
विलसनशीलस्य वैकषलसकत्यसंभइनिचिनुन्प्रत्ययः। तस्य राज्ञः नर्मसाचिव्यं क्रीडा
संबंधाधिकारित्वं चेष्टत्वं। लीलाक्रीडा च नर्म चेत्यमरः। नाकारीति न किं त्वकार्येवेत्यर्थः।
अनौचित्यप्राप्तनर्मसाचिव्यनिषेधनिवारणार्थं नञ्द्वयं संभाव्य निषेधनिवर्तनेन नञ्द्वयमिति
वामनः। अत्रेन्दोः प्रकृतस्याप्रकृतेन नर्मसचिवेन श्लेषः ॥ ५९ ॥ ********* ॥

॥ विदग्धेति ॥ मानिना ऽहंकारिणा ऽनेनरावणेन विदग्धलीलाश्चतुरविलासिन्यइत्य र्थः । तासामुचितास्सतादंतपत्रिकाश्चकर्णभूषणानिविलासिनीविभ्रमदंतपत्रिकेतिसा धीयान्पाठः । अन्यथाविप्रकृष्टार्थप्रतीतित्वेनक्लिष्टाख्यार्थदोषापपत्तेः । क्लिष्टंतदर्थाव गतदूरायतोभवेदितिलक्षणात् । विलासिनीनांयादंतपत्रिका विभ्रमार्थानियानिदन्त मयपत्राणिविभ्रमदंतशब्दयोःषष्ठीसमासपर्यवसानात् । तुरार्थलाभः । तानविधित्सया पिधातुमिच्छयाविपूर्वाद्धातेःसनि । मीमीत्यादिनाइकारःअचलोपेभ्यासस्येत्यभ्यास लोपः । ननस्त्रियामप्रत्ययादित्याकारप्रत्ययेटाप् । नूनंनिश्चितंजातुकदाचिदपि । क दाचिज्जातुसार्धंमित्यमरः । उद्धृतमुत्पाटितंविनायकस्यगणेशस्येदं वैनायकंएकंविषाणं

विदग्धलीलोचितदन्तपत्रिकाविधित्सयानूनमनेन
मानिना । नजातुवैनायकमेकमुद्धृतंविषाणमद्यापि
पुनःप्ररोहति ॥ ६० ॥ निशान्तनारीपरिधानधूनन
स्फुटागसाप्यूरुषुलोलचक्षुषः । प्रियेणतस्यानपराध
बाधिताःप्रकम्पनेनानुचकंपिरेहुराः ॥ ६१ ॥

दंतः । विषाणंपशुशृङ्गेस्यात्क्रोडेभदंतयोरितिविश्वः । अद्यापिपुनर्नप्ररोहति नप्रादुर्भवतिप्रपूर्वाद्रुहप्रादुर्भावेलट् किमन्यत्कार्यमस्येतिभावः । एतच्चान्यथाकथंग जाननस्यैकदंतत्वमुत्प्रेक्ष्यतेनूनमिति ॥ ६० ॥ ****************** ॥

॥ निशांतेति ॥ निशांतमङ्गृहं । निशांतंगृहशांतयोरितिविश्वः । तत्रयाःनार्यःशुद्धांतस्त्रि यःइत्यर्थः । तासांपरिधानानिअंतरीयाणि । अंतरीयोपसंव्यानपरिधानान्यधोंशुकेइ त्यमरः । तेषांधूननंचालनंधूञोर्णंतात्ल्युट्धूञ्प्रीञोर्नुग्वक्तव्यइतिनुक् । तेनस्फुटाग साव्यक्तापराधेनापिअंतःपुरद्रोहस्यमहापराधत्वादितिभावः । जरुषुनासांसक्थिषुलोल

चक्षुषःसतृष्णदृष्टेः। सक्थिक्लीबेपुमानूरुरिति। लोलश्चलसतृष्णयोरितिचामरः। अत
एवतस्यरावणस्यप्रियेणप्रमोदास्पदभूतेनअंगीकृताम्लानिर्नदोषायेतिन्यायादितिभावः।
प्रकंपनेनवायुनाप्यनपराधेअपराधाभावेपिबाधिताःराजपुत्रैरितिशेषः सुराअनुचकंपिरे
स्वयमुपायेनतःप्रविश्यानपराधबाधानिवेदनेनमोच्यतावायुनाअनुकंपिताइत्यर्थः। ए
कस्यवैरग्ध्याद्बहवोजीवंतीतिभावः ॥ ६१ ॥ ****************॥
॥ निरस्तमिति ॥ किंचतस्यरावणस्यजनाभिभाविनालोकतिरस्कारिणांमहीयसांतिमहतांमहसांतेजसांमहिम्नामहत्वेनपृथ्व्यादिभ्यइमनिज्वामुरुःतिरस्कृतःअतएवतनुः
कृशःतनूनपात्पयनिजठररूपेणशरीरंधारयतीतितनूनपादग्निरितिस्वामीनभ्रादित्वान्नेख

निरस्तमस्तस्यजनाभिभाविनामुरुर्मैहिम्नामहसां
महीयसाम्। बभारवाष्पैर्द्विगुणीकृतंतनुस्तनूनपाद्धू
मवितानमाधिजैः ॥ ६२ ॥ परस्यमर्माविधमुज्झतांनि
जंद्विजिह्वतादोषमजिह्मगामिभिः। तमिद्धमाराध
यितुंसकर्णकैःकुलैर्नभेजेफणिनांभुजङ्गता ॥ ६३ ॥

निपातनात्नलोपाभावः। आधिजैर्दुःखोत्थैर्वाष्पैःनिश्वासोष्मभिः। वाष्पोनेत्रजलोष्म
णोः। पुंस्याधिर्मानसीव्यथेतिविश्वामरौ। द्वौगुणावावृत्तीयस्यसद्विगुणःततःच्विःद्विगु
णीकृतंद्विरावृत्तं। गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतंतुष्वितिवैजयन्ती। धूमवितानं
धूममंडलंबभारअग्निरपितत्संनिधौनिस्तेजस्कोधूमायमानआस्तेइत्यर्थः। धूमद्वैगुण्या
संबंधेसंबंधाभिधानातिशयोक्तिः ॥ ६२ ॥ *****************॥
॥ परस्येति ॥ किंचइद्धंदीप्तमुग्रमित्यर्थःइंधीदीप्तौकर्तरिक्तः। तंरावणमाराधयितुं
सेवितुंपरस्यखलस्यमर्माणिहृदयादिजीवस्थानानिकुलाचारवृत्तानिचविध्यन्तिभिन्दन्ती

त्तिक्रमेविन्। विध्यतेःक्विप्ग्रहिज्येतिसंप्रसारणं। नहिवृतीत्यादिनापूर्वस्यदीर्घःतंममे विधंनिजंस्तोयंद्विजिह्वतायांसर्पत्वेदोषोदृष्टिविषत्वादिःतंअन्यत्रद्विजिह्वतापिशुनता। द्विजिह्वौसर्पसूचकाविन्यमरः। स्वदेशमस्तानुजन्मनांत्यजतांफणिनांसंवभिरजिह्वता भिभिःकरचरणादिमद्विग्रहधारित्वान्नटजुगतिभिः। अकपटचारिभिश्च। तयाकर्णा भ्यांसहवर्त्तन्तइतिसकर्णकाःतैस्तश्चुःश्रवस्त्वंविहायाविकृतकर्णैरित्यर्थः। तेनसहेतितुल्य योगेबहुव्रीहिःशेषाद्विभाषेतिकप्। अन्यच्चकर्णयतिसंवेश्रृणोतीतिकर्णकोनियंताकर्ण यतेर्ण्वुल्ततःपूर्ववत्समासेसकर्णकैःसनियामकैरित्यर्थःबुसैःवैरैःभुजंगतासर्पताविटत्वंच भुजंगोविटसर्पयोरितिहलायुधः। तभेजेत्यक्ताभुजंगकंतीतिभुजंगमःगमेःसुसितोडिच्च। ग तिन्निर्यंतारिखलैःखलत्वमपिसर्पैःसर्पत्वमपिविहायवेषभाषाक्रियाभिःसाम्यंश्रीयतइत्य

तदीयमातङ्गघटाविघट्टितैःकटस्थलप्रोषित
दानवारिभिः। गृहीतदिक्कैरपुनर्निवर्त्तिभि
श्चिरंययाथार्थ्यमलंभिदिग्गजैः ॥ ६४ ॥

र्थः। अत्रप्रस्तुतसर्पविशेषणसाम्यादप्रस्तुतखलव्यवहारप्रतीतेःसमासोक्तिः॥ ६३ ॥*॥
॥ तदीयेति ॥ तदीयमातंगानांघटाभिर्व्यूहैःविघट्टितैरभिहतैःगजानांघटनाघटेत्यम रः। अतएवकटस्थलेभ्यःप्रोषितान्यपगतानिदानवारीणियेषांतैःगृहीतापलाय्यसंश्रिता दिशोयैस्तैर्गृहीतदिक्कैःशेषाद्विभाषेतिकप्। अपुनर्निवर्त्तिभिर्भयात्तत्रैवस्थितैःदिग्गजैःचि राययाथार्थ्यंदिक्षुस्थिताः दिग्गजाइत्यनुगतार्थनामकत्वमलंभिलब्धंलभेर्यंणन्तात्कर्मणि लुङ्। विभाषाचिणमुलोरितिविकल्पान्नुमागमः ॥ ६४ ॥ ************ ॥
॥ अभीक्ष्णमिति ॥ ऊष्मणास्वरज्वरेणसहितःसोष्मातस्यसोष्मणस्तस्यरावणस्यपुरभी क्ष्णांभृशमुष्णैरपिशोकादितिभावःसुरेन्द्रवंद्यःवंदीकृताःस्त्रियःतासाम्श्वसितानिलैःनिःश्वा

समारुतैर्यथा निर्वंवौ। निर्विवार। निर्वाणं निर्वृतौ मोक्षे इति वैजयन्ती। तथा स चंद्रनो ऽम्भः कणाः चंद्रनोदकबिन्दुसहिता अम्भ इति कोमला मृदुला स्तैर्जलार्द्रीणां जलोक्षितानां च वपुषा तापवनैर्न निर्ववौ। सुविच्छेदानावृत्तं स्यादुत्क्षेपव्यजनं च तत्। आर्द्रं च सन्नं जलार्द्री स्यादिति वैजयन्ती। अत्र संतप्तस्योपचारा निवृत्तिरिति कारणविरुद्धकार्योत्पत्तिरूपो विषमालंकारः ॥ ६५ ॥ ******************************** ॥

॥ तपेनेति ॥ सदा नित्यं ऋतुयथाकालं प्रसूनकृप्तिं पुष्पसंपत्तिं दधतो धारयंतः हतवोधैः प्रवृद्धतपेन ग्रीष्मेण। उष्णऊष्मागमस्तपः स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा अथ शरत्स्त्रियामित्यमरः। तथा हिमागमो हेमंतः शरदा तथा शिशिरो वसंतलक्ष्म्या च समेत्य मिथुनीभावेन

अभीक्ष्णमुष्णैरपि तस्य सोष्मणः सुरेन्द्रवन्द्यश्वसितानिलैर्यथा। सचन्द्रनाम्भः कणकोमलैस्तथा वपुर्जलार्द्रापवनैर्न निर्ववौ ॥ ६५॥ तपेन वर्षाः शरदा हिमागमो वसन्तलक्ष्म्या शिशिरः समेत्य च। प्रसूनकृप्तिं दधतः सदर्तवः पुरेऽस्य वास्तव्यकुटुम्बितां ययुः ॥ ६६ ॥

मिलित्वा अस्य रावणस्य पुरे वसंतीति वास्तव्याः वस्तारः वसेस्तव्य कर्तरि णिच्चेति तव्य प्रत्ययः। वास्तव्यास्ते च ते कुटुंबिनस्तेनेषां भावं तत्तां प्रतिवासित्वमित्यर्थः। ययुः समेत्य ययुरिति समुदायिनोरभेदविवक्षया समानकर्तृत्वं अत्र पुरे युगपत्सर्वर्तुसंबंधाभिधानादसंबंधे संबंधरूपातिशयोक्तिः। प्रसूनं कुसुमं सममित्यमरः ॥ ६६ ॥ **************** ॥

॥ सचायमासन्नविनाशत्वदैव हतइति युग्मेनाह ॥ अमानवमिति। मनोरयं मानवः तस्येदमित्यण् प्रत्यये पर्यवसानात् ज्ञानावेकवचनं अन्यथा मनोर्जातमित्येव स्यात्। अमानवममानुषं नजायत इत्यजं अन्येष्वपि दृश्यत इति डप्रत्ययः तथापि मनोः कुले जातं रामरूप

वैलोक्यवत्त्वमिति विरोधः । सत्यामासत्याद्रसंकार इत्याह । प्रभा विनमितिमहानुभावेनकिं चकश्चिद्विरोधइतिभावः आभीक्ष्ण्येणिनिरिति णिनिर्वामन्वर्थीयःभवन्तमितिशेषः । आत्मनःस्वस्यांतंकरोतीतिअंतं । अंतशब्दात्तत्करोतीतिण्यन्तात्पचाद्यच् । वि तंभविष्यंतंभविष्यगम्यात् । जानन्नपियोरावणःजनकस्यापत्यं स्त्रीजानकीसीतातां नमुमोचनमुमुचे इत्यन्वयः ज्ञानेनापिअमोचनेकारणमाह । मानिनःसदाप्राणात्ययेपि अभिमानएवैकंमुख्यं धनंयेषांतेप्राणात्ययेपिनमानंमुंचन्तीत्यर्थः कारणेनकार्यसमर्थनरूपोर्थान्तरन्यासः । गर्वाभिमानोहङ्कार इत्यमरः ॥ ६७ ॥ ************************* ॥

॥ स्मरतीति ॥ भातीतिभवान्भानेर्डवतुःदशरथस्यापत्यं पुमान्दाशरथिःभवद्भवान्

अमानवं जातमजं कुलेमनोः प्रभाविनंभाविनमन्तमात्मनः । मुमोचजानन्नपिजानकीन्नयःसदाभिमानैकधना हि मानिनः ॥ ६७ ॥ स्मरत्यदोदाशरथिर्भवन्भवान मुंत्रनान्नादनितापहारिणम् । पयोधिमावद्धचलज्जलाविलं विलंघ्यलंकांनिकषाहनिष्यति ॥ ६८ ॥

स्मरन्नित्यर्थः । लटःशत्रादेशःवनानाद्भयङ्कारणाद्वनितातापहारिणंसीतापहर्तारंअमुं रावणं । आवद्धःप्रक्षिप्ताद्रिभिर्बद्धसेतुःअतएव चलंति जलानियस्यसचअतएवआविलस्तंआवद्धचलज्जलाविलंपयोधिंविलंघ्यलंकांनिकषालंकासमीपे । समयानिकषाशब्दौ सामीप्येप्यव्ययेमतावितिहलायुधः । अभितःपरितःसमयानिकषाहाप्रतियोगेपिद्दृश्यतेइतिद्वितीया । हनिष्यतिअवधीत् । अभिज्ञावचनेलृडितिभूतेलृट् इअदे । हननंभवान्स्मरतीत्याकूःप्रत्यभिजानासिकिमित्यर्थःशेषेप्रथमः ॥ ६८ ॥ ************** ॥

॥ अथेति ॥ अथएक्षुहदेहत्यागानंतरंसंप्रतिछलनापरःपरप्रतारणापरःएषरावणःश्रौ

शैलूषोनटःतस्यभूमिकांरूपांतरमिव।शैलूषोनटभिल्लयोः।भूमिकारचनायांस्यान्मूर्त्यंतर परिग्रहेइतिविश्वः।अपरामुपपत्तिंजन्मान्तरमित्यर्थः।शिशुपालसंज्ञयातिरो।हितात्माति रोहितस्वरूपःसन्सोपिरावणएवसन्नपिपरैरितरैःसनभवतीत्यसःप्रतीयतेज्ञायतइतिप्रति पूर्वादिणःकर्मणिलट्।यथैकएवशैलूषःरूपांतरमास्थायतद्वेशभाषादिभिरन्यएवप्रतीय ते।तद्वदयमपिमानुषदेहपरिग्रहादन्यइवभातिदौर्जन्यतुनदेवेत्यवश्यंसहार्यइतिभावः आत्माचितेर्धृतौयत्नेधिषणायांकलेवरे।परमात्मनिजीवेइतिहेमः॥६९॥ *** ॥ ॥अथैनदौर्जन्यंत्रिभिराविःकरोति॥सबालइति।सशिशुपालोबालःसन्वपुषाचतुर्भु जोभुजचतुष्टयवानासीत्।विष्णुरितिध्वनिः।मुखेनपूर्णेन्दुनिभस्तत्तुल्यःत्रिलोचनो

अथोपपत्तिंछलनापरोऽपरामवाप्यशैलूषइवैषभूमिकाम्। तिरो
हितात्माशिशुपालसंज्ञयाप्रतीयतेसंप्रतिसोप्यसःपरैः॥६९॥
सबालआसीद्वपुषाचतुर्भुजोमुखेनपूर्णेन्दुनिभस्त्रिलोचनः।यु
वाकराक्रान्तमहीभृदुच्चकैरसंशयंसंप्रतितेजसारविः॥७०॥

लोचनत्रयवानासीत्त्र्यम्बकइतिध्वनिःबालविशेषणात्संप्रतितत्सर्वमंतर्हितमितिभावः। संप्रतितुयुवासन्करेणबलिनाआक्रांतमहीभृदधिष्ठितराजकःसन्अन्यत्रांशुव्याप्तशैलः। बलिहस्तांशवःकराइत्यमरःउच्चकैस्तेजसारविरसंशयंसंशयेनास्तीत्यर्थःअर्थाभावेऽव्य यीभावःवपुषामुखेनचेतियेनाङ्गविकारइतितृतीया।हानिवदाधिक्यस्यापिविकारत्वा त्।तथावामनः।हानिवदाधिक्यमप्यंगविकारइतितेजसेतिप्रकृत्यादिभ्यउपसंख्यानमि तितृतीयाकराक्रांतेत्यादिनाश्लेषानुप्राणितेयमुत्प्रेक्षारविरसंशयमितितस्यपूर्णेन्दुनिभइत्यु पमयासंसृष्टिः।हरिहरादितुल्यमहिमत्वादतिदुर्द्धर्षइतिभावः॥७०॥ *** ॥
॥स्वयमिति॥यदृच्छयास्वेच्छयास्वयंसामर्थ्येनननुदेवताप्रसादबलादितिभावः।सुर

दैत्यरक्षसां देवदानवयातुधानानां अनुग्रहावग्रहयोः प्रसादनिग्रहयोः विधाता कर्त्ता । असौ शिशुपालः अभिराद्धाभिराराधिताभिर्देवताभिरीश्वरादिभिर्वितीर्णो दत्तो वीर्यातिशयः प्रभावातिशयो येषां तान् दशाननादीन् हसति । अनन्यप्रसादलब्धैश्वर्यैर्मयि कथं याचकैस्तुल्यत्वेन गर्वाद्धसतीत्यर्थः ॥ ७१ ॥ ********************** ॥

॥ बलेति ॥ जिगीषुणा नित्योत्साहवतेत्यर्थः । तेन शिशुपालेन बलावलेपाद्बलगर्वादधुनापि पूर्ववत् पूर्वजन्मनीव जगद्बाध्यते । तथाहि । सतीव पतिव्रता योषिदिव सुनिश्चला अनिस्थिरा प्रकृतिः स्वभावो भवान्तरेष्वपि पुमांसमभ्येति । पतिं यानाभिचरति मनोवाक्कायसं

स्वयंविधाता सुरदैत्यरक्षसामनुग्रहावग्रहयोर्यदृच्छया । दशाननादीनभिराद्धदेवतावितीर्णवीर्यातिशयान्हसत्यसौ ॥ ७१ ॥

बलावलेपादधुनापि पूर्ववत्प्रबाध्यते तेन जगज्जिगीषुणा । सतीव योषित्प्रकृतिः सुनिश्चला पुमांसमभ्येति भवान्तरेष्वपि ॥ ७२ ॥

तदेनमुल्लङ्घितशासनं विधेर्विधेहि कीनाशनिकेतनातिथिम् । शुभेतराचारविपक्त्रिमापदो निपादनीया हि सतामसाधवः ॥ ७३ ॥

यता । सा भर्तुर्लोकमाप्नोति सद्भिः साध्वीति चोच्यते इति मनुः । उपमेयोपमेयपुरस्कृतोऽर्थान्तरन्यासः । अवलेपो गर्वलेपयोः । दूषणेऽपीति हेमः ॥ ७२ ॥ ********* ॥

॥ तदेनमिति ॥ तत्तस्माद्विधेर्विधातुरपि उल्लङ्घितशासनं स्वयं विधातेत्याद्युक्तरीत्यातिक्रान्तदैवमित्यर्थः । एनं शिशुपालं कीनाशनिकेतनातिथिं कीनाशो यमः तस्य निकेतनं गृहं तत्र अतिथिं प्राघुणिकं विधेहि कुरु यमगृहं प्रेषयेत्यर्थः । कीनाशः कर्षके क्षुद्रे हन्तरि चोपांशुघातिनोरिति विश्वः । न चैनत्प्राघुणिकहस्तेन सर्पमारणं भवाद्दृशामवश्यकर्त्तव्यत्वादित्याह । शुभेतराचारेण दुराचारेण विपक्त्रिमाः परिपाकेन निर्वृत्ताः कालपरिपाकेन प्राप्ता आपदो येषां

मैनयोक्ताः श्विनः क्विरिति निपचेः क्विप्रत्ययः क्वेर्मन्त्रित्यमिति न ङ्तेमम्प्रत्ययः । असाधवो दु
ष्टाः सतां भवादृशां जगत्त्रियन्तॄणां निपातनीयाः वध्या हि । नच नैर्घृण्यदोषः स्वदोषेणैव त
षां विनाशे निमित्तमात्रत्वादस्माकमित्याशयेन प्रभेतराचरेत्यादिविशेषणोक्तिः । सामान्येन
विशेषणसमर्थनरूपोऽर्थान्तरन्यासः ॥ ७३ ॥ ****************** ॥

॥ किंचैवं दुष्टनिग्रहे शिष्टानुग्रहः स्यादित्याह ॥ हृदयमिति । अरिवधोदयाद्रिपु
नाशलाभात् उदूढद्रढिमनैश्चिन्त्यात् धृतदार्ढ्यं स्वस्थमित्यावत् । पृथ्वादित्वात् दृढश
ब्दादिमनिच्प्रत्ययः रऋतो हलादेर्लघोरिति ऋकारस्य रेफादेशः । पुरः शत्रुपुराणि दार
यतीति पुरन्दरः पूःसर्वयोर्दारिसहोरिति खच्प्रत्ययः । खचि ह्रस्व इति ह्रस्वः वाचंयम
पुरन्दरौ चेति निपातनाद्दन्तत्वं मुमागमश्च । तस्य हृदयं पुनर्भूयोऽपि पूर्ववदेतिभावः घनपु

हृदयमरिवधोदयादुदूढद्रढिमदधातु पुनः पुरन्दरस्य । घनपुल
कपुलोमजाकुचाग्रद्रुतपरिरम्भनिपीडनक्षमत्वम् ॥ ७४ ॥ *

लकयोः सान्द्ररोमाञ्चयोः पुलोम्नो जाता पुलोमजा शची तस्याः कुचाग्रयोः द्रुतपरिरम्भ औत्सु
क्यात् । शीघ्रालिंगनं तत्र यत्पीडनं तस्य क्षमत्वं सहत्वं दधातु प्राप्नोतु चिरविक्षेपात्यन्तभोगेन र
केण संप्रति त्वत्प्रसादान्निष्कण्टकं स्वकीयं राज्यं भुज्यतामित्यर्थः । अत्र दार्ढ्यार्थस्योदूढद्रढि
मेति विशेषणगत्या निपीडनक्षमत्वं प्रति हेतुत्वोक्त्या पदार्थहेतुकं काव्यलिंगं । हृदयनिपीड
नशून्यत्वसंबंधेऽप्यसंबंधोक्त्या संबंधे संबंधरूपातिशयोक्तिरित्यर्थालंकारो वृत्त्यनुप्रास इत्यसंसृ
ज्यते । पुष्पिताग्रावृत्तं । अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रेति लक्ष
णात् । रोमोद्भेदस्तु पुलकं त्वक्पुष्पं तु त्वगङ्कुर इति त्रिकाण्डशेषः ॥ ७४ ॥ **** ॥

॥ ओमिति ॥ तस्मिन्सुरमुनौ नारदे इत्थं भूतां वाचं व्याहृत्योक्त्वा नभ उत्पतिते खमुद्गते पुरोऽग्रे
इन्दोः श्रियं बिभ्रति सति अथ मुनिवाक्यानन्तरम् ओमित्युक्तवान् तथास्त्वित्यंगीकृतवान् । ओंर

ऽङ्गीकृतोऽरौवैद्यइतिविग्रहः । चेदीनांजनपदानामयंचैद्यःशिशुपालःवृद्धेत्कोसलाजादा ञ्ञ्यङितिञ्यङ्प्रत्ययः प्रतिक्रुद्धस्यशार्ङ्गिणोवदनेव्योम्नीवाऽनिशंसर्वदाअभिचारेरौद्र र्थेः । शत्रूणांविनाशस्यपिशुनःसूचकः । चंद्रमभ्युत्थितंकेतुःक्षितीशानांविनाशकृदितिशा स्त्रादितिभावः । केतुरुत्पातविशेषः । केतुर्ध्वजेपताकायांग्रहोत्पातारिलक्ष्मसुइत्यमरः । भृकुटिच्छलेनभ्रूभंगव्याजेनास्पदंप्रतिष्ठांस्थितिंचकारआस्पदंप्रतिष्ठायामितिनिपातनात् सुडागमः । अनेनवाक्यार्थभूतस्यवीररसस्यकारिणोरौद्रस्यस्थायीक्रोधःस्वानुभावेनभृकु ट्याकारेणाभूतोनुमेयइत्युक्तं । तथातद्विनाभूतस्यांगिनोवीरस्यस्थायीप्रयत्नोपनेयउत्सा होध्युत्पन्नएवेत्यनुसंधेयं । इंदोःश्रियंबिभर्तिइत्यत्रमुनेरिन्दुश्रियोयोगात्तत्सदृशीमिति

ओमित्युक्तवतोऽथशार्ङ्गिणइतिव्याहृत्यवाचन्नभस्तस्मिन्नुत्पतिते
पुरःसुरमुनाविन्दोःश्रियंबिभ्रति । शत्रूणामनिशंविनाशपि
शुनःक्रुद्धस्यचैद्यंप्रतिव्योम्नीवभृकुटिच्छलेनवदनेकेतुश्चकारास्प
दम्॥ ७५ ॥ ***************

सादृश्याक्षेपादसंभवद्वस्तुसंबंधरूपोनिदर्शनालंकारः । वदनेव्योम्नीवेत्युपमा । भृकुटि च्छलेनकेतुरितिछलादिशब्दैर्नासत्वप्रतिपादनरूपोऽपह्नवःतत्रशत्रुविनाशसूचकत्वपे क्षितेंदुसान्निध्यव्योमावस्थानसंपादकत्वेदर्शनोपमयोरपह्नवोपकारकत्वादंगांगिभावेनसं करः । चमत्कारकारितयामंगलाचरणरूपकतयासर्गान्त्यश्लोकेषुश्रीशब्दप्रयोगःयथाहभग वान्भाष्यकारः । मंगलादीनिमंगलमध्यानिमंगलांतानिशास्त्राणिप्रथंतेवीरपुरुषाण्यायुष्म त्पुरुषाणिचभवंतिअध्येतारश्चप्रवक्तारोभवंतीति । शार्दूलविक्रीडितंवृत्तं । सूर्याश्वैर्मसज स्तताःसगुरवःशार्दूलविक्रीडितमितिलक्षणात्सर्गांतत्वाद्वृत्तभेदःयथाहदंडी । सर्गैरनतिवि स्तीर्णैःश्राव्यवृत्तैःसुसंधिभिः । सर्वत्रभिन्नवृत्तान्तैरुपेतंलोकरंजकमिति ॥ ७५ ॥ * ॥

॥ अथकविःकाव्यवर्णनमाख्यानपूर्वकंसर्गसमाप्तिंकथयति ॥ इतीति । इतिशब्दःसमाप्तौ माघइतिकविनामकथनंमहाकाव्येइतिमहच्छब्देनलक्षणसंपत्तिःसूचिता शिशुपालवधःइतिकाव्यनामकथनंप्रथमःसर्गइतिसमाप्तइतिशेषः । एवमुत्तरत्रापिद्रष्टव्यम् ॥ ॥ इतिश्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितेमाघकाव्यव्याख्यानेसर्वंकषाख्येप्रथमःसर्गःसमाप्तः ॥ १ ॥ ******************** ॥

इतिश्रीमाघकृतौशिशुपालवधेमहाकाव्येश्र्यङ्के
नारदसंभाषणंनामप्रथमःसर्ग ॥ १ ॥

---



अस्मिन्सर्गेमंत्रवर्णनायबीजंवपति। यियक्षमाणेनेति। अथेंद्रसंदेशश्रवणानंतरंयियक्ष माणेनयष्टुमिच्छतायजतेःसंनताच्छटःशानजादेशः। पार्थेनपृथापुत्रेणयुधिष्ठिरेणतस्येद मित्यण्अन्यथास्त्रीभ्योढक्स्यात्आहूतः आकारितःह्वयतेःकर्मणिक्तेसंप्रसारणदीर्घौ। नयाअभिचैद्यंशिशुपालंप्रतिलक्षणेनाभिप्रतिआभिमुख्यइत्यव्ययीभावःअभिरभागेइति कर्मप्रवचनीयत्वेनद्योगेद्वितीयावा। प्रतिष्ठासुःप्रस्थातुमिच्छुःतिष्ठतेःसन्नंतादुप्रत्ययःमुरं द्विषन्मुरारिःद्विषोमित्रेइतिशतृप्रत्ययेनलोकेत्यत्रद्विषःशतुर्वावचनमितिविकल्पकःषष्ठी प्रतिषेधः। कार्यद्वयेनगुरुकार्यस्यद्वन्कार्यरूपेणाकुलोविप्रतिषेधाद्व्यवस्थात्वादव्येयोःसं दिहानआसीत्अतोमंत्रस्यायमवसरइतिभावः॥ १ ॥ ************ ॥

यियक्षमाणेनाहूतः पार्थेनाथद्विषन्मुरम्। अभिचैद्यंप्र
तिष्ठासुरासीत्कार्यद्वयाकुलः ॥ १॥ सार्द्धमुद्धवसी
रिभ्यामथासावासदत्सदः। गुरुकाव्यानुगांबिभ्रच्चा
न्द्रीमभिनभःश्रियम् ॥ २ ॥ ********

॥ एवंमंत्रबीजसंदेहमुपन्यस्तंमंत्रोचितंगमनदेशमाह। सार्द्धेति। अथसंदेहानंतरं असौहरिःअभिनभःपूर्ववदव्ययीभावःकर्मप्रवचनीयत्वेवागुरुकाव्यौबृहस्पतिशुक्रावनुगाव नुयायिनौयस्यांनां। गीष्पतिर्धिषणोगुरुः। शुक्रोदैत्यगुरुःकाव्यइत्यमरः। चंद्रस्येयंचां द्रीश्रियंबिभ्रत्अत्रश्रीतुल्यांश्रियमितिनिदर्शनाभेदःउद्धवसीरिभ्यांसार्द्धउद्धवरामाभ्यां सहसदःसभामासदत्अगमत्राजसदसःप्रासादत्वादितिभावःसदेर्लुङिपुषादित्वात्च्ले रङादेशः। अत्रमनुः। गिरिपृष्ठंसमारुह्यप्रासादंवारहोगतः। अरण्येनिःशलाकेवामंत्रये द्गावभाविनाविति ॥ २ ॥ ******************************** ॥

॥ जाज्वल्यमानेति ॥ जगतःशांतयेऽनुपह्लवायसमुपेयुषीमिलितानाजाज्वल्यमानाभृशंज्व

धंतेःधातोरेकाचोहलादेःक्रियासमभिहारेयङ्ततोलट्शानजादेशःटाप्असौनराःपुरु
षाएवशिखिनोऽग्नयस्तेषांत्रयीद्वित्रिभ्यांतयस्यायजादेशेकृतेटिड्ढाणञित्यादिनाङीप्
सभाआस्थानीसैववेदिः। वेदिःपरिष्कृताभूमिरित्यमरः। तस्यांव्यद्योतिष्टदीप्यतेस्म।
द्युद्भ्योलुङीतिलङ्। उपमालंकारः ॥ ३ ॥ ******************* ॥
॥ रत्नेति॥ रत्नानांस्तंभाःइतिषष्ठीसमासःविशेषेपर्यवसानाद्विकारार्थत्वंतेषुसंक्रांतप्रति
माःसंक्रांतप्रतिबिंबाः। प्रतिमानंप्रतिबिंबंप्रतिमेत्यमरः। तेत्रयःएकाकिनोऽसहायाअपिए
काद्आकिनिच्चासहायेइत्याकिनिच्प्रत्ययः। परितोभितःसर्वतःपर्यभिभ्यांचेतितसिप्रत्ययः
सचसर्वोभयार्थवर्तमानाभ्यामिष्यते। पौरुषेयेणप्रतिबिंबभूयस्त्वात्। पुरुषसमूहेनावृताइ

जाज्वल्यमानाजगतःशान्तयेसमुपेयुषी । व्यद्योतिष्टसभावेद्यामसौ
नरशिखित्रयी ॥ ३ ॥ रत्नस्तम्भेषुसंक्रान्तप्रतिमास्तेचकाशिरेएका
किनोपिपरितःपौरुषेयवृताइव ॥ ४ ॥ अध्यासामासुरुत्तुङ्गहेम
पीठानियान्यमी । तैरूहेकेसरिक्रान्तत्रिकूटशिखरोपमा ॥ ५ ॥

वेत्युत्प्रेक्षा। चकाशिरे पुरुषानद्वंद्वविकारसमूहेतेनकृतेच्छितिवक्तव्यंइतिढञ्प्रत्ययः। ए
तेनविजनत्वमुक्तं। यद्यपिनिःस्तंभेनिर्गवाक्षेचनिर्भित्त्यंनरसंश्रये। प्रासादाग्रेत्वरण्येवास
त्रयेद्भावभाविनाविति कामंदकीयेमंत्रभूमेःस्तंभप्राचुर्यनिषेधोगम्यते। तथापितस्यापि
विजनोपलक्षणत्वाददोषइतिभावः ॥ ४ ॥ ******************* ॥
॥ अध्यासामासुरिति ॥ अमीत्रयोयान्युत्तुंगहेमपीठानिआसनानिअध्यासामासुरधिति
ष्ठुःयेषूपविष्टाइत्यर्थः। अधिशीङ्स्थासांकर्मेतिकर्मत्वंआसउपवेशनेलिट्। दयायास
श्चेत्याम्प्रत्ययःकृञ्चानुप्रयुज्यतेलिटिअस्तेरनुप्रयोगः। आम्प्रत्ययवत्कृञोनुप्रयोगस्येतिनि
यमादस्तेर्नात्मनेपदं। तैःपीठैःकेसरिभिःसिंहैःक्रांतानांत्रिकूटस्यत्रिकूटाद्रेःशिखराणा

मुपमासोदृश्यमूहेरूढावहेःकर्मणिनिट् । संप्रसारणं । त्रौणिकूटोन्यस्येत्यन्वयेसंज्ञा । कूटोऽस्त्रीशिखरंशृंगमित्यमरः । उपमालंकारः ॥ ५ ॥ ************* ॥

॥ गुर्विति ॥ अथोपवेशनानंतरंविचष्टेइतिपिवक्षुराणवक्ताकर्त्तारिस्युडितिन्यासकारः । अस्तनयोश्चप्रतिषेधोवक्तव्यइतिचक्षिङःख्याञ्आदेशाभावःहरिर्गुर्वोःचन्द्रवरामयोःपितृव्याजे ऽश्वत्रोर्द्वयोर्द्वयायद्वाभ्यामित्यर्थः । गुरुणोर्महतोरुभयोःकार्ययोःपूर्वोक्तयोःतं विप्रति षेधंविरोधमाचक्षेआख्यातवान् । तुल्यबलविरोधोविप्रतिषेधः ॥ ६ ॥ ****** ॥

॥ द्योतितेति ॥ कुंदंमाघ्यभवःपुष्पविशेषःमाघ्यंकुंदमित्यमरः । कुंदकुड्मलाग्राणिइवद नायस्यतस्यकुंदकुड्मलाग्रदतःअग्रांतशुद्धशुभ्रवृषवराहेभ्यश्चेत्यग्रांतपूर्वपदबहुव्रीहिःस

गुरुद्वयायगुर्वोरुभयोरथकार्ययोः । ह
रिर्विप्रतिषेधन्तमाचचक्षेविचक्षणः ॥ ६ ॥
द्योतितान्तःसभैःकुन्दकुड्मलाग्रदतःस्मितैः ।
स्नपितेवाभवत्तस्यशुद्धवर्णासरस्वती ॥ ७ ॥

मासांतेविभाषिकोदतादेशः भस्यहरेःसरस्वतीअंतःप्रधानासभाअंतःसभासभाभ्यंतरेमित्य र्थः । साद्योतिताप्रकाशितायैस्तैःस्मितैःस्नपितेवक्षालितेवस्नातेरण्यंतात्क्तःअर्त्तिह्रेत्यादिनापु गागमःमितांह्रस्वः । शुद्धवर्णास्फुटाक्षरत्वात्स्वच्छकांतिश्चाभवत् । अत्रसाभाविकधावल्ये शुद्धेःस्नानहेतुकत्वमुत्प्रेक्ष्यतेस्मितपूर्वाभिभाषीहरिरितिभावः ॥ ७ ॥ ****** ॥

॥ कार्यविप्रतिषेधंनिवेद्यतत्रस्वमतमावेदयिष्यन्पंडितमानित्वंतावत्परिहरति ॥ भवद्भि रिमिति । भवद्भिरांयुष्मद्वाचांअवसरप्रदानायप्रसंजनायेत्यर्थःनोऽस्माकंवचांसिसिद्धांतो ज्ञयनार्थमुच्यते । ननुसिद्धांतत्वेनेत्यर्थःतथाहि । पूर्वरज्यंतेऽस्मिन्निनिपूर्वरंगःनाट्यशा लानस्यंकर्मापिपूर्वरंगइतिदशरूपके । अतःपूर्वरंगोनामरंगप्रधानाख्यारंगविघ्नशांति

धारीनांदीपाठगीतवादित्राद्यनेकांगविशेषोनाट्यादौकर्त्तव्यःकर्मविशेषः। तदुक्तं वसंतरा
जीये। यन्नाट्यवस्तुनःपूर्वंरंगविघ्नोपशांतये। कुशीलवाःप्रकुर्वन्तिपूर्वरंगःप्रकीर्त्तितइति।
सपूर्वरंगोनाटकेभवंनाटकीयंतत्रवर्ण्यमित्यर्थः। वृद्धाच्छः तस्यायनेनीयादेशः तस्यवस्तुनः
इतिप्रवृत्तस्यप्रसंगायप्रसंजनायप्रवर्त्तनायेतियावत्। अत्रप्रथमवादोदोषायेतिभावः। पूर्व
रंगःप्रस्तावनेतिरंगराजः। तदुक्तं। पूर्वरंगंविधायादौसूत्रधारेविनिर्गते। प्रविश्यतद्व
द्परःकाव्यमास्थापयेन्नटः। प्रथमंपूर्वरंगस्ततःप्रस्तावनेतिच। आरंभेसर्वनाट्यानामे
तत्सामान्यमिष्यतइतिदशरूपकाद्युक्तभेदविरोधादिति। अत्रहरिवाक्यपूर्वरंगयोःप्रसं
जनकत्वस्वरूपसामान्यवाक्यद्वयेशद्बांतरेणापृथक्निर्देशात्प्रतिवस्तूपमालंकारःतल्लक्ष
णंतूक्तम्॥ ८॥ ****************************** ॥

भवद्भिरवसरप्रदानायवचांसिनः। पूर्वरङ्गःप्रसङ्गायनाटकी
यस्यवस्तुनः॥ ८॥ करदीकृतभूपालोभ्रातृभिर्जितवैरिभिः श्रा
म्। विनाप्यस्मदलंभूष्णुरिज्यायैतपसःसुतः॥ ९॥ *

॥ संप्रतिस्वमतमाह॥ करदीकृतेति। दिशांजित्वरैःजयनशीलैःइत्वरशंजिसर्त्तिभ्यःक्वरप्
इत्यौणादिकात्कर्मणिषष्ठीभ्रातृभिर्भीमादिहेतुभिःकरदीःषष्ठभागप्रदाः। भागधेयोवलिःकरइ
त्यमरः। ततःच्विःउर्यादिच्विडाचश्चेतिगतिसंज्ञायांकुगतिप्रादयइतिनित्यसमासः। अकर
दाःकरदाःसंपद्यमानाःकृताःकरदीःकृताःभूपालाःयस्यसःवशीकृतराजमंडलःतपसःसुतोध
र्मपुत्रः। तपस्थान्द्रायणादेस्त्वाद्धर्मेर्लोकांतरेपिचेतिविभ्वः। अस्मद्विनाअस्माभिर्विनापीत्य
र्थःपृथग्विनानानेत्यादिनातृतीयाविकल्पात्पंचमी। इज्यायैयागायवजयज्योर्भावेक्यप्वचि
स्वपीत्यादिनासंप्रसारणं। नमःस्वस्तीत्यादिनाचतुर्थीअलंसमर्थोभूष्णुर्भवनशीलःग्लाजिस्था
श्चग्स्नुरितिचकारात्ग्स्नुप्रत्ययःकिङितिचेत्यत्रगकारप्रश्लेषात्गुणाभावः। तथाचजयादिषु

त्त्रैवमकारेऽपि च तत्त्वभूतो निर्दिश्यते। अतो जैत्रयात्रैव कार्या न यज्ञयात्रेति भावः॥ ९॥ *

॥ ननु यज्ञं त्यक्त्वा जैत्रयात्रायामुभयानुसरणं स्यादित्याह ॥ उत्तिष्ठमान इति। उत्तिष्ठमानो वर्द्धमानः। उदोऽनूर्ध्वकर्मणीत्यात्मनेपदं। परः शत्रुः पथ्यानपेतं पथ्यं हितमारोग्यं चेच्छता पुंसेति शेषः। नोपेक्ष्यो नौदासीन्येन द्रष्टव्यः। कुतः हि यस्माद्वर्त्स्यन्तौ वर्द्धिष्यमाणौ। लृटः सद्वेति सदादेशो वृद्भ्यः स्यसनोरिति विभाषा परस्मैपदं। न वृद्भ्यश्चतुर्भ्य इतीडभावः। आमयो व्याधिः रोगव्याधिगदामया इत्यमरः। स शत्रुश्च शिष्टैर्नीतिज्ञैः समौ तुल्यवृत्ती आम्नातौ आख्यातौ। अन्योपसोऽप्यरेर्वृद्धिर्महानर्थाय रोगवत्। अतस्तस्यानुपेक्ष्यत्वादुभयानुष्ठितिः कुत इति भावः। उपमालंकारः ॥ १० ॥ ************************** ॥

॥ न चैवं स्वार्थपरत्वदोषो लोकानुग्रहार्थत्वादस्याः प्रवृत्तेरित्याशयवानाह ॥ नेति। स

उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता। समौ हि शिष्टैराम्नातौ
वर्त्स्यन्तावामयः स च ॥१०॥ न दूये सात्वतीसूनुर्यन्मह्यमपराध्यति।
यत्तु दन्दह्यते लोकमदो दुःखाकरोति माम् ॥ ११ ॥ * * * * * *

त्वतोऽपत्यं स्त्री सात्वती नाम हरेः पितृष्वसा उत्सादिभ्योऽञ्। तस्याः सूनुश्चैद्यः यं भुरपि खलो न नमृष्यत इति भावः। यन्मह्यमपराध्यति द्रुह्यतीति यावत्। क्रुधद्रुहेत्यादिना चतुर्थी। तन्न दूये इति शेषः यत्तदोर्नित्यसंबंधात्। न दूये न परितप्ये दूङो दैवादिकात्कर्त्तरि लट् उत्तमपुरुषैकवचनं किंतु लोकं दंदह्यते गर्हितं यथा स्यादेवं दहतीति यत्। लुपसदचरजपेत्यादिना गर्हायां यङ्। जपजभदहदशभञ्जपशां चेत्यभ्यासस्य नुमागमः। अदो लोकदहनं मां दुःखमनुभावयतीत्यर्थः। दुःखात्प्रातिलोम्य इति डाच्प्रत्ययः अत्र चैद्य एवाभिधातव्यः पार्थ्य लुप्तार्थेनयापि पश्चात्समाधेय इत्यर्थः ॥ ११ ॥ **************** ॥

॥ स्वमतं निगमय्य चारमतं शुश्रूषुः पृच्छति ॥ ममेति। तावद्भवन्मतश्रवणपर्यन्तमित्यर्थः।

मममतमिदं । अंगेत्यामंत्रणेऽव्ययं । अयसंबोधनार्थकाः । युष्मोर्युवाङ्गपादंगहैहेभोरित्यम
रः । वां युवयोः युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ इति वामादेशः । मंत्रं श्रूयतां विधौ लोट् । त
दिदं मया श्रोतव्यमन्यथा संदेहानिवृत्तेरिति भावः । विदुषस्तु कुतः संदेह इत्यत्राह । ज्ञान
सारः ज्ञानतत्त्वार्थी एकः एकाकी कार्यवस्तुनि कर्त्तव्यार्थे संदिग्धे संदेह इत्युक्तो भवति खल्वेनिश्च
ये अतो ममापि संदेह इत्यर्थः । दिह उपचये कर्त्तरि क्तः इट् घत्वधत्वे । सामान्येन विशेषसमर्थ
नरूपोऽर्थान्तरन्यासः । एकाकी त्वेक एककइत्यमरः ॥ १२ ॥ ************ ॥

॥ यावदिति ॥ माधवो हरिः यावानर्थो यावदर्थं यावदवधारणेऽव्ययीभावः यावदर्थप
दा नियताक्षरां अभिधेयसंमिताक्षरामित्यर्थः । एवमुक्तप्रकारेण वाचमादाय गृहीत्वा उद्धे

मम तावन्मतमिदं श्रूयतामङ्ग वामपि । ज्ञानसारोऽपि खल्वेकः सन्दिग्धे
कार्य्यवस्तुनि ॥ १२ ॥ यावदर्थपदां वाचमेवमादाय माधवः । विर
राम महीयांसः प्रकृत्या मितभाषिणः ॥ १३ ॥ ततः सपत्नापनयस्मर
णानुशयस्फुरा । ओष्ठेन रामो रामौष्ठबिम्बचुम्बनचुञ्चुना ॥ १४ ॥

त्यर्थः विरराम तूष्णीमास । व्याङ्परिभ्यो रमइति परस्मैपदं । तथाहि । महीयांसः उ
त्तमाः प्रकृत्या मितभाषिणः वृथालापनिषेधादिति भावः पूर्ववदलंकारः ॥ १३ ॥ * ॥

॥ अथाष्टभिः कुलकेन रामं वर्णयंस्तद्वाक्यमवतारयति ॥ तत इति । ततो रामो जगादेत्युत्तरे
णान्वयः । सपत्नो रिपुः तस्यापनयोऽपकारः तत्स्मरणेन योऽनुशयः पश्चात्तापः । भवेद
नुशयो द्वेषपश्चात्तापानुबंधयोरिति विश्वः । तेन स्फुरतीति अनुशयस्फूः तेन स्फुरा ओष्ठे
बिंबमिवेत्युपमितसमासः । रमायाः ओष्ठबिम्बस्य चुंबनेन वित्तो रामौष्ठबिंबचुंबनचुंचुः ते
न वित्तश्चुंचुप्चणपाविति चुंचुप्प्रत्ययः ओत्वोष्ठयोः समासे वा पररूपं वक्तव्यं तेनोष्ठेनोपल
क्षितः समरस्फुरतयोः समरसङ्गतिभावः । उपमानुप्रासयोः संसृष्टिः ॥ १४ ॥ *** ॥

॥ विवक्षितामिति । विवक्षितांवृद्धत्वाभिमानादग्रेवक्तुमिष्टां । बचेर्वुभ्नोपासन्नेनात्कर्मणिक्तः । नतुक्षरो विवक्षाक्षरणेऽर्थव्यविक्तवेनोक्तिःप्रतिसंहृतांरामानुरोधानुरुद्धांअर्थविदःकार्यज्ञस्यअतएवपवनव्याधेरुद्धवस्यगिरमुत्तरपक्षतांसिद्धांतपक्षतांप्रापयन्स्वयमस्तप्रक्षावत्तांबित्यादिनिभावः । अनेनस्यमस्यप्रगतोक्ता ॥ १५ ॥ *********** ॥

॥ घूर्णयन्निति ॥ पुनःमदिरास्वादेनमद्यपानेनयोमदस्तेनपाटलिताद्यद्रुचीकृनाघूर्णयो लोरेवत्यादेव्याःवदनेयदुच्छिष्टंमद्यलेपनंपूर्वादिर्थाक्षरंचनसंबानमितिभावः तेनपरिपूतेमुखेपुटेययोस्तेदृशौघूर्णयन्भ्रामयन्निनिमद्यविकारोक्तिःउच्छिष्टपरिपूतेत्य

विवक्षितामर्थविदस्तत्क्षणप्रतिसंहृताम् । प्रापयन्पवनव्याधेर्गिरमुत्तरपक्षताम् ॥ १५ ॥ घूर्णयन्मदिरास्वादमदपाटलितद्युती । रेवतीवदनोच्छिष्टपरिपूतपुटेदृशौ ॥ १६ ॥ आश्लेषलोलुपवधूस्तनकार्कश्यसाक्षिणीम् । म्लापयन्नभिमानोष्णैर्वनमालांमुखानिलैः ॥ १७ ॥ दधत्सन्ध्यारुणव्योमस्फुरत्तारानुकारिणीः । द्विषद्द्वेषोपरक्ताङ्गसङ्गिनीःस्वेदविप्रुषः ॥ १८ ॥ ********

त्ररतिकालेमुखंस्त्रीणांमुद्धमाखेटकेमुनामितिस्मरणात् । उच्छिष्टपावित्र्यविरोधस्याभासत्वाद्विरोधाभासोऽलंकारः । म्वेतरक्तस्तुपाटलइत्यमरः ॥ १६ ॥ ***** ॥

॥ आश्लेषेति ॥ वध्वाःस्तनयोःकार्कश्यस्यकाठिन्यस्यसाक्षिणींउपद्रष्टींनित्यंपीड्यमानामितिभावः । साक्षाद्द्रष्टरिसंज्ञायामितिसाक्षाच्छब्दादिनिप्रत्ययः । वनमालामभिमानोष्णैरहंकारतप्तैर्मुखानिलैःनिश्वासमारुतैर्म्लापयन्ग्लापयन्म्लायतेर्ण्यन्ताच्छटःशत्रादेशःआदेचइत्यात्वेपुगागमःअम्लानेम्लानसंबंधादतिशयोक्तिः ॥ १७ ॥ ***** ॥

॥ दधदिति ॥पुनःसंध्ययामरुणोव्योम्निस्फुरंतीःताराअनुकुर्वंतीतितयोक्ताःपुनःद्विषवि

श्चैर्द्वेषेणकोधेनोपरक्तेअंगेवपुषिसंगिनीःसक्ताः । स्वेदविप्रुषःस्वेदबिंदून् । पृषंतिबिं दुपृषताःपुमांसोविप्रुषःस्त्रियामित्यमरः । दधद्धारयन्नाभ्यस्ताच्छतुरितिनुमागमाभावः । उपमालंकारः । विप्रुषोविप्रुषस्तथेतिद्विरूपकोषश्च ॥ १८ ॥ ******* ॥

॥ प्रोल्लसदिति ॥ पुनःप्रकर्षेणोल्लसन्त्याकुंडलयोःप्रोतानांस्यूतानांपद्मरागदलानांमाणि क्यशकलानांत्विषाकांत्या । प्रोतेतिप्रपूर्वाद्वेञःक्तेयजादित्वात्संप्रसारणं । कृष्णोत्तरासंगो नीलोत्तरीयं । द्वौप्रावारोत्तरासंगौसमौबृहतिकातथा । संव्यानमुत्तरीयंचेत्यमरः । तस्य रुचंचूतपल्लवस्येमांचौतपल्लवींविदधत्कृष्णलोहितमितिकृत्वाचूतपल्लववद्वर्णांकुर्वन्नि त्यर्थः । धूम्रधूमलौकृष्णलोहिताविन्यमरवचनात् । अत्राप्यन्यरुचोन्यदीयत्वायोगात्सा दृश्यापेक्षोनिदर्शनालंकारः ॥ १९ ॥ ******************* ॥

प्रोल्लसत्कुण्डलप्रोतपद्मरागदलत्विषा। कृष्णोत्तरासङ्गरुचं विदधच्चू
तपल्लवीम् ॥ १९ ॥ ककुद्मिकन्यावक्त्रान्तर्वासलब्धाधिवासया।
मुखामोदं मदिरयाकृतानुव्याधमुद्वमन् ॥ २०॥ ******

॥ ककुद्मीति ॥ पुनःककुद्मिकन्यायाःरेवत्यावक्त्रस्यान्तःअभ्यंतरेवासेनस्थित्यालब्धोधि वासोययातयातन्मुखसौरभवासितयेत्यर्थः । संस्कारोगंधमाल्याद्यैरधिवासनमुच्यते । म दिरयाकृतानुव्याधंकृतसंसर्गंप्रियागंडूषगन्धिनमित्यर्थःव्यधजपोरनुपसर्गइत्यनूपसृष्टा द्व्यधेर्घञ्प्रत्ययःमुखामोदंमुखगंधविशेषं । आमोदःसोतिनिर्हारीत्यमरः । उद्वमन्नुद्गिर न्अत्रमदिरारामामुखगंधयोःस्वगंधनिरोधानेनरामामुखेनगंडूषमद्यगंधस्वीकारात्तद्गुणयो स्त्वेतरस्यान्यविशेषत्वेनपूर्वसापेक्षत्वादंगांगिभावेनसंकरः । तद्गुणःस्वगुणत्यागादन्योत्कृ ष्टगुणाहृतिरितिलक्षणात् ॥ २० ॥ ************************* ॥

॥ जगादेति ॥ वदनमेवपद्मकपटंयस्यतत्पद्मवदनमेवपद्ममित्यर्थः । कलादिशब्देन

स्वत्वःनिपादनरूपोऽपह्नवःतस्यपर्यन्तपातिनःप्रान्तसंचारिणः। मधुलिहंतीतिमधुलि
हःमधुपान्क्षिपद्भद्गैःउच्छ्रितैःदशनांशुभिःस्वैयंधावल्यंनयन्द्रितिदृगालंकारःतस्य
मधुपसंनिधायकापह्नवसापेक्षत्वात्तेनसंकरः ॥ २१ ॥ ************** ॥

॥ एवंजगादेत्युक्तंकिंतदित्याकांक्षायामाह ॥ यदिति । वसुदेवेननदीनमित्यदीनंअ
कातरंनादीनवोऽस्येत्यनादीनवंनिर्दोषं । दोषआदीनवोमलइत्यमरः । यच्चईरितं
उक्तिरुक्तानसुपरइत्यादिनायम्पक्षमाश्रित्ययदुक्तमित्यर्थः । तस्यवचसःसपदिक्रियाकेव
लंतद्योतुष्ठानमेवोत्तरंसिद्धान्तस्यैवोक्तत्वादितिभावः ॥ २२ ॥ ********** ॥

॥ अथनदेवप्रतिपादयिष्यन्अनन्यातिशयतयोपस्करोति ॥ नैतदिति । लघुसंक्षिप्तमर्थे

जगाद वदनच्छद्मपद्मपर्य्यन्तपातिनः । नयन्मधुलिहः स्वैन्यमुद
ग्रदशनांशुभिः ॥ कुलकम् ॥ २१ ॥ यद्वासुदेवेनादीनमना
दीनवमीरितम् । वचसस्तस्य सपदि क्रियाकेवलमुत्तरम् ॥ २२ ॥
नैतल्लघ्वपि भूयस्या वचो वाचातिशय्यते । इन्धनौघधगप्यग्निस्त्वि
षा नात्येति पूषणाम् ॥ २३ ॥ ***********

लघुचेभूयस्यावक्तुमरयाविस्तृतयापीत्यर्थःद्विवचनविभज्येत्यादिनाईयसुनिवहोर्लोपे
भूचवहोरितीकारलोपेवहोःस्सभूरादेशः । वाचानातिशय्यतेनातिरिच्यतेगुर्वर्थत्वा
दितिभावःशीङःकर्मणिलदियक्अयङ्क्ङितीतिअयङादेशःतथाहिइन्धनौघानदह
तीतिइन्धनौघधक्काष्ठराशिदाहकःभूयानपीत्यर्थःक्विपिघत्वधत्वंभष्भावःअग्निःत्विषा
प्रभयापूषणंसूर्यंअल्पीयांसमपीतिभावः । नअत्येतिनातिक्रामतितेजसःप्रभावत्वमिववच
सोर्थवत्वमलंघ्यहेतुरित्यर्थःअसमानधर्मविंबप्रतिबिंबितयोःदृष्टान्तालंकारः ॥ २३ ॥ * ॥
॥ यदिहरिवचोनातिशय्यतेअलंतर्हितवापिवागारंभेरनआह ॥ संक्षिप्तस्येति । उक्तं

हरिवचसोऽनतिशयनीयत्वादेवस्तुविस्तरतरः प्रपंचनतरःप्रथनेनावरत्वेइतिप्रतिषेधेन
दोरवित्यम्। मेवाचःसंक्षिप्तस्याऽस्याक्षरस्यार्थेनगरीयसःसूत्रवत्स्वल्पेत्यर्थः। अ
स्याक्षरमसंदिग्धंसारवद्विश्वतोमुखं। अस्तोभमनवद्यंचसूत्रंसूत्रविदोविदुरितिलक्षणा
त्। अस्यैवनान्यस्यभाष्यभूताःभाष्यैःसमाःनित्यसमासः। श्लाघ्यैर्जनैर्भूतंश्लीवंसमानेनेति
वैचित्र्यमितिवैजयंती। व्याख्यानरूपाभवंतीत्यर्थः। सूत्रव्याख्यानविशेषोभाष्यं। सूत्रार्थो
वर्ण्यतेयत्रवाक्यैःसूत्रानुसारिभिः। स्वपदानिचवर्ण्यंतेभाष्यंभाष्यविदोविदुरिति। म
यानुनदेवविशेषप्रकाशनायव्याख्यायतेनत्वतिशयात्प्रत्याख्यायतेइत्यदोषइत्यर्थः। उप
मालंकारः॥ २४॥ ************************ ॥

॥ इत्थंयानंसिद्धांतयित्वानवोद्धवप्रतिरोधंहृदिनिधायचिरभिःप्रत्याचष्टे॥ विरोधीति।

> संक्षिप्तस्याप्यतोस्यैववाक्यस्यार्थगरीयसः। सुविस्तरतरावाचेभाष्यभू
> ताभवन्तुमे॥ २४॥ विरोधिवचसोमूकान्वागीशानपिकुर्वते। जडा
> नप्यनुलोमार्थान्प्रवाचःकृतिनांगिरः॥ २५॥ ******

कृतिनांकुशलानांगिरःकर्त्र्यःविरोधिवचसःप्रतिकूलवादिनोवागीशान्वक्तॄनपि। वदोव
दावदोवक्तावागीशोवाक्पतिःसमइत्यमरः। मूकान्निर्वाचःकुर्वतेसज्जयंतीत्यर्थःअनुलो
मोऽनुकूलोर्थोभिधेयंयेषांतेऽनुलोमार्थाःअनुकूलवादिनःतान्जडान्मंदानपिप्रवाचःप्रग
ल्भवाचःकुर्वतेअत्रोनास्मद्गिरःप्रत्याख्याइतिभावःअत्रवागीशानांमूकीकरणाज्जडानांप्र
वाचःकरणाच्चशक्यवस्तुकरणरूपोविशेषालंकारः। स्वरूपभेदोऽसंबंधातिशयोक्तिप्र
तिभोत्थापितइतिसंकरः॥ २५॥ ************************ ॥

॥ नन्वात्मनोनस्वामिनाबुद्धेःफलगमनादृढइतिन्यायेनशास्त्रवचनंप्रतिकूलमपिग्राह्य
मेवेत्याशंक्याह॥ यडिति। दुष्टामेधायेषांतेदुर्मेधसःमंदबुद्धयोपिनित्यमसिद्धप्रजामेधयो

रितिसमासं।नोऽस्तिचूप्रत्ययः।ग्रंथानौशनसादीनधीत्यपठित्वागुणाःसंधिविग्रहयानासन
द्वैधीभावसमाश्रयाख्याःषट्। शक्तयःप्रभुत्वमंत्रोत्साहाख्यास्तिस्रः। सिद्धयःपूर्वोक्तशक्तित्रय
साध्याःपुरुषार्थलाभात्मकाःताश्चतिस्रःप्रभुत्वसिद्धिर्मंत्रसिद्धिरुत्साहसिद्धिश्चेति। उद
याःवृद्धिक्षयस्थानानिक्षत्रियन्यायेनोदयाउच्यंते। तत्रवृद्धिक्षयौस्वशक्तिसिद्ध्योःपूर्वाव
स्थानादुपचयापचयौस्थानंतेचत्रयइतिव्याकर्तुंव्याख्यातुमलंसमर्थाःपर्याप्तवचनेष्वल
मर्थैःख्यतितुमुन्पंचांगनिर्णयशक्तिविकलानांसंख्यादिरूपसंख्यामात्रपाठकानांअशास्त्र
ज्ञान्त्वद्वादयेनग्राह्यवचनाइत्यभिसंधिः। अत्रामरः। संधिर्नाविग्रहोयानमासनंद्वै
धमाश्रयः। षड्गुणाःशक्तयस्तिस्रःप्रभावोत्साहमंत्रजाः। क्षयस्थानंचवृद्धिश्चत्रिवर्गोनी
तिवेदिनामिति। तत्रारिविजिगीषोर्व्यवस्थाकरणमैक्यंसंधिः। विरोधोविग्रहः। विजि

षड्गुणाःशक्तयस्तिस्रःसिद्धयश्चोदयास्त्रयः। ग्रन्थानधीत्यव्याक
र्तुमितिदुर्मेधसोप्यलम्॥ २६॥ अनिर्लोडितकार्य्यस्यवाग्जालंवा
ग्मिनोवृथा। निमित्तादपराद्धेषोर्धानुष्कस्येववल्गितम्॥२७॥

गीषोररिंप्रतियात्रायानं। तयोर्मिथःप्रतिबद्धशक्त्योःकालप्रतीक्षयातूष्णींभावस्थानमास
नं। दुर्बलःबलयोर्वाचिकमात्मसमर्पणंद्वैधीभावः। अरिणापीड्यमानस्यबलवदाश्रयणं
संश्रयः। कोषदंडोद्भवंतेजःप्रभावःकर्त्तव्यार्थेषुप्रयत्नउत्साहः। षड्गुणचिंतनंमंत्रःगतम
न्यदितिसंक्षेपः। अलंव्यर्थसमर्थयोः॥ २६॥ ********************॥
॥ ननुशास्त्रोक्तार्थव्याख्यानेवशास्त्रज्ञःसएवग्राह्यवचनस्येत्याशंक्यनेत्याह॥ अनिर्लोडि
तेति। अनिर्लोडितंनालोचितंकार्यंयेनतस्यकार्याकार्यमजानतःइत्यर्थः। वाचोऽस्यसंती
तिवाग्मीवावदूकः। वाचोयुक्तिपटुर्वाग्मीवावदूकोतिवक्तरिइत्यमरः। वाचोग्मिनिरि
तिग्मिनिप्रत्ययःतस्यवाग्जालंवागाडम्बरोनिमित्तान्लक्ष्यात्। वेध्यंलक्ष्यंनिमित्तंचशरव्यं

धरमंविदुरितिवैजयंती। अपराद्धेषोःस्खलितबाणधनुःप्रहरणमस्येतिधानुष्कोधन्वी प्रहरणमितिठक्इत्युक्तत्वान्नाकः । अपराद्धपृषत्कोसौलक्ष्याच्च्युतसायकः । धन्वीधनुष्मान्धानुष्कइत्यमरः । मस्यवस्खलितमिवव्यर्थानिष्फलं। कार्यमस्यचयोगात्तुंननुवाचायस्येतिभावः ॥ २७॥ ************************** ॥

॥ षाड्गुण्यादिपाठमात्रंनमंत्रइतिसिद्धेसंप्रतितस्यमंत्रस्वरूपमाह ॥ सर्वेति । कार्याणिसंध्यादीनिशरीराणीवइत्युपमितसमासः । सौगतानामिवेतिलिंगात् । तेषुसर्वकार्यशरीरेषुसर्वेषुशरीरेष्विवसर्वकार्येष्वित्यर्थः अंगानिस्कंधाइवेत्युपमितसमासः । तेषांपंचकंमुक्त्वास्कंधपंचकमिवांगपंचकंहित्वेत्यर्थः पंचपरिमाणमस्येतिपंचकःसंख्यायाःसंज्ञासंघसूत्राध्ययनेष्वितिकप्रत्ययःसुगतोभक्तिर्भजनीयएषांतेसौगताःबौद्धाःभक्तिरित्यण्प्रत्ययः।

सर्वकार्य्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चक
म्। सौगतानामिवात्मान्योनास्तिमन्त्रोम
हीभृताम् ॥ २८ ॥ ****

तेषामन्यआत्मेवमहीभृतामन्योमंत्रोनास्ति। कर्मणामारंभोपायःपुरुषद्रव्यसंपत्देशकालविभागःविपत्तिप्रतीकारःकार्यसिद्धिश्चेतिपंचांगानि । यथाहकामंदकः। सहायाःसाधनोपायाविभागोदेशकालयोः। विपत्तेश्चप्रतीकारःसिद्धिःपंचांगमिष्यतइति । रूपवेदनाविज्ञानसंज्ञासंस्काराःपंचस्कंधाः । तत्रविषयप्रपंचोरूपस्कंधःतत्ज्ञानप्रपंचोवेदनास्कंधः। आलयविज्ञानसंतानोविज्ञानस्कंधः । नामप्रपंचःसंज्ञास्कंधः । वासनाप्रपंचःसंस्कारस्कंधः । एवंपंचधापरिवर्त्तमानोज्ञानसंतानएवात्माइतिबौद्धाः। एवंयथाबौद्धानांसर्वेषुशरीरेषुस्कंधपंचकातिरिक्तआत्मानास्तितथाराज्ञामंगपंचकातिरिक्तोमंत्रोनास्तीत्युपमालंकारःतत्त्वात्मांसमग्रमेवेत्ययमेषयात्राकालइतिभावः ॥ २८ ॥ **** ॥

॥ अथमंत्रितार्थक्रियाविलंबेदोषमाह ॥ मंत्रइति । संवृतैर्गुप्तैःसर्वाङ्गैःपूर्वोक्तैरुपाया दिभिरङ्गैः स्वबलादिभिश्चउपलक्षितोऽपिसर्वांगसंवृतोपीत्यर्थः मंत्रोविचारःअधीरोभीरु रुच्यतइतियोधोभटइवपश्चाद्यात् । परेभ्योऽन्येभ्योरिभ्यश्च । परं दूरन्यमुख्येषुपरोरिपर मात्मनोरितिवैजयंती । भेदोविदारणंतृतीयगामित्वंचतस्यशंकयाचिरं स्थातुंविलम्बितुंनि त्यर्थःनसहतेनक्षमः । शकधृषज्ञाग्लाइत्यादिनातुमुन्प्रत्ययः अतोनविलंबितव्यमन्यथामंत्रभेदेका र्यहानिःस्यादितिभावः ॥ २९ ॥ ************************ ॥

॥ किंचनीतिसर्वस्वपर्यालोचनयापिनविलंबःकार्यइत्यभिप्रेत्याह ॥ आत्मोदयइति । आत्मनउदयोवृद्धिःपरस्यशत्रोर्ज्यानिः हानिः ज्याज्यानिर्वयोहानिरितिधारणादिकोनि

मन्त्रोयोधइवाधीरःसर्वाङ्गैः संवृतैरपि । चिरं
नसहतेस्थातुंपरेभ्योभेदशङ्कया ॥ २९ ॥
आत्मोदयःपरज्यानिर्द्वयंनीतिरितीयती । त
दूरीकृत्यकृतिभिर्वाचस्पत्यंप्रतायते ॥ ३० ॥

श्चयः इतिद्वयंइदंपरिमाणमस्याइतिइयतीएतावतीकिमिदंभ्यांवोघइतिवतुप्घश्च घश्चित्तश्चेतिङीप्नीतिःनीतिसंग्रहःएतद्द्वयानिरिक्तोनकश्चिन्नीतिपदार्थोस्तीत्यर्थःयदन्य त्षाड्गुण्यादिवर्णनंतत्सर्वमस्यैवप्रपंचइत्याह । तदिति । तत्द्वयमूरीकृत्यांगीकृत्यऊर्या दिच्विडाचश्चेतिगतिसंज्ञायांकुगतिप्रादयइतिसमासेल्यप् । कृतिभिःकुशलैःवाचस्पत्यंवा ग्मित्वंवाक्कादित्वाद्दलुक्सत्येवषष्ठ्याः पतिपुत्रेत्यादिनासत्वमितिस्वामीनत्रकंदोविषयत्वात्ब्रा ह्मणादित्वात्भावेष्यञ्प्रत्ययःप्रतायतेविस्तार्यतेकर्मणिलिङ्तनोतेर्यकीत्याच्चेतस्यादात्मोद यार्थिभिःअविलंबात्कर्तुमुच्छेत्तव्यःनत्वानारीयत्वात्तस्येतिभावः । ऊर्यूररीचाररीचविस्तारे ङ्गीकृतावपीतिअव्ययवर्गेहेमचन्द्रः ॥ ३० ॥ ****************** ॥

॥ ननु लब्धोदयस्य किं परक्षित्येत्यत्राह ॥ तृप्तियोग इति । महीयसां महात्मनां परेणा
पि प्रभूतेनापि महिम्ना ऐश्वर्येण तृप्तियोगः संतोषलाभो न । अत्र तृप्त्यभावे । पूर्णः सन् चंद्रोद
यापेक्षी महार्णवो दृष्टांतो दृष्टः अंतो निश्चयो यस्मिन् दृष्टांतो निदर्शनमुपमानमिति या
वत् राज्ञा वृद्धावलंबुद्धिर्न कार्या । असंतुष्टा द्विजा नष्टा संतुष्टा पार्थिवा इवेति न्यायादिति
भावः । नायं दृष्टांतालंकारः बिम्बप्रतिबिंबभावेनौपम्यस्य गम्यत्वेनस्योत्थानात् । किंतु दृ
ष्टांतशब्देन तस्याभिधानादुपमालंकारः । अत एव दृष्टांतोदाहरणनिदर्शनरूपाः शब्दा न
प्रयोक्तव्याः पौनरुक्त्यापत्तेरित्येकावल्यलंकारः ॥ ६१ ॥ ************* ॥
॥ तथापि संतोषे दोषमाह ॥ संपदेति । यः स्वल्पयापि संपदा सुस्थिरमात्मानं मन्यत इति

प्रभूतेनापि

तृप्तियोगः परेणापि महिम्ना न महात्मनाम् । पूर्णश्चन्द्रोदया
कांक्षी दृष्टान्तोऽत्र महार्णवः ॥ ३१ ॥ सम्पदा सुस्थिरंम
न्यो भवति स्वल्पयापि यः । कृतकृत्यो विधिर्मन्ये न वर्द्धयति त
स्य ताम् ॥ ३२ ॥ समूलघातमघ्नन्तः परान्नोद्यन्ति मानिनः ।
प्रध्वंसितान्धतमसस्तत्रोदाहरणं रविः ॥ ३३ ॥ ***

सुस्थिरंमन्यः स्वस्थमानी भवति । आत्ममाने खश्चेति खश्प्रत्यये मुमागमः तस्याल्पसंतुष्टस्य
तां स्वल्पसंपदं कृतकृत्यस्तावतैव कृतार्थः विधिर्दैवमपि न वर्द्धयति अहमिति मन्ये पौरुषही
नाद्दैवमपि जुगुप्सते तत्प्रवृत्तेः परमर्द्धिप्राप्तिरिति भावः ॥ ३२ ॥ ********* ॥
॥ किंच पराक्रमलब्ध एवोदयो नान्य इत्याह ॥ समूलेति । मानिनः अभिमानिनः परान् श
त्रून् समूलं हत्वा समूलघातं अघ्नंतः अनुन्मूलयंत इत्यर्थः समूलाकृतजीवेषु हन्कृञ्ग्रह इति
णमुल्प्रत्ययः कषादिषु यथाविध्यनुप्रयोग इति हंतेरनुप्रयोगः नोद्यंति किंतु हत्वैवोद्यंति
इत्यर्थः । न तु हत्वैवोदये । अंधयतीत्यंधं गाढं तत्तमोंऽधतमसं । ध्वांते गाढेऽन्धतमसमित्यम

रः । अयसमंधेभ्यस्तमसइत्यच्प्रत्ययः प्रध्वंसितमंधतमसंयेनसःउदयात्प्रागितिभावः । रविरुदाहरणंदृष्टांतः अत्रापिदृष्टांतोत्तमहार्णवइतिवदुपमालंकारोनतुदृष्टांतइतिद्रष्टव्यम् ॥ ३३ ॥ ************************** ॥

किंचानुच्छिन्नशत्रोःप्रतिष्ठैवदुर्घटेत्याह । विपक्षमिति । विपक्षंशत्रुमखिलीकृत्यखिलमुत्सन्नमकृत्वाअनुन्मूल्येत्यर्थः प्रतिष्ठादुर्लभाखलु । तथाहिउदकंकर्तृधूलिंस्वपरिभाविनोमितिभावः । पंकतामनीत्वानाधःकृत्येत्यर्थः । नावतिष्ठतेकिंतुनोत्यैवतिष्ठतीत्यर्थः समवप्रविभ्यःस्थइत्यात्मनेपदंवाक्यभेदप्रतिबिम्बनापेक्षोदृष्टांतालंकारः ॥ ३४ ॥ **

॥ नन्वयंशिशुपालएकाकीनोस्मान्किंकरिष्यतीत्याशंक्याह ॥ ध्रियतइति । एकोपिरिपुर्यावत्ध्रियतेअवतिष्ठतेधृङ्अवस्थानेइतिधातोस्तौदादिकात्कर्त्तरिलट्रिङ्शय

विपक्षमखिलीकृत्यप्रतिष्ठाखलुदुर्लभा । अनीत्वापङ्कतांधूलिमुदकंनावतिष्ठते ॥ ३४ ॥ ध्रियतेयावदेकोपिरिपुस्तावत्कुतःसुखम् । पुरःक्लिश्नातिसोमंहिसैंहिकेयोऽसुरद्रुहाम् ॥ ३५ ॥ *

ग्रिङ्क्षुइतिरिङादेशः । तावत्तदवधिसुखंकुतःयावत्तावच्चसाकल्येऽवधारणइत्यमरः । तथाहिसिंहिकायाअपत्यंपुमान्सैंहिकेयोराहुः । तमस्तुराहुःस्वर्भानुःसैंहिकेयोविधुंतुदइत्यमरः । स्त्रीभ्योढक्असुरद्रुहांदेवानांपुरःअग्रेसोमंक्लिश्नातिधावतेप्राचुर्यात्सोमग्रहणंसूर्यंचेतिभावः । तस्मादेकोपिशत्रुरुच्छेत्तव्यइतिभावः । अग्नेःशेषमृणाच्छेषंशत्रोःशेषंनशेषयेदितितात्पर्यं । विशेषेणसामान्यसमर्थनरूपोर्थांतरन्यासः ॥ ३५ ॥ *** ॥

॥ ननुक्षुद्रोयंचैद्यःकिंकरिष्यतीत्याशंक्यतस्यबलवत्त्वंवक्तुंमित्रामित्रबलाबलविवेकंतावत्करोति । सखेति । क्रिययाउपकारापकारान्यतररूपयानिर्वृत्तःकृत्रिमःड्वितःक्त्रिःक्त्रेर्मम्नित्यंसखासुहृत्गरीयान्बलवान्एवंशत्रुश्चकृत्रिमोगरीयान्कुतःहियस्मात्तौकृत्रिममित्रश

सूचकार्येतः उपकारापकाररूपकार्यवशात्। निर्वृत्ताविति शेषः उक्तकार्योपाधेर्यावज्जी
वमनपायादनयोर्मित्रामित्रभावोपि अनपायिनी निगरीयस्त्वमिति भावः सहजप्राकृतौ तु नै
वमित्याह। स्यातामिति। सहजातः सहजः एकशरीरावयववात् तच सहजंमित्रं मातृष्वसेय
पितृष्वसेयादिः सहजशत्रुस्तु पितृव्यतत्पुत्रादिः प्रकृत्यासिद्धः प्राकृतः पूर्वोक्तसहजकृत्रि
मलक्षणरहित इत्यर्थः। तत्र विषयांतरः प्राकृतः शत्रुः तदनंतरः प्राकृतंमित्रं अपिस्त्वर्थे तौ
सहजप्राकृतौ शत्रुमित्रे च स्यातां तत्कार्यवशादनियमतो भयरूपतामापद्येते नकृत्रिम
शत्रुमित्रे कृत्रिमशत्रुरेव मित्रं च मित्रमेवेति कृत्रिमावेव मित्रामित्रौ गरीयांसौ न तु सहजौ ना
पि प्राकृतावित्यर्थः अनेन कृत्रिमत्वं सर्वापवादीति सिद्धम् ॥ ३६॥ ******* ॥
॥ एवं चेदस्माकं पैतृष्वसेयः शिशुपालः सहजमित्रत्वात्संधातव्यो न तु यातव्य इत्यत आह॥

सखा गरीयान् शत्रुश्च कृत्रिमस्तौ हि कार्यतः। स्यातामित्रे मित्रे
च सहजप्राकृतावपि ॥ ३६॥ उपकर्त्रारिणा सन्धिर्न मित्रेणापका
रिणा। उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः ॥ ३७ ॥

उपकर्त्रेति। उपकर्त्रा उपकारकारिणाऽरिणापि सहजेन प्राकृतेन चेति शेषः संधिः का
र्यः अरित्वापवादेन कृत्रिममित्रतायाबलीयस्त्वाया वज्जीवभाविन्यास्तत्रोत्पन्नत्वादिति भावः
॥ एवमपकारिमात्रेण मित्रेणापि सहजेन प्राकृतेन वेति शेषः संधिर्न कार्यः मित्रत्वापवादेन कृ
त्रिमशत्रुतायाबलीयस्त्वाया वज्जीवभाविन्यास्तत्रोत्पन्नत्वादिति भावः। ननु साक्षादरित्वं
दृश्यात् मित्रेण कथं विरुध्यादित्याशंक्य क्रिययानयोर्वैपरीत्याद्दोष इत्याह। हि यस्मादुप
कारापकारावेवनयोर्मित्रामित्रयोर्लक्षणं स्वरूपं लक्ष्यं द्रष्टव्यम्। उपकर्त्तैव मित्रं अपकर्त्तैव श
त्रुरित्यर्थः तस्मात्सहजमित्रत्वेपि चैद्यः क्रियया शत्रुत्वात् यातव्य एवेति भावः ॥ ३७॥ * ॥
॥ अथ चैद्यस्य कृत्रिमशत्रुत्वं चतुर्भिराह॥ तथेति। हे हरे रुक्मिणीं हरता बंधुभिः समस्तैः

अहृत्तां राक्षसधर्मेणोद्वहनेत्यर्थः राक्षसोयुद्धहरणादितियाज्ञवल्क्यः। गांधर्वोराक्षसश्चैव धर्म्यौक्षत्रस्यतौस्मृताविति मनुः त्वयाचैद्योविप्रकृतःनयाहि। बद्धमूलस्यरूढमूलस्यवैरत रोःस्त्रियोमहत्प्रधानंमूलंहिनिश्चये। रूपकस्पष्टोयम्। सामान्येनविशेषणसमर्थनरूपो र्थान्तरन्यासः ॥ ३८ ॥ ************************ ॥

॥ अथतेनापित्वंविप्रकृतइत्याह। त्वयीति। त्वयिभूमेरपत्यंपुमान्भौमंनरकासुरंजेतुंग तेसतिसचैद्यइमांपुरींद्वारकांप्रोषितोर्यमासूर्योयस्यास्तांमेरोस्तटींसानुमंधकारइवारौ त्सीन्नरुरोधरुधेरनिटोलुङिरूपम्। उपमालंकारः ॥ ३९ ॥ ********** ॥

॥ अपकारान्तरमाह ॥ आलप्येति। सचैद्योबभ्रोर्यादवभेदस्यदारान्भार्याम्। भार्याजायाथ

त्वयाविप्रकृतश्चैद्योरुक्मिणींहरताहरे। बद्धमूलस्यमूलंहिमहद्वै रतरोःस्त्रियः ॥ ३८ ॥ त्वयिभौमंगतेजेतुमरौत्सीत्सपुरीमिमाम्। प्रोषि तार्यमणंमेरोरन्धकारस्तटीमिव ॥ ३९ ॥ आलप्यालमिदंबभ्रोर्य्य स्सदारानपाहरत्। कथापिखलुपापानामलमश्रेयसेयतः ॥ ४० ॥

पुंभूम्निदाराःस्यात्तुकुटुंबिनीत्यमरः। अपाहरतइतियदिदंदारापहरणंआलप्योच्चार्यअ लंनालपनीयमित्यर्थः। अलंखल्वोःप्रतिषेधयोःप्राचांक्त्वाइतिक्त्वाप्रत्ययेसमासेल्यबादेशः यतःपापानांपाप्मनांकथाकथनमुच्चारणमपिकिंनिपूजिकथिकुंबीत्यप्रत्ययः। अश्रेयसे ऽनर्थायालंसमर्थानमःस्वस्तीत्यादिनाचतुर्थी। अत्रनिषिध्यमानालपननिषेधनसमर्थ नात्कार्येणकारणसमर्थकोर्थान्तरन्यासः ॥ ४० ॥ **************** ॥

॥ फलितमाह ॥ विराद्धइति। एवंभवताविराद्धःविप्रकृतःकर्मणिक्तःबद्धधातोऽस्माकं चविराद्धाविप्रकर्त्ताश्रुतश्रवनामहरेःपितृष्वसास्तस्याःसुतःपैतृष्वसेयत्वात्सहजमपोनिभावः सचैद्यःक्रिययापूर्वोक्तान्योन्यापक्रियया अरिर्निवर्त्यतेकृत्रिमःशत्रुःक्रियतेअतोबलीयस्त्वा

दनुपेक्ष्यइतिभावः ॥ ४१ ॥ ************************** ॥

॥ अत्राप्युपेक्षायांदोषमाह ॥ विधायेति । येनरःपुमांसः । स्युःपुमांसःपंचजनाःपुरुषाःपूरुषा नरइत्यमरः । सामर्षःसागिवसरोषेअरौवैरंविधावस्वयंचापकृत्येत्यर्थःउदास्तेउपेक्षंते । तेनरःकक्षेगुल्मे । कक्षस्तुगुल्मेदोर्मूलेपामेजीर्णवनेतृणइतिवैजयंती । उदर्चिषंअग्निं प्रक्षिप्यअभिमारुतंअभिमुखेऽव्ययीभावः । शेरतेस्वपिति । तद्वन्नाशहेतुरित्यर्थः । शीङो रुडितिरुडागमःअत्रये उदासतेतेशेरतेइतिविशिष्टोदासीनशयनयोर्बावयार्थयोनिर्दिष्ट कत्वासंभवात्सादृश्यंलक्षणायामसंभवद्वस्तुसंबंधोवाक्यार्थनिवृत्तिरितिनिदर्शनाभेदःन चायंदृष्टांतःवाक्यभेदेनप्रतिबिम्बकारणाक्षेपेनस्योत्थानात् । अत्रतुवाक्यार्थेवाक्यार्थासमा

विरुद्धएवंभवताविरुद्धाबद्धधावनः । निर्वर्त्यतेऽरिःक्रिययासःश्रुत श्रवसःसुतः ॥ ४१ ॥ विधायवैरंसामर्षेनरोऽरौयउदासते । प्रक्षि प्योदर्चिषंकक्षेशेरतेतेऽभिमारुतम् ॥ ४२ ॥ मनागनभ्यावृत्त्यावा कामंक्षाम्यतुयःक्षमी । क्रियासमभिहारेणविराध्यन्तंक्षमेतकः ॥ ४३ ॥

रोपाद्वाक्यैकवाक्यतायांनदृभावइत्यलंकारसर्वस्वकारः ॥ ४२ ॥ ******* ॥

॥ तथापिबांधवात्सोढव्यइत्याशंक्याह ॥ मनागिति । यःक्षमीसहनःशमित्यष्टाभ्योघिनु ण्इतिघिनुण्प्रत्ययःससोढमनागल्पंचअभ्यावृत्तावपीतिभावःअनभ्यावृत्त्यासकृद्वाअन त्यत्वेपीतिभावःविराध्यंतमपकुर्वाणंभृशंक्षाम्यतुक्षम्यतांसंभावनायांलोट् । शमामष्टानां दीर्घः । क्रियासमभिहारेणभृशंपौनःपुन्येनचेत्यर्थः । नचपुंवाक्येष्वनेकार्थत्वंदोषाय । वि राध्यंतंकःक्षमेतसहेतसोढुंशक्नुयान्नकोपीत्यर्थःशकिलिङ्चेतिशक्यार्थेलिङ् । क्षमुषसहने दैवादिकोभौवादिकश्च ॥ ४३ ॥ ************************ ॥

॥ ननुसर्वदाक्षमैवपुंसोभूषणंअतोऽपराधेपिक्षंतव्यमतआह ॥ अन्यदेति । अन्यदा

सुरतव्यतिरिक्तेकालेयोषितोलज्जेवपुंसोऽन्यदाऽपरिभवे शमोभूषणंपरिभवेतुयोषितःसुरतेषुवैयात्यंधार्ष्ट्यमिव। धृष्टे धृष्णुवियातश्चेत्यमरः। पराक्रमःपौरुषंभूष्यतेऽनेनेतिभूषणं आभरणंएवंचक्रियावचनत्वाविरोधइतिबहुभेतक्तंप्रत्युक्तम्॥ ४४ ॥ ****** ॥

॥ अथपरिभवेपराक्रमेत्रिभिर्निन्दामाह ॥ माजीवन्निति। यःपरस्यापकर्तुरवज्ञयाऽवमानेनयद्दुःखंतेनदग्धस्तप्तोऽपिजीवति एवमाजीवन्मर्हिन जिवोसन्मास्त्वाक्रोशइतिलटःशत्रादेशःजीवतिप्राणान्धारयतिजनन्याःक्लेशकारिणःगर्भधारणप्रसवादिवेदनाकारिणः तस्यनिरर्थक्रियाहीनत्वेव्यर्थःतस्याजननम्जननिरनुत्पत्तिरेवास्तु। जननीक्लेशनि

> अन्यदाभूषणंपुंसःक्षमालज्जेवयोषितः। पराक्रमःपरिभवेवैयात्यं
> सुरतेष्विव॥ ४४ ॥ माजीवन्यःपरावज्ञादुःखदग्धोपिजीवति। त
> स्याजननिरेवास्तुजननीक्लेशकारिणः॥ ४५ ॥ पादाहतंयदुत्थाय
> मूर्द्धानमधिरोहति। स्वस्थादेवापमानेपिदेहिनस्तद्वरंरजः॥ ४६ ॥
> असम्पादयतः किञ्चिदर्थंजातिक्रियागुणैः। यदृच्छाशब्दवत्पुंसः
> संज्ञायैजन्मकेवलम्॥ ४७ ॥ ************

वृत्यर्थमितिभावःआक्रोशेनञ्जननिरितिनञ्पूर्वाज्जनिधातोरनिप्रत्ययः॥४५॥ * ॥

॥ पादेति ॥ यद्रजःधूलिःपादेनाहतंसत्उत्थायमूर्द्धानमाहन्तुःशिरोऽधिरोहतिआक्रमति। तद्रजःअचेतनमपीतिभावः। अवमानेसत्यपिस्वस्थात्संतुष्टाद्देहिनःचेतनाद्वरं श्रेष्ठं। व्यतिरेकालङ्कारः ॥ ४६ ॥ ********************* ॥

॥ असंपादयतइति ॥ किंचजातिःब्राह्मणत्वादिःक्रियाइज्याध्ययनादिःगुणःशौर्यादिःतैःसाधनैःकरणेनतृतीयाकंचिदर्थंसुकृतकीर्त्यादिपौरुषार्थमन्यत्रगोत्वपावकत्वशौक्ल्यादिभिःस्वाभिधेयभूतैःकरणैःकंचिदर्थंधनादिव्यवहाररूपंप्रयोजनमसंपादयतःउभयतना

हृष्टजात्याद्यसंभवादितिभावः। पुंसोजन्मसत्तालाभःयदृच्छाशब्दवत्इच्छाप्रकल्पितस्य जात्यादिप्रवृत्तिनिमित्तशून्यस्यडित्यादिशब्दस्येवततत्वस्येवेतिवतिप्रत्ययः। स्वेच्छायदृच्छास्वच्छन्दःस्वैरताचेतिनिसमाःइतिकेशवः। संज्ञायैकेवलंसंज्ञार्थमेवएकत्रपारिभाषिकंकंचिन्नाममात्रंअनुभवितुंअन्यत्रताहृक्‌तानुभवितुमित्यर्थः ॥ ४७ ॥ ****** ॥

॥ एवमपौरुषंदूषयित्वापौरुषंभूषयति ॥ तुंगत्वमिति। अद्रौपर्वतेतुंगत्वमौन्नत्यमस्तीतिशेषःअस्तिर्भवंतीपरोऽप्रयुज्यमानोप्यस्तीत्यादिभाष्यात्। भवंतीपूर्वाचार्याणांलटःसंज्ञाइतएअगाधतानास्तिसिंधौसमुद्रेअगाधतागंभीरताचिरइदंतुंगत्वंनास्ति। मनस्विनिवीरेतुअलंघनीयताहेतुरलंघ्यत्वकारणंतदुभयंतुंगत्वमगाधताचतस्मादद्रिसिंधुभ्यामधिकोमनस्वीतिव्यतिरेकालंकारः ॥ ४८ ॥ ********************** ॥

तुङ्गत्वमितरएनाद्रौनेदंसिन्धावगाधता। अलंघनीयताहेतुरुभयन्तन्मनस्विनि ॥ ४८ ॥ तुल्येऽपराधेस्वर्भानुर्भानुमन्तंचिरेणयत्। हिमांशुमाशुग्रसतेतन्म्रदिम्नःस्फुटंफलम् ॥ ४९ ॥ ****

॥ संप्रतिम्रदिम्नोमार्दवमनर्थायेत्याह ॥ तुल्यइति। स्वर्भानुःराहुःअपकारेतुल्येपिभानुमंतंसूर्यंचिरेणग्रसतेहिमांशुंचन्द्रमाशुशीघ्रंग्रसतेगिलतीतियतग्रसतेग्लसतेगीर्णमित्यभिधानात्तन्म्रदिम्नोमार्दवस्यफलंस्फुटं। पृथ्व्यादिभ्यइमनिचइतीमनिच्प्रत्ययःतद्धिपक्षेतीव्रेणभवितव्यंअन्यथासमृदुःसर्वत्रघातव्यइतिभावः। एतच्चप्रस्तुतमप्रस्तुतार्कैन्दुकथनेनसारूप्यात्प्रतीयतेइत्यप्रस्तुतप्रशंसाभेदोयं। अप्रस्तुतस्यकथनात्प्रस्तुतंयत्रगम्यते। अप्रस्तुतप्रशंसेयंसारूप्यादिनियंत्रितेतिलक्षणात् ॥ ४९ ॥ ***************** ॥

॥ एतदेवभङ्ग्यन्तरेणाह ॥ स्वयमिति। असारत्वाद्दुर्बलानांनिदर्शनंदृष्टांतःअतएवदृषदसमाप्तंतृणंबहुतृणंतृणकल्पइत्यर्थः। विभाषासुपोबहुच्पुरस्तात्त्विनिबहुच्प्रत्ययःप्र

कृते:पूर्वं चभवतिस्थादिषद्समासेनुवक्तु चप्रकृतिलिंगकइतिवचनात्प्रकृतिलिंगनालघु
र्नि:पौरुषेणनरोल्पेपिपरोवायुरिवेत्युपमितसमास:बहुतृणमितिस्पष्टोपमासाहचर्यात्कल्प
प्रदेश्यदेशीयदेश्यादीनिदंडिनाकल्पवाचिनमौपम्यवाचिकेष्वभिधानात । तस्मिन्नुपेयु
षिप्राप्तेसतिस्वयंप्रणमतेस्वयमेवप्रह्वीभवतिकर्मवत्कर्मणातुल्यक्रियइतिकर्मवाची । यथा
हकामंदक: । यदाहमस्तंप्रसभंनिहंतुंपराक्रमादूर्जितमप्यमित्रं । मदोभियायाद्दिना
निकुर्वन्नुपानतःकर्णनपीडनानिइतिभाव: । कर्मणोरिच्यात्मनेपदंनदुहस्नुनमायक्चि
णाविनियक्प्रतिषेध: । वायुनातृणमिवाल्पीयसापिरिपुणालघुरक्लेशेनपरिभूयतइत्य
र्थ: । उपमालंकार: ॥ ५० ॥ **************************

स्वयंप्रणमतेऽल्पेपिपरवायावुपेयुषि । निदर्शनमसाराणांलघुर्बहुतृ
णंनर: ॥५०॥ तेजस्विमध्येतेजस्वीदवीयानपिगण्यते । पञ्चम:प
ञ्चतपसस्तपनोजातवेदसाम् ॥ ५१ ॥ अकृत्वाहेलयापादमुच्चैर्मू
र्द्धसुविद्विषाम् । कथङ्कारमनालम्बाकीर्तिर्द्यामधिरोहति ॥ ५२ ॥

॥ पुन:पौरुषेगुणमाह ॥ तेजस्वीति । दवीयानपिदूरस्थोपिस्थूलदूरेत्यादिनापूर्वगुणय
णादिपरलोपौतेजस्वीतेजस्विनांमध्येगण्यतेसंख्यायतेतथाहिपंचाग्निसाध्यं तपोऽस्यपंच
तपस:पंचाग्निमध्येतपस्यत:तपनोर्कोजातवेदसामग्नीनांपंचम:पंचानांपूरण:पंचमोजातवे
दसांभवतीत्यर्थ:विशेषेणसामान्यसमर्थनरूपोर्थांतरन्यास: ॥ ५१ ॥ ****** ॥
॥गुणांतरंचव्यतिरेकेणाह ॥ अकृत्वेति । उच्चैरुन्नतेषुविद्विषांमूर्द्धसुहेलयापादमकृत्वाप्र
निधायअनञ्पूर्वइतिनिषेधात्समासेपिनल्यबादेश:कीर्ति:कथंकारंकथमित्यर्थ:अन्य
थैवंकथमित्थंसुसिद्धाप्रयोगश्चेदिग्यनर्थकादे:करोते:कथंपूर्वात्समुल्अनालम्बानिराधारा
कीर्तिर्द्यांदिवमधिरोहतिनकथंचिदित्यर्थ: किंचित्रि:श्रेण्यादिकमनाक्रम्योच्चैरारोहस्य

दुरारोहत्वादितिभावः तस्मात्कीर्त्तिमिच्छता पौरुषमेवाश्रयणीयं इति श्लोकतात्पर्यं । कीर्त्तिनद्यतोरभेदोपचारात्समानकर्तृत्वनिर्वाहः । अत्रप्रस्तुतायाः कीर्त्तेर्विषममहिम्नाअप्रस्तुतप्रासादारोहकत्वव्यवहारप्रतीतेः समासोक्तिः ॥ ५२ ॥ ************ ॥

॥ पौरुषमेवाश्रयणीयमित्यत्रान्वयव्यतिरेकदृष्टांताभ्यामाचष्टे ॥ अंकेति । अंकमुत्संगमधिरोपितो मृगोयेनस चन्द्रमाः मृगलाञ्छनः मृगांकः निष्ठुरं यथातथाक्षिप्तो हतो मृगयूथो मृगसमूहो येनस केसरी सिंहो मृगाधिपः उभयत्रापिख्यात इति शेषः तस्माच्छौर्यमार्दवं दुः कीर्त्तेरपौरुषंनुकीर्त्तये इति भावः । अत्रापिअप्रस्तुतप्रशंसा ॥ ५३ ॥ ******** ॥

॥ ननु सामादिसुकरोपायमुपेक्ष्यकिंपाक्षिकसिद्धिनादंडेन । यथाहमनुः । साम्नाभेदेन

> अङ्काधिरोपितमृगश्चन्द्रमामृगलाञ्छनः । केसरीनिष्ठुरक्षिप्तमृगयूथोमृगाधिपः ॥ ५३ ॥ चतुर्थोपायसाध्येतुरिपौसान्त्वमपक्रिया । स्वेद्यमामज्वरंप्राज्ञःकोऽम्भसापरिषिञ्चति ॥ ५४ ॥ ※※※※

दानेनसमस्तैरथवापृथक् । विजेतुंप्रयतेतारीन्नयुद्धेनकदाचनेति । तस्मात्सांत्वमेवयुक्तमित्याशंक्यदृष्टाभ्यांनिराचष्टे । चतुर्थोपायेति । चतुर्थोपायसाध्ये दंडसाध्येरिपौ सांत्वंसाम । सामसांत्वमुभेसमेइत्यमरः । अपक्रियाअपकारः तथाहि स्वेद्यंस्वेदार्हं स्वेदप्रतिकार्यमित्यर्थः । स्वेदस्तुस्वेदनेघर्मे इतिविश्वः । आमज्वरआमोरोगभेदः । रोगभेदेआमोऽपक्वेतु वाच्यवदितिविश्वः । कः प्राज्ञः पण्डितः अंभसाजलेनपरिषिंचति नकोपीत्यर्थः । ज्वरितस्यांभः सेकवत्क्रुद्धस्य सांत्वमुद्दीपकं स्यात् अतोदंडएवेतिभावः । वाक्यभेदेनप्रतिबिम्बकरणापेक्ष्यात् दृष्टांतालंकारः ॥ ५४ ॥ ******************** ॥

॥ सामेति ॥ सकोपस्यरूढवैरस्यतस्यचैद्यस्यसामवादाः प्रियोक्तयः सहसाप्रतप्तस्यकथितस्यसर्पिषोघृतस्यतोयबिन्दवइवप्रत्युतवैपरीत्येनदीपकाः प्रज्वलनकारिणः ननुशांतिक

वइत्यर्थःतस्मात्दुष्टस्यसामानुवचनंत्वत्कृतंवैरिविषयमितिभावः ॥ ५५ ॥ *** ॥
॥ एवंस्थितेकेचिदुद्धवादयःप्रत्याचक्षीरंस्तान्प्रत्याह ॥ गुणानामिति । संध्यादी
नांगुणानामायथातथ्यात्यथातथात्वमनतिक्रम्ययथातथंयथायोग्यमितियावत् । यथा
र्थेतुयथातथमित्यमरः। यथार्थेऽव्ययीभावःसनपुंसकमितिनपुंसकत्वं। ह्रस्वोनपुंसकेइति
ह्रस्वत्वं। ततोनञ्समासेअयथातथंतस्यभावःआयथातथ्यंब्राह्मणादित्वात्ष्यञ्प्रत्ययः
यथातथयथापुरयोःपर्यायेणेतिविकल्पान्नञ्पूर्वपदवृद्धिः। तस्मादायथातथ्यादयथायो
ग्यादन्यकालेऽन्यप्रयोगादित्यर्थः। अर्थंप्रयोजनंविप्लावयन्तिनिघ्नन्तिकार्यहानिंकुर्वन्ती
त्यर्थः। अमात्यानांव्यञ्जनंचिह्नंयेषांतेतथोक्ताःतद्वेषधारिणइत्यर्थःअवध्यावकुशोहिजौ

सामवादाःसकोपस्यतस्यप्रत्युतदीपकाः।प्रतप्तस्येवसहसास
र्पिषस्तोयबिन्दवः॥५५॥गुणानामायथातथ्यादर्थंविप्लावय
न्तिये।अमात्यव्यञ्जनाराज्ञांदूष्यास्तेशत्रुसंज्ञिताः॥५६॥
स्वशक्त्युपचयेकेचित्परस्यव्यसनेपरे। यानमाहुस्तदासीनं
त्वामुत्थापयतिद्वयम्॥५७॥ ********

त्मादुत्तरपदइतिवामनः। वस्तुतस्तुशत्रुरितिसंज्ञाएषांजाताःशत्रुसंज्ञिताःशत्रवएवते
कूटमन्त्रिणोराज्ञांदूषयितुमर्हाःदूष्यागर्ह्यात्याज्याइतियावत्।कृत्यानांकर्तरिवेतिकर्तरिष
ष्ठीअतःसोऽप्यंनप्रतिरोद्धव्यमितिभावः॥ ५६ ॥ **************** ॥
॥ ननुयानस्योपिकालोयानव्यइत्याशंक्यायमेवकालइत्याह। स्वशक्त्येति। केचिद्वृद्धाः
स्वशक्त्युपचयेसामर्थ्यातिरेकेयानंयात्रामाहुः। यथाहकामंदकः। प्रायेणसंतोव्यसनेरि
पूणांयानव्यमित्येवसमादिशंति। तत्रैवपक्षेव्यसनंह्यनिष्टंक्षमस्तुसनंमुदितःप्रतीयादि
ति। अपरवृद्धाः। परस्यशत्रोर्व्यसनेविपदि। व्यसनंविपदिभ्रंशइत्यमरः। यानमाहुः

॥ अत्रमनुः । मद्ग्रायायाश्चिगर्द्दैवव्यसमेवोत्थितेरिपोरिति । ततद्दयमुक्तापक्षद्वयंतत्तै आसीनकमनुज्ञातं । इंद्रासइतिशानताकारस्येकारादेशःत्वामुत्थापयतिप्रेरयति । तदु भयत्वाभादीदृक्कालीनकदापिलक्ष्यतइत्यर्थः॥ ५७ ॥ ************ ॥

॥ तत्रखड्गत्युपदर्शनावलंभयति ॥ लिलंघयिषतइति । लोकान्लंघयितुमिच्छतोलि लंघयिषत अवं घ्यान्खयंदुर्लंघ्यान्कुतःअलघीयसःअतिगुरून्अतएववादवाअंभोनि धयइवेत्युपमितसमासः लघेःसन्नंतान्लटःशतरिरूपस्यात्सेवत्वेतिलिंगात्तान्याद्यंभोनि धीन्भवतःक्षमातितिक्षावेलेवकूलमिव । वेलाकूलेपिवारिधेरितिविश्वः । संधेप्रतिब ध्नातिअन्यथाप्रागेवसर्वेसंहरेयुरितिभावः ॥ ५८ ॥ ************** ॥

लिलङ्घयिषतोलोकानलङ्घ्यानलघीयसः । यादवा
म्भोनिधीन्रुन्धेवेलेवभवतःक्षमा ॥ ५८ ॥ विजय
स्त्वयिसेनायाःसाक्षिमात्रेऽपदिश्यताम् । फलभाजि
समीक्ष्योक्तेबुद्धेर्भोगइवात्मनि ॥६९॥ ***

॥ अभ्युच्चयस्त्वायमपरःपद्क्षेपेनैवनेविजयलाभइत्याह ॥ विजयइति । सेनायाःकर्त्र्या विजयःसाक्षिमात्रेउदासीनेएवफलभाजित्वयिसमीक्ष्योक्तेसांख्योक्ते । सांख्यंसमीक्ष्यमि तित्रिकाण्डः । आत्मनिबुद्धेःमहत्तत्त्वस्यमूलप्रकृतेःप्रथमविकारस्यकर्त्र्याःभोगःसुखदुः खानुभवइवापदिश्यतांव्यवह्रियतांभृत्यजयपराजययोःस्वामिगम्यत्वादितिभावः । सां ख्याअथाहुः । कर्त्तैवभवत्युदासीनइतिसर्वेप्रत्युपभोगंयस्मात्पुरुषस्यसाधयितुर्बुद्धिरि तिच ॥ ५९ ॥ * ॥ ************************** ॥

॥ अथपरस्यव्यसनमाह ॥ हृतइति । हिडंबरिपुणाभीमेनद्वयोर्माद्रेरपत्यंपुमान्द्वै मातुरः मातुरुत्संख्यासंभद्रपूर्वायाइत्यण्प्रत्ययःउकारश्चांतादेशः तस्मिन्राजिरासंधे

सहिताभ्यांपत्नीभ्यांअर्द्धशःप्रसूतोजरयानामपिशाच्यासंधितइतिकथयंति । युधिद्वै
रिति चिरस्यचिरकालेन। चिरायचिररात्रायचिरस्याद्याश्चिरार्थकाइत्यमरः। मित्रव्यस
नीमित्रव्यसनवान्भ्रंशवानितियावत् । व्यसनंविपदिभ्रंशइत्यमरः दमघोषाज्जातोदम
घोषजश्चैद्यःसुखेनदम्यतइतिसुदमःसुकार्यत्वात्सुसाध्यइत्यर्थः ॥६०॥ *** ॥
॥ कष्टस्त्वायंपक्षोऽभ्युपेत्यवादेनोक्तोवस्तुतस्तुशत्रूणांअग्रिमपक्षएवइष्टशास्त्रसंवादी
यथाहकामंदकः । यदाहमस्तंप्रसभंनिहंतुपराक्रमादूर्जितमर्थमित्रं । तदाभियायाद
हितानिकुर्वन्नृपंततःकर्शनपीडनानीत्यभिप्रेत्याह । नीतिरिति । परःशत्रुःआपदिग
म्यःगमनार्हःनीतिरित्येतत् । तत्आपद्गमनंमानिनःशौर्याभिमानिनःह्रियैलज्जाक

हतेहिडम्बरिपुणाराज्ञिद्वैमातुरेयुधि। चिरस्यमित्रव्यसनीसुदमोद
मघोषजः ॥६०॥ नीतिरापदियद्गम्यःपरस्तन्मानिनोह्रिये। विधुर्वि
धुन्तुदस्येवपूर्णस्तस्योत्सवायसः ॥६१॥ अन्यदुच्छृङ्खलंसत्त्वमन्य
च्छास्त्रनियन्त्रितम्। सामानाधिकरण्यंहितेजस्तिमिरयोःकुतः ॥६२॥

रमित्यर्थः । किंतुपूर्णःउपचितगात्रःसशत्रुस्तस्यमानिनःउत्सवायविधुश्चंद्रः विधुंतुद
निहन्तीतिविधुंतुदोराहुः विध्वरुषोस्तुदइतिखश्प्रत्ययेमुमागमःतस्येव। अतएवबलि
नाबलवानेवयातव्यःबलिनस्तुवयमितिभावः ॥ ६१ ॥ ************* ॥
॥ ननुहिपूर्वोदाहृतमन्वादिशास्त्रविरोधःस्यादित्याशंक्याह ॥ अन्यदिति। अन्यदुच्छृंख
लमनर्गलंप्रसह्यपीडनक्षममितिभावःसत्त्वंबलंअन्यत् शास्त्रेणमन्वादिशास्त्रेणनियंत्रितंउ
दाहृतंपरव्यसनेकालसत्त्वमन्यत् तयोःसापेक्षत्वनिरपेक्षत्वाभ्यां मियोविरोधान्नैकशास्त्रत्वं
संभवतीत्यर्थः । अत्रदृष्टान्तमाह । तेजस्तिमिरयोःसमानमधिकरणंययोस्तयोर्भावः
सामानाधिकरण्यंएकाश्रयत्वंकुतःनकुतश्चित्तयोःसहावस्थानविरोधादितिभावः । तस्मा

दुभयोरुदितानुदितहोमवद्विकल्पशास्त्रत्वादितरेतरशास्त्रविरोधेनबाधकइतिभावः ।अ
बाधोच्छृङ्खलोद्दामानियन्त्रितमनर्गलमितिहेमचन्द्रः ॥ ६२ ॥ ********** ॥
॥ तर्हिनःकिमिदानींकार्यमतआह ॥ इन्द्रप्रस्थेति । इन्द्रप्रस्थस्यपार्थनगरस्यगमोगम
नंगृहवृदृर्निश्चिगमश्चेत्यप्प्रत्ययः। माकारितावन्नक्रियतामेवेत्यर्थः। यावत्तावत्परिच्छेद
कार्त्स्न्येमानेऽवधारणेइतिविश्वः। कर्मणिलुङ्माङिलुङित्याशीरर्थेनमाङ्योग
इत्यडागमनिषेधः। किंतुचेदयःचेदिदेशाःअस्माकमिमेआस्माकाःयुष्मदस्मदोरन्यतरस्यां
खञ्चेतिविकल्पादणप्रत्ययः। तस्मिन्नणिचयुष्माकास्माकावित्यस्माकादेशःसंनिधिरे
वसांनिध्यंस्वार्थेष्यञ्प्रत्ययःअस्माकानांदन्तिनांसांनिध्याद्वामनीभूताःशाखाभंगात्खर्वीभू

इन्द्रप्रस्थगमस्तावत्कारिमासन्तुचेदयः । आस्मा
कदन्तिसान्निध्याद्वामनीभूतभूरुहः॥ ६३ ॥ नि
रुद्धवीवधासारप्रसारागाइवव्रजम् । उपरुन्धन्तु
दाशार्हाःपुरीमाहिष्मतींद्विषः ॥ ६४ ॥ *·*

ताभूरुहोवृक्षायेषांतेतथोक्ताःसंतुचेदियात्रैवक्रियतामित्यर्थः। साचप्रस्तुतप्रस्तुतेनैवस्वका
र्येणगम्यतइतिपर्यायोक्तालंकारः। कारणंगम्यतेयत्रप्रस्तुतात्कार्यवर्णनात्। प्रस्तुतत्वेन
संबंधात्पर्यायोक्तःसउच्यतेइतिलक्षणात् ॥ ६३ ॥ **************** ॥
॥ निरुद्धेति ॥ किंचदाशार्हाःयादवाःवीवधोधान्यादिप्राप्तिःआसारःसुहृद्बलंप्रसारस्तृ
णकाष्ठादेःप्रवेशः। धान्यादेर्वीवधःप्राप्तिरासारस्तुसुहृद्बलं। प्रसारस्तृणकाष्ठादेःप्रवेश
इतिवैजयंती । तेनिरुद्धायैस्तेतथोक्ताःअन्यत्रनिरुद्धौवीवधानांस्कंधेवाह्यक्षीरघृताहर
णसाधनभारविशेषाणांआसारप्रसारौप्रवेशनिर्गमौयैस्तेतथोक्ताः । वीवधोविवधोभारेप
र्याहाराध्वनोरपीतिहेमचन्द्रः। व्रजंगोष्ठं। व्रजःस्थानंगोकुलंगोष्ठमितिवैजयंती। गाइव

माद्दिष्मतीपुरीं द्विषोरीन् उपरन्धन् ग्रजेगाइवमाद्दिषमन्यामरीन् आवृखीत्त्वित्यर्थः । इ
द्दियां चिरप्रीतिनिद्विषार्मकाचंतनपुरीवृत्ताववर्कायिनेकर्मअम्यदीपितंकर्म ॥ ६४ ॥ ** ॥
॥ नहिंपार्थप्रार्थनायकागतिरित्याशंक्यउपेक्षैवगतिरित्याह ॥ यजतामिति । पांडवो
युधिष्ठिरोयजतां यागंकरोतु इंद्रः स्वर्गमवतु रक्षतु इनोऽर्कस्तपतु प्रकाशयतु वयंद्विषतो
ऽरीन् हनाम मारयाम अाङ्‌क्तस्यापिचेत्यडागमः सर्वत्रप्राप्तकालेलोट् । तथाहिसर्वोजनः
स्वार्थं स्वप्रयोजनं समीहते अनुसंधत्ते इंद्रादिसमानयोगक्षेमोनः पार्थइत्यर्थः अर्थांतर
न्यासः । इनः पत्यौनृपार्कयोरितिमेदिनी ॥ ६५ ॥ **************** ॥
॥ प्राप्यतामिति ॥ किंचद्विषतांशिरच्छेदेनप्रोच्छलताउद्गच्छताशोणितेनोक्षितैःसिक्तैः

यजतां पाण्डवः स्वर्गमवत्विन्द्रस्तपत्विनः । वयं हनाम द्विषतः सर्वः
स्वार्थं समीहते ॥ ६५ ॥ प्राप्यतां विद्युतां संपत्संपर्कादर्करोचि
षाम् । शस्त्रैर्द्विषच्छिरच्छेदप्रोच्छलच्छोणितोक्षितैः ॥ ६६ ॥
इति संरम्भिणो वाणीर्बलस्यालेख्यदेवताः । सभाभित्तिप्रतिध्वानैर्भ
याद्न्ववदन्निव ॥ ६७ ॥ ************

शस्त्रैरर्करोचिषांसम्पर्काद्विद्युतां संपत्लक्ष्मीः प्राप्यतामितिनिदर्शनालंकारः ॥ ६६ ॥ *
॥ इतीति ॥ इतीत्थंसंरंभिणःक्षुभितस्यबलभद्रस्यवाणीरालेख्यदेवताश्चित्रलिखितदे
वताःसभायाःसदोगृहस्यभित्तीनांप्रतिध्वानैःप्रतिध्वनिव्याजेनेत्यर्थः । भयादन्ववदन्अ
न्वमोदयानइवेत्युत्प्रेक्षा ॥ ६७ ॥ ************************ ॥
॥ निशम्येति ॥ अधःकृतमक्षजमिंद्रियजंज्ञानंयेनसोऽधोक्षजोहरिःनाःशेषस्यशेषावता
रस्यबलभद्रस्यगाःवाचःशेवगवीःगोरतद्धितलुकिइतिटच् टित्वाङीप् निशम्यश्रुत्वानिशा
म्यतीतिश्रवणेतथानिशमयत्यपीतिभट्टमल्लः । नतुशाम्यतेरिदंरूपंअन्यथानिशमय्ये

निश्रमएववामनः। निशम्येतिशमथ्यशब्दोप्रकृतिभेदादिति। बृहतांवाचांपत्युःबृहस्पतेस्तस्यशिष्यायउद्धवायोभिधातुंवक्तुंदृशादृक्संज्ञयाप्रस्तावंअवसरमादिशत्। अतिदृष्टवान्। प्रस्तावःस्यादवसरइत्यमरः ॥ ६८ ॥ ****************** ॥

॥ भारतीमिति ॥ अथकृष्णाभ्यनुज्ञानन्तरंउद्धवआहितोभरोर्थगौरवंयस्यांतांतथ्यांयथार्थांभारतींवाचंअनुद्धतमगर्वितंयथातथा। तथागदस्याग्रजंकृष्णंअग्रेपरतइतिप्रत्यक्षोक्तिः। उतथ्यस्यमहर्षेरनुजोबृहस्पतिः। उतथ्यावरजोजीवइतिविश्वः। तद्वत् तुल्यंक्रियाचेद्वतिःनद्धितगेयमुपमा॥ ६९ ॥ ******************॥

॥ किंजगादेत्यतआह ॥ संप्रतीति। संप्रतिमुसलपाणिनाबलभद्रेणशूरेणचेतिध्वनिः।

निशम्यताःशेषगवीरभिधातुमधोक्षजः। शिष्यायबृहतांपत्युःप्रस्तावमदिशद्दृशा ॥ ६८ ॥ भारतीमाहितभरामथानुद्धतमुद्धवः। तथ्यामुतथ्यानुजवज्जगादाग्रेगदाग्रजम् ॥ ६९ ॥ संप्रत्यसांप्रतंवक्तुमुक्तेमुसलपाणिना। निर्धारितेऽर्थेलेखेनखलूक्त्वाखलुवाचिकम् ॥ ७० ॥

उक्तेसतिवक्तुमसांप्रतंअयुक्तं। साधूक्तत्वादभ्यासस्यमात्रयोगप्रसंगादितिध्वनिःसांप्रतशब्दस्यार्थत्वात्तद्योगेणकधृषेत्यादिनातुमुन्। तथाहिलेखेनपत्रेणार्थेवाच्येनिर्धारितेनिर्णीतेसति। वाचिकंव्याहृतार्थांवाचंसंदेशवचनमित्यर्थः। संदेशवाग्वाचिकंस्यादित्यमरः। वाचोव्याहृतार्थायामितिठक्खलुउक्त्वाखलुनवाच्यंखल्वित्यर्थः। खलुशब्दःप्रतिषेधेअन्योवाक्यालंकारे। निषेधवाक्यालंकारेजिज्ञासानुनयोःखलुइत्युभयत्राप्यमरः। अलंखल्वोःप्रतिषेधयोःप्राचांक्त्वेतिक्त्वाप्रत्ययः इहतथापादादौखल्वादयइतिनिषेधस्योद्देजकाभिप्रायत्वात्। तत्रार्थखलुशब्दस्यानुद्वेजकत्वात्। तत्त्वदेवपादादौप्रयोगेनदूष्यतीत्यनुसंधेयं। लिखितार्थैवाचिकं इववलोक्तेमदुक्तिरनवकाशेतिवाक्यार्थनिर्विघ्नकरणात्स्पष्ट

स्यानदृष्टांतः स्तुतिव्याजेननिंदाविगमात्व्याजस्तुतिस्तल्लक्षणंचाग्रेवक्ष्यते ॥ ७० ॥ * ॥
॥ तर्हिकिंतूष्णींभूतेनभाव्यंनेत्याह ॥ तथापीति । तथापिवक्तेननिर्णीतेपितत्वमय्यपिव
सभद्दइवइत्यपिशब्दार्थः । गुरुरित्येवंयत्गौरवमादरः तत्गौरवंजल्पतःजल्पनेप्रयोज्य
कर्मणिमेप्रयोजककर्तृत्वंप्रेरकत्वमुपैतिअतोवक्ष्यामीत्यर्थः । नहिपंडितैःसादरंपृष्टस्य,विशे
षज्ञस्यअज्ञवत्तूष्णींभावोयुक्तइतिभावः ॥ ७१ ॥ ****************** ॥
॥ ननुरामेणैवसर्वप्रपंचेनोक्तस्तेप्रतिनवाच्यंकिमस्तोत्यांशंक्यवृथाप्रपंचोयमितिहृदिनि
धायस्तुवन्नाह ॥ वर्णैरित्यादित्रयेण । कतिपयैःपरिमितैःवर्णैःपंचाशतैवमातृकाक्षरैः
कतिपयैः सप्तभिरेवस्वरैर्निषादादिभिः ग्रथितस्यगुंफितस्यवाङ्मयस्यशब्दजालस्यएषा

तथापियन्मय्यपितेगुरुरित्यस्तिगौरवम्। तत्प्रयोजककर्तृत्वमुपैति
ममजल्पतः ॥ ७१ ॥ वर्णैःकतिपयैरेवग्रथितस्यस्वरैरिव। अनन्ता
वाङ्मयस्याहोगेयस्येवविचित्रता ॥ ७२ ॥ बह्वपिस्वेच्छयाकामंप्रकी
र्णमभिधीयते। अनुज्झितार्थसम्बन्धःप्रबन्धोदुरुदाहरः ॥ ७३ ॥

चोपिनित्यंमयटमिच्छन्तिइतिस्वार्थेमयट् गीयतइतिगेयं तस्यगानस्येवविचित्रतारचना
भेदादपरिमिताभवतीत्यर्थः । अहोअनस्तेनसाधूक्तेपिविशेषानंत्यान्ममापिवक्तव्यमस्ती
त्येकोभावः । तस्यदुरुक्तत्वान्ममैवास्तीत्यन्यः । प्रत्ययवयवमिवोपादानादनेकैवोपमा । स्व
रःशब्देऽचिषड्जादाविति हेमचन्द्रः ॥ ७२ ॥ ****************** ॥
॥ बह्विति ॥ स्वेच्छयास्वप्रतिभानुसारेणप्रकीर्णमसंगतंबह्वपिकामंयथेष्टमभिधीयतेकिं
तुअनुज्झितोर्थसंबंधःपदार्थसंगतिर्यस्मिन्सप्रबंधःसंदर्भः दुरुदाहरोदुर्वचः दुःलते: ख
ल्प्रत्ययःएतेनानुसंगतमेवोक्तमितिस्तुतिःअसंगतमेवोक्तमितिनिंदाचगम्यते ॥ ७३ ॥ *
॥ मदीयसीमिति ॥ कुशलाःवक्तारोमदीयसीमतिस्तुकुमाराक्षरांसक्ष्णाक्षरांचतथापिच

नामर्थगुर्वी अन्यत्रसांद्रांकदलीदलकल्पामित्यर्थः । अनल्पैर्बहुभिर्गुणैःश्लेषादिभिस्त
न्तुभिश्चकल्पितां रचितांनिर्मितांचचित्रांशब्दादिविचित्रांविचित्ररूपांचवाचंपटीं शाटी
मिवप्रसारयन्तित्वामवागथैवंविधेनिस्तुतिःश्लेषवाक्तुनैवंविधेनिनिन्दाचगम्यते । अत्रश्ले
षस्यशुद्धविषयासंभवेनसर्वालंकारबाधकत्वादुपमाप्रतिभोत्थापितःप्रकृताप्रकृतश्लेषोयमि
त्यलंकारसर्वस्वकारः । एवञ्चपूर्णोपमयानिर्विषयत्वाप्रसङ्गत्वात्श्लेषप्रतिभोत्थापितेयमुप
मैवेत्यन्ये ॥ ७४ ॥ ****************************** ॥

॥ अथोद्धवःस्वसिद्धान्तंवर्णयिष्यन्स्तुत्यागर्वम्परिहरन्हरिमभिमुखीकरोति ॥ विशेषे
ति । विशेषंवेत्तिविशेषवित्तान्तस्यविशेषविदुषोविशेषज्ञस्यअभिगम्यादिपाठात्द्विती

म्रदीयसीमपिघनामनल्पगुणकल्पिताम् । प्रसारयन्तिकुश
लाश्चित्रांवाचंपटीमिव ॥ ७४ ॥ विशेषविदुषःशास्त्रंयत्त
वोद्ग्राह्यतेपुरः । हेतुःपरिचयस्थैर्य्यैवक्तुर्गुणनिकैवसा ॥
७५ ॥ प्रज्ञोत्साहावतःस्वामीयतेताधातुमात्मनि । तौहि
मूलमुदेष्यन्त्याजिगीषोरात्मसम्पदः ॥ ७६ ॥ *-*-*-*

था समासःतवपुरोऽग्रेशास्त्रंनीतिशास्त्रमुद्ग्राह्यतेउपन्यस्यतेइतियावत् । उद्ग्राहितमुप
न्यस्तमितिवैजयंती । सातदुद्ग्रहणमित्यर्थः । विधेयप्राधान्यात्स्त्रीलिंगत्वं । वक्तुःउद्ग्रा
हितुःपरिचयस्थैर्यैअभ्यासदार्ढ्येहेतुर्गुणनिकाआम्रेडितमाम्नातमेवेतियावत्ननुवेदूषणप्र
कटनमितिभावः । गुणआम्रेडनेचौरादिकःण्यासश्रंथोयुच् । ततःसंज्ञायांकन्कात्पूर्वस्येका
रः । अभ्यासेगुणनीयोग्याइतित्रिकाण्डशेषः ॥ ७५ ॥ *************** ॥

॥ संप्रतिस्वमतमुपन्यस्यति ॥ प्रज्ञेति । अतोस्मात्कारणात्स्वमस्यास्तीतिस्वामीप्रभुः
स्वामिन्नैश्वर्येइतिनिपातः प्रज्ञोत्साहौमन्त्रशक्तीआत्मनिसन्निधातुंसंपादयितुंयतेत

स्वयमुभयशक्तिमान्भवेदित्यर्थः । कुतः हि यस्मात्तौ प्रज्ञोत्साहौ उदेयंत्यावर्त्तन्त्याः त्रि
गीषोरात्मनः संपदः प्रभुशक्तेर्मूलं निदानं । अत्रोत्साहग्रहणं दृष्टान्तार्थः । यथोत्साहस्त
थामंत्रोपिग्राह्योनतु केवलोत्साह इति बलभङ्गापवादः ॥ ७६ ॥ ******** ॥
॥ उत्साहवत्प्रज्ञापिग्राह्येत्युक्तंतस्याः प्रयोजनमाह ॥ सोपधानमिति । ये धीराः धीम
न्तः सोपधानांसविशेषांयुक्तियुक्तामित्यर्थः अन्यत्र सगेन्दुकांसोपबर्हामित्यर्थः । उपधानंवि
शेषेस्यात्गेन्दुकेप्रणयेपिचेतिविश्वः । स्थेयसीं स्थिरतरांअचलांदृढायसींचस्थिरशब्दादी
यसुनिप्रियस्थिरेत्यादिनास्थादेशः । धियंखट्वयन्तिखट्वांपर्यङ्कंकुर्वन्त्याश्रयन्तीत्यर्थः । श
यनंमञ्चपर्यङ्कपल्यङ्काःखट्वयासमाइत्यमरः । तत्करोतितदाचष्टेइतिणिच्तेधीरास्तत्रख

सोपधानान्धियन्धीराः स्थेयसीं खट्वयन्ति ये । तत्रानि
शंनिषण्णास्तेजानतेजातुनश्रमम् ॥ ७७ ॥ स्पृश
न्तिशरवत्तीक्ष्णास्तोकमन्तर्विशन्तिच । बहुस्पृशापि
स्थूलेनस्थीयतेबहिरश्मवत् ॥ ७८ ॥ ***

ट्वायामनिशंअश्रान्तंनिषण्णाःविश्रान्ताःसन्तोजातुकदाचिदपिश्रमंखेदंनजानतेनविदन्ति
। श्रमःखेदोऽध्यादेरितिलक्षणंधीपूर्वकस्येवोत्साहःसेव्योनकेवलइतिसर्वधीराश्रयणीयेत्य
र्थः । अत्रधियआरोप्यमाणायाःप्रकृतश्रमापनोदरूपोपकारपर्यन्तनयापरिणामालंका
रः । आरोप्यमाणस्यप्रकृतोपयोगित्वेपरिणामइतिलक्षणात् ॥ ७७ ॥ ***** ॥
॥ अथप्रज्ञाप्रज्ञयोर्द्वाभ्यांवैषम्यमाह ॥ स्पृशंतीति । तीक्ष्णानिशिताःप्राज्ञाःशरवत्शरेणतु
ल्यंस्तोकमल्पमेवस्पृशन्तिअन्तःकार्यस्याभ्यन्तरंविशन्तिचअल्पायासेनबहुकार्यंसाधयन्तीत्य
र्थः । बहुस्पृशाव्यापिनास्थूलेनमन्देनबृहताचाश्मनायंत्रोपलेनतुल्यमश्मवत् । तेनतु
ल्यंक्रियाचेद्वतिःबहिरेवकार्यस्याकार्यस्यचेतिभावः । स्थीयतेस्थितिःक्रियतेमूढोहिश्र

त्यस्यहेतोर्विक्रुप्रयासंकरोतिमूषकग्रहणायशिखरिखननंपरिहासास्पदंभवतीतिभावः। त द्विगतेयमुपमा ॥ ७८ ॥ ************************** ॥

॥ आरंभतइति ॥ किंचाज्ञाअल्पंतुच्छमेवारभन्तेप्रक्रमन्तेकाममत्यन्तंव्यग्राश्चरितास्वभव न्तितचपारङ्गच्छन्तीतिभावः। कृतधियःशिक्षितबुद्धयस्तुमहारम्भामहोद्योगाभवन्तिनि राकुलाअव्यग्राश्चभवन्तिपारङ्गच्छन्तीतिभावः ॥ ७९ ॥ ************* ॥

॥ अथप्रज्ञावानपिनप्रमाद्येदित्याह ॥ उपायमिति। उपायमास्थितस्यप्राप्तस्यापिउ पायेनैवकार्यंसाधयतोपीत्यर्थः। किमुतव्यग्रस्येतिभावः। प्रमाद्यतोऽनवधानस्य। प्रमादो ऽनवधानताइत्यमरः। अर्थाःप्रयोजनानिनश्यन्ति। तथाहिशयालुर्निद्रालुःआलुचिप्री

आरम्भतेऽल्पमेवाज्ञाःकामंव्यग्राभवन्तिच । महा
रम्भाःकृतधियःतिष्ठन्तिचनिराकुलाः ॥ ७९ ॥ उ
पायमास्थितस्यापिनश्यन्त्यर्थाःप्रमाद्यतः। हन्तिनो
पशयस्थोपिशयालुर्मृगयुर्मृगान् ॥ ८० ॥ *‍*‍*

डोग्रहणादालुच्मृगान्यातीतिमृगयुःव्याधःमृगय्वादयश्चेत्यौणादिकःकुप्रत्ययान्तोनिपा तः। व्याधोमृगवधाजीवोमृगयुर्लुब्धकश्चसइत्यमरः। उपशेरतेऽस्मिन्नित्युपशयोमृगमार्ग स्थायिनोव्याधस्यान्तर्गुप्तिस्थानंगर्त्तविशेषःएरजित्यच्प्रत्ययःतत्रतिष्ठतीत्युपशयस्थोपि मृगान्नहन्तिविशेषणसामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ८० ॥ ******* ॥

॥ एवंप्रज्ञायाआवश्यकत्वमुक्त्वांतयोत्साहस्याप्याह ॥ उदेतुमिति। जेतुमिच्छुर्जिगीषुरे कएवद्वादशस्वपिराजसुमध्येद्वादशस्वादित्येषुदिनकृद्योदिनकरःशोव्याप्रियमाणःआ दित्याःसइवेहामुत्साहमत्यजन्प्रयुंजानएवनतुनिरूद्योगइतिभावः। उदेतुंकल्पतेउद यायप्रभवतिउत्साहशक्तिरेवप्रभुशक्तेरपिमूलमित्यर्थः। नानालिङ्गत्वाद्वेतूनांनानारूढ्ये

त्वमिति श्रुतेः प्रतिमासमादित्यभेदात् द्वादशत्वं द्वादशात्मा दिवाकर इत्यभिधानात्। नेचा र्थमादयः पुराणोक्ता द्रष्टव्याः। राजानस्तु अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परं। तथारिमित्र मित्रं च विजिगीषोः पुरःसराः । पंचेति शेषः। पार्ष्णिग्राहस्ततः पश्चादाक्रंदस्तदनंतरं। आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः। पार्ष्णिग्राहासार आक्रंदासार इत्यर्थः। अत्र च त्वारः इति शेषः। एवं नव भवन्ति विजिगीषुर्दशमः। अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्त रः। अनुग्रहे संहतयोः समर्थो व्यस्तयोर्वधे। मण्डलाद्बहिरेतेषामुदासीनो बलाधिक इति मध्यमोदासीनाभ्यां सह द्वादश वेदितव्याः। पूर्णोपमा ॥ ८१ ॥ ******** ॥

॥ उपायमास्थितस्येत्यत्र राजा न प्रमाद्येदित्युक्तं अप्रमादप्रकारमाह ॥ बुद्धिशस्त्र इति। बुद्धिरेव शस्त्रं यस्य स बुद्धिशस्त्रः अमोघपातित्वात्तस्या इति भावः प्रकृतयः स्वाम्यादिः। राज्या

उदेतुमत्यजन्नीहां राजसु द्वादशस्वपि। जिगीषुरेको दिनकृदादित्येष्विव कल्पते ॥ ८१ ॥ बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृतिकञ्चुकः। चारेक्षणो दूतमुखः पुरुषः कोपि पार्थिवः ॥ ८२ ॥ ****

ङ्गानि प्रकृतय इत्यमरः। ता एवाङ्गानि यस्य सः तद्वैकल्ये राज्ञो वैकल्यं स्यादिति भावः। घ नात् दुर्भेद्या संवृतिर्मन्त्रगुप्तिरेव कञ्चुकः कवचो यस्य स तथोक्तः मन्त्रभेदे राज्यभेदादिति भावः। चरतीति चरः पचाद्यच् स एव चारो गूढपुरुषः प्रज्ञादित्वात् स्वार्थिको ऽण्प्रत्ययः। चारश्च गूढ पुरुष इत्यमरः। स एवेक्षणं चक्षुर्यस्य स चारेक्षणः अन्यथा स्वपरमण्डलवृत्तादर्शनादन्धस्ये वान्धलग्नस्य विनिपातः पदे पदे इति भावः। स्यात्सन्देशहरो दूत इत्यमरः। दूत एव मुखं वा ग्यस्यासौ दूतमुखः अन्यथा मूकस्येव वाग्व्यवहारासिद्धेस्तत्साध्यासाध्यकार्यप्रतिबन्धः स्या दिति भावः एवम्भूतः पार्थिवः कोपि पुरुषः अन्य एवायं लोकविलक्षणः पुमानित्यर्थः अतो रा ज्ञा बुद्ध्यादिसम्पन्नेन भवितव्यं। एतदेवाप्रमत्तत्वं अन्यथा स्वरूपहानिः स्यादिति भावः। अ

न कोपीति राज्ञो लोकसंबंधेयसंबंधोक्तयाऽतिशयोक्तिः । साचबुद्धिरस्तइत्यादिरूपकनि र्व्यूढेतितेनसहाङ्गाङ्गिभावेनसङ्करः ॥ ८२ ॥ ****************** ॥

॥ चतुर्थोपायसाध्यइत्यादिनायतक्षात्रमेवकर्त्तव्यमुक्तंतत्रोत्तरमाह ॥ तेजइति । का लंजानातीतिकालज्ञःतस्यअयंकालइतिविदुःइत्यर्थःआतोनुपसर्गेकः नत्विगुपधेत्यादि नाकःविधेःसमासेकर्मोपपदस्यैवबलवत्त्वभाषणात् । तस्यमहीपतेस्तेजःक्षात्रमेवेतिवाक्ष मैववारएकान्तोनियमोनास्तिकिंयथाकालमुभयमप्याश्रयणीयमित्यर्थःतथाहिरसान्शृंगा रादीन्भावान्निर्वेदादीन्स्वेत्तियस्तस्यरसभावविदःभावग्रहणंसम्पातायातं । कवेःकवि गुरेकंकेवलमोजःप्रौढप्रबन्धत्वंवाएकःप्रसादःसुकुमारप्रबन्धत्वंवानकिंतुतत्रहिरसानुगुणे

तेजःक्षमावानैकान्त्यकालज्ञस्यमहीपतेः । नैकमो
जःप्रसादोवारसभावविदःकवेः ॥ ८३ ॥ कृताप
चारोपिपरैरनाविष्कृतविक्रियः । असाध्यःकुरुतेको
पंप्राप्तेकालेगदोयथा ॥ ८४ ॥ ******

न । यथायोग्यमुभयमप्युपादेयंदृष्टान्तालङ्कारः ॥ ८३ ॥ ********** ॥

॥ यदुक्तंक्रियासमभिहारेणविराध्यंनसहेतकइतितत्रोत्तरमाह ॥ कृतापचारइति । परैःशत्रुभिःकृतःअपचारोऽपथ्यंचयस्यसःतथापिअनाविः कृतविक्रियःअन्तर्गूढविका रःअतएवासाध्योऽप्रतिसमाधेयःसन्गदोयथारोगइव । इववद्वायथाशब्दइतिदण्डी । कालवलक्ष्यावसरेप्राप्तेसतिकोपंकुरुतेप्रकुप्यतीत्यर्थः । तदुक्तं । वहेदमित्रंस्कन्धेनयाव त्कालविपर्ययः । तमेवचागतेकालेभिंद्याद्घटमिवाश्मनेति ॥ ८४ ॥ ******* ॥

॥ इतस्वक्षतात्वमिदानीमित्याह ॥ मृद्विति । मृदुनामृदुवस्तुनाव्यवहितमन्तर्हितंतेजः अर्थान्भोक्तुंप्रकल्पतेप्रभवति । तथाहिप्रदीपोभ्यन्तरस्थयामध्यस्थयादशयावर्त्यातैलंसे

न्तादिक्रमादत्तेअन्यथास्वयमेवनिर्वायादितिगतःक्षान्तिपूर्वमेवक्षान्तंफलतीतिसर्वथाप्रथमंक्षन्तव्यमितिभावः। दशावर्त्तावस्थायांस्नेहचलौल्यादिकोरसेइतिविश्वः। विशेषसामान्यसमर्थनादर्थान्तरन्यासः ॥ ८५ ॥ ********************** ॥

॥ नहिपौरुषंमाभून्नित्यंक्षममाणस्यदैवमेवश्रेयोविधास्यतीत्याशंक्याह ॥ नालंबनइति। विद्वन्नभिज्ञः दिष्टंमतिर्यस्येतिदैष्टिकः दैवप्रमाणकइत्यर्थः दैवंदिष्टंभागधेयमित्यमरः। अस्तिनास्तिदिष्टंमतिरितिठक्तद्भावंदैष्टिकतामेवनालम्बते सर्वथायद्विषयस्यविनाशादितिभावः। नयापौरुषेकेवलपुरुषकारेयुवादित्वादण्प्रत्ययः। ननिषीदतिनतिष्ठति दैवप्रातिकूल्येनस्यवैकल्यादितिभावः। किंतुसत्कविःसत्कवयिनाशब्दार्थाविवतयोः

मृदुव्यवहितंतेजोभोक्तुमर्थान्प्रकल्पते। प्रदीपःस्नेहमादत्तेदशयाऽभ्यन्तरस्थया ॥ ८५ ॥ नालम्बतेदैष्टिकतांननिषीदतिपौरुषे। शब्दार्थौसत्कविरिवद्वयंविद्वानपेक्षते ॥ ८६ ॥ ******

काव्यशरीरत्वादितिभावः। यथाहवामनः। अदोषौसगुणौसालंकारौशब्दार्थौकाव्यमिति। द्वयंपौरुषंदैवंचापेक्षतेअतःपौरुषमप्यावश्यकंकिन्तुकालेकर्त्तव्यमितिविशेषः। पौरुषादृष्टयोःपरस्परसापेक्षत्वादितिभावः॥ ८६ ॥ *************** ॥

॥ अथक्षान्तेःफलमाह ॥ स्थायिनइति। रस्यतेस्वाद्यतेइतिरसःशृंगारादिःइतिरसते स्वादनार्थत्वाद्स्थंतइतिनेरसाइतिनिर्वचनात्तस्यरसस्यरसान्तरतःस्थायिभावस्यरत्यादेःरतिर्हासश्चक्रोधश्चशोकोत्साहभयानिच। जुगुप्साविस्मयशमाःस्थायिभावाःप्रकीर्तिताइत्युक्तत्वात्तस्यैवार्थेस्वादुभावरूपेप्रयोजनेभूयांसःसंचारिणोव्यभिचारिणोभावानिर्वेदादयःविभावादीनामुपलक्षणमेतद्ययाप्रवर्त्तन्ते। तदुक्तं। विभावैरनुभावैस्तसात्त्विकैर्व्य

भिचारिभिः। आनीयमानः स्वादुत्वं स्थायिभावो रसः स्मृत इति। यथा स्थायिनः स्थिरस्य स्वान्याकाङ्क्षं प्रतीक्षमाणस्येत्यर्थः। तस्यैकस्य नेतुर्विजिगीषोर्नायकस्यार्थे प्रयोजने भूयांसो महीभृतो राजानः प्रवर्त्तन्ते स्वयमेवास्य कार्यं साधयन्तीत्यर्थः। ततः क्षत्रस्य मितिभावः। केचित्तु भावपदस्यापि रसपरत्वमाश्रित्य यथा संचारिणः प्रसङ्गादागन्तुकाः अन्ये रसाः स्थायिनः स्थिरस्य मुख्यस्यार्थे प्रवर्त्तन्ते। तथा स्मिन्नेकाव्ये वैरस्य शृंगारादयइतिव्याचक्षते। उपमालङ्कारः॥ ८७ ॥ ****************************** ॥

॥ क्षान्तिपक्षस्यैव गुणान्तरमाह ॥ तन्त्रेति। तन्त्रावापौ स्वपरराष्ट्रचिन्तने अन्यत्र तन्त्रावापं। शास्त्रेषु धानमुख्येषु तन्त्रमिति वैजयन्ती। विदाजानता। योगैः सामाद्युपायैः अन्यत्र दैवता

स्थायिनोऽर्थे प्रवर्त्तन्ते भावाः संचारिणो यथा। रसस्यै
कस्य भूयांसस्तथा नेतुर्महीभृतः॥ ८७ ॥ तन्त्रावा
पविदा योगैर्मण्डलान्यधितिष्ठता। सुनिग्रहा नरे
न्द्रेण फणीन्द्रा इव शत्रवः॥ ८८ ॥ ****

ध्यानैश्च। योगः संनहनोपायध्यानसङ्गतियुक्तिष्वित्यमरः। मण्डलानि स्वपरराष्ट्राणि माहेन्द्रादि दैवतायतनानि च अधितिष्ठता अतिक्रमता नरेन्द्रेण राज्ञा विषवैद्येन च। नरेन्द्रो वार्त्तिके राज्ञि विषवैद्ये च कथ्यत इति विश्वः। शत्रवः फणीन्द्रा इव सुनिग्रहाः सुखेन निग्राह्याः। एवञ्च प्रकृताप्रकृतविषयः श्लेषउपमैवेति केचित्॥ ८८ ॥ ****** ॥

॥ प्रज्ञोत्साहावतः स्वामीत्यत्रैतावेव प्रभुशक्तेर्मूलमित्युक्तानादेवव्यनक्ति ॥ करेति। उत्तुङ्गो महोन्नतः प्रज्ञाबलं मन्त्रशक्तिरेव बृहत्प्रधानं मूलं यस्य सः उत्साह एव पादपः करेणवर्जिताप्र चेयां वर्धनीयां हस्तग्राह्यां च। वलिहस्तां शवः करा इत्यमरः। प्रथीयसीं पृथुतरां। रङ्कतो हेलादेरिनिरेफादेशः प्रभुशक्तिं तेजो विशेषां। सप्रतापः प्रभावश्च यत्तेजः कोषदण्डजमित्य

मरः । फललिप्सुत्वेनेत्यर्थः । फलितस्य फलनिष्पत्तौ मन्त्रपूर्वक एवोत्साहः सतः विपरी मन्त्रच्छिन्नमूलो वृक्ष इव शुष्यतीति भावः । रूपकालङ्कारः ॥ ८९ ॥ ****** ॥

॥ विमृश्यकारिणस्तु विमृश्यमपि विषयेवं स्यादिति त्रयेणाह ॥ अनल्पत्वादिति । अनल्पत्वात् श्रोत्साहाधिकत्वादत एव प्रधानत्वान्मण्डलभिन्नत्वादन्यत्रानल्पत्वाद्वैस्वरत्वात् प्रधानत्वान्नायकस्वरत्वाच्च वंशस्य वंशवाद्यस्वरस्य इतरे स्वरा वीणागानादि शब्दा इव । अथवा आम्नात्वाद्वंश इव वंशस्तत्कालविहितः स्वर उच्यते । तस्य स्वरेतरः षड्जादयः विजिगीषोर्नृपतयः अन्ये मण्डलपरिवर्तिनो राजानः परिवारतां पोष्यतां प्रयान्ति तत्कार्यमेव साधयन्तीत्यर्थः । तस्माद्विमृश्यकर्तव्यमित्यर्थः ॥ ९० ॥ ******************* ॥

करप्रचेयामुत्तुङ्गः प्रभुशक्तिं प्रथीयसीम् । प्रज्ञाबलबृहन्मूलः फलमुत्साहपादपः ॥ ८९ ॥ अनल्पत्वात्प्रधानत्वाद्वंशस्येवेतरे स्वराः । विजिगीषोर्नृपतयः प्रयान्ति परिवारताम् ॥ ९० ॥ अप्यनारभमाणस्य विभोरुत्पादिताः परैः । व्रजन्ति गुणतामर्थाः शब्दा इव विहायसः ॥ ९१ ॥ ****

॥ अपीति ॥ किञ्च अनारभमाणस्य स्वयमकिञ्चित्कुर्वाणस्यापि विभोः प्रभोः व्यापकस्य च परैरन्यैर्नृपतिभिः शंखभेर्यादिभिश्च उत्पादिताः सम्पादिताः जनिताश्चार्थाः प्रयोजनानि विहायसः आकाशस्य शब्दा इव गुणतां विशेषतां कारणादुक्तगुणत्वं व्रजन्ति । शक्तो हि राजा स्वयं उदासीनोऽप्याकाशवत् स्वमहिम्नैव कार्यदेशं व्याप्नुवन् शब्दानिव सर्वार्थानपि स्वकीयतां नयतीत्यर्थः । गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु इति वैजयन्ती ॥ ९१ ॥ *** ॥

॥ यातव्येति ॥ किञ्च एवार्थ एकप्रयोजनं सएव तनुः स्तूत्रत्तच प्रोतायां गुणएकोऽभीष्टाभिलाषितायामित्यर्थः । प्रपूर्वाद्वेञः कर्मणि क्तः वचिस्वपीत्यादिना सम्प्रसारणं । यातव्योऽभियेय

यितव्यःअरिःपार्ष्णिग्राहः पार्ष्णिर्नामनितपार्ष्णिग्राहः पृष्ठानुधावीकर्मण्यरणतावाद्येवान्तेपूर्वैता: मंत्रिशःस्थिताःएवमालारत्नमालिकातस्यामधिकाद्युतिर्महातेजानायकःशक्तिसम्पन्नो जिगीषुर्नायकायतेमध्यमणिरिवाचरतिस्वयमेवसर्वोत्कर्षेणवर्त्ततेइत्यर्थः तस्माद्विमृष्य कर्त्तव्यमितिभावः । नायकोनेतरिश्रेष्ठेहारमध्यमणावपीतिविश्वः । उपमानादाचारइ तिक्यप्अकृत्सार्वधातुकेतिदीर्घः । नायकायतेइत्युपमाअन्यथानुशासनविरोधात्एका र्थत्वंत्वित्यत्रतुल्यरूपत्वेधिष्ठाननिरोधानेनआरोप्यमाणत्वात्स्यैवोद्धटत्वात्प्रेतत्वस्ति द्धेस्वदेवयुक्तं । तद्वलात्पार्ष्णिग्राहादिमालायामित्यत्रापिरूपकमेव । तदनुप्राणिताचे यमुपमेत्यङ्गाङ्गिभावेनसङ्करः ॥ ९२ ॥ ********************** ॥

> यातव्यपार्ष्णिग्राहादिमालायामधिकद्युतिः । एका
> र्थेनतुपेतायांनायकोनायकायते ॥ ९२ ॥ षाड्गुण्य
> मुपयुञ्जीतशक्त्यपेक्षंरसायनम् । भवन्त्यस्यैवमङ्गानि
> स्थास्नूनिबलवन्तिच ॥ ९३ ॥ ******

॥ अथविमृश्यकारणप्रकारमाह ॥ षाड्गुण्यमिति । शक्तिंप्रभावादित्रयंतत्वंचापेक्षतेइ तिशक्त्यपेक्षःतत्पचाद्यच् । शक्तिर्बलेप्रभावादाविति विश्वः । षड्गुणाएवषाड्गुण्यंसन्धि विग्रहादिषट्कंचातुर्वर्ण्यादित्वात्स्वार्थेष्यञ्प्रत्ययः । तदेवरसायनमौषधविशेषमुपयुञ्जी तसेवेत् । रसायनंविहङ्गेपिजराव्याधिभिदौषधेइतिविश्वः । एवंसत्यस्यत्रयोकुरङ्गानि स्वाम्यादीनिगात्राणिचस्थास्नूनिस्थिराणिकालान्तरेक्षमाणीत्यर्थःगलाजिस्थस्नुःबलव न्तिचपरपीडाक्षमाणिचभवन्ति । श्लिष्टपरम्परितरूपकं ॥ ९३ ॥ ****** ॥

॥ स्थास्नूनीति ॥ किञ्चस्थानेशक्यविषयेशमवतांअङ्गिनांसाङ्गिनांराज्ञांशरीरिणाञ्चश क्त्याप्रभावाद्यनुसारेणबलेनचव्यायामेव्यापारेषाड्गुण्यप्रयोगेगमनादौचस्थितीत्यर्थः वृद्धिस्

पचयः शब्दस्य शरीरस्य चेति भावः । विपक्षे बाधकमाह । अयथाबलं शक्त्यतिक्रमेण यथा

सादृश्ये इत्यव्ययीभावेन नञ्समासः आरम्भो व्यायामः क्षयसम्पदोऽत्यन्तहानेर्निदानं आदि

कारणं अङ्गिनामिति भावः । तस्मादस्माकमकस्माच्चैद्यास्कन्दनमश्रेयस्करमिति भावः ।

अत्र विशेषस्यापि श्लिष्टत्वात् शब्दशक्तिमूलो ध्वनिः । तेनोद्यानानङ्गिनामौपम्यं च गम्यते

इति संक्षेपः ॥ ९४ ॥ ************************ ॥

॥ फलितमाह ॥ नदीति । तत्तस्माद् शक्यार्थाकार्यत्वात्तं चेदीनामीशितारं शिशुपालं भ

वान् माऽवमंस्त नावमन्यस्व मन्यतेर्माङि लुङ् । अनुदात्तत्वान्नेडागमः कुतो यच्चैद्य उदात्तः

स्वरानिव अनुदात्तानिवारीनेकपदे एकस्मिन्नस्त्यासेस्त्रिङन्तलक्षणे च निहन्ति हिन

स्थाने शमवतां शक्त्या व्यायामे वृद्धिरङ्गिनाम् । अयथाबलमारम्भो नि
दानं क्षयसंपदः ॥ ९४ ॥ नदीशितारं चेदीनां भवास्तमवमंस्त मा ।
निहन्त्यरीनेकपदे य उदात्तः स्वरानिव ॥ ९५ ॥ मा वेदि यदसावेको जे
तव्यश्चेदिराडिति । राजयक्ष्मेव रोगाणां समूहस्स महीभृताम् ॥ ९६ ॥

स्ति नीचैःकरोति अतिशूरत्वात् अनुदात्तं पदमेकवर्जमिति परिभाषाबलाच्चेति भावः । पदं

स्थाने विभक्त्यन्ते शब्दे वाक्यैकवस्तुनोः । त्राणे पादे पदं चिह्ने इति हैमः ॥ ९५ ॥ * ॥

॥ न चायमेकाकी किं नः करिष्यतीति मन्तव्यमित्याह ॥ मावेदीति । असौ चेदिराड् एकः

एकाकी अतो जेतव्यः सुजय इति मा वेदि मा ज्ञायि विदेः कर्मणि माङि लुङ् । यद्यस्मात् स चेदि

राड् राजयक्ष्मा रोगराजः यस्माद्राजा चासौ यक्ष्मा चेति वा राजयक्ष्मा क्षयरोगो रोगाणामिव महीभृतां स

मूहः समष्टिरूपः । तथाह वाग्भटः । अनेकरोगानुगतो बहुरोगपुरःसरः । राजयक्ष्मा क्ष

यः शोषो रोगराडिति च स्मृतः । नक्षत्राणां द्विजानां च स राजाभूद् यं पुरा । यच्च राजा राजयक्ष्मा

रोगाणां च मतो मत इति । अतो दुर्जय इति भावः । एतेन चिरस्थायित्वव्यसनीसुदर्भोदमधो

वजाङ्गिनिरस्तं ॥ ९६ ॥ ************************ ॥

॥ अथास्य सर्वराजसमष्टितामेव द्वाभ्यां व्याचष्टे ॥ सम्पादितेति ॥ सम्पादितफलं लाभो बाणाग्रं च यस्य सः । फलं लाभशराग्रयोरिति शाश्वतः । सपक्षः ससुहृत्कं कादिपत्रयुतश्च परेषां भेदकः शत्रुविदारणः बाणो बाणासुरः शरश्च । गुणिना शौर्यादिगुणवता मौर्व्या च तेन चैद्येन कार्मुकेण भवतीति कार्मुकं कर्मण उकञ् । तेनैव सन्धानं सन्धिमेष्यति अतो नैकाकीति भावः । अत्राप्युपमासङ्कीर्णः श्लेषो यं रूपकाभेदात् ॥ ९७ ॥ ************* ॥

॥ ये चेति ॥ ये चान्ये कालयवनशाल्वरुक्मिद्रुमादयो राजानस्तमः स्वभावास्तमोगुणात्मकाः अत एव तेऽपि प्रदोषं प्रकृष्टदोषं नाम सभेऽवैनं चैद्यमनुयायिनः अनुयास्यन्तः साहृश्यादिति

सम्पादितफलस्तेन सपक्षः परभेदनः । कार्मुकेणेव गुणिना
बाणः सन्धानमेष्यति ॥ ९७ ॥ ये चान्ये कालयवनशा
ल्वरुक्मिद्रुमादयः । तमःस्वभावास्तेऽप्येनं प्रदोषमनुयायिनः
॥ ९८ ॥ उपजापः कृतस्तेन तानाकोपवतस्त्वयि । आशु
दीपयिताल्पोऽपि साग्नीनेधानिवानिलः ॥ ९९ ॥ **

भावः । भविष्यति गम्यादयः इति णिनिर्भविष्यदर्थे अकेनोर्भविष्यदाधमर्ण्ययोरिति षष्ठी प्रतिषेधात् द्वितीया यथा ध्वान्तं रजनीमुखमनुयातीति तद्वत् इति वस्तुना अलङ्कारध्वनिः । स हि ध्वान्ते गुणेन मइत्यमरः । प्रदोषो दुष्टरच्यं शाविति वैजयन्ती ॥ ९८ ॥ **** ॥

॥ ननु बाणादयोऽस्माभिः कृतसन्धाना इदानीं न विरोध्यन्तीत्यत आह ॥ उपेति । तेन चैद्येन कृतः ऽन्योऽपि उपजायोभेदः । भेदोपजापावित्यमरः । त्वय्याकोपवतस्तान्बाणादीन् अनिलः साग्नीनेधानिन्धनानीव । काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित् स्त्रियामित्यमरः । आशु दीपयिता प्रज्वलयिष्यति दीपेर्ण्यन्तात् लुट् । अन्तर्वैरा संहिता अपि सनिरन्ध्रं सद्यो विक्षि

ष्यन्तीतिभावः ॥ ९९ ॥ ************************* ॥

॥ ननःकिमतआह ॥ बृहदिति। बृहन्सहायोमहासहायवान्क्षोदीयान्क्षुद्रतरोऽपि स्थूलदूरेत्यादिनायणादिपरलोपःपूर्वगुणश्चकार्यस्यान्तंपारङ्गच्छति। तथाहिअपांसमूहआपन्नस्यसमूहइत्यणनेनगच्छतीत्यापगानगापगागिरिनदीमहानद्यागङ्गादिकयासंभूयमिलित्वाअम्भोनिधिमभ्येतिक्षुद्रोप्येवंतादृक् महावीरश्चैद्यस्तुकिमुवक्तव्यइत्यपिशब्दार्थः। विशेषेणसामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ १०० ॥ *********** ॥

॥ किञ्चनकेवलंशत्रोरसाध्यत्वंमिचविरोधस्याधिकोऽनर्थइत्याह ॥ तस्येत्यादिद्वयेन। येचतस्यचैद्यस्यमित्राणियेचतेतवामित्रान्नृपाःतेउभयेत्वयाभियुक्तमभियानमेनंचैद्यंगन्तारो

बृहत्सहायःकार्यान्तंक्षोदीयानपिगच्छति। सम्भूयाम्भोधिमभ्येतिमहानद्यानगापगा ॥ १०० ॥ तस्यमित्राण्यमित्रास्तेयेचयेचोभयेनृपाः। अभियुक्तन्त्वयैनन्तेगन्तारस्त्वामतोपरे ॥ १०१ ॥ मखविघ्नायसकलमित्थमुत्थाप्यराजकम्। हन्तजातमजातारेःप्रथमेनत्वयारिणा ॥ १०२ ॥ ***

गमिष्यन्तिगमेःकर्त्तरिलृटइअतःपरेउक्तोभयव्यतिरिक्तास्तवमित्राणितस्यामित्रास्तेत्वयर्थः त्वांगन्तारः ॥ १०१ ॥ *************************** ॥

॥ ननःकिमतआह ॥ मखेति। इत्थमनेनप्रकारेण। इदमस्थमुरितिथमुप्रत्ययः। मखविघ्नायमखविघातायसकलंराजकंराजसमूहंगोत्रोक्षेत्यादिनावुञ् ॥ उत्थाप्यक्षोभयित्वाहन्तइतिखेदेअजातारेःअजातशत्रोर्युधिष्ठिरस्यत्वयाप्रथमेनारिणाजातमजनि। नपुंसकेभावेक्तः ॥ १०२ ॥ ************************* ॥

॥ अनुसोतिशत्रुःकोदोषस्तत्राह ॥ सम्भाव्येति। बन्धुरेवबान्धवःसधर्मराजःसतिभरस्य

क्षमः स्कन्धो यस्य सतं क्षमस्कन्धं मित्यर्थः त्वां सम्भाव्य सम्भाव्याभिसंधाय अध्वरस्य धुरं चतुर्वर्गादिना समासान्तो ऽच् प्रत्ययः समासान्ता नां प्रकृतिलिङ्गत्वात् धुरस्येपरवल्लिङ्गत्वेटा पि विवक्षत्ते वोढुमिच्छति कर्मणि सप्तमी अतः स त्वन्नाज्ञाहरनथापि विरोधे विश्वासघातो बन्धुद्रोहं च स्यातामितिभावः । विशेषणसाम्यात् प्रस्तुतयोगधुरप्रतीतेः समासोक्तिः ॥ १०२ ॥ *

॥ ननु धर्मनिष्ठत्वाकरणे दोषः प्रागेव परिहारे तु कोदोषः इत्याशङ्क्याह ॥ महात्मान इति ।
महात्मानो भजमानान् शरणागतान् रिपूनप्यनुगृह्णन्ति किमुत बन्धूनितिभावः अर्थान्तरं न्यस्यति ॥ सिन्धवो महानद्यः समानः एकः पतिर्यासां ताः सपत्नीः नित्यं सपत्न्यादिषु निङ्डीप्
नुकारश्च । नगनिम्नगाः गिरिनिर्झरिणीः अब्धिं प्रापयन्ति स्वसौभाग्यं ताभ्यः प्रयच्छन्तीति

सम्भाव्य त्वामतिभरक्षमस्कन्धं सबान्धवः । सहायमध्वरधुरं धर्मराजो विवक्षते ॥ १०३ ॥ महात्मानोऽनुगृह्णन्ति भजमानान् रिपूनपि । सपत्नीः प्रापयन्त्यब्धिं सिन्धवो नगनिम्नगाः ॥ १०४ ॥ * * *

चिरादपि बलात्कारो बलिनः सिद्धयेऽरिषु । छन्दानुवृत्तिदुःसाध्याः सुहृदो विमनीकृताः ॥ १०५ ॥ * * * * * * * * * *

भावः । अतः परिहारोऽप्यनर्थ इतिभावः ॥ १०४ ॥ ****************** ॥
॥ तर्हि संप्रत्युपेक्षापि पश्चात् प्रार्थनया पि प्रार्थमावर्जयामेत्यत आह ॥ चिरादिति । बलिनः स्वयं बलवतोऽरिषु विषये बलात्कारो दण्डः चिराद्विरकालेनापि सद्यो माभूदितिभावः न सिद्धये वशीकरणाय सिद्धये भवतीति शेषः अविमनसः विमनसः सम्पद्यमानाः कृता विमनीकृताः वैमनस्यं प्रापिता इत्यर्थः अरुर्मनः चक्षुश्चेतो रहो रजसां लोपश्चेति च्विप्रत्यये लोपौ अस्य च्वा वितीकारः शोभनं हृदयं येषां ते सुहृदो मित्राणि सुहृन्दुर्हृदौ मित्रामित्रयोरिति निपातनः छन्दस्याभिप्रायस्यानुवृत्त्या चित्तानुरोधेनापि दुःसाध्याः आर्जवयितुमशक्या इत्यर्थः अ

भिप्रायःछन्दआशयइत्यमरः । शनैःशत्रुर्दुःखेनापिवशोभवतिमित्रंत्वेननसेनसाध्य इतिभावः ॥ १०५ ॥ *************************** ॥

॥ ननुसुहृत्कार्यात्सुरकार्यंश्रेयोयइत्यत्राह ॥ मन्यसइति । नाकिनान्देवानाम्प्रीतये रिपुवधःश्रेयान्प्रशस्यतरःप्रशस्यस्यश्रइतिश्रादेशःइतिमन्यसेनर्हिपुरोडाशभुजांहविर्भो जिनांअमरएवनाकिनामिष्टमभीष्टितंकर्तुं इष्टंकर्मणिक्तःइष्टंइष्टिःयागइतियजेर्भावेक्ति न्वचिस्वपीत्यादिनासम्प्रसारणंअलन्तरामनितिपर्याप्तंअव्ययादाम्प्रत्ययः शत्रुवधाद् तिप्रियकरोयागएवनाकिनांभुक्तापिशत्रुवधस्यसुकरत्वादितिभावः ॥ १०६ ॥ ** ॥

॥ नथापिअमृतात्रिनान्तेषांकिमेभिःपिष्टभक्षणप्रलोभनैरत्राह ॥ अमृतमिति । अमृतं

> मन्यसे रिपवः श्रेयान्प्रीतये नाकिनामिति । पुरोडाशभु
> जामिष्टमिष्टं कर्तुमलन्तराम् ॥ १०६ ॥ अमृतं ना
> म यत्सन्तो मन्त्रजिह्वेषु जुह्वति । शोभैव मन्दरक्षुब्ध
> क्षुभिताम्भोधिवर्णना ॥ १०७ ॥ *****

नामयत्सन्तोविद्वांसःमन्त्राएवजिह्वायेषांतेषुमन्त्रजिह्वेषग्निषु । मन्त्रजिह्वःसप्तजिह्वःसुजि ह्वोहव्यवाहनइतिवैजयन्ती । तत्पुरोडाशादिकंजुह्वतितदेवेतिशेषःयत्तदोर्नित्यसम्बन्धा त्मन्दरएवक्षुब्धोमन्थनदण्डःक्षुब्धध्वान्तेत्यादिनास्मिन्नर्थेनिपातनादनिष्टं । तेनक्षुभित स्यमन्थितस्यस्वार्थेऽस्यैवअम्भोधेर्वर्णनाशोभैवअलङ्कारएवअब्धिमन्थनेनामृतमुत्पादित मितियत्कीर्तिमात्रंअतोक्तनएवामृतमितिवाक्यार्थयोर्हेतुहेतुमद्भावाद्वाक्यार्थहेतुकंका व्यलिङ्गमलङ्कारः ॥ १०७ ॥ ************************ ॥

॥ यात्रायाःप्रतिबन्धःकश्चिदस्तरस्तवास्तीत्याह ॥ प्रतीक्ष्यमिति । प्रतीक्ष्यायैपूज्यायै । पू ज्यःप्रतीक्ष्यइत्यमरः । पितृष्वस्रेपितृभगिन्यैविभाषास्वसृपत्योरितिविकल्पादलुगभावः ।

अनृपितृभ्यां पक्षे निषण्णेनेन वल्गुनोः शतमागं स्वपराधान्। आगोपराधो मन्तुश्चेत्यमरः। सं
धिधेयइति यतस्त्वया प्रतिश्रुतं प्रतिज्ञातं तत्प्रतीक्ष्यं प्रतिपालनीयं अन्यथा महादोषस्मरणादि
तिभावः ॥ १०८ ॥ ****************************** ॥

॥ सत्यमस्ति प्रतिश्रुतं किन्तु स्तोमत्तकादौ ध्यायात्तदपि जिहासितमत आह ॥ तीक्ष्ण
ति। सतः सत्पुरुषस्य बुद्धिस्तीक्ष्णा निशिता स्यादिति विद्धीत्यध्याहारः एवमुत्तरत्रापि त
थापि अरुन्तुदनीत्यरुन्तुदा शस्त्रवन्मर्मच्छेदिनी न भवेत्। अर्थिनं सद्यैव परं पीडयेदित्यर्थः। क
र्मव्यापारः प्रतापवत् तेजस्विभयदं स्यात्तथापि शान्तं स्यात् न तु हिंसादिवत् हिंस्रं भवेदित्य
र्थः। मनश्चित्तं सोष्म अभिमानोष्णं स्यात्तथापि उपतापयतीत्युपतापि अग्न्यादिवत् परम[illegible]

सहिध्येशनमार्गांसिद्धनोस्तुइतियत्त्वया। प्रतीक्ष्यन्तत्प्रतीक्ष्यायैपि
तृव्यक्तेप्रतिश्रुतम् ॥ १०८ ॥ तीक्ष्णानारुन्तुदा बुद्धिः कर्म शान्तं
प्रतापवत्। नोपतापि मनः सोष्मवागेकावाङ्मिनस्सतः ॥ १०९ ॥
स्वयङ्कृतप्रसादस्यतस्याह्ने भानुमानिव। समयावधिमप्राप्यनान्त
यालम्भवानपि ॥ ११० ॥ ************

त्रापि तस्या वाग्मिनश्च वक्तुः प्रागेव [illegible] एकरूपा स्यात् वाग्मी सत्यमेव वदेदित्यर्थः अतः सत्यसंध
स्य प्रतिश्रुतार्थहानिरनर्हेति भावः अत्र प्रकृतानां वाचोऽप्रकृतानां बुद्धिकर्ममनसां च तुल्य
धर्मा दौपम्यावगमाद्दीपकालङ्कारः प्रकृताप्रकृतानां च साम्येन तुल्यधर्मतः। औपम्यङ्गम्यते
यत्र दीपकं तन्निगद्यते इति लक्षणात्। बुद्ध्यादीनां शस्त्रादिव्यतिरेकोऽव्यज्यते ॥ १०९ ॥*
॥ अशक्यस्याकाले चैद्यवधइत्याह ॥ स्वयमिति ॥ किञ्च अह्नि भानुमानिव स्वयंकृतः प्रसा
दोऽनुग्रहः प्रकाशश्च यस्य तस्य चैद्यस्यान्ताय समयावधिं नियतकालावसानं अप्राप्य भवानपि
नालं शक्तो न तथा च वृथापकीर्तिरेवान्यन्न किञ्चित्फलं स्यादिति भावः ॥ ११० ॥ ** ॥

र्थार्हंवर्णमन्त्रज्ञःस्पशोहेरकउच्यतइतिहलायुधः । अविद्यमानःपस्पशःशास्त्रारम्भस
र्थकउपोद्घातसन्दर्भग्रन्थोयस्याःसाअपस्पशाशब्दविद्याव्याकरणविद्यासानोभातिनशोभ
तेनस्पशाचारप्रेषणमावश्यकंनरेन्द्रहिनस्यराज्ञोन्धप्रायत्वादितिभावः । अत्रापस्पशेत्यत्रज
तुकाष्ठवच्छब्दयोरेवश्लिष्टत्वाच्छब्दश्लेषःसद्वृत्तिःसन्निबन्धनेत्यत्रैकतावलावलंविफलद्वे
षवदर्थश्लेषः । अनुत्सूत्रपदन्यासेत्यत्रतूभयसम्भवादुभयश्लेषः । शब्दविद्येवेतिपूर्णोप
माव्यक्तौवतयोःसापेक्षत्वात्सङ्करः ॥ ११२ ॥ ****************** ॥

॥ नकेवलंचारमुखेनवृत्तान्तज्ञानमपितुउपजापश्चकर्त्तव्यइत्याह ॥ अज्ञातेति । किञ्चा
ज्ञातदोषैःपरैरज्ञातस्वमर्मभिर्दोषज्ञैःस्वयम्परमर्मज्ञैःअभिव्यक्तानिभेद्यस्याग्रेप्रकटितानि
शासनानिनदमात्याद्यविश्वासकराणिकूटलिखितानियेषान्तैः उभयवेतनैः उभयत्रभेद्ये

अज्ञातदोषैर्दोषज्ञैरुद्दूष्योभयवेतनैः । भेद्याःशत्रोरभिव्यक्तशास
नैःसामवायिकाः ॥ ११३ ॥ उपेयिवांसिकर्त्तारःपुरीमाजात
शात्रवीम् । राजन्यकान्युपायज्ञैरेकार्थानिचरैस्तव ॥ ११४ ॥ **

स्वामिनिचवेतनंभृतिर्येषांतैःउभयजीविकाग्राहिभिस्त्वभेद्यनगरवास्तव्यैश्चरैरित्यर्थः । भृ
तिर्भर्मवेतनमित्यमरः । शत्रोःसम्बन्धिनःसमवायंसमवयन्तीतिसामवायिकाःसंघमु
ख्याःसचिवादयःसमवायान्समवैतीतिठक् । उद्दूष्यक्षिपामेनेदत्तहस्ताःअस्माभिरेषांलि
खितान्येवगृहीतानीत्युच्चैर्दूषयित्वाभेद्याःविघट्टनीयाः ॥ ११३ ॥ ******* ॥

॥ उपेति ॥ किञ्चउपायज्ञैःकार्यसाधनकुशलैःतवचरन्तीतिचरैर्गूढचारिभिःपचाद्यच् ए
कार्थानित्वयासहैकप्रयोजनानिराजन्यानांसमूहाःराजन्यकानिगोत्रोक्षेत्यादिनावुञ् । अ
जातशत्रोरिमामाजातशात्रवींपुरींइन्द्रप्रस्थमुपेयिवांसिप्राप्नुवन्तिउपेयिवानित्यादिना
क्वसुप्रत्ययान्तोनिपातःकर्त्तारःकारिष्यन्तिकर्मणिलुट् । इन्द्रप्रस्थेऽस्माकंमहत्कार्यंभविष्य

तितदध्वरयात्राव्याजेन संनद्धैरागत्य ब्यमितिगूढंसंदिश्यतत्तसर्वैमेलयितव्याइत्यर्थः ॥ अजातशत्रुःशल्यारिर्धर्म्मपुत्रोयुधिष्ठिरइतिहेमः ॥ ११४ ॥ ********* ॥

॥ ननुतत्राध्वरेकर्म्मणिकोयुद्धावकाशइत्याशंक्याह ॥ नन्वेवमहत्कालहरीजनंसम्पादय ति । सविशेषमिति । पाण्डोःसुतेयुधिष्ठिरेभवतिपूज्यत्वेपिसविशेषंयथातथाभक्तिंवितन्व तिसतितरसास्वपत्नामत्सरिणोद्वेषवन्तःपरेशत्रवःस्वयमेववैरायितारःवैरंकर्त्तारःशब्दवैर कलाभ्रेत्यादिनाक्यष्ततःकर्त्तरिलुट् ॥ ११५ ॥ *************** ॥

॥ तितोपिसैवैवैरायिष्यन्तेनेत्याह ॥ यइति । इह विपक्षमध्येशत्रुमध्येसह संवृद्धियुजो पिचैद्येनसहैश्वर्यङ्गतारोपिसन्तूच्चिपेत्यादिनाक्यिपभूभुजोराजानःआत्मविदःस्वाभि

सविशेषांसुतेपाण्डोर्भक्तिंत्वयिवितन्वति । वैरायितारस्तरसाःस्वय म्मत्सरिणःपरे ॥ ११५ ॥ यइहात्मविदोविपक्षमध्येसहसंवृद्धि युजोऽपिभूभुजःस्युः । बलिपुष्टकुलादिवान्यपुष्टैःपृथगस्मादचिरेण भवितारः ॥ ११६ ॥ ***************

ज्ञनवेदिनःस्युःतैर्भूभुग्भिःबलिपुष्टकुलात्कालकुलात् । काकेतुकरटारिष्टबलिपुष्टसकृ त्प्रजाइत्यमरः । अन्यपुष्टैःपरभृतैरिवाचिरेणसद्योस्मात्विपक्षमध्यात्अन्यारादित्यन्या न्यशब्दार्थपरत्वात्पृथगादिप्रयोगेपिपञ्चमीपृथक्भावितापृथक्भविष्यतेभावेलुट् । चिरस हिदिवृद्धिःनेच्छपिकेचिदस्माभिःसंगच्छन्तेइत्यर्थःऔपच्छन्दसिकंवृत्तं॥ ११६ ॥ * ॥

॥ अथफलितंनिगमयन्नाशिषंप्रयुंक्ते ॥ सहजेति । स्वाभाविकंचापलंदुर्विनीतत्वंअनव स्थितत्वंच । चपलःपारदेशीघ्रेदुर्विनीतेऽनवस्थितेइतिवैजयन्ती । तेनैवदोषेणसमुद्धतो दृप्तःपक्षःसहायोगणश्च । पक्षःपार्श्वगरुत्साध्यसहायबलभित्तिष्विनिवैजयन्ती । चलि तोऽस्थिरोदुर्बलपक्षपरिग्रहोयस्यसः असहृद्गणःशत्रुवर्गःनवदुरासदवीर्यविभावसोर

ज्ञोवह्नौ। वीर्यंशुक्रेप्रभावेचतेजःसामर्थ्ययोरपि। सूर्यवह्नीविभावसूइतिविश्वः॥ शलभतांपतङ्गत्वं। समौपतङ्गशलभावित्यमरः। भावेतल्। लभतांगच्छतु। रूपकाल ङ्कारः। द्रुतविलम्बितंवृत्तम्॥ ११७॥ ********************** ॥

॥ सहरिः इत्थंविशकलितार्थां विवेचितार्थाअनुगतनयमार्गांनीतिमार्गानुसारिणींदुर्नय स्यबलभद्राद्युक्तस्येत्यर्थः। अर्गलांनिवारयित्रीमितिवैधर्म्यरूपकालङ्कारः। तद्विष्कम्भेऽ र्गलंनतेत्यमरः। अतएवजनितमुदंहरेःकृतानन्दांउत्थितेउन्नतेउरःस्थलेनियतंनिषण्ण यानित्यंविश्रान्तयाश्रियाश्रुतांनान्यथेतिमन्त्रगुप्तिः उद्धवस्येमामौद्धवीमेनांपूर्वोक्तांवाचंश्रु

सहजचापलदोषसमुद्धतस्खलितदुर्बलपक्षपरिग्रहः। तवदुरासदवी र्यविभावसौशलभतांलभतामसुहृद्गणः॥ ११७॥ इतिविशकलिता र्थामौद्धवींवाचमेनामनुगतनयमार्गामर्गलांदुर्नयस्य। जनितमुदमु दस्थादुच्चकैरुत्थितोरःस्थलनलिननिषण्णश्रीश्रुतांश्रुतवान्सः ॥ ११८॥ इतिश्रीमाघकृतेशिशुपालबधेमहाकाव्येद्वितीयःसर्गः॥२॥

तवान्भाषायांसद्वसश्रुवइतिक्वसुः उच्चैरेवोच्चकैरुन्नतःसन्अव्ययसर्वनाम्नामकच्प्राक् टेरित्यकच्प्रत्ययःउदस्थादासनादुत्थितवान्उदोनूर्ध्वकर्मणिइत्यस्यप्रत्युदाहरणमेत त्। रूपकानुप्रासालङ्कारोमालिनीवृत्तम्॥ ११८ ॥ ************** ॥

॥ इतिश्रीमल्लिनाथसूरिविरचितेमाघकाव्यव्याख्यानेसर्वङ्कषाख्येद्वितीयःसर्गः॥ २ ॥



M 2

॥ कौबेरेति। अथोद्धववाक्यश्रवणानन्तरमपेतोयुद्धेअभिनिवेशआग्रहोयस्यसः शान्तक्रो
धइत्यर्थः अतएवसौम्यः प्रसन्नः अतएवकौबेर्यादिशोभागम् उत्तरायणमित्यर्थः स्त्रियाःपुम्वदि
त्यादिनापुम्वद्भावः तमपास्यागस्त्यस्येममागस्त्यंमार्गमवन्तीर्शीदक्षिणायनगतइत्यर्थः उ
ष्णांशुरिवस्थितइत्यर्थः। अनेनहरेःक्रोधःकार्यवशात्कालमन्तरस्तमितोनत्वेकान्ततो
निवृत्तइतिसूचितंहरिःकृष्णःहरिप्रस्थमिन्द्रप्रस्थंप्रतस्थे। इन्द्रोदस्यवनोहरिरितिह
लायुधः। समवप्रविभ्यःस्थइत्यात्मनेपदन्देशकालाध्वगन्तव्याःकर्मसंज्ञाह्यकर्मणामिति
गन्तव्यकर्मत्वंउपमालङ्कारः। सर्गेऽस्मिन्निन्द्रोपेन्द्रवज्रामिश्रणादुपजातिवृत्तं। अनन्त
रोदीरितलक्ष्मभाजौपादौयदीयावुपजातयस्ताइतिलक्षणात् ॥ १ ॥ ****** ॥

कौबेरदिग्भागमपास्यमार्गमागस्त्यमुष्णांशुरिवावतीर्णः। अपेतयु
द्धाभिनिवेशसौम्योहरिर्हरिप्रस्थमथप्रतस्थे ॥ १ ॥ जगत्पवित्रै
रपितन्नपादैस्स्प्रष्टुंजगत्पूज्यमयुज्यतार्कः। यतोबृहत्पार्वणचन्द्रचारु
तस्यातपत्रंबिभरांबभूवे ॥ २ ॥ ***********

॥ अथास्यप्रस्थानसन्नाहंवर्णयन्नादौच्छत्रधारणमाह ॥ जगदिति। अर्कोजगत्पूज्यंह
रिंअतएवजगत्पवित्रैरपिपादैःकिरणैःकरैस्सस्प्रष्टुंअयुज्यतनार्हतयुक्तेदैवादिकात्कर्त्तरि
लुङ्। कुतःयतअस्यहरेःबृहद्विपुलंपार्वणचन्द्रचारुपूर्णेन्दुसुन्दरमित्युपमालङ्कारःआत
पात्त्रायतइत्यातपत्रंछत्रंसुपीतियोगविभागात्कः विभरांबभूवेदधेभृञःकर्मणिलिट्भी
ह्रीभृहुवामितिविकल्पादाम्प्रत्ययःआतपत्रान्तर्हितस्यपादैः स्प्रष्टुमशक्यत्वादित्यर्थः।
जगत्पूतस्यहरेःपादेनस्पर्शनिषेधादितिध्वनिः ॥ २ ॥ ************* ॥
॥ अथचामरधारणमाह ॥ मृणालेति। मृणालसूत्रामलंविसतन्तुविशदमित्युपमाचल
द्भिन्नादितिभावः। चामरयोर्द्वयमन्तरेणस्थितःद्वयस्यमध्येस्थितइत्यर्थःअन्तरान्तरे

स्वुत्तोइतिद्वितीयासहरिरभितःपातुकाउभयतःपातिनीसिद्धसिन्धुराकाशगङ्गायस्य
तयोाक्तःपर्यभिभ्यांचेतितसिल्प्रत्ययः सर्वोभयार्थवर्त्तमानाभ्यामित्यतइत्युभयार्थत्वंसुप्सु
पेतिसमासः। पातुरोतिलपपतेत्यादिनाउकञ्प्रत्ययः। तस्याम्बुराशेःसमुद्रस्याभूतपूर्वा
पूर्वमभूतांसुप्सुपेतिसमासः। तांश्रियंभेजेइत्यर्थःअतएवनिदर्शनासाचाम्बुराशेःसम्भाव
नानाच्चोक्ताअभितः पातुकसिद्धसिन्धुसम्बन्धभूत याअसम्बन्धेसम्बन्धरूपातिशयोक्त्यासं
कीर्यतइतिसंक्षेपः ॥ ३ ॥ ****************************** ॥
॥ अथाष्टभिरस्यप्रसाधनविधिंवर्णयन्मुकुटधारणमाह ॥ चित्राभिरिति। अस्यहरेरु
परिऊर्ध्वदेशेमौलिभागेमौलिभाजांमुकुटगतानांमणीनामनणीयसीभिर्महतीभिस्त्विना

मृणालसूत्रामलमन्तरेणस्थितश्चलच्चामरयोर्द्वयं
सः । भेजेऽभितःपातुकसिद्धसिन्धोरभूतपूर्वांरुच
मम्बुराशेः ॥ ३ ॥ चित्राभिरस्योपरिमौलिभाजांभा
भिर्म्मणीनामनणीयसीभिः । अनेकधातुच्छुरिता
श्मराशेर्गोवर्द्धनस्याकृतिरन्वकारि ॥ ४ ॥ ❋

भिरनेकवर्णाभिर्भाभिःप्रभाभिःकर्त्रीभिः। स्युःप्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदी
प्तयइतिअमरः। सान्तपक्षेभाभगोइत्यादिनारोर्यकारेतस्यहलिसर्वेषामितिलोपः। अ
नेकैर्धातुभिर्गैरिकादिभिःछुरितानांरूषितानांअश्मराशयोयस्यतस्यगोवर्द्धनस्याकृतिरन्व
कारिअनुकृतातस्मादुच्छ्रयमभाजीत्यर्थः ॥ ४ ॥ ******************** ॥
॥ कुण्डलेचप्रधृतेइत्याह ॥ तस्येति। तस्यहरेर्हरःस्थलमुल्लसन्त्याकाञ्चनकुण्डला
ययोःप्रत्युप्तानांखचितानांगारुत्मतरत्नानांमरकतमणीनांभासादीप्त्याउरसिप्रसरन्त्येति
भावः। वाच्यंशेषवःब्राह्मणादित्वात्ष्यञ्। ततोचितमभ्यस्तंयत्नीलकण्ठपिच्छंमयूरब

र्हम्। अभ्यस्तेऽप्युचितेन्याय्यमितियादवः। पिच्छं बर्हे नपुंसके इत्यमरः। मदेवावचूडाम
णिकातस्याः कलनामामोचनमवमोचनं वा अवापेवेत्युत्प्रेक्षा। यत्रान्यधर्मसम्बन्धादन्यदेवो
पतर्कितं। प्रकृते हि भवेत्प्रायस्तामुत्प्रेक्षां प्रचक्षते इति लक्षणात् ॥ ५ ॥ ***** ॥
॥ नमङ्गदे इति ॥ वंशहरिं मन्दरकूटकोटिव्याघट्टनाम्ना चलशिखाग्रसङ्घर्षणं तेनोत्तेज
नाशाणोल्लेखनात्तयावं हीयसा बकुलतरेणप्रियस्थिरेत्यादिना बकुलशब्दस्येयसुनि वंहादे
शः मणीनां दीप्तिवितानकेन प्रभापटलेन उल्लसन्तीदीप्यमाने आच्छीनद्धे ऊर्मिमितिनुमाग
मः। अङ्गदे केयूरे। केयूरमङ्गदं तुल्ये इत्यमरः। चकासयामासतुः शोभयाञ्चक्रतुः अङ्गदे

तस्योल्लसत्काञ्चनकुण्डलाग्रप्रत्युप्तगारुत्मतरत्नभासा । अवापवा
ल्योचितनीलकण्ठपिच्छावचूडाकलनामिवोरः ॥ ५ ॥ नमङ्गदे
मन्दरकूटकोटिव्याघट्टनोत्तेजनयामणीनाम् । वंहीयसा दीप्तिवि
तानकेन चकासयामासतुरुल्लसन्तौ ॥ ६ ॥ निसर्गरक्तैर्वलयाव
नद्धताम्राश्मरश्मिच्छुरितैर्नखाग्रैः । व्यद्योतताद्यापि सुरारिव
क्षोविक्षोभजासृक्स्नपितैरिवासौ ॥ ७ ॥ *******

धृत्वानित्यर्थः। चकास्तेर्ण्यन्तात् लिटि आम्प्रत्यये ऽस्तेरनुप्रयोगः। अत्राङ्गदयोः प्राग्भवी
बाङ्गदभेदेऽप्यभेदोक्तिमपेक्ष्यनयोः मन्दरकूटकोट्यसम्बन्धेऽपि सम्बन्धोक्त्या द्वयोरतिशय
क्त्योः सङ्करः ॥ ६ ॥ ****************************** ॥
॥ निसर्गेति ॥ असौ हरिर्निसर्गरक्तैः स्वभावलोहितैः किञ्च वलये कटके। कटकं वलयोऽस्त्रिया
मित्यमरः। तयोरवनद्धानां प्रत्युप्तानां ताम्राश्मनां पद्मरागाणां रश्मिभिः छुरितैः अत एवा
द्यापि सुरारेर्हिरण्यकशिपोः वक्षसि विक्षोभेण विदारणेन जातेन तथोक्तेन असृजा स्नपितैः सि
क्तैरिवास्थितैरिवेत्युत्प्रेक्षा नखैर्ण्यन्तात् क्तः अर्त्तिह्रीत्यादिना पुगागमः मितां ह्रस्वः नखाग्रैर्व्य

धौतनकटकेचधृतवानित्यर्थः ॥ ७ ॥ ************************॥

॥ उभाविति ॥ तमालवन्नीलंआमुक्तेआसंजितेमुक्तालतेमौक्तिकहारौयस्मिन्अस्यहरेः
वक्षःआकाशगङ्गायाःपयसः उभौप्रवाहौव्योम्नियदिपततांप्रवाहेतांचेत्सम्भावनायांलि
ङ् । तेनव्योम्नोपमीयेतसमीक्रियेत्नास्योपमानंकिञ्चित्पश्यामइतिभावः । मुक्ताहारंधृ
तवानित्यर्थः । अत्रव्योम्नोगङ्गाप्रवाहद्वयासम्बन्धेपिसम्भावनायासम्बन्धकथनादतिश
योक्तिः । तदेतत्पुण्यंप्रवाहोपहितंयदिस्यादित्याद्युदाहृत्यालङ्कारसर्वस्वकारःस्पष्टीच
कार ॥ ८ ॥ ******************************॥

॥ तेनेति ॥ तेनहरिणादीधितिभिर्दीपिताःआशायेनसःदिगन्तविश्रान्ततेजाइत्यर्थः ।

उभौयदिव्योम्निपृथक्प्रवाहावाकाशगङ्गापयसःपतेताम् । तेनोपमी
येततमालनीलमामुक्तमुक्तालतमस्यवक्षः ॥ ८ ॥ तेनाम्भसांसा
रमयःपयोधेर्दध्रेमणिर्दीधितिदीपिताशः । अन्तर्वसन्विम्बगतस्त
दङ्गेसाक्षादिवालक्ष्यतयत्रलोकः ॥ ९ ॥ *******

पयोधेरम्भसांसारस्यविकारःसारमयःमणिःसमुद्रमथनोत्थःकौस्तुभाख्यइत्यर्थःदध्रेधृतः
धृञ्धारणेकर्मणिलिट् । यत्रमणौविम्बगतःप्रतिविम्बगतोलोकःबाह्यप्रपंचःतदङ्गेतस्य
हरेःशरीरेसाक्षात्भूतःवहिःप्रत्यक्षेणदृश्यमाणइत्यर्थः । अन्तर्वसन्अन्तर्गतइवालक्ष्यते
यत्रमणौप्रतिविम्बितोबाह्यलोकःतदङ्गएवनैर्मल्याद्वहिःप्रफलितःकुक्षिस्थलोकइवाल
क्ष्यतइत्युत्प्रेक्षा ॥ ९ ॥ ***************************॥

॥ मुक्तेति ॥ अस्यहरेर्मुक्तामयंतत्प्रकृतवचनेमयट्सारसनेकटिसूत्रेऽवलम्बितइतिसार
सनावलम्बि । स्त्रीवेसारसनंचाथपुंस्कट्यांशृंखलंत्रिष्वित्यमरः । आप्रपदंप्राप्नोतीत्याप्रप
दीनम्पादाग्रलम्बिआप्रपदंप्राप्नोतीतिखप्रत्ययः । दाममुक्तासारःअङ्कुकेनतिक्यनंविहृष्ट

मित्यर्थः। गौणार्थत्वादग्राम्यत्वं यथा हद्रुण्डी। निष्ठ्यूतोद्गीर्णवान्तादिगौणवृत्तिव्यपाश्रयम्। अतिसुन्दरं अन्यत्रग्राम्यकक्षांविगाहत इति। ऊर्ध्वं ऊर्ध्वप्रवाहमुच्चैरुन्नतंत्रिस्रोतसो मन्दाकिन्याः सन्ततधारमविच्छिन्नसंपातमम्भइव भातिस्मेत्युत्प्रेक्षा ॥ १० ॥ **** ॥

॥ सइति ॥ इन्द्रनीलस्थलमिव नीलमूर्त्तिः श्यामाङ्गः तंहिनायांरेरोनिरेफलोपः। द्रलोपेपूर्वस्येतिदीर्घः कर्चूरं हरितालमिव पिशङ्गंवासोयस्यसः पीताम्बरोहरिः। हरितालञ्च कर्चूरमितिवैजयन्ती। सहरिर्विसृत्वरैः विसृमरैः इत्यर्थः प्रसर्त्तिइतिक्वरप्। अम्बुरुहां अम्बुजानांरुहैः किंपुरजोभिःपरागैश्चित्रः चित्रवर्णःयमस्वसुर्यमुनायाः उदकस्यभारः पूर

मुक्तामयंसारसनावलम्बि भातिस्मदामाप्रपदीनमस्य। अङ्गुष्ठनिष्ठ्यूतमिवोर्द्ध्वमुच्चैस्त्रिस्रोतसः सन्ततधारमम्भः ॥ १० ॥ सइन्द्रनीलस्थलनीलमूर्त्तीराजत्कर्चूरपिशङ्गवासाः। विसृत्वरैरम्बुरुहांरजोभिर्यमस्वसुश्चित्रइवोदभारः ॥ ११ ॥ प्रसाधितस्याथमधुद्विषोऽभूदन्यैवलक्ष्मीरितियुक्तमेतत्। वपुष्यशेषेऽखिललोककान्तासानन्यकान्ताह्युरसीतरातु ॥ १२ ॥ **********

उदभारः सइव राजमन्थोदनेत्यादिनाउदकस्योदादेशः ॥ ११ ॥ ****** ॥

॥ प्रसाधीति ॥ प्रसाधितस्यालङ्कृतस्यमधुद्विषःहरेः अन्यैवासदृशीविभिन्ना च। अन्योविभिन्नासदृशाविति वैजयन्ती। लक्ष्मीः शोभापद्मा च। शोभासम्पत्तिपद्मासुलक्ष्मीःश्रीरवगम्यतेइतिविश्वः। अभूदित्येतत्युक्तंकुतो हियस्मात्ताप्रसाधनलक्ष्मीरशेषेवपुषिवसतीति शेषः किञ्चाखिललोकस्यकान्ताप्रियाइतराभिन्नातुअन्यस्यकान्ताप्रियानभवतीत्यनन्यकान्ता, किन्तुनस्यैवेत्यर्थः किञ्चउरसिउरस्येववसतीत्यर्थः अत्र हरेः प्रसाधनादसाधारणीशोभा समज्जायतेतिपारमार्थिकोवाक्यार्थः। अत्रलक्ष्मीशब्देनशेषमहिम्नावाच्यायाः शोभायाः

प्रतीयमानायाः श्रीदेव्याः सहाभेदाध्यवसेयादियमन्यैव लक्ष्मीरित्यभेदरूपातिशयोक्तिर लङ्कारः ॥ १२ ॥ ***************************** ॥

॥ अथैनमेवार्थं भङ्ग्यन्तरेणाह ॥ कपाटेति । कपाटवद्विस्तीर्णे मनोरमे चोरःस्थले स्थिता श्रीरिति ललनाकान्तायस्य तस्य हरेरानन्दिताशेषजनासर्वाङ्गसङ्गिनी अतएवापरैवाबाधा धारस्यैव श्रीदेव्या अन्यैव लक्ष्मीः शोभा रमा च बभूव सएवालङ्कारः । प्रायेणैकार्थमप्यनेकं श्लोकमुक्तिविशेषलाभाल्लिखन्ति कवयः । यथाह नैषधे आदावेव निपीयेत्यादि श्लोकद्वयं चोद्यमिति ॥ १३ ॥ ***************************** ॥

॥ अथ देवीसहचरस्यैवास्य याचेनिस्तुवयन्प्रसाधनविधेः फलमाह । दैत्येति । भूव

कपाटविस्तीर्णमनोरमोरःस्थलस्थितश्रीललनस्य तस्य । आनन्दिताशेषजना बभूव सर्वाङ्गसङ्गिन्यपरैव लक्ष्मीः ॥ १३ ॥ दैत्याधिपप्राणमुषां नखानामुपेयुषां भूषणतां क्षतेन । प्रकाशकार्कश्यगुणौ दधानाः स्तनौ तरुण्यः परिवव्रुरेनम् ॥ १४ ॥ ***********

णानामुपेयुषां ननु प्रहरणाभिनिभावः । दैत्याधिपस्य हिरण्यकशिपोः प्राणमुषां प्राणप्रहारिणां वज्रादपि कठोराणामित्यर्थः । नखानां क्षतेन व्रणेन प्रकाशो व्यक्तः कार्कश्यमेव गुणो यथोस्तौ स्तनौ स्तनानित्यर्थः । जातावेकवचने प्राप्ते जातिभूयस्त्वात्स्तनादिषु जातेर्द्वित्वविशिष्टत्वान्द्विर्वचनं यथाह वामनः । स्तनादीनां द्वित्वविशिष्टा जातिः प्रायेणेति । दधाना स्तरुण्यो युवतयः वयसि प्रथमे इति ङीप् एनं हरिं परिवव्रुः अत्र हरिनखानां नरहरिनखभेदेप्यभेदोक्त्या स्तनयोस्तनादृक्काठिन्यासम्बन्धेपि सम्बन्धोक्त्या चातिशयोक्तिः स्तनयोः सापेक्षत्वात्सङ्करः ॥ १४ ***************************** ॥

॥ आकर्षेति ॥ अत्युन्नतत्वाज्जेनोऽर्ध्वमाकर्षतेव नमन्तं मध्यमुन्नमयतेव स्थितेनेत्युत्प्रेक्षा ।

अतिगुरुत्वमतिभारत्वं अतिप्रवृद्धं चभजतोनिमाक्षभजोाखिः तेनाङ्गनानां कुचमण्डलेनअ
तिकृशीयान् अत्यन्तकृशतरः तनीयान्क्षीणस्वरचटनोहृत्तारैर्लधेरिति रेफादेशः मध्योनि
तान्तनाक्रान्तःपीडितइवननाम नतःप्रणत च अत्रमध्यकुचमण्डलयोर्विशेषणसाम्याद रि
विजिगीषुराजप्रतीतेःसमासोक्तिः ॥ १५ ॥ ****************** ॥
॥ यांयामिति ॥ प्रियाहरिर्यायामङ्गनांनित्यवीप्सयोरितिवीप्सायांद्विर्भावः । एकपदं चैन
नंप्रेक्षतालोकयन्तासापूर्ववत्द्विर्भावःकातरा क्षीसाध्वसाचकितलोचनासतीह्रियानम्र
मुखीबभूव अनेनकार्यद्वारालज्जासाध्वसभावोदयउक्तः अन्यासामीर्ष्याभावोदयउक्तःअ

आकर्षतेवोर्द्ध्वमतिक्रशीयानत्युन्नतत्वात्कुचमण्डलेन । ननामम
ध्योतिगुरुत्वभाजानितान्तमाक्रान्तइवाङ्गनानाम् ॥ १५ ॥ यां
यांप्रियःप्रैक्षतकातराक्षीसासाह्रियानम्रमुखीबभूव । निःशङ्कमन्याः
सममाहितेर्ष्यास्तत्रान्तरेजघ्नुरमुंकटाक्षैः ॥ १६ ॥ नस्यानसीस्रून
समानभासोभ्राम्यन्मयूखावलिमण्डलेन । चक्रेणरेजेयमुनाजलौघ
स्फुरन्महावर्त्तइवैकबाहुः ॥ १७ ॥ *********

न्याःअनीक्षिताङ्गनाःआहितेर्ष्याःजाताक्षमाःसत्यःपरोत्कर्षाक्षमेर्ष्यास्यादितिलक्षणात्त
त्रान्तरेतस्मिन्ननीक्षणावसरे । अवीवेतुमध्येवाकाशेनादर्थेऽवसरेवधावितिवैजयन्ती ।
निःशंकंनदनीक्षणादेवविस्रब्धंसमंयुगपत्कटाक्षैरमुंहरिं । जघ्नुःप्रजघ्नुःसरोषमद्राक्षुः
॥ १६ ॥ ****************************** ॥
॥ अथास्यपञ्चभिर्दिव्यास्त्रसन्निधानमाह ॥ तस्येत्यादि । अतसीस्रूनेनक्षौमकुसुमेन
समानभासःतुल्यकान्तेःस्निग्धश्यामस्येत्यर्थः । अतसीस्यादुमाक्षुमेत्यमरः । तस्यहरेरेक
बाहुःभ्राम्यदावर्त्तमानंमयूखावलीनांमण्डलंचक्रवालंयस्यतनचक्रेणसुदर्शनेनस्फुरन्म

हानावर्त्तोभ्रमोयस्यसः। स्यादावर्त्तोम्भसांभ्रमइत्यमरः। यमुनाजलानामोघःपूरइवरे जेचकान्दधाविव्यर्थः॥ १७॥ **************************॥

॥ विरोधिनामिति ॥ विरोधिनांवैरिणांविग्रहभेदेशरीरविदारणेदक्षा। शरीरंवर्ष्मविग्रहइत्यमरः। क्वचित्क्वापिअस्खलन्तीसर्वत्राप्रतिहतवृत्तिरित्यर्थः। नित्यंसन्निहिताऽनपायिनीअतएवमूर्त्तामूर्त्तिमतीशक्तिःसामर्थ्यमिवस्थितेत्युत्प्रेक्षा। कौमोदकीगदातस्यहरेश्चेतोनितःकाममोदयतिस्मस्वसन्निधानेनेतिभावः॥ १८॥ ********॥

॥ नकेवलमिति। अन्यस्यसाधारणोनभवतीत्यनन्यसाधारणःतस्यैवासाधारणःतस्यभावस्तत्तानान्दधानः। तथापियोनन्दकःस्वतयाकेवलङ्गजाश्वादिवत्स्वत्वेनैवमुरारेर्नन्द

विरोधिनांविग्रहभेददक्षामूर्त्तेवशक्तिःक्वचिदस्खलन्ती। नित्यंहरेःसन्निहितानिकामंकौमोदकीमोदयतिस्मचेतः॥ १८॥ नकेवलंयःस्वतयामुरारेरनन्यसाधारणतान्दधानः। अन्यर्थमुद्देजयितापरेषांनाम्नापितस्यैवसनन्दकोऽभूत्॥ १९॥ ******

कोनकिन्तुपरेषांशत्रूणांअन्यन्तमुद्वेजयिताभीषयितासन्अतएवनाम्नापिचन्द्रादिवन्नन्दयतीतिनन्दकइत्यन्वर्थसंज्ञावलेनापिनन्दयितृत्वेनापिइतियावत्। तस्यैवनदीयएवयोऽनन्यसाधारणत्वात्तस्यैवस्वपरोद्वेजकत्वात्तस्यैवनन्दकोनन्दयिताचेत्यर्थः। सनन्दकोनन्दकाख्यःखड्गोऽभूत्सन्निहितोभूदित्यर्थः। सम्बन्धानुवादेनसन्निधानमेवात्रविधेयंप्रकरणात् अत्रानन्यसाधारणत्वपरोद्वेजकत्वपदार्थाभ्यांविशेषणगत्यानन्दकस्यतदीयतासमर्थनात्पदार्थहेतुकंकाव्यलिङ्गमलङ्कारः॥ १९॥ ***************॥

॥ ततोनमिति ॥ अन्येनपुरुषान्तरेणानतिमाकर्षणंभेदेनस्वानुकूल्यंचनतोतंनप्रापितंकिमाडम्बरकर्मसुहिताहितकृत्येषुचकर्णान्तिकंकर्णान्तिकचरंप्राप्तोगुणोमौर्वीआप्तताधर्मश्च य

स्यात्तद्विधेयं क्रियासु वशंगतं दृढीयः दृढतरं पीडासहतरमिति यावत् मृङ्गस्य विकारः शा
र्ङ्गं नाम धनुः मित्रमिवास्य हरेरन्तिकस्थं सन्निहितमभवत् ॥ २० ॥ ********* ॥

॥ प्रवृद्धेति ॥ धियं राती निर्धीरो मनोहरः मन्द्रो गम्भीरो म्बुदस्येव धीरस्वनादः प्रवृद्धो येन
सः प्रवृद्धमन्द्राम्बुदधीरनाद इत्युपमा अक्षम एवार्णवस्तस्याभ्यर्णं चरोऽन्तिकचरः । उ
पकण्ठान्तिकाभ्यर्णं इत्यमरः । स चासावेकहंसश्चेति श्लिष्टपरम्परितरूपकं । मन्दानिल
स्यापूर आपूरणं तेन कृतं जनितं निध्वानं ध्वानः अध्मातोऽपि मन्दमारुतप्रवेशादेव ध्वन
तीति पाठवादातिशयोक्तिः । ध्वन्यसम्बन्धेपि सम्बन्धकथनात्पाञ्चजन्योऽपि सन्निहितोऽभू

ननौ तमन्येन न निद्रुद्दाचित्कर्णान्तिकप्राप्तगुणक्रियासु । विधेयम
स्याभवदन्तिकस्थं शार्ङ्गं धनुर्मित्रमिव दृढीयः ॥ २० ॥ प्रवृद्धम
न्द्राम्बुदधीरनादस्तस्यार्णवाभ्यर्णचरैकहंसः । मन्दानिलापूरकृतान्त
ध्वानो निध्वानमश्रूयत पाञ्चजन्यः ॥ २१ ॥ रणजसम्पादकमिष्ट
सिद्धेः सर्वासु दिक्ष्वप्रतिषिद्धमार्गम् । महारथः पुण्यरथं रथाङ्गी
क्षिप्रं क्षपानाथइवाधिरूढः ॥ २२ ॥ *********

दित्यर्थः । वीणाः श्रूयते पुष्पाण्याघ्रायन्ते इत्यादिवद्धर्मधर्मिणोरभेदोपचारात्पाञ्चजन्य
स्य श्रवणोक्तिः ॥ २१ ॥ ************************* ॥

॥ रणजेति ॥ महान् रथो यस्य स महारथो रथिकविशेषः । आत्मानं रथिकं चाश्वान् रक्षन्यु
द्धे तु योनरः । स महारथसंज्ञः स्यादित्याहुर्नीतिकोविदा इति । रथांगं चक्रमस्यास्तीति रथा
ङ्गी हरिः इष्टसिद्धेः संपादकं लक्षणवत्त्वात्पुण्यः सर्वार्थसाधकः इति शास्त्राच्चेति भावः । स
र्वासु दिक्षु अप्रतिषिद्धमार्गं अनिषिद्धमार्गमित्यर्थः । अधिष्ठातृशक्तेर्निरंकुशत्वात् । पुण्यो
हस्तो मे यमप्याश्विनद्वयं चत्वारो ऽङ्कुः सर्वदिग्द्वारकाणीति शास्त्रादिति भावः । क्षिप्रं क्षि

प्रगामिनं अन्यत्रोक्षिप्रं क्षिप्रकारिणं क्षिप्रं चाश्विदिनत्त्वपुष्यमितिशास्त्रात्पुष्यरथं क्रीडार
थं । असौपुष्यरथः क्रीडायानं नसमराययदित्यमरः । अधिरूढः सन्पुष्योरथइवतंपुष्य
रथमधिरूढः नक्षत्रगतः क्षपानाथश्चन्द्र इवरराज ॥ २२ ॥ ************* ॥

॥ ध्वजेति ॥ अथरथारोहणानन्तरं शौरिः कृष्णः ध्वजाग्रंधामस्थानंयस्यमणिमेदिनीषु
कुट्टिमेषुसंक्रान्तमूर्त्तिः प्रतिबिम्बिताङ्गः सन्पन्नगारिर्गरुत्मान्फणावतः सर्पान्त्रासयितुं र
सायास्तलं पातालं विविक्षन्वेष्टुं प्रवेष्टुमिच्छन्निवेत्युत्प्रेक्षा विशतेः सन्नन्ताल्लटः शत्रादेशः द
दृशेदृष्टः सोपिसन्निहितोभूदित्यर्थः ॥ २३ ॥ ****************** ॥

॥ यियासतइति ॥ यातुमिच्छतो यियासतः यातेः सन्नन्ताल्लटः शत्रादेशः तस्यहरेः सम्ब

ध्वजाग्रधामा ददृशेऽथशौरिस्संक्रान्तमूर्त्तिर्मणिमेदिनीषु । फणा
वतस्त्रासयितुं रसायास्तलं विविक्षन्निवपन्नगारिः ॥ २३ ॥ यिया
सतस्तस्यमहीध्ररन्ध्रभिदापटीयान्पटहप्रणादः । जलान्तराणीवम
हार्णवौघः शब्दान्तराण्यन्तरयाञ्चकार ॥ २४ ॥ *****

न्धीमहीं धरन्तीतिमहीध्राः पर्वताः मूलविभुजादित्वात्कइतिवामनः । महीध्रादयोमूलवि
भुजादिदर्शनादितितेषां रंध्राणिबिलानितेषां भिदाभेदनं विभिद्दादिभ्योऽङ्तस्यांपटी
यान्समर्थतरः पटहप्रणादोतिकाणघोषः महार्णवस्यौघः प्रवाहः अन्यानिजलानिजलान्त
राणीवसुप्सुपेतिसमासः । अन्यान्शब्दान्शब्दान्तराणिपूर्ववत्समासः । अन्तरयाञ्चकार
अन्तर्हितानिचकारच्छादयामासेत्यर्थः । अन्तरशब्दादन्तर्द्धानार्थात्करोतीतिण्यन्ता
ल्लट् । अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्येइत्युभयत्राप्यमरः ॥ २४ ॥ * ॥

॥ यतइति ॥ जगतांभर्त्ताधारयिताकुक्षिस्थाखिललोकः कर्तृकर्मणोः कृतीतिकर्मणिष
ष्ठीसहरिर्यतोयेनभूमार्गेणजगामततस्मिन्भूभागेअधः अधःपातालेधरिच्याः धरित्र्याः

धर्त्तोधरयितापूर्वंवत्घर्त्ताफणिनाशेषेणमहताभरेणआक्रान्तागुरुस्तस्यतुगोभूतस्यशिरःसु
बहुसहस्रसहायकस्यबाहुकर्मणियोपथाङ्गुरुत्वेचमाद्भुतत्वयाःनरमाणःभुजमहिमान्त
र्च्यवतयाप्रसक्तेप्रसक्तम्भावेत्रिदशरिस्याचाप्यर्थः। अत्रशेषधर्तृत्वाभिशिष्टप्रस्तरणासम्बन्धे
पिसम्बन्धोक्तेरतिशयोक्तिः ॥ २५ ॥ ********************** ॥

॥ अथेइति ॥ अथतानन्तरं उच्चकैरत्युच्चैस्तोरणेषुवहिर्द्वारेषुसङ्गेनभङ्गस्तस्मात्भयेनाव
नम्रीकृतानिकेतनानियैस्तानिसैन्यानिसोमस्यान्वयः सन्तानः तंसोमान्वयंहरिं सुनेति
भाजंसुसुनीतिमतां क्रियासामाद्युपायप्रयाग्यास्तांसंफलानि हिरण्यभूमिधान्यादिलाभः

यतःसभर्त्ताजगतांजगाम धर्त्ताधरित्र्याःफणिनातनोऽधः। महाभर
भुग्नशिरस्सहस्रसाहाय्यकव्यग्रभुजंप्रसक्ते ॥ २५ ॥ अथोच्चकैस्तो
रणसङ्गभङ्गभयावनम्रीकृतकेतनानि। क्रियाफलानीववसूनीतिभाजं
सैन्यानिसोमान्वयमन्वयुस्तम् ॥ २६ ॥ श्यामारुणैर्वारणदानतो
यैरालोडिताःकाञ्चनभूपरागाः। आनेमिमग्नैःशितिकण्ठपक्षक्षोद
द्युतश्चक्षुदिरेरथौघैः ॥ २७ ॥ ***********

इवान्वयुःअन्वगच्छन्।यातेर्लङ्लङःशाकटायनस्यैवेतिसेर्जुस् ॥ २६ ॥ ***** ॥

॥ श्यामेति ॥ श्यामानिचारुणानिचतैः श्यामारुणैः कृष्णलोहितैःवर्णैःवर्णैरितिसमा
सःवारणदानतोयैर्गजमदोदकैरालोडिताःसंमेलिताअतएवशितिकण्ठपिच्छक्षोदाःमयू
रवर्हचूर्णाइवद्योतन्तइतितयोक्ताःक्लिप्तउपमालङ्कारः। काञ्चनस्यभूःकाञ्चनभूस्तस्याःपरा
गाःपांसवःअनेमिभ्यःअनेमिप्रधिसहितं। चक्रधाराप्रधिर्नेमिरित्यमरः। आङ्मर्यादाभि
विध्योरित्यभिविधावव्ययीभावःमग्नैरथौघैःचक्षुदिरेपिष्टाइत्यर्थः। परागाणांविशिष्टपे
षणासम्बन्धेपिसम्बन्धोक्तेरतिशयोक्तिः ॥ तथाचमहतीगजरथसम्पत्तिर्व्यज्यतइत्यलं

ङ्कारेणवस्तुध्वनिः ॥ २७ ॥ ****************************** ॥

॥ नेति ॥ अष्टसुलोहितेषुपदंप्रतिष्ठाऽस्येतिअष्टापदंसुवर्णम्। रुक्मंकार्तस्वरंजाम्बून
दमष्टापदोऽस्त्रियामितिसुवर्णपर्यायेष्वमरः तस्यभूमिस्तस्याः रेणुःकाञ्चनभूरजःपदाहतो
ऽश्वादिचरणताडितोपिसन्नित्यर्थःमहाजनानांबहुजनानांपूज्यानांशिरांसिनलङ्घया
मासनाक्रमत्किंबहुना उद्धतिमुत्पतनंदर्पंचनैवाजगामकुतः यद्यस्माद्गरिम्णोगुरु
त्वंगुणस्यमहात्म्यस्यचप्रियस्थिरेत्यादिनागुरोर्गरादेशःसदृशमनुरूपंयथातथाअचेष्टत
व्यवहारात्गुरुत्वस्योद्धत्यप्रतिबन्धकत्वादितिभावः। अत्रानौद्धत्यादिप्रस्तुतवस्तुवर्णपर
शविशेषणसाम्यादप्रस्तुतसुजनप्रतीतेःसमासोक्तिरलङ्कारः ॥ २८ ॥ ****** ॥

अलंघयामासमहाजनानांशिरांसिनैवोद्धतिमाजगाम। अचेष्टता
ष्टापदभूमिरेणुःपदाहतोयत्सदृशंगरिम्णः ॥ २८ ॥ निरुध्यमा
नायदुभिःकथञ्चिन्मुहुर्यदुच्चिक्षिपुरग्रपादौ। ध्रुवंगुरून्मार्गरु
धःकरीन्द्रानुल्लंघ्यगन्तुंतुरगास्तदीषुः ॥ २९ ॥ ****

॥ निरुध्येति ॥ तुरगाः यदुभिरारूढैरितिभावः कथञ्चित्निप्रयत्नेननिरुध्यमानाअवो
कर्षणेनवार्यमाणाअपियद्यस्मादग्राणिचतेपादाश्चतानग्रपादान्पादाग्रदर्शनादयंगु
णगुणिनोरभेदभेदयोगादितिवामनसूत्रात्सामानाधिकरण्यसमासःमुहुरुच्चिक्षिपुरुत्क्षि
पन्तःतत्तस्मान्मार्गरुंधन्तीतिमार्गरुधःमन्दगमनेनमार्गरोधिनःकिंतुगुरून्महतःपूज्यां
श्चालंघ्यानपीतिभावः। करीन्द्रानुल्लंघ्यगन्तुमीषुरिच्छन्तिस्मध्रुवमुत्प्रेक्षायांगुरवोपिस
न्मार्गरोधकाःपरैरुल्लंघ्यन्तइतिअलङ्कारेणवस्तुध्वनिः ॥ २९ ॥ ******** ॥

॥ अपेक्षितानिति ॥ आयताआकृष्टावल्गामुखरज्जुर्येषांकर्मणिनिष्ठयातथाप्रयत्नेनदु
र्वारवेगत्वात्अतिप्रयत्नेननिरुद्धावाहावाजिनोयैस्तैः। वाजिवाहार्वगन्धर्वहयसैन्धवसप्त

अइत्यमरः । तुरङ्गिभिरश्ववारैर्दिभिरग्रेपुरोदेशेऽपेक्षितानालोकितानरेणुभिः प्रक्रीड
न्तीतिप्रक्रीडितान्पांसुक्रीडाकरान्कर्त्तरिक्तः पृथुकान्शिशून् । पोतः पाकोऽर्भकोडिम्भः
पृथुकः शावकः शिशुरित्यमरः । जनन्यस्तूर्णमभ्येत्यपथिभ्यो निन्युः अपसारयाञ्चक्रुरि
तिस्वभावोक्तिः ॥ २० ॥ ****************************** ॥

॥ दिदृक्षमाणइति ॥ अनघमकलङ्कंमुरारिंदिदृक्षमाणाः द्रष्टुमिच्छन्तः दृशेः सन्नन्ताच्च
इः ज्ञानजादेशञ्ज्ञाश्रुस्मृदृशां सनइत्यात्मनेपदं जनौघारथ्यायां रथ्यायांप्रतिप्रतिरथ्यंय
थार्थेऽव्ययीभावः । आरात्समीपं । आरादुपसमीपयोरित्यमरः । ईयुराजग्मुः इणोलिड्दी
र्घईणः कितीत्यभ्यासदीर्घः ननुनित्यपरिचितेकादिदृक्षेत्यत्राह । अनेकशइतिबहुवा

अपेक्षितानायतवल्गामग्रेतुरङ्गिभिर्य्यत्रनिरुद्धवाहैः । प्रक्रीडि
तानेणुभिरेत्यतूर्णनिन्युर्ज्जनन्यः पृथुकान्पथिभ्यः ॥ ३० ॥ दि
दृक्षमाणाः प्रतिरथ्यमीयुर्म्मुरारिमाराद्नघंजनौघाः । अनेकशस्सं
स्तुतमप्यनल्पानवन्नवंप्रीतिरहोकरोति ॥ ३१ ॥ *****

रमित्यर्थः बह्वल्पार्थाच्छस्कारकादन्यतरस्यामितिशस्प्रत्ययः संस्तुतंपरिचितमपिवस्तुज
नंवाइतिशेषः । संस्तवस्यात्परिचयइत्यमरः । अनल्पाअधिकाप्रीतिः प्रेमकर्त्रीनवंनवं ।
आभीक्ष्ण्येननवंकरोतिनित्यवीप्सयोरितिनित्यार्थेद्विर्भावः अहोशब्दः पुराणस्यापिनूतनत्व
मित्याश्चर्य्यपरप्रेमास्पदंवस्तुनित्यदृष्टमपिअदृष्टचरमिवप्रतिक्षणंदिदृक्ष्यतेइत्यर्थः ।
भगवानपितथैवेतिसामान्येनविशेषणसमर्थनरूपोर्थान्तरन्यासः ॥ ३१ ॥ **** ॥
उपेयुषइति ॥ विद्वान्विदः ॥ अतएवतस्यांपुरिनगर्य्यांदत्तचक्षुः निसृष्टदृष्टिरसौह
रिर्निरन्तराभिनीरंध्राभिरनीकिनीभिः सेनाभिर्निरुच्छ्वासंअतिसंकटंवर्त्मउपेयुषः प्राप्त
स्यरथस्यशनैर्यानंसम्बन्धेनमन्दगमनंनविदामासनविवेद । उषविदजागृभ्योऽन्यतर

ध्यामिति आप्प्रत्ययः व्यासङ्गाद संभेदनं नत्वज्ञानादिति भावः व्यासङ्गस्य पदार्थत्वात् पदा
र्थहेतुकं काव्यलिङ्गं ॥ ३२ ॥ ************************ ॥

॥ अथैकत्रिंशतिश्लोकैर्द्वारिकां वर्णयति ॥ मध्य इति । मध्येसमुद्रस्य मध्येसमुद्रं पारेम
ध्ये षष्ठ्या चेति विकल्पादव्ययीभावः मध्यशब्दस्यानन्तसंनियोगादेकारान्तत्वं काञ्चनवप्रभासा
हैमप्राकारप्रभया ककुभो दिशः पिशङ्गीः पिशङ्गवर्णाः गौरादित्वात् ङीष् कुर्वती या पूः जलं स
मुद्रोदकं भित्त्वा उत्थितेति शेषः । तुरङ्गकान्तायाः वडवाया मुखे हव्यं वहतीति हव्यवाहोऽग्निः
कर्मण्यण् प्रत्ययः तस्य वाडवाग्नेः ज्वालेव उज्ज्वलास उद्बभासे अत्र समुद्रान्तर्लीनायां वडवानल
ज्वालायां कदाचित्संभाव्यमानस्य मध्योज्ज्वलनस्य पुरि दर्शनाभेदाध्यवसायेनास्याज्वाला

उपेयुषो वर्त्मनिरन्तराभिरसौ निरुच्छ्वासमनीकिनीभिः । रथस्य
तस्याम्पुरि दत्तचक्षुर्विद्वान् विदामास शनैर्न यातम् ॥ ३२ ॥ मध्ये
समुद्रं ककुभः पिशङ्गीर्या कुर्वती काञ्चनवप्रभासा । तुरङ्गकान्तामुखह
व्यवाहज्वालेव भित्त्वा जलमुल्ललास ॥ ३३ ॥ ******

त्वमुत्प्रेक्षणे इव शब्दोऽयमुत्प्रेक्षाव्यंजक इति नोपमायां इह ज्वालाया अप्रसिद्धत्वेनोपमान
त्वायोगात् । मन्ये शङ्के ध्रुवं नूनं प्राय इत्येवमादिभिः । उपमा व्यज्यते शब्दैरिवशब्दोऽपि तादृ
गित्याचार्यदण्डी ॥ ३३ ॥ ************************ ॥

॥ कृतास्पदेति ॥ भूमिभृतां राज्ञां गिरीणां च सहस्रैः कृतास्पदा कृताधिष्ठाना । आस्पदं प्र
तिष्ठायामिति निपातः । उदकमस्यास्तीत्युदन्वान् उदधिः । उदन्वानुदधौ चेति निपात
नात्साधुः । तस्याम्भसा परिवीता परिवेष्टिता मूर्त्तिः स्वरूपं यस्याः सा पृथ्वी पृथ्वः वोतो गुणव
चनादिति ङीप् एवम्भूतया पूः न निर्विद्यते न खिद्यते इत्यनिर्वित् विदेः सत्तार्थात् निपूर्वात् सत्सू
द्विषेत्यादिना क्विप् तेन अनिर्विदा अखिन्नेन अन्यथा शिल्पसौष्ठवासिद्धेरिति भावः विधात्रा

o

यत इति पृथ्वी भूः प्रथेः षिद्वचनात् औणादिकः षिद्गौरादिभ्यश्चेति ङीष् तस्याः प्रतियातना प्रतिकृतिरिव विदधे विहिता । प्रतियातना प्रतिच्छाया प्रतिकृतिरित्यमरः । भूः प्रतिनिधिर्नोत्प्रेक्षया पुरोर्वैचित्र्यविस्तारादि वस्तु व्यज्यते ॥ ३४ ॥ ************ ॥

॥ त्वष्टुरिति ॥ त्वष्टुर्विश्वकर्मणः सदाभ्यासेन गृहीतो लब्धो यः शिल्पविज्ञाय एव सम्पदः प्रसरः प्रकर्षः तस्य सीमा अवधिः प्रतिमेति यावत् या पूरा दर्शनलामलेषु दर्पणपृष्ठस्वच्छेषु । दर्पणे मुकुरादर्शावित्यमरः । जलधेर्जलेषु स्वः स्वर्गस्य । स्वरव्ययं स्वर्गनाकइत्यमरः । छाया प्रतिबिम्बितमिवादृश्यतेइत्युत्प्रेक्षा । छायात्वनानपेकान्तौ प्रतिबिम्बार्कयोरिति वै

छत्रास्पदाभूमिभृतां सहस्रैरुदन्वदम्भः परिवीतमूर्त्तिः । अनिर्विदा याविदधे विधात्रा पृथ्वी पृथिव्याः प्रतियातनेव ॥ ३४ ॥ त्वष्टुः सदाभ्यासगृहीतशिल्पविज्ञानसम्पत्प्रसरस्य सीमा । अदृश्यतादर्शनलामलेषु छायेव या स्वर्जलधेर्जलेषु ॥ ३५ ॥ रथाङ्गभर्त्रेऽभिनवं वराय यस्याः पितेव प्रतिपादितायाः । प्रेम्णोपकण्ठं मुहुरङ्कभाजो रत्नावलीरम्बुधिराबबन्ध ॥ ३६ ॥ ***********

जयन्ती ॥ ३५ ॥ ***************************** ॥

॥ रथाङ्गेति ॥ अंबुधिः पितेव वराय श्रेष्ठाय जामात्रे । वरो जामातरि श्रेष्ठ इति विश्वः । रथाङ्गभर्त्रे चक्रधराय हरये अभिनवं यथा तथा प्रतिपादितायाः अङ्कः समीप उत्सङ्गश्च तद्भाजः । अङ्कः समीप उत्सङ्गे चिह्नेस्थानापराधयोरिति केशवः । यस्याः पुर उपकण्ठम् अन्तिके अत्यन्तसंयोगे द्वितीया । अन्यत्र उपकण्ठं विभक्त्यर्थेऽव्ययीभावः मुहुः प्रेम्णा रत्नावलीराबबन्ध मुमोच । स्नेहानुप्राणितेयमुपमेति सङ्करः ॥ ३६ ॥ ************

॥ यत्रेति ॥ चलन्तीनां वारिधिवारिवीचीनां छटासु परम्परासु उच्छलद्भिः उत्पन्न

द्रिः शङ्कानाङ्कुलैराकुलेनसङ्कीर्णेनयस्याःपुरोवप्रेणप्राकारेणपर्यन्तचरोडुचक्रःसमीपव र्त्तिनक्षत्रमण्डलंयस्यसःसुमेरोर्वप्रःसानुः। सानुप्राकारयोर्वप्रमित्युभयत्रापिसज्जनः। अ न्वहनीत्यन्वहंअव्ययंविभक्तीत्यादिनायथार्थेऽव्ययीभावः। अनश्चनपुंसकादन्यतर स्यामितिसमासान्तः अनुकारि अनुकृतःतत्सामीप्यंप्रापितइत्यर्थः। मेरूपमानाद्वप्रस्य तनुल्यमौपम्यंव्यज्यते ॥ २७ ॥ ************************ ॥

॥ वणिक्पथइति ॥ यत्रयस्यांपुरिवणिजांपथिवणिक्पथेआपणेअपूगाःपूगास्सम्पद्य मानानिकृतानिपूगकृतानिपुंजीकृतानिश्रेण्यादयःकृतादिभिरितिसमासः श्रेण्यादिषुच्यर्थ

यस्यास्खलद्वारिधिवारिवीचिच्छटोच्छलच्छङ्खकुलाकुलेन। वप्रेण पर्यन्तचरोडुचक्रःसुमेरुवप्रोऽन्वहमन्वकारि ॥ २७ ॥ वणि क्पथेपूगकृतानियत्रभ्रमागतैरम्बुभिरम्बुराशिः। लोलैरलोलद्यु ति भाञ्जिमुक्तत्वत्तानिरत्नाकरतामवाप ॥ २८ ॥ अभ्रंलिहःकोमल रत्नरश्मीनपांनिधिःफेनपिनद्धभासः। यत्रातपेदातुमिवोपतल्पं विस्तारयामासतरङ्गहस्तैः ॥ २९ ॥ ********

वचनमितिच्व्यर्थता। अलोलद्युतिभाञ्जिस्थिरप्रभावन्तिरत्नानिलोलैश्चलैःअतएवभ्रमाग तैःजलनिर्गममार्गागतैः। भ्रमास्तुजलनिर्गमाइत्यमरः। अम्बुभिर्मुक्तन्अम्बुराशिरर्णवः जलमात्रसारोपीतिभावःरत्नाकरतामवापतत्प्रापितिभावः। अम्बुराशेःप्राकृरत्नसम्ब न्धेअसम्बन्धोक्तेरतिशयोक्तिः तथाचपुर्याः समुद्रातिशयनीरत्नसमृद्धिवस्तुव्यज्यते ॥ २८ ॥ ************************************ ॥

॥ अभ्रइति ॥ यत्रपुरिअपांनिधिःसमुद्रःअभ्रंल्लिहोअभ्रंलिक्षरन्तीत्यभ्रंलिहोजलस्रावि णःअतएवकेनैःपिनद्धभासःपिहितकान्तीन्। अपिपूर्वान्नह्यतेःकर्मणिक्तःवष्टिभागुरिर

ञ्जोपमवाचोरूपसर्गयोरित्यपेरकारलोपः कोमलानुत्कृष्टानूत्तानशीलानपेदातुंशोषणं येनिश्चातुमिवइतिफलोत्प्रेक्षानल्पेष्वहेषुअधिनल्पं। नल्पंशय्याट्टदारेष्वित्यमरः। विभक्त्यर्थेऽव्ययीभावः। तरङ्गैरेवहस्तैर्विस्तारयामासप्रसारितवान्अत्रानपेदानस्यतरङ्गहस्तसाध्यत्वेनोत्प्रेक्षारूपकयोःसङ्करः॥ ३९ ॥ *************** ॥

॥ यच्छालमिति ॥ सागरस्यमहोर्मिभिःकर्तृभिर्यच्छालाभंयस्याःप्राकारं। प्रकारोवरणःशालइत्यमरः। उत्तुङ्गतयाऔन्नत्यगुणेनजेतुमिवेत्यर्थः। फलोत्प्रेक्षेयंत्यच्चकप्रयोगाद्रम्याःदूरादुदस्थीयतइतिउत्थितम्भावेलङ्अभ्यासगतैःसमीपगतैः। समीपनिकटाभ्याससन्निकृष्टसनीडवदित्यमरः। व्याहतेवाञ्छितार्थः। शालविजयरूपोर्थेषूर्मिर्विजया

यच्छालमुत्तुङ्गतयाविजेतुंदूरादुदस्थीयतसागरस्य। महोर्मिभिर्व्याहतवाञ्छितार्थैर्व्रीडादिवाभ्यासगतैर्विलिल्ये॥ ४० ॥ कुतूहलेनेवजवादुपेत्यप्राकारभित्त्यासहसानिषिद्धः। रसन्नरोदीद्भृशमम्बुवर्षव्याजेनयस्यावहिरम्बुवाहः॥ ४१ ॥ ***********

क्षमैरित्यर्थः। अतएवव्रीडादिवेतिहेतूत्प्रेक्षाविलिल्येविलीनंलीयतेर्भावेलिट्। अत्रशत्रुस्यापिअविजिगीषोर्व्रीडानुदयत्वात्तापक्षत्वेनोत्प्रेक्षयोःसङ्करः॥ ४० ॥ *** ॥

॥ कुतूहलेनेति ॥ अम्बुवहतीत्यम्बुवाहोमेघःकर्मण्यण्कुतूहलेनान्तःप्रवेशकौतुकेनेवेतिहेतूत्प्रेक्षाजवात्उपेत्ययस्याःप्राकारभित्त्यासहसानिषिद्धोनिवारितःअतएवबहिरेवरसन्गर्जनदुःखाक्रन्दंर्वोतिलेषःअम्बुवर्षव्याजेनभृशमरोदीत्अश्रूणिमुक्तवान्रुदिरश्रुविमोचनेलङ्रुदस्यपञ्चभ्यइतीडागमः। अत्राम्बुवर्षव्याजेनोत्पादकस्योक्तश्लेषोत्प्रेक्षासापेक्षत्वात्सङ्करः॥ ४१ ॥ ************************* ॥

॥ यदङ्गनेति ॥ यस्यांपुर्यांअङ्गनानांरूपंसौन्दर्यमाकारोवा। रूपंस्वभावेसौन्दर्येना

कारश्लेषयोरपीति विश्वः । नरस्य सरूपताया स्तारूप्याद्भेदकं व्यावर्तकं कञ्चिद्गुणं धर्ममिच्छ तीभिरपेक्षमाणाभिः आच्छीनद्योर्नुमिति विकल्पान्नुमभावः । अप्सरोभिराराधितः प्रार्थितो मनुर्मानुषसृष्टिकर्ता स्वाः स्वकीयाः प्रजा निमेषः पक्ष्मपात एव चिह्नं व्यावर्तकं तेन सह वर्तन्त इति सनिमेषचिह्नाः तेन सहेति तुल्ययोग इति बहुव्रीहिः चक्रे अद्धा तत्त्वमित्युत्प्रेक्षा । तत्त्वे त्वद्धाञ्जसा द्वयोरित्यमरः । अत्र स्वाभाविकनिमेषस्याप्सरःप्रार्थनाहेतुकत्वोत्प्रेक्षया द्वारकाङ्गनानामनिमेषमानुषभिन्नममानुषसौन्दर्यं वस्तु व्यज्यते ॥ ४२ ॥ ********* ॥

॥ स्फुरदिति ॥ यत्र पुरि क्षणदासु रात्रिषु नार्यः स्फुरद्भिः तुषारांशोश्चन्द्रस्य मरीचिजालैः चन्द्रिकाभिः विनिह्नुताः अपह्नुताः तदेकरूपतापत्तेरगृह्यमाणा इत्यर्थः । अत एव स्फा

यदङ्गनारूपसरूपतायाः कञ्चिद्गुणं भेदकमिच्छतीभिः । आराधितोऽद्धा मनुरप्सरोभिश्चक्रे प्रजाः स्वाः सनिमेषचिह्नाः ॥ ४२ ॥ स्फुरत्तुषारांशुमरीचिजालैर्विनिह्नुताः स्फाटिकसौधपङ्क्तयः । आरुह्य नार्यः क्षणदासु यत्र नभोगता देव्य इव व्यराजन् ॥ ४३ ॥ ❋

भाव्यालङ्कारः । सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता इति लक्षणात् । स्फाटिकानां स्फटिकविकाराणां सौधानां पंक्तिः आरुह्य नभोगता देव्यो देवाङ्गना इव । देवशब्दस्य पचादिषु देवडिति पाठात् टिड्ढाणञित्यादिना ङीप् । व्यराजन् सौधनामग्रहणात् अभ्रंकषत्वाच्च नभस्थमानाः स्त्रियः खेचर्य इव रेजुरित्यर्थः । अत्र नभोगतत्वोत्प्रेक्षायाः पूर्वोक्तसामान्यसापेक्षत्वात् सङ्करः ॥ ४३ ॥ ************************** ॥

॥ कान्तेति ॥ अन्तः पुरि क्षपासु रात्रिषु प्रतिक्षपं विभक्त्यर्थेऽव्ययीभावः कान्तानि रम्याणि इन्दुकान्तोपलानां चन्द्रकान्तमणीनां कुट्टिमानि बद्धभूमयो येषु तेषु । कुट्टिमोऽस्त्री निबद्धा भूरित्यमरः । हर्म्यं न येषु उच्चैः उन्नताः प्रणाल्यो जलमार्गाः । द्वयोः प्रणाली पयसः पदव्यामित्य

मरः। अधःपातिनोऽधश्चरणपयोमुचोमेघाः यासान्ताः अधःकृतमेघमण्डलत्वात् अजातवृष्टिपाताअपीत्यर्थः। विरोधालङ्कारः। पयसांसमूहंपयःपूरमूहुर्वहन्तिस्मचन्द्रकान्तनिष्यन्दैरितिभावः वहेर्लिट् वचिस्वपीत्यादिनासम्प्रसारणं अत्रसौधानांप्रणालीनांचनाटृगौणमप्यपयःपूरसम्बन्धेपिसम्बन्धोक्त्यातिशयोक्तिः॥ ४४ ॥ ************** ॥

॥ रताविति ॥ यत्रपुरिगृहेषुअधिगृहंविभक्त्यर्थेऽव्ययीभावः गृहिण्यः कुलाङ्गनाः अतएवरतौरतिकालेह्रियादीपान्निशाम्यनिर्वाप्यशमेर्मित्वाद्ध्रस्वादेशभावश्चिन्त्यः। जालागताभ्योगवाक्षमार्गप्रविष्टाभ्यः। जालंगवाक्षआनायइतिविश्वः। विदूरात्प्रभवन्तीतिवैदूर्यारत्नाणिवालवायजमणयः। वैदूर्यंवालवायजमित्यमरः। विदूराञ्ञ्यइतिञ्यप्रत्ययः अत्रविदू

कान्तेन्दुकान्तोपलकुट्टिमेषुप्रतिक्षपंहर्म्यतलेषुयत्र। उच्चैरधःपातिपयोमुचोऽपिसमूहमूहुःपयसांप्रणाल्यः ॥ ४४ ॥ रतौह्रियायत्रनिशाम्यदीपान्जालागताभ्योऽधिगृहंगृहिण्यः। बिभ्युर्बिडालेक्षणभीषणाभ्योवैदूर्यकुड्येषुशशिद्युतिभ्यः ॥ ४५ ॥ *·*·*

रशब्दोवालवायस्यादेशः पर्यायोवातत्रोपचरितोवानेनवालवायाद्रिरेरसौ। प्रभवतिविदूरान्नगरान्तत्रसंस्क्रियतइत्याक्षेपःप्रत्युक्तः। तदुक्तं। वालवायोविदूरंचप्रकृत्यन्तरमेवच। नवैतत्रेतिचिद्रूपाज्जित्वरीवदुपाचरेदिति। तेषांकुड्येषुभित्तिषुसंक्रान्ताभ्यइतिशेषः अतएवतच्छायापत्त्यापैङ्गल्यात् विडालेक्षणवत्भीषयन्तइतिभीषणाभ्योभयंकराभ्यः नंद्यादित्वात्कर्त्तरिल्युप्रत्ययेटाप्। शशिद्युतिभ्योबिभ्युःभीताःमौग्ध्यादितिभावः लिङ्अत्रलज्जावारणायदीपनिर्वापनेनकेवलन्तदसिद्धेः प्रत्युतभयञ्चोत्पन्नमित्यनर्थोत्पत्तिरूपोविषमभेदः। विरुद्धकार्यस्योत्पत्तिर्यत्रानर्थस्यवाभवेत्। विरूपघटनायास्याद्विषमालङ्कृतिर्मतेतिलक्षणात्॥ ४५ ॥ ************************ ॥

॥ यस्यामिति ॥ यस्यां पुरि गृहेषु अतिश्लक्ष्णतया रत्नभित्तीनामतिस्निग्धतया आलेख्यं चित्रं विधातुं निर्मातुमशक्नुवन्तो युवानः प्रतिबिम्बिताङ्गाः स्वयमत्रासु संक्रान्तमूर्त्तयः रत्नभित्तीः सजीवचित्राः सचेतनचित्रवतीरिव चक्रुरित्युत्प्रेक्षा ॥ ४६ ॥ ********* ॥

॥ सावर्ण्येति ॥ यत्र पुरि कलधौतधामस्तम्भेषु हेमागारस्तम्भेषु । कलधौतं रूप्यहेम्नोरिति विश्वः । प्रतिमागतानां सावर्ण्यभाजां । तत्सावर्ण्यादगृहीतभेदानामित्यर्थः अतएव सामान्यालङ्कारः । सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकतेति लक्षणात् । अङ्गनानां स्मरापाण्डुतया लक्ष्यैर्विभिन्नवर्णत्वाद्भेदेन गृह्यमाणैरित्यर्थः कपोलैर्मणिदर्पणानां स्फटिकमुकुर

यस्यामतिश्लक्ष्णतया गृहेषु विधातुमालेख्यमशक्नुवन्तः । चक्रुर्युवानः प्रतिबिम्बिताङ्गाः सजीवचित्रा इव रत्नभित्तीः ॥ ४६ ॥ सावर्ण्यभाजां प्रतिमागतानां लक्ष्यैः स्मरापाण्डुतयाङ्गनानाम् । यस्यां कपोलैः कलधौतधामस्तम्भेषु भेजे मणिदर्पणश्रीः ॥ ४७ ॥ मुकाङ्गनीलोपलनिर्मितानां लिप्तेषु भासा गृहदेहलीनाम् । यस्यामलिन्देषु न चक्रुरेव मुग्धाङ्गना गोमयगोमुखानि ॥ ४८ ॥ *****

णां श्रीरिव श्रीर्भेजे प्राप्ता इति निदर्शना । सा चोक्तसामान्यप्रसादलब्धेति तेनानयोः सङ्करः ॥ ४७ ॥ * ॥ ***************************** ॥

॥ मुकाङ्गेति ॥ यस्यां पुरि मुग्धाङ्गनाः मुकाङ्गवन्नीलोपलाः नीलमणयो मकरतानीत्यर्थः । उपलः प्रस्तरे मणाविति विश्वः । तैर्निर्मितानां गृहाणां देहल्यो गृहद्वारशाखाधारदारूणि । गृहावग्रहणी देहलीत्यमरः । तासां भासा लिप्तेषु अलिन्देषु द्वारबहिर्भागेषु । प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठक इत्यमरः । गोः पुरीषं गोमयं गोश्च पुरीष इति मयट् । तस्य गोमुखानि विलेपनानि । गोमुखं कुटिलाकारे वाद्यभाण्डे विलेपने इति विश्वः । न चक्रु

रेव। मरकतप्रभायांविलेपनभ्रान्त्येतिभावः । अतएवभ्रान्तिमदलङ्कारः । कविसंमत सादृश्याद्वस्त्वन्तरमतिर्यत्र सभ्रान्तिमानितिसर्वस्वकारलक्षणात् ॥ ४८ ॥ **** ॥

॥ गोपानसीष्विति ॥ यत्रपुरिगृहाणिगोपानसीषुवलभीच्छादनाधारेषुवंशपञ्जरेष्वित्यर्थः अतएवगोपानसीतुवलभीच्छादनेवक्रदारुणीत्यत्रपटलाधारवंशपञ्जरेइत्याहस्वामी। क्षणमीषत्कालमत्यन्तसंयोगेद्वितीया। आस्थितानामासीनानांचन्द्रकाःमेचकाः। समौचन्द्रकमेचकावित्यमरः। तद्वतांचन्द्रिणांमयूराणां आलम्बिभिरवलम्बमानैःकलापैर्बर्हैः। कलापोभूषणेबर्हेइत्यमरः। हरिण्मयोमरकतानि। गारुत्मतंमरकतमश्मगर्भोहरिन्मणिरित्यमरः। तद्वत्श्यामैस्तृणैरभिरामाणिहरिततृणमयानीत्यर्थः। तैःनीध्रैःपटलप्रा

गोपानसीषुक्षणमास्थितानामालंबिभिश्चन्द्रकिणांकलापैः । हरिन्मणिश्यामतृणाभिरामैर्गृहाणिनीध्रैरिवयत्ररेजुः ॥ ४९ ॥

बृहत्तुलैरप्यतुलैर्वितानमालापिनद्धैरपिचावितानैः । रेजेविचित्रैरपियासचित्रैर्गृहैर्विशालैरपिभूरिशालैः ॥ ५० ॥ ******

न्तैरिवरेजुः। वलीकनीध्रेपटलप्रान्तेऽथपटलंछदिरित्यमरः। छादनपर्यायोपटलच्छदीकद्यन्तवाचिनोवलिकनीध्रेच्छदेराधारेवंशपञ्जरेगोपानसीतिविवेकः। अतएवहरितत्वंमादिगुणक्रियानिमित्तत्वान्नीध्रैरिवेतिजातिस्वरूपोत्प्रेक्षा ॥ ४९ ॥ * ॥

॥ बृहदिति ॥ यापूःबृहत्यस्तुलाउपरिस्थाप्यदार्वाधारभूतानिस्तम्भाग्रपीठानियेषुतैःबृहत्तुलैःतथाप्यतुलैःतद्रहितैरितिविरोधःअनुपमैरित्यविरोधः। तुलामानेपलशतेसादृश्येराशिभाण्डयोः। गृहाणान्दारुबन्धायपीठ्यामितिहेमः। वितानमुल्लोचःतेषांमालापंक्तिस्तयापिनद्धैराच्छादितैःतथाप्यवितानैस्तद्रहितैरितिविरोधः अशून्यैरित्यविरोधःसमस्तवस्तुसमृद्धैरित्यर्थः। अस्त्रीवितानमुल्लोचोवितानंत्रिषुतुच्छकमित्युभयत्राप्यमरः। विचित्रैरा

लेख्यरहितैरपिसचित्रैःनत्सहितैरितिविरोधः। विचित्रैरद्भुतैरितिपरिहारः। आले ख्याश्चर्ययोःचित्रमित्यमरः। विगताःशालागृहैकदेशायेषांतैःविशालैरपिभूरिशालैःप्रचुरगृहैकदेशविशिष्टैरितिविरोधःविशालैःविपुलैरित्यविरोधः। शालागृहेनरुस्कंधशाखागारैकदेशयोरितिविश्वः। वेःशलच्छंकटचाविति शालच्प्रत्ययःगृहैःरेजे। अपिरयंसर्वत्रविरोधेविरुद्धवदाभासाद्विरोधालङ्कारः। विरोधस्सोविरोधेपिविरुद्धत्वेनयद्वचइतिकाव्यप्रकाशलक्षणात्॥ ५० ॥ ******************** ॥

॥ चित्रंसयेति ॥ यस्यांपुरिनिकेतनानांवेश्मनां। वेश्मसद्मनिकेतनमित्यमरः। कपोतान्पक्षिणःपालयन्तीतिकपोतपाल्योविटङ्कापरनामानःस्तम्भाग्रप्रसारितदारुविशेषाः कपोतपालिकायान्तुविटङ्कंपुन्नपुंसकमित्यमरः। कर्मण्यणिङीप्। तासुकृत्रिमपत्रिणां

चित्रंसयाकृत्रिमपत्रिपङ्क्तेःकपोतपालीषुनिकेतनानाम्। मार्जारमप्यायतनिश्चलाङ्गंयस्यांजनःकृत्रिममेवमेने ॥ ५१ ॥ ****

दारुमयपक्षिणांपंक्तेःकर्मणिषष्ठीचित्रंसयाकमितुमिच्छयाजिघृक्षयेत्यर्थः। क्रमेःसन्नन्तादप्रत्ययादित्यकारप्रत्ययेटाप्। स्नुक्रमोरनात्मनेपदनिमित्तेइतीडागमोनभवति। अत्रक्रमेर्वृत्त्यादिव्यतिरिक्तार्थेष्वनुपसर्गाद्वेतिवैकल्पिकस्यात्मनेपदनिमित्तस्यानुपसर्गत्वस्यैवेवक्षिकस्यसम्भवात्। आयतमानतंवानिश्चलमङ्गंयस्यतंमार्जारंविडालमपि। ओतुर्विडालोमार्जारइत्यमरः। जनःकृत्रिमंक्रियानिर्वृत्तमेवमेनेनतुवास्तवमित्यर्थः। ड्वितःक्त्रिःक्त्रेर्मम्नित्यमितिमप्प्रत्ययः। अनेनकृत्रिमाकृत्रिमभेदोदुर्ग्रहइतिशिल्पज्ञानातिशयोक्तिःअर्चाविकल्पितसादृश्यान्मार्जारजनयोःकृत्रिमाकृत्रिमेषुविपरीतमितिवर्णनाद्भ्रान्तिमदलङ्कारः॥ ५१ ॥ ********************** ॥

॥ क्षितीति ॥ यस्यांपुरिवधूजनःक्षितौप्रतिच्छायस्यभूमिक्षितोपिचन्द्रदिविस्थित

मितिभावः । तत्रापि मुखैरेवारविन्दैरधस्कारे इति विरोधः । सलावण्यमहिम्नाऽधरी कारे इति परिहाराद्विरोधालङ्कारः । अतीतानि नक्षत्रपथः अतीतनक्षत्रपथानि अत्यादयः क्रान्ताद्यर्थे द्वितीययेति समासः । द्विगुप्राप्तापन्नेत्यादिना परवल्लिङ्गनिषेधः । प्रासादशृङ्गाणि वृथाऽध्यरुक्षन् अधिरोहन्ति स्म अनधिरुह्यैवाधःकरणादिति भावः । रोहतेर्लुङ् शल इगुपधादनिटः क्स इति च्लेः क्सादेशः अबाधःकरणरूपकार्यस्य तेनैव विरोधाद्यजीव्यवैयर्थ्यहेतुत्वात्सङ्कीर्णः काव्यलिङ्गभेदः ॥ ५२ ॥ ************ ॥

॥ रम्येति ॥ यस्यां पुरि युवानो रम्या रमणीया इति हेतोः पताकाः प्राप्नुवती उत्क्षिप्तध्वजा इत्यर्थः अन्यत्र रम्याद्यत्येवं पताकाः प्राप्नुवतीः प्राप्तचिह्ना इत्यर्थः । पताका वैजयन्त्यां च

क्षितिप्रतिष्ठोऽपि मुखारविन्दैर्वधूजनश्चन्द्रमधश्चकार । अतीत
नक्षत्रपथानि यत्र प्रासादशृङ्गाणि वृथाध्यरुक्षन् ॥ ५२ ॥ रम्या इ
ति प्राप्नुवतीः पताका रागं विविक्ता इति वर्द्धयन्तीः । यस्यामसेवन्त नम
द्वलीकाः समं वधूभिर्वलभीर्युवानः ॥ ५३ ॥ ******

सौभाग्येऽङ्के ध्वजेऽपि च । इति हेतुप्रकरणप्रकारादिसमाप्तिष्वित्युभयत्रापि विश्वः । विविक्ता विजना विमला चेति हेतो रागं वर्द्धयन्तीः । विविक्तौ पूतविजनौ इत्यमरः । नमद्वलीकाः नम्रनीध्राः । वलीकनीध्रे पटल इत्यमरः । अन्यत्र नमन्त्यो वल्यः त्रिवल्याख्या मध्यरेखा यासां ता नमद्वलीकाः नद्यृतश्चेति कप्रत्ययः । वलीमध्यमरेखोर्मिजीर्णत्वगृहदारुणि [illegible] श्रयन्तो । वलभीः कूटागाराणि । कूटागारे तु वलभीत्यमरः । वधूभिः समं सह नववधूसहिता असेवन्तेत्यर्थः अत्र वधूनां वलभीनां च प्रकृताप्रकृतानामेव धर्मसाधर्म्येणौपम्यावगमात्केवलप्रकृतगोचरतुल्ययोगिता न श्लेषः तत्र केवलप्रभेदे विशेष्यस्यापि श्लिष्टत्वनियमात् । यथाहुः । प्रकृताप्रकृतोभयमुक्तं चेच्छब्दमात्रसाधर्म्यं श्लेषोऽयं श्लिष्टत्वं सर्वेचान्यद्वयोर्नान्यदिति । प्र

स्तुतानामथान्येषां केवलं तुल्यधर्मतः । औपम्यं गम्यते यत्र समता तुल्ययोगिता ॥ ५३ ॥ *॥

॥ सुगन्धितामिति ॥ यत्र पुरि अप्रतियत्नः संस्कारः पूर्वो यस्यास्ताम् अप्रतियत्नपूर्वाम् अकृत्रिमां स्वाभाविकीमित्यर्थः । प्रतियत्नस्तु संस्कार इति वैजयन्ती । शोभनो गन्धो येषां तेषां भावस्तत्तां सुगन्धितां सौरभं बिभ्रन्ति बिभ्राणानि । वा नपुंसकस्येति नुमागमः । मधूनि मद्यानि कामिनीनां वक्त्राणि च यूनां प्रमदाय प्रीत्यै आमोदकर्मणो वासनाधारस्य व्यतिहारं परस्परकारणमीयुः अन्योन्यगन्धेन अन्योन्यं वासयामासुरित्यर्थः इणो लिट् । अत्रापि वधूनां वक्त्राणां च प्रस्तुतत्वात् पूर्ववत् तुल्ययोगिता भेदः । तेन यूनां मधुवासितवधूवदनपानं वदनवासितमधुपानं च वस्तु व्यज्यते तेन च निरातङ्कशोकाः पौरा इति गम्यते ॥ ५४ ॥ **** ॥

सुगन्धितामप्रतियत्नपूर्वां बिभ्रन्ति यत्र प्रमदाय पुंसाम् । मधूनि वक्त्राणि च कामिनीनामामोदकर्मव्यतिहारमीयुः ॥ ५४ ॥ रतान्तरे यत्र गृहान्तरेषु वितर्दिनिर्यूहविटङ्कनीडः । रुतानि शृण्वन् वयसां गणोऽन्तेवासित्वमाप स्फुटमङ्गनानाम् ॥ ५५ ॥ *****

॥ रतान्तर इति ॥ यत्र पुरि गृहान्तरेषु वितर्दयो विहारवेदिकाः । स्याद्वितर्दिस्तु वेदिका इत्यमरः । तासां निर्यूहा मत्तवारणाख्या उपाश्रयाः । निर्यूहो मत्तवारण इति वैजयन्ती । तेषां विटङ्काः उपरितन्यः कपोतपालिकाः त एव नीडाः कुलायाः यस्य सः । कुलायो नीडमस्त्रियामित्यमरः । वयसां शुकसारिकादिपक्षिणां गणः । वयः पक्षिणि बाल्यादाविति विश्वः । अङ्गनानां वितर्दिषु रममाणानामिति भावः । रतान्तरे रतमध्ये रुतानि रतिकूजितानि शृण्वन् अन्ते समीपे वसन्तीत्यन्तेवासिनः शिष्याः । छात्रान्तेवासिनौ शिष्ये इत्यमरः । शयवासवासिष्वकालादित्यलुक् तेषां भावस्तत्त्वमाप समीपे प्रतिपदं यथाश्रुतमनुच्चारणादेवमन्ये मेने । अतएव स्फुटमिति व्यंजकप्रयोगः ॥ ५५ ॥ **************** ॥

॥ छन्नेष्विति ॥ यत्र पुरि छन्नेषु आच्छादितेषु वासोभिरित्यादिना वैकल्पिको निपातः । स्पष्टतरेषु स्फुटतरं लक्ष्यमाणेष्वित्यर्थः । नारीकुचमण्डलेषु स्वच्छानि स्फटिकादिवदनिरोधकानि अम्बराणि वस्त्राणि केवलं नामतो ऽम्बरमिति नाम्नैव आकाशसाम्यं न दधुः । अम्बरं व्योम्नि वाससीति विश्वः । किन्तु अर्थतोपि अर्थक्रिययापि तत्साम्यं दधुः स्वयमनिरोधकत्वं व्यवधायकत्वं दृष्ट्यादिमूर्तानां गत्यादिप्रतिघातित्वमित्यादिनापि साम्यं दधुरित्यर्थः । उपमालङ्कारः ॥ ५६ ॥ ************************* ॥

॥ यस्यामिति ॥ यस्यां रिपुः अजिह्माः अवक्राः अन्यथाकपटदम्भादिरहिता इत्यर्थः । आचरेत्तदृशी वृत्तिर्न जिह्मामशठां नयेत् न सरणादि निसावः । जिह्मः कपटवक्रयोरि

छन्नेष्वपि स्पष्टतरेषु यत्र स्वच्छानि नारीकुचमंडलेषु । आकाशसाम्यं
दधुरम्बराणि न नामतः केवलमर्थतोऽपि ॥ ५६ ॥ यस्यामजिह्मा
महतीमपङ्काः सीमानमत्यायतयोऽत्यजन्तः । जनैरजातस्खलनैर्न
जातु द्वयेऽप्यमुच्यन्त विनीतमार्गाः ॥ ५७ ॥ *·*·*·*·*·*·*

ति विश्वः । अपङ्काः कर्दमरहिता निष्पापाश्च । पङ्कोऽस्त्री कर्दमे ऽपि निहेमः । महतीं सीमानं अत्यजन्तः अत्यन्तमहन्मर्यादा इत्यर्थः । अतिमात्रा आयतिरायामः उत्तरकालश्च येषां ते अत्यायतयः । आयतिस्तूत्तरे काले संयमायामयोरपीति विश्वः । द्वये द्विरूपा अपि प्रथमचरमतयेत्यादिना द्वयशब्दस्य विभाषा सर्वनामसंज्ञा । विनीतमार्गाः सुविरचितपुरवीथयः सुशिक्षिताचाराश्च जनैः तत्र जातं स्खलनं पाषाणादिप्रतिघातो विरुद्धाचरणं येषां तैर्जनैः जातु कदाचिदपि नामुच्यन्त न त्यक्ताः । अत्र मार्गशब्दस्य साधर्म्यादेकेनाश्लिष्टपदद्वयवदेकशब्देनार्थद्वयप्रतीतेः द्वयानामपि मार्गाणां प्रकृतत्वाच्च केवलप्रकृतविषययोः धर्मश्लेषः । विरोधस्यापि श्लिष्टत्वानुप्रयोगिता ॥ ५७ ॥ ***************** ॥

॥ परस्परेति ॥ यत्र पुरि परस्परस्पर्द्धीन्यहमहमिकयाऽन्योन्यसङ्घर्षिणी परार्द्ध्यानि श्रेष्ठा
निरूपाणि सौन्दर्याणि यासां ताः । रूपं स्वभावे सौन्दर्य इति विश्वः । पुरे भवाः पौराः ताः
स्त्रियः पौरस्त्रियः स्त्रियाः पुंवदित्यादिना पुम्वद्भावः विधाय निर्माय वेधाः स्रष्टा श्रियो लक्ष्मी
देव्याः निर्मित्या निर्माणेन प्राप्तं यत् घुणेन वज्रकीटेन क्षतस्योत्कीर्णस्यैकवर्णस्य उपमया सा
म्येन वाच्यमपवादः तं दलमत्यन्तं न दैवमलमिति केचित् । ममार्ज घुणाक्षरवन्यादृच्छिकं
मिदं श्रीदेवता सौन्दर्यशिल्पं न कौशलमित्याशयः क्षालितवानित्यर्थः अनया चातिशयोक्त्या
पौरस्त्रीणां रमासमानसौन्दर्यवस्तुव्यज्यते ॥ ५८ ॥ ************** ॥
॥ क्षुरसमिति ॥ यदन्तःकरणेन क्षुरसमभ्यसां ममेदं भूयादिति भूयो भूयः संकल्पितमित्यर्थः

परस्परस्पर्द्धिपरार्द्ध्यरूपाः पौरस्त्रियो यत्र विधाय वेधाः । श्रीनिर्म्मि
तिप्राप्तघुणाक्षरैकवर्णोपमावाच्यमलं ममार्ज्ज ॥ ५८ ॥ क्षुरसं यदन्तः
करणेन वृक्षाः फलन्ति कल्पोपपदास्तदेव । अध्यूषुषो यामभवन् ज
नस्य याः संपदस्ता मनसोऽप्यगम्याः ॥ ५९ ॥ ******

कल्पयन्ति संकल्पितानीति कल्पाः । कल्पा इत्युपपदं व्यावर्त्तकं येषां ते कल्पोपपदाः वृक्षाः
कल्पवृक्षाः तदेव फलन्ति निष्पादयन्ति फलं निष्पत्ताविति धातोर्लट् इतः यां पुरमध्यूषुषोऽध्य
ष्यामुषितवन्तः उपान्वध्याङ्वस इति कर्मत्वं भाषायां सद वस श्रुव इति क्वसुः प्रत्ययः जनस्य
याः सम्पदोऽभवन् ता मनसोऽप्यगम्याः वाचामभूमय इति किमु वक्तव्यमिति भावः । गृहे गृहे क
ल्पवृक्षसम्बन्धातिशयोक्त्या पौराणां देवेन्द्रभोगो व्यज्यते इह कल्प इत्युपपदं स्वसंज्ञैकदेशो
वेधामिति व्याख्याने हिरण्यपूर्वं कशिपुमित्यादिवदवाच्यवचनदोषावकाशः ॥ ५९ ॥ * ॥
॥ कला इति ॥ सकलाः समग्राः कलास्तनुः षष्टिविद्याः षोडशभागांश्च दधानः । कला शिल्पे
कालभेदे । कला तु षोडशो भाग इति चामरः । तुधयावलिप्तं सौधन्तदन्तिनाभिः स्वभाभि

इति समासान्तो निजादेशः लोपो व्योर्वलीति यलोपः। रोहिण्या अपत्यं पुमान् रौहिणेयः बल-
भद्रः स्त्रीभ्यो ढगित्यत्र पुंरी हातुं त्यक्तुं नैच्छत् नेच्छति स्मेति। रोहिणीशश्चन्द्रः सः हातुं नैच्छ
अत्र रौहिणेयरोहिणीशयोः परोत्कर्षबलेन द्वयोः प्रकृतत्वाद्दीपकस्यापि सिद्धिः एव वा केवल
प्रकृतविषयत्वात्तुल्ययोगिता ता गमन्यत् ॥ ६० ॥ ****************** ॥

॥ बाणेति ॥ यत्र पुरि बाणाहवे बाणासुरयुद्धे व्याहतनाश्यं नीता शम्भुशक्तिर्येन तस्य हरवि
क्रमिणो जनार्दनस्य कृष्णस्यासत्तिं सन्निधिमासाद्य प्रत्यवं प्राप्येत्यर्थः शरीरिणा विग्रहव
तानन्यनङ्गेनेति भावः। जैत्रं जयशीलाः मन्त्राणामास्ते जादित्वादणप्रत्ययः जैत्रशराय
स्यैतेन मकरध्वजेन कामेन प्रद्युम्नरूपेणेति भावः। निःशङ्कं निर्भीकमूषे उषितं वसनिवासे

कलादधानः सकलाः स्वभाभिरुद्भासयन् सौधसिताभिराशाः। यां रै-
वतीजानिरियेष हातुं न रौहिणेयो न च रोहिणीशः ॥ ६० ॥ बाणाह-
वव्याहतशंभुशक्तेरासत्तिमासाद्य जनार्दनस्य। शरीरिणा जैत्रशरे-
ण यत्र निःशङ्कमूषे मकरध्वजेन ॥ ६१ ॥ *******

भावे लिट् वचिस्वपियजादीनां सम्प्रसारणं। शङ्का वितर्कभययोरिति विश्वः। अत्र शम्भुश
क्तिव्याघातपदार्थस्य विशेषणगत्या निःशङ्कनिवासहेतुत्वोक्तेः काव्यलिङ्गभेदः। पुराणि
लभगवान्भक्तवत्सलो भूर्जेन्द्रियाणा प्रेरणा बाणाभियोगिनं हरिमभियुज्य निर्जितं इति पौरा
णिकाः कथयन्ति ॥ ६१ ॥ ************************* ॥

॥ निषेव्यमाणेनेति ॥ शिवैर्मरुद्भिर्मन्दमारुतैः अन्यत्र शिवैरुद्रैर्मरुद्भिर्मरुद्गणैश्च वि
शयनिषेव्यमाणेन हरिणा श्रीकृष्णेन शक्रेण चाध्यास्यमानाधिष्ठीयमाना उडुरश्मीनां रत्ना
ङ्कुराणां चाभिख्या नैकचरत्नाकरत्वादन्यत्ररत्नसानुत्वाचेति भावः। सिन्धौ स्थितेति शेषः
या पुरी महस्थितामरावत्यां शक्रोऽयमरगतोमिन्द्रनगरीमनौवतु चोक्तं जिराणीनामिनिदी

शशादिगजञ्ज्ञास्यनरेवृमौकञ्ज्ञिकन्यापूषावंजायायस्तरेवतीजानिःजायायानिङ्
र्घःसंज्ञायांमादुपधायाश्चेतिवत्वं। अह्वास्तस्पर्द्धयाआह्वतवतोअमरावतीमनुचकारेत्यर्थः
। ह्वयतेर्लुङ्स्पर्द्धायामाङः इत्यात्मनेपदं लिपिसिचिह्वश्चेतिआत्मनेपदेष्वन्यतरस्या
मितिच्लेरङभावपक्षेसिजादेशः । अत्रचप्रथमार्थेश्लेषेपिसिन्धौनेरौस्थितेतिप्रतिबिम्बभा
वेनसाधर्म्योक्तेःश्लेषानुप्राणितेयमुपमेतिसंक्षेपः । अह्वास्तेतिसादृश्यप्रतिपादकःशब्दः
स्पर्द्धनेह्वयतेर्दृष्टीत्यनुशासनात् ॥ ६२ ॥**************************** ॥
॥ स्निग्धेति ॥ स्निग्धंयदञ्जनंतद्वृत्तेनचश्यामरुचिःसुवृत्तःसद्वृत्तःसुछुवर्त्तुलश्च । त्रया
णांलोकानांसमाहारस्त्रिलोकीतद्धितेत्यादिनासमासःसंख्यापूर्वोद्विगुरितिद्विगुसंज्ञाअ

ह्रियेव्यमाणेनशिवैर्महद्भिरध्यास्यमानाहरिणाचिराय। चन्द्रश्मि
रत्नाङ्कुरधाम्निसिन्धौवह्वास्तसेरेरमरावतींया ॥ ६२ ॥ स्निग्धाञ्ज
नश्यामरुचिःसुवृत्तोवध्वाइवाध्वंसितवर्णकान्तेः । विशेषकोवावि
शिशेषयस्याःश्रियंत्रिलोकीतिलकःसएव ॥ ६३ ॥ ****

कारान्तोत्तरपदोद्विगुःस्त्रियामिष्यतइतिस्त्रीत्वंद्विगोरितिङीप्तस्यास्तिलकोभूषणभूतः
सहरिरेवविशेषकोवातिलकइवेत्यर्थः। इववद्वायथाशब्दावित्यनुशासनात्। तमालप
त्रचित्रतिलकानिविशेषकाःइत्यमरः। अध्वंसितावर्णानांब्राह्मणादीनांकान्तिरौज्ज्वल्यंय
स्याःतस्याःपुरःअन्यत्राध्वंसितेवर्णेगौरादिःकान्तिर्लावण्यंचयस्यास्तस्याः । वर्णोद्वि
जादौशुक्लादौस्तुतौभयत्राप्यमरः । वध्वाइवश्रियंविशिशेषविशेषितवान्अनेकशब्दे
ष्युपमेत्येके। शब्दमात्रसादृश्यात्श्लेषइत्यन्ये। श्लेषोपमेत्याहदण्डी ॥ ६३ ॥ ** ॥
॥ तमिति ॥ अतुलप्रतापःसहरिःतांपूर्वोक्तांपुरमीक्षमाणंपुरस्तात्पूर्वस्यांदिशितस्य
श्यर्थेतसिप्रत्ययःप्रतोलींरथ्यां । रथ्याप्रतोलीविशिखेत्यमरः । प्रापत्प्राप्तवानलुङि

ध्रुवादौत्यपिदिशाब्जेरङ्गादेशः । वज्राणांनीरणप्रसादादधिगतःऽर्हितकृत्मणीनां प्रभाभिरुद्भा सितोत्सुरायुधश्रीरिन्द्रचापलक्ष्मीर्यस्यांसा । इन्द्रवज्रग्रहणंमणिमात्रोपलक्षणं । अन्यथे न्द्रायुधसाम्यासम्भवादिति । अत्रवज्रैस्थकुलिशस्यप्रभाभिरुद्भासितोरत्नधानामि रदेवतायुधानां श्रीर्यस्याःसा । वज्रोऽस्त्रीहीरकेपवावित्यमरः । याप्रतोलीदेवसेनाइ व चमूरिवपरैःशत्रुभिरलंघ्यादुःप्रधर्षा ॥ ६४ ॥ ********************॥

॥ इजाइति ॥ अरविन्दनाभेर्विष्णोरङ्गात्सुजाइव । यतोवाङ्मानिभूतानिजायन्तइ तिश्रुतेरितिभावः । शम्भोर्जटाजूटतटादापइवगङ्गाजलानिवविधातुर्मुखात्श्रुतयइवमुख

तामीक्षमाणः स पुरं पुरस्तात्प्रापत्प्रतोलीमतुलप्रतापः । वज्रप्रभोद्भा सितसुरायुधश्रीर्या देवसेनेव परैरलंघ्या ॥ ६४ ॥ इजाइवाङ्गाद रविन्दनाभेः शम्भोर्जटाजूटतटादिवापः । मुखादिवाथश्रुतयो विधा तुः पुरान्निरीयुर्गजवाजिन्यः ॥ ६५ ॥ श्लिष्यद्भिरन्योऽन्यमु खाग्रसङ्गस्खलत्खलीनं हरिभिर्विलोलैः । परस्परोत्पीडितजानु भागाद्दुःखेन निश्चक्रमुरश्ववाराः ॥ ६६ ॥ *********

जिताहरैर्ध्वजिन्यःसेनाःपुरान्निरीयुर्निर्गताः गालोपमेयं ॥ ६५ ॥ ********॥

॥ श्लिष्यद्भिरिति ॥ अन्योन्येषांमुखाग्रेषुसङ्गेनस्खलन्तःस्खलीनाःकविकायस्मिन्कर्मणि तद्यथा । कविकातुखलीनोऽस्त्रीत्यमरः । श्लिष्यद्भिःसंघर्षद्भिःविलोलैःमुहुश्चलद्भि र्हरिभिस्तुरङ्गैःकरणैरश्वान्वारयन्तीत्यश्ववाराःअश्वारोहाःपरस्परेणपीडितजानुभागा त्सन्धात्दुःखेननिश्चक्रमुःनिर्जग्मुरित्यत्रस्वभावोक्त्यातिशयोक्तेःसङ्करः ॥ ६६ ॥ ***॥

॥ निरन्तरालइति ॥ तमसातिमिरेणैवप्राणभृतांङ्गणेनप्राणिवर्गेणकर्त्रानिरन्तरालेऽपिपूर्वे णैवनिसङ्कटेऽपिपर्यायसंप्रतिदूरंदूरनएवविमुच्यमानेस,तदीपभयादन्यत्रद्वीपभयाद्वे

त्यर्थः । तेजोमहद्भिर्बलाधिकैः प्रभासम्पन्नैश्च । तेजो बलं प्रभा तेज इति विश्वः । द्विपैर्दी
पैरिवासम्बाधमसङ्कीर्णं मयाम्बभूवे जग्मे । तमच्छैरिव क्रच्छ्रादिति भावः । अयगतौ भावे लि
ट् । दयायासश्चेत्याम्प्रत्ययः । स्तनेजसैव दूरेत्सारिततमस्के पथि दीपा इव तथोत्सारि
तप्राणिके पथि निरर्गलं द्विपाः पर्ययुरित्यर्थः । तमसीति सप्तम्यन्तपाठे तु तमसः पथ्युपमान
त्वे द्विपागमनात्प्राक् प्राणिवर्गेण निरन्तरालत्वं पश्चान्मुच्यमानत्वं च तमस्यभवतीत्युपमानोप
मेययोर्वैरूप्यं स्यात्तृतीयान्तपाठे तमःप्राणिवर्गोपमानत्वेन तत्सारूप्यसाकल्यात्स एव साधीया
नित्यालङ्कारिकाणां पन्थाः ॥ ६७ ॥ ********************* ॥

निरन्तरालेऽपि विमुच्यमाने दूरं पथि प्राणभृतां गणेन । तेजोमहद्भि
स्तमसेव दीपैर्द्विपैरसंबाधमयाम्बभूवे ॥ ६७ ॥ शनैरनीयन्त रया
त्पतन्तो रथाः क्षितिं हस्तिनखादखेदैः । सयत्नसूतायतरश्मिभुग्न
ग्रीवाग्रसंसक्तयुगैस्तुरङ्गैः ॥ ६८ ॥ बलोर्मिभिस्तत्क्षणहीयमान
रथ्याभुजाया वलयैरिवास्याः । प्रायेण निष्क्रामति चक्रपाणौ नेष्टं पुरो
द्वारवतीत्वमासीत् ॥ ६९ ॥ ************

॥ शनैरिति ॥ रयात्पतन्तो धावन्तो रथाः सयत्नैः सूतैः सारथिभिः । सूतः क्षत्ता च सारथि
रित्यमरः । आयता आकृष्टा ये रश्मयः प्रग्रहाः । किरणप्रग्रहौ रश्मी इत्यमरः । तैर्भुग्नेषु प्रह्वेषु
ग्रीवाणामग्रेषु संसक्ता युगाः स्कन्धवाह्या दारुविशेषा येषां तैरत एवाखेदैरश्रमैस्तुरङ्गैर्ह
स्तिनखात् हस्तिनखः पूर्द्वारि मृत्कूटः । कूटं पूर्द्वारि यद्धस्तिनखस्तस्मिन्नित्यमरः । तस्मा
च्छनैः क्षितिमनीयन्तानीता इति स्वभावोक्तिः । यथावद्वस्तुवर्णनात् ॥ ६८ ॥ ** ॥
॥ बलोर्मिभिरिति ॥ बलान्यूर्मय इव तैर्बलोर्मिभिः वलयैः कंकणैरिव तत्क्षणे क्रमणक्षण एव
हीयमानान् निरिच्यमाना रथ्याभुजा यस्याः अत एवास्याः पुरो द्वारवत्याश्चक्रपाणौ हरौ निः

कामनिनिर्गच्छन्निप्रायेणभून्नाद्वारवनीत्वंद्वारत्वंस्वस्वरूपमितियावत् इत्थंनासीत्तहरि विरहेनदैफल्यादितिभावः। द्वारवनीशब्दस्यसंज्ञात्वान्नतलोर्गुणवचनस्येतिनपुम्वद्भावः अन्यवद्वारवतीत्वद्वारवत्वंतेष्टंनस्यहरितिः क्रमणहेतुत्वादित्युभयथाप्युपमितभुजवलयगलनहेतुत्वादुपमासंकीर्णेयमनिष्टत्वोत्प्रेक्षाप्रायेणेत्यनेनव्यज्यते ॥ ६९ ॥ *** ॥

॥ अथासर्गसमाप्तेःसमुद्रंवर्णयति ॥ पार इति। मुरारिर्नीरनिधेःसमुद्रस्यजलानांपारे परतीरे पारेजलं। पारावारेपरार्वाचीनीरइत्यमरः। पारेमध्येषष्ठ्या वेत्यव्ययीभावः। नस्त्वं येगादेकारान्तत्वंचपारेशब्दस्य। आसमन्तान्नीलाःपलाशानांपत्राणांराशयोयासान्ताः हरितपर्णपूर्णाइत्यर्थः। पत्रंपलाशंछदनमित्यमरः। अतएवोत्कलिकाऊर्मयः। ऊर्मि

पारेजलंनीरनिधेरपश्यन्मुरारिरानीलपलाशराशीः। वनावलीरुत्क लिकासहस्रप्रतिक्षणोत्कूलितशैवलाभाः ॥ ७० ॥ लक्ष्मीभृतो ऽम्भोधितटाधिवासान्द्रुमानसौनीरदनीलभासः। लतावधूसम्प्रयु जोऽधिवेलंबहूकृतान्स्वानिवपश्यतिस्म ॥ ७१ ॥ ****

रुत्कलिकोल्लोलोलहरिस्त्रयेतिहलायुधः। तासांसहस्रैःप्रतिक्षणमुत्कूलिताःकूलमुद्गताःकृताःकूलंप्रापिताइत्यर्थः। उत्कूलशब्दात्तत्करोतीतिणयन्तात्कर्मणिक्तःतेषांशैवलानां आभेवाभायासान्ताःतत्सदृशीरित्यर्थः। वनावलीरपश्यत् अत्रोत्कूलितशैवलस्यसतःसिद्ध सन्देहादुपमोत्प्रेक्षयोःसन्देहसङ्करः ॥ ७० ॥ ***************** ॥

॥ लक्ष्मीभृतइति ॥ असौहरिर्लक्ष्मींशोभांश्रीदेवींचविभ्रतीतिलक्ष्मीभृतस्तान्अम्भोधितटेअधिवासोयेषांतान्नीरदवन्नीलभासःनीलवर्णान्लतावध्वइवेत्युपमितसमासः। अन्यत्रलताइववध्वइतिशाकपार्थिवादित्वान्मध्यमपदलोपीसमासः। ताभिःसम्प्रयुज्यन्त इतिसम्प्रयुजःसङ्गतान्क्विप्अधिवेलंवेलायांविभक्त्यर्थेऽव्ययीभावः। द्रुमान्बहूकृतानने

कीकृत्वा स्वान् स्वकीयविग्रहानिवेत्यर्थः । एवञ्च पुंल्लिङ्गतानिर्वाहः । आत्मपरत्वेन पुं स्कत्वापानात् । स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धन इत्यमरः । पश्यतिस्म स्वेषसंकीर्णं यमुत्प्रेक्षा ॥ ७१ ॥ ************************ ॥

॥ आश्लिष्टेति ॥ आश्लिष्टभूमिमालिङ्गितभूतलंउच्चैस्तरां रसितारं कन्दितारं लोलनां च स्वलतामितस्ततः पततां भजान् आकार इव आकारो येषां तेवृद्धतरङ्गास्तस्य तत्तायोत्तां फेना यमानं फेनमुद्वमन्तं फेनायेति वत्तःप्रकिनिक्यष् । वाक्यष इत्यात्मनेपदं अपांसमूह आपं तस्य समूह इत्यणनेन गच्छतीत्यापगाः तासां पतिं समुद्रं असौ हरिरपस्मारिणमपस्मार रोगि णमाशशंकेनत्कर्मयोगात्तथा उत्प्रेक्षा चकेइत्यर्थः । यथाहुर्नैदानिकाः । क्रुद्ध्यैर्धातुगिरा

आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारवृहत्तरङ्गम् । फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥ ७२ ॥ पीत्वाजला नान्निधिनानिगाद्धीं वृद्धिं गतेप्यात्मनिनैवमान्तीः । क्षिप्ताइवेन्दोः सरुवोऽधिवेलंमुक्तावलीरकलयांचकार ॥ ७३ ॥ ***

हृतेयमनस्विप्राणौमनः स्विन्दिशन्दन्तान् खादति फेनमुद्गिरति दोः पादौ क्षिपन्मूढधीः । प श्यन्रूपमसन् क्षितौ निपतति त्यर्था द्भरोति क्रियां विभ्यत्तस्य वमेवशाम्यति गतवेगेत्वपस्मा रहृत् ॥ ७२ ॥ *************************** ॥

॥ पीत्वेति ॥ जलनां निधिना समुद्रेण गङ्गेरव गाद्धीं औपम्यादिवबस्वार्थैष्यञ् । नदनि माजंमनिगाद्धींन स्मात्तृप्ताभेदादित्यर्थः । गृध्नौ पुनरेर्गुणःवान्तो विप्रत्ययेइतिगार्द्धश मितिस्यात् पीत्वाक्वे प्रणक्रियापेक्षयापूर्वकालता अथवृद्धिं गते आत्मनिस्वदेहे वन्द्रोदये समुद्रस्य वृद्धिरित्यागमः । नैवमान्तीरमान्तीः अनिरिच्यमाना इत्यर्थः । मातेः शतरि ङीप् आच्छीनद्योर्नुम् । उद्गीर्णाअतिनुत्सवोत्कटं पीत्वा अनन्तरमानाद्बहिरुद्धानाइत्यर्थ

इन्दोरुचोमरीचिरविन्दुप्रेक्षासहहरिरधितीरमधिवेलं। वेलाकूलविकारवीरिनिबिम्बः। मुक्तावलीरकलयाच्चकारआकलयामासकलतिःकामधेनुः ॥ ७३ ॥ ***** ॥

॥ साटोपमिति ॥ अमीमेघाःसाटोपंससम्भ्रमं । सम्भ्रमाटोपसरम्भाइत्यादवः । अनिशं नदनोगर्जनोयैस्तोयैरम्भोभिरुर्वी समन्ततः प्लावयिष्यन्ति तान्यम्भांसिपयोधेरेकदेशादेककोणत्रिभृतंनिश्चलंपिबतोमेघानसहरिददर्श । एतेनसमुद्रस्यापरिच्छिन्नत्वं पत्वंचव्यज्यते ॥ ७४ ॥ ***************************** ॥

॥ उद्धृत्येति ॥ मुनीन्द्रैस्तनेवेदान्वेदार्थमिवमेघैस्ततोम्बु एवेरेवनोयमुक्त्वात्यसम्प्रणीताः

साटोपमुर्वीमनिशंनदन्तोयैःप्लावयिष्यन्तिसमन्ततोऽमी। तान्येकदेशान्निभृतंपयोधेःसोम्भांसिमेघान्पिबतोददर्श ॥ ७४ ॥ उद्धृत्यमेघैस्ततएवतोयमर्थंमुनीन्द्रैरिवसम्प्रणीताः । आलोकयामासहरिःपतन्तीर्नदीःस्मृतीर्वेदमिवाम्बुराशिम् ॥ ७५ ॥ विक्रीयदिश्यानिधनान्युरूणिद्वैप्यानसावुत्तमलाभभाजः । तरीषुतत्रत्यमफल्गुभाण्डंसांयात्रिकानावपतोऽभ्यनन्दत् ॥ ७६ ॥ *****

ततःअम्बुराशिंपतन्तीःप्रविशन्तीर्नदीर्वेदंपतन्तीः स्मृतीर्मन्वादिसंहिताइवहरिरालोकयामासश्रुतिमूलत्वेनैवप्रामाण्यात्स्मृतीनां तत्सम्बादएवतत्सम्प्रवेशः अनेनैवेयमुपमा ॥ ७५ ॥ ******************************** ॥

॥ विक्रीयेति ॥ दिक्षुभवानिदिश्यानिदिगन्तराणि नीतानीत्यर्थः । दिगादिभ्योयत् उरूणि महान्तिधनानिनानाद्रव्याणिविक्रीयमूल्येनद्वत्वाउत्तमलाभंद्वेगुण्यादिकंभजन्तीतितानुत्तमलाभभाजःतत्रत्यंद्वैपमित्यर्थः। अव्ययात्यप् अफल्गुसारवत्। फल्गुतुच्छमसारंवेत्यादवः। भाण्डंमूलधनंपण्यद्रव्यमित्यर्थः। वणिङ्मूल्यधनेपात्रे भाण्डंभूषाम्बुभूषयो

रितिवैजयन्ती । तरीषुनौषु । स्त्रियांनौस्तरणिस्तरिरित्यमरः । अविस्तरिःत्रिरित्यौणा
दिकः इ कार प्रत्ययः आवपनःवपनैः शत् प्रत्ययः द्वैप्यानासमुद्रवासिनःद्वीपादनुसमुद्रंय
त्रितियञ्प्रत्ययःसंयात्रासम्भूययात्रासाप्रयोजनमेषांतान्सांयात्रिकापोतवणिजः । सां
यात्रिकःपोतवणिगित्यमरः । प्रयोजनमितिठक् । असौहरिरभ्यनन्दत् ॥ ७६ ॥ * ॥

॥ उत्पित्सवइति ॥ नदभर्तुःसमुद्रस्यान्तरभ्यन्तरात्उत्पित्सवःउत्पतितुमिच्छवःपतनैः
सन्नन्तादुप्रत्ययःसनिमीमेत्यादिनाइसादेशःअत्रलोपोभ्यासस्येतिअभ्यासलोपः । फणी
न्द्राः भक्त्यागरुडध्वजस्यहरेर्ध्वजानिवगरीयसानिमहान्तिःश्वसितानिलेनपयांसिचैः

उत्पित्सवोऽन्तर्नदभर्तुरुच्चैर्गरीयसानिःश्वसितानिलेन । पयांसिभ
क्त्यागरुडध्वजस्यध्वजानिवोच्चिक्षिपिरेफणीन्द्राः ॥ ७७ ॥
तमागतंवीक्ष्ययुगान्तबन्धुमुत्सङ्गशय्याशयमम्बुराशिः । प्रत्युज्जगा
मेवगुरुप्रमोदप्रसारितोत्तुङ्गतरङ्गबाहुः ॥ ७८ ॥ उत्सङ्गि
नाम्भःकणकोनभस्वानैाद्न्वतःस्वेदलवान्ममार्ज । तस्यानुवेलंव्र
जतोऽधिवेलमेलालतास्फालनलब्धगन्धः ॥ ७९ ॥ *** 

रुच्चिक्षिपिरेउत्क्षिप्तवन्तःउत्प्रेक्षाक्षिपिरितोत्वादात्मनेपदं ॥ ७७ ॥ ******* ॥

॥ तमिति ॥ अम्बुराशिःयुगान्तबन्धुमापद्बन्धुमित्यर्थः । उत्सङ्गएवशय्यातस्यांशेतइ
तितथोक्तंअधिकरणेशेतेइत्यच्प्रत्ययः । आगतमभ्यागतंतंहरिंवीक्ष्यगुरुणाप्रमोदेन
प्रसारिताउत्तुङ्गास्तरङ्गाएवबाहवोयस्यसःप्रत्युज्जगामसंमिलनार्थमागतवानिवेतिक्रि
यास्वरूपोत्प्रेक्षा ॥ ७८ ॥ *************************** ॥

॥ उत्सङ्गेति ॥ उत्सङ्गिनःसंसर्गिणःकृताःउत्सङ्गिनाःतन्करोतीतिणयन्तात्कर्मणिक्तःउ
त्सङ्गिनाःअम्भःकणायेनेतिशेषाद्विभाषेतिकः एलावनानांआस्फालनेनसङ्घर्षणेनवध

गन्धश्चैव शिशिरः सुरभिरुदन्वतो नभस्वान्समुद्रस्य वायुः अधिवेलं वेलायां विभक्त्यर्थेऽव्ययीभावः । प्रजनस्तस्य हरेः खेदलवाननुवेलं प्रतिक्षणं यथार्थेऽव्ययीभावः । ममार्जन्नहार । वेलाकूले च जलधेर्वेलातीरविकारयोरिति विश्वः । काव्यलिङ्गं ॥ ७९ ॥ ** ॥

॥ उन्नालेति ॥ चमूषु चरन्तीति चमूचराः सैनिकाः चरेष्टइति टप्रत्ययः । तैरुन्नालेषून्नतेषु तालीवनेषु सम्प्रवृत्तेन समीरणेन मारुतेन सीमन्तिताः सीमन्तिन्यः कृताः सीमन्तशब्दान्मत्वर्थीयान्तत्करोतीति णिचन्तात्कर्मणि क्तः णाविष्ठवद्भावे विन्मतोर्लुक् । ताः केतक्यो येषु ते तथोक्ताः ननृतश्चेति कप् लवणसिन्धोरिमाः लावणसैन्धव्यः न स्वेदमित्यण् हृद्भगसिन्ध्वन्ते पूर्वपदस्य चोभयपदवृद्धिः सतासां कच्छभुवामनूपभूमीनां । जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविध

उन्नालतालीवनसंप्रवृत्तसमीरसीमन्तितकेतकीकाः । आसेदिरे लावणसैन्धवीनं चमूचरैः कच्छभुवां प्रदेशाः ॥ ८० ॥ लवङ्गमालाकलितावतंसास्ते नारिकेलान्तरपः पिबन्तः । आस्वादितार्द्रक्रमुकाः समुद्रादभ्यागतस्य प्रतिपत्तिमीयुः ॥ ८१ ॥ * * * * * *

इत्यमरः । प्रदेशा देशाः आसेदिरे प्राप्ताः सीदतेः कर्मणि लिट् । अत्र स्वभावोक्तिरनुप्रासश्चालंकारौ तेषसौ शब्द्यसौकर्यात्लक्षणसम्पत्तिः स्पष्टा ॥ ८० ॥ * * * * * * * * * ॥

॥ लवङ्गेति ॥ लवङ्गमालाभिः लवङ्गकुसुममाल्यैः कल्पिताऽवतंसाः कृतभूषणाः नारिकेलान्तरित्यव्ययं नारिकेलाभ्यन्तर इत्यर्थः । अपइतिपृथक्पदं समासे त्वदप्पूरित्यादिना समासान्तप्रसङ्गात् पिबन्तः आस्वादिताः भक्षिताः आर्द्रक्रमुकाः आर्द्रपूगीफलानि यैस्ते । घे. राठा तु पूगः क्रमुक इत्यमरः । ते चमूचराः समुद्रादभ्यागतस्यातिथेः प्रतिपत्तिं गौरवं सत्कारमीयुः । प्रतिपत्तिः पदप्राप्तौ प्रवृत्तौ गौरवेऽपि चेति विश्वः । अत्राभ्यागतप्रतिपत्तिप्राप्तेर्विशेषणगत्यावतंसकल्पनादिपदार्थहेतुत्वात्काव्यलिङ्गमलङ्कारः । तेन समुद्र इव चमूचराणां

द्वयाभ्यागमेनौपम्यप्रतीतेरलङ्कारेणालङ्कारध्वनिः ॥ ८१ ॥ ************* ।

॥ तुरगेति ॥ परितस्तुरगशतैराकुलस्याऽपरिमितास्वस्येत्यर्थः प्रतिपथं प्रतिमार्गं यथार्थेऽ
व्ययीभावे समासान्तः प्रमथिताः भूभृतो राजानो गिरयश्च येन तस्य तत्तुल्यं चेनादिर्मथितस्ये
तिभावः । समन्तं धृता श्रीः शोभा रमा च येन तस्य धृतश्रियः पुरोऽग्रे नगरद्वापरि चलतः परिग
च्छतः बलो रामस्तदनुजस्य हरेर्बलस्य सैन्यस्य । बलं सैन्ये बले रामे इत्युभयत्रापि शाश्वतः ।
अथ परं केवलमेकस्यैव तुरगस्याऽश्वस्य जन्म जन्ममात्रं यस्य तस्यैकतुरगजन्मनः महीभृता मन्दराद्रि
णा एहाच मथितस्य तनु स्वयं कस्यापि मथितस्य ततं विगलितश्रियः अनन्यन्तरं भेवास्याऽहरि
स्वीकरणादिति भावः । जलधेस्तदा प्रस्थानसमये महदन्तरं दूरगमनादिव्यवधानं चाऽ

तुरगशताकुलस्य परितः परमेकतुरङ्गजन्मनः प्रमथितभूभृतः प्रतिपथं म
थितस्य भृशं महीभृता । परिचलतो बलानुजबलस्य पुरः सततं धृतश्रि
यश्चिरगलितश्रियः सलिलनिधेस्तदाभवदन्तरं महत् ॥ ८२ ॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये पुरीप्रस्थानो नाम तृतीयः
सर्गः ॥ ३ ॥ ******************

रीत्या महदन्तरमत्यन्ताभवत् अत्रोपमेयस्य हरिबलस्योपमानाज्जलधेराधिक्यवर्णनाद्व्य
तिरेकालङ्कारः । पञ्चकावलीवृत्तं । नजभजजा जरौ हरपतिः कथिता भुवि पञ्चकावलीति
लक्षणात् । धृतश्रीर्वृत्तमिति केचित् । नजभपुरस्कृता जजजरा रचिता भुवि रुद्रदिक्प्रमिति
रितिलक्षणात् । धृतश्रीर्वृत्तमिति छान्दसः । धृतश्रीर्नजौ भजौ जौ ररुद्रदिग्यतिरिति लक्ष
णात् ॥ ८२ ॥ *************************** ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिवि
रचिते माघव्याख्याने सर्वङ्कषाख्ये तृतीयः सर्गः ॥ ३ ॥

॥ निःश्वासेति ॥ नीलोपलैरिन्द्रनीलमणिभिः स्यूताः प्रोताः विचित्रा नानावर्णाः धातवो गैरिकादयो यस्य तं अत एव रत्नभाभिर्मणिप्रभाभिः सह भूमिं भित्त्वा उत्थितं ऊर्द्ध्वं निर्गतं निःश्वासधूमं फूत्कारबाष्पमिव स्थितं रैवताख्यं गिरिमसौ हरिर्ददर्श स्यूते निसीव्यतेः कर्मणि क्तः छ्वोः शूडनुनासिके चेत्यूठादेशे यणादेशः । अत्र गिरेर्विशिष्टवर्णनीयत्वेन विशिष्टभूत्थानोत्प्रेक्षणाद्गुणनिमित्तं जातिस्वरूपोत्प्रेक्षा । सर्गेऽस्मिन्नानावृत्तानि तत्रादावष्टादशोपजातयः तल्लक्षणं तूक्तं अतीतानन्तरसर्गादौ । अत्रा सर्गसमाप्तेर्गिरिवर्णनमेव ॥ १ ॥ ***** ॥

॥ गिरिन्द्रस्यौन्नत्यं कीदृगित्याकांक्षायामेकान्वयेनाष्टाभिर्विशिनष्टि ॥ गुर्वीरिति । गुर्वीर्महतीर्दृषदः शिलाः नदीरित्यर्थः । पाषाणप्रस्तरग्रावोपलाश्मानः शिलादृषदित्यम

निःश्वासधूमं सह रत्नभाभिर्भित्त्वोत्थितं भूमिमिवोरगाणाम् । नीलोपलस्यूतविचित्रधातुमसौ गिरिं रैवतकं ददर्श ॥ १ ॥ गुर्वीरजस्रं दृषदः समन्तादुपर्युपर्यम्बुमुचां वितानैः । विंध्यायमानं दिवसस्य भर्तुर्मार्गं पुना रोद्धुमिवोन्नमद्भिः ॥ २ ॥ ***********

रः । उपर्युपरि दृषदां समीपोपरिप्रदेशेष्वित्यर्थः । उपर्यध्यधसः सामीप्ये इति द्विर्भावे णद्योगात् द्वितीयेति । तथाह वामनः । उपर्यादिषु सामीप्ये द्विरुक्तेषु द्वितीयेति । समन्तादजस्रमुन्नमद्भिः देशकालावच्छेदेनोत्पतद्भिरित्यर्थः । अत एव तैरम्बुमुचाम्वितानैर्मेघवृन्दैर्निमित्तेन दिवसस्य भर्तुः सूर्यस्य मार्गं पुनः रोद्धुं संहितायां रो रि इति रलोपः द्रलोपे इति दीर्घः । विंध्यायमानमिव विंध्यवदाचरन्तं तद्वद्वर्द्धमानमिव स्थितमित्यर्थः । आचारे क्यङन्ताल्लटः शानजादेशः अत्राविच्छिन्नमेघोन्नमनेन विंध्यायमानोत्प्रेक्षणात् क्रियानिमित्तक्रियास्वरूपोत्प्रेक्षा ॥ २ ॥ ************************॥

॥ क्रान्तमिति ॥ पुनर्नवानि प्रभाजालानि बिभ्रतीति नवप्रभाजालभृतः तेषां मणीनां सम्ब

न्विस्याकाञ्चनवप्रभाजा स्वर्णसानुप्रस्तनथारुचादीप्त्याक्रान्तं व्याप्तं पुनः शिलानां मेचकोपलानां इन्द्रनीलानां ग्रावणां मलनया श्यामलिम्ना अभिरामत्नया आमञ्चितषट्पदाभिः मकरन्दस्वादाहूतभृङ्गाभिः लताभिः श्रितं। इतः परं द्यन्तारमेकं यमकं वक्ष्यति। तत्तनदेवालङ्कारः। अर्थालङ्कारस्तु अभ्युच्चयेइ तियथासम्भवमूह्यम्। यमकलक्षणं त्वाचार्यदण्डिनोक्तम्। अव्यपेतव्यपेतात्माबावृत्तिर्वर्णसंहितेः। यमकं तञ्चपादानामादिमध्यान्तगोचरं। एकद्वित्रिचतुःपादयमकानां प्रकल्पना। आदिमध्यान्तमध्यान्तमध्याद्याद्यैवसर्वतः। अत्यन्तावहवस्तेषां भेदाः सम्भेदयोनयः। सुकरा दुष्कराश्चैवदृश्यन्तेतत्रकेचनेति॥ ३॥ *॥

क्रान्तं रुचाकाञ्चनवप्रभाजानवप्रभाजालभृतां मणीनाम्। श्रितं शिला श्यामलताभिरामं लताभिरामञ्चितषट्पदाभिः॥ ३॥ सहस्रसंख्यैर्गगनं शिरोभिः पदैर्भुवं व्याप्य वितिष्ठमानम्। विलोचनस्थानगतोष्णरश्मिनिशाकरं साधु हिरण्यगर्भम्॥ ४॥ क्वचिज्जलापायविपाण्डुराणि धौतोत्तरीयप्रतिमच्छवीनि। अभ्राणि बिभ्राणमुमाङ्गसङ्गविभक्तभस्मानमिव स्मरारिम्॥ ५॥ *********

॥ सहस्रेति ॥ सहस्रमिति संख्या येषां तैः सहस्रसंख्यैः शिरोभिः शिखरैः शीर्षैश्च गगनं तावत्संख्यैः पादैः प्रत्यन्तपर्वतैश्चरणैश्च भुवञ्च व्याप्य वितिष्ठमानं समवप्रविभ्यः स्थः इत्यात्मनेपदम्। विलोचनयोर्वर्त्स्थानं येग्य देशः तद्गतावुष्णरश्मिनिशाकरौ यस्य तं अन्यत्र नेत्रीकृतार्केन्दुमित्यर्थः। अतः साधुसत्यं हिरण्यगर्भं ब्रह्माणमिवेत्युत्प्रेक्षा। सहस्रशीर्षेत्यादिश्रुतेरितिभावः। हिरण्यगर्भो निधिगर्भश्च॥ ४॥ *************** ॥

॥ क्वचिदिति ॥ पुनः क्वचिदेकदेशे जलानामपायेनापगमेन विपाण्डुराणि शुभ्राणि अतएव धौतं क्षालितं यदुत्तरीयं तदुपमानत्समा छवियेषां तानि अभ्राणि मेघान् बिभ्राणं दधानं शु

अः कर्मणि शानच् अनया वामया पार्वत्याः अङ्गसङ्गेनार्द्धभागेन विनर्त्तं एकभागस्थापितम स्मयत्यनं स्मारारिं हरमिवस्थितमित्युपमालङ्कारः ॥ ५ ॥ ************ ॥

॥ छाय मिति ॥ पुनः निजस्त्रीणां चटुषु प्रियवचनेषु लालसाः लोलुपाः । लोलुपो लोलुभो लोलो लंपटो लालसोपि चेति यादवः । तेषां निजस्त्रीचटुलालसानाम्मदेन किञ्चिदीषच्च टुलाश्चपलाः तेच ते अलसाश्च विशेषणयोरपि विशेषण विशेष्यभाव विवक्षया विशेषणसमासः । तेषाञ्चटुलालसानां विहङ्गमानां हंसादीनां उन्पिञ्जलानि जातानि उन्पिञ्जलानि पूर्वेवत्समासः । तानि पत्राणि येषान्तैरुन्पिञ्जलजातपत्रैरुत्पिञ्जरीभूतदलैरित्यर्थः । रलयोरभेदः जलजातपत्रैः जलजैर्वा तपत्रैः छायां कुर्वाणां एतेन मन्दनीकमलाकरसमृद्धि

छायांनिजस्त्रीचटुलालसानां मदेनकिञ्चिच्चटुलालसानाम् । कुर्वाणामुत्पिञ्जलजातपत्रैर्विहङ्गमानां जलजातपत्रैः ॥ ६ ॥ स्कंधाधिरूढोज्ज्वलनीलकण्ठानुर्वीरुहः श्लिष्टतनूनहीन्द्रैः । प्रनर्त्तितानेकलताभुजाग्रान्रुद्रानेका नवधारयन्तम् ॥ ७ ॥ ****

र्व्यज्यते यमकरूपकयोः सङ्करः ॥ ६ ॥ ******************* ॥

॥ स्कन्धेति ॥ पुनः स्कन्धं प्रकाण्डमधिरूढाः उज्ज्वलनीलकण्ठाः मयूराः येषान्तान् अन्यत्र स्कन्धाधिरूढाः अंसस्थिताः नीलकण्ठा येषान्तान् । अंसप्रकाण्डयोः स्कन्धइ तिविश्वः । अहीन्द्रैः श्लिष्टतनून् व्याप्तदेहान् एकत्र तदावासत्वादन्यत्र भूषणत्वाच्चेति भावः । प्रनर्त्तितानि मनेकलतानामेवभुजानां लतानामिव भुजानां वाऽग्राणि येषान्तान् एवं नन्तानसंख्यान् रुद्रानिवस्थितानित्युत्प्रेक्षा उर्वीरुहो वृक्षान्धारयन्तम् ॥ ७ ॥ ********** ॥

॥ विलम्बीति ॥ विलम्बिनो नीलोत्पलान्येव कर्णपूराः कर्णावतंसा यासान्ताः लोध्रेण रेणुर कत्तगौरीरतदानाः विह्वैरादिभ्यश्चेति ङीष् कपोलभित्तीः स्त्रीणां गण्डस्थलीरिवस्थिताः

पमानत्वमाह । नवा उलपा बल्वजतृणानि । उलपाः बल्वजाः प्रोक्ता इति विश्वः । तैरलंकृ
तानां सैकतानामाभेवाभा यासां ताः कुतः शुचीः शुद्धाः शैवलिनीः शैवलवतीः अपो दधानं शु
चित्वशैवलत्वाभ्यां बिम्बप्रतिबिम्बभावेनोपमाद्वयम् ॥ ८ ॥ ************ ॥
॥ राजीवेति ॥ राजीवराजीनां पद्मपंक्तीनां वशा अधीनाः लोलाश्चला भृङ्गा यस्मिन् तं राजी
वराजीवशलोलभृङ्गं तरूणां ततिभिः संघैरुष्णमातपं मुष्णन्तं हरन्तं कान्ता अलकान्ताः चूर्ण
कुन्तलाग्रा यासां ताः कान्तालकान्ताः । अलकाश्चूर्णकुन्तलाः इत्यमरः । सुराणां ललनाः स्त्रि
योऽक्षसः रक्षोभिः अक्षोभितमनभिभूतं यथा तथा उद्वहन्तं ॥ ९ ॥ ********* ॥

विलम्बिनीलोत्पलकर्णपूराः कपोलभित्तीरिव लोध्रगौरीः । नवोलपालं
कृतसैकताभाश्शुचीरपः शैवलिनीर्दधानम् ॥ ८ ॥ राजीवराजीवश
लोलभृङ्गमुष्णन्तमुष्णन्ततिभिस्तरूणाम् । कान्तालकान्ताललनाः
सुराणां रक्षोभिरक्षोभितमुद्वहन्तम् ॥ ९ ॥ मुदे मुरारेरमरैः सु
मेरोरानीय यस्योपचितस्य शृङ्गैः । भवन्ति नोद्दामगिरां कवीनामुच्छ्रा
यसौन्दर्यगुणा मृषोद्याः ॥ १० ॥ **********

॥ नन्वल्पीयानयं कश्चिद्रैवतको नाम शिलोच्चयः कथमियद्वर्ण्यत इत्याशंकां निरस्यति ॥
मुद इति । मुरारेर्मुदे संतोषाय अमरैः कर्तृभिः सुमेरोः शृङ्गैः करणैरानीयोपचितस्य वर्द्धित
स्य आनीतैः शृङ्गैरुपचितस्येत्यर्थः । उपचये करणानां शृङ्गानामर्थादानयने कर्मत्वं यस्य
शैलस्य उच्छ्रायः औन्नत्यं सौन्दर्यं चानयोः गुणा उत्कर्षा उद्दामगिरां प्रगल्भवाचां कवीनां मृ
षा उद्यत इति मृषोद्या मिथ्यावाच्या न भवन्ति मेरुशृङ्गेषु सर्वगुणसम्भवादिति भावः । राज
सूयसूर्येत्यादिना वदः क्यबन्तो निपातः उत्कर्षः श्रायः उच्छ्राय इति घञन्तेनोपसर्गस्य स
मासः न तु पचाद्यच्प्रत्ययः श्रीणीभुवोनुपसर्गे इति नियमात् मेरोरसम्बंधेपि सम्बन्धवर्ण

न्नादन्तिशयोक्तिः ॥ १० ॥ ************************** ॥

॥ यतइति ॥ लोकः परार्ध्यानिअनूनैर्महद्भिः भूरिभिः प्रभूतैः प्रस्थैः सानुभिर्मानविशेषैश्च । प्रस्थोऽस्त्रीसानुमानयोरित्यमरः । भृतानिसम्भृतानिमितानि चउच्छिखान्युद्रश्मीनिनतानिरत्नानिशैलादाढ्यादनिकात्प्रापणाद्व्यवहारःप्रयोजनमस्यप्रापणिकोवणिक्तस्यप्रयोजनमित्तिठक् । पण्याजीवाःप्रापणिकावैदेहानैमयाश्चनेइतिवैजयन्ती । तस्मादिवाजस्रंजग्राहइउपमालङ्कारः ॥ ११ ॥ ********************* ॥

अखिद्यतेति । आसन्नमौन्नत्यात्संनिहितमतएवोदग्रतापन्दुःसहातपंरविंदधानेदिअरविन्दधानइतिविरोधःअरविन्दानांधानेनिधानेइतिपरिहारःधीयतेऽस्मिन्निनिधानं

यतःपरार्ध्यानिभृतान्यनूनैःप्रस्थैर्मुहुर्भूरिभिरुच्छिखानि । आढ्यादिवप्रापणिकादजस्रंजग्राहरत्नान्यमितानिलोकः ॥ ११ ॥ अखिद्यतासन्नमुदग्रतापंरविन्दुधानेप्यरविन्दधाने । भृङ्गावलिर्यस्यतटेनिपीतरसानमत्तामरसानमन्ता ॥ १२ ॥ *·*·*·*·*·*·*

अधिकरणेल्युट्शब्दश्लेषमूलोविरोधालङ्कारः । यस्यगिरेस्तटेनिपीतरसानिनरांस्पीतमकरन्दान्नमन्तितामरसानिपङ्केरुहाणिभारभूतयाययासानमत्तामरसा । पङ्केरुहन्तामरसमित्यमरः । अतएवमत्ताभृङ्गावलीनाखिद्यतनखिन्नाखिददैन्येदिवादिकात्कर्त्तरिलङ् । अन्यत्तस्येयंसन्निधानेध्यरविन्दाकरविहारान्मधुकरास्तापंनापुरित्यर्थः ॥ १२ ॥ * ॥

॥ यत्रेति ॥ यत्रशैलेरजतस्यविकारोराजतःप्राणिरजतादिभ्योऽञित्यञ्प्रत्ययः । सचासौगण्डशैलस्य । गण्डशैलास्तुच्युताःस्थूलोपलागिरेरित्यमरः । उन्निद्राणिविकसितानिपुष्पाण्यक्षीणिवेत्युपमितसमासःतेषांसहस्रं भजतीतितद्भाजाअधिरूढेनाध्वैर्महीरुहावृक्षेणासुराधिपेनदेवेन्द्रेणहस्तीमल्लइवतस्यहस्तिमल्लस्यैरावतस्यलीलांशोभान्दधे

ऐरावतस्य धावल्यादितिभावः। हस्तिमल्लोऽभ्रमातङ्गे हस्तिमल्लो विनायके इति विश्वः। अ स्य लीलामिव लीलामिति सादृश्याक्षेपान्निदर्शनालङ्कारः ॥ १२ ॥ ********** ॥

॥ विभिन्नेति ॥ गरुडाग्रजेनारुणेन विभिन्नवर्णा अन्यथाकृतवर्णा अरुणिमानमापादिता इत्यर्थः। सूर्यस्य सम्बन्धिनो रथं वहन्तीति रथ्याः रथाश्वाः तद्वहति रथयुगप्रासङ्गमिति यत्प्रत्ययः। यत्र शैले वंशकरीरनीलैः वंशांकुरश्यामैः रत्नैः मरकतैरित्यर्थः। वंशाङ्कुरे करीरो स्त्रीत्यमरः। वंशशब्दस्याम्लानता हेतोरनूनतायाः प्रतिपत्त्यर्थत्वाद्वैयर्थ्य न भवति। तस्मात् अतएव कार्थपदमप्रयोज्यमित्युक्त्वा करिकलभकर्णावतंसादिषु प्रतिपत्तिविशेषकरेषु इत्याह वामनः नविशेषश्चेदिति। परितः स्फुरन्त्यारुचा स्वप्रभया कारणेन पुनः स्वां रुचं निजहरितव

> यत्राधिरूढेन महीरुहोच्चैरुन्निद्रपुष्पाक्षिसहस्रभाजा। सुराधि
> पाधिष्ठितहस्तिमल्ललीलां दधौ राजतगण्डशैलः ॥ १३ ॥ विभि
> न्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या। रत्नैः पुनर्यत्र रु
> चा रुचं स्वामानिन्यिरे वंशकरीरनीलैः ॥ १४ ॥ ******

र्णमेव आनिन्यिरे आनीताः नयतेर्द्विकर्मकात् प्रधाने कर्मणि लिट्। प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणामिति वचनात् अत्र विभिन्नवर्णा एकस्तद्गुणः। रथ्यानां स्वगुणत्यागेन गरुडाग्रजगुणग्रहणात् पुनस्तत्त्यागेन मरकतगुणग्रहणादपरस्तद्गुणः तदुपजीवीति सजातीययोः सङ्करः तेन गिरेः सूर्यमण्डलपर्यन्तमौन्नत्यं वस्तु व्यज्यते। तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणग्रहः ॥ १४ ॥ ***************************** ॥

॥ यत्रेति ॥ यत्र शैले समुन्नमद्भिः समुत्पतद्भिरम्बुवाहैरुज्झिताभिस्त्यक्ताभिरद्भिर्मुहुः समुन्नं सम्यगुन्नं क्लिन्नं सिक्तमित्यर्थः। उन्दी क्लेदने इति धातोः कर्मणि क्तः। नुदविदोन्द्या दिनानिष्ठातत्त्वं विपन्नगा विगतसर्पा न भवन्तीत्यविपन्नगाः सपन्नगा इत्यर्थः। तेषामविपन्नगा

नामगानां वृक्षाणां वनं विषपावकोत्था विषाग्निसमुत्था विपदापन्न बबाधे नित्यं वर्धानुषङ्गाद्वि षाग्निक्षोभो वृक्षाणामकिञ्चित्कर इति भावः ॥ १५ ॥ ************* ॥

॥ फलद्भिरिति ॥ यः शैलः उष्णांशुकराभिमर्शादर्ककरसम्पर्कात् कृशानोरिदं कार्शानवं आग्नेयं धाम तेजः फलद्भिरुद्गिरद्भिः अर्ककरसामर्थ्यात् अग्निवर्षिभिरिति भावः पतङ्गकान्तैः सूर्यकान्तैः दृष्टान्तभूतैरिति भावः । गुणानां संक्रान्तिमन्यत्र संक्रमणं संक्रान्तगुणानित्यर्थः पात्रगुणादाधारगुणसहकारादाक्रान्तः प्राप्तो गुणातिरेकः कार्यविशेषाधानरूपो गुणोत्कर्षो यस्यास्तां शशंस निवेदयामास अर्कत्विषां सर्वत्र संक्रमणाविशेषेपि सूर्यकान्तेष्वेव ज्वल

यच्चोज्झिताभिर्मुहुरम्बुवाहैः समुन्नमद्भिर्न समुन्नमद्भिः । वनं बबाधे विषपावकोत्था विपन्नगानामविपन्नगानाम् ॥ १५ ॥ फलद्भिरुष्णां शुकराभिमर्शात्कार्शानवं धाम पतङ्गकान्तैः । शशंस यः पात्रगुणाद्गु णानां संक्रान्तिमाक्रान्तगुणातिरेकाम् ॥ १६ ॥ दृष्टोपि शैलः स मुहु र्मुरारेरपूर्ववद्विस्मयमाततान । क्षणे क्षणे यन्नवतामुपैति तदेव रूपं र मणीयतायाः ॥ १७ ॥ ✲✲✲✲✲✲✲✲✲✲✲✲✲✲

नजननदर्शनात् सर्वत्रापि संक्रम्यकारिणां गुणानामाधारगुणसहकारात्कार्यविशेषाधाय कत्वमिति निश्चयोऽत्रैव जायत इत्यर्थः ननु सहकारशक्तिविरहिणी सहजशक्तिरनुप कारिणीति भावः । वृत्त्यनुप्रासोऽलङ्कारः ॥ १६ ॥ ************** ॥

॥ दृष्टोपीति ॥ मुहुर्दृष्टोपि स शैलो मुरारेरपूर्वेणादृष्टपूर्वेणानुल्यमपूर्ववत्तेन तुल्यं क्रिया चेद्वतिः । विस्मयमाततान अतिरमणीयत्वादिति भावः । तथाहि क्षणे क्षणे प्रतिक्षणं वीप्सा यां द्विर्भावः नवतामपूर्ववद्भावं उपैतीति यत् तन्नवत्वोपगमनमेव रमणीयतायाः रूपं स्वरूपं लक्षणमित्यर्थः । अत्र रमणीयत्वलक्षणस्य नावार्थस्य विस्मयहेतुत्वसमर्थनाद्वाक्यहेतुकं का

ध्वनिङ्ग्मलङ्कारः ॥ १७ ॥ ************************ ॥

॥ उच्चारणज्ञइति ॥ अथहरिविस्मयाननरङ्गिरांवाक्यानामुच्चारणंजानातीत्युच्चार णज्ञः उक्तिकुशलः आतोनुपसर्गेकइतिकः नेगुयधेत्यादिनाअकारइनुपपदात्कर्मोपप देभवति विप्रतिषेधेनेतिवचनात् । दारुकः कृष्णसारथिः उच्चाः उन्नताः रणन्तः पक्षिगणाः यासुताः रणत्पक्षिगणास्तटीर्दधानं । धरतीतिधरंपर्वतंपचाद्यच् । अद्रावधरपर्वताइत्यम रः । द्रष्टुमुत्कंउत्सुकं । उत्कउन्मनाइतिनिपातः । उत्कन्धरमीषदुन्नमितकन्धरं शौरिमवेक्ष्य इतिवक्ष्यमाणक्रमेणवाचमुवाच । नद्यौङ्गिनद्योऽवतरेऽवतीर्दनीतिभावः ॥ १८ ॥ ****************************** ॥

उच्चारणज्ञोथगिरन्दधानमुच्चारणत्पक्षिगणास्तटीस्तम् । उत्कन्धरं द्रष्टुमवेक्ष्यशौरिमुत्कन्धरंदारुकइत्युवाच ॥ १८ ॥ आच्छादितायत दिगम्बरमुच्चकैर्गामाक्रम्यसंस्थितमुदग्रविशालशृङ्गम् । मूर्ध्नि स्खलत्तुहिनदीधितिकोटिमेनमुद्वीक्ष्यकोभुविनविस्मयतेनगेशम् ॥ १९ ॥

॥ इतःप्रभृतियमकान्तरश्लोकेषुवसन्ततिलकावृत्तंनियमेनाह ॥ आच्छादितेति । आ च्छादितान्यावृतानिआयतानिदीर्घाणिदिशोम्बरंखंचदिगम्बराणियेनतंअन्यत्रआच्छा दितंवासितमायतंदिगेवाम्बरंवासोयेनतं तयोन्नतंउच्चैरुन्नतंगांभुवमाक्रम्यव्याप्यसंस्थि तं । तथाउदग्राण्युन्नतानिविशालानिचशृङ्गाणिशिखराणियस्यतंअन्यत्रउदग्रेविशा लेशृङ्गेविषाणेयस्यतंउच्चैरुन्नतङ्गांवृषभमाक्रम्याधिष्ठायस्थितमित्यर्थः । शृङ्गंविषा णेशिखरे । गौःस्वर्गेवृषभेरश्मौवज्रेचन्द्रमसिस्मृतः । अदित्यनेत्रदिग्बाणभूवाग्वारिषुगौ र्मतेतिविश्वः । मूर्ध्निशिखरेअन्यत्रशिरसिस्फुरन्तीतुहिनदीधितेरिन्दोःकोटिः रश्मिःक लाचयस्यतमेनंनगेशंनगश्रेष्ठंरैवतकंकैलासनायकमीश्वरञ्चोद्वीक्ष्यकोनविस्मयतेसर्वोपि

मप्रभवतइत्यर्थः नेयंतुल्ययोगितापक्रुतप्रकृतविषयेतद्नुत्थानात् नापिसमासोक्तिः । तस्य विशेषणसाम्यजीवित्वात् । नापिश्लेषः उभयस्येवविशेष्यश्लेषयोगात् । तस्मात्प्रामासिकार्थमात्रपर्यवसिताभिधाव्यापारेणापिशब्देनार्थान्तरधीर्ध्वनिरित्याहुः । तदुक्तंकाव्यप्रकाशे । अनेकार्थस्यशब्दस्यवाचकत्वेनियन्त्रिते । संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनमिति । वृत्तलक्षणंतु । उक्तावसन्ततिलकातभजाजगौगइति ॥ १९ ॥ *** ॥

॥ उद्यतीति ॥ विततावूर्ध्वाश्चरश्मिरज्जवोरज्जवइवरश्मयोयस्यतस्मिन्विततोर्ध्वरश्मिरज्जौअहिमहचौसूर्येउदयतिउदीयमाने । अयगतावितिस्वरितेतंकेर्वादिच्छन्तिनः शतरिसप्तमी । तथाविततोर्ध्वरश्मिरज्जौहिमधाम्निचन्द्रेचास्तंयातिअस्तमयमानेशतरि

उद्यतिविततोर्ध्वरश्मिरज्जावहिमरुचौहिमधाम्नियातिचास्तम् ।
वहतिगिरिरयंविलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ॥ २०
॥ वहतियःपरितःकनकस्थलीःसहरितालसमाननवांशुकः । अचलएषभवानिवराजतेसहरितालसमाननवांशुकः ॥ २१ ॥ *

सप्तमी । अयंगिरिर्विलम्बिनाविशेषलम्बमानेनघण्टाद्वयेनपरिवारितस्यवेष्टितस्यवारणेन्द्रस्यलीलांशोभांवहति । अत्रलीलामिवलीलामितिसादृश्याक्षेपान्निदर्शनं । तथाह्यर्थचन्द्रमसावस्यकुक्षिसमानकक्षाम्भिभ्रतामितिमहदैान्तव्यंव्यज्यते । पुष्पिताग्रावृत्तम् । अयुजिनयुगरेफतोयकारोयुजिचनजौजरगाश्चपुष्पिताग्रा ॥ २० ॥ ****** ॥

॥ वहतीति ॥ तालसमानादीयमानानवांशवोयस्यसतालसमाननवांशुकःशैषिकःकःप्रत्ययः अचलःसहरिताःसदूर्वाः । हरितेतिचदूर्वायांहरिद्वर्णयुतेऽन्यवदितिविश्वः । कनकस्थलीःस्वर्णभूमीःजानपदेत्यादिनाअकृत्रिमार्थेङीप्परितोवहतिसएषोऽचलःहरितालेनकर्चूरेणसमानंनवमंशुकंवासोयस्यसहरितालसमाननवांशुकःपीताम्बरोभवानिवरा

क्तौ । द्रुतविलम्बितंवृत्तं । द्रुतविलम्बितमाह नभौ भराविति लक्षणात् ॥ २१ ॥ ** ॥
॥ पाश्चात्येति ॥ इहाद्रेः सानुषु सन्निषण्णाः स्थिताः जनाः शान्तमलङ्कलङ्कस्य पुरोवर्तिन्या
न्तिः कलङ्कमलरहितसान्द्रतरमंशुजालं यस्य तं संपूर्णं परिपूर्णं लक्ष्म्या हृद्यं ललनालपनोपमानं
स्त्रीमुखसादृश्यं येन तं । आननं लपनं मुखमित्यमरः । कुतः उत्सङ्गसङ्गि हरिणस्य अङ्कस्थ
मृगस्य मृगाङ्कात् मृगचिह्नात् मूर्तिर्यस्य तस्य मृगाङ्कमूर्तेश्चन्द्रस्य पश्चाद्भवः पाश्चात्यः दक्षिणा
पश्चात्पुरस्सव्यक् । एवाऽसौ भागश्चतं पाश्चात्यभागं पृष्ठभागं पश्यन्ति पाश्चात्यभागदर्शना
न्निश्चयोक्त्याभावगौरान्यध्वनिः । वसन्ततिलकावृत्तं ॥ २२ ॥ ********** ॥
॥ कुर्वन्तीति ॥ अत्राद्रेर्निर्झररौघाः गिरिनदप्रवाहाः । प्रवाहो निर्झरो झर इत्यमरः ।

पाश्चात्यभागमिह सानुषु सन्निषण्णाः पश्यन्ति शान्तमलसान्द्रतरांशु
जालम् । सम्पूर्णलक्ष्मललनालपनोपमानमुत्सङ्गसङ्गिहरिणस्य मृगा
ङ्कमूर्तेः ॥२२॥ छायापुंवत्पातमुच्चैर्भृगुभ्यो मूर्ध्निग्राव्णां जर्जरा निर्झरौ
घाः । कुर्वन्ति द्यामुत्पतन्तः स्मरार्तस्वर्लोकस्त्रीगात्रनिर्वाणमत्र ॥२३॥

चूतवृक्ष इत्यादिवत्सामान्यविशेषभावादपुनरुक्तिः पुंवत्पुम्भिस्तुल्यं तेन तुल्यं क्रिया चेदि
ति वतिः उच्चैः भृगुभ्यः अतटेभ्यः । प्रपातस्त्वतटो भृगुरित्यमरः । ग्राव्णां शिलानां मूर्ध्नि पातं क
त्वापतित्वा जर्जराः शकलीभूताः द्यामाकाशम्प्रत्युत्पतन्तः स्मरार्त्तानां स्वर्लोकस्त्रीणां खेचरीणा
मप्सरसाङ्गात्रनिर्वाणमङ्गनिर्वृत्तिं कुर्वन्ति । अनुष्ठानासमर्थस्य वानप्रस्थस्य ज्योर्यतः । भृ
ग्वग्निवृक्षसम्पातैर्मरणं प्रविधीयत इति विहितम् । भृगुपातिनां पुंसां स्वर्लोकगामिनामि
होपमानात् । शालिनीवृत्तं ॥ २३ ॥ ****************** ॥
॥ स्थगयन्तीति ॥ इहाद्रौ क्वचिदमूर्जगतीर्भूमीः । जगती भुवने भूमाविति विश्वः । शं मता
नाश्वानकानामार्तस्वरयैस्तैः समितचातकार्तस्वराः संवर्तहापतितमम्बु नवानकानामित

भूमिगतस्यनेषांविषादत्वाद्भीमाम्बुदानेनोज्जीवयन्तीत्यर्थः किञ्चतडित्तुलितानितडप्रभितानिकान्तानिकान्तस्वराणिसुवर्णानियैस्तैर्तडित्तुलितवान्तकान्तस्वराःसुरणेनेधामपिनद्धत्सुरणादिनिभावः। तेजलदाःस्थगयन्तिआच्छादयन्तिस्थगआच्छादनेइतिधौरादिकः। क्वचित्स्फुरितानिउल्लसितानिचारूणिचामीकराणिसुवर्णानियैस्तेस्फुरितचारुचामीकराःअमीसवितुःकराःआतपास्तकपिशयन्तिकपिशिताःकुर्वन्तिकचिद्दृष्टिःक्वचिदातपश्चेतिमहदाश्चर्यमितिभावः। शाक्करपथ्यावृत्तं। सजसजसलगेनपथ्यामता ॥ २४ ॥ ****************************** ॥

॥ उत्क्षिप्तमिति ॥ उत्क्षिप्ताःउच्छ्रिताःसितांशोःचन्द्रस्यकराःअंशावोहस्ताश्चावलंबाये

स्थगयंत्यमूःशमितचतकान्तस्वराजलदास्तडित्तुलितकान्तकान्तस्वराः। जगतीरिहस्फुरितचारुचामीकराःसवितुःक्वचित्कपिशयन्तिचामीकराः ॥ २४ ॥ उत्क्षिप्तमुच्छ्रितसितांशुकरावलम्बैरुत्तम्भितोडुभिरतीवतरांशिरोभिः। श्रद्धेयनिर्झरजलव्यपदेशमस्यविष्वक्तटेषुपततिस्फुटमन्तरीक्षम् ॥ २५ ॥ * * * * * * * * * * *

यान्तैःउत्तम्भितान्युडूनियैस्तैःउडूनिचावष्टभ्येत्यर्थः। शिरोभिःशिखरैर्मस्तकैश्चातीवतराभृशतरंअतीवशब्दाद्व्ययादाम्प्रत्ययःउत्क्षिप्तमुच्छ्रितंअन्तरीक्षंश्रद्धेयः सादृश्याद्विश्वसनीयः निर्झरजलमितिव्यपदेशोव्यवहारोयस्यतत् दृढतरंनिर्झरत्वधियंकुर्वदित्यर्थः। अस्याद्रेस्तटेषुविष्वक्समन्तात्पततिस्फुटंसत्यंइन्दुकरानुडूनिचावष्टभ्यशिरोभिर्ध्रियमाणमपिदुरुद्धरत्वाद्दृश्यदन्तरीक्षमेवेदंननुजलंसादृश्यात्तुव्यपदेशोदुर्वारइतिसर्वतःपातिनिर्झरजलंचोत्प्रेक्षतेनेनोत्सेधविस्तारावस्यव्यज्येते॥ २५ ॥ **** ॥

॥ एकत्रेति ॥ एकत्रएकस्मिन्भागेस्फटिकस्यतटनाख्यांशुभिर्विभिन्ननीराःमिश्रोद

ता:शुभ्रजला इत्यर्थः। अपरत्रापरस्मिन्भागे नीलाश्मनामिन्द्रनीलानां द्युतिभिःभिदुरा
णि मिश्राण्यम्भांसि यासां ताः नीलसलिला इत्यर्थः। इहाद्रौ सरितः कलिन्दस्याद्रेरियं
कालिन्दी यमुना। कालिन्दी सूर्यतनया यमुना शमनस्वसेत्यमरः। तस्या जलैः जनिता:
श्रीः शोभा यस्यास्तस्याः तत्सङ्गताया इत्यर्थः। सुरापगायाः गङ्गायाः वैदग्धीं शोभां श्रयन्ते
भजन्ति विदग्धस्य भावः वैदग्धी ब्राह्मणादित्वात् गुणवचनेत्यादिना ष्यञ् प्रत्ययः षिद्गौरादि
भ्यश्चेति ङीष् सा पौनत्वस्य वा तुल्यकत्वादिह विकल्पः अतएव वक्ष्यन्ते षित्करणादीकारो बहुल
मिति वामनः। अत्र सितासितमणिगुणग्रहणात् सरितां यमुना सङ्गत गङ्गा शोभा सादृश्या
पेक्षायास्तद्गुणोत्थापिता निदर्शना। प्रहर्षिणी वृत्तम्॥ २६ ॥ ********** ॥

एकत्र स्फटिकतटांशुभिन्ननीरा नीलाश्मद्युतिभिदुराम्भसोऽ
परत्र। कालिन्दीजलजनितश्रियः श्रयन्ते वैदग्धीमिह सरि
तः सुरापगायाः॥ २६ ॥ इतस्ततोऽस्मिन्विलसन्ति मेरोः समा
नवप्रेमणि सानुरागाः। स्त्रियश्च पत्यौ सुरसुन्दरीभिः समानव
प्रेमणि सानुरागाः॥ २७ ॥ ***********

इतइति। मेरोः समानवप्रे तुल्यप्रस्थे अतएवास्मिन्नद्रावितस्ततो मणिसानुरागाः तत्तटका
न्तयो विलसन्ति प्रसरन्ति किञ्च नवप्रेममयस्य तस्मिन्नवप्रेमणि पत्यौ अनुरागेण सह वर्त्तन्त इति
सानुरागाः सुरसुन्दरीभिः समाः सरूपाः स्त्रियश्च इतस्ततो विलसन्ति क्रीडन्ति अन्योन्यसानु
रागिणोऽनुरूपाश्चेह विलासिनस्तदनुरूपाणि च विहारस्थलानि सन्तीति भावः॥ २७ ॥
॥ उच्चैरिति ॥ इहाद्रौ सान्द्रया सुधयालेपविशेषेण आमृतेन महारजतराजिविराजिता का
ञ्चनरेखा शोभिता अस्ता पुरोवर्त्तिनी उच्चैरुन्नता दुर्वर्णभित्तिः रजतभित्तिः। दुर्वर्णं रजतं रू
प्यं महारजतकाञ्चनमित्यमरः। भस्मना परिपाण्डुरितस्य स्मरारेरुद्दह्लिङ्गनार्चिता

न्मेवललामभूषणंयस्यतस्यललाटस्यलीलांशोभामभ्येतिभजतीतिनिदर्शनालङ्कारः ।
ललामंच्छपुण्ड्राश्वभूषाप्राधान्यकेतुष्वित्यमरः ॥ २८ ॥ ************* ॥

॥ अयमिति ॥ अयङ्गिरिरतिजठरः अतिकठिनाः अतिजरतीश्च । जठरः कठिनेजीर्णे इति वैजयन्ती । प्रकामङ्गुर्वीः श्रेष्ठाः स्थौल्यदुर्भराश्चप्रकामगुर्वीः । गुरुस्तुगोष्पतौश्रेष्ठेगुरौपितरिदुर्भरेइतिशब्दार्णवे । विस्पष्टचटुवत्मयूरव्यंसकादयश्चेतिसमासः अलघुभिर्विलम्बिभिर्लम्बमानैश्चपयोधरैर्मेघैः स्तनैश्चउपरुद्धाः आवृताः निबद्धाःसततंसर्वदाअसुमतांप्राणभृतामगम्यरूपाः अत्युन्नतत्वात्दुरारोहस्वरूपाः अन्यत्रवृद्धत्वाद्गमनानर्हविग्रहाः । त्यजेदन्यकुलोत्पन्नांवृद्धांस्त्रीकन्यकान्तयेतिगमननिषेधादितिभावः । परिणतानिर्यग्दन्तप्रहा

उच्चैर्महारजतराजिविराजितासौदुर्वर्णभित्तिरिहसान्द्रसुधासवर्णा । अभ्येतिभस्मपरिपाण्डुरितस्मरारेरुद्वह्निलोचनललामललाटलीलाम् ॥ २८ ॥ अयमतिजठराः प्रकामगुर्वीरलघुविलम्बिपयोधरोपरुद्धाः । सततमसुमतामगम्यरूपाः परिणतदिक्करिकातटीर्बिभर्ति ॥ २९ ॥ *** 

रिणोदिक्करिणोदिग्गजाः यासुताः परिणतदिक्करिकाः । निर्यग्दन्तप्रहारस्तुगजः परिणतः इतिहलायुधः । इनः स्त्रियामितिसमासान्तः कः प्रत्ययः अन्यत्रपरिणताकीर्णभूताः दिशोदन्नक्षत्रविशेषाः करिकानखव्रणाश्चयासान्ताः । दिग्दृष्टंवर्त्तुलाकारकरिकानखव्रणेचकेतिवैजयन्ती । तटीर्बिभर्त्तिअत्रप्रकृततटीविशेषणमहिम्ना अप्रकृतवृद्धाङ्गनाप्रतीतेः समासोक्तिः । पुष्पिताग्रावृत्तमुक्तम् ॥ २९ ॥ ************** ॥

॥ धूमेति ॥ इत्वाङ्गेपुरोऽग्रेवर्णेनाग्नेःसमानेअग्निसमानवर्णेइत्यर्थः । सौवर्णेसुवर्णविकारेतटेकुसुमसमूहेचोनांस्थितांत्वादिभ्यश्चेतिनिष्ठानत्वंअलीनांभृङ्गाणामालीआवली

न्बिभ्राणाः अत एव श्यामीभूताः अमी तरवो धूमाकारं धूमसाम्यं दधतीत्यं पश्य अग्निवर्त्मानि स्वर्णतटे श्यामास्तरवो धूमवन्त्यानीत्युपमा । जलधरमालावृत्तं । अब्ध्यङ्गैः स्याज्जलधरमालाम्भौ स्मौ विनिलक्षणात् ॥ ३० ॥ ************************ ॥

॥ व्योमेति ॥ व्योमस्पृशोऽभ्रंकषाः उन्निद्रैः विकसितैः पुष्पैर्वित्ताः उन्निद्रपुष्पचणाः तेन वित्तश्चुञ्चुचणपप्रत्ययः ते च ते चम्पकाश्च तद्वत्पिङ्गभासः पिङ्गवर्णाः कलधौतभित्तीः कनकतटीः । कलधौतं रूप्यहेम्नोरिति विश्वः । प्रथयता प्रकटयता अत एव सौमेरवीं सुमेरुसम्बन्धिनीं नितम्बशोभां कटकलक्ष्मीं अधिगतेन प्राप्तवता । गत्यर्थकर्मकेत्यादिना गमेः कर्त्तरि क्तः ।

धूमाकारं दधति पुरः सौवर्णे वर्णनाग्रेः सदृशितटे पश्यामी श्यामीभूताः । कुसुमसमूहेऽलीनालीनां श्रेणीमिह तरवो बिभ्राणाः ॥ ३० ॥

व्योमस्पृशः प्रथयता कलधौतभित्तीरुन्निद्रपुष्पचणचम्पकतुल्यभासः । सौमेरवीमधिगतेन निकुञ्जशोभामेतेन भारतमिलावृतवद्विभाति ॥ ३१ ॥

रुचिरचित्रतनूरुहशालिभिर्विचलितैः परितः प्रियकव्रजैः । विविधरत्नमयैरभिभात्यसाववयवैरिव जङ्गमतां गतैः ॥ ३२ ॥ ***

एतेन रैवतकाद्रिणा भारतस्य एतद्भारताख्यं वर्षं भूखण्डं । स्याद्वर्षो लेकधामेंशे वत्सरे वर्मस्त्रियामिति विश्वः । इलावृतवदिलावृतवर्षमिव विभातीत्युपमा । नवखण्डस्य जम्बूद्वीपस्य हेमाद्रेर्दक्षिणभूखण्डं हैमवतापरनामकं भारतम्वर्षं तस्यैव सुमेरुयोगात्सौमेरवाख्यं मध्यमखण्डमिलावृतवर्षं अत एव । नाभेरद्भारतं वर्षं हेमाद्रेस्तच्च दक्षिणं । तेन हैमवतं नामपरे वर्षे वमुन्नयेत् । इलावृतं सौमेरवं सुमेरोः परितो हिमादिति वैजयन्ती ॥ ३१ ॥ * ॥

॥ रुचिरेति ॥ असौ गिरिः रुचिरैः उज्ज्वलैः चित्रैर्नानावर्णैस्तनूरुहैः लोमभिः शालन्त इति शालीनः परितः प्रचलितैः प्रसरद्भिः प्रियकाः कन्दलप्रकृतयो मृगविशेषाः । प्रियकोऽन

भिर्युक्तोमृदूच्चमस्तृणैर्घनैरितिवैजयन्ती। तेषांव्रजैःसमूहैःजङ्गमानाञ्चरिष्णुनाङ्गनैर्वीथि

धरत्नमयैरवयवैःस्वाङ्गैरिवप्रतिभातीत्युत्प्रेक्षा। द्रुतविलम्बितंवृत्तम॥ २२ ॥ ** ॥

॥ कुशेशयैरिति ॥ अत्राद्रौजलाशयोषिताःजलाशयेषुह्रदेषुउषितावसन्तः। गत्यर्थक

र्मकेत्यादिनावसतेःकर्त्तरिक्तःसम्प्रसारणंमनिवृद्धिपूजार्थेभ्यश्चेतिचकाराद्वर्त्तमानार्थता।

कलभास्त्रिंशद्वर्षकाः। त्रिंशद्वर्षस्तुकलभइतिवैजयन्ती। विकस्वरैर्विकसनशीलैःस्थेश

भासविकसेत्यादिनावरच्। कुशेशयैःशतपत्रैःमुदाप्रीत्यारमन्तेक्रीडन्तिकरिविहारिणांकमलाक

रणामयमाकरइतिभावः किञ्चकलाअव्यक्तमधुराः विकारोमानसोभावः सप्रयोजनमेषा

भावविकाउद्दीपकाइत्यर्थः कलभाविकाश्चस्वराःषड्जादयस्तैर्येषान्तैः कलभाविकस्वरैः

कुशेशयैरत्र जलाशयोषितामुदारमन्ते कलभाविकस्वरैः। प्रगीयतेसि

द्धगणैश्चयोषितामुदारमन्ते कलभाविकस्वरैः ॥ २३ ॥ आसा

दितस्यतमसानियतेर्नियोगादाकांक्षतःपुनरपक्रमणेनकालम्। प

त्युस्त्विषामिहमहौषधयःकलत्रस्थानंपरैरनभिभूतममूर्भजन्ते। २४॥

सिद्धगणैःसुरसङ्घैःयोषितांस्वस्त्रीणामन्तेसमीपेउदारमुच्चैःप्रगीयतेचभूस्वर्गोऽयमितिभा

वः॥ २३॥ ****************************** ॥

॥ आसादितस्येति ॥ इहाद्रौअमूर्महौषधयःनियतेर्नियोगादस्मिन्कालेइदंभावीतिदै

वशासनात्। तमसाऽन्धकारेणतत्प्रायेणव्यसनेनवाआसादितस्याक्रान्तस्यपुनरपक्रमणेन

पुनरावृत्त्याकालंसमागमकालमाकांक्षतःपुनरागत्यसङ्गन्तुमिच्छतइत्यर्थः त्विषांपत्युःसूर्य

स्यसम्बन्धिपरैःपुरुषान्तरैश्चानभिभूतमतिरस्कृतमनुपहतञ्चकलत्रस्थानंकलत्रभूतानांत्वि

षांस्थानंस्थितञ्चवहन्तिनिर्वहन्तीत्यर्थः। स्त्रीणांस्त्रीष्वेवरक्षणंकार्यमितिभावः। यथाके

नचिदापदिन्यासीकृतानिकलत्राणिसंरक्ष्यकालान्तरेसाध्व्यास्तस्मैप्रयच्छन्तिमहदोषधयो

पिविधः त्विषां पचुर पंयन्तिइत्यर्थः एतच्चभासांक्षर्यासमये प्रज्वलनादुदये विपर्ययाच्चोपचर्यते। अत्रविशेषणसाम्यादर्कादीनामापन्नादिसाम्यप्रतीतेः समासोक्तिरलङ्कारः ॥ ३४ ॥

॥ वनस्पतीति ॥ अत्राङ्ग्रेवनस्पतयोवृक्षाः। वनस्पतिर्वृक्षमात्रेविनापुष्पफलद्रुमेइतिविश्वः। तेषांस्कन्धेषुप्रकाण्डेषुअंसेषुचनिषण्णाःसक्ताःबालप्रवालावालपल्लवाहस्ताइवयासांतास्तथोक्ताः मधूनिव्रतयन्तिभुञ्जतेइतिमधुव्रतामधुपास्तेषांव्रातेनवृन्देनवृतैःछन्नैःअतएवलम्भिताःप्रापिताःलोचकास्तारकाणिकज्जलानियैस्तैर्वर्त्मभिरिवस्थितैरित्युत्प्रेक्षाइवार्थेवाशब्दःतदुत्प्रेक्षायाश्चव्यक्तः। लोचकोमांसपिण्डेस्यादक्षितारेचकज्जलइतिविश्वः। पुष्पैरीक्षणैरिवपुष्पेक्षणैरुपलक्षिताःव्रतत्योलताःप्रमदाइवलक्ष्यन्तइतिशेषःतप्रसिद्धिः।

वनस्पतिस्कंधनिषण्णबालप्रवालहस्ताःप्रमदाइवाच । पुष्पेक्षणैर्लम्बितलोचकैर्वामधुव्रतव्रातवृतैर्व्रतत्यः ॥ ३५॥ विहगाःकदम्बसुरभाविहगाःकलयन्त्यनुक्षणमनेकलयम् । भ्रमयन्नुपैतिमुहुरभ्रमयंपवनश्चधूतनवनीपवनः ॥ ३६ ॥ **********

याध्याहारदोषइत्याहवामनः। निङ्गाध्याहारवदिति॥ ३५ ॥ ********** ॥

॥ विहगाइति ॥ कदम्बैःसुरभिःसुगन्धिस्तस्मिन्कदम्बसुरभाविहाङ्गे। विहगाःपक्षिणःअनुक्षणंप्रतिक्षणंअनेकेबहुविधालयाविच्छेदायस्मिन्कर्मणितद्यथातथागाःवाचःशब्दानित्यर्थःकलयन्ति। अर्जुनीनेत्रदिग्बाणभूवाग्वारिषुगौर्मतेतिविश्वः। किञ्चधूतानिकम्पितानिनवानिनीपवनानिकदम्बकाननानियेनसधूतनवनीपवनः। नूलश्चनीपप्रियककदम्बास्तुहलिप्रियइत्यमरः। अयम्पवनस्समुहुरभ्रम्मेघम्भ्रमयन्नुपैति। प्रमिताक्षरवृत्तं। प्रमिताक्षरासजससैरुदितेतिलक्षणात्॥ ३६ ॥ ********** ॥

॥ विद्भिरिति ॥ एषोऽङ्ग्रिःश्रेयान्श्रेष्ठःद्विजानिर्ब्राह्मणइवागमोनिधिकव्योमकपाः

[illegible]स्तएवंपरम्प्रधानंवेधानैरागमपरैर्विद्वद्भिर्निधीनांमन्त्राणांचशोधनविधानज्ञैः कथं
चिद्विवृतंस्वरूपतःप्रकाशितंनात्तिनिश्चितार्इदमित्थमितिनिश्चयात्मिकाधीर्येषांतैरनि
श्चितधीभिरन्यैः शास्त्रज्ञैःश्रुत्वापिदुर्ग्रहंनिधिरत्निईदृग्महिमासौमन्त्रइतिचाप्रमखादा
कर्ण्यापिदुर्ग्रहन्दुःसाधनंअघानिदुःखान्येनांसिचहन्तुंदक्षंसमर्थम।दःखैनोव्यसनेष्वघमि
तिवैजयन्ती। गूढःसंवृतोऽर्थोधनमभिधेयञ्चयस्मिन्तंगूढार्थंनिधयोमन्त्राइवान्यत्रनि
धयइवमन्त्रास्तेषाङ्गणंविभर्त्तिद्विजातिर्मन्त्रगणंनिवनिधिगणमेषबिभर्त्तीइत्युपमार्थः ॥
३७॥ ******************************** ॥

॥ विम्बोष्ठमिति ॥ इहाङ्गेतुरङ्गस्यवक्त्रंयस्यसतुरङ्गवक्त्रोदेवयोनिविशेषःसप्तम्युपमा

विद्वद्भिरागमपरैर्विवृतंकथञ्चित्श्रुत्वापिदुर्ग्रहममुंनिश्चितधीभिरन्यैः
। श्रेयान्द्विजातिरिवहन्तुमघानिदक्षंगूढार्थमेषनिधिमन्त्रगणंबिभ
र्त्ति ॥ ३७ ॥ विम्बोष्ठंबहुमनुतेतुरङ्गवक्त्रश्चुम्बन्तंमुखमिहकि
न्नरंप्रियायाः। श्लिष्यन्तंमुहुरितरोऽपितंनिजस्त्रीमुत्तुङ्गस्तनभरभङ्ग
भीरुमध्याम् ॥ ३८ ॥ *************

नपूर्वपदस्यबहुव्रीहिरुत्तरपदलोपश्चेत्युष्ट्रमुखवत्समासःविम्बकल्पऔष्ठोयस्यतन्विम्बो
ष्ठमित्युपमालङ्कारः। ओत्वोष्ठयोःसमासेवापररूपंवक्तव्यमित्योकारः । प्रियायाःमुख
ञ्चुम्बन्तंकिन्नरंमानुषमुखमश्वाङ्गंदेवयोनिविशेषम्बहुगुरुयथातथामनुतेऽवबुध्यतेतुरङ्ग
वक्त्रस्यचुम्बनासम्भवादितिभावःइतरः किन्नरोपितुरङ्गेनस्तनभरेणायोभङ्गस्तस्माद्भीरु
र्मध्योयस्यास्तांनिजस्त्रींस्वस्त्रियंवाम्श्लेषोरिर्निविकल्पादिङादेशाभावःमङ्गःश्लिष्यन्तंमा
नुषाङ्गत्वादालिङ्गन्तन्तुरङ्गवक्त्रम्बहुयथातथामनुतेतुरङ्गवपुषः किन्नरस्याश्लेषासम्भवा
दितिभावःदुर्लभंप्रियंभवतीतिरहस्यं । मध्यस्याभङ्गेपिभंगोक्तेरतिशयोक्तिःउपमयासंसृ

ध्यते । प्रहर्षणीवृत्तमुक्तम् ॥ ३८ ॥ ************************ ॥

॥ यद्विति ॥ अस्याद्रेरनुतटन्तटेषु विभक्त्यर्थेऽव्ययीभावः तता विस्तृता अनेके तमाला लता यस्मिन् ततताऽनेकतमाललतालं यदेतत्पुरोवर्त्ति वनम् विभाति स्थगितार्करश्मि निरोहिता तपे अनन्तताने अपारविस्तारेऽत्र वनेकतमाललताकावालता अलमत्यन्तं नपुष्पिता सञ्जातपुष्पा न भवतीति शेषः सर्वापि पुष्पितेत्यर्थः ॥ ३९ ॥ ****************** ॥

॥ दन्तेति ॥ अधित्यकासु दन्तानि कुञ्जा दशनाश्च । दन्तो निकुञ्जे दशने इति विश्वः । तैरुज्ज्वलासु रुचिरासु सदन्तेषु सितानि कटकानि सानूनि बलयानि च यासां तासु । कटकं वलये सानाविति विश्वः । अधित्यकासूर्ध्वभूमिषु । भूमिरूर्ध्वमधित्यकेत्यमरः । उपाधि

यदेतदस्याऽनुतटं विभाति वनं तताऽनेकतमाललालम् । नपु-
ष्पिताऽत्रस्थगितार्करश्मा वनं तताऽनेकतमाललालम् ॥ ३९ ॥
दन्तोज्ज्वलासु विमलोपलमेखलान्ताः सद्रत्नचित्रकटकासु
बृहन्नितम्बाः । अस्मिन्भजन्ति घनकोमलगंडशैला नार्यो
नुरूपमधिवासमधित्यकासु ॥ ४० ॥ ******

भ्यामधित्यकात्यकन्नासन्नारूढयोरित्यधिशब्दात्त्यकन्प्रत्ययः विमलोपलाः उज्ज्वलशिलाउज्ज्वलमणयो वा मेखलाः काञ्च्यो नितम्बभूमयश्च मेखलाखड्गबन्धे स्यात्काञ्चीशैलनितम्बयोरिति विश्वः । नाभिरन्तारम्याः । मृतावबस्तिनेरम्ये समासावन्तइत्यनइति शब्दार्णवे । बृहन्तोनितम्बाः कटिपश्चाद्भागा शिखराणि च यासां ताः । नितम्बो रोधसि स्कन्धे शिखरेपि कटेरधइति विश्वः । घना विपुलाः कोमलाः श्लक्ष्णाः । गण्डशैलाः गण्डस्थलानि स्थूलोपलाश्च यासां ताः नार्यानुरूपमिच्छासदृशं आत्मसदृशं चाधिवासं भजन्ति अन्यच्च नारीणामधिकान्ताच्च प्रकृतत्वात्केवलप्रकृतगोचरश्लेषोपस्थापितानुव्ययोगिता । अत एवोभयत्र विशेष

णानिउभयत्रविभक्तिविपरिणामेनयोज्यानि ॥ ४० ॥ ************** ॥

॥ अननीति ॥ इहाद्रौविरलंयथातथाविकीर्णावज्रशकलायस्यांसाधौतामुभ्राकनधौ
तमहीरजतभूमिःजलदेनानतिचिरोज्झितस्यतत्कालमुक्तस्यसुभ्रस्येतिभावःचिरस्थिता
चिरस्थायिनोबहवस्सबुद्बुदाजलस्फोटायस्मिन् तस्यपयसोम्भसःसकलामनुकृतिंसमग्र
सादृश्यंविदधातिअत्रमेघोज्झितजलस्यस्थिरबुद्बुदासम्बन्धेपिसम्बन्धोक्तेरतिशयोक्तिः।
कुररीरुतावृत्तम् । कुररीरुतानजभजैर्लगयुगिति लक्षणात् ॥ ४१ ॥ ****** ॥
॥ वर्जयन्त्येति ॥ एकान्ततःएकान्तेरहसीत्यर्थःकान्ततःकान्तेनप्रियेणेत्यर्थःउभयत्रा
पिसर्वविभक्तिकस्तसिः सङ्गमेरतिसुखंतर्कयन्त्याउत्प्रेक्षमाणयानिरस्यंविहारमाकांक्ष

अनतिचिरोज्झितस्यजलदेनचिरस्थित बहुबुद्बुदस्यपय
सोनुकृतिम् । विरलविकीर्णवज्रशकलासकलामिह विदधा
तिधौतकलधौतमही ॥ ४१ ॥ वर्जयन्त्याजनैःसङ्गमेकान्तत
स्तर्कयन्त्यासुखंसङ्गमेकान्ततः । योषयैषस्मरासन्नतापाङ्गया
सेव्यतेनेकयासन्नतापाङ्गया ॥ ४२ ॥ ******

न्त्याइत्यर्थः । अतएवजनैःसङ्गम्वर्जयन्त्याकुतःस्मरेणासन्नप्रत्तापानिप्राप्ततापानिअ
ङ्गानियस्यास्तयास्मरासन्नतापाङ्गया । अङ्गगानकण्ठेभ्यश्चेतिवक्तव्यमितिविकल्पादीङ्
प्रत्ययःसन्नतावपाङ्गौयस्यास्तयासन्नतापाङ्गयास्मरतापानत्कोणनेत्रया अनेकयायोषया
अनेकाभिर्योषाभिरित्यर्थःजातावेकवचनं । स्त्रीयोषिदबलायोषानारीसीमन्तिनीवधूरित्य
मरः । एषोद्रिःसेव्यतेइच्छाविहारस्थानानिइहसन्तीतिभावः । स्रग्विणीवृत्तं । रैस्तु
भिर्युतास्रग्विणीसम्मतेति ॥ ४२ ॥ ************************ ॥
॥ संकीर्णेति ॥ अस्मिन्नद्रौसंकीर्णाःमिथःसन्दष्टाःकीचकाःवेणुविशेषाः । वेणवःकीचका

कीसुर्यैस्वनन्त्यनिलोद्धताइत्यमरः। तेषांवनेस्खलितस्यैकबालस्यैकरोम्णोविच्छेदात्का
तराचस्त्राधीर्यासांताश्चमर्यः मृदुश्वसनोमन्दमारुतोगर्भेयेषान्तेभ्यस्तदीयरंध्रेभ्यःकीचक
विवरेभ्योनिर्यतोनिर्गच्छतःस्वनस्यश्रुत्याश्रवणेनसुखंतस्मादिवेतिहेतूत्प्रेक्षाचलितुंनोत्स
हन्ते। वस्तुतस्तुवालप्रियत्वादितिभावःशकधृषेत्यादिनातुमुन्प्रत्ययः ॥ ४३ ॥ ** ॥
॥ मुक्तमिति ॥ इहाद्रावन्तर्लीनानिमहानीलदलानिइन्द्रनीलविशेषखण्डानियासुता
सु। सिंहलस्याकरोद्भूतामहानीलास्तुतेमताःइतिभगवानगस्त्यः। वापीषुदीर्घिकासु
अभ्रैर्मेघैर्मुक्तंमुक्तागौरंमौक्तिकशुभ्रंअतएवक्षीरमिवस्थितंअभ्रैःशस्त्रीछुरिका। स्याच्छ
स्त्रीचासिपुत्रीचछुरिकाचासिधेनुकेत्यमरः। बह्वादिभ्यश्चेतिङीप्। शस्त्रीवत्श्यामैरंशु

संकीर्णंकीचकवनस्खलितैकबालविच्छेदकातरधियश्चलितुंचमर्य्यः
। अस्मिन्मृदुश्वसनगर्भतदीयरंध्रनिर्य्यत्स्वनश्रुतिसुखादिवनोत्स
हन्ते ॥ ४३ ॥ मुक्तंमुक्तागौरमिहक्षीरमिवाभ्रैर्वापीष्वन्तर्लीनि
महानीलदलासु। शस्त्रीश्यामैरंशुभिराशुद्रुतमंभच्छायामच्छा
मृच्छतिनीलोसलिलस्य ॥ ४४ ********** 

भिरन्तर्गतेन्द्रनीलमरीचिभिःआशुतत्क्षणमेवद्रुतंलोडितंसतच्छुरितमित्यर्थःनीलीसलि
लस्यनीलाख्यौषधिपत्ररसस्य। नीलिकाञ्जीनीतिकेत्यमरः अच्छांछायांकान्तिमृच्छ
तितत्सदृशींछायांगच्छतीत्यर्थः। अतोदर्शनालङ्कारः। सचमुक्तागौरक्षीरमिवशस्त्रीश्या
मैरितिचोपमात्रयेणान्तर्लीनमहानीलदलासुवापीष्वितिपदार्थहेतुकंकाव्यलिङ्गेनो
त्थापितेनांशुभिर्द्रुतमितितद्गुणोत्थापितइत्यङ्गाङ्गिभावेनसङ्करः। क्षीरमिवेत्यनेनेन्द्रनी
लानांसौक्ष्म्यंसूचितं। क्षीरमध्येक्षिपेन्नीलंक्षीरञ्चेन्नीलतांव्रजेत्। इन्द्रनीलमितिख्यातंइ
तिलक्षणसम्भवान्। तेचात्रनीलीरसोपमानेनतद्वर्णाएवेतिसूचितम्। नीलीरसनिभाः

केचिच्चञ्चुपुटनिभाः परइत्यादिनाअगस्त्येनरत्नशास्त्रेएषामेकादशविधाच्छायाभिधा नादिति। मत्तमयूरंवृत्तम्। वेदैरन्ध्रैर्म्तौ यसगामत्तमयूरमितिलक्षणात् ॥ ४४ ॥

॥ यानेति ॥ इहाद्रावन्यवधूभ्यःस्त्र्यन्तरेभ्यःपञ्चमीविभक्तिरितिपञ्चमीसारतरं श्रेष्ठमागमं यस्याः सासारतरागमनाम्लाघ्यसङ्गमेत्यर्थः यास्त्रीयतमानं स्वप्राश्यैप्रयतमानं प्रार्थयमानमित्यर्थः । यतीप्रयत्नेशानच् प्रियं नययोसानयाप्रतिकूलापिरखीरहःतेनप्रियेणसहअ नायतमानमदीर्घरोषं ययानयारतरागं सुरतामिलाषंबिभर्त्तिअयमतिमानवतीरपिसद्यए वोद्दीपयतीतिभावः। दोधकवृत्तं। दोधकवृत्तमिदम्भभभागाविति लक्षणात् ॥ ४५ ॥ ॥

॥ भिन्नेष्विति ॥ इहाद्राविन्दोःकिरणेषुउदञ्चद्भिरावाच्चद्भिरुच्चावचैरनेकविधैरित्य

यानयया प्रियमन्यवधूभ्यः सारतरागमनायतमानम्। तेनसहेहबिभ र्तिरहःस्त्रीसारतरागमनायतमानम् ॥ ४५ ॥ भिन्नेषुरत्नकिरणैः किरणेष्विवेन्दोरुच्चावचैरुपगतेषुसहस्रसंख्याम्। दोषाऽपिनूनम हिमांशुरसौकिलेतिव्याकोशकोकनदतांदधतेनलिन्यः ॥ ४६ ॥

र्थः। उच्चावचंनैकभेदमित्यमरः । मयूरव्यंसकादिषूच्चोच्चनीचाचपराच्चोच्चावचंकिञ्चना कुतोभयानीतितत्पुरुषेनिपातनात्साधुः । रत्नकिरणैर्भिन्नेषुमिश्रेषुअतएवसहस्रसंख्यामु पगतेषुसत्सुनलिन्यःपद्मिन्यः । नलंपद्मंनलंतृणमितिशाश्वतः । असौप्रकाशमानोऽहि मांशुःकिलेतिसहस्रकिरणत्वात्सूर्यएवेतिसम्भावनाबुद्ध्येत्यर्थः । वार्त्तासम्भाव्ययोःकि लेत्यमरः। दोषापिरात्रावपिसप्तम्यर्थेऽव्ययं । दिवाह्नीत्यथदोषाचनक्तंचरजनाविती त्य मरः। व्याकोशकोकनदतांविकचपद्मतांदधतेनूनमित्युत्प्रेक्षायां । अथरक्तसरोरुहम्। रक्तोत्पलंकोकनदंव्याकोशविकचस्फुटाइत्यमरः । इहदेवभूमित्वान्नित्यपद्मानलिन्य इतिभावः । इहनलिनीनान्दोषानमसम्बन्धानिशेषात्किमूलयानस्यैन्द्रावर्काभागमद

लंकारोऽभिव्यज्यते ॥ ४६ ॥ ************************** ॥

॥ अपशंकमिति ॥ अपशङ्कंनिःशङ्कम् अङ्कपरिवर्त्तनेषु उत्सङ्गलुठनेषूचिताः परिचिताः पतिम्भर्त्तारमुपेतुं पुरोऽग्रे चलिताः प्रयाताः आत्मजाः स्वयम्भवाद्दुहितृस्थाः निम्नगाः नद्यः करुणेन दीनेन पत्त्रिणां पक्षिणां विरुतेन क्रन्दनेन ननिमित्तेनैषोऽद्रिर्वत्सलतया वात्सल्येन स्नेहेनेत्यर्थः । श्रीमान् स्निग्धस्तु वत्सलः इत्यमरः । वत्सांसाभ्यां कामबले इति लच् अनुरोदितीवानुक्रोशतीवेत्युत्प्रेक्षा । रुद् स्वपश्वस्य इति गुणः रुदादिभ्यः सार्वधातुके इतीट् ॥ ४७ ॥

॥ मधुकरेति ॥ मधुकरा एव विटास्तेषां पानं चुम्बनं मिताः प्राप्ताः इणः कर्त्तरि क्तः । विटपैः

अपशङ्कमङ्कपरिवर्त्तनोचिताश्चलिताः पुरः पतिमुपेतुमात्मजाः । अ
नुरोदितीव करुणेन पत्त्रिणां विरुतेन वत्सलतयैव निम्नगाः ॥ ४७ ॥
मधुकरविटपानमितास्तरुपंक्तीर्बिभ्रतोऽस्य विटपानमिताः । परिपा
ककपिशंगलतारजसा रोधश्चकास्ति कपिशंगलता ॥ ४८ ॥ प्रा
ग्भागतः पतदिहेदमुपत्यकासु शृंगारितायतमहेभकराभमम्भः । सं
लक्ष्यते विविधरत्नकरानुविद्धमूर्द्धप्रसारितसुराधिपचापचारु ॥ ४९ ॥

शाखाविस्तारैरानमिताः विटपानमिताः । विस्तारो विटपोऽस्त्रियामित्यमरः । तरुपंक्ती र्बिभ्रतोऽस्याद्रेः रोधो नितम्बागलता पतता परिपाकेन पिशङ्गानां लतानां रजः पुष्परेणुस्तेन परिपाकपिशङ्गलतारजसा कपिशं पिशङ्गं सच्चकास्ति । मात्रावृत्तिविषयमार्यागीतिरिष्ट गणा अर्द्धे वसुगणा आर्यागीतीति पिङ्गलनागः ॥ ४८ ॥ ************ ॥

॥ प्राग्भागत इति ॥ इहाद्रौ प्राग्भागतः ऊर्ध्वप्रदेशात् उपत्यकासु अधःप्रदेशेषु उपत्यका द्रेरासन्नेत्यमरः । उपाधिभ्यामित्यादिनोपशब्दात् त्यकन् प्रत्ययः पतत् शृङ्गारः सिन्दूरादि मण्डनमस्य सञ्जातः । शृङ्गारः सुरते नाट्यरसे दिग्गजमण्डने इति विश्वः । आयतैर्दीर्घैः

नस्यमहेभकरस्याभेवाभायस्यतन् विविधरत्नानांकरैरंशुभिरनुविद्धमनुरञ्जितमिदमभ्रं
ऊर्ध्वप्रसारितंयन्सुराधिपचापमिन्द्रधनुस्तद्वारुसंलक्ष्यते । अत्रेन्द्रचापस्योर्द्धांना
सम्बन्धेपिसम्बंधोक्तेरतिशयोक्तिः । अभूतोपमेतिमतान्तरम् । तिरोहितविवक्षायांनूपमा
नस्यप्रसिद्धत्वादुपमैवेयम ॥ ४९ ॥ ************************॥

॥ दधतीति ॥ किञ्चेतिचार्थःअमुष्योद्रेरेताःशिखराणिशृङ्गाण्येवशिखाःकेशपाश्यः। शि
खाचूडाकेशपाशोत्यमरःविकसद्भिर्विचित्रैः नानावर्णैःकल्पद्रुमकुसुमैरभिगुम्फितानग्र
थितानिवस्थितानीत्युत्प्रेक्षा । अलघूनिविलम्बीनिलम्बमानानिचपिच्छान्येवदामानिस्र
जोयेषुतान्शिखिनःकोकनदवशेखरान्आपीडान्क्षणंदधति । शिखावलःशिखीकेकी

दधतिचविकसद्विचित्रकल्पद्रुमकुसुमैरभिगुम्फितानिवैताः । क्षमा
मलघुविलम्बिपिच्छदाम्नःशिखरशिखाःशिखिशेखरानमुष्यः ॥ ५०
॥ सवधूकाःसुखिनोऽस्मिन्नवरतममंदरागतामरसदृशः । नासेवन्ते
रसवन्नवरतममंदरागतामरसदृशः ॥ ५१ ॥ *·*·*·*·*·*·*

शिखास्वापीडशेखराइत्यमरः । अत्रकुसुमगुम्फेनोत्प्रेक्षालिङ्गेनपिच्छादिनामादिरू
पसिद्धेनतुल्यापिताचोत्प्रेक्षेतिसङ्करः । पुष्पिताग्रावृत्तमुक्तम् ॥ ५० ॥ *****॥
॥ सवधूकाइति ॥ अस्मिन्नद्राववरेनभवन्तीत्यनवराःश्रेष्ठाःअनवरतमाःमन्दरागतैरमरैः
सदृशःसरूपाः अनवरतममन्दरागतामरसदृशः अमन्दरागाण्यतिरक्तानितामरसानिप
ङ्केरुहाणीवदृशोयेषान्तेअनन्दरागतामरसदृशःरक्ताब्जनेत्राः । पङ्केरुहन्तामरसमित्यम
रः । नवरतंनूतनसुरतन्नासेवन्तइतिनकिंत्वासेवन्तएवेत्यर्थः सम्भाव्यनिषेधनिवर्तने
द्वौप्रतिषेधाविति वामनः । विशिष्टसुरतानांसेवनस्यसामान्यतःप्रसक्तेरूपमालङ्कारः ।
गत्तेयमार्यागीतिः ॥ ५१ ॥ **************************॥

॥ आच्छाद्येति ॥ एवोद्भिर्महान्तंपुष्पाण्येवपटइतिरूपकमामासुराद्यअंतःपटांप्रता
देआवर्त्तिभिरभीक्ष्णंभ्रमद्भिः बहुलमाभीक्ष्णेइतिणिनिः गृहकपोतशिरोधरायागृहपा
रावतकण्ठस्याभेवाभायेषान्तैरित्युपमा । पारावतेकपोतःस्यादितिविश्वः । अगुरोःकाला
गुरोरिमामागुरवी । कालागुर्वगुरुःस्यादित्यमरः । धूमरुचिन्धूमकान्तिनात्सदृशीमि
त्यर्थः । अतएवनिदर्शना । दधानैर्नवनीरदानांपटलैःसाङ्गानिधूपायतीवधूपैरिवा
धिवासयतीवेत्युत्प्रेक्षारूपकोपमानिदर्शनाभिरङ्गैःसंकीर्यते । धूपसन्तापेइतिधातोर्गु
पुधूपविच्छिपणिपणिभ्यआयइत्यायप्रत्ययः ॥ ५२ ॥ ************* ॥
॥ अन्योन्येति ॥ अमुष्मिन्नद्रावन्योन्यैर्व्यतिरेकेणमिश्रणेनचारुभिःअतएवविचित्रैर्न

आच्छाद्यपुष्पपटमेषमहान्तमंतरावर्तिभिर्गृहकपोतशिरोधराभैः ।
स्वाङ्गानिधूमरुचिमागुरवींदधानैर्धूपायतीवपटलैर्नवनीरदानाम् ॥
५२ ॥ अन्योन्यव्यतिकरचारुभिर्विचित्रैरत्रस्यन्नवमणिजन्मभिर्म
यूखैः । विस्मेरान्गगनसदःकरोत्यमुष्मिन्नाकाशेरचितमभित्तिचित्र
कर्म ॥ ५३ ॥ ***************

नावर्णैरत्रस्यन्तःचासरोधेणानुदृश्यन्तः । त्रासोभीमनिदेोषयोरितिविश्वः । वाभ्राशेत्यादि
नावैकल्पिकःश्यन्प्रत्ययःतेभ्योनवमणिभ्योजन्मयेषान्तैर्मयूखैराकाशेरचितमभित्तिअकुड्यं
अनाधारमित्यर्थः चित्रकर्मविचित्रकर्मगगनसदः खेचरान्विस्मेरान्विस्मयशीलान्करो
ति । नमिकंपीत्यादिनारप्रत्ययःअत्रमणिमयूखेषुखेचित्रकर्मभ्रान्तिमतासैवाभित्तिचित्र
कर्मेतिअकारणकार्योत्पत्तिवर्णनात्भ्रान्तिमदलङ्कारेत्थापितविभावनेतिसङ्करः । कार
णेनविनाकार्यस्योत्पत्तिःस्याद्विभावनेति । प्रहर्षणीवृत्तम् ॥ ५३ ॥ ****** ॥
॥ समीरेति ॥ समीरेणमाहृतेनशिशिरःशीतलःशिरस्सुशिखरेषुवसन्तिकामस्सुखिन्द

सतांपुण्यवतांमुदञ्जनयन्नयमद्रिरपामभ्रसामपायेनापगमेनधवलावलाहकततीर्नैर्मल्य कीरेषजवनिकांस्तिरस्कारिणीर्बिभर्त्ति अतावृत्तेऽपिशिखरेशुभ्रोडुन मेघैरेवावर्णनंसंपादयन्मुदञ्जनयतीत्यर्थः अत्रवलाहकततिष्वारोप्यमाणानांजवनिकानांमुदञ्जनयन्निति प्रकृतोपयोगित्ववर्णनात्परिणामालङ्कारः । आरोप्यमाणस्यप्रकृतोपयोगित्वेपरिणामइतिलक्षणात् । रूपकेतूपरञ्जकमात्रमितिभेदः जलोद्धतगतिवृत्तं । रसैर्जसजसाजलोद्धतगतिरितिलक्षणात् ॥ ५४ ॥ ****** ******************** ॥

॥ मैत्र्येति ॥ इहाद्रौसमाधियोगमिच्छन्तीतिसमाधियोगभृतोयोगिनः । मैत्रीकरुणामुदितोपेक्षेतिचतस्रश्चित्तवृत्तयः । तत्रपुण्यवत्सुमैत्रीदुःखिषुकरुणासुखिषुमुदिताअनुमोद

समीरशिशिरःशिरःसुवसतांसतांयवनिकानिकामसुखिनाम् । बिभ
र्त्तिजनयन्नयंमुदमपामपायधवलावलाहकततीः ॥ ५४ ॥ मैत्र्या
दिचित्तपरिकर्मविदोविधायक्लेशप्रहाणमिहलब्धसबीजयोगाः ।
ख्यातिंचसत्त्वपुरुषान्यतयाधिगम्यवाञ्छन्तितामपिसमाधिभृतोनिरो
द्धुम् ॥ ५५ ॥ ****************

नंपापिषुउपेक्षा । मैत्रीआदिर्येषांतानिचित्तस्यपरिकर्माणिप्रसाधकानिशोधकानीत्यर्थः तानिविन्दन्तिलभन्तेइतितद्विदःमहाजनैः क्षीणान्तःकरणमलाइत्यर्थःअतएवक्लेशप्रहाणंविधाय । अविद्याऽस्मितारागद्वेषाभिनिवेशाःपञ्चक्लेशाः । तत्रानित्येषुनित्यत्वाभिमानःअनात्मनिदेहेन्द्रियादावात्मधीरित्यादिविभ्रमोऽविद्या । अस्मिताअहङ्कारः । रागोऽभिमतविषयाभिलाषः । द्वेषोऽनभिमतेषुरोषः । अभिनिवेशःकार्याकार्येष्वाग्रहः । तेहिपुरुषंक्लिश्यन्तीतिक्लेशाःक्लेशहेतवःपञ्चाप्युच्यन्तेतेषांप्रहाणंक्षयःकृत्यचइतिणत्वंतद्विधायक्लेशान्हित्वेत्यर्थः । अतोलब्धःसबीजःसालम्बनोयोगोयैस्तेलब्धसबीजयोगाःसन्तःआलम्बन

मेषव्यक्तिरूत्वेनिसत्त्वपुरुषयोः प्रकृतिपुरुषयोरन्यतयाऽन्यत्वेनमिथोभिन्नत्वेनख्यातिर्ज्ञा नंचाधिगम्यप्रकृतिपुरुषौभिन्नाविनिज्ञात्वेत्यर्थः । प्रकृतिपुरुषयोर्विवेकाग्रहात्संसारः विवेकग्रहणान्मुक्तिरितिसांख्याः । अयतांख्यातिमपिरोद्धुन्निवर्त्तयितुम्वाच्छन्निवृत्तिरूपानांनिवर्त्यस्वयम्प्रकाशतयैवस्थातुमिच्छन्तीत्यर्थः । प्रकृतावुपरतायाम्पुरुषरूपेणाव स्थानंमुक्तिरितिसांख्यसिद्धान्तः । नकेवलम्भोगभूरियंकिन्तुमोक्षक्षेत्रमपीतिभावः ॥५५ ॥ मरकतेति ॥ इन्द्राद्रौमरकतानांविकारामरकतमय्यस्तासुमेदिनीषुस्त्रियाःपुंवदि त्यादिनापुम्वद्भावः । तरूणांविटपाःपल्लवास्तेषामन्तरवकाशेऽपतन्तोऽतितथोक्ताः । विट पःपल्लवेषिङ्गेविस्तारेस्तम्भशाखयोरितिविश्वः । स्फुरितान्यणुरेणूनांसूक्ष्मरजसाञ्जा

मरकतमयमेदिनीषुभानोस्तरुविटपान्तरपातिनोमयूखाः । अवनत शितिकण्ठकण्ठलक्ष्मीमिह दधतिस्फुरिताणुरेणुजालाः ॥ ५६ ॥ यावभर्त्तिकलवल्लकीगुणस्वानमानमतिकालिमालया । नात्रकान्त मुपगीतयातयास्वानमानमतिकालिमालया ॥ ५७ ॥ ※※※※

लानियेषुतेभानोर्मयूखाः अवनतस्यशितिकण्ठकण्ठस्यमयूरकंधरायाःलक्ष्मीर्दधतीतिनि दर्शनालङ्कारः । पुष्पिताग्रावृत्तमुक्तम् ॥ ५६ ॥ ******************* ॥ ॥ येति ॥ अत्राद्रावत्यन्तंकालिमाकार्ष्ण्यंयस्यास्ताअतिकालिमाअतिश्यामेत्यर्थः । नवि द्यतेलयोलयनंक्वचिदवस्थानंयस्याःसाअलयाभ्रमन्तीत्यर्थः । अतएवसस्वनेतिभावः । याअलिमालाकलोव्यक्तोमधुरः वल्लकीगुणस्वानस्यवीणातन्त्रीशब्दस्यमानमुपमानं विभ र्त्तितन्त्रीवद्ध्वनतीतिभावः । उपमालङ्कारः । उपगीतयासमीपेगानम्प्रवृत्तयैवनतुपूर्व ङ्गायन्त्येतिभावः । आदिकर्मणिक्तः कर्त्तरि चेतिकर्त्तरिक्तःतथाअलिमालयाभृङ्गावल्याखा नमास्तुखेनानतिमितुमाक्रष्टुंशक्याईषद्दुरित्यादिनाखल्प्रत्ययः । कान्ताङ्गीकान्तंप्रियंनन

U

मितिसर्वोपिमानंविहायकान्तंसद्यःप्रणमत्येवतयोर्दीपकत्वद्धानस्येत्यर्थः । रथेङ्गितावृत्तं । रोनरौविति रथोद्धतालगाविति लक्षणात् ॥ ५७ ॥ ************ ॥

॥ सायमिति ॥ इहाद्रौविप्राःशानयः । वप्रोऽस्त्रीसानुमानयोरित्यमरः । सायंरात्रौशशाङ्ककिरणैराहतेभ्यश्चन्द्रकान्तेभ्योनिस्यन्दिनाप्रस्रावितानीरनिकरेणजलपूरेणकृताभिषेकाःकृतस्नानाःअर्हिन्त्यर्कोपलेभ्यः सूर्यकान्तेभ्यःउल्लसितैरुत्थितैर्वह्निभिस्तप्ताः सन्तःतीव्रंउग्रंदुश्चरंमहाव्रतंमहातपश्चरन्तीवेत्युत्प्रेक्षा ॥ ५८ ॥ ************ ॥

॥एतस्मिन्निति ॥ एतस्मिन्नद्रावधिकपयःश्रियमधिकाञ्जलसमृद्धिम्वहन्त्यःअन्यत्रतुअधिकाःपयःसुग्रीवादयोवर्णश्चेनयास्तुताःअधिकपयःश्रियंगुणालङ्कारादिशोभाम्वहन्त्यः

सायंशशाङ्ककिरणाहतचन्द्रकान्तनिस्यन्दिनीरनिकरेणकृताभिषेकाः । अर्कोपलोल्लसितवह्निभिरह्नितप्तास्तीव्रंमहाव्रतमिवात्रचरन्तिवप्राः ॥५८॥एतस्मिन्नधिकपयःश्रियंवहन्त्यःसंक्षोभंपवनभुवाजवेननीताः । वाल्मीकेररहितरामलक्ष्मणानांसाधर्म्यंदधतिगिरांमहासरस्यः ॥ ५९ ॥ ****

पवनाद्भवतीतिपवनभूस्तेनपवनभुवावायुजन्येनजवेनवेगेनसंक्षोभञ्चलननीताःअन्यत्रतुजवेन । जवोजवनिवेगेस्यादितिविश्वः । पवनभुवाहनुमतासंक्षोभंमौग्ध्यंनीताःहनुमद्वेगवर्णनयाप्रागल्भ्यंनीताइत्यर्थःवाक्पक्षेसर्वत्रषष्ठ्यापरिणामः कार्यःमहासरस्योमहासरांसिअरहितावर्जितौरामलक्ष्मणौयाभिस्तासांअन्यत्रतुरामोरमणः अरहितरामाअवियुक्तरामाःलक्ष्मणाःसारसयोषितोयास्तुताःकेचित्तुरहितरामाः अवियुक्तस्त्रीकाःलक्ष्मणाःसारसाइतिपुंपक्षपरत्वेनव्याचक्षतेनेषां । हंसस्ययोषिद्वरटासारसस्यतुलक्ष्मणा । लक्ष्मणौषधिसारस्योरित्याद्यमरकोषविश्वप्रकाशादिवाक्यगतनियतस्त्र्यर्थताविरोधः । नासाम्ना

ल्मीकेर्गिरांसाधर्म्यसादृश्यंद्यतिअत्रपवनभुवाजवेनेत्यत्रैकलनावर्णविभागैकपदप्रतीतिः मौनसाधर्म्यादिपदवदस्याश्रयोऽर्थ
कपदगतत्वेनार्थद्वयप्रतीतेरर्थश्लेषः । अन्यत्रपदभङ्गेनार्थद्वयप्रतीतेर्जतुकाष्ठवच्छब्दश्ले
षेवमिथः श्लिष्टत्वाच्छब्दश्लेषइत्युभयसाहित्यादुभयश्लेषोयंप्रकृताप्रकृतगोचरःउपमाव
ङ्गमितिसङ्करः ॥ ५९ ॥ ************************* ॥

॥ इहेति ॥ इहाद्रौमुदितैरिच्छाविहारसन्तुष्टैःकलभैःकरिपोतैः । कलभःकरिशावकः
इत्यमरः । दिशिदिशिप्रतिदिशंयथार्थेऽव्ययीभावः । अव्ययीभावेशरत्प्रभृतिभ्यइति
समासान्तोटच्प्रत्ययः कलस्याःसौभैरवश्चकलभैरवोमधुरभीषणःविशेषणयोरपिकुणाखा
ञ्जवदैच्छिकोपसर्जनविवक्षयाविशेषणसमासःरवोबृंहणध्वनिः मुहुःक्रियतेअनुवनंव

इहमुहुर्मुदितैःकलभैरवःप्रतिदिशंक्रियतेकलभैरवः । स्फु
रतिचानुवनंचमरीचयःकनकरत्नभुवांचमरीचयः ॥ ६० ॥
त्वक्साररंध्रपरिपूरणलब्धगीतिरस्मिन्नसौमृदितपक्ष्मलरल्ल
काङ्गः । कस्तूरिकामृगविमर्दसुगन्धिरेतिरागीवसक्तिमधि
कांविषयेषुवायुः ॥ ६१ ॥ *·*·*·*·*·*·*·*·*·*

नेवनेचमरीचयः । चमरीमृगसंघश्चस्फुरति । किञ्चकनकरत्नानांभुवस्तासांमरीचयश्च
स्फुरन्तिसमृद्धिवदसुवर्णनादत्तालंकारोयमकस्याभ्युच्चयः ॥ ६० ॥ ******* ॥
॥ त्वगिति ॥ अस्मिन्नद्रौत्वचिसारोयेषान्तेत्वक्सारावंशाः । वंशेत्वक्सारकर्मारत्वचिसारतृ
णध्वजाइत्यमरः । तेषांरंध्राणितेषांपरिपूर्णेनध्मापनेनलब्धागीतिर्गानसुखंयेनसःमृदि
तानितंमृष्टानिपक्ष्मलतानिलोमशानिरल्लकानांकम्बलमृगाणांकम्बलानांवाङ्गानिशरीरा
णियेनसः । रल्लकःकम्बलमृगेकम्बलेपरिकीर्तितइतिवैजयन्ती । एतेनस्पर्शसुखमुक्तंक
स्तूरिकामृगाणांविमर्देनसंघर्षेणसुगन्धिःशोभनगन्धःयद्यपिगन्धस्येत्वेनदेकान्तग्रहणंक

न्त्व्यमित्युक्तंतयापिनिरंकुशाःकवयइत्यपर्यनुयोगः । असावेवंभूतोवायूरागीवकामीवबि षयेषुप्रदेशेषुच । विवयःस्यादिन्द्रियार्थेदेशेजनपदेपिचेतिविश्वः । अधिक्रांसक्तिंवा सक्तिमासक्तिंवैतिगच्छति ॥ ६१ ॥ ********************** ॥

॥ प्रौढ्यैइति ॥ इहयुवतयश्चयुवानश्चतेषांयूनांपुमानस्त्रियेत्येकशेषः प्रौढ्येव्यवहितंतप नाःनिरोहिताकाः अतएवसुरतान्येवक्रीडास्ताभिर्यआयामोव्यायामस्तेनयःश्रमःखेदः । श्र मःस्वेदेध्वरध्वादेरितिलक्षणात् । तस्यशमेवारणेपटवःसमर्थाः जलदाः प्रौढध्वान्तंमेघाव रणाद्गाढान्धकारंदिनंदिवसन्दोषांरात्रिमात्मानंमन्यन्तइतिदोषामन्यंरात्रिमानिनंवि दधतिमेघावरणमहिम्नादिवसःस्वयमप्यात्मानंरात्रिंमन्यतेकिमुतान्यइत्यर्थः दोषेत्यव्य

प्रौढ्यैयूनांव्यवहिततपनाःप्रौढध्वान्तंदिनमिहजलदाः । दोषामन्यं विदधतिसुरतक्रीडायासश्रमशमपटवः ॥ ६२ ॥ भग्नोनिवासोऽ यमिहास्यपुष्पैःसदाननोयेनविषाशिनागः । तीव्राशितेनोज्झति कोपितोऽसौसदाननोयेनविषाशिनागः ॥ ६३ ॥ *****

थन्तदुपपदान्मन्यतेर्धातोरात्ममानेखश्चेतिखशप्रत्ययः इहयूनांदोषावदिवापिविसम्भ विहाराःसम्भवन्तीतिभावः । भ्रमरविलसितंवृत्तं । म्भौनलौगःस्याद्भ्रमरविलसितमि तिलक्षणात् ॥ ६२ ॥ ****************************** ॥

॥ भग्नइति ॥ इहाद्रवस्यनागस्यनिवासःआश्रयःसदापुष्पैराननोनम्रोयंनगच्छतीत्यगो वृक्षःदाननोयैर्मदोदकैःसद्वर्त्ततेयस्तेनसदाननोयेननमत्तेनेत्यर्थः । विषाशिनादन्तिना भग्नस्तेनविषाशिनाकोपितःकोयम्पापितःअसौनागःसर्पस्तीव्राणिविषाशिगरलान्युज्झति वमतिपरप्रतीकाराक्षमस्यक्रोधःस्वाश्रयमेवव्याहन्तीतिभावः ॥ ६३ ॥ ****** ॥

॥ प्राह्मेयेति ॥ ईश्वरःशिवोपिकिमुतान्यइतिभावःसान्द्रंयद्दिभचर्मतदेववसनंतदेवा

वरणं छादनं यस्य सः तथा सन्नत्वनावरणो नापि शिथिलावरण इति भावः प्रालेयात् आगतं प्रालेयं हिमजलं तत आगत इत्यणि केकयमित्रयुप्रलयानां यादेरियइति यशब्दस्येयादेशः। तेन शीतं शीतलमचलेश्वरं हिमवन्तमधिशेते तस्मिन् शेत इत्यर्थः अधिशीङ्स्थासां कर्मेति कर्मत्वं सर्वर्तुभिर्निर्वृतिकरे सदा सुखकरे इह अद्रौ वसन् पुनर्नास्ति किञ्चनास्येत्यकिञ्चनो निःस्वोपि अवीवव चेत्यादिना मयूरव्यंसकादिषु निपातनात् तत्पुरुषः किंचिदल्पमपि द्वन्द्वदुःखं शीतोष्णदुःखं नोपैति नित्यं सन्निहितानामृतूनामन्योन्यदोषनिवारकत्वादिति भावः। द्वन्द्वं युग्मं हिमोष्णादिमिथुनं कलहो रहस्य इति वैजयन्ती। अत्रोपमानात् हिमाचलादुपमेयस्याधिक्यवर्णनात् व्यतिरेकः ॥ ६४ ॥ **************************** ॥

प्रालेयशीतमचलेश्वरमीश्वरोऽपि सान्द्रेभचर्मवसनावरणोऽधिशेते। सर्वर्तुनिर्वृतिकरे निवसन्नुपैति न द्वन्द्वदुःखमिह किञ्चिदकिञ्चनोऽपि ॥ ६४ ॥ नवनगवनलेखाश्याममध्याभिराभिः स्फटिककटकभूमिर्नाटयत्येष शैलः। अहिपरिकरभाजो भास्मनैरङ्गरागैरधिगतधवलिम्नः शूलपाणेरभिख्याम् ॥ ६५ ॥ *-*-*-*-*-*-*-*-*-*-*-*-*-*

॥ नवेति ॥ एष शैलो रैवतको नवया नगवनलेखया नगवनपंक्त्या श्यामो मध्यो मध्यमभागो यासां ताभिराभिः स्फटिकानां कटकभूमिः नटप्रदेशैः करणैः अहिरेव परिकरो गात्रिकाबन्धस्तं भजतीति तस्य अहिपरिकरभाजः। परिकरो गात्रिकाबन्धे विवेकारम्भयोरपीति विश्वः। भजो ण्विः भास्मनैः भस्ममयैः वैकारिकोऽण्प्रत्ययः अणि प्रकृतिभावान्नटिलोपः अनिति टिलोपेन। अङ्गरागैरनुलेपनैरधिगतधवलिम्नः प्राप्तधावल्यस्य शूलं पाणौ यस्य तस्य शूलपाणेरीश्वरस्य प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः। अभिख्यां शोभां। अभिख्या नामशोभयोरिति अमरः। आतश्चोपसर्गे इति कप्रत्ययः नाटयति अनुकरोतीति निदर्शनालङ्कारः। भा

ख्विनीवृत्तमेतत् ॥ ६५ ॥ ************************** ॥

॥ दधद्भिरिति ॥ अत्राद्रौमाधवस्यइमेमाधवाःयादवाःविकचानिवारिजानियेषुतान्य
म्बूनियेषान्तेविकचवारिजाम्बूअभितउभयतस्तटौदधद्भिः नदैःपुंप्रवाहैः प्राक्स्रोत
स्रोतनद्यःप्रत्यक्स्रोतस्तोनदाःनर्मदाभिन्नेत्याहुः । विनोदितोदिनक्लमोयेषान्तेनविहा
रपनीताह्निकसन्तापाइत्यर्थः किञ्चजाम्बूनदस्यविकारैर्जाम्बूनदैःकनकभूषणैःकान्तरुचो
ऽतिशयशोभाःसन्तःरसवत्स्वादुवत् । रसोगन्धेरसेस्वादइतिविश्वः । कादम्बइक्षुःकाद
म्बःकलहंसेक्षेरितिविश्वः । कादम्बंरसनिरसयोरभेदाल्लाक्षणिकत्वेनादत्तइतिकादम्ब
रमैक्षवं । पानन्तद्राक्षमाधूकंखार्जूरन्तालमैक्षवमितिस्मरणात् आतोनुपसर्गेकः मधुमद्यंप
ञ्चमधुकादम्बरशब्दयोःसामान्यविशेषपरत्वात्पौनरुक्त्यं । निषेव्यपीत्वाक्षत्रियाणांपौ

दधद्भिरभितस्तटौविकचवारिजाम्बूनदैर्विनोदितदिनक्लमा
ःकृतरुचश्चजाम्बूनदैः । निषेव्यमधुमाधवाःसरसमत्रकाद
म्बरंहरन्तिरतयेरहःप्रियतमाङ्गकादम्बरम् ॥ ६६ ॥

ख्याएवनिषेधादितिभावः । रतयेसुरतार्थंरहःप्रियतमानांप्रेयसीनामङ्गादेवाङ्गका
द्गात्रादम्बरंवस्त्रंहरन्ति । यादवास्तेहमधुपानरतोत्सवैर्विलसन्तीतिभावः । पृ
थ्वीवृत्तं । जसौजसयलावसुग्रहयतिश्चपृथ्वीगुरुरितिलक्षणात् ॥ ६६ ॥ **** ॥
॥ दर्पणेति ॥ इहाद्रौरविर्दर्पणवन्निर्मलासुपुरःस्थभित्तिषुकाञ्चनकन्दराग्रवर्त्तिरज
तस्तानुपपतितेसंक्रान्ते । घनंसान्द्रंयत्तिमिरन्तन्मुष्णातिहरतीतितन्मुट्क्विप्तस्मिन्ज्योति
षिसतेजसिकाञ्चनकन्दरसुमुञ्चःप्रतिफलतिसंमूर्च्छतिसतिरमणैरपह्नवसनासुरणी
रसंमुखोपिकन्दरानभिमुखोपिव्रीडंत्रपायद्यपिगुरोश्चहलइतिस्त्रियाम्प्रत्ययः । अतएवम
न्दाक्षंह्रीस्त्रपाव्रीडेत्यमरः । तथापितत्रस्त्रीत्वाविवक्षायांबाहुलकात्वान्नपुंसकत्वंच । अ

मरएवाविधेगुरोःस्त्रियांषङ्कवाविष्ठेतिवामनः । नयतिप्रापयतिनीवह्योर्हरतेश्चैवेतिद्वि
कर्मकता । अत्रकाञ्चनकन्दराणामसंमुखार्कज्योतिः प्रतिफलनासम्बन्धेपिसम्बन्धोक्तेरति
शयोक्तिः । वंशपत्रपतितंवृत्तंदिङ्मुनिवंशपत्रपतितंभरनभनलगैरितिलक्षणात् ॥ ६७॥
॥ अनुहृतेति ॥ असावुच्चैरुन्नतोद्रिः रैवतकःत्वयिअभ्यागतेसतिअनुहृताःशिखरौघाणां
श्रीर्यैस्तैस्तथोक्तैःशिखरौघभ्रमकारिभिरितिभावः । अतएवात्रश्रीरिवश्रीरितिनिदर्शना
याक्षान्तिमदलङ्कारोव्यज्यते । द्रुतमरुता शीघ्रमारुतेनोपनुन्नैःप्रेरितैःअतएवसहेलंसली

दर्पणनिर्मलासुपतितेघनतिमिरमुषिज्योतिषिरौप्यभित्तिषुपुरःप्रति
फलतिमुहुः । व्रीडमसन्मुखोऽपिरमयन्नपहृतवसनाःकाञ्चनकन्दरा
सुतरुणीरिहनयतिरविः ॥ ६७ ॥ अनुहृतशिखरौघश्रीभिर
भ्यागतेऽसौत्वयिसरभसमभ्युत्तिष्ठतीवाद्रिरुच्चैः । द्रुतमरुदुपनुन्नै
रुन्नमद्भिःसहेलंहलधरपरिधानश्यामलैरम्बुवाहैः ॥ ६८ ॥ इति
श्रीमाघकृतौशिशुपालवधेमहाकाव्येरैवतकवर्णनंनामचतुर्थःसर्गः॥४॥

समुन्नमद्भिरुत्पतद्भिःधरतीतिधरःपचाद्यच् । हलस्यधरोबलभद्रःतस्यपरिधानानिअ
म्बराणितद्वत्श्यामलैःश्यामैरम्बुवाहैःनिमित्तेनसरभसमभ्युत्तिष्ठतीवप्रत्युत्थानंकरोतीवेति
क्रियानिमित्ताक्रियास्वरूपोत्प्रेक्षा । विशिष्टमेघोन्नमनक्रियाप्रत्युत्थानक्रियोत्प्रेक्षणात्स
चोक्तनिदर्शनानुप्राणितेतिसङ्करःशाब्दस्तुप्रत्यनुप्रासः । मालिनीवृत्तम् ॥ ६८ ॥ * ॥
इतिश्रीमहामहोपाध्याय कोलाचलमल्लिनाथसूरिविरचितेमाघकाव्यव्याख्यानेसर्वङ्क
षाख्येचतुर्थःसर्गःसमाप्तः ॥ ४ ॥ ************************ ॥



॥ इत्थमिति ॥ सहरिरित्थमनेनप्रकारेणइदमस्थमुरिनियमुप्रत्ययःअव्यलीकाःअप्रि यरहिताः। व्यलीकन्त्वप्रियेन्दनेऽव्यमरः। प्रियतमाःप्रेयस्यइवस्थिताःकान्तास्मिनाइ त्यर्थःव्यर्थ विगतान्द्रताःसत्याःस्तुततनयस्यसारथिकुमारस्यदारुकस्यगिरःतदाशुश्रा वततः श्रवणानन्तरं तासांगिरामवसानेसमाप्तौनिरन्तरं नीरंध्रंवनराजिरेवपटस्तंवसाने आच्छादयतिवसआच्छादनइतिधातोःकर्तरिलटःशानजादेशः। गिरौरैवतकाद्रौरन्तुं क्रीडयितुमियेषतत्रवसतिंकर्तुमिच्छतिस्मेत्यर्थः उपमायमकयोःसंसृष्टिः। तस्मिन्व सन्ततिलकावृत्तम्। उक्तावसन्ततिलकातभजाजगौगइति ॥ १ ॥ ******* ॥

॥ तमिति ॥ कदल्यएवकदलिकाःवैजयन्त्योरम्भातरवश्च। कदलीवैजयन्त्यांचरम्भायां

इत्यद्भिः प्रियतमाइवसोऽव्यलीकाःशुश्रावसूततनयस्यतदाव्यली
काः। रन्तुंनिरन्तरमियेषततोऽवसानेतासांगिरैचवनराजिपटंव
साने ॥ १ ॥ तंसद्विपेन्द्रतुलितातुलतुङ्गशृङ्गमभ्युल्लसत्कदलि
कावनराजिमुच्चैः। विस्ताररुद्धवसुधोऽन्त्यपलक्ष्यचाललक्ष्मीन्दध
न्तिगिरेरलघुर्बलौघः ॥ २ ॥ **********

हरिणानारेइतिविश्वः। अभ्युल्लसन्त्यःकदल्योवैजयन्त्योवनराजयइववयस्यसःअन्यत्र रम्भावनपङ्क्तयोयस्यतमितियोज्यम्। उच्चैरुन्नतःविस्तारेणरुद्धवसुधःव्याप्तभूमिःअतएवप्र तिगिरेर्लक्ष्मीन्दधत्स्वयमप्यन्योगिरिरिवस्थितइत्यर्थः। अलघुर्महान्बलौघःसेनासं घःद्विपेन्द्रैस्तुलितान्यतुलान्यप्रतिमानिद्विपेन्द्रव्यतिरिक्तप्रतिमारहितानितुङ्गशृङ्गा णियस्यतन्त्वयोक्तन्तमचलंरैवतकमनुचचालतम्प्रतिययावित्यर्थः। अनुर्लक्षणेइतिकर्म प्रवचनीयत्वात्तद्योगेद्वितीया। अत्रप्रतिगिरेःकस्यचिदप्रसिद्धत्वात्गिरिधर्मयोगीवलौ घःप्रतिगिरेर्लक्ष्मीमिवलक्ष्मीन्दधतीति। निदर्शनामुखेनप्रतियोगित्वेनोत्प्रेक्षतेइत्युत्प्रेक्षैवे

चंश्लेषानुप्राणितेतिविशेषः ॥ २ ॥ ************************ ॥

॥ भास्वदिति ॥ आशादिशो भास्वत्करव्यतिकरेण सूर्यांशुव्याप्त्या उल्लसिताम्बरान्ताः प्रकाशिताकाशदेशाः अन्यत्र भास्वान् भासुराभिरूपः। भास्वान्भासुरसूर्ययोरिति विश्वः। तस्य हस्तस्य स्पर्शेन स्रस्तवस्त्राञ्चलाः अत एव महाजनदर्शनेन तापत्रपा इव। लज्जा सापत्रपान्यतः इत्यमरः। अम्बरविकाशि व्योमव्यापि वासः शोभि च। अम्बरं व्योमवाससोरिति विश्वः। चमूषु समुत्थं करभ उष्ट्रपोतः। उष्ट्रः क्रमेलकमयमहाङ्गाः करभः शिशुरित्यमरः। तस्य कण्ठ इव कडारं कपिशं। कडारः कपिशः पिङ्ग इत्यमरः। पृथ्वीरजः संविव्युः संववुराछादयामासुरित्यर्थः व्येञः सम्वरणे लिटि इत्वात् सम्प्रसारणे द्विर्भावः एरनेकाचः इति यण। देशः स्त्रियो वस्त्रापहारे लज्जया यत्किञ्चिदाच्छादयन्तीति भावः। अत्राचेतनाशाश

भास्वत्करव्यतिकरोल्लसिताम्बरान्ताः सापत्रपाइव महाजनदर्शनेन।
संविव्युरम्बरविकाशि चमूसमुत्थं पृथ्वीरजः करभकण्ठकडारमाशाः ॥ ३ ॥

सुश्लिष्टविशेषणमहिम्ना स्त्रीप्रतीतौ तद्भेदाध्यवसायेन संव्यानव्यवहारप्रतीतेः समासोक्तिरलङ्कारः। सा च सापत्रपेत्युत्प्रेक्षानुप्राणितेति सङ्करः ॥ ३ ॥ ********** ॥

॥ आवर्त्तिन इति ॥ आवर्त्तिनः दशावर्त्तवन्तः प्रशंसायामिनिरिणिनिः तेच। द्वावुरस्यौ शिरस्यौ द्वौ द्वौ द्वौ रन्ध्रोपरन्ध्रयोः। एको भालेप्रपाने च दशावर्त्ता ध्रुवाः स्मृता इत्युक्तादशध्रुवाख्या विवक्षिताः। अन्येषामनन्तरमेवाभिधानात्। अन्यत्र तु जलभ्रमवन्तः। स्याद् आवर्त्तोम्भसां भ्रम इति रोमसंस्थानेन तु तत्साम्याद्यपदेशः तदुक्तं। आवर्त्तसाम्यादावर्त्तो रोमसंस्थानमङ्गिनामिति। शुभफलानि राज्यलाभादीनि प्रददतीति शुभफलप्रदाः। प्रेदाभिर्ईतिकः तामिः शुक्तिभिः संस्थानैरावर्त्तविशेषैर्युक्ताः। तदुक्तं। वक्षस्थाः शुक्तयस्तिस्र ऊर्ध्वरोमा जयावहा इति। अन्यत्र शुभफलानि मुक्ताफलानि तत्प्रदाः शुक्तयो मुक्तास्फोटा ताभिर्युक्ताः। मुक्ता

स्फोटे ह्यावर्त्तैर्मुक्तिः शङ्खकपालयोरितियादवः । सम्पन्नाः समग्राः देवमणयो निगलावर्त्ताः कौस्तुभादिदिव्यमणय स्तु येषान्ते । आवर्त्तो रोमजो देवमणिस्त्वेष निगालजः । निगालस्तु गलोद्देशे इति वैजयन्ती । भृताः पूर्णा रंध्रभागाः पार्श्वदेशा निम्नप्रदेशा स्तु येषान्ते अतिशयितारोचमानाः कण्ठावर्त्ता येषान्ते अतिरोचमानाः । कण्ठे रोचमानस्तु स्वामिसौभाग्यवर्द्धन इति वैजयन्ती । अन्यत्र तु अत्यन्तं दीप्यमाना इत्यर्थः ऊर्मिभिर्गतिविशेषैर्वीचिभिस्सापतन्तः आधावन्तः पङ्क्तीकृतानामश्वानां नमनोन्नमनाकृतिः । अतिवेगसमायुक्तागतिरूर्मिरुदाहृते ति वैजयन्ती । ईदृशोऽश्वाः पयोधयइवतूर्णं वसुमतीं पृथुः छादयन्तिस्म । अपिधानतिरोधानपिधानच्छदनानि चेत्यमरः । अपिपूर्वाद्धधातेर्लङ् । वष्टिभागुरिर

आवर्त्तिनः शुभफलप्रदशुक्तियुक्ताः संपन्नदेवमणयो भृतरंध्रभागाः ।
अश्वाः पृथुर्वसुमतीमतिरोचमानास्तूर्णं पयोधयइवोर्मिभिरापतन्तः
॥ ४ ॥ आरक्षमग्रमवमत्य सृणिं सिताग्रमेकः पलायत जवेन कृतार्त्तनादः । अन्यः पुनर्मुहुरुदप्लवतास्तभारमन्योन्यतः पथि वता विभितावभिभो स्त्रौ ॥ ५ ॥ ***************

ल्लोपमवाप्योरुपसर्गयोरित्यकारलोपः । एकनालावलम्बिफलद्वयवदेकशब्देनार्थद्वयप्रतीतेरर्थश्लेषोयंप्रकृताप्रकृतगोचरः उपमात्वङ्गमितिसङ्करः ॥ ४ ॥ ****** ॥
॥ आरक्षमिति ॥ पथिमार्गे इभाद्वावन्योन्यतः अन्योन्यस्माद्विभिनाभीतवन्तौ जिभिभयेलङ् भियोन्यतरस्यामितीत्वं वनेत्यनयोरपिभीनिरिति निखेदेऽतिविस्मयेवा । खेदानुकम्पासन्तोषविस्मयामन्त्रणेवनेत्यमरः । तच्चलिङ्गमाह । एकइभ आरक्षः कुम्भयोरधस्तनभागमग्रं विद्धं शिलाग्रं तीक्ष्णमुखं सृणिमंकुशं । अकुंशोस्त्रीसृणिर्द्वयोरित्यमरः । अवमत्यावधूय कृतआर्त्तनादो येनसः अतिकरुणंक्रन्दन्नित्यर्थः जवेनपलायतपलायितवान् । परापूर्वा

इयतेर्लङ् उपसर्गस्यायताविति रेफस्य लत्वं अन्यः पुनरुष्ट्रस्तु अस्वभारं निरस्तभारं यथात
थामुरुरुदप्लुवत उत्प्लुतवान् । प्लुङ् गताविति स्वभावोक्तिः ॥ ५ ॥ ********* ॥
॥ आयस्तमिति ॥ जनश्चटुलाग्रपादं चंचलपूर्वचरणं यथा तथा गच्छन्तं शीघ्रं धावन्तमि
त्यर्थः उच्चलितैः उच्छ्लसितैश्चामरैश्चारुम् अश्वम् आयस्तं सयत्नम् आहूतं यथा तथा आयस्तं प्रयत्नेन कर्त्त
रिक्तान्तं क्रियाविशेषणम् । ऐक्षत ईक्षितवान् ईक्षतेर्लङ् आडजादीनामाटश्चेति वृद्धिः
नागं पुनर्गजं तं सलीलं निमीलिते अक्षिणी यस्मिन् कर्मणि तत् [illegible] सक्थ्यक्ष्णोः स्वाङ्गा
त्षच् मृदु मन्दं गच्छन्तमैक्षत कथं शीघ्रमन्दयोरुभयोर्दृष्टिरत आह सर्वः प्राणी अनुरूपचे
ष्टः स्वजात्युचितव्यापारः सन् प्रीणातेरिति प्रियः प्रीतिकरो भवति खलु । इगुपधज्ञाप्रीकिरः

आयस्तमैक्षत जनश्चटुलाग्रपादं गच्छन्तमुच्चलितचामरचारुमश्वं ।
नागं पुनर्मृदु सलीलनिमीलिताक्षं सर्वः प्रियः खलु भवत्यनुरूपचेष्टः ॥
६ ॥ त्रस्तः समस्तजनहासकरः करेणोस्तावत्खरः प्रखरमुल्ललयांचका
र । यावच्चलासनविलोलनितम्बबिम्बविस्रस्तवस्त्रमवरोधवधूः पपात ॥ ७ ॥

कः । अर्थान्तरन्यासः ॥ ६ ॥ ************************* ॥
॥ त्रस्त इति ॥ करेणोरिभात् । करेणुरिभ्यां स्त्री नेभ इत्यमरः । भीतार्थानां भयहेतुरित्य
पादानत्वं । त्रस्तो भीतः खरो गर्दभः समस्तजनस्य हासं करोतीति निमित्तकरः सन् । कृञो हेतुरि
त्यादिना टप्रत्ययः तावत् अतिप्रखरं भृशमुल्ललयांचकार उत्पपात यावत् चलात् स्थानचलि
तादासनात् विलोलोपहतस्तस्मान्नितम्बबिम्बाद्विस्रस्तं वस्त्रं यस्मिन् कर्मणि तद्यथा तथा अ
वरोधवधूः पपात स्वभावोक्तिः ॥ ७ ॥ ********************** ॥
॥ शैलेति ॥ शैलस्य रैवतकाद्रेरुपशल्यं प्रान्तं । यद्यपि ग्रामान्त उपशल्यं स्यादित्यमरः । त
थापि उपचाराददोषः । नतं निपतमान्धावतां रथानां नेमयश्चक्रान्ताः । चक्रं रथाङ्गं त

स्यान्नेमिः स्त्री स्यात्प्रधिः पुमानित्यमरः । तासां धाराभिरश्रिभिः निष्पिष्टानां चूर्णिता-
नां निष्ठुरशिलातलानां चूर्णं गर्भो येषां ते तथोक्ताः नभसि बद्धानि पयोदचक्राणि पयोदा-
कारमण्डलानि यैस्ते चक्रवद्भ्रमणमस्यास्तीति चक्रीवान् गर्दभः । चक्रीवन्तस्तु बालेयारा-
सभा गर्दभाः खरा इत्यमरः । आसन्दीवदष्ठीवच्चक्रीवदित्यादिना साधुः । तस्याङ्गरुहा-
णि रोमाणि तद्वद्धूम्ररुचः कृष्णलोहितवर्णाः । धूम्रधूमलौ कृष्णलोहिते इत्यमरः ।
भूरेणवो विसस्रुः प्रसृताः ॥ ८ ॥ ********************** ॥

॥ उद्यदिति ॥ खुराः शफानि । शफं क्लीबे खुरः पुमानित्यमरः । तेषामभिघातादुद्यन्तः कृशा-
नुशकलाः स्फुलिङ्गा येभ्यस्तेषु टङ्कप्रायाः खुरा इति भावः भूम्यां समानि समतलानि आयता-

शैलोपशल्यनिपतद्रथनेमिधारानिष्पिष्टनिष्ठुरशिलातलचूर्णगर्भाः ।
भूरेणवे नभसि नद्धपयोदचक्राश्चक्रीवदङ्गरुहधूम्ररुचो विसस्रुः ॥
८ ॥ उद्यत्कृशानुशकलेषु खुराभिघाताद्भूमीसमायतशिलाफलका-
चितेषु । पर्यन्तवर्त्मसु विचक्रमिरे महाश्वाः शैलस्य दर्दुरपुटानिव वा-
दयन्तः ॥ ९ ॥ ***************

नि चयानि शिलाः फलकानीव शिलाफलकानि तैराचितेषु शैलस्य पर्यन्तवर्त्मसु प्रान्तमार्गे-
षु महाश्वाः दर्दुराणां वाद्यविशेषाणां पुटान्मुखानि वादयन्त इव विचक्रमिरे जग्मुः पादन्या-
सैर्नादं शंशब्दमकुर्वन्नित्यर्थः । वेः पादविहरण इत्यात्मनेपदम् । दर्दुरस्तोयभेके वाद्य-
भाण्डाद्रिभेदयोरित्यमरः । उत्प्रेक्षालङ्कारः ॥ ९ ॥ ************* ॥

॥ तेज इति ॥ तेजो नाम दर्पापरनामा सत्त्वगुणविकारः प्रकाशो अन्तःसारविशेषः । यथा-
ह भोजराजः । तेजो निसर्गजं सत्त्वं वाजिनां स्फुरणं रजः । क्रोधस्तम इति ज्ञेयास्त्रयोपि सह-
जा गुणा इति । नच्चाद्धिविध्वंसनतेत्यितम्भयोन्थितश्चेति । यथा दृष्ट एव । धारासु योजि-

तानाश्चानिसर्गात्प्रेरणम्बिना । अविच्छिन्नमिवाभातितत्तेजःसन्ततोत्थितं । कशापादादि
घातैर्यत्साध्वसंस्फुरितादिति । अत्रतेजःशब्देनतत्कार्यवेगोलक्ष्यते तथा च तेजस्विवेगनि
रोधेन निवारणे समतायामवेगसाम्येवावहितेनवल्गाविभागकुशलेनेत्यर्थः । कशाताडिनी त
अश्वादेस्ताडिनी कशेत्यमरः । अत्रकशाघाताः कशात्रयासांत्रयमुत्तममध्यमाधमेषु यथार्थं
स्वयंमृदुसमनिष्ठुरसञ्ज्ञंत्रिनिकरणस्वरूपंत्रितयंतस्य विचारः एतेषुनिमित्तेषुअङ्गेष्वेवताड्य
इतिविमर्षःतद्वतानञ्ज्ञेन । यथाह भोजः । मृदुनैकेनघातेनदण्डकालेपुताडयेत् । तीक्ष्णं
मध्यंपुनर्द्वाभ्यांत्रयंचनिष्ठुरैस्त्रिभिः । उपवेशेचनिद्रायांस्खलितेदुष्टचेष्टिते । वडवालो
कनेतुल्येचबहुगर्वितह्रेषिते । सत्रासेचदुःस्थानेविमार्गगमनेभये । शिक्षात्यागस्यस
मयेस्त्रज्ञानेचित्तविभ्रमे । दण्डःप्रयोज्योवाहानांकालेषुद्वादशस्वपि । ग्रीवायामीतमाह

तेजोनिरोधसमतावहितेनयन्त्रासम्यक्कशात्रयविचारवतानियुक्तः ।
आरट्टजश्चटुलनिष्ठुरपातमुच्चैश्चित्रंचकारपदमर्द्धपुलायितेन ॥१०॥

न्यात्त्रस्तश्चैवचवाजिनम् । विभ्रान्तचित्तमधरेत्यक्तशिक्षञ्चताडयेत् । प्रहेषितंस्कन्धवा
ह्वोर्वडवालोकितंतथा । उपवेशेचनिद्रायांकटिदेशेचताडयेत् । दुश्चेष्टितंमुखेहन्यात्
दुन्मार्गप्रस्थितंतथा । जघनेस्खलितंहन्यात्तेनमार्गेदुःस्थितं । एवम्भूतेनयन्त्रासादिना
सम्यग्यथाशास्त्रंनियुक्तःप्रेरितःउच्चैरुन्नतः । आरट्टोऽश्वयोनिर्देशःतज्जोऽश्वआरट्टजो
विशेषणमात्रप्रयोगेसागराम्बरादिवत्तावतैवविशेष्यप्रतीतेरित्याहवामनः । विशेषणप्रयो
गेविशेष्यप्रतिपत्ताविति । चटुलःचपलोनिष्ठुरःपुरुषश्चपातःप्रक्षेपोयस्मिन्कर्मणितद्यथा
तथा । अर्द्धपुलायितेनमण्डलगतिविशेषेणचित्रमद्भुतम्पदम्पादक्रमञ्चकार । शता
र्द्धोर्द्धक्रमादूनैर्मण्डलायतवल्गितैः । उन्मुखस्याश्वमुख्यस्यगतिरर्द्धपुलायितमितिल
क्षणात् । पुलानामप्लुताद्यनेकापरनामाह्वयानाङ्गतिविशेषः । तदुक्तंहयलीलावत्यां ।

क्षुनांक्षुवङ्गनिमाकुर्यां धारापुलनाभिधा। पुनरेनां रलोपान्तां पुला मित्याह देशिकः । न
ञ्छक्षणाञ्चनत्रैवोक्तं । क्षिपति सर्वविशेषानुक्षिपत्यग्रपादान्प्रसरति पुरतोऽस्त्वः साथ धारा
पुलाख्या । विलसति समपादोत्क्षेपणाकुञ्चनानां करणमिह गतिज्ञाः प्राकुरन्त्यं पुलाख्या
मिति । योऽस्मिन्प्रधानम्प्रविधाय रागाद्वर्णांस्तथीकृत्य वदेत्पुलाख्यामित्यादि पुलाख्यम
यितमयनं गतिः पुलायितं अयगतौ भावे क्तः तच्छनार्द्धं त्याद्युक्तरीत्याऽनुष्ठितमर्द्धं पुलायित
मित्यलमति विस्तरेण ॥ १० ॥ ************************* ॥

॥ नीहारेति ॥ नीहारजालवन्ति तुहिनव्यूहवन्मलिनः वधूजनविलोचनानां पक्ष्ममालाः
पुनरुक्तसान्द्राः द्विगुणसान्द्राः कुर्वन् स्वभावतोऽपि सान्द्रत्वादिति भावः । मयूरव्यंसकादि

नीहारजालमलिनः पुनरुक्तसान्द्राः कुर्वन्वधूजनविलोचनपक्ष्ममा
लाः । क्षुस्सः क्षणं यदुवलैर्द्दिवमाततांसुः पांसुर्दिशांमुखमतुच्छय
दुत्थितोऽद्रेः ॥ ११ ॥ उच्छिद्य विद्विष इव प्रसभं मृगेन्द्रानि
न्द्रानुजानुचरभूपतयोऽध्यवात्सुः । वन्येभमस्तकनिखातनखाग्रमुक्त
मुक्ताफलप्रकरभांजि गुहागृहाणि ॥ १२ ॥ *-*-*-*-*-*-*-*

त्वाद्विसष्टवद्धवत्समासः । क्षणं यदूनां बलैः सैन्यैः क्षुस्सः अद्रेरुत्थितः दिवमाकाशमाततरि
तुमवततरितुमिच्छुः आतितांसुः तनोतेः सन्नन्ताद्दुप्रत्ययः सनीवन्तर्द्धेत्यत्र तनिपतिदरिद्रा
णामुपसंख्यानाद्वैकल्पिक इड्भावः तनोर्विभाषेति दीर्घः । पांसुर्दिशाम्मुखमतुच्छयदा
च्छादयतिस्म । तुच्छ आच्छादने इति धातोश्चौरादिकाल्लङ् ॥ ११ ॥ **** ॥
॥ उच्छिद्येति ॥ इन्द्रानुजस्योपेन्द्रस्य हरेरनुचरा अनुजीविनो भूपतयो मृगेन्द्रान्सिं
हान्विद्विषः शत्रूनिव प्रसभं प्रसह्योच्छिद्य हत्वा वन्येभानां मस्तकेषु निखातैर्निक्षिप्तैर्नखा
ग्रैः सिंहनखमुखैर्मुक्तान्विकीर्णान्मुक्ताफलप्रकरान्भजन्तीति तथोक्तानि गुहाः गृहाणीत्युप

मित समासः। विद्धिषड् वेतिविङ्गात्अध्यवाप्युरध्युषितवन्तः उपान्तध्याङ्गु सड्तिकर्मे त्वंवसनिवासेलुङिसिचिवृद्धिः सस्यार्द्धधातुकइतितत्वं ॥ १२ ॥ ******* ॥

॥ विभ्राणयेति ॥ अन्येभूपतयः यावएवयावकोऽलक्तकः। राक्षालाक्षाजतुक्लीबेयावोलक्तो द्रुमामयइत्यमरः। यावादिभ्यःकन्निति स्वार्थेकन् बहुलेनयावकपङ्केनपिङ्गंपिङ्गलंपि च्छंबर्हमेवावचूडंअधोवन्मिकलापस्निभ्राणया। अस्त्रोचूडावचूडाख्यावूर्ध्वाधोमुखचूड काविनिध्वजाङ्गेषुहलायुधः। चञ्चुकोटिः। चञ्चुकोटिरुभे स्त्रियामित्यमरः। तस्याअग्रे एवदृष्टाचटुलाअहिरेवपताकायस्यान्तयाउरगाशनोगरुडस्सस्यकेतु यष्टिस्तदधिष्ठितो ध्वजदण्डइत्यर्थः। तयाअभिज्ञानेनेतिभावः। अनुमाधवधामहरिशिविरमनुस्वावास

विभ्राणायावकुलयावकपङ्कपिङ्गपिच्छावचूडमनुमाधवधामजग्मुः।
चंञ्चग्रदष्टचटुलाहिपताकयाऽन्येस्वाऽवासभागमुरगाशनकेतुयष्ट्या
॥ १३ ॥ छायामपास्यमहतीमपिवर्त्तमानामागामिनींजगृहिरेज
नतास्तरूणां। सर्वोहिनोपनतमप्यपचीयमानंवर्द्धिष्णुमाश्रयमना
गतमभ्युपैति ॥ १४ ॥

भागंस्वनिदेशदेशञ्जग्मुःदूरादेवगरुडध्वजेनमाधवधामज्ञात्वातत्सन्निहितान्नियतादिक्का न्स्वावासान्निश्चित्यजग्मुरित्यर्थः ॥ १३ ॥ ******************* ॥

॥ छायामिति ॥ जनानांसमूहः जनताग्रामजनबन्धुसहायेभ्यस्तल्। तरूणांविद्यमानां छायामपास्यत्यक्त्वाआगामिनीछायांजगृहुर्वर्द्धिष्णुत्वादितिभावः नचप्राप्तत्यागोदोषायत्या गस्वीकारयोःक्षयवृद्धिप्रयुक्तत्वादित्याह। सर्वइति। तथाहिसर्वोजनःउपगतंप्राप्तमप्यप चीयमानंक्षीयमाणंकर्मकर्त्तरिप्रयोगःआश्रयन्नोपैतिनगृह्णाति किंत्वनागतमप्राप्तमपिवर्द्धि ष्णुंवर्द्धनशीलंआश्रयमुपैतिसामान्येनविशेषस्समर्थनरूपोऽर्थान्तरन्यासः ॥ १४ ॥

॥ अग्रइति ॥ अग्रेगतेनपुरःप्रयातेनरम्यांवसतिंनिवासंवसितिवर्त्तिभ्यश्चेतिवसतेरौणा
दिकोऽतिप्रत्ययः। प्रतिगृह्यापतन्तीत्यापात्याः स्वयमाक्रमितुमागच्छन्तःभव्यगेयेत्यादि
नाकर्त्तरियन्तोनिपातः तेषांसैनिकानांनिराकरणेनिरसनेआकुलेनव्यग्रेणउद्वाहुना
उद्यतहस्तेनकेना[illegible]निशेषःअन्यतोयातोगच्छन्तःआत्मवर्ग्याःस्वयूथ्याःप्लुतस्त्रिमात्रि
कंयथातथाकृतःस्वरोनादआह्वानंयस्मिन्कर्मणितद्यथातथा। दूराद्धूतेचेतिदूरादाह्वा
नेप्लुतविधानादितिभावः। आसुदूरान्मुहुराजुहुविरेआहूताःह्वयतेराङ्पूर्वात्कर्मणि
लिङ्अभ्यस्तस्यचेतिसम्प्रसारणेद्विर्वचनमुवङादेशश्च ॥ १५ ॥ ******* ॥
॥ सिक्ताइति ॥ अमृतरसेनसिक्ताइवेत्युत्प्रेक्षामुहुर्जनानांक्लान्तिच्छिदोश्रमहराःकल्प

अग्रेगतेनवसतिंपरिगृह्यरम्यामापात्यसैनिकनिराकरणाकुलेन। या
तोऽन्यतःप्लुतकृतस्वरमाशुदूरादुद्वाहुनाजुहुविरे मुहुरात्मवर्ग्याः
॥ १५ ॥ सिक्ताइवाऽमृतरसेनमुहुर्ज्जनानांक्लान्तिच्छिदोवनव
नस्पतयस्तदानीम् । शाखावसक्तवसनाभरणाभिरामाःकल्पद्रुमैःसह
विचित्रफलैर्विरेजुः ॥ १६ ॥ ********** 

द्रुमवदमृतसेकाभावादपितद्वदाह्लादकाइतिभावः शाखास्ववसक्तैर्भग्नैर्वसनैराभरणै
श्चाभिरामाःएकत्रसेनास्थापितैरन्यत्रस्वप्रसूतैरितिभावः नगवनस्पतयोनगवृक्षाःविचि
त्रफलैर्वस्त्राभरणाद्यनेकफलयुक्तैःकल्पद्रुमैस्तत्रत्यैरितिशेषः सहतदानींविरेजुःतद्वद्वि
रेजुरित्यर्थः। सहेतिसादृश्ये। सहसाकल्पसादृश्ययौगपद्यसमृद्धिष्वितिविश्वः। तथा
चोपमालङ्कारः ॥ १६ ॥ ************************** ॥
॥ यानादिति ॥ परिजनैर्यानाद्वाहनादवतार्यमाणाअवरोप्यमाणाःहेर्यंमात्कर्मणि
अदृशानजादेशः हृदःपोत्यनरस्यामितिपकारःनराणामालोकजनानामपनयनेऽप

स्मारते अशक्तास्सौविदल्लाः कञ्चुकिनो यासां ताः । सौविदल्लाः कञ्चुकिन इत्यमरः । स स्ताः अपरोपणसंक्षोभात् पतिता अवगुण्ठनपटा निरङ्गीवस्त्राणि यासां ताः अतएव क्षणं लक्ष्यमाणाः वक्त्रश्रियो यासां ताः तथोक्ताः राज्ञीः राजस्त्रीः पुंयोगादाख्यायामिति ङीप् सभयकौतुकमीक्षन्ते स्म नाडनाद्भयं कामात्कौतुकम् ॥ १७ ॥ ************** ॥

॥ कण्ठेति ॥ तुरङ्गाद्राजावरोधनवधूः राज्ञामवरोधस्त्रीरवतारयन्तोऽधिकृताः अन्तःपुराधिकारिणः कण्ठेषु स्वकीयेष्ववसक्ता मृदवो बाहुलता स्तदीया येषां तेन तथोक्ताः सन्तः स्फुटं व्यक्तमालिङ्गनान्यापुरेव अन्यथा दुरवरोहत्वाद्व्याजाच्चेति भावः । आसां नाम्बधूनाङ्गण्डस्थलीः शुचिनया स्वयं शुद्धवर्तित्वाद्गण्डानामबिभेतव्याच्च न चुचुम्बुः यावत्कर्त्तव्यकारिणः शु

यानाज्जनः परिजनैरवताय्यमाणा राज्ञीर्नरपनयनाकुलसौविदल्लाः । स्त्रस्तावगुण्ठनपटक्षणलक्ष्यमाणवक्त्रश्रियः सभयकौतुकमीक्षते स्म ॥ १७ ॥ कण्ठावसक्तमृदुबाहुलतास्तुरङ्गाद्राजावरोधनवधूरवतारयन्तः । आलिङ्गनान्यधिकृताः स्फुटमापुरेव गण्डस्थलीः शुचितया न चुचुम्बुरासाम् ॥ १८ ॥ ************

ज्ञात्मानो नाति चरन्तीति भावः अन्यच्च नुपापाचाराः पापलिङ्गानि प्रकाशयन्तीति भावः ॥ १८ ॥ ************************************ ॥

॥ दृष्टेति ॥ अधस्तात्स्तनतो निर्जितः कलापभरो बर्हभारो यया ताम् । कलापो भूषणे बर्हे इत्यमरः । व्याकीर्णेन विक्षिप्तेन माल्येन कवरां सारां । कवरः कर्बुरः सार इति हलायुधः । तरुण्याः कवरीं केशपाशम् । कवरी केशपाशो थेत्यमरः । जानपदेत्यादिना ङीप् । सदृष्टेवेत्युत्प्रेक्षा । सपदि चन्द्रिका अस्यास्तीति चन्द्रकवान्मयूरः । द्रुमाग्रात्प्रारुद्ध्वत्प्रद्रुतवान् दुर्गतो चुडिरिणीत्यादिना चेरङादेशः अधिम्नु धात्वित्यादिना उवङादेशः । तथाहि स

द्धर्षिणा मत्सरिणा कर्त्रा गुणाभ्यधिकैर्गुणोत्कृष्टैः सह दुरासमासितुमशक्यमित्यर्थः । आसेर
कर्मकाद्रीषद्दुरित्यादिना खल्प्रत्ययः । नयोरेव कृत्यक्तखलर्था इति नियमात् अत्र भयहेतुक
स्य पलायनस्य कबरीदर्शनहेतुकत्वमुत्प्रेक्ष्य तस्य समर्थनात्समर्थोऽयं अर्थान्तरन्यासः स्वान इत्यस्या
न्याङ्गेन सङ्करः । नहि जितैर्जेतुरग्रे स्थातुमुचितमित्यर्थः ॥ १९ ॥ ******* ॥
॥ रोचिष्णिति ॥ रोचिष्णवो रोचनशीलाः अलङ्कृञित्यादिना इष्णुच्प्रत्ययः । तेषां का
ञ्चनचयानां काञ्चनचयानां राशीनां चांशुभिः पिशङ्गिताः पिशङ्गीकृताः आशा याभिस्ताः वं
शानां नृपध्वजकुलानां ध्वजैः प्रतिनियतकुलिशाङ्कुशादि चिह्नकेतुभिः अन्यत्र वंशा वे
णवस्तैरेव ध्वजैर्जलदसंहतिं मेघसङ्घातमुल्लिखन्त्यः पाटयन्त्यः आयतं दीर्घं निरन्तरमविरं

दृष्ट्वैव निर्जितकलापभरामधस्ताद्व्याकीर्णमाल्यकबरां कबरीं तरुण्याः ।
प्राद्रुद्रवत्सपदि चन्द्रकवान्द्रुमाग्रान्संहर्षिणा सह गुणाभ्यधिकैर्दुरासम् ॥ १९ ॥
रोचिष्णुकाञ्चनचयांशुपिशङ्गिताशा वंशध्वजैर्जलदसंहतिमुल्लिखन्त्यः ।
भूभर्तुरायतनिरन्तरसन्निविष्टाः पादा इवाभिबभुरावलयो रथानाम् ॥ २० ॥ *********

ध्वं च सन्निविष्टाः संस्थिताः रथानामावलयः भूभर्तु रैवतकाद्रेः पादाः प्रत्यन्तपर्वता इवाभिब
भुः भान्ति स्म । आशापिशङ्गीकरणादिक्रियानिमित्ता जातिस्वरूपोत्प्रेक्षा ॥ २० ॥ *
॥ छायेति ॥ क्षितिभृतां राज्ञां निवसन्त्येष्विति निवासाः निवासदेशाश्छायाविधायिभिः
कान्तैः कैरनातपसम्पादकैस्तु । छाया त्वनातपे कान्ताविति विश्वः । अनुज्झितभूतीना
मस्रचनानां सम्पदां च शोभायैस्तैः । भूतिर्भस्मनि सम्पदीत्यमरः । उच्छ्रायिभिरुन्नम
द्भिर्वैकुलैः सान्द्रैः पाटलैरक्तैश्च धातुरागो गैरिकादिरञ्जनं येषां तैः उदारतारावलीनां मु
क्तमुक्तावलीनां विरचनायेषु तैः मुक्तासारभूषितैरित्यर्थः । तारा मुक्तादिसंशुद्धौ इत्यमरः

मौक्तिकेइतिविश्वः । दूष्यपक्षेतारावलीरज्जुसन्ततिरितिकेचित्द्विरदैर्दूष्यैःपटमण्डपै
रिव । दूष्यंवस्त्रेचतद्गृहइतिविश्वः । व्यरुचनरोचन्तेस्मरुचदीप्तौद्युद्भ्योलुङीतिपरस्मै
पदंपुषादीत्यादिनाच्लेरङादेशः । अत्रद्विरदानांदूष्याणांचप्रकृतत्वान्नोपमानापि
श्लेषभेदःविशेष्यस्यविशेषणानांचकेषाञ्चिदश्लिष्टत्वात् तस्मात्केवलप्रकृतास्पदातुल्ययो
गितेयंइवशब्दस्तुसादृश्यमात्रानुवादकइतिसंक्षेपः ॥ २१ ॥ ********** ॥

॥ उत्क्षिप्तेति ॥ उत्क्षिप्तउद्धृतोयःकाण्डपटएवकाण्डपटकःदूष्याभ्यन्तरवायुसञ्चारा
र्थःपटः । अपटीकाण्डपटःस्यादितिवैजयन्ती । तस्यान्तरेऽवकाशेलीयमानेनमन्दा

छायाविधायिभिरनुज्झितभूमिशोभैरुच्छ्रायिभिर्बहुलपाटलधातुरा
गैः । दूष्यैरिवक्षितिभृतांद्विरदैरुदारतारावलीविरचनैर्व्यरुचन्निवा
साः ॥ २१ ॥ उत्क्षिप्तकाण्डपटकान्तरलीयमानमन्दानिलप्रशमि
तश्रमघर्मतोयैः । दूर्वाप्रवालसहजास्तरणेषुभेजेनिद्रासुखंवसनस
द्मसुराजदारैः ॥ २२ ॥ प्रस्वेदवारिसविशेषविषक्तमङ्गेकूर्पासकं
क्षतनखक्षतमुत्क्षिपन्ती । आविर्भवद्घनपयोधरबाहुमूलाशातोद
रीयुवदृशांक्षणमुत्सवोभूत् ॥ २३ ॥ ************

निलेनप्रशमितंश्रमेणाध्वखेदेनयत्घर्म्मतोयंस्वेदाम्बुतद्येषान्तैराजदारैः राजावरोधैःदूर्वा
णांप्रतानप्रचयएवसहजमकृत्रिमास्तरणंतल्पंयेषुतेषुवसनसद्मसुपटमण्डपेषुनिद्रासु
खंभेजे ॥ २२ ॥ ************************** ॥

॥ प्रस्वेदइति ॥ अङ्गेगात्रेप्रस्वेदवारिणासविशेषंसातिशयंयथातथाविषक्तंश्लिष्टं
कूर्पासकंचोलकंकंचुकमित्यर्थः । चोलःकूर्पासकोस्त्रियामित्यमरः । क्षतानिपुनर्विदी
र्णानिनखक्षतानियस्मिन्कर्मणि तद्यथातथाउत्क्षिपन्ती उन्मोचयन्तीअतएवाविर्भवत्

काश्मीरमंघनपयोधरबाहुमूलन्ङ्गेनौपयोधरौबाहुमूलेचयस्याः सा शातोदरीनासिकोद
रेत्यादिनाऽङ्गीपुष्पवद्दृशांक्षणमुत्सवोऽभूत् एतेनयूनांत्वराचिन्तादिकरमिष्टवहावलोक
नानिमित्तङ्कालाक्षमत्वलक्षणमौत्सुक्यमभिव्यज्यते। नायिकाभिसारणोप्रगल्भावा॥२३॥
॥ यावदिति ॥ विपणनंविपणोव्यवहारःतएषामस्तीतिविपणिनोवणिजोयावत्तएवसम
यःसेनानिवेशलक्षणएवतावत् क्षणएवसमंयुगपत् अव्याकुलाःअव्यग्रास्सन्तः पटमयानि
पटविकाराणिपटमण्डपानीत्यर्थःअभितोवितत्यउभयतःप्रसार्यविस्तार्यक्रयेणजीव
न्तीतिक्रयिकःवस्तुक्रयविक्रयादिनठन् पर्यापतन्परितःअधावन्क्रयिकलोकःकेतृजनोय
स्मिन्कर्मणितत् अगण्यैरसंख्येयैःपण्यैःपण्यद्रव्यैःपूर्णाआपणापण्यप्रसारणस्थानानियासु

यावत्तएवसमयः सममेवतावद्व्याकुलाःपटमयान्यभितोवितत्य ।
पर्य्यापतन्क्रयिकलोकमगण्यपण्यपूर्णापणाविपणिनोविपणींविभे
जुः ॥ २४ ॥ अल्पप्रयोजनकृतोरुतरप्रयासैरुद्गूर्णलोष्टलगुडैःप
रितोनुविद्धम् । उद्ध्वान्तमुद्धतमनोकहजालमध्यादन्यःशशंगुणाम
नल्पमवन्नवाप ॥ २५ ॥ ************

नाःविपणीःपण्यवीथीः । आपणस्तुनिषद्यायांविपणिःपण्यवीथिकेत्यमरः । विभेजुरस
ङ्कीर्णन्निर्ममुरित्यर्थःस्वभावोक्तिरनुप्रासो ॥ २४ ॥ ************** ॥
॥ अल्पेति ॥ अल्पप्रयोजनेनाल्पफलेननिमित्तेनकृतःउरुतरोभूयान्प्रयासोयैस्तैःअल्प
स्यैकस्यशशपिण्डस्यभूयसामंकिञ्चित्करत्वादितिभावः उद्गूर्णाः उद्यताः लोष्टाः मृत्पि
ण्डाःलगुडाःदण्डकाष्ठानियैस्तैःपुम्भिरितिशेषःपरितोऽनुविद्धमनुरुद्धंअनतःशकट
स्यांकङ्कनिम्नतोत्पनोकहावृक्षाःतेषांजालमध्यादुद्ध्वान्तमुत्थितंउत्पूर्वाद्ध्वानेःकर्तरिक्तः
उद्धुतमप्लुतायितंशशंमृगविशेषंअन्यःपरमवन्तुमन्तुमिवारयन्अनल्पंगुणंमहान्तमुत्कर्षं

भवाप । स्त्रयासीरनामिषलोलुपस्य शुक्लकपोतिःशुकलभैनिभाव: । अत्रार्थान्तरन्या सः अन्योगुणपाशमवनप्रयुञ्जानः शशमवापजग्राहयोश्च कानस्यैव मृगइत्रियाधसमर्था दिनिभावः ॥ २५ ॥ ******************************* ॥

॥ त्रासेति ॥ त्रासाकुलोजनदर्शनाद्भयविह्वलोऽनएवनिकेतनान्निवेशान्परितः सर्वतः । अभितःपरितइत्यादिनाद्वितीयापरिपतन्धावन्मृगोहरिणःकैश्चिदपिधन्विभिर्धनुष्म द्भिः । धन्वीधनुष्मान्धानुष्कइत्यमरः । व्रीह्यादित्वादिनिरितिस्वामी । पुम्भिर्नान्वबन्धि नानुयातःबध्नातेः कर्मणिलुङ् नथापयङ्गनानामाकर्णपूर्णविस्तीर्णआकृष्टाश्चयेनयना

त्रासाकुलःपरिपतन्परितोनिकेतान्पुंभिर्नकैश्चिदपिधन्विभिरन्वबन्धि । तस्थौतथापिनमृगःक्वचिदङ्गनाभिराकर्णपूर्णनयनेषुहतेक्षणश्रीः ॥ २६ ॥ आस्तीर्णतल्परचितावसथःक्षणेनवेश्याजनःकृतनव प्रतिकर्मकाम्यः । खिन्नानखिन्नमतिरापततोमनुष्यान्प्रत्यग्रहीच्चि रनिविष्टइवोपचारैः ॥ २७ ॥ ***********

न्येवेषवस्तैर्हताईक्षणश्रीर्यस्यसःअतःक्वचिदपिनतस्थौकिन्तुवीरविशिखपाताभावेप्यङ्ग नापाङ्गविशिखपातात्पलायितएवेतिभावःअत्रजनालोकनेत्यभयहेतुकस्यमृगानवस्थान स्याङ्गनापाङ्गहतिहेतुकत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षासाचव्यञ्जकाप्रयोगान् प्रतीयमानहेतोश्च हतेक्षणश्रीरितिविशेषणत्वोक्तत्वात्काव्यलिङ्गमितिसङ्करः ॥ २६ ॥ ****** ॥

॥ आस्तीर्णेति ॥ क्षणेनास्तीर्णतल्पंवेशावृत्तेःशय्याप्रधानत्वात्प्रागेवसज्जितशय्यन्त थारचितावसथःकल्पितनिकेतः । स्थानावसथवास्तुचेत्यमरः । कृतेनवप्रतिकर्मणानूत नेनप्रसाधनेनकाम्यःस्पृहणीयःअखिन्नमतिरश्रान्तचित्तःअगणिताध्वखेदइत्यर्थः । वेश्याजनःखिन्नानध्वश्रान्तानापततआगच्छतोमनुष्यान्पुरुषान्चिरनिविष्टइवतत्रैवनि

स्यमास्त्वर्थं इवेतुप्रेक्षा उपचारैः धौताम्बुनाम्बूवरानादिसत्कारैः प्रावयद्धौतवस्त्रीचका रेत्यर्थः ॥ २७ ॥ ****************************** ॥

॥ सस्तुरिति ॥ सेनायांसमेताःसैन्याःसैनिकजनाःसेनायाश्चेतिण्यप्रत्ययःनगनिम्नगा नांयाःश्रियःसमृद्धयःतासामनुपभोगःउपभोगाभावःकश्चिन्नञस्यप्रतिषेधेपितन् समासइ त्यतेयथाऽदर्शनमश्रवमनुच्चारणं अनुपलब्धिरभावइत्या दिनेनयन्निरर्थकंनिष्फलत्वं गदेवदोषःतेनयःप्रवादोनिन्दातममृजन् अमार्जन्मृजूष्मुद्धोकृत्यादिन्वाज्ञ्‌डिश्पोलुक्मृ ञोरजादौसंक्रमेविभाषावृद्धिर्वक्तव्येतिविकल्पाद्वृद्ध्यभावःमार्जनप्रकारमाह । सस्तुःस्नान चक्रुःपयःपानीयंपपुःस्नाशौचेप्रापानेलिटइअम्बराण्यनेमिजुः अक्षालयन्‌णिजिरशौचे जुहोत्यादित्वाज्झङिश्चाविनिर्दिभिर्भावःणिजिभ्यस्त्राविदिभ्यश्चेतिभर्जैर्जुसादेशःणिजाचया

सस्नुः पयःपपुरनेनिजुरम्बराणिजक्षुर्बिसंधृतविका
शिबिसप्रसूनाः। सैन्याःश्रियामनुपभोगनिरर्थकत्व
दोषप्रवादममृजन्नगनिम्नगानाम् ॥ २८ ॥ **

सांगुसत्वाविषयभ्यासस्सगुणःधृतानिविकाशिबिसप्रसूनानिविकसितपुष्कराणियैस्ते । बि सप्रसूनराजीवपुष्कराम्भोरुहाणिचेत्यमरः । बिसम्मृणालञ्जक्षुःभक्षयाञ्चक्रुः । घसेर्नि दिगमहनेत्यादिनाउपधालोपेचर्त्वंशर्गाभवसिघसोनांचेतिषत्वं । स्नानाद्युपभोगेनोक्तनै रर्थक्यंनिराचक्रुरित्यर्थः । अत्रदोषमार्जनस्यस्नानादिवाक्यार्थहेतुकंकाव्यलिङ्गमलङ्का रः। स्नानादिक्रियासमुच्चयस्त्वङ्गमस्येतिसङ्करः ॥ २८ ॥ ********** ॥

॥ नाभीति ॥ स्त्रीणांनिम्नैर्गम्भीरैर्नाभिरेवह्रदैःपरिगतरयाणिप्रतिषिद्धवेगानिवृहद्भि र्घनैर्वसेतुभिर्निवारितानिप्रतिहतगनिकानीत्यर्थः । पश्चान्नितम्बःस्त्रीकट्याःक्लीबेतुजघ नंपुरइत्यमरः। जघनमेवमगडूकवाद्युन्याद्यविशेषःजलमेकेनपाणिनोत्यापरेणताडि

नम्मण्डूकवन्ध्वनतीति प्रसिद्धन्ते नवसुन्दरम्बराङ्गि सचैःघनैस्तनतटैः स्खलितानि स्खलनङ्गतानि गमितानि जलानि पूर्वोक्तनगनिम्नगासलिलानि मन्दञ्जग्मुः अत्र जलम न्दगमनस्य विशेषणगत्यारयप्रतिबन्धादि पदार्थहेतुकत्वात्काव्यलिङ्गम् ॥ २९ ॥ *

॥ आलोलेति ॥ हस्तिनांसमूहाः हास्तिकानि अचित्तहस्तिधेनोष्ठक्। आलोलानि यानि पुष्कराणि हस्ताग्राणि । पुष्करङ्करिहस्ताग्र इत्यमरः । तेषांमुखैरंध्रैरुल्लसितानि उत्क्षिप्तानि तैरम्बुवर्षैः खेदेनाध्वश्रमेणायतेन दीर्घेण श्वसितस्योच्छ्वासमारुतस्य वेगेन निरस्ता बहिरुत्क्षिप्ताः मुग्धाः सुन्दराः मूर्धन्या मूर्धनिभवाः शरीरावयवाच्चेति यत्प्रत्ययः ये षाभावकर्मणोरितिप्रत्ययनिभावाद्यसङ्गितङ्गिति टिलोपः रत्ननिकरा मुक्ताफलप्रकरास्तैरिवेत्यु

न भीरुभिः परिगृहीतरयाणि यच्छ्रोणीबृहज्जघनसेतुनिवारितानि ।
जग्मुर्जलानि जलमण्डुकवाद्यवल्गुवल्गद्घनस्तनतटस्खलितानि मन्दम् ॥ २९ ॥
आलोलपुष्करमुखोल्लसितैरभीक्ष्णमुक्षांबभूवुरभितो वपुरम्बुवर्षैः ।
खेदायतश्वसितवेगनिरस्तमुग्धमूर्धन्यरत्ननिकरैरिव हास्तिकानि ॥ ३० ॥ *******************

त्प्रेक्षा अभितः वपुरभीक्ष्णमुक्षाम्बभूवुः सिषिचुः उक्षसेचने इजादेश्च गुरुमतोऽन्टच्छ इत्या म्प्रत्ययः । गजेन्द्रजीमूतवराहशंखमत्स्याहिशुक्त्युद्भवमेवभूमिरितिगजानांमुक्ताकरत्वेप्र माणम् ॥ ३० ॥ ****************************** ॥

॥ यइति ॥ येपक्षिणः पक्षवन्तः इन्द्रेणाच्छिन्नपक्षा इत्यर्थः । संसर्गे इनिप्रत्ययः तेऽद्रिप तयो मैनाकादयः प्रथममम्बुनिधिङ्गताः प्रविष्टाः येपि येये इत्यर्थः इन्द्रस्य पाणितुलितेन प्रे रितेनायुधेन वज्रेण लूनपक्षाः छिन्नगरुतस्तेऽद्रिपतयः आक्षिप्ताः अपनीताः केतवो ध्वजाः कु थाः पृष्ठास्तरणानि चयेषां । प्रवेण्यास्तरणंवर्णः परिस्तोमः कुथोद्वयोरित्यमरः । तेषां सैन्य

गजानांकुथेनसरसीर्विगाढुमवगाहितुंसरनिस्तुमीनिनिविकस्यान्नेडामगाः । जग्मुःअत्रगज
छद्मेनेतिछलशब्देनगजत्वमपह्नुत्याद्रित्वारोपणाच्छलादिशब्दैरसत्यत्वप्रतिपादनरूपो
ऽपह्नुत्यालङ्कारः । तेनपक्षवतामद्रीणांसागरावगाहनदर्शनात्सम्प्रतिगजच्छद्मना सरांसि
अवगाहमानाःसाक्षात्तेपक्षाःपर्वताइवेत्युत्प्रेक्षाव्यज्यते ॥ ३१ ॥ ******* ॥

॥ आत्मानमिति ॥ महेभोगजःजलधेर्जलाशयस्यमहत्यूर्मौप्रतिबिम्बितमङ्गंयस्यतमभिमुखा
पतितमभिमुखमागतमात्मानमेवस्वात्मप्रतिबिम्बमेवेत्यर्थः । निरीक्ष्यान्यनागेनप्रतिगजे
नाभियुक्तोऽभिद्रुतइवानितूर्णमपभीर्निर्भीकः सन्क्रोधादधावत्अहोइतिमौढ्यंतथि

ये पक्षिणः प्रथममम्बुनिधिं गतास्ते ये पीन्द्रपाणिदलितादुघदूनप
क्षाः । ते जग्मुरद्रिपतयः सरसीर्विगाढुमाक्षिप्तकेतुकुथसैन्यगजच्छ
लेन ॥ ३१ ॥ आत्मानमेव जलधेः प्रतिबिम्बिताङ्गमूर्मौ महत्यभि
मुखापतितं गजेन । क्रोधादधावदपभीरभिहन्तुमन्यनागाभियुक्त इव
युक्तमहो महेभः ॥ ३२ ॥ नादातुमन्यकरिमुक्तमदाम्बुतिक्तं धूता
ङ्कुशेन न विहातुमपीच्छताम्भः । रुद्धे गजेन सरितः सरुषावतारे रि
क्तोदपात्रकरमास्त चिरं जनौघः ॥ ३३ ॥ *******

स्यायःयुक्तंमहेभस्येतिभावः अभियुक्तइवेत्युत्प्रेक्षायाःप्रतिगजभ्रान्तिनिबन्धनत्वात्भ्रान्तिउ
त्प्रेक्षयोरङ्गाङ्गिभावेनसङ्करः ॥ ३२ ॥ ***************** ॥

॥ नेति ॥ अन्यकरिणाप्रतिगजेनमुक्तेनमदाम्बुनातिक्तंसुरभि । कटुतिक्तकषायास्तुसौर
भ्येपिप्रकीर्त्तिताइतिकेशवः । अम्भआदातुंग्रहीतुंनेच्छताविहातुंत्यक्तुमपिनेच्छताअनि
च्छताक्रोधपिपासाभ्यामित्यर्थः । धूताङ्कुशेनसरुषासक्रोधेनगजेननगसरितोऽवतारेतो
र्थैरुद्धेसतिरिक्तान्युदपात्राणियेषुतेकराःयस्मिन्तथायथातथाचिरमास्तअतिष्ठत् । आत

उपवेशनेलङ् । एकहलादौपूरयितव्येऽन्यतरस्यामित्युदकशब्दस्योदादेशः ॥ ३३ ॥
॥ पन्थानमिति ॥ पन्थानमाप्तुविजहौ द्विओहाक्त्यागेलोड्सेर्द्विरादेशः । आचहावि
तिविकल्पादिकारादेशः पुरोऽग्रेतेस्तनौ पश्यन्प्रतिद्विरदस्यकुम्भौविशङ्कतइतितद्विश
ङ्कि चेतोयस्यसःकुम्भभ्रान्तिमानित्यर्थःअतएवभ्रान्तिमदलङ्कारः । स्तम्बेरमेरमतइति
स्तम्बेरमः । इभःस्तम्बेरमःपद्मीत्यमरः । स्तम्बकर्णयोरमिजपोरित्यच्प्रत्ययः । नत्पुरुषेत्व
तिवकुवलमित्यलुक्परिणिनंसुस्तिर्यक्प्रहर्तुमिच्छुःपरिणिनंसुःनमेःसन्नन्तादुप्रत्ययःएकाच
उपदेशेऽनुदात्तादितिनेट्प्रतिषेधःअसावुपैतिपुरेतिपाठेपुरोपैतीत्यन्वयःउपैष्यतीत्यर्थः ।
यावत्पुरानिपातयोर्लडितिभविष्यदर्थेलट्इतिषिङ्गैविटैः । षिङ्गःपल्लविकोविटइत्यमरः

पंथानमाप्तु विजहौ द्विपुरस्तनौतेपश्यन्प्रतिद्विरदकुम्भविशंकिचे
ताः । स्तम्बेरमःपरिणिनंसुरसावुपैतिषिङ्गैरगद्यतससंभ्रममेवकाचि
त् ॥ ३४ ॥ कीर्णांशनैरनुकपोलमनेकपानांहस्तैर्विगाढमदतापरु
जःशमाय । आकर्णमुल्लसितमम्बुविकाशिकाशनीकाशमायसमतां
सितचामरस्य ॥ ३५ ॥ ************

। एकाकाचिदेवमुक्तरीत्याससम्भ्रमंसत्वरंअगद्यतगदिता ॥ ३४ ॥ ***** ॥
॥ कीर्णमिति ॥ अनेकपानांद्विपानांविगाढःप्ररूढोयोमदेनतापःसएवरुक्रोगःतस्याः
रुजःशमायशनैर्मन्दंहस्तैरनुकपोलंकपोलयोःकीर्णंक्षिप्तंआकर्णंकर्णपर्यन्तंआङ्मर्यादा
भिविध्योरित्यव्ययीभावः उल्लसितमुत्पतितंविकाशियत्काशङ्कुशकुसुमंतेनसदृशङ्काश
नीकाशन्नित्यसमासत्वादस्वपदविग्रहः । अतएवस्युरुत्तरपदेत्वमी । निभसङ्काशनीका
शप्रतीकाशोपमादयःइत्यमरः । अम्बुसितचामरस्यसमतांसादृश्यमापतुल्यार्थैरित्यादि
नाषष्ठीउपमालङ्कारः ॥ ३५ ॥ ************************ ॥

॥ गण्डूषमिति ॥ लब्धः परवारणस्य प्रतिगजस्य मारुतो मदगन्धो येन तेन अत एव सरोषं
यथा तथा पयसः पानीयस्य गण्डूषम् मुखपूरणं मुखान्तर्गतम्पय इत्यर्थः। गण्डूषो मुखपूरण इति
हलायुधः। द्विलिङ्गत्वेपि पुल्लिङ्ग एवाह वामनो लिङ्गाध्याहारादित्यत्र उज्झितवता त्यक्त-
वता नागेन गजेन। मतङ्गजो गजो नाग इत्यमरः। अम्भोधिरोधसि सरसो तीरे। दन्तयोरु-
भयोर्मध्यम्प्रतिमानमिति स्मृतम्। पृथुना प्रतिमानभागेन रुद्धः प्रतिबद्धः कुरू येोर्दन्तौ मुस-
लाविव तयोः प्रसरः प्रसारो यस्मिन् कर्मणि तत्। अयोग्रो मुसलोऽस्त्रियामित्यमरः। निपेते
निपतितम् भावे लिट्। क्रोधवेगादलब्धरोधः प्रहृत्य पारवश्यात् स्वयं चाधोमुखः पपातेत्यर्थः।
क्रोधान्धाः किन्न कुर्वन्तीति भावः ॥ ३६ ॥ ****************** ॥

गण्डूषमुज्झितवता पयसः सरोषं नागेन लब्धपरवारणमारुतेन । अ-
म्भोधिरोधसि पृथुप्रतिमानभागरुद्धोरुदन्तमुसलप्रसरं निपेते ॥ ३६
॥ दानं ददत्यपि जलैः सहसाधिरूढे को विद्यमानगतिरासितुमुत्सहे-
त। यद्दन्तिनः कटकटाहतटान्मिमंक्षोर्मंक्षूदपाति परितः पटलैरली-
नां ॥ ३७ ॥ ***************

॥ दानमिति ॥ दीयत इति दानं धनं मदश्च। दानं गजमदे त्याग इति विश्वः। तद्ददति
वितरत्यपि दातर्यपीत्यर्थः। सहसा अकस्मात् स्वरादित्वादव्ययत्वमिति शाकटायनः। ज-
लैर्जडैर्नीरैश्च। जलं कीलालेनीरे ह्रीवेरे च जडेन्यवदिति विश्वः। अधिरूढे आक्रान्ते
सति विद्यमानगतिः गत्यन्तरवान् समर्थश्च कः पुमानासितुं तत्र स्थातुमुत्सहेत न कोपीत्यर्थः।
शकधृषेत्यादिना तुमुन् यस्मान्मिमंक्षोर्मंक्तुमिच्छोः मज्जेः सन्नन्तादुप्रत्ययः दन्तिनः कटो ग-
ण्डः स कटाहः कर्पर इव। कटाहः कर्परस्तूप इति वैजयन्ती। तस्य तटात्प्रदेशादलीनां
षट्पदैः परितो मंक्षु झटिति। द्राक् मंक्षु सपदि द्रुतमित्यमरः। उदपाति उत्पतितम् भावे लुङ्

णि स्वभावकर्मणो श्लिष्टोनुक्तविशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३७ ॥

॥ अन्तरिति ॥ जलौघे अन्तर्जलौघं विभक्त्यर्थेऽव्ययीभावः अथवा जलौघस्य जलपूरस्यान्तर भ्यन्तरे अवगाढवतः प्रविष्टवतः गाहेर्निष्ठायां क्तवतुप्रत्ययः ढत्वष्टुत्वढलोपाः गजस्य कपोलौ हि त्वा क्षणमन्तरीक्षे उपर्याकाशे विततपक्ष्मभिर्विस्तृतपक्षमूलैः आमूलात् विततपक्षैरित्यर्थः । स्त्री पक्षतिः पक्षमूलमित्यमरः । पक्षात्तिरिति तिप्रत्ययः । अलिगणो गुणेषु रूपादिषु द्र व्यमाश्रयो येषां तेषु द्रव्याश्रयेषु अपि अयुतसिद्धत्वात् द्रव्यसमवेतत्वादेकाधीनसत्ताकेषु स्वरूपोत्यर्थः । पृथग्गतः जलभज्जनमयात् स्वाश्रयपरिहारेण स्थितो नीलो वर्णो नीलरूपं अञ्ज नस्य नीलिमेव रराज । गुणे शुक्लादयः पुंसीत्यमरः । अत्रालिगणेऽस्य द्रव्याञ्जनीलत्वं

अन्तर्जलौघमवगाढवतः कपोलौ हित्वा क्षणं विततपक्षतिरन्तरीक्षे
। द्रव्याश्रयेष्वपि गुणेषु रराज नीलो वर्णः पृथग्गत इवालिगणो गजस्य
॥ ३८ ॥ संसर्पिभिः पयसि गैरिकरेणुरागैरम्भोजगर्भरजसाङ्गनिष
ङ्गिणा च । क्रीडोपभोगमनुभूय सरिन्महेभावन्योन्यवस्त्रपरिवर्तमिव
व्यधत्ताम् ॥ ३९ ॥ * * * * * * * * * * * * * * *

स्वाश्रयादन्योपलब्धिनिर्वाहाय पृथक्स्थितिविशेषत्वमुत्प्रेक्षते ॥ ३८ ॥ * * * * ॥

॥ संसर्पिभिरिति ॥ सरिच्च महेभश्च सरिन्महेभौ पयसि संसर्पिभिः गजात्सरित् जले विसृ त्वरैः गैरिकरेणव एव रागास्तैः करणे घञ् अङ्गनिषङ्गिणा गजाङ्गसङ्गिना अम्भोजगर्भरज सा पद्मानां रागेन च निमित्तेन क्रीडया लीलया उपभोगं सम्भोगमनुभूयान्योन्यं मिथो वस्त्र योः परिवर्तं विनिमयं व्यधत्तामनुकुर्वतामिवेत्यर्थः तत्र लिङ्गपरस्मैपदेन स स्त्रीमादेशः अत्र सरिन्महेभयोः प्रतीयमाननायिकादिभेदाध्यवसानेन विवस्त्रनियमोत्प्रेक्षा ॥ ३९ ॥ *

॥ यामिति ॥ गजेन्द्राः विकसतः समन्तात्पयसि तैलबिन्दुवत्प्रसरतो मदजलस्य चन्द्रकैश्च

न्द्रकैर्मण्डलैर्महानदीनां यां नेत्रश्रियं विदधुश्चक्रुः तां नेत्रश्रियमुत्तरन्तो जलान्निर्गच्छ-
न्तो धौतेषु प्रक्षालितेषु अङ्गेषु लग्नैः सक्तैर्नवनीलपयोजपत्रैर्नवनीलोत्पलदलैरविलम्बितं क्षि-
प्रमेव प्रत्यवापुः प्रतिभेजिरे। अत्र गजानां नदीनां समनेत्रश्रीनिमयोक्त्या समपरिवृत्तिरल-
ङ्कारः। समन्यूनाधिकानां च यदा विनिमयो भवेत्। साकं समाधिकं न्यूनैः परिवृत्तिरसौ म-
तेति लक्षणात् ॥ ४० ॥ ************************ ॥

॥ प्रतीति ॥ अन्यदन्तिनं प्रति प्रत्यन्यदन्ति प्रतिगजाभिमुखमित्यर्थः। लक्षणेनाभिप्र-
तीआभिमुख्ये इत्यव्ययीभावः। चलितं धावन्तं अत एव निशितेनाङ्कुशेन दूरं गाढं यथा त-
थाभिन्नं निर्याणमपाङ्गदेशः। अपाङ्गदेशे निर्याणमित्यमरः। तस्मान्निर्यन् निःसरदसृ-

याश्चन्द्रकैर्मदजलस्य महानदीनां नेत्रश्रियं विकसतो विदधुर्गजे-
न्द्राः। ताम्प्रत्यवापुरविलम्बितमुत्तरन्तो धौताङ्गलग्ननवनीलपयो-
जपत्रैः ॥ ४० ॥ प्रत्यन्यदन्तिनिशिताङ्कुशदूरभिन्ननिर्याणनिर्य-
दसृजं चलितं निषादी। रोद्धुं महेभमपरिव्रढिमानमागादाक्रान्ति-
तो न वशमेति महान्परस्य ॥ ४१ ॥ ✻✻✻✻✻✻✻✻✻

क् यस्य तं महेभं रोद्धुं गृहीतुं निषादी यन्ता परिवृंहणे प्रभवतीति परिवृढः प्रभुः वृंहतेर्वृहेर्वा क-
र्तरि क्तप्रत्यये प्रभौ परिवृढ इति नकारहकारयोर्लोपः निष्ठानकारस्य ढत्वं च निपात्यते। अ-
न्यथा ढलोपस्यासिद्धेरिष्टनादिषु रक्तो हलादेर्लघोरिति रेफादेशो न स्यात्। तस्मादि-
मनिचि रेफादेशे परिव्रढिमा तेनानञ्समासः। तमपरिव्रढिमानमसामर्थ्यमगात्प्राप
इणो गा लुङीति गादेशः। तथाहि महान्बलवानाक्रान्तितो बलात्कारात्परस्य वशं नै-
ति सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४१ ॥ ************ ॥

॥ सेव्य इति ॥ यन्त्रा निषादिना आलानाय बन्धनाय सानुनयं सान्त्वं नीतेन समोपम्यापि

नेनगजेनवन्यगजदानैः कृतोऽधिवासोवासनायस्य सः तद्गन्धीत्यर्थः । शाखीवृक्षः त्रीला दिन्चारिणिनिः । सत्योपिसत्राभाजिनः तेवि । भजतेवायं कर्मणिलुङ् चिणोलुग्वृद्धिश्च किन्तुकेवलमभाज्यभञ्जीत्यर्थः । भञ्जोआमर्दने भञ्जेश्चिणीति विभाषानलोपः शेषम्पूर्ववत् । तथाहि मानभृतोऽहङ्कारिणोऽन्यस्य गन्धमपि न सहन्ते परं किमुतेति भावः । अतोवृक्षभञ्जनं युक्तमेवेत्यर्थः पूर्ववदलङ्कारः ॥ ४२ ॥ *** ***************** ॥

॥ अद्रीन्द्रेति ॥ अद्रीन्द्रस्यां वनकस्य कुञ्जेषु चरन्निरन्तरस्य कुञ्जरस्य गण्डकाषेण कपोलकषणेन संक्रान्तं दानपयो मन्दाम्बु यस्य तस्य तारणवसेनागजेन मथितस्य भग्नस्य वनपादपस्य निजैरात्मीयैः प्रसूनैः पुष्पैः । निजमात्मीयनित्ययोरिति विश्वः । मन्देम्बानं स्नायते

सेव्योपिसानुनयमाकलनाय यं चानीतेन वन्यकरिदानकृताधिवासः । नाभाजि केवलमभाजि गजेन शाखी नान्यस्य गन्धमपि मानभृतः सहन्ते ॥ ४२ ॥ अद्रीन्द्रकुञ्जचरकुञ्जरगण्डकाषसंक्रान्तदानपयसो वनपादपस्य । सेनागजेन मथितस्य निजप्रसूनैर्मन्त्रे यथागतमगामि कुलैरलीनां ॥ ४३ ॥ ✲✲

भावेलिङ् अलीनां कुलैस्तु यथागतमगामि गतम् । क्रमेणैव गतं न तु स्नानमित्यर्थः आपद्यात्मीययोरितिभेदइतिभावः । गमेर्गत्यर्थस्याकर्मत्वाद्भावेलुङ् इभवनपादपानां विशेषणसाम्यादौपम्यप्रतीतेः कथञ्चित्समासोक्तिरुन्नेया ॥ ४२ ॥ ********** ॥

॥ नेति ॥ इभाय दातुं चैरुन्नतेवृत्तत्वेपुनममुर्नावर्त्तत तदा आधोरणैर्न्निर्न्नैनृभिरभिहिताः इभान्क्षन्धीत्युपदिष्टाः पृथुमूलाः शाखाः बन्धाय सम्बन्धनायनरसाबलेनात्मनास्वयमेवाचिच्छिदुः न चैतद्युक्तमितिभावः । यद्वामूढानां युक्तमेवेत्याह । अथवेति । अथवामदान्धैरात्मनीनमात्मनेहितं न क्रियतएव । आत्मनि चिन्ताजनभोगात्तरपदान् खइतिखप्र

त्वयः आत्मनां ध्यानौ वेद इति प्रकृतिभावात्सन्धिर्न इति टिलोपेन पूर्ववद् योगान्तरन्यासः
॥ ४४ ॥ ****************************** ॥
॥ उल्लोलेति ॥ मनुजो नर उल्लोला उच्चप्रकाराः प्रकारे गुणवचनस्येति द्विर्वचनं कर्म
धारयवत्त्वात् पीलुकृतान् शीकरान् सृजन्ति मुञ्चन्तीति तथोक्तान् क्विप् अन्तः प्रबलोष्मणः प्रवृद्ध
तापान् उत्फुल्लं विकचं उत्फुल्लसंफुल्लयोरुपसंख्यानमित्युपसर्गेऽपि फुल्ले निष्ठानत्वं नील
नलिनस्य नीलोत्पलस्योदरेण तुल्यभासः समानकान्तीन् कृष्णवर्णानित्यर्थः विशालशिर
सो विपुलमस्तकान् एकान् कतिचिन्नागान् गजानित्यर्थः हरिचन्दनेषु चन्दनविशेषेषु ।

नोच्चैर्यदा तरुतलेषु ममुस्तदानीमाधोरणैरभिहिताः पृथुमूलशाखाः ।
बध्नाय यच्छिदुरिभास्तरसात्मनैव नैवात्मनीनमथवा क्रियते मदान्धैः
॥ ४४ ॥ उल्लोलशीकरसृजः प्रबलोष्मणोन्तरुत्फुल्लनीलन
लिनोदरतुल्यभासः । एकान्विशालशिरसो हरिचन्दनेषु नागान्ब
बन्धुरपरान्मनुजा निरासुः ॥ ४५ ॥ कण्डूयतः कटभुवं करिणो म
देन स्कन्धं सुगन्धिमनुलीनवतां नगस्य । स्थूलेन्द्रनीलशकलावलि
कोमलेन कण्ठे गुणाच्च मलिनावलयेन भेजे ॥ ४६ ॥ *****

नैव पर्णिके गोशीर्षं हरिचन्दनमस्त्रियामिति वैजयन्ती । बबन्धुः अपरान्नागानहीनित्यर्थः
द्विधा अहिगजा नागा इत्युभयत्रापि वैजयन्ती । निरासुः निःकाशयामासुः अस्यतेर्लिट्
अत्रोभयेषामपि नागानां प्रकृतत्वात्केवलप्रकृतश्लेषः ॥ ४५ ॥ ********** ॥
॥ कण्डूयत इति ॥ कटभुवं गण्डस्थलं कण्डूयतः कषतः कण्ड्वादिभ्यो यगिति यक् ततः शतृप्रत्ययः
कण्डूयतेर्ङित्धातुप्रकृतत्वादुभयपदित्वं । करिणो मदेन सुगन्धि शोभनगन्धं गन्धस्येत्वेन
ह्येकान्तग्रहणं नाद्रियन्ते कवयः नगस्य वृक्षस्य स्कन्धं प्रकाण्डं अनुलीनवतां तत्संश्लिष्टेनेत्य

र्थे लीयतेर्निष्ठेति क्तवतुप्रत्ययः । ल्वादिभ्य इति निष्ठानत्वं लूनानामिन्द्रनीलशकला
नां आवलिव कोमलेन मनोहरेण लीनाम्बलयेन कण्ठे गुणत्वं कण्ठवलयत्वं अमूर्द्धमस्त
कात् स्वाङ्गात् कामङ्ग इत्यनुकृभेजे प्राप्तं कर्मणि लिट् । अत्रारिवलये इन्द्रनीलमयकण्ठ
भूषणत्वारोपाद्रूपकालङ्कारः ॥ ४६ ॥ ************************ ॥

॥ निर्धूतेति ॥ यन्तानिषादी निर्धूतं निरस्तम्बीतेपादघातादङ्कुशवारणे यस्मिन् कर्मणि तत्
थथा तथा उच्छलन्तमुत्प्लवमानमपि । पादकर्म यतं प्रोक्तं यानमङ्कुशवारणं । उभयम्बीत
माख्यातमिति हलायुधः । बालकम्पञ्चवर्षगजम् । पञ्चवर्षो गजो बालः पोतस्तु दशवार्षिक
इति वैजयन्ती । शिक्षावशेन स्वकीयेन गजशास्त्राभ्यासबलेन क्रमेण परिपाट्या परिसान्त्व
नान्युपलालनानि तर्जनाभर्त्सनानि ताभिः शनैरेव शनकैः अव्ययसर्वनाम्नामकच्प्राक्टेरिति

निर्धूतवीतमपिबालकमुच्छलन्तंयन्ताक्रमेणपरिसान्त्वनतर्जनाभिः
। शिक्षावशेनशनकैर्वशमानिनायशास्त्रंहिनिश्चितधियांक्वनसिद्धि
मेति ॥ ४७ ॥ ****************

स्वार्थेऽकच्प्रत्ययः शमं शान्तिमानिनाय । तथाहि सुष्ठु निश्चितार्था धीरेषान्तेषाम्पुंसामित्य
र्थः शास्त्रं क्व सिद्धिं नैति सम्यक्शास्त्रं शास्त्रं सर्वत्र फलतीत्यर्थः । विभक्तधनाभ्रान्तरे विभक्ता इतिव
द्धि निश्चिताधीर्निश्चित इत्युपचर्यते अत एवात्र गम्यमानार्थत्वादुत्तरपदस्याप्रयोगलक्षणो
लोप इत्याहुः ॥ ४७ ॥ ************************ ॥

॥ स्तम्भ इति ॥ करेणुश्चासौ राजा च करेणुराजो गजश्रेष्ठः करेणूनां राजेति गजपतिराजा च
ध्वन्यते उभयत्रापि राजाहः सखिभ्य इति टच् उज्ज्वलमुत्कृष्टं स्नानं च स्वेच्छाचारित्वम
वाप । तदेवाह ऊर्जितं चिरपरिरचितं महान्तं स्तम्भमालानं प्रपञ्चं सहसामुमोच । स्तम्भः
स्थूणाजडत्वयोरिति विश्वः । सरसः आर्द्रोऽग्रहस्तः पुष्करम्याणि यस्य स सरसनूतनमद

न्दीयतइतिदानंधनञ्चातिनरामविमात्रं भव्ययारात्प्रत्ययः। ददैवदवर्षेत्यर्थः। परितो बद्धापराणिबद्धपश्चिमपादानिबद्धान्यन्यानिच। अपरःपश्चिमःपादइतिगजप्रकरणेवै जयन्ती। निगडानिशृङ्खलानि। अथशृङ्खलेअन्दुकोनिगडोस्त्रियामित्यमरः। अला वीत्लुनानिस्मलुन्क्छेदनेलुङ्अस्तिसिचोपृक्तेइतीट्इटईटीतिसलोपःअत्रकरेणुराज पदसाधर्म्यध्वनिःविशेष्यस्यापिश्लिष्टत्वान्नश्लेषइत्युक्तम् ॥ ४८ ॥ ********* ॥

॥ जङ्गइति ॥ गम्भीरम्मन्दंवेत्तीतिगम्भीरवेदी। त्वग्भेदाच्छोणितस्रावान्मांसस्यच्यव नादपि। आत्मानंयोनजानातितस्याद्गम्भीरवेदिनेतिराजपुत्रीये। चिरकालेनयोवे त्तिशिक्षाम्परिचितामपि। गम्भीरवेदीविज्ञेयःसगजोगजवेदिभिरितिमृगचर्मीये। नखि

सम्भंमहान्तमुचितंसहसामुमोचदानंददावतितरांसरसाग्रहस्तः।
बद्धापराणिपरितोनिगडान्यलावीत्स्वातन्त्र्यमुज्ज्वलमवापकरेणुराजः
॥ ४८ ॥ जङ्गेजनैर्मुकुलिताक्षमनादरानेसंरुद्धहस्तिपकनि
ष्ठुरतर्ज्जनाभिः। गम्भीरवेदिनिपुरःकवलंकरीन्द्रेमन्दोपिनाम
नमहानवगृह्यसाध्यः ॥ ४९ ॥ **********

गम्भीरवेदिनिकरीन्द्रेसंरब्धःकुपितःहस्तिनःपातीतिहस्तिपःसएवहस्तिपकोनिषादो । आधोरणाहस्तिपकाहस्त्यारोहानिषादिनइत्यमरः। तस्यनिष्ठुराभिःचोदनाभिस्त र्जनाभिरपिमुकुलिताक्षंनिमीलितनेत्रंयथातथापुरःकवलंग्रासंअनाददानेसति। मन्दो मूढोपि। मूढाल्पापटुनिर्भाग्याइत्यमरः। गजभेदोपिमद्रोमन्दोमृगश्चैवविज्ञेयास्त्रिविधा गजाइति। महान्बलाधिकोऽवगृह्यनिगृह्यसाध्येननामनखल्विनिजनैर्जङ्गेज्ञातं। जा नातेःकर्मणिलिट्मन्दोपीत्यादिवाक्यार्थःकर्म ॥ ४९ ॥ ********** ॥

॥ क्षिप्तमिति ॥ वारणपतिःकरिवरोमुखःपुरःक्षिप्तमग्रेन्यस्तमिक्षुकाण्डमिक्षुदण्डंनजगृ

हेनस्त्रीचकार।निकटोपगतं।समीपस्थां।करेणुङ्करिणींचनापेक्षणेनअनेच्छनिस्सलङ्गस्तेइ
निभूतार्थेलङ्किन्तुपरिमीलिताक्षंयथातथेतिस्मृत्यर्थभावः इच्छयाविहारार्थेषुतेवनवा
सार्थमहोत्सवास्तेषां।सस्मारतानेवचिन्तयामासेत्यर्थः अधिगर्थदयेशांकर्मणीनिशेषत्व
विवक्षायांषष्ठी । नस्वच्छन्दचारिणां।निर्बन्धेभोगेषुमनःप्रवर्त्ततेइतिभावः । वाक्यार्थ
हेतुकङ्काव्यलिङ्गमलङ्कारः ॥ ५० ॥ ********************** ॥

॥ दुःखेनेति ॥ उच्छ्रितेनउद्धृतेनहस्ततलेनदत्तोनिहितोयःविधानस्यगजग्रासस्यपिण्डः ।
विधानंहस्तिकवलइतिवैजयन्ती । तस्यस्नेहस्तुत्याघृतादिनिःस्यन्दनेनस्नापितवालकरानु
नभुजः । स्नातेर्ण्यन्तात्कर्मणिक्तः अर्त्तिह्रीत्यादिनापुगागमः।मित्वाद्ध्रस्वःआशयितभोज

स्त्रियंपुरेवजगृहेमुकुरंशिशुकाण्डनापेक्षणेनिकटोपगताङ्करेणम्।
सस्मारवारणपतिःपरिमीलिताक्षमिच्छाविहारवनवासमहोत्सवाना
म् ॥ ५० ॥ दुःखेनभोजयितुमाशयितानशशाकतुङ्गाग्रकायमनमन्त
मनादरेण । उच्छ्रितप्रहस्ततलदत्तविधानपिण्डस्नेहस्तुतिस्नपित
बालकरिभाधिराजम् ॥ ५१ ॥ **********

यिताआशयेर्ण्यन्तात्तृच्।तुङ्गाग्रकायंस्वभावतएवोन्नतोर्ध्वकायंअनादरेणानमन्तंकवलग्रहणा
यननिमाननिमकुर्वाणमिभाधिराजङ्गनिवुद्धीत्यादिनाअणिकर्त्तुर्णौकर्मत्वं । दुःखेनकृच्छ्रे
णभोजयितुंशशाकस्वभावोन्नतानान्त्वाप्यहङ्कारग्रस्तानां।कोनामयितेतिभावः ॥ ५१ ॥

॥ मुक्तेति ॥ मुक्तांमुकैःमुक्तापटैःउपरचितानिउपकल्पितानिअन्यत्रनुअल्पाःअंशवो
मुकाःसूक्ष्मास्तेजोवयवाः अल्पाइत्यस्यार्थेकन्प्रत्ययः मुक्तैस्तैरुपचितानिव्याप्तानिरश्मि
भिःप्रग्रहैःकिरणैश्चविततानिविस्तृमानि ।किरणप्रग्रहौरश्मीत्यमरः । चन्द्रस्येवाक्रान्तिर्ये
षानानिचन्द्राक्रान्तीनिचन्द्रमण्डलनिभानीत्यर्थः । नराधिपानाम्वेश्मानिदूष्याणिनिरन्तर

Z

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri



भिनीरंध्राभिरुच्चैर्गजमण्डलिकाभिर्गजपरिधिभिः स्वार्थेकप्रत्ययः । कान्पूर्वस्येकारः नीलाभ्रपङ्क्तिभिःपरिवेषम्परिधिम्परिवेष्टनमितियावत् परिवेषस्तुपरिधिरित्यमरः । अधिजग्मुरित्यनुषेक्षा ॥ ५२ ॥ ************************ ॥

॥ गव्यूतेति ॥ गव्यूतीविशिष्टगमनदेशोनामार्गगतयोऽध्वगमनानियेषान्तेतथापिगतेरि मार्गःप्रस्थितदूराध्वानइतिविरोधः । अपिरुविरोधेगव्यूतानामार्गामृगसम्बन्धिनीगतिर्येषा नाइतिविरोधपरिहारः । अतएवविरोधाभासोलङ्कारः । दर्पसालत्त्वेलोमकःसार स्वोऽस्येति न्कव्येनोल्लसितस्योद्धतस्यफेनेन जलस्यफेनीभूतोद्धतसिदोदकस्यानुसारेणसंलक्ष्याणि पल्ययनवर्धंरणामासनवन्धं चर्मवरत्राणांपदानिनन्त्रोदनात्रिम्नीभूतस्थलानियेवान्तेतथा

मुक्तांशुकोपरचितानिनिरन्तराभिर्वेश्मानिरश्मिविततानिनराधि
पानाम् । चन्द्राबलीनिगजमण्डलिकाभिरुच्चैर्नीलाभ्रपंक्तिपरि
वेषमिवाधिजग्मुः ॥ ५२ ॥ गव्यूतमार्गगतयोऽपिगतोरुमार्गाः
स्वैरंसमाचक्रिपिरेभुविवेल्लनाय । दर्पादयोद्धसितफेनजलानुसा
रसंलक्ष्यपल्ययनवर्धपदास्तुरङ्गाः ॥ ५३ ॥ *-*-*-*-*-*

क्ताः । पल्ययनंपर्य्याणमितिरत्नकोषः । तुरङ्गाःभुविवेल्लनायाङ्गपरिवर्त्तनायस्वैरम्मरं समाचक्रमिरेसमाक्रान्ताअध्वश्रमापनोदनार्थमितिभावः वर्द्धनेदृढबन्धनादीर्घाभवतीति वर्द्धंमृद्धिवधिभ्यां रन्निति णादिकोरन्प्रत्ययेलघूपधगुणोरपरः । वंर्धत्रपुवरत्रयोरितिवि श्वः । अमरस्तुनधीवर्धीवरत्रास्यादित्याह । नदाद्यन्निन्धीनादिकोष्ट्रन्प्रत्ययेपूर्ववत्गुणो रपरःप्रत्ययनकारस्यभष्घस्तयोर्द्धोधइतिधत्त्वेविन्वाखीलिङ्गेङीष् ॥ ५३ ॥ *** ॥ ॥ आजिघ्रतीति ॥ वाजिरन्ध्रयोनिर्देशविशेषःरजोवाह्लिजेऽश्वेवाह्लिदेश्यइतिपाठेवि ञ्चप्रयोगोगम्यमानत्वादित्युक्तङ्गर्गादिभ्योयञितिभवार्थेयञ्प्रत्ययः । तदन्तविधिसुप्

ज्यः । प्रणतमूर्द्धनि नम्रशिरसि हिते प्रणामे आजिघ्रति गन्धं गृह्णाति चुम्बति च सति सभा
वाल्का मा चेति भाविः । नासाविरेकं नासारंध्रनिस्सरपवनो निश्वासः तेनोल्लसितमुद्धूतं तनी
यः सूक्ष्मतरं रजस्तस्याश्वस्याङ्गसङ्गे नवेक्षणप्रयुक्तेन यत्सुखं तस्यानुभवे उत्सुकायां उत्क
ण्ठितायाः पृथिव्याः रेणुच्छलाज्जगामेवेत्युत्प्रेक्षा । सा च भूतुरङ्गमयोः प्रतीयमानचेतनताय
का भेदाध्यवसायादित्यवधेयम् । विरेचनेऽनेनेति विरेकः ल्युडन्तः प्रत्ययः । चजोः कुघिण्यतो
रिति कुत्वं लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति नपुंसकत्वाविरोधः । अतएव छिद्रं निर्व्य
थनं रोकमित्यमरः । रोको रन्ध्रे विले नपुंसि इति वैजयन्ती । रोको रन्ध्रे विले रोकमिति विश्वः
। ये तु केनाप्यभिप्रायेण विरेकपवनेति पठन्ति तेषामभ्यरोऽस्तु रोगैः जीवितमिति वर पानीयप

आजिघ्रति प्रणतमूर्द्धनि वाह्लिजेऽश्वे तस्याङ्गसङ्गमसुखानुभवोत्सु
कायाः । नासाविरेकपवनोल्लसितं तनीयो रेणुच्छलादिव जगाम रजः
पृथिव्याः ॥ ५४ ॥ हेम्नः स्थलीषु पुरः परिवृत्त्य वाजी धुन्वन्वपुः
प्रविततायतकेशपंक्तिः । ज्वालाकणारुणरुचा निकरेण रेणोः शोणे
नेजस इव दह्नसतारराज ॥ ५५ ॥ ※※※※※※※※※

पवनपुनीते रजसी वा खे रेणोः अश्वोत्थमतं गन्धं जुगुप्सावीडभीकरमिति विक्षणात् ॥ ५४ ॥
॥ हेम्न इति ॥ हेम्नः स्थलीषु स्वर्णभूमिषु जानपदेत्यादिना अकृत्रिमार्थे ङीष्प्रत्ययः पुरि नः
परिवृत्त्य परिवृत्तिं हत्वा वपुर्धुन्वन् धूलिनिर्गमाय कम्पयन् अतएव प्रवितता विस्तृता आय
ता च केशपंक्तिः रोमसङ्घातो यस्य स वाजी ज्वालाकणाः स्फुलिङ्गाः तद्वदरुणारुचा रक्तवर्णेन
रेणोर्निकरेण उज्ज्वलतया युक्तः दनयार्थ हरुद्दह्यमानो जसेऽन्तः सारस्य दर्पस्य शोणेणाग्नि
रेकेणेव रराज । उत्प्रेक्षालङ्कारः ॥ ५५ ॥ ※※※※※※※※※※※※※※ ॥
॥ इत्यादिकेति ॥ पुरुषकोऽश्वानां स्थानकभेदः । तद्वत्सम्प्रसृमिमेतादग्रपादेन भुवि स्थित्वा

ग्रपादयोः । ऊर्ध्वंप्रेरणयास्थानमस्थानाम्पुरुषः स्मृत इति पुरुषस्तएव पुरुषकः तेन पुरुषके णस्थानके नोन्नमितऊर्ध्वावस्थितोऽग्रकायः पूर्वकायो यस्य स तथोक्तः अतएवोदयशैलस्यमू र्द्धमस्तकादर्द्धमुदितोऽर्द्धोदितः हरिः सूर्यइवस्थित इत्यर्थः अर्द्धोदित विशेषणात् उच्चैरु न्नतः श्रीवृक्षएव श्रीवृक्षकः आवर्त्तविशेषस्तद्वानश्वः श्रीवृक्षकी। वक्षोभवावर्त्तचतुष्टयस्य क ण्ठेभवेद्यस्य च रोचमानः। श्रीवृक्षकीनामहयः स भर्तुः श्रीपुत्रपौत्रादिविवृद्धये स्यादिति ल क्षणात्। श्रीवृक्षकी वक्षसि चेद्रोमावर्त्तौ मुखेपि चेदिति वैजयन्ती। दन्तालिकामुखरज्जुः। मुखरज्जुश्च दन्तालीरशिकारक्षणीति चेति वैजयन्ती। तस्याधरणे ग्रहणे निश्चलं स्थिरम्पा णियुग्मं यस्य तत्पाणिभ्यां दृढं गृहीताभयवल्गामित्यर्थः। वल्लभपालमुत्तमाश्वपालम्। वल्लभोदयिते ध्यक्षे कुलीनेश्वेपि वल्लभ इति विश्वः। लोकेन नाक्रमनवल्गाग्रहणदार्ढ्या

दन्तालिकाधरणनिश्चलपाणियुग्ममर्द्धोदितो हरिरिवोदय शैलमूर्द्ध्नः। लोकेन नाक्रमत वल्लभपालमुच्चैः श्रीवृक्षकी पु रुषकोन्नमिताग्रकायः ॥ ५६ ॥ ********

त् लोकेनापि नाक्रमत लोकेनाभिभवितुन्न शक्तोभूदित्यर्थः। इह लयितुं क्षणमक्षमताङ्ग नानन्दं दुःखमिह किञ्चिदित्यादिवदप्यर्थस्य सामर्थ्यलभ्यत्वादपेरप्रयोगः। अन्यथा लोकेन नाक्रमत किन्नु भूय इति व्याख्याने। निश्चलपाणियुग्मत्वादिति विशेषणावगतवा हकौशल्यप्रकाशनतात्पर्यभङ्गप्रसङ्गात्करणे च लोकेत्यादिना तृतीया अनुपसर्गाद्वेति वि कल्पादात्मनेपदम्। उपमालङ्कारः ॥ ५६ ॥ *************** ॥

॥ रेजइति ॥ स्नपनेनाभिषेचनेन सान्द्रतमार्द्रमूर्त्तिः अनिमिषदृष्टिभिः विस्मयादनिमि षाक्षैर्जनैर्देवैरिव नादृग्भिरीक्ष्यमाणः श्रियः शोभायाः देव्याश्च सन्निधानेन रमणीयतरः। न ष्टश्रीर्दिवि नालक्ष्मीः सानियत्नोत्तमाहयाइत्यागमादिति भावः। उच्चैरुन्नतोऽश्वो जलनि

धेः समुद्राज्जात एव जातमात्रः सद्योजात इत्यर्थः । अन्यथोक्तसाधर्म्यात्सम्भवादिति भावः ।
मात्रङ्कार्त्स्न्येऽवधारणइत्यमरः । उच्चैरुन्नतं श्रवः कीर्त्तिरुन्नते कर्णौ वा यस्य स उच्चैः
श्रवाः शक्राश्व इव रेजे । उपमालङ्कारः ॥ ५७ ॥ ****************** ॥
॥ अश्रावीति ॥ पुरोऽग्रे हरितकं हरितं तृणमश्नन् अत एव ग्रीवाग्रे लोलाश्चलाः कलाश्च
याः किंकिण्यः क्षुद्रघण्टिकास्तासां निनादेन मिश्रं दशनानां दन्तानां चुर्वुरशब्दं चुर्वु
रध्वनिं दधत् अत एव मुदमादधानः उत्पादयन्नश्वः जातावेकवचनं क्षणेन वीतनिद्रैः । क्ष
णनिद्रैरित्यभुक्तवाग्मीति न भाग्यनद्युपपद इति भाग्यलक्षणादिति भावः । भूमिपतिभिरश्रा

रेजे जनैः स्नपनसान्द्रतरार्द्रमूर्तिर्देवैरिवानिमिषदृष्टिभिरीक्ष्यमाणः
। श्रीसन्निधानरमणीयतरोऽश्वरत्नैरुच्चैःश्रवा जलनिधेरिव जात
मात्रः ॥ ५७ ॥ अश्रावि भूमिपतिभिः क्षणवीतनिद्रैरश्नन्पुरो
हरितकं मुदमादधानः । ग्रीवाग्रलोलकलकिङ्किणिकानिनादमि
श्रं दधद्दशनचुर्वुरशब्दमश्वः ॥ ५८ ॥ उत्खाय दर्पचलितेन सहै
व रज्ज्वा कीलं प्रयत्नपरमानवदुर्ग्रहेण । आकुल्यकारि कटकस्तुरगे
ण तूर्णमश्वेति विद्रुतमनुद्रवताश्वमन्यम् ॥ ५९ ॥ ****

विश्रुतः अश्वस्य शब्दोऽश्रावीत्यर्थः । वीणाः श्रूयन्ते भेर्यः श्रूयन्त इत्यादिवत् शब्दधर्मः शब्दि
ष्वपचर्य्यते । स्वभावोक्तिरलङ्कारः ॥ ५८ ॥ ******************** ॥
॥ उत्खायेति ॥ दर्पाच्चलितेनोच्चलितेन अत एव रज्ज्वा पाशेन सह कीलं शङ्कुं । शङ्कावपि
द्वयोः कीलेत्यमरः । उत्खाय उत्पाट्य तूर्णं विद्रुतं धावन्तं अन्यमश्वं अश्वेत्यनुद्रवता वडवे
ति भ्रान्त्याऽनुधावता प्रयत्नपरैर्गृहीतुमुद्यतमानैरपि मानवैर्मनुष्यैर्दुर्ग्रहेण तुरङ्गेण कट
कः शिविरमाकुल्यकारि आकुलीकृतः आकुलशब्दाद्भूततद्भावे च्विः अस्यचाविनीकारः

उपलानामल्पजन्तॄणानां ओघेन यत्सौहित्यम्पूर्त्तिः पर्याप्तमुपसम्पन्नम् । पूर्त्तिः सौहित्यमुच्यत इति हलायुधः । तेन निःसहतरेणात्यन्तमसहतरेणाप्यभारावतारे सत्यतिभोजनादुत्थातुमक्षमेनेत्यर्थः । सहेः पूर्वान्पचाद्यजन्तात्तरप्प्रत्ययः । उपलपाषाणजाः प्रोक्ता इति विश्वः । औक्षकेण उक्ष्णां समूहेन गोत्रेत्यादिना वुञ्प्रत्ययः तरोरधस्तात्तरुतले रोमन्थः पशूनाञ्चर्वितचर्वणन्तेन मन्थरम्मन्दञ्चलन्त्यो गुर्व्यः सास्नागलकम्बला यस्मिन्कर्मणि तद्यथा तथा । सास्नानुगलकम्बल इत्यमरः । किञ्च निमीलन्ति सुखात्मुकुलीभवन्त्यलसानि वीक्षणानि यथा तथा आसाञ्चक्रे आसितं आसउपवेशने भावे लिट् दयायासश्चेत्याम्प्रत्ययः कृञ्चानुप्रयुज्यते चिटीनि कृञ्चोरनुप्रयोगः इतः प्रभृत्याचतुष्टयात्स्वभावोक्तिः ॥ ६२ ॥ *** ॥

उत्तीर्णभारलघुनाप्यलघूपलौघसौहित्यनिःसहतरेण तरेरधस्तात्
। रोमन्थमन्थरचलद्गुरुसास्नमासाञ्चक्रे निमीलदलसेक्षणमौक्षकेण
॥ ६२ ॥ मृत्पिण्डशेखरितकोटिभिरर्द्धचन्द्रं शृङ्गैः शिखाग्रगतल
क्ष्ममलं हसद्भिः । उच्चक्कृङ्गितान्यवृषभाः सरितां नदन्तो रोधांसि धीरम
वचस्करिरे महोक्षाः ॥ ६३ ॥ **********

॥ मृत्पिण्डेति ॥ मृत्पिण्डैर्वप्रक्रीडालग्नमृत्खण्डैः शेखरिताः सञ्जातशेखराः कोटयोऽग्राणि येषान्तैरत एव शिखाग्रगतमुभयकोट्यन्तर्गतं लक्ष्मैव मलं यस्य तमेवम्भूतं स्वेन मर्द्धचन्द्रं हसद्भिरित्यतिशयोक्तिभेद इत्युक्तं । अभूतोपमेति मतान्तरं । शृङ्गैर्विषाणैरुच्चक्कृङ्गिताः अन्यवृषभाः प्रतिवृषभा यैस्तेऽत एव धीरङ्गम्भीरं नदन्तो गर्जन्तः महान्त उक्षाणो महोक्षाः अचतुरेत्यादिना निपातनात्साधुः । सरितो रोधांसि अवचस्करिरे अलिलिखुः दर्पादुत्कुरित्यर्थः अवपूर्वात्किरतेः कर्त्तरि लिट् किरतेर्हर्षजीविकाकुलायकरणेष्विति वक्तव्यमित्यात्मनेपदं ऋदच्छ्त्यृनामिति गुणः । अवाच्चतुष्पाच्छकुनिष्वालेखन इति सुडागमः ॥ ६३ ॥

॥ मेदस्विन इति ॥ ऊर्जो बलमस्यास्तीति ऊर्जस्वलेन बलिना ज्योत्स्नातमिस्रा इत्यादिना निपातः । उक्ष्णा वृषभेण मेदस्विनो मांसलान् अस्मायामेधास्रजोविनिः । अतएव सरभसं सत्वरमुपगतान् अभिकामयन्त इत्यभिकान् कामुकान् । कम्रः कामयिताभीक इत्यमरः । अनुकाभिकाभीकः कमितेति निपातः परान् अनडुहो बलीवर्दान् मुखरः स्वनेन युद्धे न भंक्त्वा निर्जित्य जयेनोद्धुरे निर्भरे तदुद्धूरित्यादिना समासान्तः विशाले च विषाणे यस्मिन् कर्मणि तद्यथा तथा निःसपत्नमप्रतिपक्षं सुरभीरनु गवां पृष्ठतः कर्मप्रवचनीययुक्ते द्वितीया जग्मे गत भावे लिट् ॥ ६४ ॥ ************************** ॥

॥ विघ्राणमिति ॥ आयतिमतीं दैर्घ्यवतीं न च वृथा दैर्घ्यमित्याह । अवृथेति । उच्चैस्तरप

मेदस्विनः सरभसोपगतानभीकान्भंक्त्वा पराननडुहो मुखरः स्वनेन । ऊ
र्जस्वलेन सुरभीरनु निःसपत्नं जग्मे जयोद्धुरविशालविषाणमुक्ष्णा ।
॥ ६४ ॥ विघ्राणमायतिमतीमवृथाशिरोधिं प्रत्यग्रनाममतिरसामधि
कां दधन्ति । लोलौष्ठमोष्ठकमुदग्रमुखं तरूणामभ्रंलिहानि लिलि
हे नवपल्लवानि ॥ ६५ ॥ ***********

ल्लवग्रहणात् सफलामित्यर्थः । शिरो धीयतेऽस्यामिति शिरोधिं ग्रीवां । शिरोधिः कन्धरे
त्यपीत्यमरः । कर्मण्यधिकरणे चेति किप्रत्ययः विघ्राणं दधानं उदग्रमुखं पल्लवग्रहणा
र्थमूर्ध्वीक्षिप्ततुण्डमोष्ठकमोष्ठसमूहः गोत्रोक्षेत्यादिना वुञ् अतिशयितो रसः स्वादो या
सां तामतिरसां प्रत्यग्रनामभिनवत्वं दधन्ति दधति वा नपुंसकस्येति वैकल्पिको नुमागमः ।
अभ्रं लिहन्तीत्यभ्रंलिहानि उच्चतराणि वहाभ्रे लिहः इति खश्प्रत्ययः अरुर्द्विषदित्यादिना मु
मागमः । तरूणां नवपल्लवानि । पल्लवोऽस्त्री किसलयमित्यमरः । लोलौष्ठं यथा तथा
आस्वादयामास जघासेत्यर्थः ॥ ६५ ॥ ********************* ॥

॥ सार्द्धमिति ॥ उचितैरभ्यस्तैः । अभ्यस्तेषूचितंन्याय्यमित्यादवः । पिचुमन्दपत्रैर्निम्बदलैः सार्द्धम् । पिचुमन्दश्च निम्बोऽयमित्यमरः । कथञ्चित्प्रमादादास्यान्तरालगतं मुखाभ्यर्गतं मदीयं मृदुतरमाम्रदलं चूतपल्लवं दासेरकः उष्ट्रः पुरा निषादैः म्लेच्छैः सम्बलितं विप्रम्पतगराड्गरुत्मानिव निर्जगार. उद्गीर्णवान् पुरा किल कुतश्चित्कारणात् म्लेच्छभक्षणेनैः सहान्तः प्रविश्य गलन्दहनं विप्रङ्गरुडं उज्जगारेति पौराणिकी कथात्रानुसन्धेया ॥ ६६ ॥ ************************** ॥

॥ स्पष्टमिति ॥ बहिः स्थितवते पि अनुजीविजनाय राज्ञोऽवसरकांक्षिणइति भावः । स

सार्द्धं कथञ्चिदुचितैः पिचुमन्दपत्रैरास्यान्तरालगतमाम्रदलं म्रदीयः ।
दासेरकः सपदि संवलितं निषादैर्विप्रं पुरा पतगराडिव निर्जगार ॥ ६६
॥ स्पष्टं बहिः स्थितवतेऽपि निवेदयन्तश्चेष्टाविशेषमनुजीविजनाय
राज्ञां । वैतालिकाः स्फुटपट्प्रकटार्थमुच्चैर्भोगावलीः कलगिरोऽवसरे
पेठुः ॥ ६७ ॥ उन्नम्रताम्रपटमण्डपमण्डितन्तदानीलनागकु
लसंकुलमाबभासे । संध्यांशुभिन्नघनकर्बुरितान्तरीक्षलक्ष्मीविड
म्बिशिविरं शिवकीर्तनस्य ॥ ६८ ॥ ********

ज्ञां चेष्टाविशेषं नात्कालोचितचरित्रविशेषं स्पष्टं निवेदयन्तः नद्याङ्कप्रबन्धपाठैरिति भावः । कलगिरो मधुरवाचो वैतालिका मङ्गलपाठकाः अवसरे युनच्चेलास्तु स्फुटैः प्रसिद्धैः पदैः प्रकटः प्रकाशोऽर्थोऽभिधेयं यस्मिन् कर्मणि तद्यथा तथा उच्चैः भोगावलीः प्रबन्धान् पेठुः पठन्ति स्म एकहल्मध्येनादेशादेर्लिटीत्येत्वाभ्यासलोपौ ॥ ६७ ॥ ****** ॥

॥ उन्नम्रेति ॥ उन्नम्रैरुन्नतैस्ताम्रैः धातुरक्तैः पटमण्डपैर्दूष्यैर्मण्डितं आसमन्तान्नीलैर्नागकुलैर्गजसंघैः संकुलं भ्रमणएव संध्यांशुभिन्नैः सन्ध्यारागसम्भिन्नैर्घनैर्मेघैः कर्बुरितस्य चित्री

कूलस्यान्तरीक्षस्यलक्ष्मींविडम्बयत्यनुकरोतीतितत्तथोक्तंशिवकीर्त्तनस्यमङ्गलकीर्त्तेःनृप
स्यनद्विविरङ्कटकमावभासेमनोहरमभूदित्यर्थः । उपमालङ्कारः ॥ ६८ ॥ *** ॥
॥ धरस्येति ॥ बलैःसैन्यैराक्रान्तोगिरिपतीरैवतकः क्रीडद्भिर्विहरमाणैर्द्विरदैर्मथिता
नाम्भग्नानामुर्वीरुहाणांवृक्षाणांरवैःशब्दैर्निमित्तेनश्रीपतिंहरिं । त्वत्वङ्ग । त्वन्धरस्यपर्व
तस्योद्धर्त्ताउद्धारकोसीतिसर्वत्रजगतिप्रतीतःप्रसिद्धःगोवर्द्धनोद्धरणादितिभावः । त
त्तर्हिकिंकिमर्थंअतिभरमतिभारवन्तंमामधःप्रापिपयिषुः प्रापयितुमिच्छुरसिप्रापयतेःस
न्नन्तादुप्रत्ययःइत्युच्चैरुपालब्धेवआक्रुक्षदिवेत्युत्प्रेक्षा । उपाङ्पूर्वाल्लभेर्लुङ् एकाचउप
देशइतिनेट्झषस्तथोर्धोधइतितकारस्यधकारःधिचेतिसिचःसकारलोपः । शिखरि
णीवृत्तम् । रसैरुद्रैश्छिन्नायमनसभलागःशिखरिणीतिलक्षणात् ॥ ६९ ॥ *** ॥
इतिश्रीमहामहोपाध्याय कोलाचलमल्लिनाथसूरिविरचितेमाघकाव्यव्याख्यानेसर्वङ्क
षाख्येपञ्चमःसर्गःसमाप्तः ॥ ५ ॥ *********************** ॥

धरस्योद्धर्तासित्वमितिननुसर्वत्रजगतिप्रतीतस्तत् किंमामतिभरम
धःप्रापिपयिषुः । उपालब्धेवोच्चैर्गिरिपतिरितिश्रीपतिमसौबला
क्रान्तक्रीडद्द्विरदमथितोर्वीरुहरवैः ॥ ६९ ॥ *****
इतिश्रीमाघकृतौशिशुपालवधेमहाकाव्येपंचमःसर्गः ॥ ५ ॥ *



॥ अथर्तुवर्णनमारभते ॥ अथेति । अथसेनानिवेशानन्तरं गिरौ रैवतके रिरंसुं रन्तुमिच्छुं रमेः सन्नन्तादुप्रत्ययः एतेन ऋतुवर्णनप्रवृत्तेः प्रभुचित्तवृत्तिज्ञानपूर्वकत्वमुक्तं । सतां साधूनां विपदामन्तं करोतीति विपदन्तकृत् क्विप् । नविपदन्तकृतं सेव्यमितिभावः । अमुं हरिं निषेवितुं सततून्स्वस्वनियतवृक्षाननतिक्रम्य यथास्वं तरुषु यथार्थेऽव्ययीभावः । यथास्वं तरुषु स्थिता प्रसवश्रीः पुष्पफलसंपत्तिः यथास्वतरुप्रसवश्रीः । प्रसवस्तु फले पुष्पे इत्यमरः । शाकपार्थिवादिषु द्रष्टव्यः । शाकुनायेन तेन कृतयथास्वतरुप्रसवश्रिया यथास्वतरुकृतप्रसवश्रियेत्यर्थः । ऋतुगणेन युगपद्भुवि पदमादधे आहितं युगपदृतुगणः प्रादुरभूदित्यर्थः । न ह्यसमर्थं सेवकाः क्षिपन्तीति भावः । अत्र सर्गे सर्वत्र यमकं शब्दालङ्कारः । तल्ल-

अथ रिरंसुममुं युगपद्गिरौ कृतयथास्वतरुप्रसवश्रिया । ऋतुगणेन
निषेवितुमादधे भुवि पदं विपदन्तकृतं सताम् ॥ १ ॥ नवपलाश
पलाशवनं पुरः स्फुटपरागपरागतपङ्कजम् । मृदुलतान्तलतान्तमलो
कयत्स सुरभिं सुरभिं सुमनोभरैः ॥ २ ॥ *******

क्षणं तूक्तं चतुर्थे । अर्थालङ्कारस्तु यथासम्भवमूह्यः । अस्मिन्सर्गे द्रुतविलम्बितं वृत्तं । द्रुतविलम्बितमाह नभौ भराविति लक्षणात् ॥ १ ॥ ***************** ॥

॥ अथ लोकवेदयोः प्राथम्येन व्यवहाराद्वसन्तमादौ वर्णयति ॥ नवेति । स हरिः पुरोऽग्रे नवपलाशानि नूतनपर्णानि पलाशवर्णानि किंशुककाननानि यस्मिंस्तं । नवपलाशपलाशवनं बहुव्रीहिपूर्वपदो बहुव्रीहिः । पलाशः किंशुके पत्रे पलाश इति विश्वः । स्फुटानि विकचानि परागैः रजोभिः परागतानि व्याप्तानि च पङ्कजानि यस्मिंस्तं स्फुटपरागपरागतपङ्कजं मृदवः कोमलाः अत एव तनान्ताः आतपसमये किंचिन्म्लानाः लतान्ताः पल्लवा यस्मिंस्तं मृदुलतान्तलतान्तं सुमनोभरैः पुष्पसमृद्धिभिः सुरभिं सुगन्धिं सुरभिं वसन्तमालोकयदपश्यत् । सु-

A

रभिसम्पर्केस्सुरभीणां आमोदकल्लवसन्तवायोः । सुगन्धोचमनोज्ञोचवायुर्वहतीति विग्रहः । इह प्रति पादं प्रथमाक्षरस्य चान्त्याक्षरस्य वृत्ति रूपयमकं प्रक्रमाच्चतुर्थपादे पि तदेकं यमकं ए कारेण परमिति सजातीयसंसृष्टिः ॥ २ ॥ ********************** ॥

॥ विलुलितेति ॥ विलुलितालकसंहतिर्विधूतचिकुरनिकरः सन् मृगदृशां ललाटजं श्रम वारि स्वेदमामृशन् प्रमृजन्मन्द इति भावः । सरसानानुतरङ्गततिं दलानि विकसन्ति कुव लयानि यस्मिन् कर्मणि तद्यथा तथा वलयन् चालयन् शीतलइति भावः । मरुद्वसन्तवायु रववौ आववौ निस्म ॥ ३ ॥ ************************* ॥

विलुलितालकसंहतिरामृशन् मृगदृशां श्रमवारि ललाटजम् । तनु तरङ्गततिं सरसां दलत्कुवलयं वलयन्मरुदाववौ ॥ ३ ॥ तुलय न्तिस्म विलोचनतारकाः कुरवकस्तवकव्यतिषङ्गिणि । गुणवदाश्रय लब्धगुणोदये मलिनिमालिनि माधवयोषिताम् ॥ ४ ॥ स्फुटमिवो ज्ज्वलकाञ्चनकान्तिभिर्युतमशोकमशोभत चम्पकैः । विरहिणां हृ दयस्य भिदाभृतः कपिशितं पिशितं मदनाग्निना ॥ ५ ॥ ** ********* ॥

॥ तुलयन्तीति ॥ कुरवकस्तवके व्यतिषङ्गिणि लग्ने अत एव गुणवतः सुभ्रगुणस्य कुरवकस्त वकस्याश्रयेणाश्रयणेन लब्धो गुणोदयो येन तस्मिन् अलिनि भ्रमरे मलिनिमा कृष्णत्वं माधव योषितां हरिवधूनां विलोचनानां तारकाः कनीनिकाः । तारकाक्ष्णः कनीनिकेत्यमरः । तुलयन्तिस्म समीचकार तद्वदङ्गा इत्यर्थः । तुलाशब्दात्सादृश्यपर्यायात्तत्करोतीति णिचन्ता ल्लटस्म इति भूते लट् उपमालङ्कारः ॥ ४ ॥ ****************** ॥

॥ स्फुटमिति ॥ उज्ज्वलकाञ्चनकान्तिभिः शुद्धसुवर्णप्रभैश्चम्पकैर्युतं चम्पकसमूहमध्य गतमित्यर्थः । स्फुटद्विकचमशोकपुष्पं भिदा भेदः षिद्भिदादिभ्योऽङ् तां बिभर्त्तीति यत्तस्य

भिदृभूतोभिन्नस्यविरहिणांहृदयस्यहृदयपरड्स्तस्मन्निमदनाग्निनाकपिशितंकपि
शीकृतमिपिशितंमांसमिवाशोभतेत्युत्प्रेक्षा ॥ ५ ॥ ****************** ॥
॥ स्मरेति ॥ आम्रवणस्यचूतवनस्य । आम्रश्चूतोरसालश्चेत्यमरः । प्रनिरन्तःशरेक्ष्वादि
नावननकारस्यणत्वं । रजःकणाःपरागचूर्णाःस्मरकृताशनःकामाग्निःसएवमुर्मुरस्तुषाग्निः ।
मुर्मुरस्तुतुषानलइतिवैजयन्ती । तस्यचूर्णानान्दधुरिवेत्युत्प्रेक्षा । अतोमुर्मुरचूर्णत्वादेवप
रितउपरिनिपतिताःतेरजःकणाःपन्थानंगच्छन्तीतिपथिकाःपथःकन्नितिकन्प्रत्ययःतेषां
व्रजानभृशम्परितेपुःपरितापयामासुःअतोमुर्मुरचूर्णत्वोत्प्रेक्षणमितिभावः ॥ ६ ॥ * ॥
॥ रतिपतीति ॥ प्रियतमेषुविषयेषुकृतक्रुधः । क्रुतरुषःप्रतिघारुड्क्रुधौस्त्रियामित्यमरः ।

स्मरकृताशनमुर्मुरचूर्णतांदधुरिवाम्रवणस्यरजःकणाः । निपतिताः
परितःपथिकव्रजानुपरितेपरितेपुरतोभृशं ॥ ६ ॥ रतिपतिप्रहि
तेवकृतक्रुधःप्रियतमेषुवधूरनुनायिका । बकुलपुष्परसासवपेशल
ध्वनिरगान्निरगान्मधुपावलिः ॥ ७ ॥ प्रियसखीसदृशंप्रतिबोधि
ताःकिमपिकाम्यगिरापरपुष्टया । प्रियतमायवपुर्गुरुमत्सरच्छिदु
रयादुरयाचितमङ्गनाः ॥ ८ ॥ ***********

वधूरनुनायिकाकुपितस्त्रीरनुनेष्यन्ती । तृणण्वुलौक्रियायांक्रियार्थायामितिभविष्यद
र्थेण्वुल्प्रत्ययः अकेनोर्भविष्यदाधमर्ण्ययोरितिषष्ठीप्रतिषेधाद्वधूरितिद्वितीया । रतिप
तिनाकामेनप्रहितापेषितेवतद्वाणीश्रवणानन्तरमेवतासांकोपत्यागदर्शनादियमुत्प्रेक्षा
। बकुलपुष्पाणांरसोमकरन्दःसएवासवस्तेनतत्पानेनपेशलध्वनिर्मधुरस्वरामधुपावलिः
कर्त्रीनगच्छन्तीत्यगावृक्षान्निरगान्निर्गता । इणोगालुङीतिगादेशः ॥ ७ ॥ **** ॥
॥ प्रियसखीति ॥ गुरोर्महतोमत्सरस्यद्वेषस्यच्छिदुरयाछेत्र्याविदिभिदिच्छिदेःकुर
च्कुरच्कम्यगिराग्राह्यवाचापरपुष्टयाकोकिलयाप्रियसख्यासदृशंयथातथाकिमपिपरैर्दुर्बो

धैरहस्यं हितं प्रतिबोधिनाऽपदिष्टाअङ्गनाः प्रियनमायअयाचितंअप्रार्थितमेववपुर्निजा ङ्गमदुरर्पयामासुः इदानीं तुडिङ्गातिशेत्यादिना सिचोलुक्। कोकिलाकूजितश्रवणा नन्तरमेवाङ्गार्पणेोत्सुक्यहेतुकाद्यनन्तरं न्यायेन तथाकिमपि बोधिनाइत्युत्प्रेक्षा ॥ ८ ॥

॥ मधुकरैरिति ॥ मधुकरैः कर्तृभिः अपवादं मृगवञ्चनाय घण्टादिकुत्सितवाद्यं कुर्वन्तीत्य पवादकराः व्याधास्तैरिव पथिकाः हरिणाइव परिवादिनी स्वरजिता वीणाविशेषध्वनिजि त्यिन्या। सप्तभिः परिवादिनीत्यमरः। जेः क्तिपि तुकं च सोगीतस्य कलतयामाधुर्येणाकर्षे णर जितारज्जिताआसक्ताः सन्त इत्यर्थः। रञ्जेर्ण्यन्तात्कर्मणिक्तः रञ्जेर्णौ मृगरमणइति उ पधानकारलोपः। इहोपमानमृगसादृश्यादेः पचारिकं मृगत्वं उपमेये षु पथिकेष्वस्तीत्य

मधुकरैरपवादकरैरिव स्मृतिभुवः पथिका हरिणाइव। कलतयावच सः परिवादिनीस्वरजितारजिता वशमाययुः ॥ ९ ॥ समभिसृ त्यरसादवलम्बितः प्रमदयाकुसुमावचिचीषया। अविनमन्नरराज वृथोच्चकैरन्ततयान्ततयावनपादपः ॥ १० ॥ *-*-*-*-*-*-*

विरोधः स्मृतिभुवः। स्मरस्यमृगयानचिन्ताविषयत्वान्मृगग्रहणं गम्यते स्मरस्य च वशमाययुः य थाव्याधगानासक्त्यागत्यैर्मृगाः पतन्ति तद्वन्मधुकरहूङ्कारासक्ताः पांथाः स्मरपारवश्यं भेजु रित्यर्थः ॥ ९ ॥ ***************************** ॥

॥ समभिसृत्येति ॥ प्रमदया कश्चित्कुसुमानामवचिचीषयाऽपचेतुमिच्छया रिरंसयेति भावः चिनोतेः सन्नन्तादुप्रत्ययादिति स्त्रियामकारप्रत्ययः विभाषाचेरिति विकल्पात्कुत्वाभा वः रसाद्रागात्समभिसृत्य समागत्यावलम्बितोहस्तेन गृहीतस्तथाप्यविनमन् वशमगच्छ न्अत एव वृथोच्चकैर्व्यर्थमुन्नतो वनपादपः न तु नागरिक इति भावः नन्नतेत्यन्तनास्त्यानतया ऽन्नतयानुभावोम्नतानतवान्न्नतयापुंस्त्वेनरराज। स्युः पुमांसः पुण्यजनाः पुरुषाः पूरुषा नर

त्यमरः । यःकान्ताकरगृहीतोपिनद्रवतिसनपुंसकएवलौकिकस्तुपुंस्त्वव्यपदेशोमि थ्यैवेतिभावः ॥ १० ॥ ****************************** ॥

॥ अथकश्चित्स्वयंग्रहाश्लेषसुखार्थंप्रियामभिपातेनभीषयन्त्रिभिःकुलकेनाह ॥ इद मित्यादि । स्तनभरेणसाधनेनजितास्तवकाभ्याभानमन्तोनवलताययासातथोक्तान स्याःसम्बुद्धिर्जितस्तबकानमन्नवलतेस्तवकानमन्नवलतेऽभेद इत्यर्थः । अतएवेदम्विरा गिविरक्तिमदलिकदम्बकंपरागिणीःपरागवतीरितिविरक्तिहेतूक्तिःअम्बुरुहानानीरपाश्व वाभिमुखंवलतेचलतेविशिष्टलताभ्रमादितिभावः । तथाचभ्रान्तिमदलङ्कारोव्यज्यते ॥ ११ ॥ ****************************** ॥

इदमपास्यविरागिपरागिणीरलिकदम्बकमम्बुरुहान्ततीः । स्तनभरे णजितस्तवकानमन्नवलतेवलतेऽभिमुखंतव ॥ ११ ॥ सुरभिनिः श्वसितेदधतस्तृषंनवसुधामधुरेचतवाधरे । अलमलेरिवगन्धरसा वमूममनसौमनसौमनसोमुदे ॥ १२ ॥ *******

॥ अथालेस्तदभिमुखागमनेकारणमाह ॥ सुरभीति । नवसुरभिनिःश्वसितेनिःश्वा समारुतेनवसुधावन्मधुरेअधरेचतृषं तृष्णान्दधतोदधानस्यभ्रमरस्यममेवामूउपलभ्य मानौसुमनसांपुष्पाणांसम्बन्धिनौसौमनसौगन्धरसौसौरभमाधुर्येमनसोऽन्तःकरणस्य मुदेनालंपर्याप्तौअतस्तद्दूरनरसगन्धलोभादागच्छतीत्यर्थः । तमःस्वसीत्यादिनाचतु र्थीअत्रकान्ताकर्तृकस्वयंग्रहाश्लेषसुखार्थिनः प्रियस्यतद्भयहेतोरलेरेवागमनहेतुत्वेना वधानेनमुखसौरभरसलोभभ्रमरवैराग्ययोर्वर्णयितुमौचित्याद्यमकानुसारेणविशेषेना पिममशब्देनैवशब्दस्यान्वयः वलतेभिमुखन्तवअलिभयादिवसस्वजइत्युपक्रमोपसंहारा भ्यामलेःप्रकृतत्वेनोपमेयत्वावगमात् । अन्यथामध्येतद्दूरपरीक्षेनतद्विरोधादित्यलमति

चलनमाध्वयमनेनअत्रोपमानुप्रासयमकानानावद्विजातीयानांसंसृष्टिः सष्टैवतथायम
कानांत्रयाणांचतुर्थपादादावेकस्मादक्षरात्द्वाभ्यांभिन्नपरतोक्षरत्रयावृत्तिलक्षणा
नांस्थितत्वात्सजातीयसंसृष्टिश्चेद्या ॥ १२ ॥ ******************* ॥

॥ इतीति ॥ इतीत्थङ्करतलप्रणयिनंअनन्तरंभुजयुगस्योन्नमनेनोत्तनरत्नुत्नैर्नीय
स्याःस्वाङ्गाचोपसर्जनादसंयोगोपधादितिङीष् । बलिभयावलयोविद्यन्तेयस्याःत
यावलिमत्या । तुन्दिवलिवटेर्भइतिभप्रत्ययःउदरश्रियामध्यशोभयाउपलक्षिताअङ्ग
नाअलिभयादिवरभसात्सस्वजेआलिलिङ्ग । वस्तुतस्तुरागादेवेतिभावः । षञ्जपरिष्वङ्गे
इतिधातोःकर्त्तरिलिट् । लज्जामन्मथमाध्यस्थान्मध्येयंनायिकामता ॥ १३ ॥ *॥

इतिवदन्तमनन्तरमङ्गनाभुजयुगोन्नमनोच्चतरस्तनी । प्रणयिनंरभ
सादुदरश्रियावलिभयाऽलिभयादिवसस्वजे ॥ १३ ॥ वदनसौ
रभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया । चलितयाविदधेकलमे
खलाकलकलोलकलोलदृशान्यया ॥ १४ ॥ *·*·*·*·*·*

॥ वदनेति ॥ वदनस्यसौरभेसौगन्ध्येलोभेनपरिभ्रमताभ्रमरेणहेतुनायःसम्भ्रमस्तेनसंभृ
तशोभयासम्पादितश्रियाचलितयाअलिसम्भ्रमात् प्रस्थितयाअतएवालकैरलकपातेर्लो
लदृशाचञ्चलाक्ष्याअन्ययास्त्र्यन्तरेणकलोमेखलायाःकलकलःकोलाहलःविदधेविहितः
अलिभयादपसरन्त्याकाञ्चीगुणध्वनिरजनीत्यर्थः । एतेनचकितत्वमुक्तञ्चकितम्भयसम्भ्र
मः । अनुप्रासयमकयोःसजातीयशब्दालङ्कारयोःसंसृष्टिःसष्टैवतावत्तथायमकयोस्स्व
च्छयोःस्थितत्वात्सजातीययोःचतुर्थपादादावेकस्मादक्षरात्द्वाभ्यांपरतोक्षरत्रयावृत्ति
लक्षणयोःसंसृष्टिः ॥ १४ ॥ ************************* ॥

॥ अजगणानिति ॥ याःकुकुरस्त्रियोयादवाङ्गनाःगणशोबहुशःबहुल्पार्थाच्छस् कार

कादन्यतरस्यामिति ईरस्प्रत्ययः । अग्रतः प्रणतमपि प्रियमज्ञानार्थेकवचनं प्रियमित्यर्थः । अभिमानित्वभावोऽभिमानिता तया अभिमानितया अन्यैर्गुणवचनस्य गुणवचनब्राह्मणादिभ्य इति ष्यञ् भावे वक्तव्यः । नाजगणन गणयन्ति स्म गणेश्चौरादिकात् सोपसर्गकत्वाद्विहितार्थे अभ्यासस्य परस्मैपदमित्यम् । ततः ककुर स्त्रियो मधौ वसन्ते सन्निहिते प्रवर्तमाने । मधुश्चैत्रे वसन्ते चेति विश्वः । मदनव्यथा विधुरिताः वि ह्वलिताः सत्यः धुरि अग्रे अभवन्नवर्तन्त स्वयमेव पुरः प्रवृत्ता इत्यर्थः ॥ १५ ॥ **** ॥

॥ कुसुमेति ॥ गतभर्तृकाः वियोगिन्यः नष्टपतिका अपराः काश्चिदङ्गनाः कुसुमकार्मुक स्य कामस्य कार्मुके संहितैः द्रुतैर्जवनैः शिलीमुखैः शरैः खण्डितविग्रहाः पाटितशरीराः सत्यो

अजगणन् गणशः प्रियमग्रतः प्रणतमप्यभिमानितयान्याः । सतिम
धावभवन्मदनव्यथाविधुरिताधुरिताः ककुरस्त्रियः ॥ १५ ॥ कु
सुमकार्मुककार्मुकसंहितद्रुतशिलीमुखखण्डितविग्रहाः । मरणम
प्यपराः प्रतिपेदिरे किमु मुहुर्मुमुहुर्गतभर्तृकाः ॥ १६ ॥ रुरुदिषा
वदनाम्बुरुहश्रियः सुतनु सत्यमलंकरणाय ते । तदपि संप्रति सन्नि
हितेमधावधिगमं धिगमंगलमश्रुणः ॥ १७ ॥ *****

मरणमपि प्रतिपेदिरे मुहुः पुनः पुनः मुमुहुर्मूर्च्छिरिति किमु वक्तव्यमित्यर्थः ॥ १६ * ॥
॥ अथ कस्याश्चित्प्रोषितभर्तृकाया बन्धुजनसमाश्वासनं त्रिभिः कुलकेनाह ॥ रुरुदिषे ति । हे सुतनु सुभाङ्गि । अस्याऽर्थे न ङ्घोऽर्द्ध इत्यूङ् निहृस्वत्वं संबोधनेऽन्तरपदो बहुव्रीहिः । अन्य थागुणः स्यात् । रुरुदिषा रोदनेच्छा अश्रुविमोचनमित्यर्थः । रुदः सन्नन्तादप्रत्यये टाप्ने वदनाम्बुरुहश्रियः अलङ्करणाय त्वं रम्याणां विकासनिरपि श्रियननीतीनिन्याया दि तिभावः । गम्यमानक्रियापेक्षत्वाच्चतुर्थी तदपि तथापि सम्प्रति मधौ वसन्ते सन्निहिते स न्निहितेऽस्य वसन्तेऽश्रुणोऽधिगमम्प्राप्तिममङ्गलं धिक् । धिक्निर्भर्त्सननिन्दयोरित्यम

रः। श्रिगुपर्यादिपुविश्विविनिद्वितीयाअनेनेमारूदइत्यर्थः ॥ १७ ॥ ******

॥ व्यजनीति ॥ प्रियतयाइष्टतयाऽघशंकिभिरनर्थाग्नेक्षिभिःनान्संवेरलीवरिबिभवेसरि नाः उच्चारिताः। कष्टंवत। असौवाताविरहवेदनयाअचिरदस्तन्प्राणान्त्यजतिदक्ष्य निषर्त्तमानसामीप्येवर्त्तमानवद्धेतिलट्। एवंविधागिरउक्तीःहेसखि। विगततथ्याः तथ्या नाविनयाः अनृताः। वितथंत्वनृतंवचइत्यमरः। बहुव्रीहेविशेष्यलिङ्गताब्राह्मणा दित्वाद्वा स्वःततोनञ्समासः अवितथाःसत्याःमाविनथाःमातथाःवृथानिषेधेकेनमानृता इत्यर्थः। विपूर्वात्तनोतेर्ल्डिंया सुतनादिभ्यस्तथासेरितिविभाषादितिचालुरअनुदात्ते पदेशेत्यादिनाऽनुनासिकलोपः नामाज्झोगेइत्यडागमप्रतिषेधः ॥ १८ ॥ *** ॥

त्यजतिकष्टमसावचिराद्सून्विरहवेदनयेत्यघशंकिभिः। प्रियत
यागदिताःश्रवयिवान्धवैरवितथावितथाःसखिमागिरः॥ १८ ॥ नख
लुदूरगतोप्यतिवर्त्ततेमहमसाविनिबन्धुतयोदितैः। प्रणयिनोनिशम
य्यवधूर्बहिःस्वरमृतैरमृतैरिवनिर्ववौ॥ १९ ॥ त्रिभिःकुलकं ॥

॥ नेति ॥ किञ्चासौतेप्रणयीदूरगतोदूरस्थोपिमहंवसन्तोत्सवं। महउद्धवउत्सवइत्यम रः। नातिवर्त्ततेनातिक्रामतिखलुइतिबन्धुतयाबन्धुसमूहेन। ग्रामजनबन्धुसहायेभ्यस्त लुउदितैरुक्तैर्वदःकर्मणिक्तः नइतैःसत्यवचनैः। सत्यन्तथ्यमृतंसम्यगित्यमरः। बहिःप्रण यिनस्तदैवदैवादागतस्यप्रियस्यस्वरंकण्ठगतंनिशम्यश्रुत्वाश्रमुअदर्शनेइतिचौरादिका न्ल्यपमित्वाद्ध्रस्वःल्यपिलघुपूर्वादित्ययादेशःवधूरमृतैःसुधाभिरिवनिर्ववौनिर्वृवारवाने लिट्। निर्वाणंनिर्वृतिःसुखं॥ १९ ॥ ********************* ॥

॥ मधुरयेति ॥ मधुरयामनोहरयामधुनावसन्तेनबोधिताःविकसिताःपुष्पधर्मेपुष्पिता रूपचर्ययेतेनासांमाधवीन्ममतिमुक्तलतानां। अतिमुक्तःपुंड्रकःस्याद्वासन्तीमाधवीलता

भरः । मधुसमृद्ध्यामकरन्दसम्पदासमेधितमेधयासम्वर्द्धितप्रतिभया अतएवोन्मदयतीन्यु
न्मदेभ्मिदकरम्पचाद्यच्तंध्वनिं बिभर्तीत्युन्मदध्वनिभृत्तयातद्भृतामधुकराङ्गनयामुञ्ज
निभृताक्षरंलक्षणयास्थिरनादंयथातथेत्यर्थः । अथवासर्वःशब्दोवर्णात्मकएवव्यंजक
विशेषणाभावादस्फुटइतिमतमाश्रित्योक्तंसर्वपथीनाःकवयइति । उज्जगेउच्चैर्गीतङ्गा
यतेरविवक्षितकर्मत्वाद्भावेलिट् । बन्धवैषम्यरहितत्वंसमतापदगुम्फनेइतिलक्षणात्स
मताख्योगुणः ॥ २० ॥ ******************************** ॥

॥ अरुणितेति ॥ अरुणितान्यरुणीकृतानि अखिलानिशैलवनानियया सामुञ्ज्ञःपथि

मधुरयामधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया । मधुकराङ्ग
नयामुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥ २० ॥ अरुणि
ताखिलशैलवनामुहुर्विदधतीपथिकान्परितापिनः । विकचकिंशु
कसंहतिरुच्चकैरुदवहद्धव्यभुजःश्रियम् ॥ २१ ॥ रवितुर
ङ्गतनूरुहतुल्यतांदधतियत्रशिरीषरजोरुचः । उपययौविदधन्न
वमल्लिकाःशुचिरसौचिरसौरभसंपदः ॥ २२ ॥ ****

कानध्वगान्विरहिणस्तपरितापिनः सन्तापवतोविदधतीउच्चैरेवोच्चकैरुन्नतैःअव्ययसर्व
नाम्नामकच्प्राक्टेरित्यकच्प्रत्ययः किञ्चाविकाशिनायाकिंशुकसंहतिःपलाशकुसुमरा
शिःसादवहव्यवहश्रियंदवाग्निशोभामुदवहत्निदर्शनालङ्कारः ॥ इतिवसन्तवर्णनम्
॥ २१ ॥ ******************************** ॥

॥ अथग्रीष्मवर्णनमारभते ॥ रवीत्यादि । यत्रशुचौशिरीषरजसांरुचःकान्तयोरवितुर
ङ्गतनूरुहतुल्यतांसूर्याश्वरोमसावर्ण्यंदधतिहरिद्वर्णाभवन्तीत्यर्थःअसौशुचिर्ग्रीष्मः ।
शुचिःशुद्धेऽनुपहतेशृङ्गाराषाढयोस्तथा । ग्रीष्मेहुतवहेपिस्यादितिविश्वः । नवमल्लि

काः । पृथ्वीजातीप्रभृतयः स्त्रीलिङ्गा इत्यमरः । पुष्पमूलेषु बहुलमिति ग्रहणात् लुप् लुपि युक्तवद्व्यक्तिवचने भवतः । चिरं चिरावस्थायिनी सौरभसम्पद्यासां ताः स्थिरगन्धा इत्यर्थः विदधत् कुर्वन्नुपययौ प्राप्तः ॥ २२ ॥ ****************************** ॥

॥ दलितेति ॥ पाटलायाः अवयवाः पाटलाः लुप्प्रकरणे पुष्पमूलेषु बहुलमिति बहुलग्रहणात् लुप् । ते च ते कुड्मलाश्च दलिता विभिन्नाः कोमलपाटलकुड्मला येन तस्मिन् निजवधूनां श्वसितं निःश्वासमनुविधत्तेऽनुकरोतीति तथोक्तेनातिसुरभिणेत्यर्थः उन्मदा भ्रमन्तश्चालयो यस्मिन् तस्मिन् उन्मदभ्रमदलौ महति ग्रीष्मानिले वाति वहति सति वातेर्लटः शत्रादेशः विलासिभिर्विलसनशीलैः कामिभिः वौकचपलस्य कर्त्यस्य भावः इति घिनुण्प्रत्ययः मोदेन लौल्य

दलितकोमलपाटलकुड्मले निजवधूश्वसितानुविधायिनि । मरुति
वाति विलासिभिरुन्मदभ्रमदलौ मदलौल्यमुपाददे ॥ २३ ॥ निरु
धिरे दयितेनोरसि तत्क्षणस्नपनवारितुषारभृतस्तनाः । सरसचन्दनरे
णुरनुक्षणं विचकरे च करेण वरोरुभिः ॥ २४ ॥ *******

चापल्यमुपाददे मत्तैर्जातमित्यर्थः ॥ २३ ॥ ****************** ॥

॥ निरुधिर इति ॥ वरोरुभिः स्त्रीभिः तत्क्षणस्नपनेन सद्यःसेकेन वारितुषारभृतो जलसीकरधारिण इत्यर्थः । तुषारौ हिमसीकरौ विनिविम्बः । स्तना दयितेनोरसि निरुधिरे निहिताः तेषां सन्तापशान्तये स्तना ईङ्गा एव आलिङ्गिता इत्यर्थः । किञ्च करेण पाणिना सरस आर्द्रः चन्दनरेणुः घृष्टचन्दनपङ्कः अनुक्षणं विचकरे विकीर्णः । किरतेः कर्मणि लिट् ऋच्छत्यॄतामिति गुणः करेणु करोरुभिरिति पाठस्तु करूत्तरपदादौपम्य इत्यूङ्प्रसंज्ञाद्धेयः ॥
इति ग्रीष्मवर्णनम् ॥ २४ ॥ * ॥ ********************** ॥

॥ अथ वर्षावर्णनारम्भः ॥ स्फुरदिति । स्फुरति अधीरे चञ्चलेन तडितो नयने इव तडिन्नयने

यस्या साध्वी नितान्तं रम्या उरुपयोधरा मेघा यस्यां अन्यत्र उरू च तौ पयोधरौ च उरुपयोधरौ स्तनौ यस्याः अङ्गत्वाद्बहुवचनेन भावः गलितं पतितं यस्याः सा जलधरावलिर्मेघपङ्क्तिः अत्र जल धरावलेः पयोधराणामाच्छादनत्वात् विभावान् पृथक् निर्देशः अप्रतिपालिता खसमयागमनदे क्षिततिर्जवेला सती एकत्र योगपद्याद्दन्यत्र धैर्याच्चेति भावः जगतो धरं रैवतकमिव मवसय यात् समासः कृत्याने लेडुयथा जगती शब्दस्य पचाद्यच्नन्तेन धर शब्देन समासः । अत्र विशे षणमहिम्ना जलधरावलेर्नायिकात्वप्रतीतेः समासोक्तिः सती प्रियमिवेत्युपमाङ्गेन सङ्कीर्यते ॥ २५ ॥ ************************ ॥

स्फुटदधीरतडिन्नयनामुहुः प्रियमिवागलितोरुपयोधरा । जलधरा वलिरप्रतिपालितस्वसमयासमयाज्जगतीधरम् ॥ २५ ॥ गजकद म्बकमेचकमुच्चकैर्नभसि वीक्ष्य नवाम्बुदमम्बरे । अभिससार नवल्लभ मङ्गनं न चकमे च कमेकरसं रहः ॥ २६ ॥ अनुययौ विविधोप लकुण्डलद्युतिवितानकसंवलितांशुकम् । धृतधनुर्वलयस्य पयो मुचः शवलिमा वलिमानमुषो वपुः ॥ २७ ॥ ******

॥ गजेति ॥ नभसि श्रावणमासे । नभाः श्रावणिकश्च सः इत्यमरः । अम्बरे व्योम्नि गजक दम्बकमिव मेचकं श्यामलम् । कालश्याममलमेचका इत्यमरः । उच्चैर्वोच्चकैरुन्नतं नवाम्बुद म्बुदं वीक्ष्य अङ्गनाएकः एकायनः रसो रागो यस्य तं एकरसं निरस्तान्तरसान्तरमित्यर्थः कम्बल्लभ प्रियं रहः कान्तेन चकमे न कामयते स्म न च नाभिससार च सर्वं वल्लभं सर्वापि नत्तदङ्गनाच कमेऽभिससार चेति । नवाम्बुदस्योद्दीपकत्वाति शयोक्तिः इह कामनापूर्वकत्वादभिसरण स्य नयोरर्थक्रमवलीयस्त्वन्यायेन यमकवशात् पाठक्रमबाधेन योजनान्याय्येव ॥ २६ ॥ ॥ अनुययाविति ॥ धृतधनुर्वलयस्य धृतेन्द्रचापमण्डलस्य पयोमुचो मेघस्य सम्बन्धि शवल

स्वभावः एवंलिमांविचित्रतापृष्वादिभ्यइमनिज्वाविविधानानावर्णाउपलामरणयोयर्यो स्तयोःकुण्डलयोःद्युतिविनानकैनकान्तिपुञ्जेनसम्वलितांमिलिताअंशवोनिजनीलभासो थस्यनत्तथोक्तंशेषाद्विभाषेतिकप्रत्ययः बलिमानमुषावल्यसुरहङ्काररहस्यहरेर्वपुरनुव यौअनुचकारतद्वद्वभाविन्यर्थः ॥ २७ ॥ ********************* ॥

॥ द्रुतेति ॥ द्रुतसमीरेणशीघ्रमारुतेनचलैर्वारिदैःक्षणंलक्षिताचसाव्यवहितादसाक्षण लक्षितव्यवहिताक्षणिकाविर्भावतिरोधानेत्यर्थः । स्नानानुलिप्तवत्पूर्वकालेकेत्यादिनास मासःअचिरंरोचिर्यस्याः साअचिररोचिर्विद्युतद्रुतसमीरचलैः विटपैःशाखाभिःक्षणल क्षितव्यवहितानवतमालनिभस्यनवतमालेनसदृशस्यनद्वर्णोलेत्यर्थः नित्यसमासःनभ

द्रुतसमीरचलैःक्षणलक्षितव्यवहिताविटपैरिवमञ्जरी । नवतमा लनिभस्यनभस्तरोरचिररोचिररोचतवारिदैः ॥ २८ ॥ पटलमम्बुमु चांपथिकाङ्गनासपदिजीवितसंशयमेष्यती । सनयनाम्बुसखीजनसं भ्रमाद्विधुरबन्धुरबन्धुरमैक्षत ॥ २९ ॥ ************

स्तरोरिवनस्यनभस्तरोर्मञ्जरीगुच्छइवारोचतउपमालङ्कारःअत्रनभस्तरोर्नभःस्थेठस्येति व्याख्यानेनरुशब्दस्यव्याघ्रादिवच्छेषार्थगोचरत्वात्तमालशब्देनविशेषवाचिनानन्नीलसा मान्येनपौनरुक्त्यमितिवल्लभः तमालशब्दस्येन्द्रनीलवन्नैल्यमात्रोपमानत्वात्तरुशब्दस्य स्वार्थवृत्तित्वेपिनपौनरुक्त्यमित्यन्ये ॥ २८ ॥ ****************** ॥

॥ पटलमिति ॥ पथिकाङ्गनानथाकाचित्प्रोषितभर्तृकाअतएवसपदिजीवितसंशयंमरण मेष्यतीनिश्चितमरणेत्यर्थः । आच्छीनद्योर्नुमितिनुमभावः अतएवसनयनाम्बुःसत्राष्प सखीजनस्यसम्भ्रमात् विधुरबन्धुःसम्भ्रमदर्शनात्विह्वलबन्धुजनासतीअम्बुमुचाम्पटलंअ बन्धुरमशोभनंहृदैन्यरोषमितियावत् । ऐक्षतईक्षतेर्लङ्आटश्चेतिवृद्धिःइहविरहवेद

न्नाक्षमायानाविकायामरणसाधननेमेघपटलावेक्षणवर्णनायान्नदुद्योगलक्षणामरणावस्थो
क्तासांहिद्विविधानद्योगस्तचेत्यङ्कः । दृङ्मनःसङ्गःसङ्कल्पात् जागरःकृशतारतिः । ह्री
त्यागोन्मादमूर्च्छान्ताइत्यनङ्गदशादशेत्यवस्थासंग्रहः ॥ २९ ॥ ********** ॥
॥ प्रसवइति ॥ कन्दलीभूकन्दली । द्रोणपर्णीस्निग्धकन्दाकन्दलीभूमिकन्दलीतिश
ब्दार्णवः । तस्याःपुष्पाणिकन्दलानिफलेलुगित्यणोलुक् विदलानांविकचानांकन्दलानां
कम्पनेनावधूननेनलालितःउपस्कृतः मनस्विनीजनस्यमनसांनमनेनमयितामानिनी
मानभञ्जनइत्यर्थः । कर्त्तरिल्युड्घनमारुतोमेघवायुःवनानिनमयतिस्मप्रवसतःप्रोषिता

प्रवसतः सुतरांपरिकम्पयन् विदलकंदलकंपनलालितः ॥ नमयति
स्मवनानिमनस्विनीजनमनोनमनोघनमारुतः ॥ ३० ॥ जलदपं
क्तिरनर्तयदुन्मदंकलविलापिकलापिकदम्बकम् । कृतसमार्जनम
र्दलमण्डलध्वनिजयानिजयास्वनसम्पदा ॥ ३१ ॥ नवकदम्ब
रजोरुणिताम्बरैरधिपुरन्धिशिलीन्ध्रसुगन्धिभिः । मनसिरागवतां
मनुरागितानवनवावनवायुभिरादधे ॥ ३२ ॥ ******

न्सुतरामुत्कम्पयन् उद्वेजितवान्मनस्विनीमानमर्दनस्यवननमनंप्रोषितकम्पनञ्चाकि
ञ्चिदितिभावः ॥ ३० ॥ ************************* ॥
॥ जलदेति ॥ निजात्मीययास्वनसम्पदाकृतःसमार्जनस्यमार्जनाख्यसंस्कारसहितस्य
मर्दलमण्डलस्यध्वनेर्जयोययासातथामार्जनं नाममर्दलानांध्वननार्थम्भस्ममृदिनाभिः
पुष्करलेपनञ्जलदपंक्तिरुन्मदमुत्कटमदं कलविलापिमधुरालापिकलापिकदम्बकम्मयू
रवृन्दमनर्त्तयत् ॥ ३१ ॥ ************************* ॥
॥ नवेति ॥ नवकदम्बरजोभिररुणितमरुणीकृतमम्बरमाकाशंयैस्तैःशिलीन्ध्राणांकन्द

लीकुसुमानां यः सुगन्धस्तेषामस्तीति शिलीध्रसुगन्धिनः तैः गन्धस्येत्त्वे तदेकान्तग्रहणादित्यत्याश्रयणं । कदल्याञ्च शिलीध्रः स्यादिति शब्दार्णवे । वनवायुभिः पुरंध्रीषु स्त्रीषु विषये अधिपुरंध्रि । विभक्त्यर्थेऽव्ययीभावः । गवनां कामिनां मनसि नवनवा नवप्रकारा । प्रकारे गुणवचनस्येति द्विर्भावः कर्मधारयवद्भावात्सुपो लुक् । अनुरागिता आदधे अनुरागवत्त्यादित इत्यर्थः ॥ ३२ ॥ ************************ ॥

॥ शमितेति ॥ अम्बुमुचो मेघाः प्रविरलैरम्भसां प्रथमबिन्दुभिः शमिततापमपोढमहीरजो निरस्तधूलिकं न तु पङ्कमिति भावः सुगन्धित्वमत्वात्सेकाद्दुद्भूतसौरभाद् इत्येतदेकान्तत्वाद्गन्धस्येत्वं । अचलाङ्गनं रैवतकाङ्गनं । अङ्गनञ्चत्वराजिर इत्यमरः । अङ्गनाजनस्य सु

शमिततापमपोढमहीरजः प्रथमबिंदुभिरम्बुमुचोऽम्भसाम् । प्रविरलैरचलाङ्गनमङ्गनाजनसुगंनसुगंधिनचक्रिरे ॥ ३३ ॥ द्विरददन्तवलक्षमलक्षतस्फुरितभृङ्गमृगच्छविकेतकम् । घनघनौघविघट्टनयादिवः कृशशिखंशशिखराडमिवच्युतम् ॥ ३४ ॥ **

खेनगच्छन्त्यस्मिन्निति सुगं सुखसञ्चारमित्यर्थः सुदुरोरधिकरणे इति गमेर्डप्रत्यये टिलोपः । न न चक्रिरे चक्रिर इत्यर्थः द्वौ नञौ प्रकृतमर्थं गमयतः ॥ ३३ ॥ ******* ॥

॥ द्विरदेति ॥ द्विरददन्तवद्वलक्षं गजदन्तधवलम् । वलक्षो धवलोऽर्जुन इत्यमरः । भृङ्गो मृग इव भृङ्गमृगः तस्य च्छविः सा स्फुरिता यस्मिन्तत्तथोक्तं केतक्याः पुष्पं केतकं पुष्पमूलेषु बहुलमित्यणो लुक् नादिवृद्धिः लुक्तद्धितलुकीति स्त्रीप्रत्ययस्यापि लुक् घनघनौघविघट्टनया निविडमेघसंघोपघातेन दिवोऽन्तरिक्षात्च्युतं कृशशिखं सूक्ष्माग्रं शशिखण्डमिवालक्ष्यत इत्युत्प्रेक्षा ॥ ३४ ॥ ************************ ॥

॥ दलितेति ॥ दलितमौक्तिकानां निष्पिष्टमुक्ताफलानां चूर्ण इव विपाण्डवोऽतिशुभ्राः

स्फुरितायेनिर्झरशीकरा:कणास्तइवचारवः कुटजपुष्पपरागकणाःस्फुटन्दधिरेणु
विडम्बनान्दधिचूर्णानुकारंविदधिरेचक्रिरेतद्वद्बभूवुरित्यर्थः । पूर्वोपमानद्वयानुप्रा
णितोपमेतिसङ्करः ॥ ३५ ॥ ************************ ॥
॥ नवेति ॥ नवपयःकणवन्नवोदकबिन्दुवत्कोमलानांमालतीकुसुमानाञ्जातीपुष्पाणां
सन्ततिसन्ततसङ्गिभिर्निरन्तरासक्तैः। सुमनामालतीजातीत्यमरः। अतएवप्रचलितोड्ड
यितैःपरागभूषणात्सञ्चरन्नक्षत्रकल्पैरिवेत्युत्प्रेक्षा । अलिभिःमुभाङ्गजोभरान्परागपुञ्जा
ञ्जातःमुभरजोरजःपरिपाण्डिमाधवलिमाआददेस्वीकृतः ॥ ३६ ॥ ****** ॥

दलितमौक्तिकचूर्णविपाण्डवःस्फुरितनिर्झरशीकरचारवः। कुटजपु
ष्पपरागकणाःस्फुटंविदधिरेदधिरेणुविडम्बनाम् ॥ ३५ ॥ नवप
यःकणकोमलमालतीकुसुमसन्ततिसन्ततसङ्गिभिः। प्रचलितोड्डुनि
भैःपरिपाण्डिमाशुभरजोभरजोऽलिभिराददे ॥ ३६ ॥ निजरजः
पटवासमिवाकिरद्धृतपटोपमवारिमुचांदिशाम्। प्रियवियुक्तवधूज
नचेतसामनवनीनवनीपवनावलिः ॥ ३७ ॥ ***** 

॥ निजेति ॥ प्रियवियुक्तवधूजनचेतसांकर्मणिषष्ठीअनवनीअरक्षणीकिन्तुहंत्रीत्यर्थः ।
अवतेःकर्त्तरिल्युटिङीप्। नवनीपवनावलिःनवकदम्बकानाम्वनपंक्तिःधृतापटोपमाःपट
कल्पावारिमुचोमेघायाभिस्ताःमेघपटावृत्ताइत्यर्थः तासान्दिशांनिजरजःस्वपरागम्पट
वासंपिष्टानमिवेत्युत्प्रेक्षाअकिरत्अक्षिपत्सखीवदितिभावः ॥ ३७ ॥ ***** ॥
॥ प्रणयेति ॥ प्रणयकोपभृतःअतएवपराङ्मुखाःविमुखाअपिस्वाङ्गाच्चोपसर्जनादसंयोगो
पधादितिविकल्पादाकारःसपदिवारिधरारवेभ्योगर्जितेभ्योभीरवोभीताःस्त्रियइतिशेषः ।
अनन्तराङ्गर्जिताकर्णनानन्तरमेवप्रणयिनःप्रियान्परिरब्धुमालिङ्गितुमुर्वीविरचितान्यालि

ङ्गनार्थमङ्गप्रसारणाच्च वलिरिक्तोदरानि मध्यान्यवलग्नानि यासां ताः सत्यो वर्वलिरेपरि वृत्ताः वलतेर्वकारादित्वात्प्रशस्तदन्तादिगुणानामित्वाभ्यासलोपप्रतिषेधः ॥ २८ ॥

॥ विगतेति ॥ पयोदनभस्वति मेघमारुतेवाति वहति सति वातेर्लटः शत्रादेशः विगतरागगुणोविरक्तोपिकोनरोन चलति सर्वोपि चलत्येवेत्यर्थः । एवमलिभिरुच्चकैरुच्चैस्तरामन्तनमत्यंनभवतीत्यनन्तं तस्मिन् अनन्तेसत्यव चनेअभिहितेसतिनवपल्लवैर्नन्दकइवन्टत्तंन मिवेत्युत्प्रेक्षा । न्टतभावेलिट् ॥ ३९ ॥ ********************* ॥

॥ अरमयन्निति ॥ अचिरद्युतेर्विद्युतोभयात्किलभयादिवनतुनयात्किन्तु रागादेवेतिभावः

प्रणयकोपभृतोऽपि पराङ्मुखाः सपदि वारिधरारवभीरवः । प्रणयिनं परिरब्धुमथाङ्गनाववलिरे वलिरेचितमध्यमाः ॥ २८ ॥ विगतरागगुणोपि जनो न कश्चलति वाति पयोदनभस्वति । अभिहितेऽलिभिरेवमिवोच्चकैरनन्टतेनन्टतेनवपल्लवैः ॥ ३९ ॥ अरमयन् भवनादचिरद्युतेः किलभयादिवयातुमनिच्छवः । यदुनरेन्द्रगणान् तरुणीगणास्तमथमन्मथमन्थरभाषिणः ॥ ४० ॥ *****

। किलेत्यलीके । भवनाद्रमणगृहान्यातुं निर्गन्तुमनिच्छवःभवबाजात्तथैवस्थितानिभावःजिन्दुरिच्छुरित्युप्रत्ययान्तोनिपातः । मन्मथेनमन्थरमलसम्भाषन्तइतिमन्मथमन्थरभाषिणःकामवसाइत्यर्थः तरुणीगणाः तम्प्रकृतं यदवएव नरेन्द्रास्तेषाङ्गणमरमयन्नरमयन्तिस्म । अत्रभयेनरागनिगूहनान्मीलनालङ्कारः । मीलनम्बस्तुनायत्र वस्त्वन्तरनिगूहनमितिलक्षणात् । सोप्यागन्तुकेनभयेनसहजरागनिरोधानादागन्तुकेनसहजनिरोधात्मकरूपः ॥ ४० ॥ ************************************* ॥

॥ अथशरद्वर्णनमारभते ॥ ददतमिति । रथावयवायुधसम्बन्धात्मुधोद्धुरिरन्तारिनाभिम

द्दीधितिनिरोहितो यस्मां भुवनयाखगकुलायपक्षिसंघायकुलायेषु नीडेषु निलीयन्ताइ तिकु
लायनिलायिनः। कुलायोनीडमस्त्रियामित्यमरः। तेषामभावस्तन्तानान्ददनम्प्रयच्छन्तं प
क्षिसञ्चारम्प्रतिबध्नन्तमित्यर्थः। नाभ्यस्ताच्छतुरितिनुम्प्रतिषेधः दिशामितिकर्मणिषष्ठी
। अबोधकृतंअबोधकारिणंमेघावरणेनप्राच्यादिविवेकंलुम्पन्तमित्यर्थःजलदकालंप्रावृ
ट्कालंअपरथाप्रकारान्तरेणआपप्राप। मेघोदयोपाधिनाप्रावृड्व्यवहारभाजन्तमेवका
लंमेघात्ययोपाधिनाशरत्त्वंजयोपलेभेत्यर्थःकालोहिएकएववस्तुतनेकोपाधिसम्बन्धान्नाना
त्वेनोपचर्यतइतितत्त्वविदः ॥ ४१ ॥ ********************* ॥
॥ सइति ॥ अघानांनाशनंनिवर्त्तकंकीर्त्तनंयस्यसोऽघनाशनकीर्त्तनःसहरिर्विकचमुत्पल

ददतमन्तरिताहिमदीधितिंखगकुलायकुलायनिलायिताम्। जल
दकालमबोधकृतंदिशामपरथापरथाववयावायुधः ॥ ४१ ॥ सवि
कचोत्पलचक्षुषमैक्षतक्षितिभृतोऽङ्कगतांदयितामिव। शरदमच्छ
गलद्वसनोपमाक्षमघनामघनाशनकीर्त्तनः ॥ ४२ ॥ ***

मेवचक्षुर्यस्यास्तामच्छं सुभङ्गलत्संसमानेयद्वसनतस्योपमासादृश्यन्तस्याःक्षमायोग्या
घनामेघायस्यास्तांअतएवक्षितिभृतेऽङ्कगतामुत्सङ्गगतान्दयितामिवेत्युत्प्रेक्षा। शरद
मैक्षत ॥ ४२ ॥ **************************** ॥
॥ जगतीति ॥ अशीतकरउष्णांशुःकरैःस्वांशुभिःजगतिलोकेनिशायाम्भवंनैशंनिशा
प्रदोषाभ्यांचेतिविकल्पादण्प्रत्ययः तमस्तिमिरमदिद्रवद्द्रावयतिस्मनिरस्तवानित्य
र्थःद्रुगतौणौचङिउपधायाह्रस्वःसन्वद्भावःस्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां
वेत्यभ्यासस्यविकल्पादित्वं। वियत्याकाशेवारिदवृन्दमयंमेघसंघरूपंस्वार्थेमयट्तमः
अदिद्रवन्जलजराजिषुनिद्रामेवनैद्रंनिमीलनंतदेवतमःअदिद्रवत्। तथाहिमहतांम

महात्मनांअरयःक्वचननाहताःअहतानकिन्तुसर्वत्रहताभवन्तीत्यर्थःद्वितीयनिषेधप्रापि
तस्यप्रकृतार्थस्यहननस्यतृतीयेननिषेधःपुनः क्वेतिकशब्दसामर्थ्यात्प्रकृतार्थपर्यवसानं। वै
धर्म्येणसामान्याद्विशेषस्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४३ ॥ *********** ॥
॥ समयइति ॥ समयःकालएवशरीरिणांबलाबलंबलाबलेविप्रतिषिद्धं चानधिकरणवा
चीतिविकल्पात्द्वंद्वैकवद्भावः । करोतीति । प्रणिगदन्तःप्रतिपादयन्तइवेत्युत्प्रेक्षा । ने
र्गदनदपतेत्यादिनाणत्वं । शरदिहंसरवाःपरुषीकृतस्वरमयूरंयथातथारमणीयताम्पुः
प्रापुःयातेर्लङिलङःशाकटायनस्यैवेतिभ्रेर्जुसादेशः उस्यपदान्तादितिपररूपंसंहिता

जगतिनैशमशीतकरःकरैर्वियतिवारिदवृन्दमयन्तमः । जलजराजिषुनैद्रमदिद्रवन्नमहतामहताःक्वचनारयः ॥ ४३ ॥ समय
एवकरोतिबलाबलंप्रणिगदन्तइतीवशरीरिणाम् । शरदिहंसरवाःप
रुषीकृतस्वरमयूरमयूरमणीयताम् ॥ ४४ ॥ ननुरुहाणिपुरोवि
जितध्वनेर्धवलपक्षविहङ्गमकूजितैः । जगलुरक्षमयेवशिखण्डि
नःपरिभवोऽरिभवोहिसुदुःसहः ॥ ४५ ॥ ******

थांद्रलोपेपूर्वस्यदीर्घोणः । शरत्प्रावृषोर्हंसमयूरकूजितेमाधुर्यामाधुर्यविपर्ययदर्शना
त्कालएवप्राणिनांबलाबलनिधानंवक्तव्यमभूदित्यर्थः ॥ ४४ ॥ *********** ॥
॥ ननुरुहाणीति ॥ पुरोऽग्रेधवलपक्षविहङ्गमाःहंसपक्षिणः । हंसास्तुश्वेतगरुतइत्यम
रः । तेषांकूजितैर्विजितध्वनेःशिखण्डिनोमयूरस्यतनौरुहाणिरूढानितनुरुहाणिब
र्हाणिइगुपधलक्षणःकप्रत्ययः । अक्षमयाहंसकूजितेर्ष्ययेवजगलुर्गलंतिस्म । कालप्रयुक्त
स्यबर्हगलनस्याक्षमाहेतुकत्वमुत्प्रेक्षतइतिगुणहेतूत्प्रेक्षा । युक्तंचैतदित्याह । अरिभवः
परिभवःसुदुःसहःअत्यसह्योहिपराजयदुःखितस्याङ्गसादोयुज्यतइतिभावः । कारणेन

कार्यसमर्थनरूपोऽर्थान्तरन्यासः सचसत्तामर्थ्यात् उत्प्रेक्षणयासंकीर्यते ॥ ४५ ॥ * ॥

॥ अनुवनमिति ॥ अनुवनम् प्रतिवनं वहन्तीरागोयस्याः साचासौ जवाच । ओड्रपुष्पंजवा पुष्पमित्यमरः । पुष्पेपुजातीप्रतृतित्वात् स्त्रीलिङ्गता । सेवाधरस्तेन चारुणिरम्येवनराजिरेकवधूस्तस्यामुखम्प्राग्भागः सएवमुखंवक्त्रमितिश्लिष्टरूपकन्तस्मिन् रुचिराणामीक्षणानां विभ्रमइवविभ्रमः शोभायासान्ताः विकचबाणदलावलयो नीलभिण्टीपत्रपंक्तयः । बाणोऽस्त्रीनीलभिण्टयांचेतिवैजयन्ती । अधिकंरुरुचिरे सुसुभिरेउपमायभकयोः संसृष्टिः ॥ ४६ ॥ ****************************** ॥

॥ कनकेति ॥ कनकभंगाः स्वर्णखण्डाइवपिशंगानिदलानियेषान्तैः सहरजसासरजसं

अनुवनंवनराजिवधूमुखेवहलरागजवाधरचारुणि । विकचबाणदलावलयोधिकंरुरुचिरेरुचिरेक्षणविभ्रमाः ॥ ४६ ॥ कनकभङ्गपिशङ्गदलैर्दधेसरजसारुणकेसरचारुभिः । प्रियविमानितमानवतीरुषांनिरसनैरसनैरवृथार्थता ॥ ४७ ॥ *・*・*・*・*・*

सरजस्काइत्यर्थः अतएवनसरजसमित्यव्ययीभावइतिवामनः । अथवामहाकविप्रयोगप्राचुर्यदर्शनादव्ययीभावदर्शनंप्रायिकमितिपक्षाश्रयणाद्बहुव्रीह्यर्थेपिसाधुरेवंतथाच सरजसंसरजसायेअरुणकेशराः तैश्चारुभिः प्रियैः विमानिताअवमानितामानवत्योमानिन्यः तासांयारुषोरोषास्तासान्निरसनैर्निरासकैः । अस्यतेः कर्त्तरिल्युट् । असनैः प्रियकप्रसूनैः । सर्जकासनवन्धूकपुष्पप्रियकजीवकाइत्यमरः । अवृथार्थनामाननिरसकत्वादस्यतीत्यसनानिइत्यन्वर्थनामकत्वंदधेदध्रे । कर्मणिलिट् ॥ ४७ ॥ **** ॥

॥ मुखेति ॥ धूतोनवातपायेनतद्धूतनवातपंवालातपनाम्रमित्यर्थः अम्भसिकमलंअम्भसिकमलम् । अम्भोग्रहणंस्थलकमलनिवृत्त्यर्थंअम्लाननताद्योतनार्थम्बायतोमदपाटलाख

कोरदृशां स्त्रीणां मुखसरोजरुचं मुखारविन्दशोभामनुचकार । अनुपराभ्यां कृञ इति पर
स्मैपदनियमः अतोऽनुकरणाद्धेतोः कम्पुमांस्समुत्सुकतां प्रेयसीमुखावलोकनकौतुकितां
नालंभयन् नागमयत् सर्वथ्यालम्भयदेवतत्सारकत्वादित्यर्थः । एतेनौत्सुक्यवस्तुनाकार्थे
णकारणभूतात्कमलदर्शनेत्यास्मुखस्मृतिर्व्यज्यत इति वस्तुनालङ्कारध्वनिः । एतेन लक्ष्यं स्त्री
मुखसादृश्यतया कमलं स्वाधारेऽम्भसि पुंस्यत्सुकतामलम्भयदिति रङ्गराजव्याख्यानम् ।
काकस्य काष्र्थ्योऽज्वलः प्रसाद इतिवदसङ्गतं मन्तव्यं । अलम्भयदिति लभेर्ण्यन्ताल्लङ् लभे
श्चेतिनुमागमः लभेस्त्वानुपसर्जनकगत्यर्थत्वाद्गतिबुद्धीत्यादिनाऽणिकर्तुः कर्मत्वे द्विकर्मक
ता । गत्युपसर्जनकप्राप्त्यर्थत्वेन वैपरीत्यमित्युक्तं रितं स्तिनिन्नेत्यत्र ॥ ४८ ॥ *** ॥

मुखसरोजरुचं मदपाटलामनुचकार चकोरदृशां यतः । धृतनवातपमु
त्सुकतामतो न कमलं कमलं भयदम्भसि ॥ ४८ ॥ विगतसस्यजिघ
त्समघट्टयत्कलमगोपवधूर्न मृगव्रजम् । श्रुततदीरितकोमलगीतक
ध्वनिमिषेऽनिमिषेक्षणमग्रतः ॥ ४९ ॥ *******

॥ विगतेति ॥ इषे आश्वयुजमासे । स्यादाश्विन इषोऽप्याश्वयुजोऽपि स्यादित्यमरः । कलम
गोपी शालिगोप्त्री सा चासौ वधूश्च कलमगोपवधूः स्त्रियाः पुंवदित्यादिना पुंवद्भावः श्रुत
आकर्णितस्तया वध्वा ईरितस्य आलापितस्य कोमलगीतस्य मधुरगानस्य ध्वनिर्येन तं श्रुतत
दीरितकोमलगीतकध्वनिं अत एवाऽग्रतोऽग्रेणानिमिषमनिविस्मयानन्दाभ्यामित्यनिमेषं
इगुपधलक्षणः कप्रत्ययः नदीक्षणं यस्य तमनिमिषेक्षणं व जुमत्तुंड्य्वः जिघत्सा । घसेर
शादेशाद्धातन्नंतादप्रत्ययादिति स्त्रियामप्रत्ययः । सा विगता यस्य तं विगतसस्यजिघत्सं
उपसर्जनह्रस्वः मृगव्रजं नाघट्टयत् नाताडयत् सिद्धे साधनप्रयोगायोगादिति भावः । अत्र
दंडसाध्ये मृगनिवारणे काकतालीयन्यायेन स्तु अर्थस्य गानस्य कारणत्वकथनात् गाधिरल

ङ्कारः। कारणान्तरयोगात्कार्यसुकरत्वंसमाधिरितिलक्षणात् ॥ ४९ ॥ ***** ॥

॥ क्षतेति ॥ अयुक्ताविषमाश्छदायेषान्तेअयुक्छदाःसप्तपर्णास्तेषांगुच्छैःस्तवकैःसुगन्ध यःशोभनगन्धागजमदगन्धिनइतिभावः अलिभिर्भृङ्गैः नताविस्तृतागानगिरोयेषान्तेअ लिभिर्गीयमानाइत्यर्थः। सततङ्गच्छन्तीतिसततगाःसदागतयोवायवइतियावत्क्षतम दञ्जनितमदंअतएवाकुलीकृतगजत्रयंऊर्ज्जःकार्त्तिकः। याकुलोमौकार्त्तिकइत्यम रः। सएवमतङ्गजइतिरूपकं। तंनिगदन्तइवअयमागच्छतीत्यावेदयन्तोइववर्त्तुवान्ति स्म। मत्तमातङ्गगमनेप्येवंविधवायुवहनसम्भवादियमुत्प्रेक्षारूपकंत्वङ्गमस्याः ॥ ५० ॥

क्षतमदन्तिगदन्तइवाकुलीकृतजगत्रयमूर्जमतङ्गजम्। वबुरयुक्छ दगुच्छसुगन्धयःसततगास्तनगानगिरोऽलिभिः ॥ ५० ॥ विगत वारिधरावरणाःक्वचिद्ददृशुरुल्लसितासितलासिताः। क्वचिदिवे न्द्रगजाजिनकञ्चुकाशरदिनीरदिनीयदवोदिशः ॥ ५१ ॥ वि लुलितामनिलैःशरदङ्गनानवसरोरुहकेसरसम्भवाम्। विकरितुंपरि हासविधित्सयाहरिवधूरिवधूलिमुदक्षिपत् ॥ ५२ ॥ ***

॥ विगतेति ॥ शरदियदवोयादवाःयदुशब्देनरघुशब्दवत्तदपत्यलक्षणाद्जनपदशब्दा मतद्राजत्वाद्वहुषुलुगसम्भवादिति। क्वचिद्विगतवारिधरावरणाःअतएवोल्लसिताकाशा दृश्यतासितलैःवासितलानानद्यतस्सिताःश्यामाइत्युपमाक्वचिन्नीरदिनीमेघवत्यःशुभ्राभ्रपटल च्छन्नाइत्यर्थः अतएवेन्द्रगजाजिनंऐरावतचर्मतदेवकंचुकःकूर्पासकोयासांताइवस्थिता इत्युत्प्रेक्षा। दिशोददृशुःउक्तालङ्कारयोःसंसृष्टिः ॥ ५१ ॥ ********** ॥

॥ विलुलितामिति ॥ शरदेवाङ्गनाइतिरूपकंअनिलैर्विलुलितांविक्षोभितांनवसरोरुह केसरसम्भवान्धूलिंपरागंपरिहासविधित्सयानर्मरीतिकौतुकविषयादवातेःसतन्नात् स्त्रिया

मप्रत्ययेटाप् हरिवधूः विकीर्यतुमिवक्षेप्तुमिव । तुमुन्ण्वुलौ क्रियायां क्रियार्थायामिति तुमु न्प्रत्ययः । वृतृतईद्धानोरितीकारः । उदक्षिपत् प्रेरितवती । रूपकोज्जीवितेयमुत्प्रेक्षा । किरतिरयंकीर्यमाणकर्मा । यथाह । रजःकिरतिमारुतःक्वचित्तत्कारकोऽन्यकर्मायथा ऽनैवेतिविवेकः ॥ ५२ ॥ *************************** ॥

॥ हरितेति ॥ अभितामम्रमुखीअरुणमुखा स्वाङ्गाच्चोपसर्जनादित्यादिना विकल्पान्ङी ष् । मुक्तावलिर्मरुद्गणैः सुमनोगणैर्दिवितताहरिप्रियार्थमाकाशेविततादरितानां हरि द्वर्णानांपत्त्राणांविकारो हरितपत्त्रमयी । टिड्ढाणञित्यादिना विकल्पान्ङीप् । तथाऽव नद्धाः ग्रथिताः मनोरमाः पल्लवायस्यांसास्रगिवेत्युत्प्रेक्षा । मधुरिपोः हास्यमुद्दंहर्षमित

हरितपत्त्रमयीवमरुद्गणैःस्रगवनद्धमनोरमपल्लवा । मधुरिपोरभि ताम्रमुखीमुदंदिविततावितताननमुक्तावलिः ॥ ५३ ॥ स्मितसरोरुह नेत्रसरोजलामतिसिताङ्गविहङ्गहसद्दिवम् । अकलयन्मुदिता मिवसर्वतःसशरदंशरदंतुरदिङ्मुखाम् ॥ ५४ ॥ ******

तान ॥ ५३ ॥ ******************************** ॥

॥ स्मितेति ॥ सहरिः स्मितानि विकसितानि सरोरुहाण्येव नेत्राणि येषुतानि सरोजलानि य स्यांतांतथोक्तामतिसिताङ्गाः धवलपक्षा येविहङ्गाहंसास्तैर्हसन्तीस्मयमानेवस्थिताद्यौ र्यस्यांतांतथोक्तां शरैस्तृणविशेषैर्दन्तुराण्युन्नतदन्तानिहासात्प्रकाशदशनानीतियावत् । दन्त उन्नत उरच् इत्युरच्प्रत्ययो मत्वर्थीयः तानि दिङ्मुखानि यस्यांतांशरदन्तुरदिङ्मुखांश रदंसर्वतो मुदितामिवाकलयत् सर्वत्र नेत्रविकासादिलिङ्गैर्हृष्टामिवामन्यतेइत्यर्थः । अ त्र सरोजहंसशरेषु नेत्रहासदन्तत्वारोपणाद्रूपकालङ्कारः । तद्दशाप्रतीयमानाङ्गनाभे दाध्यवसायाच्छरदि मुदितत्वोत्प्रेक्षेतिसङ्करः ॥ ५४ ॥ ************** ॥

॥ अथहेमन्तंवर्णयति ॥ गजपतीति । गजपतिःप्रमाणमासाङ्गजपतिद्वयसःमहागज
प्रमाणाः प्रमाणेद्वयसज्दघ्नञ्मात्रच् इतिप्रमाणार्थेद्वयसच् प्रत्ययः । टिड्ढाणञित्या
दिनाङीप् । ताअपिसरितस्तुहिनयन्हिमीकुर्वन् । तत्करोति।णिच्। तदन्तात्लटःशत्रादेशः।
हेमन्तेभवोहैमनःसर्वत्राण्चतलोपश्चेतिहेमन्तशब्दाच्छैषिकोऽण्प्रत्ययः । तकारलोप
श्च । पृषतांबिन्दूनांपतिर्वायुः । पृषन्तिबिन्दुपृषताइत्यमरः । अध्वानङ्गच्छन्तीत्य
ध्वगाःपथिकाःअत्यन्ताध्वदूरपारसर्वानन्तेषुडः । तद्योषितांतद्योषितभर्तृकाणांदृशोस्त
नुतापकृतंमहासन्तापकारिणीसलिलसन्ततिअतनुत । उत्पादयामासेत्यर्थः ।
हेमन्तमारुतोविरहदुःसहोऽजनीतिभावः ॥ ५५ ॥ ************* ॥

गजपतिद्वयसीरपिहैमनस्तुहिनयन्सरितःपृषताम्पतिः । सलिलस
न्ततिमध्वगयोषितामतनुतानतनुतापकृतंदृशोः ॥ ५५ ॥ इदमयु
क्तमहोमहदेवयद्वरतनोःस्मरयत्यनिलोऽन्यदा । स्मृतसयौवनसो
ष्मपयोधरान्तुहिनस्तुहिनस्तुवियोगिनः ॥ ५६ ॥ ***

॥ सर्वदापिवियोगिनामुद्दीपकवायोर्हैमन्तेवैशिष्ट्यमाह ॥ इदमिति । अनिलोवायुर
न्यस्मिन्कालेऽन्यदाग्रीष्मादावित्यर्थः । सर्वैकान्यकिंयत्तदोदाप्रत्ययः । वियोगिनोविर
हिणःगतिबुद्धीत्यादिनाअणिकर्तुःकर्मत्वं । वरतनोर्वरतनुमित्यर्थः । अधिगर्थेत्यादिनाकर्म
णिशेषेषष्ठीस्मारयतीतियत्स्मृतेराध्यानेमित्वाद्ध्रस्वत्वं । इदंस्मारकत्वमपिमहदत्यन्तमयु
क्तमेवतद्दुःखकारिविरहादितिभावः । अहोअत्यन्ताकिञ्चित्कारत्वादिस्मयः । हेमन्तेतुह
पृषतमयस्यसम्भवादित्याह । सतुहिनस्तुहिनसहितस्तुसयौवनायौवनयुक्ताःअतएवसो
ष्माणःसोष्माणोयेपयोधराःकुचास्तेस्मृतायैस्तान्स्मृतसयौवनसोष्मपयोधरान् वियोगिनो
वियुक्तान् । गत्यायुक्तत्वानेपितमितिनिर्विकर्मकत्वं । तुहिनस्तुहनुवासम्भावनायांलोट् । हेम

न्योहि हिमसहकारान्कुचौष्ठैकसाध्यदुःखोत्पादनसामर्थ्याद्धियोगिमारकत्वमपियुक्तमित्य र्थः । अमारकेमारकसम्बन्धोक्तेरतिशयोक्तिभेदः इह सहजकविप्रौढोक्तिसिद्धयोरभेदा ध्यवसायइतिरहस्यम् ॥ ५६ ॥ ************************ ॥

॥ प्रियतमेति ॥ अत्राद्यपर्यायेसहसाइतित्रेधाविभागः अन्यत्रसहसेत्येकंपदं सहसाख शेषयायया स्त्रियाकर्त्र्याप्रियतमेनसहनस्थितं । नपुंसकेभावेक्तः । साखीसहसामार्गशीर्षे मासेन । मार्गशीर्षेसहामार्गइत्यमरः । क्वतवेपथुः जनितकंपासती । ट्वितोथुजित्यथुच्प्र त्ययः । नंपूर्वमगणितमेवप्रियंहसेनसह वर्त्ततइतिसहसासहास्याःसती । अथो हसोहासो हास्यंचेत्यमरः । सहसाशीघ्रंस्सरादिपाठादव्ययत्वं रिरभ्यालिङ्गयंक्षणंक्षणमपीत्यर्थः ।

प्रियतमेनययासरुषास्थितंनसहसासहसापरिरभ्यतम् । श्लथयितुं क्षणमक्षमताङ्गतानसहसासह साक्वतवेपथुः ॥ ५७ ॥ भृशम दूयतचाधरपल्लवक्षतिरनावरणाहिम मारुतैः । दशनरश्मिपटेन चसीत्कृतैर्निवसितेवसितेनसुनिर्वृतौ ॥ ५८ ॥ *****

अन्यथावैरंस्यात्अतएवसामर्थ्यलभ्यार्थत्वादपेरप्रयोगः श्लथयितुंनाक्षमताङ्गनाशिथि लीकर्तुंनोत्सहतेस्मेत्यर्थः । मानिनीमानभङ्गनक्षमेयंमासइतिभावः । कलहान्तरिते यंनायिका । कोपात्कान्तंपरानुद्यपश्चात्तापसमन्वितेतिलक्षणात् ॥ ५७ ॥ ****॥

॥ भृशमिति ॥ अनावरणाआवरणरहितायाअधरपल्लवस्यक्षतिर्व्रणोहिममारुतैर्भृशम दूयतअतप्यत । दूङ्दैवादिकात्कर्त्तरिलङ् । साक्षतिर्यत्तदोर्नित्यसम्बन्धःसीत्कृतैःसी त्कारैःकर्तृभिः सितेनशुभ्रेणदशनरश्मयएवपटस्तेनकरणेननिवसितेवाच्छादितेवेत्युत्प्रे क्षा । वसेराच्छादनार्थात्कर्मणिक्तःस्येडागमःसुनिर्वृतौसुनिर्वृताः । शीतातुराच्छाद्यतइ तिभावः । हिमहताधरनिर्वाणस्यसीत्कारकारणकस्यदशनरश्मिपटाच्छादनेहेतुत्वोत्प्रेक्ष

णाद्रूपकोत्प्रेक्षयोः सङ्करः ॥ ५८ ॥ ******************** ॥

॥ उक्तमेवार्थम्भङ्ग्यन्तरेणाह ॥ व्रणेति । मृदुमया मार्दवेन हेतुना हिममारुतैर्दुनया पी
डितया । दुदू उपतापे इति धातोर्भावादिकात्कर्मणि क्तः । व्रणभृताद्व्रणभृतायास्तनोः
स्त्रियाः अधरौ लेखेव तया अधरलेखया कर्त्र्या कलसीकृतेन हेतुना स्फुरिताः प्रकाशिता ये दन्त
मरीचयस्तन्मयं तद्रूपं स्फुटमावरणमाच्छादनं दधे इव धृतमिवेत्युत्प्रेक्षा । दधातेः कर्मणि
लिट् ॥ ५९ ॥ ************************** ॥

॥ धृतेति ॥ धृतास्तुषारकणास्तुहिनशीकरा येन तस्य नभस्वतः पवनस्य सम्बन्धिनः तस्य स

व्रणभृता सुतनोः कलसीकृतस्फुरितदन्तमरीचिमयं दधे । स्फुटमि
वावरणं हिममारुतैर्मृदुतया दुतयाऽधरलेखया ॥ ५९ ॥ धृततु
षारकणस्य नभस्वतस्तरलताङ्गुलितर्ज्जनविभ्रमाः । पृथुनिरन्तरमिष्ट
भुजान्तरं वनितयानितया न विषेहिरे ॥ ६० ॥ हिमऋतावपि ताः
स्म भृशस्विदो युवतयः सुतरामुपकारिणि । प्रकटयत्यनुरागमकृत्रिमं
स्मरमयं रमयन्ति विलासिनः ॥ ६१ ॥ ********

ता एवाङ्गुलयस्ताभिस्तर्जनानि यानि तान्येव विभ्रमाः विलासाः पृथु विशालमिष्टस्य दयितस्य
भुजान्तरं भुजमध्यं वक्षःस्थलं निरन्तरमानितया अप्राप्तया गाढालिङ्गनमलभमानया इत्यर्थः
। इणः कर्त्तरि क्तः वनितया ह्रिया न विषेहिरे सोढाः विरहिण्यस्तर्जिता इव नभस्वतो विभ्य
तीति भावः ॥ ६० ॥ ************************ ॥

॥ हिमेति ॥ स्मरमयं स्मराद् आगतं स्मरप्रयुक्तमित्यर्थः । तत आगत इति मयट् अकृत्रिमम
नुरागं सहजं प्रेम प्रकटयति प्रकटीकुर्वाणे तत्कार्येण स्वेदेनेति भावः । अत एव सुतरामुपकारि
णि पुंसां रिरंसाजननात्तेभ्यः स्वानुरागप्रकाशनाच्चात्यन्तोपकर्त्तरीत्यर्थः । एवम्भूते हिमऋत

तौहेमन्तौपिखेदसंभावनाविरहितकालेपीत्यर्थः । नटत्यकइतिप्रकृतिभावः । भृशंखिद्य न्तिरागोष्मणाभृशंखिदइतिसाभिप्रायोक्तिः । हेमन्तोपिरागिणांखेदहेतुरेवनङ्गेतुरागहेतु त्वादितिभावः । नातथाधीरायुवनयोर्विलासिनःप्रियान्रमयन्तिस्महेमन्तस्योद्दीपकत्वा दितिपीडाक्षमत्वात्तद्दोर्घरात्रित्वाच्चोभयेच्छात्तद्दृशमरमन्तेत्यर्थः ॥ ६१ ॥ **** ॥

॥ अथशिशिरंवर्णयति ॥ कुसुमयन्नित्यादिना । उपवनंवनइत्यर्थः विभक्त्यर्थेऽव्ययी भावःतृतीयासप्तम्योर्बहुलमितिविकल्पादम्भावः । फलिनीःप्रियङ्गुलताः । प्रियङ्गुःफलि नीफलीत्यमरः । कुसुमयन्कुसुमवतीःकुर्वन् । इत्युद्दीपनसामग्रीवर्णनं । कुसुमय तेर्मत्वन्तप्रकृतिकात्तत्करोतीतिण्यन्तान्लटःशत्रादेशःणाविष्टवद्भावेविन्मतोर्लुक् । म

कुसुमयन्फलिनीरलिनीरवैर्मदविकासिभिराहितहुंकृतिः । उप
वनंनिरभर्त्सयतप्रियान्वियुवतीर्युवतीःशिशिरानिलः ॥ ६२ ॥
उपचितेषुपरेष्वसमर्थतांव्रजतिकालवशाद्बलवानपि । तमसिमन्द
गभस्तिरभीषुमान्नहिमहाहिमहानिकरोऽभवत् ॥ ६३ ॥ ※

दविकाशिभिर्मदेनविजृम्भमाणैरलिनीरवैःभृङ्गीझङ्कारैराहितहुङ्कृतिःकृतहुङ्कारः मा धुर्यादुद्दीपकत्वातिशयद्योतनार्थमलिनीतिस्त्रीलिङ्गनिर्देशः शिशिरानलःप्रियान्वियुव तीःकोपाद्वियुञ्जानाःशतरिधातोरुवङादेशःउगितश्चेतिङीप् । युवतीःवधूःयूनस्तिरि तिनिप्रत्ययःनिर्भर्त्सयनतर्जयन । तर्जिभर्त्सौसौरादिकयोरनुदात्तत्वादात्मनेपदंअत्रवा योअचेतनेचेतनधर्मोनिर्भर्त्सनमुत्प्रेक्ष्यतेसा चालिहुङ्कारहुङ्काराज्जीवितेनिरूपकसङ्की र्णव्यञ्जकाप्रयोगाद्गम्याच ॥ ६२ ॥ ************************ ॥

॥ उपचितेष्विति ॥ कालवशाद्बलवानपिपरेषुशत्रुषुउपचितेषुसत्सुअसमर्थतांदौर्बल्यं व्रजति । द्वियस्मात्तपसिमाघमासे । तपामाघेइत्यमरः । मन्दगभस्तिर्मृदुरश्मिरभीषुमा

शुमान्। अभीषुःप्रग्रहेरश्मावित्यमरः । महनउर्पावनस्यहिमस्यहा।निंनाशंकरोतीति महाहिमहानिकरस्तद्धेतुर्नाभवत्तत्त्रोहेत्विग्यादिनाहेत्वर्थेटप्रत्ययः । विशेषेणसामान्यसमर्थनरूपोर्थान्तरन्यासः ॥ ६३ ॥ ******************** ॥

॥ अभिषीति ॥ क्षुभितउद्धतोयःसैन्यपरागःसेनारजइवविपाण्डुरद्युतिःसुभ्रवर्णःयोलोध्ररजस्त्वयःभुवनान्यभिषिषेणयिषुंसेनयाअभिज्ञातुमिच्छन्तं। यत्सेनयाभिगमनमरौनदभिषेणनमित्यमरः । सत्यापपाशेत्यादिनासेनाशब्दान्चिणिसनाशंसभिक्षुभ्यउरितिउप्रत्ययःस्थादिष्वभ्यासेनेतिधात्वभ्यासस्सकारयोःषत्वं। स्मरमाख्यनेवख्यानवानित्युत्प्रेक्षा च क्षिङःख्यान्अस्यतिवक्तिख्यातिभ्योङितिच्लेरङादेशः । दिशः निरयन् निरस्कुर्वन्निरः

अभिषिषेणयिषुंभुवनानियःस्मरमिवाख्यतलोध्ररजस्स्वयः। क्षुभित
सैन्यपरागविपाण्डुरद्युतिरयंनिरयन्नुदभूद्दिशः ॥ ६४ ॥ शिशिर
मासमपास्यगुणोऽस्यनःकइवशीतहरस्यकुचोष्मणः। इतिधियास्त
रुषःपरिरेभिरेघनमतोनमतोऽनुमतान्प्रियाः ॥ ६५ ॥ ****

स्यदात्तत्करोतीतिण्यन्तात्लटःशत्रादेशःणाविष्ठवद्भावेटिलोपःउदभूत् ॥ ६४ ॥ * ॥

॥ शिशिरेति ॥ शिशिरकालमपास्यापहायशीतंहरतीतिशीतहरस्यहरतेरनुद्यमनेऽजित्यच्प्रत्ययःनःअस्माकमस्यकुचोष्मणःकुचोष्मस्यकइवगुणःकिम्फलंसम्पाद्यनइतिशेषः । गम्यमानक्रियापेक्षयाक्षानिर्देशःइवशब्दोवाक्यालङ्कारेइतिधियाअतोऽस्मिन्शिशिरकाले।सार्वविभक्तिकस्तसिः। प्रियाकान्ताअस्तरुषोनिरस्तरोषाःसत्योनमतःप्रणतानुमतान्स्वप्रियान्घनंनिविडंपरिरेभिरेआश्लिष्टवत्यःइतिधियेतिस्वार्थस्यपरिरम्भस्यकुचोष्मतापकत्वार्थत्वमुत्प्रेक्ष्यतेव्यञ्जकाप्रयोगाद्गम्यत्वञ्च ॥ ६५ ॥ ******* ॥

॥ अधीति॥ नपड्क्तेऽधिलवङ्गमितिविभक्त्यर्थेऽव्ययीभावः । सुमनसांपुष्पाणांदलेषुनवं निभानि

कन्तिइ निसुमनोदलताल्लिनः। नात्कीर्ण्येआभीक्ष्णेनाशिनिः अमीअलिनोमधुपाःरव
सापरागेणावर्त्तेनचमलिनाःमलीमसाःपापिनस्सन्तनाःमलिनिताःइनिहेतोःपुरोऽग्रेसपदि
कुन्दलतामाघ्यवल्ली। माघ्यंकुन्दमित्यमरः। दलनाविकसनाप्रसवेननिजकुसुमेनहा
सवन्जहासस्फुटमित्युत्प्रेक्षायांरजस्वलाङ्गनारंकामिनंसपत्नोहसतीतिभावः। कुन्दकु
सुमस्यधावल्याद्धासत्वेनोत्प्रेक्षा ॥ ६६ ॥ ****************** ॥
॥ अथयमकविशेषकौतुकितयाकविः पुनर्द्वादशभिर्वृत्तैःचर्णयन्नाद्येस्त्रिभिर्वसन्तंवर्णय
ति ॥ अतिसुरभिरिति। अतिसुरभिरत्यन्तसुगन्धिःसन्तानकःकल्पवृक्षःपुष्पश्रियांसु

अधिलवङ्गममीरजसाऽधिकंमलिनिताःसुमनोदलतालिनः। स्फु
टमितिप्रसवेनपुरोहसन्सपदिकुन्दलतादलतालिनः ॥ ६६ ॥ अ
तिसुरभिरभाजिपुष्पश्रियामतनुतरतयेवसन्तानकः। तरुणपरभृतः
स्वनंरागिणामतनुतरतयेवसन्तानकः ॥ ६७ ॥ नोज्झितुंयुवति
माननिरासेदक्ष मिष्टमधुवासरसारम्। चूतमालिरलिनामतिरागा
दक्ष मिष्टमधुवासरसारम् ॥ ६८ ॥ *********

ष्यसम्पदांअतनुतरतयामहत्तरत्वेन। अतनुशब्दात्तरवंत्तात्तल्प्रत्ययःअभाजीवाभञ्जीवे
त्युत्प्रेक्षा। तयातन्त्रइत्यर्थःभञ्जेश्चिणीतिविभाषानलोपेऽपधावृद्धिःचिणोलुक्। वस
न्तस्यानकोवसन्तानकः दुन्दुभिरितिरूपकन्तरुणकोकिलोरागिणांकामिनांरतयेरागव
र्द्धनायस्वयमतनुतरमधुरंचुकूजेत्यर्थः। प्रभावृत्तं। स्वरशरविरतिर्ननौरौप्रभेतिलक्षणात्
॥ ६७ ॥ ************************* ॥
॥ नेति ॥ अरमत्यन्तमिष्टेष्वीप्सितेषुमधुषुमकरन्देषुवासेवसतौरसोरागोयस्याःसाइष्ट
मधुवासरसामधुपानप्रियेत्यर्थः अतएवालीनामालिभिर्भृङ्गश्रेणिर्युवतिमाननिरासेदक्षं

कुशलंडद्दीपकत्वादितिभावः मधुवासरेषुवसन्तदिनेषुसारं श्रेष्ठंमधुवासरसारमात्काव्य स्वाद्यमित्यर्थः चूतंसहकारंअनिरागादतिलौल्याद्दुज्झितुंहातुमक्षमिष्टनासहिष्ट । क्ष मेर्भावादिकाल्लुङ् । स्वागतावृत्तं । स्वागतेतिरनभाद्गुरुयुग्ममितिलक्षणात् ॥ ६८ ॥

॥ जगदिति ॥ प्रभावयतीतिप्रभावनीसम्पादयित्री । कर्त्तरिल्युटिङीप् मधुश्रीःजग दशोकर्त्तुंप्रभीसमर्थंअस्यस्मरस्यानीकैसैन्यैजयन्तीर्जित्वरीःकेतनवैजयन्तीःध्वजपताकाः तनवैकरवाणि । तनोतेःप्राप्तकालेलोट्टेरेत्वमेकारःआडुत्तमस्यपिच्चेतिआटिआटश्चेति वृद्धिः । इतिमनोषयेतिशेषः । इमाःकदलीःरम्भातरून् तेनेवितस्तार । कदलीषुकाम वैजयन्तीत्वोत्प्रेक्षा । वृत्तमुपजाति ॥ ६९ ॥ ******************* ॥

जगदशोकर्त्तुमिमाःस्मरस्यप्रभावनीकेतनवैजयन्तीः । इत्यस्यतेनेक दलीर्मधुश्रीःप्रभावनीकेतनवैजयन्तीः ॥ ६९ ॥ स्मरणगमयीव पुस्तमिस्रापरितस्ताररवेरसत्यवश्यम् । प्रियमापदिवाऽपिकोकिले स्वोपरितस्ताररवेरसत्यवश्यम् ॥ ७० ॥ ********

॥ स्मरेति ॥ असतीदुष्टास्मरेणकामेननिमित्तेनयोरागोरमणेच्छातत्प्रधानतन्मयी । तमि स्रातमस्तोमः । तमिस्रातिमिरे रोगेतमिस्रातुतमस्ततौ । कृष्णपक्षनिशायांचेतिविश्वः । रवेर्बिंबमण्डलंपरितस्तारआववे । अहनिरजनीधियञ्जनयामासेत्यर्थः । परिपूर्वात्स्तृ णातेर्लिट्अवश्यंसत्यमित्यर्थः । कुतःपरितःसमन्तात्ताररवेउच्चतरध्वनौकोकिलेरसति कूजतिसतिइत्युद्दीपोक्तिः । स्वोंस्वियइत्यर्थः । जातावेकवचनं । दिवेतिसप्तम्यर्थेव्य यम्वशङ्कतेवश्यःवशङ्गतइतियत्प्रत्ययः नवश्यस्तमवश्यवशङ्गतमपीत्यर्थः प्रियमापस्व यमभिससारेत्यर्थः । जगदगणयन्तमपिप्रियन्दिवापिमानमवगणय्यनिषेधस्योल्लङ्घ्य हमगच्छत । तस्त्वयंगमितितिरोहितभानुमण्डलाभिमानिन्यइतिरूपकानुप्राणितोप

मानिक्रियानिमित्तापरिसरणक्रियास्वरूपेणप्रेक्षाअवस्थामितिव्यञ्जकप्रयोगाद्द्याच्या। औपच्छन्दसिकवृत्तं । विषमेससजागुरूसमेचेत्सरयश्छन्दसिकनादौपपूर्वमिति ॥ ७० ॥ ******************************* ॥

॥ अथैकेनग्रीष्ममाह ॥ वपुरिति । शुचिनाग्रीष्मेणप्रयोजककर्त्राअम्बुविहारेणजलक्रिडयाहिमशीतलंअतएवरुचिरमुज्ज्वलंवपुर्देहङ्गमितापापितमा । गतिबुद्धीत्यादिनाअणिकर्त्तुःकर्मत्वं। प्रधानकर्मण्याख्येयेलादीनाऊर्ह्हिकर्मणामिति। अभिहितत्वंच। अतएवकमनीयतराणरमणीयतराअचिरांशुर्वलेर्वाचिरां शुलताविद्युल्लतातयारुचिरविरुचिर्यस्याः साअचिरांशुलतारुचिःइत्युपमाद्वयनतयाराणमनुरागमितापापा। इणःकर्त्तरिक्तः। २

वपुरम्बुविहारहिमंशुचिनारुचिरंकमनीयतराणमिता । रमणेनरमण्यचिरांशुलतारुचिरंकमनीयतराणमिता॥ ७१ ॥ मुदमद्भुवामपांमयूरःसहसायंननदीपपाटलाभे । अलिनारमतालिनीशिलीन्ध्रेसहसायंननदीपपाटलाभे ॥ ७२ ॥ *********

रमणीरमणेनप्रियेणाङ्कमुत्सङ्गमनीयतनीता । नीहृहृषमथिवहिग्रहामितिनयतेर्द्विकर्मकताशेषम्पूर्ववत् । तोटकच्छन्दश्च॥ ७१ ॥ *************** ॥

॥ अथद्वाभ्यांवर्षर्तुंवर्णयति ॥ मुदमित्यादिना । अद्भुवांमेघप्रभवानांअपांलाभेवृष्टतीत्यर्थः। सहसामयूरामुदमानन्दमायनालभन्त। अयगतौलुङिआडजादीनामित्याडागमेवृद्धिःनदीपपाटनवृःप्रवाहयन्नित्यर्थः। अटपटगतौलिट् । जातावेकवचनं। अलिनाभृङ्गेणसहसावभवःसायंतनःसायंचिरमित्यादिनाट्युप्रत्ययः । नुडागमश्च। सचासौदीपश्चतद्वत्पाटलाभेपाटलप्रभेइत्युपमालङ्कारः । तस्मिन्शिलीन्ध्रेकदलीकुसुमे अलिनीअरमत। अत्रमयूरमोदप्राप्त्याद्यनेककर्तृकक्रियायौगपद्याद्वाधिकरणक्रिया

हसमुच्चयरूपःसमुच्चयालङ्कारभेदः। गुणक्रियायौगपद्यंसमुच्चयइतिसामान्यलक्षणं। औ
पच्छन्दसिकंवृत्तं ॥ ७२ ॥ ************************ ॥

॥ कुटजानीति ॥ शिखरीन्द्रंसमयारैवतकाद्रेःसमीपे। अभितःपरितःसमयेत्यादिनाद्वि
तीया। अवनौप्रदेशेघनमदाभ्रमरायेषुतानिघनमदभ्रमराणिकुटजानिकुटजकुसुमानि
वनौघेनपयःपूरेणनमंत्यभ्राणिमेघायस्मिन्ननघनौघनमदभ्रम्। पयःकीलालममृतंजी
वनंभुवनंवनमित्यमरः। गगनञ्चवीक्ष्यशिखिभिर्मयूरैर्गीतनिनदखगानध्वनेःसमयानु
ध्वयानुत्थाथैरित्यादिनावैकल्पिकाषष्ठी। गिरावाचाकेकयेत्यर्थः। उच्चैस्तरांरणितं
रणशब्देभावक्तुङ्विणाजुङ्कुटजावृत्तम्। सजसाभवेदिहसगौकुटजाख्यमितिलक्ष

कुटजानिवीक्ष्यशिखिभिःशिखरीन्द्रंसमयावनौघनमदभ्रमराणि।
गगनंचगीतनिनदस्यगिरोच्चैःसमयावनौघनमदभ्रमराणि ॥ ७३ ॥
अभीष्टमासाद्यचिराय काले समुद्धृताशंकमनीचकाशे। योषिन्मनोज
न्मसुखोदयेषुसमुद्धृताशंकमनीचकाशे ॥ ७४ ॥ ****

************************ ॥
णात् ॥ ७३ ॥ ************************

॥ अथत्रिभिःशरदम्वर्णयति ॥ अभीष्टमित्यादि। कामयतइतिकमनीकामयित्री।
कमनःकामयिताभीकःकमनःकामनोभिकइत्यमरः। कमेःकर्त्तरिल्युटिङीपयोषितञ्जा
तावेकवचनंअनीचाउन्नताःकाशाआस्थवालायस्मिन् अनीचकाशेकालेशरदीत्यर्थः।
मनोजन्मसुखोदयेषुकामसुखाविर्भावेषुधृताआशाअभिलाषोयेनतंअभीष्टंप्रियंचिराय
चिरकालेन। चिरायचिररात्रायेत्यमरः। सम्यगुद्धृताउत्सृष्टाआशंकासंकोचोयस्मिन्
कर्मणितत्समुद्धृताशंकंविस्रब्धंयथातथाआसाद्यप्राप्यमुदासहवर्त्ततइतिसमुत् सानन्दा
सतीवकाशेविललासेत्यर्थः। अत्रसमुच्चकाशइतियोषितःप्रियप्राप्तिनिमित्तहर्षाख्यभाव

निबन्धनात्प्रेयोऽलङ्कारः । रसभावतदाभासतत्प्रशमनानां निबन्धे रसवत्प्रेयऊर्जस्वि समाहितानीति लक्षणात् । वृत्तमुपजाति ॥ ७४ ॥ *************** ॥

॥ स्तनयोरिति ॥ रसमानाः कूजनशीलाः ताच्छील्यवयोवचनशक्तिषु चानशिति ताच्छील्ये चानश्प्रत्ययः । रसतेः परस्मैपदित्वान्न शानच्प्रत्ययः । ते सारसाः पक्षिविशेषाः यस्मिन् तेन रसमानसारसेन समयेन शरत्कालेनेत्यर्थः । सारसानां तत्रैव सम्भवात् । सारसो मैथुनी कामी गोनर्दः पुष्कराह्वय इति यादवः । अङ्गनानां स्तनयोर्या जलानां ततिः शरदो घर्मजन्मा स्वेदोदबिन्दुसन्दोहः अभितो नद्धा अभिनद्धा । नह्यतेरभिपूर्वात्कर्मणि क्त नहो ध इति धत्वं । हारसमा मुक्ताहारतुल्या कुचमण्डले मण्डनायमानेति भावः रजलानां ततिः

स्तनयोः समयेन याङ्गनानामभिनद्धा रसमानसारसेन । परिरम्भरुचिं
ततिर्जलानामभिनद्धा रसमानसारसेन ॥ ७५ ॥ जातप्रीतिर्या म
धुरेणानुवनान्तकामेकान्ते सारसिकाकाकुरुतेन । तत्सम्पर्कं प्राप्य पु
नरमोहनलीलां कामेकान्ते सारसिकाकाकुरुतेन ॥ ७६ ॥ **

रसेन रागेण हेतुना बद्धीयसेति भावः । परिरम्भरुचिमालिङ्गनेच्छां नाभिनत् नाभिभेद । शारदस्वेदस्याप्यलङ्कारतया उद्दीपकत्वाज्जुगुप्सितत्वाभावः सपत्नभृङ्गारो विजयत इत्यर्थः । अत्र नवरसनिबन्धनाद्रसवदलङ्कारः । लक्षणमुक्तं पूर्वश्लोके उक्तम् । औपच्छन्दसिकं वृत्तम् ॥ ७५ ॥ **************************** ॥

॥ जातेति ॥ यासीअनुवनान्तं विभक्त्यर्थेऽव्ययीभावः । मधुरेण श्राव्येण सारसिकाकाकुरुतेन सारस्य एव सारसिकाः सारसाङ्गनाः कान्यपूर्वस्यैवं नासां काकुरुतेन विकृतशब्देन । काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेरित्यमरः । काकुसहितं रुतं ध्वनिः तेन । कामेकामक लेऽस्मिंश्चेरेवदन्ध इति बङ्गेषाप्रयोगः । कान्ते प्रिये जातप्रीतिः जातस्नेहा अभूत् । रसिकार

स्वदनीरागवतीत्यर्थः अनङ्गनिष्ठता विनिष्ठन्नन्वयः । साकाङ्क्षीए कान्तेरहसि तस्य कान्तस्य सम्यक् सम्प्राप्य पुरापुरस्य प्रेरणात्पूर्वमेव कामोद्दीपनलीलां सुरतक्रीडां न कुरुते सर्वापि स्त्री तत्तोन पि सुरतविशेषान् कामतन्त्रप्रसिद्धान् विरुध्य चकारेत्यर्थः शृङ्गारस्य परा काष्ठाप्रसिद्धा । मत्तमयूरं वृत्तं ॥ ७६ ॥ ************************ ॥

॥ अथैकेनं हेमन्तमाह ॥ कान्तेति । स्मरस्तनङ्गेन सह पचाद्यच् स्मरस्य सहः कामोद्दीपक इत्यर्थः । तेनासवेन तोषितं तेन स्मरसहासवतोषितेन अतएव रहसि सावस्थसङ्गनिरसहासवता रागहास्यवता अतएव प्रेम्णा मनस्सु पुंसां चित्तेषु उषितेन वसता । वसतेः कर्त्तरि क्तः वसतिक्षुधोरिडिति इडागमः । गतिबुद्धीत्यादिसूत्रेण चकाराद्धर्नमानार्थता । कान्तैव ज

> कान्ताजनेन रहसि प्रसभं गृहीतकेशे रते स्मरसहासवतोषितेन । प्रेम्णा मनःसु रजनीष्वपि हैमनीषु के शेरते स्मरसहासवतोषितेन ॥
> ७७ ॥ गतवतामिव विस्मयमुच्चकैरसकलामलपल्लवलीलया । मधुमतां न्यकृत रमावलीरसकलामलपल्लवलीलया ॥ ७८ ॥

नस्तेन कान्ताजनेन जात्यावेकवचनं । प्रसभं रहसि बलाद्गृहीतकेशे आकृष्टशिरोरुहे रते सुरते । हेमन्तो भवा हैमन्त्यस्तासु हैमनीषु अपिशब्दाधीयसोऽपि तीनिभावः । सर्वत्राण्चेत्यण् सर्वत्राणचतलोपश्चेति हेमन्तशब्दादण्प्रत्ययः तकारलोपश्च टिड्ढाणञित्यादिना ङीप् । रजनीषु के युवानः शेरते स्मरसहासवतोषितेन कोपीत्यर्थः । तत्स्मेइ निभूतेचइ । एतेनातिभूमिङ्गतः शृङ्गार इति व्यज्यते । वसन्ततिलकावृत्तं ॥ ७७ ॥ ***************** ॥

॥ अथैकेन शिशिरं वर्णयति ॥ गतवतामिति । असकलामलपल्लवलीलया असकला अमुमग्रविकासिनोऽमला निर्मलाश्च ये पल्लवास्तेषां लीलानयान्तन्यरूपयेत्यर्थः विस्मयङ्गतवतां निर्वाञ्छितानामिवेत्युत्प्रेक्षा । मधुमतां मधुकराणां सम्बन्धिनी पुलवलीषु लताविशेषेषु

लघीयलदनं स्थितिर्येषां ताः लतवल्लीलया आवलिः पंक्तिः रसकलां रसेन मध्वास्वादेन कला मधुरम्। ध्वनौ तु मधुरास्फुटे कल इत्यमरः। गिरं वाचमसकृदुच्चैरवपत्। मधुमद हेतुकस्य मधुकरालापस्य पल्लवलीलया जनितविस्मयहेतुकत्वमुत्प्रेक्षत इति गुणहेतूत्प्रेक्षा। द्रुतविलम्बितं वृत्तं ॥ ७८ ॥ ************************* ॥

॥ कुर्वन्तमिति ॥ इतीत्थं पुष्पैरेवातिभरेण महाभरेण नतैर्नम्रैरगैर्वृक्षैः नगान्वृक्षानवा गम्बलीन्यवाचो नम्रान् अचेरवपूर्वाद्दृत्विगित्यादिना क्विन्प्रत्ययः कुर्वन्तमलिनां गानवाचो गीतध्वनेः झङ्कारस्य च नविराममविराममसमाप्तिं कुर्वन्तं समस्तं ऋतुं सर्वर्तून् अनुसानु सानुषु सानुष्वित्यर्थः विभक्त्यर्थेऽव्ययीभावः विभ्रति विभ्राणे इह गिरौ विहर्तुं श्रीमान्हरिः मे

कुर्वन्तमित्यतिभरेण नगानवाचः पुष्पैर्विराममलिनां च न गानवाचः। श्रीमान्समस्तमनुसानु गिरौ विहर्तुं बिभ्रत्यचोदि स मयूरगिरा विहर्तुम्॥ ७९॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये ऋतुवर्णनं नाम षष्ठः सर्गः ॥ ६

यूरगिरा केकया अचोदि प्रेरितः भगवन्निह विहर ऋतुगणमनुगृहाणेति प्रार्थित इवेत्युत्प्रे क्षा व्यञ्जकाप्रयोगाद्गम्या। वृत्तमुक्तम्॥ ७९ ॥ *************** ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघव्याख्याने सर्वङ्कषाख्ये षष्ठः सर्गः ॥ ६ ॥ ************************* ॥



॥ इत्थं ऋतुगणप्रादुर्भावमभिधायतत्कालतया भगवतः सानुचरस्य विहारलीलावर्णनमा रभते ॥ अनुगिरमिति । अथ ऋतुप्रादुर्भावानन्तरं स हरिः । गिराविति अनुगिरं विभक्त्यर्थेऽव्ययीभावः । गिरेश्चसेनकस्येति समासान्तः । ऋतुभिर्वितायमानां वितन्यमानां तनोतेः कर्मणि लटः शानजादेशः । तनोतेर्यकीति वैभाषिक आकारादेशः । वनान्तलक्ष्मीं विलोकयितुं निरगमत् निर्गतः । पुषादीत्यादिना गमेर्लुङि च्लेरङादेशः । ऋतुगणभक्तिं स्वीकर्तुमिति भावः । तथा हि । अभिराद्धुमाराधयितुमादृतानामादरं कुर्वतामास्थावतामित्यर्थः । कर्तरि क्तः । प्रयासः सेवायासः महत्सु विषये निष्फलो न भवति न हि भक्तानुकम्पिनो महात्मानस्सेवां व्यर्थयन्तीति भावः । अतो हरेरृतुगणानुग्रहणार्थो निर्गमो युक्त इति सामान्ये

अनुगिरमृतुभिर्वितायमानामथ स विलोकयितुं वनान्तलक्ष्मीम् । निरगमदभिराद्धुमादृतानां भवति महत्सु न निष्फलः प्रयासः ॥ १ ॥

दधति सुमनसो वनानि वह्वीर्युवतियुता यदवः प्रयातुमीषुः । मनसिशयमहास्त्रमन्यथामी न कुसुमपञ्चकमप्यलं विसोढुम् ॥ २ ॥ ❋

न विशेषसमर्थनरूपोऽर्थान्तरन्यासः । सामान्यविशेषणकार्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यास इति सर्वस्वसूत्रम् । अत्र सर्गे पुष्पिताग्रावृत्तं । पुष्पिताग्रा नौ नज्रौ जोगिति च्छन्दसः ॥ १ ॥ ****************** ॥

॥ दधतीति ॥ यदवो यादवाः व्याख्यातं चैतत् । वह्वीर्बह्वीः बहुविधा इत्यर्थः बह्वादिभ्यश्चेति विकल्पात् ङीकारः । सुमनसः पुष्पाणि स्त्रियः सुमनसः पुष्पमित्यमरः । दधति दधन्ति वा नपुंसकस्येत्यभ्यस्तात् नुर्वैकल्पिको नुम्प्रतिषेधः । वनानि युवतियुताः स्त्रीसमेताः एव प्रयातुमीषुः इच्छन्ति स्म । अत्र हेतुमाह । अन्यथा युवतिजनाभावे अमी यदवो मनसिशयेन इति मनसि शयः कामः अधिकरणे शेतेरित्यच्प्रत्ययः । हलदन्तात्सप्तम्याः संज्ञायामित्यलुक् ।

मस्यमहाद्भूतं कुसुमपञ्चकमपिपञ्चापिकुसुमानीत्यर्थः । पञ्चानांसङ्घः पञ्चकं । सं ख्यायासंज्ञासङ्घसूत्राध्ययनेष्विति कप्रत्ययः विसोढुं नालं नशक्ताः स्मरस्य मनसस्तान्यो तत्रारविन्दादिपञ्चकस्य सत्त्वमवध्यमाणस्वित्वादिति भावः । अतोयुवतिभिः सह प्रमाणंयु क्तमिति वाक्यार्थेन वाक्यार्थसमर्थनाद्वाक्यार्थसमर्थनरूपकाव्यलिङ्गमलङ्कारः । अर विन्दमशोकञ्च चूतञ्च नवमल्लिका । नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायकाः ॥ २ ॥

॥ अवसरमिति ॥ तमवसरं सहजिगमिषाकालं अधिगम्य हरन्त्यो हृदयङ्गमाः भव न्त्यः सर्वैर्हि प्रार्थ्यमानमेव प्रियम्भवतीत्यर्थः । यत्नेनकृतं नभवतीत्ययत्नकृतं तथा युज्ज्वलं स्व रूपंयासान्ताः स्वभावसुन्दरमूर्त्तय इत्यर्थः । अङ्गनास्तदानीं तस्मिन्नवसरे अवनिषुपदं न्यदधत निहितवत्यः पादचारेणैव चेलुरित्यर्थः । दधातेर्लुङ्यात्मनेपदे धनतइ तिभ्रंश्या

अवसरमधिगम्य तं हरन्त्यो हृदयमयत्नकृतोज्ज्वलस्वरूपाः । अ
वनिषु पदमङ्गनास्तदानीं न्यदधत विभ्रमसम्पदोऽङ्गनासु ॥ ३ ॥

दादेशः अङ्गनासु विभ्रमसम्पदो विलाससम्पदः पदं न्यदधत । तदानीं विलासाः प्रवृत्ता इ त्यर्थः । अत्राङ्गनानां विलाससम्पदां चोभयेषामपि प्रकृतानामेव हृदयहरणादिना वर्ण नासाम्येनौपम्यस्य गम्यमानत्वात्केवलप्रकृतविषयतुल्ययोगितालङ्कारः । वाच्यभेदेनाप्य ङ्गनाविलाससम्पदामुत्तरोत्तरस्यपूर्वविशेषकत्वावगमादेकावलीभेदो व्यज्यत इत्यलङ्कारे णालङ्कारध्वनिः ॥ ३ ॥ ************************** ॥

॥ न्यदधत विभ्रमसम्पदोऽङ्गनास्वित्युक्तं तान्येव प्रपञ्चयति ॥ नखेति । ललितगतेषुम न्दगमनेषु नखानां रुचिभिः प्रभाभिः रचिताइन्द्रचापलेखा यस्मिन्कर्मणि तद्यथा तथा ग तागतं यातायातः विप्रतिषिद्धं चानधिकरणवाचीति विकल्पादेकवद्भावः । दधानाः तरुण्यः भुजलतिकाः मुखरा कृताइतिमुखरिताः ध्वनितावलया यस्मिन्कर्मणि तद्यथा तथा

। कटके वलयोऽस्त्रियामित्यमरः । पृथौ नितम्बे मुकुरस्थलं चस्थलात् । अत्र नखरुचीत्यादिना गुणा उक्ताः । गतागतं दधाना अस्खलदिति चेष्टा मुखरितवलयमिति नर्तकीतिः । नटस्यादेरिविशेषाः चतुष्कोद्दीपनक्रमइति । तत्रालम्बनं रसस्य तमत्यादिकारणं नायिकानायकादि । तद्गुणोरूपलावण्यादि तच्चेष्टाभावहावादिः अन्यत्तदनुगमम् । एवमुत्तरत्रापि ॥ ४ ॥ ************************** ॥

॥ अतिशयेति ॥ अतिशयेन परिणाहवान् नितविशालइत्यर्थः । अन्यथानञ्जघनस्थापात्रेरितिभावः । परिणाहो विशालतेत्यमरः । उपसर्गात्समासेपिणोपदेशस्येतिणत्वम् ।

नखरुचिरचितेन्द्रचापलेखं ललितगतेषु गतागतं दधाना । मुखरितवलयं पृथौ नितम्बे भुजलतिका मुकुरस्थलं नरुण्याः ॥ ४ ॥ अतिशयपरिणाहवान् वितेने बहुतरमर्पितरत्नकिंकिणीकः । अलघुनि जघनस्थलेऽपरस्या ध्वनिमधिकं कलमेखलाकलापः ॥ ५ ॥ गुरुनिविडनितम्बबिम्बभारक्रमणनिपीडितमङ्गनाजनस्य । चरणयुगमसुस्रवत्पदेषु स्वरसमसक्तमलक्तकच्छलेन ॥ ६ ॥ ****

बहुतरमर्पितानां रत्नानां किंकिणीयस्मिन्सः नद्यृतश्चेतिकप्प्रत्ययः । कलो मधुरराव मेखलाकलापोऽपरस्याः स्त्रियः अलघुनि जघनस्थलेऽधिकं ध्वनिं वितेने । तद्लंकारिणं ॥ ५ ॥ ************************** ॥

॥ गुर्विति ॥ गुरु गुरुत्वगुणयुक्तं निविडं दृढं च यन्नितम्बबिम्बं तदेव भारस्तस्याः क्रमणेनाधिष्ठानेन पीडितं निष्पीडितं अङ्गनाजनस्य चरणयुगं कर्तृ पदेषु पादन्यासस्थानेषु अलक्तकच्छलेनलाक्षारसमिषेण स्वरसं स्वद्रवमेव । गुणोरागेद्रवेरसइत्यमरः । असक्तमविच्छिन्नं यथातथा असुस्रवत् स्रवतिस्म । स्रवतेः क्षरणार्थात् ण्यन्ताल्लुङि णिश्रीत्यादिना

र्लिङ्धातोर्ह्नवङादेशः । इंवद्व्यकर्तृकएवायमकर्मकः अन्यकर्तृकत्वेतुइंवद्व्यकर्मकत्व यनिरत्रसकर्मकः । अत्रतकच्छलेनेत्यत्रत्कापह्नवेन त्वरसत्वारोपाच्छलादिशब्दैरसत्यत्वप्रतिपादनरूपोऽपह्नवालङ्कारः ॥ ६ ॥ ********************* ॥

॥ अथकस्याश्चित्सख्याःकुपितनायिकानुनयवचनंपञ्चभिःकुलकेनाह ॥ नवेत्यादि । नतांतत्सखीस्वपदिनवसमीपमहमानयेआनयिष्यामिवर्त्तमानसामीप्येवर्त्तमानप्रत्ययःकर्त्तुरभिप्रायेआत्मनेपदं । इतिमयातस्याग्रेऽभ्यधायिअभिहितं । दधातेःकर्मणिलुङ्आतोयुक्चिण्कृतोरितियुगागमः । हेगुणगौरिगुणैःसौभाग्यदाक्षिण्यादिभिर्गौरिपार्वतीनिरूपकं । अतिरभसेनातित्वरयाकृताअलघुर्महतीप्रतिज्ञात्वदानयनार्थायस्यातां मामभूतगि

नवंसपदिसमीपमानयेतामहमितितस्यमयाग्रतोऽभ्यधायि । अतिरभसकृताऽलघुप्रतिज्ञामनृतगिरंगुणगौरिमाकृथामाम् ॥ ७ ॥ नचसुतनुनवेद्मियन्महीयानसुनिरसस्तवनिश्चयःपरेण । वितथयतिनजातुमद्वचोसाविति चतथाऽपिसखीषुमेऽभिमानः ॥ ८ ॥

रमसत्यवाचंमाकृथाःमाकार्षीःमद्वचनंसर्वथाकर्त्तव्यमित्यर्थः । करोतेःलुङिथास्तनमाङ्योगेइत्यडागमप्रतिषेधः ॥ ७ ॥ ********************* ॥

॥ ननुमत्प्रतिज्ञापिदुःख्याज्येतिविप्रतिषेधमाशङ्क्याह ॥ नचेति । हेसुतनुसभाङ्गिदीर्घान्तरपदात्समुद्धिःअन्यथागुणःस्यात् । अहंनवेद्मीतिनकिन्तुवेद्म्येवेत्यर्थः । किम्बेत्सीत्यत आह । महीयान्महत्तरस्तवनिश्चयःत्वदनैक्यप्रतिज्ञापरेणजनान्तरेणासुनिरसःसुखमोच्यः । अस्यतेःखल्प्रत्ययः । सनभवतीत्यसुनिरसइतियन्तत्तदन्यथाभ्यं । उद्देश्येनविधेयाक्षेपाद्यच्छदस्योत्तरवाक्यस्थत्वात्पूर्ववाक्येनच्छदप्रयोगइतिनिबन्धः तथापिविदितत्वेपिअसौमत्सखीजातुकदाचिदपिमद्वचोन वितथयतिनान्यथाकरोतीतिसखीषु

अथैमेऽभिमानःस्वप्रतिज्ञाभङ्गेपिमय्यतिज्ञामेवपालयिष्यसीत्यहङ्कारन्निः शङ्कस्वप्रतिज्ञानमित्यर्थः ॥ ८ ॥ **** ***************************** ॥

॥ सततमिति ॥ भवतीन्त्वामनानयन्त्याआनयितुमशक्नुवत्याइत्यर्थः । मयासततंसदाते नवकर्मणिषष्ठी । अनभिभाषणमसंभाषणंपरिपणितं । भातीतिभवति । भातेर्डवतुरित्यौणादिकोडवतुप्रत्ययः । उगितश्चेतिङीप्तस्याःसंबुद्धिर्हेभवति सुभगेत्वयितदितितदसंभाषणमस्तुइतिविरोधनिश्चितायांनिश्चितविरोधायांसत्यां । वाहिताग्न्यादिष्विति विकल्पान्निष्ठायाःपरनिपातः । असुहृज्जनोविपक्षवर्गःसकामःफलितमनोरथोभवतुभवेनप्राप्न कालेलोट् । अस्मद्विरोधकांक्षिणामयमानन्दकालःप्राप्तइत्यर्थः ॥ ९ ॥ *** ॥

सततमनभिभाषणंमयातेपरिपणितंभवतीमनानयन्त्या । त्वयितदितिविरोधनिश्चितायांभवतिभवत्वसुहृज्जनःसकामः ॥ ९ ॥ गतधृतिरवलम्बितुंवतासून्ननलमनालपनाद्हंभवत्याः । प्रणयिनियदिनप्रसादबुद्धिर्भवममानिनिजीवितेदयालुः ॥ १० ॥ *

॥ नकेवलमावयोर्विरोधःप्राणहानिरपिममस्यादित्याह ॥ गतेति । गतधृतिरधीरअहं भवत्यास्तवानालपनादसंभाषणादालपनंविहायेत्यर्थः । ल्यब्लोपेपञ्चमी असून्प्राणानवलम्बितुन्धारयितुमनलमशक्ता । अलम्भूषणपर्याप्तिशक्तिवारणवाचकमित्यमरः । बतेतिखेदे । अतएवहेमानिनिप्रणयनिप्रियेप्रसादबुद्धिरनुग्रहबुद्धिर्नयदिनास्तिचेत्तर्थापिममजीवितेदयालुर्भव । स्पृहीत्यादिनाआलुचप्रत्ययः । सधूर्तोपिमत्प्राणत्राणार्थमनुग्राह्यइतिभावः ॥ १० ॥ ************************ ॥

॥ प्रियमिति ॥ इतोत्थंनितान्तमागसोऽन्यासङ्गापराधस्यस्मरणेनसरोषेअतएवकषायेलोहितेहलेकषायितेआयतेचाक्षिणीयस्याःसानयोक्ता । निर्यासेचकषायोथसौरभेलोहि

त्यर्थदिति विग्रहः । वनितानायिका चरणगतायाः पूर्वोक्तवाक्यानि प्रणतयाः सख्या वचसो नुरोधादनुसरणात्किल । किलेत्यपरमार्थे । वस्तुतस्तु अनुरागादेवेति भावः । प्रियं कथमपि कथंचिदनुकूलयाञ्चकार अभिमुखीचकार । अनुजग्राहेत्यर्थः । एषा खण्डिता नायिका । ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिते ति दशरूपकलक्षणात् । अत एव कषिनाचागःस्मरणसरोषकषायिताक्षीत्युक्तं । एषा चासंभाषणविनाखेदाश्रुनिश्वासाद्यनुभाववती ॥ ११ ॥ ****************************** ॥

॥ अथ काचित्सखी कश्चिदग्रे शीघ्रगामिनं युग्मेनाह ॥ द्रुतेति । हे वयस्य सखे इतीत्थं द्रुतपदं शीघ्रपदक्रमं यथा तथा मा यासीः मागमः । यातेर्लुङि नमाङ्योगादडभावः प्रतिषेधः । अ

प्रियमितिवनितानितान्तमागःस्मरणसरोषकषायिता
यताक्षी । चरणगतसखीवचोऽनुरोधात्किल कथमप्य
नुकूलयाञ्चकार ॥ ११ ॥ द्रुतपदमिति मा वयस्य
यासीर्न नु सुतनुं परिपालयानुयान्तीम् । न हि न वि
दितखेदमेतदीयस्तनजघनोद्वहने तवापि चेतः ॥ १२ ॥

नुयान्तीमनुगच्छन्तीं सुतनुं सुभाङ्गीं प्रियामनुपालय प्रतीक्षस्व असावपि शीघ्रमायातु । तत्राह । नहीति । तव चेतोपि एतदीयस्तनजघनोद्वहने विदितखेदमनुभूतखेदं न भवतीति न किन्तु वेत्त्येवेत्यर्थः । अतः कथं शीघ्रमायास्यतीति भावः । संभाव्य निषेधनिवर्त्तने द्वौ प्रतिषेधाविति वामनः ॥ १२ ॥ ****************************** ॥

॥ इतीति ॥ सखीजनेन इति वदति सति अपरः कश्चिद्दयितनमां अनुरागात्स्नेहाच्चिरं प्रतीक्ष्य तदनुगमवशात् । तस्याः प्रियायाः कर्त्र्याः अनुगमः पश्चाद्गमनं तस्य वशादनुसाराद्वनितिमिमानं मानं कुर्वाणइवेत्युत्प्रेक्षा । माङ्ग्लाच्छदः कर्त्तरि शानजादेशः । स्त्राविर्तिर्हि भावः

अनायतान्यननरालानिपदानिन्यधितनिहितवान्। धाञ्जोलुङितङ्स्थाध्वोरिच्चेतीका रःसिचःकित्वान्नगुणःह्रस्वादङ्गादितिसकारलोपः। एषा दनायिकास्वाधीनपतिका। स्वाधीनपतिकास्तानुयानमुच्चतिवल्लभमितिलक्षणान्दृष्टा चेयं॥ १२ ॥ **** ॥

॥ अथकाचित्पुरःप्रयानप्रियमेलनायशीघ्रानुधावनं...र्थमानासखीमाह॥ यदिति। हेसखिमयिलघिमानमागतायांस्वयङ्गमनेनलाघवं प्राप्तायान्तवधृतिरस्तियदिसन्तोषोस्ति चेत्। धृतिःसन्तोषधैर्ययोरित्यमरः। इयमेतदवस्थैवतम्...स्मिन्क्षणएवगतास्मि इतिवदन्तीतिशेषः। इतिनागम्यमानार्थत्वादप्रयोगःअन्यथापौनरुक्त्यादित्यालङ्कारिकाः। सख्यास्तहकोपपदेनकोपव्याजेनवस्तुनस्तुरागादेवेतिभावः। व्याजोपदेशोलक्ष्य

इतिवदतिसखीजनेनुरागाद्दयिततमामपरस्थिरंप्रतीक्ष्य। तदनुग
मवशादनायतानिन्यधितमिमानइवावनिम्पदानि॥ १३॥ यदि
मयिलघिमानमागतायान्तवधृतिरस्तिगतास्मिसम्प्रतीयम्। अनिभृ
तपदपातमापपातप्रियमितिकोपपदेनकापिसख्या ॥ १४ ॥ *

श्चनिमित्तंध्यञ्जनम्पदमित्यमरः। काचिन्नायिकाद्रुततराःशीघ्रतरापदपाताःपादन्यासा यस्मिन्कर्मणितद्यथानथाप्रियम्वल्लभमापपातअनुधावतिस्म । एषा च स्वयंप्रवृत्तास्व लाघवशंकितयापूर्वंनिर्वासितप्रिया। अयेदानींस्वयंप्रवृत्तेःपश्चात्तप्ताचेतिगम्यते। अ तःकलहान्तरिता। कोपात्कान्तंपरुषंत्यपश्चात्तापसमन्विते तिलक्षणात्॥ १४॥ * ॥

॥ अविरलेति ॥ सहव्रजन्त्यापार्श्वमाश्लिष्यगच्छन्त्याइत्यर्थः। तरुण्याःसम्बन्धिअवि रलपुलकःप्रियाङ्गसङ्गात्सान्द्ररोमाञ्चःएकतरोऽन्यतरःद्वयोरन्यःस्तनितिदृष्टइतिभावः। एकाच्प्राचामितिद्वयोरेकस्यनिर्द्धारणेतरच्प्रत्ययः। स्तनःप्रियस्यवक्षस्तटमिवतस्य भूःप्रदेशस्तस्यांवक्षस्तटभुविप्रतिपदघट्टनविघट्टितःसंयुक्तवियुक्तःपतितोत्पतितःसन्निति

यावत् विशेषणयोरपिमिथोगुणप्रधानाभावविवक्षयां विशेषणं विशेष्येणबहुलमितिसमासः । कन्दुकविभ्रमङ्केन्दुकशोभाम् । गेन्दुकःकन्दुकइत्यमरः । बभारअन्यविभ्रमस्यान्यत्र सम्बन्धायोगात्सादृश्याक्षेपेनिदर्शनाएषा चप्रियपार्श्वगामिनीइतः प्रभृतिमदनरसेत्यतः प्राग्वक्ष्यमाणाःषड्नायिकाः स्वाधीनपतिकाःहृष्टाप्रगल्भाश्चेत्यनुसन्धेयम् ॥ १५ ॥ * ॥ अथापरस्या अपरङ्गतिविशेषंत्रिभिःकुलकेनाह ॥ अशिथिलमित्यादि । अपरास्त्री दृढंपरिरब्धोगृहीतोबृहद्वहिस्तो येनतेनहृषितान्युदञ्चितानितनूरुहाणिरोमाणियस्य तेनपुलकितेनेत्यर्थः । क्विबन्तोत्तरपदोबहुव्रीहिःहृषेर्लोमस्विन्तीडागमः । भुजेनभर्तुर्वा

अविरलपुलकःसहव्रजन्त्याःप्रतिपदमेकतरस्तनस्तरुण्याः । घटित विघटितःप्रियस्यवक्षस्तटभुविकन्दुकविभ्रमंबभार ॥ १५ ॥ अशि थिलमपरावधूर्व्यकण्ठेदृढपरिरब्धबृहद्वहिस्तनेन । हृषिततनुरु हाभुजेनभर्तुर्मृदममृदुव्यतिविद्धमेकबाहुम् ॥ १६ ॥ मुहुरस मममाघ्नतीनितान्तं प्रणदितकाञ्चिनितम्बमण्डलेन । विषमितपृथु हारयष्टितिर्यक्कुचमितरातदुरःस्थलेनिपीड्य ॥ १७ ॥ **

भवाहुनाअमृदुगाढंयथातथाव्यतिविद्धंव्यतिषंजितं मृदुङ्कोमलमेकबाहुन्निजदक्षिणबा हुम्भर्तुःकण्ठेअशिथिलंदृढमवसज्यासज्यजगामेतिभाविनासम्बध्यते ॥ १६ ॥ ** ॥ मुहुरिति ॥ पुनःकिंकुर्वाणानितम्बमण्डलेनकरणेनतितान्तमतिशयेनप्रणदितापकर्षेण नदन्तीकाञ्चीयस्मिन्कर्मणितद्यथातथा । उपसर्गादसमासेपिणोपदेशस्येतिणत्वम् । मुहुरसकृदसममघ्राणेशमाघ्नतीताडयन्ती । हनेराङ्पूर्वाल्लटःशत्रादेशेङीप्स्कर्मकत्वान्न आङोयमहनइत्यात्मनेपदम् । विषमिताविषमीकृतापृथुहारयष्टिर्यस्मिन्कर्मणितद्य थातथाइतरांपूर्वश्लोकोक्तांबहिस्तनादन्यन्दक्षिणमित्यर्थः । कुचनास्यभर्तुरुरःस्थलेति

थेऽन्निपीड्यपूर्ववत्तन्वन्धः ॥ १७ ॥ ********************** ॥

॥ गुरुतरेति ॥ पुनर्गुरुतरः सान्द्रतरः कलो मधुरस्वनः पुरस्यानुनादो ध्वनिर्यस्मिन् कर्म णितद्यथा तथा सललितं सलीलं नर्त्तितं व्यापारितं वामं सव्यम्पादपद्मं यस्याः साइतरद्दक्षि णम्पदमनतिलोलमभर्तृचरणस्खलनादनतिचलं यथा तथा आदधाना निःक्षिपन्ती सती म न्थेनमन्थरमलसञ्जगाम। एषापार्श्वगामिनी ॥ १८ ॥ ******** ॥

॥ अथान्यासामप्येकैकेनगतिविशेषमाह । लघ्वित्यादि श्लोकचतुष्टयेन । अन्या अबला लघुप्रियस्यांसपीठेद्वयोर्न्निहितावुभौ पाणिपल्लवौ यस्याः सा सती । उभादु दात्तो नित्यमिति ग्रहणस्येदम्प्रयोजनं वृत्तिविषये उभशब्दस्य प्रयोगो माभूत् उभशब्दस्यैवय

गुरुतरकलनूपुरानुनादं सललितनर्त्तितवामपादपद्मा । इतरदनति लोलमादधाना पदमथमन्मथमन्थरं जगाम ॥ १८ ॥ विशेषकं ॥ ल घुललितपदन्तदंसपीठद्वयनिहितोभयपाणिपल्लवान्या । सकठिन कुचचूचुकप्रणोदं प्रियमबलासविलासमन्वियाय ॥ १९ ॥ *·*·*

थास्यादित्युभयत्र इत्यादि भवतीति । लघु नीद्रुतं ललितं च पदं यस्मिन् कर्मणि तद्यथा तथा कठिनाभ्यां कुचचूचुकाभ्यां स्तनाग्राभ्यां यः प्रणोदो निपीडनं तेन सह यथा तथा । चूचुकन्तु कुचाग्रं स्यादित्यमरः । तेन सहेत्यादिना समासे वोपसर्जनस्येति सहशब्दस्य सभावः । णोपदे शत्वात्प्रणोद इति णत्वं । सविलासं च प्रियमन्वियायानुजगाम । एषा पृष्ठगामिनी ॥ १९

॥ जघनमिति ॥ काचित्स्त्री अलघु गुरु पीवरौ पीनौ चोरू यस्य तत् उरु महान्निविरीसं निबिडः । निविडं निबिरीसं च घनं गाढं प्रक्षुचनेइति वैजयन्ती । निर्विज्बिरीसचाविति नि शब्दाद्बिरीसच्प्रत्ययः । स च योनितम्बः कटिपश्चाद्भागः । पश्चान्नितम्बः स्त्रीकट्याः क्लीवे तु जघनं पुर इत्यमरः । स एव भारस्तेन खिन्न इति तयोक्ती । आभीक्ष्ण्योर्णिनिः । जघनं क

टिपुरोभागंदयिततमस्यशिरोधरायांग्रीवायामवलम्बिनोलम्बमानयोः स्वभुजलतयोर्विभवे नसामर्थ्येनकृच्छ्रादूहेउवाह । वहेःस्वरितेत्वात्कर्त्रभिप्रायआत्मनेपदं । इयञ्चपृष्ठगा मिनीप्रियकण्ठावलम्बा ॥ २० ॥ ************************** ॥

॥ अनुवपुरिति ॥ अन्यास्त्रीवपुषःपश्चादनुवपुःस्त्रीपृष्ठभागेअव्ययंविभक्तीत्यादिनाप श्चादर्थेऽव्ययीभावःबाहुमूलयोःस्त्रीकक्षयोःप्रहितावधःप्रसारितौभुजौताभ्यांआकलित स्तेनगृहीतस्तनेनकपोलेनिहितदशनवाससान्यस्ताधरेणकिंचिदावृत्तमुख्याःसत्याःक पोलंचुम्बतेत्यर्थः । अपरेणकामिनाविषमंस्त्रियाङ्घ्रिसंघर्षात्स्त्रिष्टंवितीर्णपदंन्यस्तांघ्रि

जघनमलघुपीवरोरुकृच्छ्रादुरुनिबिरीसनितम्बभारखेदि । दयितत
मशिरोधरावलम्बिस्वभुजलताविभवेनकाचिदूहे ॥ २० ॥ अनुव
पुरपरेणबाहुमूलप्रहितभुजाकलितस्तनेननिन्ये । निहितदशन
वाससाकपोलेविषमवितीर्णपदंबलादिवाऽन्या ॥ २१ ॥ अनुव
नमसितभ्रुवःसखीभिःसहपदवीमपरःपुरोगतायाः । उरसिसरसराग
पादलेखाप्रतिमतयाऽनुययावसंशयानः ॥ २२ ॥ ****

यथातथाबलादिवनिन्येनीताआरोप्यनीयमानेवगमयाञ्चक्रइत्यर्थः । एषापुरोगामिनी ॥ २१ ॥ ****************************** ॥

॥ अनुवनमिति ॥ अपरःकामीअनुवनंवनंप्रतिसखीभिःसहपुरोगतायाःअसितभ्रुवःस्व कान्तायाः पदवीमुरसिवक्षसिसरसआर्द्रःरागोलाक्षारंजनंयस्यतस्यपादस्यचारेखाविन्या सःसाप्रतिमाउपमानंयस्याःसातत्प्रतिमातस्यभावस्तत्तानयातत्सदृशतयेत्यर्थः । असंश यार्थोऽसंदिहानःशीङोलट्कर्त्तरिशानजादेशः । अनुययौअत्रपादरेखाप्रतिमतयेति सादृश्यवस्तुनाऽडरनकालीनं पादताडनं वस्तुसरागपदार्थमहिम्नाप्रतीयतइतिपदगतः

खनःसिद्धार्थएक्तिमूलोवलुध्वनिःसंलक्ष्यक्रमध्वनेर्भेदः ॥ २२ ॥ ******* ॥

॥ मदनेति ॥ मदनस्यरसःशृङ्गारःअन्यत्ररसेजलंतस्यमहौघेनमहापूरेणपूर्णानाभय
एवह्रदास्तेषांपरिवाहाःहृताः परिवाहितास्तेच्छासास्ताः रोमराजयेयासांताः । ज
लोच्छासाःपरीवाहाइत्यमरः । सरित्जलानिह्रदान्नापूर्यपरितःउच्छसन्तीतिप्रसिद्धिः ।
सविभ्रमैःसविलासैःप्रयातैःप्रकृष्टगमनैःप्रणादिताःनिक्कनाःयेहंसकाःपादकटकाः । हं
सकाःपादकटकाइत्यमरः । अन्यत्रहंसाएवहंसकाःमरालास्तएवभूषणानियासांताःताः
स्त्रियःसरितइवविरेजुः । मदनरसपूर्णत्वनेननाभीनांनदद्धोधकत्वंव्यज्यते । परिवाहि
तरोमराजयइतिरोमराजीनांपरिवाहत्वरूपणान्नाभयएवह्रदाइतिरूपकाश्रयणान्ताः स

मदनरसमहौघपूर्णनाभीह्रदपरिवाहितरोमराजयस्ताः । सरितइव
सविभ्रमप्रयातप्रणादितहंसकभूषणाविरेजुः ॥ २३ ॥ श्रुतिपथ
मधुराणिसारसानामनुनदिशुश्रुविरेरुतानिताभिः । विदधतिजन
तामनःशरव्यव्यधपटुमन्मथचापनादशङ्काम् ॥ २४ ॥ ***

रितएवेतिश्लिष्टविशेषणोयमुपमाश्लेषएवेत्यन्ये ॥ २३ ॥ ************ ॥
॥ श्रुतिपथेति ॥ अनुनदिनदीनांसमीपेसमीपार्थेऽव्ययीभावः । अव्ययीभावश्चेतिनपुं
सकत्वेह्रस्वत्वं । ताभिःस्त्रीभिःजनानांसमूहोजनता । ग्रामजनेत्यादिनासामूहिकस्तलप्र
त्ययः । तस्याःमनांसिएवशरव्यंलक्ष्यं । लक्ष्यंशरव्यंचेत्यमरः । तस्यव्यधःवेधः । व्यधन्यो
रनुपसर्गेइत्यप्प्रत्ययः । समर्थोयोमन्मथचापनादःसइतिशङ्कांभ्रमंविदधतिविदधाना
नि । नाभ्यस्ताच्छतुरितिनुम्प्रतिषेधः । श्रुतिपथमधुराणिश्राव्याणीत्यर्थः ।
सारसानांरुतानिशुश्रुविरेश्रुतानि । सारसरुतश्रवणान्मन्मथोद्दीपनमासीदित्यर्थः । अ
त्रसारसरुतेमन्मथचापनादभ्रमाद्भ्रान्तिमदलङ्कारः । कविसंमतसादृश्याद्विषयोपिहि

त्मनि । आरोप्यमाणानुभवोयत्रसभ्रान्तिमान्मतः इतिलक्षणात् ॥ २४ ॥ *** ॥

॥ मधुमेति ॥ उत्कण्ठितान्युन्मनांसिभ्रमरकुलानिमधुमथनस्यहरेर्वधूरावाहयन्त्याकारयन्ती वेत्युत्प्रेक्षा । हूतिराकारणाह्वानमित्यमरः । शप्श्यनोर्नित्यमितिह्वयतेःशतुर्नुमागमः जगुरितियत् । गायतेर्लिट् । वनानामावलिर्नूतनपल्लवाएवाङ्गुल्यः इत्येकदेशविवर्तिसाव यवरूपकं । अस्यैववनावलौनर्त्तकीत्वरूपगमकत्वादिति । ताभिस्तदभिनयंव्यञ्जकचे ष्टामतनुतेव । व्यंजकाभिनयौसमावित्यमरः । अङ्गैरेवन्वयेन्नौतंदर्शनेनार्थंप्रदर्शयेदिति वचनात् । गीतार्थस्याह्वानस्यव्यञ्जनमंगुलिभिराकार्यैदिवेतिक्रियास्वरूपोत्प्रेक्षा । पू र्वोक्तरूपकानुप्राणितासाह्वानोत्प्रेक्षासापेक्षेतिसजातीयसङ्करोपीति ॥ २५ ॥ *** ॥

मधुमथनवधूरिवाह्वयन्तिभ्रमरकुलानिजगुर्यदुत्सुकानि । तदभिन यमिवावलिर्वनानामतनुतनूतनपल्लवाङ्गुलीभिः ॥ २५ ॥ असक लकलिकाकुलीकृतालिस्खलनविकीर्णविकासिकेसराणाम् । मरुदव निरुहांरजोवधूभ्यःसमुपहरन्विचकारकोरकाणि ॥ २६ ॥ *

॥ असकलेति ॥ मरुद्वनानिलःअसकलाअसमग्राःअर्द्धविकचाइत्यर्थः । ताभिःकलि काभिः कोरकैराकुलीकृतानांसंक्षोभितानामलिनां स्खलनेनविघट्टनेनविकीर्णाविक्षिप्ताः विकासिनःकेसराः किञ्जल्कायेषान्तेषामवनिरुहांकिप् रजःपरागंवधूभ्यःसमुपहरन्प्रय च्छन्नयथाकश्चित्कामीतिभावः । धनमर्जयन्वसतीतिवत्लक्षणहेत्वोःक्रियायाइति हेत्वर्थेशतृप्रत्ययः । कोरकानिकुड्मलानि । कलिकाकोरकःपुमानित्यमरः । कोषेपुं स्त्वाभिधानंप्रायिकाभिप्रायं । कोरकंकुड्मलेपिस्यात्ककोलकमृणालयोरितिविश्वप्रका शेनपुंसकत्वस्याभिधानात् । विचकारविकासयामासेत्यर्थः विपूर्वात्किरतेःकरोतेर्वा लिट् । अत्रकोरकविकासकरणस्यसमुपहरन्निति हेत्वर्थेनवधूसम्प्रदानपरागोपहरण

र्थत्वापगमात्फलोत्प्रेक्षाव्यंजकप्रयोगाद्गम्या ॥ २६ ॥ ************** ॥

॥ उपवनेति ॥ वनेउपवनं विभक्त्यर्थेऽव्ययीभावः । तत्र यः पवनस्तस्यानुपातेनानुसारे णदक्षैर्विचक्षणैरलिभिर्यद्यतः कारणात् भङ्गनाजनस्य सम्बन्धी परिमलो गन्धविशेषः । विमर्द्दोत्थे परिमलो गन्धे जनमनोहरे इत्यमरः । स एव विषयभोग्योर्थः । रूपं स्पर्शो गन्धरसश ब्दाश्चविषयाअमी इति । अलभिलब्धः लभेः कर्मणि लुङ् विभाषा चिण्णमुलोरिति विकल्पा न्नुम्भावः । अतउपधाया इति वृद्धिः तस्माद्धतानां महतामनुगमने पश्चाद्गमने अनुवृ त्तौ च सम्पदोऽग्रतः स्थिता इत्यग्रतः स्थाः पुरोवर्त्तिन्यः खलु । सुपिस्थ इति कप्रत्ययः । अ चानुगमनयोर्द्वयोरभेदाध्यवसायात् सेवोत्थापितातिशयोक्त्यनुप्राणितोयमर्थान्तरन्या

उपवनपवनानुपातदक्षैरलिभिरलम्भियदङ्गनागणस्य । परिमलवि षयस्तदुन्नतानामनुगमनेखलुसम्पदोऽग्रतःस्थाः ॥ २७ ॥ रथ चरणधराङ्गनाकराब्जव्यतिकरसम्पदुपात्तसौमनस्याः । जगतिसुम नसस्तदादिनूनंदधतिपरिस्फुटमर्थतोऽभिधानम् ॥ २८ ॥*

***************** ॥

सः सामान्येन विशेषसमर्थनरूपः ॥ २७ ॥ *****************

॥ रथेति ॥ सुमनसः पुष्पाणि रथचरणं चक्रं तस्य धरो धारयिता हरिः पचाद्यच् तस्याङ्ग नाः तासां कराब्जैर्व्यतिकरः सम्पर्कः स एव सम्पत् तया उपात्तं लब्धं सौमनस्यं सुमनस्कत्वं सत्तु ष्टचित्तं याभिस्ताः सत्यः अतएव सौमनस्यलाभ आदिर्यस्मिन् कर्मणि तत्तदादि ततः प्रभृ तीत्यर्थः पूर्वोक्तावयवार्थात् परिस्फुटं प्रसिद्धावयवार्थं अभिधानं सुमनस इति नामधेयं द धति । पूर्ववत् कर्णिकादिवद्रूढमिति भावः । आख्याह्वे अभिधानं च नामधेयं च नाम चेत्य मरः । स्त्रियः पुष्पाण्यवचेतुं प्रवृत्ता इति फलितोऽर्थः नूनमित्युत्प्रेक्षायां अत्रोपात्तसौमन स्याइति सौमनस्योपादानस्य पदार्थस्य विशेषणगत्या सुमनसः पदान्वर्थताहेतुकत्वोक्त्या

काव्यलिङ्गं । तदुत्थापिता चेयमसारत्वोत्प्रेक्षेति सङ्करः । तेन चाङ्गनाकाराणामतिसौ ख्यत्वं व्यज्यते ॥ २८ ॥ **************************** ॥

॥ अभिमुखेति ॥ अभिमुखपतितैः भञ्जनार्थमभिमुखमागतैः उज्ज्वलामुत्कटामुद्धतिमुपरिप्रसारमौद्धत्यं च दधानैरङ्गनानामग्राणि च तैर्हस्ताश्चेति समानाधिकरणसमासः अत एव हस्ताग्राग्रहस्तयोर्गुणगुणिनोरभेदादिति वामनः । तैरग्रहस्तैः कर्तृभिः गुणप्रकर्षाद्धेतोरवजितमवधीरितं तरुकिसलयजालं प्रसभं बलात् भङ्गं छेदं पराजयं चानीयत नीतं । प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणामिति किसलयप्राधान्यादभिधानं। अत्राग्रहस्तेषु विशेषणमहिम्ना जिगीषुत्वस्य किसलयजाले जेतव्यत्वस्य च प्रतीतेः समासोक्तिरलङ्कारः

> अभिमुखपतितैर्गुणप्रकर्षादवजितमुद्धतिमुज्ज्वलां दधानैः । तरुकिसलयजालमग्रहस्तैः प्रसभमनीयत भङ्गमङ्गनानाम् ॥ २९ ॥ मुदितमधुभुजो भुजेन शाखाश्चलितविसंस्थुलशङ्खकं धुवत्याः । तरुरतिशयितापराङ्गनायाः शिरसि मुदेव मुमोच पुष्पवर्षम् ॥ ३० ॥ ***

॥ २९ ॥ ******************************* ॥

॥ मुदितेति ॥ मुदिता हृष्टा मधुलिहो मधुपा यासु ताः शाखा भुजेन हस्तेन चलितानि स्रस्तानि अत एव विसंस्थुलानि स्खलितानि शङ्खकानि वलयानि यस्मिन् कर्मणि तत्तथा धुवत्याः कम्पयन्त्याः । धूञ् विधूनने इति धातोः तौदादिकात् शतरि ङीप् । क्ङिति चेति गुणवृद्धिप्रतिषेधादुवङादेशः । अतिशयिता सौन्दर्येणातिक्रान्ता अपराङ्गना यया तस्यास्तस्याः शिरसि तरुर्मुदेव तदभिसरणसन्तोषेणेवेति गुणहेतूत्प्रेक्षा पुष्पवर्षं पुष्पवृष्टिं मुमोच ॥ ३० ॥ ********* ॥

॥ अनवरतेति ॥ अनवरतरसेनानवच्छिन्नद्रवेण अन्यत्रानुबद्धशृङ्गारेण रागभाजा रक्तेन चकरजपरिक्षनिपुनखक्षतेपुलब्धसंस्तवेन प्राप्तपरिचयेन। संस्तवः स्यात्परिचयइत्यम

रः। वध्वाविगलदयंनिर्दयमत्यथाखण्डितेनच्छिन्नेननिराकृतेनचलद्वरणपल्लवेननवकि सलयेनयुववि टेनच। पल्लवःकिसलेविटेइतिविश्वः। सपदि मल्लेमल्लानंखलुप्रसिद्धौ म्लायतेर्भावेलिट्। अत्राभिधायाःप्रकृतार्थेनियन्त्रणत्वादप्रकृतार्थप्रतीतेःशब्दशक्तिमूलो ध्वनिःनश्लेषःतेनचोभयोःपल्लवयोरौपम्यंगम्यते॥ ३१॥ ********** ॥

॥ अथास्यांपुष्पावचयेमृङ्गारचेष्टाःवर्णयन्कस्याश्चिच्चेष्टाविशेषमेकेनाह॥ प्रियमिति। अन्यास्त्रीप्रियमभिप्रियस्याग्रतइत्यर्थः। अभिरभागेइत्यभेर्लक्षणार्थेकर्मप्रवचनीयत्वा न्नद्योगेद्वितीया। कुसुमेषूद्यतःकुसुमोद्यतःकुसुमप्रहरणार्थमुत्क्षिप्तइत्यर्थः। प्रकृतिवि काराभावान्नतादर्थ्येचतुर्थीसमासः। तस्यवाह्वोर्नवंयन्नखंनखक्षतंतदेवमण्डनंतेनचारु

अनवरतरसेनरागभाजाकरजपरिक्षतिलब्धसंस्तवेन। सपदितरु णपल्लवेनवध्वाविगलदयंखलुखण्डितेनमम्ले॥ ३१॥ प्रियम भिकुसुमोद्यतस्यबाह्वोर्नवनखमण्डनचारुमूलमन्या। मुकुलित रकराहितेनपीनस्तनतटरोधितिरोदधेंशुकेन॥ ३२॥ **

चारुसुन्दरंमूलंकक्षभागमित्यर्थः। मुकुलितरकरेणसव्यपाणिनाआहितेननिहितेनांशुके नोत्तरीयेणपीनंस्तनतटंरुणद्धीतिपीनस्तनतटरोधितद्रावरणंयथातथातिरोदधेतिरश्च कार। अयञ्चापल्याख्यःसञ्चारिभावः। आत्मप्रकाशिनीचेष्टारागादेश्चापलंमतमिति लक्षणात्। प्रौढाचेयम्॥ ३२॥ ****************** ॥

॥ अथापरस्याःचेष्टाविशेषंषड्भिःकुलकेनाह॥ विततेत्यादि। काचिद्विततनाभिगौ चौन्नमनाद्विस्तृताभिर्वलीभिस्त्रिवलीभिर्विभाव्याःसंलक्ष्याःपाण्डुरेखाःरेखाकाराःवलीन बान्तरालभागाःनाभिःक्रान्तपरभागाजनितवर्णोत्कर्षाः। अतएवविशेषेणलीनाविलीनारो मराजिर्यस्याःसातथोक्ता। तत्र्यमपिस्वभावएनेवेतिभावः। अवलग्नंमध्यं। मध्यमंचाव

सर्गसमर्थोऽस्त्रीत्यमरः । पुनःक्षणनं नयन्तीअग्रपुष्पग्रहणायगात्रविजृम्भणादिति भावः । तथाविपुलतरेउन्मुखेऊर्ध्वमुखेचलोचनेयस्याः सा । अग्रपुष्पग्रहणार्थमिति भावः ॥ ३३ ॥ ********************************* ॥

॥ प्रसकलेति ॥ प्रसकलाभ्यामतिसमग्राभ्यांकुचाभ्यांबन्धुरमुन्नतानतम् । बन्धुरंतून्नतानतमित्यरः । अङ्कुरंनिर्भरंदृढमितियावत् । उरःपूरित्यादिनासमासान्तात्स्तनादुरसःप्रसभाद्बलात्कारादिभिन्नोविश्लिष्टस्तनूत्तरीयबन्धोयस्याः सागात्रविजृम्भणादिसत्कुचाकरणेत्यर्थः । किञ्चअवनमतोनम्रीयमानादुदरादुच्छ्वसन्विश्लिष्यन्दुकूलंवस्त्रतन् अतए

विततवलिविभाव्यपाण्डुलेखाक्रान्तपरभागविलीनरोमराजिः । क्षणमपिक्षणनांपुनर्नयन्तिविपुलतरोन्मुखलोचनावलग्नम् ॥ ३३ ॥ प्रसकलकुचबन्धुरोद्धुरोरःप्रसभविभिन्नतनूत्तरीयबन्धा । अवनमदुदरोच्छ्वसद्दुकूलस्फुटतरलक्ष्यगंभीरनाभिमूला ॥ ३४ ॥ व्यवहितमविजानतीकिलान्तर्वणभुविवल्लभमाभिमुख्यभाजम् । अधिविटपिसलीलमग्रपुष्पग्रहणपदेनचिरंविलम्ब्यकाचित् ॥ ३५ ॥*

वस्फुटतरंयथातथालक्ष्यंगभीरमगाधंनाभेर्मूलमध्यान्तरालंयस्याः सा ॥ ३४ ॥ ** ॥

॥ व्यवहितमिति ॥ काचित्पूर्वोक्तविशेषणविशिष्टाकाचिदङ्गनाऽन्तर्वणभुविवनाभ्यन्तरप्रदेशे । प्रतिरन्तरित्यादिनावननकारस्यणत्वं । व्यवहितंतिरोहितंआभिमुख्यभाजंअभिमुखावस्थितमित्यर्थः । तंवल्लभंप्रियंअविजानतीकिलजानानाथजानानेवअधिविटपिविटपिनिवृक्षे । विभक्त्यर्थेऽव्ययीभावः । सलीलंयथातथाअग्रेवृक्षाग्रेयानिपुष्पाणितेषांग्रहणस्यपदेनमिषेणचिरंविलम्ब्यप्रियायस्वाङ्गप्रकाशनार्थमितिभावः ॥ ३५ ॥

॥ अथेति ॥ अथविलम्बानन्तरंअनन्तरंअनल्पिन्नियेसखीभिःकथितेसति । किलागमनेवास

इतिनिवेदितेसतिक्षणंससंभ्रमाअपरेवपूर्वविपरीतव्यापारकारणादन्येवभवन्तीबुद्धिपूर्वकारित्वमज्ञानन्नाटनेनवञ्चयन्तीत्यर्थः। शिथिलितःपुष्पग्रहणान्निवर्त्तितःकुसुमाकुलः कुसुमव्यापृतोग्रपाणिर्यस्याःसातथोक्ताप्रतिपदंप्रतिस्थानंसंयमितेनानियमितेनांशुकेन। अंशुकंसूक्ष्मवस्त्रंस्यादितिविश्वः। वस्त्रेणावृतमङ्गंयस्याःसातथोक्तासती ॥ ३६ ॥ *

॥ कृतभयेति ॥ किञ्चकृतःभयपरितोषयोः भर्तृदर्शनोत्थसाध्वसहर्षयोःसन्निपातःसङ्करोयेननतत्मनसिजातोमनसिजःस्मर। :तत्रम्यांजनेर्डःहलदन्तात्सप्तम्याःसंज्ञायामित्यलुक्। सएवगुरुराचार्यस्तेननतल्लक्षणेउपदिष्टनादेकहेतुकंइत्यर्थः। किमप्यनिर्वाच्यंरसान्तरंलक्षणयाभावान्तरंनचेहकिलकिञ्चिताख्यंविवक्षितंकृतभयेत्यादिविशेषणेनक्रोधाश्रु

अथकिलकथितेसखीभिरत्थंक्षणमपरेवससम्भ्रमाभवत्ति। शिथिलितकुसुमाकुलाग्रपाणिःप्रतिपदसंयमितांशुकावृताङ्गी ॥ ३६ ॥ कृतभयपरितोषसन्निपातंसचकितसस्मितवक्त्रवारिजश्रीः। मनसिजगुरुतत्क्षणोपदिष्टंकिमपिरसेनरसान्तरंभजन्ती ॥ ३७ ॥

हर्षभीत्यादेःसङ्करः। किलकिञ्चितमितिलक्षणार्थस्यप्रतीतेः रसेनरागेणहेतुनाभजन्ती अतएवसचकितासभयसम्भ्रमा। चकितम्भयसम्भ्रमाइत्यमरः। सस्मिताहर्षात्समन्दहासाचवक्त्रवारिजश्रीर्यस्याःसासती। अत्रचकितस्मितयोःपूर्वोक्तभयहर्षानुभावत्वेनोक्तिः ॥ ३७ ॥ ************************* ॥

॥ अवनतेति ॥ अवनतवदनेन्दुःलज्जयानम्रमुखीत्यर्थः। अधीरतयाअधृष्टतयाव्यवधिंकिञ्चिद्व्यवधानं। उपसर्गेघोःकिरितिकिप्रत्ययःइच्छन्तीवाञ्छन्तीवतथाव्याकुलासतीत्यर्थः। आक्रोशतयोर्दमितिविकल्पाम्मभावः। अक्षौप्रियायअक्षितआत्मानंप्रकाशयन्ती

स्थितेत्यर्थः । तिष्ठतेः कर्त्तरि लुङ् । प्रकाशनस्थेयाख्ययोश्चेत्यात्मनेपदं स्थाघ्वोरिच्चेति सि चः कित्त्वमिकारश्च धातोरन्तादेशः कित्वान्नगुण इति यद्वा नोहेतोरस्य प्रियस्य चेतः सुतराम हरत् । तथाहि । त्वयैवस्त्रियोऽभिभूषयन्ति स्फुटम्प्रसिद्धमित्यर्थः । अतोस्या अपित्वया भूषितत्वादतिमनोहरत्वंयुक्तमितिभावः । कुलकालंकारोयमर्थान्तरन्यासः । मध्याचेयं नायिका । लज्जामन्मथमध्यस्थांमध्यमोदितयौवनेतिलक्षणात् ॥ ३८ ॥ *** ॥

॥ किसलयेति ॥ किसलयशकलेषु वर्त्तमाना इति शेषः अवाचनीयाः प्रसिद्धलिपिवैलक्ष ण्याद्वाचयितुमनर्हा । किन्तु केवलंपुलकिनि दयितस्पृष्टत्वात् स्पर्शादेव रोमाञ्चवत्यङ्गकेव पुर्षि निधेया विरहतापशान्त्यर्थमर्पणीयाः कुतस्तु नखपदानि नखाङ्का एव लिपयोऽक्षराणि ये

अवनतवदनेन्दुरिच्छतीव व्यवधिमधीरतयायदस्थिताऽसौ । अ हरतस्तुतरामतोस्य चेतः स्फुटमभिभूषयतिस्त्रियस्त्रपैव ॥ ३८ ॥ ष ड्भिः कुलकं ॥ किशलयशकलेष्ववाचनीयाः पुलकिनि केवलमङ्गके निधेयाः । नखपदलिपयोऽपि दीपितार्थाः प्रणिदधिरे दयितैरनङ्ग लेखाः ॥ ३९ ॥ *****************

षुतेनतु प्रसिद्धाक्षरैः अतोऽवाचनीया इत्यर्थः । नैतावताऽनुपकारित्वं चेत्याह । तथापि । विभावितार्थाः संकेतितसन्निवेशवशादेवद्योतिताभिधेया लिख्यन्त इति लेखाः कर्मणि घञ् प्रत्ययः । अनङ्गस्य लेखाः तत्प्रयुक्ता इत्यर्थः । दयितैः दयिताभिः दयितेश्च पुमांस्त्रियेत्येक शेषः प्रणिदधिरे प्रणिहिता लिखिता इत्यर्थः । दधातेः कर्मणि लिट् । नेर्गदनदेत्यादि नानकारस्य णत्वं । लोकप्रसिद्धिलेख्यवैलक्षण्याद्व्यतिरेकालङ्कारः ॥ ३९ ॥ *** ॥

॥ क्षतेति ॥ क्षतक्षतकारणं यथा कुतश्चिन्मशेषया कयाचिन्नायिकया त्वमकुशलामीत्यग्रथाकु शलानासीति सखीमपास्य निरस्यात्मना स्वयमेवाभिमतमभिप्रायाभिमुखं साभिलाषत्वा वि

कृतभुजमूलंप्रकाशितकक्षप्रदेशंयथातथामूर्द्धिमालाअबन्धिबद्धा। अथचसाभिप्रायक्षं जकचेष्टारूपंस्त्रापलाख्यःसञ्चारिविशेषः। नायिकाप्रौढैव। स्मरमन्दीकृतव्रीडाप्रौढा सम्पूर्णयौवनेतिलक्षणात्॥ ४० ॥ ********************** ॥

॥ अथकाचिन्नायिकासखीवचनंश्रुत्वेतिनिःकुतकेनाह ॥ अभिमुखमिति। मधुमकर न्दंव्रतयन्तिभुञ्जतइतिमधुव्रताःमधुपाःकर्मण्यणप्रत्ययः। तेषांपटलेअभिमुखमुपयाति आगतेसतिवंश्चिचिन्मांसामाभिदधाःनकिञ्चिदालपमौनंभजेत्यर्थः। सौत्तरेलङ्माङ्योगइत्यडभावः प्रतिषेधः। मौनस्यमधुकरवाधनिवृत्तिरेवफलमित्याह। सखीति। मधु नामद्यौनसुरभिर्मुखाब्जस्येयोगन्धस्तस्मिन्लब्धेर्वाभात्। किंवांकिन्। अनेनमधुव्रतपट

हात्त्वानकरुणासखीमपास्यन्त्वमकुशलेतिकयाचिद्रात्मनैव। अभि
मतमभिसाभिलाषमाविःकृतभुजमूलमबन्धिमूर्धिमाला ॥ ४० ॥
अभिमुखमुपयातिमास्मकिंचित्त्वमभिदधाःपटलेमधुव्रतानाम्। मधु
सुरभिमुखाब्जगन्धलब्धैरधिकमधिचत्दनेनमानिपाति ॥ ४१ ॥

लेनत्वयिअधित्वन्विभक्त्यर्थेऽव्ययीभावः। त्वमावेकवचनइत्यत्रैकवचनइत्यर्थनिर्देश त्वादिहविभक्त्यभावेप्येकार्थवृत्तेर्युष्मदस्मदोर्मपर्यन्तस्यत्वादेशः। अतएवविभक्त्यभावाच्च त्वादेशोऽत्रचिन्त्यइतिवल्लभवचनंचिन्त्यम्। अधिकमत्यन्तंसर्वत्रेत्यर्थः। मानिपानि मानिपातनाम्। भावेलुङिचिरवदृङ्भिःअत्राभिपातासम्बन्धेपिनत्सम्बन्धोक्तेरतिशयो क्तिरलङ्कारः॥ ४१ ॥ ************************ ॥

॥ सरजसेति ॥ किञ्चमधुपिबतीतिमधुपोमधुलिट्मद्यपस्य। आतोनुपसर्गेकःभुविरोह न्तीत्यत्रइतिभूरुहाम्भूरुहाणांभीमानाञ्चदेहिनांसम्बन्धिनीषुसहरजसासरजसंअ नुरेत्यादिनासाकल्यार्थेऽव्ययीभावः। समासान्तनिपातः। तेनसरजस्काइतिबहुव्रीह्य

र्थोलक्ष्यः मुख्योवामहाकविप्रयोगबाहुल्यात् अव्ययीभावदर्शनंतुप्रापिकमित्युक्तंप्राक् । तथाचसरजसम्बासरजसोयोमकरन्दस्तेननिर्भराःसुपूर्णास्तुनतुत्वदधरामृतेन नाथरज स्केननिभावः । अन्यत्ररजःस्त्रीपुष्पं । स्याद्रजःपुष्पमार्त्तवमित्यमरः । तत्राहचर्यान्मक रन्दशब्देनशुक्रप्रतीतिः तेनशुक्रशोणितसन्निपातप्रायास्वित्यर्थः । प्रसवविभूतिषुपुष्प समृद्धिषुजन्मपरम्परासुचविरक्तःनिस्पृहःसन् अमृतंपिवतीतिअमृतपःइतिनाम्नोवाञ्छ याऽसावमुत्तवाधरमोष्ठंप्रतिआजिहीतेआगच्छति । ध्रुवंसत्यमित्युत्प्रेक्षायांअन्यत्रतुअ मृतपोदेवइतिनामवाञ्छयादेवभूयापेक्षयेत्यर्थः । अथवानिःश्रेयसप्राप्तीच्छयेत्यर्थः । श्रे योनिःश्रेयसामृतमित्यमरः । ध्रुवंशाश्वतंअधरन्धरासम्बन्धरहितंअमुम्परलोकपथंइह चामुत्रचशुभमिहचामुत्रचान्वेतिइत्यादौ लोकेवेदेचेदमदसोर्लौकद्वयेरूढिप्रदर्शनात्

सरजसमकरन्दनिर्भरासुप्रसवविभूतिषुभूरुह्यांविरक्तः । ध्रुवममृतप
नामवाञ्छयासावधरममुंमधुपस्तवाजहीते ॥ ४२ ॥ * * * *

आजिहीतेअन्विच्छतीत्यर्थः । ओहाङ्गतावितिधातोर्लटिरूपाविनिद्विर्भावः ईहल्य घोरितीकारः । इहनायिकावदनसौरभहेतुकस्यमधुपानांमनस्यमृतपनामवाञ्छाहेतु त्वोत्प्रेक्षणाद्गुणहेतूत्प्रेक्षा । साचध्रुवमितिव्यञ्जकप्रयोगाद्वाच्यासतीमधुपस्याधरोष्ठेस्या सम्बन्धेपिसम्बन्धातिशयोक्त्युत्थापितेतिसङ्करः । पूर्वोक्ताप्रकृतार्थप्रतीतिस्तुमधुपादिश ब्दानामभिधयाप्रकृतार्थनियन्त्रित त्वाच्छब्दशक्तिमूलोध्वनिरेवनश्लेषइत्यवलम्बितसरणे ति ॥ ४२ ॥ ****************************** ॥

॥ इतीति ॥ इतिइत्थंसख्येवजनस्तस्मिन्सखीजनेवदतिसतिनिमीलन्त्यौभयान्मुकुली भवन्त्यौअतएवद्वौआवृत्तीययोस्तेद्विगुणेद्विरावृत्ते । गुणास्त्वावृत्तिशब्दादिज्येन्द्रियामुख्य तन्तुष्वितिवैजयन्ती । तेद्वतेद्विगुणितेअतएवसान्द्रतरेअक्षिपक्ष्ममालेनेत्रलोमपंक्तीव

श्याः शाकांचदितिशेषः। अक्षिग्रहणस्यपक्ष्मग्रहयवेगुरुत्वमक्षीरहणोरेवेनिद्योतनार्थं त्वाद्यपौनरुक्त्यं। अतिभयेनभर्तुरङ्कसुंरङ्गमपतनप्राप्तवतोअहोमहत्कष्टंयत्कोटकादि भयमित्याशंक्याह। अङ्गनानांनतुपुंसामितिभावः। विक्लवताभीरुतागुणोभवतिहि न तुदोषइतिभावः। अतएवजनतमक्षंभर्तुरङ्कारोहणमपिनदोषः। पार्श्वस्थालम्बनादि नाभयानुभावत्वात्। कुलकालङ्कारोयमर्थान्तरन्यासः॥ ४३ ॥ ******** ॥

॥ मुखेति ॥ यूनाअभिनवोढवधूर्नवोढाङ्गनापिवलात्वलात्कारात्मुखं कमलमिवेत्युपमि तसमासः। तदलंमुखकमलकंअल्पार्थेकप्रत्ययः। उन्नमय्यउद्यम्य। यपिबचुचुम्बे

इतिवदतिसखीजनेनिमीलद्दिगुणितलम्बहराक्षिपक्ष्ममाला। न्य पतदलिभयेनभर्तुरङ्कंभवतिहिविक्लवतागुणोऽङ्गनानाम् ॥ ४३ ॥ त्रिभिर्विशेषकं॥ मुखकमलकमुन्नमय्ययूनायदभिनवोढवधूर्बलाद चुम्बि। तदपिनकिलबालपल्लवाग्रग्रहपरया विविदेविदग्धसख्या॥ ४४॥ व्रततिविततिभिस्तिरोहितायांप्रतियुवतावदनंप्रियः प्रियायाः। यदधयदधराऽवलोपनृत्यत्करवलयस्वनितेनतद्विवव्रे॥ ४५॥

दित्यादेशः। अचुम्बिचुम्बितमितियत्। नचुम्बनविदग्धसख्याचतुरसख्यावालपल्लवा ग्राणांग्रहेग्रहणं। ग्रहवृद्विनिश्चिगमश्चेत्यप्रत्ययः। नत्परयातदासक्तयासत्याकंचिद्याः ज्ञं कल्पयन्त्येवार्थः। नविविदेअपि कलनप्रकाशनमितिकिमुतवक्तव्यमित्यपिशब्दार्थः। किलेत्यलीकेवस्तुतोविदित्वाप्यविदितेवस्थितं वैदग्ध्यात्। अन्यथानयोर्विश्रम्भविहार विघातादितिभावः। मुग्धेयंनायिकाउदयद्यौवनामुग्धालज्जाविदितमन्मथेतिलक्षणात् ॥ ४४ ॥ ******************************** ॥

॥ व्रततीति ॥ प्रतिकूलायुवतिःप्रतियुवतीसपत्नीतस्यांव्रततिविततयोलताजालानि। व

स्त्रीतु त्रननिर्स्तनेत्यमरः । नाभिच्छिरोभिनायांसत्याम्प्रियःप्रियावदनमधयत् अपिबदित्य
र्थः धेटो नैव्वादिकाल्लुङ् । तद्वदनपानं अधरावलोपेनाधरखण्डनेन तज्जनितव्यथयेत्य
र्थः। व्यथितयोः धुवतोः करयोर्वलयानां कङ्कणानां स्वनितेन ध्वनिना विवर्धे विवृतम् । तदे
वतस्यास्तदनुमारकामभूदित्यर्थः । अनेनास्या अपराधीर्ष्यानिर्वेदधन्योत्यनुसन्धेयम् ॥
४५ ॥ ******************************* ॥

॥ विलसितमिति ॥ वधूः काचित्स्त्री पुरस्तादग्रे धरणीरुहमधिरोहतीति धरणीरुहाधिरु
ह्वृक्षारूढा। रुहेः क्विप् । तस्यास्तरुधिरुहो लतायाः विलसितं चेष्टितं । नपुंसके भा
वे क्तः। अनुकुर्वती एवं नित्याश्लेषप्रकारमभिनयन्ती ऋजुतया अकुटिलबुद्धितया सखीनां

विलसितमनुकुर्वती पुरस्ताद्धरणिरुहाधिरुहो वधूर्लतायाः । रमण
मृजुतया पुरः सखीनामकलितचापलदोषमालिलिङ्ग ॥ ४६ ॥ स
ललितमवलम्ब्य पाणिनांसे सहचरमुच्छ्रितगुच्छवाञ्छयान्या । स
कलकलभकुंभविभ्रमाभ्यामुरसि रसादवतस्तरे स्तनाभ्याम् ॥ ४७ ॥

पुरोऽग्रे अकलितः अविचारितश्चापलमनुचितकरणमेव दोषो यस्मिन् कर्मणि तद्यथा तथा
रमणं प्रियमालिलिङ्ग । एषा हैयाप्रत्यवती प्रौढा च ॥ ४६ ॥ ********* ॥
॥ सललितमिति ॥ अन्या स्त्री उच्छ्रितगुच्छवाञ्छया उन्नतस्तबकजिघृक्षया सललितं सवि
लासं यथा तथा सहचरं प्रियम् पाणिना अंसे आवृत्य आदानेनेति शेषः । अंसे अवलम्ब्यावष्टभ्य
सकलयोः समग्रयोः कलभकुम्भयोः करिकुम्भयोर्विभ्रम इव विभ्रमः सौन्दर्यं ययोस्ताभ्यां स्त
नाभ्यां रसाद्रागादुरसि अवतस्तरे आच्छादयामास । सहचरमिति शेषः । अभिमुखाव
स्थानादिति भावः । स्तृणातेः कर्मणि लिट् । ऋतश्च संयोगादेर्गुणः शर्पूर्वाः खय इति
अभ्यासस्कारलोपः । इयञ्च प्रौढैव ॥ ४७ ॥ ***************** ॥

॥ मृद्विति ॥ अन्यास्त्रीउच्चतराणामत्युन्नतकुसुमानामुच्चैस्तनवचेतुमिच्छयाउच्चतरोच्चि
चीषया। चिनोतेःसन्नन्तात्स्त्रियामप्रत्ययेटाप्। विभाषा चेरिति कुत्वविकल्पः। मृदुचरण
तलाग्रेणदुःस्थितत्वात्दुःखेनस्थितत्वात्दुःस्थितेनेत्यर्थः। कुचकुम्भयोर्भरस्य। पुंसिसं
ज्ञायांघःप्रायेणेति घप्रत्ययः। नसहतेत्यनामित्यसहतरा। सहेःपचाद्यजन्तात्तमप्समासा
त्तरप्प्रत्ययः। भरमसहमानेत्यर्थः। कर्तृयोगात्कर्मणिषष्ठी। अथास्मिन्नवसरेनिरवल
म्बनंयथातथाप्रियस्योपरिन्यपतत्निरवलम्बनत्वान्निपपातेत्यर्थः। एषा च प्रौढा स्वभा
वोक्तिरलङ्कारः॥ ४८ ॥ ************************ ॥

मृदुचरणतलाग्रदुःस्थितत्वादसहतराकुचकुम्भयोर्भरस्य। उपरि
निरवलम्बनंप्रियस्यन्यपतदथोच्चतरोच्चिचीषयाऽन्या ॥ ४८ ॥
उपरिजतरुजानियाचमानंकुशलतयापरिरम्भलोलुपोऽन्यः। प्र
थितपृथुपयोधरांगृहाणस्वयमितिमुग्धवधूमुदासदोर्भ्याम्॥ ४९ ॥
इदमिदमितिभूरुहांप्रसूनैर्मुहुरतिलोभयतापुरःपुरोऽन्याः। अ
नुरहसमनायिनायकेनत्वरयितिरन्तुमहोजनंमनोभूः ॥ ५० ॥

॥ उपरिजेति ॥ उपरिजातानिउपरिजानितरोर्जातानितरुजानिकुसुमानितानिया
चमानांअपचित्यदेहीति। प्रार्थयमानांप्रथितपृथुपयोधरांप्रशस्तपीवरकुचांमुग्धवधूंअ
कुटिलधियंस्वयंपरिरम्भलोलुपः आश्लेषलालसोऽन्यः कुशलतयावञ्चनापटुतयास्वयं
गृहाणेतिमयापचितानित्वमेवापचिनुष्वेत्यर्थः। गम्यमानार्थत्वादुक्तोतिनप्रयुक्तंपौनरु
क्त्यात्दोर्भ्यामुदासउद्यच्छति। अयञ्चैकायत्तत्वादनुकूलनायकःनायिकातुस्वाधीनप
तिकाप्रौढाच॥ ४९ ॥ ************************ ॥

॥ इदमिदमिति ॥ अन्यास्त्रीइदमिदमितिइदंग्राह्यमिदंग्राह्यमित्युक्तेत्यर्थः। भूरु

ह्यांवृक्षाणांप्रसूनैःपुष्पैः पुरःपुरोनुकुर्वन्तिलोभनयाप्रलोभनयानायकेनरहोनुरहसमेका न्तं। अन्ववतप्तमिवानुरहसमित्यव्ययीभावसमासान्तः अनायिनीनाःतथाहिमनोभूःका मीजनंरन्तुंत्वरयतिदेशकालानपेक्षयेतिभावः। अतएवासूर्यमहोइति। पूर्ववन्नायिका नायकविवेकः। अर्थान्तरन्यासः ॥ ५० ॥ ****************** ॥

॥ विजनमिति ॥ अन्यास्त्रीविजनमेकान्तमितिहेतोरमुम्बल्लभंक्षणंबलाद्गृहीत्वाआकृष्य अथान्तिकेविपक्षंसपत्नीजनंवीक्ष्यलघुत्वभीतेस्तुच्छत्वभयादभिपतितुंमनोयस्याःसाअभि पतितुमना। तुङ्काममनसोरपीतिमकारलोपः। अपसर्तुकामेत्यर्थः। वल्लभेऽमुञ्चत्यत्य जतिसतितस्यविपक्षानवेक्षणादितिभावः। अतिगुर्वीअतिगौरववत्यभवत्स्वयंग्रहलाघ

विजनमितिबलादमुंगृहीत्वाक्षणमथवीक्ष्यविपक्षमन्तिकेऽन्या ।
अभिपतितुमनालघुत्वभीतेरभवदमुञ्चतिवल्लभेतिगुर्वी ॥ ५१ ॥ अ
धिरजनिजगामधामतस्याःप्रियतमयेतिरुषास्रजावनद्धः । पद
मपिचलितुंयुवानसेहेकिमिवनशक्तिहरंससाध्वसानाम् ॥ ५२ ॥

वतिरोधानात्भर्तृवल्लभत्वप्रकाशनाच्चेतिभावः। भाग्यवतांसर्वंश्रेयसेभवतीतिरहस्यं। एषा त्वतिप्रगल्भैव ॥ ५१ ॥ ****************************** ॥

॥ अधीति ॥ अधिरजनिरजन्यांविभक्त्यर्थेऽव्ययीभावः। तस्याःसपत्न्याइत्यर्थः। बुद्धि स्थत्वान्नामग्रहणासहत्वाच्चतच्छब्देननिर्देशः धामगृहंजगामेतिरुषाहेतुनाप्रियतमयाक र्त्र्यास्रजाकरणेनावनद्धोयुवापदमपि। अत्यन्तसंयोगेद्वितीया। चलितुंनसेहेनशशा क। तथाहिससाध्वसानांभयग्रस्तानांकिमिवकिम्वाइवशब्दोवाक्यालङ्कारेइवेतीषद् र्थीयमुत्प्रेक्षावाक्यालङ्कारेष्वितिगणव्याख्याने। शक्तिंहरतीतिशक्तिहरं। हरतेरनुद्यमने ऽजितिअच्प्रत्ययः। नभवतीतिशेषः। अस्तिर्भवन्तीपरोऽप्रयुज्यमानोप्यस्तीतिवचनात्।

भवन्तीति लटः पूर्वाचार्याणां संज्ञा सर्वस्यापि भीरूणां शक्तिहरत्वादेवदान्तः खगवन्धोपि यू
नः शक्तिहर इति युक्तं इति सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । खण्डिते वंचना
यिका । ज्ञातेन्यासङ्गविकृते खण्डिते यो कथायिनेति लक्षणात् । नायकस्तु दक्षिणः भयस
म्बन्धस्तु तादि भिस्तुष्टो नैकत्र दक्षिण इति लक्षणार्थ प्रतीतेरिति ॥ ५२ ॥ ** ॥

॥ अथ काचित्खण्डिता निजकान्तमागतं कारणं पल्लवदानेन प्रसादयन्तं चतुर्भिर्भर्त्सनमु
पालभते ॥ नेत्यादि । वयममुष्य दानयोग्या न भवाम वयं तु किन्तु या असावेवास्मै त्वयि
या । अव्ययसर्वनाम्नामकच्प्राक्टेरित्यकच् । रहो रहसि । रहस्योपांशु चालिङ्गे इत्यम
रः । त्वां पिबति पानं करोति । पापानेभैवादिकात्कर्त्तरि विहितपाघ्रादिना पिबादेशः । पा

न खलु वयममुष्य दानयोग्याः पिबति च पाति च यासकौ रहस्त्वाम् । व
ज विटपममुं ददस्व तस्यै भवतु यतः सदृशोश्चिराय योगः ॥ ५३ ॥
नव कितव किमाहितैर्वृथा नः क्षितिरुह पल्लवपुष्पकर्णपूरैः । ननु ज
न विदितैर्भवद्भिरालकैश्चिरपरिपूरितमेव कर्णयुग्मम् ॥ ५४ ॥ **

ति रक्षति च अन्यतो वारयति चेत्यर्थः पा रक्षणे अदादित्वाच्छपो लुक् तस्यै अमुं विटान्यानीति
विटपं पल्लवं । विटपः पल्लवे षिङ्गे इति विश्वः । ददस्व प्रयच्छ दद दाने इति भौवादिका
त्लोट् । व्रज गच्छ यतो दानाच्चिराय चिरकालात् चिरायेत्यव्ययं सदृशोरनुरूपयोर्योगो भवतु
उभयोरपि विटपत्वादिति भावः । समालङ्कारोयं । सा समालंकृतिर्योगो वस्तुनोरनुरूप
योरिति लक्षणात् ॥ ५३ ॥ ************************* ॥

॥ नवेति ॥ हे कितव धूर्त्त वृथा व्यर्थं नेवाहितैः नत्कार्यं स्यान्यथासिद्धत्वादिति भावः । नव
सम्बन्धिभिः निक्षिप्तरुहाणां पल्लवाः पुष्पाणि च तान्येव कर्णं पूरयन्तीति कर्णपूराः कर्णावतं
साः । कर्मण्यणेनैः अस्माकं किन्तन्न साध्यं न किंचिदस्तीत्यर्थः । गम्यमानस्याप्यनक्रियापे

शयानकर्णपूरणं करणत्वान्मृतीया । उक्तमधस्याद्योतेनैवचनं भूयमादौ चकितानिमित्तं
कारकभावस्य अपितु गम्यमानापिहृति । किन्तु नचङ्गजन वदितैर्जनैर्घनिप्रसिद्धैः जने
षु विदितैरिति सन्नमोस नास तेन वपू त्वा बामिनि वक्षीसमार्त्तानिवेधान् न वक्तस्य वर्त्तमानेष्
ति वक्तो. निर्बन्धः आधारत्वविपक्षायां गन्तव्यज्ञेः कण्ठो गेवक्षोप्रतिप्र तवन्वात्तदन्येति । भवद्य
क्षोके स्य प्रियवचनैः कर्णयुग्मं वरपरिपूरितं नित्यं पूर्णमेव अतः परिपूरितस्य पूरणायेमा
एवमेवैभिरित्यर्थः । अत्रोत्तरवाक्यार्थस्यपूर्ववाक्यार्थं हेतुत्वेनोपनिबन्धाद्वाक्यार्थहेतुकं
काव्यलिङ्गमलङ्कारः ॥ ५४ ॥ ************************** ॥
॥ मुकुरिति ॥ अलिनादैर्मुकुलपक्षसितां प्रतारणार्थे तिप्रहसमानामिव स्थितामेनां क

मुकुलपक्षसितामिवालिनादैर्वितरसि नः कलिकां किमर्थमेनाम् । वस
तिमुपगतेन धाम्नि तस्याः शठकलिरेव महांस्त्वयाऽद्य दत्तः ॥ ५५ ॥ इ
ति गदितवती रुषा जघानस्फुरितमनोरमपक्ष्मकेसरेण । श्रवणनियमि
तेन कान्तमन्या सममसिताम्बुरुहेण चक्षुषा च ॥ ५६ ॥ कलापकम् ॥

लिकां कोरकं अलिझङ्कारैः स्मितह । सखे चयुगे कलिनिरिति वैजयन्ती । स्त्रीप्रत्ययस्तु विव
क्षितः स्त्रीवे । नोऽस्माकं किमर्थं वितरसि हे शठ मूढविप्रकारिन् नस्यास्त्वत्प्रियायाः धाम्नि
धने वसतिं स्थितिमुपगतेन त्वया ऽद्यैष वर्त्तमानो महान् कलिः कलहोऽदत्तः खदत्त एवमहनि
कालो स्थितेन विकल्पेनेत्यर्थः । अत्रापि पूर्ववाक्यार्थस्योत्तरवाक्यार्थं हेतुत्वाद्वाक्यार्थहेतुकका
व्यलिङ्गङ्कलिकाभिति येवोत्यापिनया कोरककलहयोर्भेदे अभेदरूपातिशयोक्त्यनुप्रा
णितमितिसङ्करः ॥ ५५ ॥ ************************** ॥
॥ इतीति ॥ इतीत्थं गदितवत्युक्तवती अन्या स्त्री रुषा कान्तं स्फुरितान्युज्ज्वलानि मनोरमा
णि च पक्ष्माणि बकेसराणि अन्यत्र केसराणि पक्ष्माणि यस्य तेन श्रवणनियमितेन श्रोत्रे धृतेन

निरुद्धेनवाऽसितान्दुरूहेणनीलोत्पलेनचक्षुषाचसमंयुगपज्जघानताडयामास। एवाव
रोहितानायकस्तुधृष्टःव्यक्ताङ्गोनिर्भयोधृष्टइतिलक्षणात् अत्रस्फुरितेत्यादितुल्यधर्मग
म्योपमानयोरसितांबुरुहचक्षुषोरुभयोरपिताडनसाधनतयोपात्तत्वेनप्रकृतत्वात्केवलप्र
कृतास्पदातुल्ययोगितालक्षणंनूक्तं॥ ५६ ॥ ****************** ॥

॥ विनयतीति ॥ प्रणयिनिप्रियेसुदृशःप्रियायाःदृशोलोचनात्एकस्मादेवेतिभावः।
कौसुमेषुभवंकुसुमसम्बन्धिरागंरजःकर्णानत्वेकमेवेतिभावः। आननानिलेननिजमुखफूत्का
रेणविनयत्यपनयतिसतितदहिनयुवतेःतत्सपत्न्याः अक्ष्णोर्द्वयमपिनत्वेकमेवेतिभावः।
शेषाएवरजांसितैरभीक्ष्णमापुपूरे नैकेनरजःकणेनकिंचित्स्पृष्टमात्रमितिभावः। पिपर्त्तेः

विनयतिसुदृशोदृशःपरागम्प्रणयिनिकौसुममानतानिलेन। तद
हितयुवतेरभीक्ष्णमक्ष्णोर्द्वयमपिरोषरजोभिरापुपूरे ॥ ५७ ॥ स्फु
टमिदमभिचारमन्त्रएवप्रतियुवतेरभिधानमङ्गनानाम्। वरतनुरमु
नोपहूयपत्यामृदुकुसुमेनयदाहतापमूर्च्छत् ॥ ५८ ॥ **

पूरयतेःपातेर्वाकर्मणिलिट्पूर्णमित्यर्थः। अन्यत्रान्यतेरजोविनयस्यान्यत्ररजःपूर
णात्चकारणमेवपूरणमितिविभावनालङ्कारोरूपकानुप्राणितइतिसङ्करः॥ ५७ ॥*
॥ स्फुटमिति ॥ इदम्प्रतियुवतेःरजःपूरणात्वकारणंसपत्न्याःअभिधानंनामधेयंअङ्गना
नामभिचारःपरमारणकर्मयथाश्येनेनाभिचरन्यजेतेति। तस्यमंत्रोभिचारमंत्रःसएवस्फु
टमित्युत्प्रेक्षायद्यस्माद्वरतनुःस्त्रीपत्याभर्त्राअमुनासपत्नीनामधेयेनोपहूयमृदुकुसुमेनमृ
दुग्रहणमचिरावचितत्वद्योतनायदेवनाभिचारमंत्राणामनादिसंस्कारभावद्योतयतितेन।
आहताअमूर्च्छत् यदुच्चारणपूर्वकंसुकुमताडनमपिमारकंसोभिचारकमंत्रएवसत्यंअन्य
थाकेवलकुसुमेपिनतत्प्रसङ्गादित्यर्थः॥ ५८ ॥ ***************** ॥

॥ समदनमिति ॥ प्रणयवता प्रियेण सुमध्यमायाः प्रियायाः अधिकर्णं कर्णे विभक्त्यर्थेऽव्ययीभावः । कुसुमे समदनं यथा तथा अवतंसिते अवतंसीकृते सति सपदि लघुनां हि ननाम गुरुत्वं च बभ्राज अपि समानएकः पनिर्यस्याः तस्याः सपत्न्याः नित्यं सपत्न्यादिषु इति ङीप् नकारश्चान्तादेशः निर्दिश्यमानस्य शब्दस्य सभावनियमः हिरण्मयस्य विकारो हिरण्मयं दाण्डिनायनेत्यादिना निपातः तं मण्डनं भारो बभूव । यत्किंचिदपि प्रणयकान्तेन सह सदानं श्लाघ्यं मण्डनं भवति अन्यन्महार्घमपि हीनभारस्यन्नतु मण्डनमित्यर्थः । लघुगुरुत्वगुणविरोधस्य हीनार्थत्वेन परिहारात् विरोधाभासभेदः ॥ ५९ ॥ ************ ॥

समदनमवतंसितेऽधिकर्णं प्रणयवता कुसुमे सुमध्यमायाः । व्रजदपि लघुतां बभूव भारः सपदि हिरण्मयमण्डनं सपत्न्याः ॥ ५९ ॥
अवजितमधुना तवाहमक्ष्णोः रुचिरतयेत्यवनम्य लज्जयेव । श्रवणकुवलयं विलासवत्या भ्रमररुतैरुपकर्णमाचचक्षे ॥ ६० ॥ अवचितकुसुमा विहाय वल्लीर्युवतिषु कोमलमाल्यमालिनीषु । पदमुपदधिरे कुलान्यलीनां नपरिचयो मलिनात्मनां प्रधानम् ॥ ६१ ॥ *:*

॥ अवजितमिति ॥ विलासवत्याः स्त्रियः श्रवणकुवलयं श्रवणोत्पलं कर्तृ अहमधुना तवाक्ष्णोः रुचिरतयाः रुचिरस्यभावः रुचिरताभावेन लज्जया सौन्दर्येणावजितमिति वक्तव्यानुवादः । अतएव लज्जया अवनम्य भ्रमररुतैः तन्निभेणेत्यर्थः । उपकर्णं कर्णे विभक्त्यर्थेऽव्ययीभावः आचचक्ष इवेत्युत्प्रेक्षा ॥ ६० ॥ ************************* ॥

॥ अवचितेति ॥ अलीनां कुलानि अवचितानि युवतिभिरुपात्तानि कुसुमानि यासां ता रिक्ता इत्यर्थः । वल्लीः पुष्पलताः विहाय कोमलानि माल्यानि मलनो धारयन्तीति तासु कोमलमाल्यमालिनीषु । मलमलञ्च धारणे इति धातोर्णिनिः नन्द्यादिभ्योङीप युवतिषु पदमुपदधिरे

निद्धुः तथाहि मलिनात्मनां कलुषदेहानां दुष्टचित्तानां च परिचयश्चिरकालसाहचर्यं प्रधानं अप्रयोजकं किन्तु भुक्तिरेवेति भावः । अतः परिचितमलनात्यागो नाश्चर्यमित्यर्थः । अत्र मलिनात्मनामिति श्लाङ्गत्वस्य दुष्टचित्तत्वेन सहाभेदाध्यवसायेनार्थान्तरन्यासोत्था नात् श्लेषप्रतिभोत्थापितातिशयोक्त्यनुप्राणितेयमिति सङ्करः ॥ ६१ ॥ ****** ॥

॥ अथोत्तरसर्गे जलक्रीडावर्णनायां तदुपोद्घातत्वेनात्राम्भनविहारोद्भवं श्रमातिरेकं सप्त भिः कुलकेन दर्शयति ॥ श्लथेत्यादि । शिरसिजाताः शिरोरुहाः । सप्तम्याश्च नेर्डः हलद न्तादिःत्यादिनाऽसप्तम्यालुक् । तेषां पाशः कलापः श्लथस्य श्लथस्य यः पातः तस्य भारादिवे तिहेतूत्प्रेक्षा । तपादादौ खल्वादयइतिवामनीयनिषेधे पिइवशब्दस्य पादादौ प्रयोगः

श्लथशिरसिजपाशपातभारादिव नितरां नतिमद्भि रंसभागैः । मुकु
लितनयनैर्मुखारविन्दैर्घनमहतामिव पक्ष्मणां भरेण ॥ ६२ ॥
अधिकमरुणिमानमुद्वहद्भिर्विकसद्शीतमरीचिरश्मिजालैः । प
रिचितपरिचुम्बनाभियोगादपगतकुङ्कुमरेणुभिः कपोलैः ॥ ६३ ॥

कवेः दोर्दण्डात् नितरामतिशयेन । अव्ययादाम्प्रत्ययः । नतिमद्भिरंसभागैरुपलक्षिता भिर्नितम्बिनीभिरिति भाविनासम्बन्धः एवमुत्तरत्रापि योज्यं । ततां सत्वमुत्तमस्त्रीलक्षणं पुन र्घनमहतां सान्द्रदीर्घाणां पक्ष्मणां भरेणेवेति पूर्ववद्धेतूत्प्रेक्षा । मुकुलितनयनैर्मुखारविन्दैः ***************** ॥ अत्रोत्प्रेक्षायाः संसृष्टिः ॥ ६२ ॥ ******************

॥ अधिकमिति ॥ पुनः परिचितानां प्रणयिनां परिचुम्बनैरभियोगान्मर्दनादपगतकुंकुमरे णुभिः अत एव विकसन्तिवैमल्यात् प्रतिफलन्ति अशीतमरीचेरुष्णांशोरश्मिजालानि येषु तैः असम्बन्धे सम्बन्धातिशयोक्तिः अत एवाधिकमरुणिमानमुद्वहद्भिः कुंकुमापायेप्यातपलङ्घना दतिलोहितैरित्यर्थः । कपोलैर्गण्डस्थलैः ॥ ६३ ॥ ************ ॥

I

॥ अवसितेति ॥ पुनरवसिताःअमेरणपरिसमाप्ताःकलिताःक्रियाःसुकुमारचेष्टाअपियस्य तेनललिततरेणमृदुतरेणतनीयसातनुतरेणबाह्वोर्युगेनपुनः सरसैःरार्द्रैः किसलयैरनुरञ्जितैर्वाअनुरञ्जनंप्रापितैरिवपुनरुक्ताद्विगुणाः रक्ताभासोयेषान्तैःपुनरुक्तारक्तभाभिःह स्तैःसर्वैर्वाभिरितियकारलोपः । करकमलैःपाणिपङ्कजैःअत्रेतरञ्जनकरणपेक्षयापुनरुक्तर क्तत्वंस्वाभाविकमेवनचकिसलयरञ्जनहेतुकत्वमुत्प्रेक्ष्यतेइवार्थेवाशब्दः तदुत्प्रेक्षायाम्प्रयु क्तः ॥ ६४ ॥ ******************************** ॥

॥ स्मरेति ॥ पुनःस्मरेणसरसंसानुरागंयथातथापत्युरुरःस्थलेनकर्त्राविनिमयेनव्यतिहा

अवसितललितक्रियेणबाह्वोर्ललिततरेणतनीयसायुगेन । सरसकि सलयानुरंजितैर्वाकरकमलैःपुनरुक्तरक्तभाभिः ॥ ६४ ॥ स्मरस रसमुरस्थलेनपत्युर्विनिमयसंक्रमिताङ्गरागरागैः । भृशमतिशयखे दसंपदेवस्तनयुगलैरितरेतरंनिषण्णैः ॥ ६५ ॥ अतनुकुचभरानते नभूयःक्लमजनितानतिनाशरीरकेण । अनुचितगतिसादनिःसह त्वंकलभकरोरुभिरुरुभिर्दधानैः ॥ ६६ ॥ ******

रेणसंक्रमितोऽङ्गरागोऽनुलेपनंतद्रञ्जनंयेषुतैःअतिशयोऽतिशयितोयः खेदस्तस्यसम्प दामद्धिस्तैरिवेत्युत्प्रेक्षाभृशमितरेतरञ्जियरोपरस्परसंश्लिष्टैःस्तनयुगलैः ॥ ६५ ॥ ** ॥

॥ अतन्विति ॥ पुनःअतनुनामहताकुचभरेणाननेननम्रेणप्राशिवेतिभावःभूयःपुनस्त्र मजनिताआनतिर्यस्यतेनशरीरकेनसुकुमारशरीरेणकिञ्चअनुचितनाअनभ्यस्ता । अ भ्यस्तेष्वुचितंन्याय्यमितियादवः । तयागत्यापादचारेणयःसादःकार्श्यन्तेनयन्निःसहत्वं अक्षमत्वंतद्दधानैःगनुमक्षमैरित्यर्थःनसहन्तइतिनिःसहाःपचाद्यजन्तेनोपसर्गस्यसमा सोव्यप्रत्ययः । कलभकराःकरिहस्ताइवोरवोमहान्तस्तैरूरुभिःसक्थिभिः । सक्थिक्लीवेपु

मानूरु रित्यमरः ॥ ६६ ॥ ************************ ॥

॥ अपहृतेति ॥ पुनः स्थिरायां चिरं क्षितिगमनेनापहृतो नववयावको नवलाक्षारागो येषां तैः पुनस्तेनैव विकीर्णरागैः तैः कुमार्थादन्यादि तिरागैः परस्परस्य भूर्श विनिवेशवशात् स्थिरन्यासबलात् एकं स्थिरं निवेश्यनद्वष्टभ्यनेनर चालनक्रमेणेत्यर्थः । कथमपि महताप्रयत्नेन । कथमादि नयाप्यन्तयत गौरवभेदयोरित्युत्पलैः । चलद्भिः चरणोत्पलैः ॥ ६७ ॥ * ॥

॥ मुहुरिति ॥ नितम्बिनीभिः क्तधर्मोपलक्षिताभिः स्त्रीभिर्मुहुरित्येवं वनविभ्रमाभिषङ्गात् वनभ्रमणासङ्गात् इदानीं नितरामतमितान्तम् । तम्यतेरर्थे नाङ्गावे लुङ् नो दान्तोपदेशस्यमान्तस्यातश्चर्मेति निवृद्धिप्रतिषेधः युक्तं चैतदित्याह । मृदुतरतनवोऽतिकोमलाङ्ग्यस्ताः स्त्रि

अपगतनववयावकैः स्थिरायां क्षितिगमनेन पुनर्विकीर्णरागैः । कथम
पि चरणोत्पलैः स्खलद्भिर्भुवि विनिवेशवशात्परस्परस्य ॥ ६७ ॥ मु
हुरिति वनविभ्रमाऽभिषङ्गादतमितदा नितरां नितम्बिनीभिः । मृ
दुतरतनवोऽलसाः प्रकृत्या चिरमपिताः किमुत प्रयासभाजः ॥ ६८ ॥

यः प्रकृत्या अलसाः जडा अथ चिरमपि प्रयासभाजश्चेत् किमुत सुतरामलसाः स्युरित्यर्थः । अत्राप्रकृतनैसर्गिकालस्यकथनेनागन्तुकस्य कैमुत्यन्यायतः सिद्धवर्णनादर्थापत्तिरलङ्कारः । एकत्र वस्तुनोभावाद्यन्त्र वस्त्वन्यदापतेत् । कैमुत्यन्यायतः साऽस्यादर्थापत्तिरलंकृतिः येति लक्षणात् । अस्याश्चात्रकारी वाच्यः । क्रमः खेदोऽध्वरत्यादेः खेदे स्विन्नमर्दनादि स्यादिति लक्षणात् ॥ ६८ ॥ ************************ ॥

॥ अयक्रमानुभवं खेदं वर्णयति ॥ प्रथममिति । अथ तासां स्त्रीणां श्रमजलं प्रथममुच्चलद्गण्डमण्डलेषु उच्छलद्गण्डस्थलेषु अलघुभौक्तिकाभं गुरुमुक्ताफलसदृशमासीत् । पश्चात्कठिनतरकुचाग्रपातिसत् अथ पतनानन्तरं शतं शर्कराः शतशर्करं संमाहारे द्विगुरेकवचनं

वाटावगतइति नपुंसकत्वं नस्वभावस्तत्तां शतशर्करतां शतशकलत्वं जगाम। अत्रैकस्यश्र मजलस्यक्रमेणानेकाश्रयसम्बन्धनिबन्धनात्पर्यायालङ्कारभेदः। क्रमेणैकमनेकस्मिन्नाधा वर्त्तनेयदि। एकस्मिन्नथवानेकम्पर्यायालङ्कृतिर्मतेतिलक्षणात्॥ ६९ ॥ * ॥
॥ अथापिकुचमण्डलमविहतशोभमित्याह ॥ विपुलकमिति। यौवनोद्धतानां कामिनीनां कुचयुगं विपुलकं पुलकरहितमपि घनपुलकोदयं नत्वान्दूरोमोद्गमेनकोमलं सदिति वि रोधः। विपुलं विस्तृतं तदेवविपलकमित्यविरोधः प्रियैः प्रकामम्परिनोमलमस्येतिपरिमलं तत्कृतं परिमलितं मलिनीकृतं तयापुज्ज्वलम्बिमलमेवचकाशइति विरोधः परिमलवत्कृतं

प्रथममलघुमौक्तिकाभमासीत्श्रमजलमुज्ज्वलगण्डमण्डलेषु। क ठिनकुचतटाग्रपातिपश्चादथगतशर्करतांजगामतासाम् ॥६९ ॥
विपुलकमपियौवनोद्धतानांघनपुलकोदयकोमलंचकाशे । परिम लितमपिप्रियैःप्रकामंकुचयुगमुज्ज्वलमेवकामिनीनाम् ॥ ७० ॥
अविरतकुसुमावचायखेदान्निहितभुजालतयैकयोपकण्ठम्। विपु लतरनिरन्तरावलग्नस्तनपिहितप्रियवक्षसाललम्बे ॥ ७१ ॥ *

परिमलितमित्यविरोधःमत्वन्तात्तत्करोतीति णिचिकर्मणिक्तःणाविष्ठभावे विन्मतोर्लुक्। अपिर्विरोधेविरोधाभासालङ्कारसंसृष्टिः ॥ ७० ॥ *************** ॥
॥ अथैकस्याः प्रियकण्ठावलम्बनेश्रमानुभावमेकेनाह ॥ अविरतेति। अविरतोयःकुसु मानामवचायोहस्तेनलवनं। हस्तादानेचेरस्तेयइतिघञ्। तेनयःखेदःतस्माद्धेतोरुप कण्ठं प्रियकण्ठे विभक्त्यर्थेऽव्ययीभावः। निहितेभुजालतेययातया । दोःप्रवेष्टोभुजोबा हुर्भुजाचस्मर्यतेबुधैरितिवैजयन्ती । विपुलतरौनिरन्तरमवलग्नौसंश्लिष्टौचयौस्तनौ ताभ्यां पिहितम्छादितम्प्रियस्यवक्षोययातयैकयास्त्रियाललम्बेलम्बितम्। भावेलिट्॥

७१ ॥ ****************************** ॥

॥ अथापरस्याः अङ्गभङ्गाख्यमपरमनुभावमाह ॥ अभिमतमिति । तनुः काचित्तन्वी । बीतोगुणवचनादिति विकल्पात् ङीकारः अभिमतमभितः प्रियमभीत्यर्थः । उन्नति वित्तं औन्नत्येन प्रतीतम् प्रसिद्धं विदे र्भावार्थाद्वित्तो भोगप्रत्यययो रिति प्रत्ययार्थे निष्ठान त्वाभाव निपातः । कुचयुगमुन्नमय्य उत्तुङ्गीकृत्य कृतो ऽङ्गभङ्गो गात्र विजृम्भणं यया अतया । वे ल्लितेर्मिथोवेष्टिते बाहुवल्ल्यौ भुजलते यया सा । नद्यृतश्चेति कप् । क्लमच्छलेन श्रमापनोद क चेष्टाव्याजेनेत्यर्थः अभिलषितमालिङ्गनाद्यभिलाषं व्यवृणुत प्रकटितवती । वृणोतेर्लुङ् । प्रौढेयमुक्ता च ॥ ७२ ॥ ****************** ॥

अभिमतमभितः कृताङ्गभङ्गा कुचयुगमुन्नतिवित्तमुन्नमय्य । तनुरभि लषितं क्लमच्छलेन व्यवृणुत वेल्लितबाहुवल्लरीका ॥ ७२ ॥ हि मलवसदृशः श्रमोदविन्दूनपनयता किल नूतनोढवध्वाः । कुचकल शकिशोरकौ कथञ्चित्तरलतया तरुणेन पस्पृशाते ॥ ७३ ॥ *

॥ अथकस्याश्चिन्मुग्धायाः प्रियचापलोक्तिद्वारा स्वेदोद्गमम्प्रकटयति ॥ हिमेति । हि मलवसदृशो हिमकणनिभान् श्रमोदविन्दून् स्वेदबिन्दूनित्यर्थः । मन्थोदनेत्यादिना उदकस्योदादेशः । अपनयता किल प्रमार्जनेव ननु नचनात्पर्यमितिभावः । तरुणेन यूना नूतनोढवध्वाः कुचौ कलशाविव तौ च किशोरकाविव उल्ललनसाम्यात् अश्वशावाविव अश्वशावः किशोरक इति अमरः । तौ कुचकलशकिशोरकौ उभयत्राप्युपमितसमासः कथञ्चित्क्लेशेन सप्रतिषेधमेवेत्यर्थः । तरलतया चपलतया उत्सुकतकतयेत्यर्थः पस्पृशा ते स्पृष्टौ । स्पृशेः कर्मणि लिट् मुग्धेयम् ॥ ७३ ॥ ****************** ॥

॥ अथसर्वासामेव स्वेदोद्रेकम्वर्णयति ॥ गत्वेति । युवतयः एव सरितस्तासां स्वेद एवापू

रः प्रवाहः जघनमेवपुलिनं तत्रोद्रेकं गत्वा रुद्धः आवृत्तो मध्यप्रदेशोऽवलग्नभागः प्रवाहद्रेढ्य
स्य येन सः पूर्णनाभीह्रदान्तः रेफान्तमकरान्तम्बा । पूर्णेति । पूरेर्यन्तात्कर्मणिक्तः वाद
न्तेत्यादिना णुगिडुप्रतिषेधनिपातः । उच्चैरुन्नतौ कुचावेव तटौ तयोर्भुवम्प्रदेशमुल्लंघ्य रोमकू
पान् रोमरंध्राणि तान्येव कूपान् प्लावयन् पूरयन् गण्डस्थलानि कपोलभागान् उन्नतभ्रूभङ्गं
स्य प्राप । अत्र युवतिषु सरित्त्वस्य तदवयवेष्ववयवानां च निरूपणात्समवस्तुविषयसावयव
रूपकं श्लेषानुप्राणितम् । मन्दाक्रान्तावृत्तं । मन्दाक्रान्तां जलधिषडगैर्म्भौ नितौ ताद्गुरू चे
दिति लक्षणात् ॥ ७४ ॥ ***************************** ॥

॥ एवमध्वश्रमानुभावं स्वेदोद्रेकं वर्णयित्वा तत्फलभूतां जलविहारेच्छामासां दर्शयति ॥

गत्वोद्रेकं जघनपुलिने रुद्धमध्यप्रदेशः क्रामन्नूरुद्रुमभुजलताः पूर्ण
नाभीह्रदान्तः । उल्लंघ्योच्चैः कुचतटभुवं प्लावयन् रोमकूपान् स्वेदापू
रो युवतिसरितां व्यापगण्डस्थलानि ॥ ७४ ॥ प्रियकरपरिमार्गाद्
ङ्गनानां यदाभूत्पुनरधिकतरैव स्वेदतोयोदयश्रीः । अथ वपुरभिषेक्तु
न्मास्तदाम्भोभिरीषुर्वनविहरणखेदम्लानमम्लानशोभाः ॥ ७५ ॥

प्रियेति । यदा अङ्गनानां प्रियकरपरिमार्गात् । प्रियकरस्पर्शनात् मृजेर्घञ्प्रत्ययः । स्वेदतो
योदयश्रीः स्वेदोद्गमसम्पत्पुनर्भूयोऽप्यधिकतरैवाभूत् तदा अम्लानशोभाः अक्षीणकान्तयः
वपुषि म्लानेपीतिभावः । ना अङ्गनावने विहारणखेदेन म्लानं । म्लायतेः कर्त्तरि क्तः संयोगा
देरातो धातोर्यण्वतः इति निष्ठानत्वं । वपुरङ्गं अयकार्त्स्न्येन । मङ्गलानन्तरारम्भप्रश्नका
र्त्स्न्येष्वथो अथेत्यमरः । अम्भोभिरभिषेक्तुं ईषुः इच्छन्तिस्म । इषेर्लिट् । अत्र पूर्ववाक्य
स्योत्तरवाक्यार्थसमर्थनहेतुकत्वेनोपनिबन्धाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । मा
लिनीवृत्तमुक्तम्मध्यनेच ॥ ७५ ॥ *************************** ॥

इतिश्रीपदवाक्यप्रमाणपारावरीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघव्याख्यानेसर्वङ्कषाख्येसप्तमःसर्गः ॥ ७ ॥ ******************* ॥

इतिश्रीमाघकृतौ,शिशुपालवधेमहाकाव्येवनविहारोनामसप्तमःसर्गः ॥७॥



॥ अथवपुरभिषेक्तुंतास्तदाम्भोभिरीषुरित्युक्तंतदेववर्णयितुमारभते ॥ आयासादिति ॥ अलघुतरस्तनैःपृथुतरकुचैरितिमांद्यहेतूक्तिः । स्तनद्भिर्भूषाभिःश्वसद्भिर्वाशब्दाय मानैः । स्तनशब्दइतिधातोर्लटःशत्रादेशः । अविकचलोचनारविन्दैःश्रमनिमीलि ताक्षिपद्मैः । आयासाद्गमनविहारखेदात् । श्रान्तानांक्लान्तानांयोषितांतैःसमूहैःकर्तृभिः उर्व्यांनिहितानिनिःक्षिप्तानि । डुमिञ्प्रक्षेपणइतिधातोःकर्मणिक्तः । तथैवचलन्तिप दानियस्मिन्कर्मणितत्तथाउत्क्षेपणाशक्त्याभुविविलम्बादाकृष्यमाणचरणमित्यर्थः । अ म्भोऽम्भःप्रतिकथमपिप्रचेलेप्रचलितंतद्भावेलिट् । स्वभावोक्तिरलङ्कारः । स्वभावो क्तिरसौचारुयथावद्वस्तुवर्णनमितिलक्षणात् । अस्मिन्सर्गेप्रहर्षिणीवृत्तम् । म्नौज्रौग

आयासादलघुतरस्तनैःस्तनद्भिःश्रान्तानामविकचलोचनारविन्दैः ।
अम्भःकथमपियोषितांसमूहैस्तैरुर्वीनिहितचलत्पदंप्रचेले ॥ १ ॥
यान्तीनांसममसितभ्रुवांनतत्वादंसानांमहतिनितान्तमन्तरेऽपि ।
संसक्तैर्विपुलतयामिथोनितम्बैःसंबाधंबृहदपितद्बभूववर्त्म ॥ २ ॥

स्त्रिदशयतिःप्रहर्षिणीतिलक्षणात् ॥ १ ॥ ******************** ॥

॥ यान्तीनामिति ॥ सममितिशेषयान्तीनां । आच्छीनद्योर्नुमितिवैकल्पिकोनुमागमः । असितभ्रुवांस्त्रीणामंसानामुन्नतत्वाद्धेतोर्नितान्तंमहत्यन्तरेऽवकाशेऽपिविपुलतयाहे तुनामिथःसंसक्तैरन्योन्यश्लिष्टैर्नितम्बैर्बृहद्विस्तृतमपितद्वर्त्मसम्बाधमभूत् । सम्बाधःसङ्क टं । सङ्कटंनातुसम्बाधइत्यमरः । यत्रनताभिविशेषणाद्धेतोःसम्बाधमनुवर्ततइतिभा ष्यकारादिप्रयोगाद्दिश्यते । बभूव । नतांसत्वंनितम्बवैपुल्योक्त्याशैत्यंद्योतितंश्रयउक्तः ॥ असम्बाधेऽपिसम्बाधोक्तेरतिशयोक्तिः ॥ २ ॥ ******************** ॥

॥ नीरन्ध्रैरिति ॥ नीरन्ध्रैःसान्द्रैर्द्रुमैःशिशिरांभुवंव्रजन्तीर्गच्छन्तीःताःस्त्रीःअनुदिनरश्मि

र्तांशुः क्षणमनिलेनाकुलीकृतानांचालितानांशाखानामन्तरालैर्नीरंध्रैर्मुकुरान् लचालनजनितैरवकाशैर्मुकुरैः कौतुकादौत्सुक्यादिवसाशङ्कम्परदारत्वात्सभयमित्यर्थः । करैःपस्पर्शस्पृष्टवान् । चलताकरणहेतुकस्तनपनकरस्पर्शस्यौत्सुक्यहेतुकत्वोत्प्रेक्षणा क्षुणहेतूत्प्रेक्षा ॥ ३ ॥ ****************************** ॥

॥ अथकस्याश्चिद्वृत्तंस्वेतानपत्रचन्द्रत्वेनोत्प्रेक्षते ॥ एकस्याइति । वदनसरोजेनसरोमुखपङ्कजेननिर्जितश्रीश्चन्द्रमाःएतेनवदनसरोजस्य चन्द्रविजयात्सरोजानारवैलक्षण्यंचन्द्रस्यनिःपृष्टत्वञ्चोक्तं । अतएवसेवायैनत्सेवनार्थंआगत्यतपनकरैः करजितायाःभीषिता

नीरंध्रद्रुमशिशिरंभुवंभजन्तीःसाशङ्कंमुकुरिवकौतुकात्करैस्ताः । पस्पर्शक्षणमनिलाकुलीकृतानांशाखानामनुदिनरश्मिरन्तरालैः ॥३॥
एकस्यास्तपनकरैःकरालितायाविभ्राणःसपदिसितोत्तवारणत्वम् । सेवायैवदनसरोजनिर्जितश्रीरागत्यप्रियमिवचन्द्रमाश्चकार ॥ ४ ॥
स्वंरगात्परिवितन्वतोत्तरीयंकान्तेनप्रतिपदवारितातपायाः । सच्छत्राद्परविलासिनीसमूहाच्छायासीदधिकतरातदापरस्याः ॥ ५ ॥

याःपीडितायाइत्यर्थः । करालोभीषणेन्यर्वदितिविश्वः । एतेनचसेवावकाशोदर्शितः एकस्याःकस्याश्चिदङ्गनायाः सपदिआतपक्षणेएवसितोत्तवारणत्वंश्वेतातपत्र विभ्राणःसन्प्रियंचकारेवइतिक्रियास्वरूपोत्प्रेक्षापराजितः कयाचित्सेवनयाजेतुश्चित्तसन्तोषमुपार्जयतीतिभावः ॥ ४ ॥ ****************** ॥

॥ स्वमिति ॥ रगाद्धेतोरुपरिप्रियायामूर्द्धेनिसंस्वकीयमुत्तरीयंवितन्वताविस्तारयता कान्तेनप्रियेणप्रतिपदम्पदेपदेवारितः आतपोयस्याःतस्याअपरस्याःकस्याश्चिदङ्गना याःसच्छत्रातछत्रयुक्तादपरविलासिनीसमूहात्सकाशात् । पञ्चमीविभक्तेरितिपञ्चमी

अधिकतरच्छायाअनातपःकान्तिश्चतदाआसीत् । छत्रच्छायातोपिकान्तस्तस्यभूतो
त्तरीयच्छायैवानन्यसाधारणीज्यायसीमुखकान्तिरपितस्याएवभूयसीतिभावः । छाया
त्वनातपेकान्ताविन्यमरः । एतेनसच्छत्रादच्छत्रस्याधिकच्छायेतिविरोधोपिनिरस्तइ
तिविरोधाभासोऽलङ्कारः ॥ ५ ॥ ************************ ॥

॥ संस्पर्शेति ॥ करतलेनग्रीवल्लभायस्यास्तस्याःसहसेनतदंसांगृहीत्वागच्छन्त्याइत्य
र्थः । अतएवनीरजाक्ष्याःसर्वाङ्गेसंस्पर्शप्रभवेनप्रियाङ्गसङ्गप्रभवेनसुखेनोपचीयमाने
पोषङ्गमितेसति । अतएवगाढतांदृढत्वंव्रजदपिविगलितनीविसुखपारवश्याद्विश्लिष्ट
ग्रन्थिकौशेयंदुकूलंअजस्रंसस्रंसेस्रस्तम् । एषाद्भुताहर्षितरोमाच ॥ ६ ॥ **** ॥

संस्पर्शप्रभवसुखोपचीयमानेसर्वाङ्गेकरतललग्नवल्लभायाः । कौशेयं
व्रजदपिगाढतामजस्रंसस्रंसेविगलितनीविवारिजाक्ष्याः ॥ ६ ॥
गच्छन्तीरलसमवेक्ष्यविस्मयिन्यस्तास्तन्वीर्नविदधिरेगतानिहंस्यः ।
बुध्वावाजितमपरेणकाममाविष्कुर्वीतस्वगुणमपत्रपःकएव ॥ ७ ॥

॥ गच्छन्तीरिति ॥ हंस्योहंसाङ्गनाःअलसम्मन्दङ्गच्छन्तीस्तास्तन्वीःस्त्रीरवेक्ष्यविस्मयि
न्योगतसौष्ठवाद्विस्मयवत्यःसत्योगतानिस्वयंलीलागमनानिनविदधिरेनचक्रुःलज्जये
तिभावः । तथाहिपरेणजितंस्वगुणंबुध्वाबुध्वापीत्यर्थः । कएवकोवाअपत्रपःसन्
कामंआविष्कुर्य्यात्प्रकाशयेत्नकश्चिदपीत्यर्थः । इह त्रपधातोश्चाप्रत्ययस्येतिविसर्जनी
यस्यषत्वं । अत्रनिरस्ताग्विवेकित्वातिशयोक्त्यागतिकरणनिषेधस्तत्समर्थनार्थोयमर्था
न्तरन्यासः ॥ ७ ॥ ************************** ॥

॥ श्रीमद्भिरिति ॥ श्रीमद्भिःशोभावद्भिःनिविडावृहन्तोनितम्बविम्बाःकटिपश्चाद्भागा
येषांतैःमाधवस्येमाःमाधव्यस्तासांहरिवधूनांआरुह्यतइत्यारोहैःकटिपुरोभागैःजघनैः

जितपुलिनानि जितसैकतानि सिन्धोः रवरोधनानि समुद्रमहिष्याः नद्या इत्यर्थः वैलक्ष्यात्
राजयक्ष्मनमःसंकोचाङ्कैः पाषाणेषु स्खलनेनाभिघातेन विलोलं यथातथा आमुयचुः
अगुः नूनं नदीनां स्वाभाविकाः पाषाणस्खलिता मुगतेः वैलक्ष्यहेतुकत्वोत्प्रेक्षणात् गुणहे
तूत्प्रेक्षा ॥ ८ ॥ ************************* ॥

॥ मुक्ताभिरिति ॥ स्त्रीलोकः स्त्रीजनः कर्ता। सलिलरयेण स्तानुन्नाः मुक्तये मुक्तास्फोटा
सारवपेश्यः कोशाःपुटाः इमियावत्। मुक्तास्फोटः स्त्रियां शुक्तिः पेशी कोशः इति हीनेइति
वामरः। ताभिर्मुक्ताभिर्मौक्तिकैः। अथमौक्तिकं मुक्तेत्यमरः। स्तनरुचिक्तनशोभं नदीनां

श्रीमद्भिर्जितपुलिनानि माधवीनामारोहैर्निविडवृहन्नितम्बबिम्बैः।
पाषाणस्खलितविलोलमाशु नूनं वैलक्ष्यादुययुरवरोधनानि सिन्धोः॥
८॥ मुक्ताभिः सलिलरयास्तशुक्तिपेशीमुक्ताभिः स्तनरुचिसैकतं न
दीनाम्। स्त्रीलोकः परिकलयाञ्चकारतुल्यं पल्यङ्कैर्विगलितहारचा
रुभिः स्वैः॥ ९ ॥ आघ्राय श्रमजमनिंद्यगन्धबन्धुं निश्वासश्वसन
मसक्तमङ्गनानाम्। आरण्याः सुमनसई षिरे न भृङ्गैरौचित्यं गणय
ति को विशेषकामः ॥१०॥ ✳✳✳✳✳✳✳✳✳✳✳✳✳✳

सिकतासैकतं
सिकतामयं सैकतं पुलिनं। तोयोत्थितं तत्पुलिनं सैकतं सिकतामयं इत्यमरः। सिकतासैकतं
स्त्रियाञ्चेत्यण्प्रत्ययः। विगलितैर्विशीर्णैर्हारैः चारुभिः स्वैः पल्यङ्कैः शयनैः। शयनं मञ्चपर्य
ङ्कपल्यङ्काः खट्वया समा इत्यमरः। तुल्यं तत्सदृशं परिकलयाञ्चकार मेने। पूर्णोपमेयम् ॥९॥
॥ आघ्रायेति ॥ भृङ्गैः कर्तृभिः श्रमजं मध्यमौत्थं अनिंद्यगन्धस्य श्लाघ्यगन्धस्य बन्धुं सहचरं
तद्वन्नामित्यर्थः। अङ्गनानां निश्वासश्वसनं निश्वासमारुतं असक्तमप्रतिषिद्धं आघ्राय अ
रण्येभवाः आरण्याः सुमनसः पुष्पाणि नेषिरे नेष्टाः। इषइच्छायां कर्मणि लिट्। अनु

चितोपमकाण्डेपरिचितपरित्यागइत्याह । विशेषकंकामयतेइति विशेषकामः । शैलित्रा
मिभिक्षाचरिभ्योणइतिणप्रत्ययः । अविषयङ्गरएयति नकोपीत्यर्थः । अर्थान्तरन्यासः ॥१०॥

॥ आयान्त्यामिति ॥ निजयुवतौवनादायन्त्यामागच्छन्त्यांसत्यांनिःशङ्कंसमर्थंअपरशिख
ण्डिनीजारिणींबर्हिणांव्यवधनन्छादयन्तंमयूरंपुरआलोक्यकामिन्यः प्रियेषुनार्जवंकौ
टिल्यंअन्वधुरविश्वसन्वित्यर्थः । कुटिलाःपुरुषाइतिनिश्चिक्युरित्यर्थः । दृष्टान्तेर्लुङिगानिष्ठे
त्यादिनासिचोलुक् । आनइतिमर्हेलुडादेशः । अन्वाराइत्युपसर्गवशादनिर्वक्तव्येमिश्रबद्ध
हत्यधानेः श्राक्प्रयोगः ॥ ११ ॥ ******************** ॥

॥ ****************** ॥ ४ ॥ [illegible]

आयान्त्यांनिजयुवतौवनान्निःशङ्कंबर्हिणामपरशिखण्डिनींभरेण ।
आलोक्यव्यवदधतंपुरोमयूरंकामिन्यःअदधुरनार्जवंनरेषु ॥ ११ ॥
आलापैस्तुलितरवाणिकामिनीनांमाधुर्यादमलपतत्रिणांकुलानि ।
अन्तर्द्धामुपययुरुत्पलावलीषुप्रादुःस्यात्कइवजितःपुरःपरेण ॥ १२ ॥
मुग्धायाःस्मरललितेषुचक्रवाक्यानिःशङ्कंदयितनमेनचुम्बितायाः । प्रा
णेशानभिविदधुर्विधूतहस्ताःसीत्कारंसमुचितमुत्तरंतरुण्यः ॥ १३ ॥

[illegible]

॥ आलापैरिति ॥ माधवीनांहरिवधूनांआलापैःकर्तृभिःमाधुर्याद्धेतोस्तुलितरवाणिति
रस्कृतरवानिअमलपतत्रिणांहंसानांकुलानिउत्पलावलीष्वन्तर्द्धांअन्तर्द्धानंअन्तः श
ब्दस्याङ्किविधिणत्वेषूपसर्गत्वंवाच्यमितिअन्तःशब्दस्योपसर्गत्वादातश्चोपसर्गेइत्यङ्प्र
त्ययः । उपययुर्युक्तंचैतदित्याह । तथाहिपरेणजितःकइवशब्दोवाक्यालङ्कारेपुरोजेतु
रग्रेप्रादुःस्यात्प्रादुर्भवेत् उपसर्गप्रादुर्भ्यामस्तिर्यच्परइतिषत्वंअर्थान्तरन्यासः ॥ १२ ॥
॥ मुग्धायाइति ॥ दयिततमेननिःशङ्कंनिर्विचारंचुम्बितायादृष्टायाःस्मरललितेषुचुम्बना
द्यनन्तरकार्येषुसीत्कारादिकामचेष्टितेषुमुग्धयाः मूढायाः चक्रवाक्याः समुचितंयोग्यंसी

कारंसीत्कारद्रूपंउत्तरंकथ्यंमहरुषः स्वयंप्राणेशान्अभिषिधूनहस्ताःसन्त्योविदधुः नाद्य
न्यभावनयास्वयंदृष्टाइवसीचक्रुरितिसीत्कारसम्बन्धेसम्बन्धातिशयोक्त्यानत्रासमुद्दीप
नमासीदित्युक्तम् ॥ १३ ॥ ************************ ॥

॥ उक्षिप्तेति ॥ अथानन्तरमुक्षिप्तंस्फुटितस्तरोरुहंविकचारविन्दमेवार्घ्यमर्घद्रव्यंय
स्मिंस्तन्तथासस्नेहंविगतरुतैरालपन्तीस्वागतादिवचनंव्याहरन्तीवस्थितेत्युत्प्रेक्षा । फे
नइवहासस्तेनसहितासफेनहासास्मितपूर्वाभिभाषिणीत्यर्थः । सरसीपुष्करिणीनारी
णामूर्मिभिरेवहस्तैःपाद्यम्पादोदकं । पादार्घाभ्यांचेतियत्प्रत्ययः । व्यतनुतेइतिरूपका
नुप्राणितोत्प्रेक्षाद्वयसङ्करःसापेक्षत्वात् ॥ १४ ॥ ************** ॥

उक्षिप्तस्फुटितसरोरुहार्घ्यमुच्चैःसस्नेहंविहगरुतैरिवालपन्ती । ना
रीणामथसरसीसफेनहासाप्रीत्येवव्यतनुतपाद्यमूर्मिहस्तैः ॥ १४॥
नित्यायानिजवसतेर्निरासिरेयद्रागेणश्रियमरविन्दतःकराग्रैः । व्यक्त
त्वंनियतमनेननिन्युरस्याःसापत्न्यंक्षितितलविद्विषोमहिष्यः ॥१५॥

॥ नित्यायाइति ॥ क्षितितलविद्विषोनरकद्विषोहरेःमहिष्यःकराग्रैःपाणिपल्लवैःकर
सैःरागेणरक्तवर्णेनइच्छयाचश्रियंशोभांरमांचनित्यायाःसदातन्याःनिजवसतेःस्ववास
दरविन्दतोरविन्दान्निरासिरेनिष्कासयाञ्चक्रुःनिश्चक्रुश्चेतियावत् । उपसर्गादस्यत्यू
ह्योर्वावचनमितिविकल्पादात्मनेपदं । अनेननिरासेनास्यश्रियःसापत्न्यंसपत्नीत्वंब्राह्म
णादित्वात्ष्यञ्प्रत्ययः । व्यक्तत्वंनिन्युर्व्यक्तीचक्रुरित्यर्थः । अत्रश्रीशब्देनरमाशोभयोर
भेदाध्यवसायेनश्रीनिवासस्यसापत्न्यव्यक्तीकरणार्थत्वोत्प्रेक्षणात् श्लेषप्रतिभोत्थापितानि
श्रयोक्त्यनुप्राणितेयंफलोत्प्रेक्षेतिसङ्करः ॥ १५ ॥ ************** ॥
॥ आस्कन्दन्निति ॥ सोमन्दःप्रवेशगभीरवेगोयोषितःप्रियकरैर्ह्रार्यमाणहस्ताःप्रियकराव

स्नान्ताः सख्यः यावत्कथमपि नाक्रन्दन् तत्प्राविशन् तावत्संक्रान्तप्रतिमतया संक्रान्तप्रतिबि
म्बतया तदम्बु कर्तृ । औत्सुक्यादुत्कण्ठतया त्वरितममूर्च्छामिव अन्तःप्रावेशयदिवेत्य
र्थः । प्रतिबिम्बसंक्रमणादन्तर्धानेनोत्प्रेक्षणात् क्रियानिमित्ता क्रियास्वरूपोत्प्रेक्षा ॥ १६ ॥
॥ ताइति ॥ ताः कामिन्यः कामिनः कामुकस्य मनङ्गवत्तज्जलं पूर्वम्प्रथमं सचकितं सभयं
यथा तथा गाधमुत्तानमागमत् व्यगमन् तेन ज्ञात्वा पुरः प्रविष्टपुरुषमुखेन नागाधमेतदिति परामृष्टे
त्यर्थः । अन्यत्र दूतमुखेन ज्ञात्वेत्यर्थः । अथोनन्तरं मृदु मन्दम्पदं कृत्वा पदं न्यस्य अन्यत्र तु
स्वयं सम्भाषणादिकं कृत्वेत्यर्थः । अन्तरमभ्यन्तरमाविशन्त्यः प्रविष्टाः सत्यः अन्यत्र रहस्य

आस्कन्दन्कथमपि योषितो न यावद्भीमन्यः प्रियकरधार्य्यमाणहस्ताः
। औत्सुक्यात्त्वरितममुस्तदम्बु तावत्संक्रान्तप्रतिमतया दधाविवान्तः ॥
१६॥ ताः पूर्वं सचकितमागमय्य गाधं ज्ञात्वाथो मृदु पदमन्तरं विशन्त्यः ।
कामिन्यो मनङ्गवकामिनां सरागैरङ्गैस्तज्जलमनुरञ्जयाम्बभूवुः ॥ १७
॥ संक्षोभं पयसि मुहुर्महेभकुम्भश्रीभाजा कुचयुगलेन नीयमाने । वि
श्लेषं युगमगमद्रथाङ्गनाम्नोरुद्वृत्तः क इव सुखावहः परेषाम् ॥ १८॥

मेणि प्रवृत्ताइत्यर्थः । सरागैः साङ्गरागैः सानुरागैश्च अङ्गैः गात्रैरनुरञ्जयाम्बभूवुः तद्वर्णाक्रा
न्तं चक्रुः अन्यत्र त्वनुरक्तं चक्रुरित्यर्थः । श्लेषसङ्कीर्णेयमुपमा ॥ १७ ॥ ****** ॥
॥ संक्षोभमिति ॥ महेभकुम्भश्रीभाजा तत्सदृशश्रीभाजेत्यर्थः । अत एव सम्भवद्वस्तुसम्ब
न्धो निदर्शनालङ्कारः । कुचयुगलेनोच्छ्रितेनेति भावः । पयसि मुहुः संक्षोभं नीयमाने प्रा
प्यमाणे सति रथाङ्गनाम्नोर्युगं चक्रवाकयुगलं विश्लेषं वियोगमगमत् वियोगासहमपीति भा
वः । तथाहि उद्वृत्तः उन्नतो वृत्तः उद्वर्त्तनं यस्येति वा उद्वृत्तः अन्यत्रोद्धत उद्वृत्तवृत्तः उ
न्मार्गवर्त्तीति यावत् क इव को वा परेषां स्वेतरेषां सुखावहः सुखकरः न कोऽपीत्यर्थः अथ

च्चैवमूलानिश्चयोक्तिर्जीविनोर्थान्तरन्यासः ॥ १८ ॥ ************** ॥

॥ आसीनेति ॥ शीतंनसहतइतिशीतालुःशीतभीरुः शीतोत्साभ्यामुस्सहनेआलुच् वक्तव्यः । अतएवसरसिअवतरितुंप्रवेष्टुमनिच्छुरनभिलाषुकाअतएवतटभुविआसीना उपविष्टा । आसेःकर्त्तरिशानच्ईदासइतीकारः । रम्भेकदलीस्तम्भाविवोरूयस्याःसा रम्भोरूःस्त्री । ऊरूत्तरपदादौपम्यइत्यूङ्प्रत्ययः । सलिलगतेनस्वयंसलिलंप्रविष्टेनस स्मितेनभर्त्राविलासिनीक्षितुंकरयुगन्धुन्वानाःकम्पयन्तीधुनोतेः कर्त्तरिशानच् त्ययःसि च्यतेस्मसिक्ता ॥ १९ ॥ ************************* ॥

॥ नेति ॥ अमुनासममनेनभर्त्रासहसरोवगाढुमवगाहितुं । स्वरतिसूतिसूयतिधूञूदि

आसीनातटभुविसस्मितेनभर्त्रारम्भोरूरवतरितुंसरस्यनिच्छुः । धुन्वा
नाकरयुगमीक्षितुंविलासान्शीतालुःसलिलगतेनसिच्यतेस्म ॥ १९ ॥
नेच्छन्तीसमममुनासरोऽवगाढुंरोधस्तःप्रतिजलमीरितासखीभिः । आ
श्लिक्षद्भयचकितेक्षणंनवोढावोढारम्विपदिनदूषितातिभूमिः ॥ २० ॥

तोवेतिविकल्पान्नेडागमः । नेच्छन्तीवाञ्छयाअनिच्छन्ती । नञर्थस्यनशब्दस्यसुप्सुपेति समासः । नञ्समासोवा । अथसखीभिःप्रतिजलंजलंजलम्प्रतिरोधस्तोरोधसः । पञ्च म्यास्तसिल् । ईरितानुन्नानवोढानववधूःभयेनचकितेक्षणंसम्भ्रान्तदृष्टिंयथातथावोढा रम्भर्त्तारमाश्लिक्षत् । आलिङ्गितवती । श्लिषआलिङ्गनेइतिधातोर्लुङिच्लेःक्सादेशः । नचधार्ष्ट्यदोषापत्तिरित्याह । विपदिविपत्तौअतिक्रान्ताभूमिरतिभूमिरमर्यादानदू षिता । आपत्कालेनातिमर्यादेतिन्यायादितिभावः । अर्थान्तरन्यासस्सालङ्कारः ॥ २० ॥ **************************** ॥

॥ तिष्ठन्तमिति ॥ स्तनतुस्तुभाङ्गोस्त्रीअंसःप्रमाणमस्येतिअंसमात्रेअंसप्रमाणे । प्रमाणेद्व

यत्तज्जद्घ्नञ्मात्रच्इतिमात्रच्प्रत्ययः । अवयती जानती किल तथा सम्भावयन्तीत्यर्थः ।
वार्त्तासम्भाव्ययोः किलेत्यमरः । अवपूर्वादिणः शतरि इणो यणिति यणादेशः उगितश्चेति
ङीप् । किलशब्दस्यालीकार्थत्वे मौग्ध्यविरोधः अत एव मौग्ध्याद् विवेकाद् भीर्निर्भीका सती
अभ्येतुं पुमांसमभिगन्तुमियेष इच्छति स्म । अमुना पुमांसा निमज्जतीति द्रुतमाश्लेषि आ
श्लिष्टा ॥ २१ ॥ ************************** ॥

॥ आनाभेरिति ॥ ततभ्रुवा स्त्रिया सरसि आनाभेर्नाभिपर्यन्तं । आङ्मर्यादाभिविध्योरि
ति विकल्पादसमासः । अवगाढे प्रविष्टे सति । गाहेः कर्मणि क्तः । अथ पयसश्चापल्याच्चै
ल्यात् ब्राह्मणादिष्वपि पाठात् ष्यञ् प्रत्ययः । तरङ्गैरेव हस्तैः तरङ्गहस्तैः उच्चायोऽस्यास्तौ

तिष्ठन्तमप्पयसि पुमांसमंसमात्रे तद्दघ्नमात्मवयती किलात्मनोऽपि । अ
भ्येतुमुत्तनुरभीरियेष मौग्ध्यादाश्लेषि द्रुतममुना निमज्जतीति ॥२१॥
आनाभि सरसि नतभ्रुवावगाढे चापल्यादथ सरसस्तरङ्गहस्तैः । उच्चा
यिस्तनयुगमध्यरोहि लब्धस्पर्शानां भवति कुतोऽथवा व्यवस्था ॥२२॥

त्युच्चायि उन्नतिमत् स्तनयुगमध्यरोहि अधिरूढं । भिक्षुकपादप्रसारणन्यायादिति भा
वः । रोहतेः कर्मणि लुङ् । अथवा तथा हीत्यर्थः । लब्धस्पर्शानां लब्धप्रवेशानामित्यर्थः
। कुतः कुत्र वा सार्वविभक्तिकस्तसिः । व्यवस्था मर्यादा भवति न कुत्रापीति भावः प्रायेण सर्वे
ष्वसम्भवब्रह्मचारिण एवेति भावः । अत्र चापल्यादिति द्वयोरपि लोकयोरभेदाध्यव
सायमूलातिशयोक्त्या तरङ्गहस्तैरिति रूपकेण च पयसि कामित्वप्रतीतेः समासोक्तिः तदुप
जीवो चार्थान्तरन्यास इति संसृष्टिः ॥ २२ ॥ *************** ॥

॥ कान्तानामिति ॥ लोलोर्म्मीं च पल्लोर्मिणि । तृतीयादिषु भाषितपुंस्कं पुम्वद्गालवस्येति
विकल्पात् पुंवद्भावः । पयसि महोत्पलमरविन्दं कर्तृ । अरविन्दं महोत्पलमित्यमरः । का

न्तानां मुखरुचाऽहमेकमेव नापास्तं किन्तु तासामक्ष्णोः शोभाभिः कुवलयमप्यपास्तं इति सं
हर्षात्तलोषाद्धेतोरलिविरुतैर्गायन्। अलिरुतरूपं गानं कुर्वन् इति रूपकं। इत्थम्भूतल
क्षणे इति तृतीया। ननर्त्त। नटुः खस्पन्दभिः सहेति न्यायान्नृत्यति स्म। अत्रोर्मिचलनहे
तुके महोत्पलचलने तालिनादसंहर्षहेतुकसमाननृत्यत्वोत्प्रेक्षणात्क्रियानिमित्तक्रियास्व
रूपोत्प्रेक्षा वाच्या ॥ २३ ॥ ************************* ॥

॥ त्रस्यन्तीति ॥ चलाः शफर्य्यः यास्तु कामामत्स्यः। प्रोष्ठीतु शफरीद्वयोरित्यमरः। ताभि
र्विघट्टितैर्विद्धा ऊरू यस्याः सा अत एव त्रस्यन्ती विभ्यती। वाभ्राशेत्यादिना विकल्पात् श्य
नि शतरि ङीप्। वामौ सुन्दरौ ऊरू यस्याः सा वामोरूः स्त्री। संहितशफलक्षणवामादेश्चे

कान्तानां कुवलयमप्यपास्तमक्ष्णोः शोभाभिर्न मुखरुचाऽहमेक एव।
संहर्षादलिविरुतैरितीव गायन्लोलोर्मौ पयसि महोत्पलं ननर्त्त ॥ २३ ॥
त्रस्यन्ती चलसफरीविघट्टितोरूर्वामोरूरतिशयमाप विभ्रमस्य। क्षु
भ्यन्ति प्रसभमहो विनापि हेतोर्लीलाभिः किमु सति कारणे रमण्यः ॥ २४ ॥

न्यूङ्प्रत्ययः। विभ्रमस्य विलासस्यातिशयमपि तथा हि रमण्यो हेतोर्विना कारणं विनापि
। पृथग्विनेत्यादिना विकल्पात्पञ्चमी। लीलाभिर्विलासैः प्रसभम्प्रकामं क्षुभ्यन्ति विजृम्भ
न्ते अहो निःकारणक्षोभादाश्चर्यमित्यर्थः। कारणे सति किमु वक्तव्यम्। अत्राप्रकृतनिः
कारणक्षोभकथनात्सकारणक्षोभस्य कैमुत्यन्यायलब्धवर्णनादर्थापत्तिरलङ्कारः। दण्डा
पूपिकयार्थान्तरस्यापतनमर्थान्तरन्यास इति सूत्रम् ॥ २४ ॥ ******** ॥

॥ आकृष्टेति ॥ अथानन्तरमाकृष्टाः प्रतनवो वपूंष्येव लतास्तैः स्वरद्भिः प्लवमानैः प्रहृता आ
यता विलोलास्वलाबाहव एव पक्षा गरुत्मन्तो येषां तैः इति गिरिधर्मस्य पक्षवत्वस्य तदवयवेषू
पचारः। उरसि भिन्दाङ्गैर्योषाणां स्त्रीणां उरोजैरेव गण्डशैलैर्गिरिच्युतैः स्थूलोपलैस्तस्यास्तर

एवमहार्णवस्य स्यनदम्भः अक्षोभितं । क्षुभ्यतेर्ण्यन्तादण्यन्ताद्वा क्षुभ्नातेः कर्मणि लुङ् । समस्तवस्तुविषयकं सावयवं रूपकम् ॥ २५ ॥ ******************* ॥

॥ गाम्भीर्यमिति ॥ गाम्भीर्यमगाधत्वं अविकारिचित्तत्वं च दधदपि गम्भीरः सन्नपि रन्तुं विहर्तुं सङ्गन्तुं चाङ्गनाभिः जघनविघट्टनेन सङ्घर्षेण प्रक्षोभं चलनं चित्तविकारं च नीतः अत एव विकसितम्बारिजमाननमिव वारिजमिव चाननं यस्य सः अम्भांसि धीयन्तेऽस्मिन्निति अम्भोधिर्जलाशयः कश्चित्पुमांश्च नतुल्यो गम्यते । कर्मण्यधिकरणे चेति कप्रत्ययः । तपदिमर्यादां सीमानं औचितीं च विलंघयाम्बभूव लंघितवान् । धीरोऽपि स्त्रीसन्निकर्षाद्विकि

आकृष्टप्रतनुवपुर्लतैस्तरङ्गैस्तस्याम्भस्तदथसरोमहार्णवस्य । अक्षोभिप्रसृतविलोलबाहुपक्षैर्योषाणामुरुभिरुरोजगण्डशैलैः ॥ २५ ॥ गांभीर्यन्दधदपिरन्तुमङ्गनाभिः संक्षोभं जघनविघट्टनेन नीतः । अम्भोधिर्विकसितवारिजाननोऽसौमर्य्यादांस पदि विलंघयाम्बभूव ॥ २६ ॥ आदातुन्दयितमिवावगाढमारट्टूर्मीणांततिभिरभिप्रसार्य्यमाणाः । कस्याश्चिद्विततचलच्छिखाङ्गुलीकोलक्ष्मीवान्सरसिरराज केशहस्तः ॥ २७ ॥ ✳✳✳✳✳✳✳✳✳✳✳✳✳✳

यतेइति भावः । अत्र गाम्भीर्यादिप्रकृताम्भोधिविशेषणसाम्याद प्रकृतविशेष्यपुरुषप्रतीतेः समासोक्तिरलङ्कारः । सा च प्रतीयमानभेदाध्यवसायमूलातिशयोक्त्यनुप्राणितेति सङ्करः ॥ २६ ॥ ***************************** ॥

॥ आदातुमिति ॥ सरसि विततः प्रसारिताश्चलन्त्यश्च शिखा अग्राण्येवाङ्गुलयो यस्य सः । नद्यृतश्चेति कप् । लक्ष्मीवान् शोभावान् । मादुपधायाश्च मतोर्वोऽयवादिभ्य इति मतुपो मकारस्य वत्वं । कस्याश्चित्केशहस्तः केशपाशः । पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्प

रेइत्यमरः । हस्तइतिकरश्चश्यन्यते । आरात्समीपे । आराद्दूरसमीपयोरित्यमरः । अवगाढमन्तर्मग्नंदधितमादातुमिवकर्मीणानातिभिस्समूदेरभिप्रसार्यमाणोऽभितोव्यापार्यमाणःसनहरज । अवादातुमिवप्रसार्यमाणइतिप्रसारणस्यादानत्वोत्प्रेक्षणादियंक्रियानिमित्तेक्रियाफलोत्प्रेक्षा । साचचलच्छिखाङ्गुलीकइतिरूपकानुप्राणितयाहस्तइतिश्लेषमूलयावाच्यस्यकलापस्यप्रतीयमानात्कराद्भेदे अभेदरूपातिशयोक्त्यानिर्व्यूढेतिसङ्करः ॥ २७ ॥ ******* ॥ *************** ॥

॥ उन्निद्रेति ॥ उन्निद्रंवनप्रियकंअसनकुसुमं । सर्ज्जकासनबन्धूकपुष्पप्रियकजीवकाइत्यमरः । तदेवमनोरमंकनकगौरमित्यर्थः । रमण्याःवपुःसरसिप्रकाशमेवजलमग्नमपिवैमल्यात्प्रत्यक्षमेवसरोजे । तथाहि । जलौघोजलमूरोजडौघोमुर्खजनश्चडलयोरै

उन्निद्रप्रियकमनोरमंरमण्याःसंरोजेसरसिवपुःप्रकाशमेव । युक्तानांविमलतयानिरस्क्रियायैनाक्रामन्नपिहिभवत्यलंजलौघः ॥२८॥
किंनावत्सरसिसरोजमेतदाराद्दाहोस्विन्मुखमवभासतेयुवत्याः । संशय्यक्षणमितितिनिश्चिकायकश्चिद्विब्बोकैर्बकसहवासिनांपरोक्षैः ॥२९॥

भेदात् । आक्रामन्नावृण्वन्नपिअन्यत्राधिक्षिपन्नपिविमलतयावैमल्येनयुक्तानांमुग्धानांनिरस्क्रियायैनिरोधानायपरिभवायचअलंसमर्थोनभवतिहि । श्लेषमूलायाभेदेऽभेदरूपातिशयोक्त्यनुप्राणितोयमर्थान्तरन्यासः ॥ २८ ॥ ************* ॥

॥ किंमिति ॥ सरस्यारादूरदेनपुरोवर्त्तिनावत्सरोजंकिंआहोस्विन्उतयुवत्याःमुखंअवभासतेइतिक्षणंसंशय्यसंदिह्य । शीङःक्त्वोल्यप्अयङ्कितिइत्ययङादेशः । कश्चिद्विलासीववकसहवासिनांबकसहचारिणांपद्मानामित्यर्थः विलासशून्यनाद्योतनार्थमित्यनिर्देशः । परोक्षैरप्रत्यक्षैरननुभूतचरैरविद्यमानैरितियावत्विब्बोकैर्विलासैरित्यर्थः

यद्यपिविद्योकोनादक्रियेत्युक्तंतथापिविशेषवाचिनांसामान्येलक्षणेत्यदोषः। निश्चिता यविशेषदर्शनान्मुखमेवेतिनिश्चितवानित्यर्थः। सन्देहालङ्कारोयम्विशेषोविषयोयत्रसा दृश्यात्कविसंमतात्। सन्देहगोचरोस्यातांसन्देहालंकृतिर्मतेतिलक्षणात्। सोयन्ते निश्चयोक्तेर्निश्चयान्तः॥ २९॥ ************************ ॥

॥ अथजलक्रीडासम्भारमाह॥ शृङ्गाणीति। द्रुतेनतप्तेनिषिक्तेनकनकेनोज्ज्वलानि लिप्तानीत्यर्थः। शृङ्गाणिक्रीडाम्बुयन्त्राणि। शृङ्गंप्रभुत्वेशिखरेचिह्नेक्रीडाम्बुयन्त्रकइ तिविश्वः। गन्धाश्चन्दनकुंकुमादिगन्धद्रव्याणि। अतएवपुंस्त्वंबहुत्वंच। गन्धस्तुसौर भेन्त्येगन्धकेगर्वलेशयोः। सएवद्रव्यवचनोबहुत्वेपुंसिचस्मृतइत्यभिधानात्। पृथुवि शालंकुचकुम्भसङ्गिकुचावरणंकुसुम्भेनरक्तंकौसुम्भम्। तेनरक्तंरागादित्यण्प्रत्ययः। वा

॥ शृङ्गाणिद्रुतकनकोज्ज्वलानिगन्धाःकौसुम्भंपृथुकुचकुम्भसङ्गि वासः। मार्द्वीकंप्रियतमसन्निधानमासन्नारीणामितिजलकेलिसा धनानि॥ ३०॥ *****************

सौतत्वंमृद्वीकायाविकारोमार्द्वीकंद्राक्षामद्यं। मृद्वीकागोस्तनीद्राक्षेत्यमरः। किञ्चप्रि यतमसन्निधानंसर्वसाफल्यकारणमितिभावः। इत्येतानिनारीणांजलकेलिसाधनानि जलक्रीडापायाआसन्। उद्दीपकसम्पत्तिरुक्ता। अत्रशृङ्गादीनांकेलिसाधनत्वरूप तुल्यधर्मयोगात्प्रकृतत्वाच्चकेवलप्रकृतगोचरातुल्ययोगिता॥ ३०॥ ****** ॥

॥ उत्तुङ्गादिति ॥ अनिलेनवेगानिलेनचलांशुकाश्चलद्वसनाअङ्गनाउत्तुङ्गात्तटा त्पाद्यदर्शिनाअयोत्प्रेक्षिणामनर्थाशङ्किनामित्यर्थः। प्रियाणांचेतोभिःसहतेषान्तै र्व्यवधानादितिभावः। गुरुभिर्गुर्वीभिः। वोतोगुणवचनादितिविकल्पादनीकारः। श्रो णीभिर्हेतुनाअनूर्णमन्दमुत्पतन्त्यस्तोयेषुद्रुततरंनिपेतुः। गुरुत्वस्यपतनहेतुत्वादुत्पतन

विरोधित्वाच्छीघ्रपातो मन्दोत्पतनत्वेनेति भावः। अत्र प्रियचेतःपाताङ्गनापातयोः कार्यकार
णयोरसहभाविनोः सहभावोक्तेः कार्यकारणयोः पौर्वापर्यविध्वंसनरूपातिशयोक्त्युपजी
विना सहोक्तिरलङ्कारः। साहार्थेनान्वयो यत्र भवेदतिशयोक्तितः। कल्पितौपम्यपर्य
न्ता सा सहोक्तिरिष्यत इति लक्षणात्। चेतोवत्पेतुरित्यौपम्यकल्पनया कार्यगतानामुत्वभा
वप्रतीतेश्चमत्कार इति रहस्यम्। तात्कालिकांशुचलनादि सूक्ष्मस्वभावविशेषप्रकाश
नात्स्वभावोक्तिश्चेति संसृष्टिः ॥ ३१ ॥ ****************** ॥
॥ मुग्धत्वादिति ॥ मुग्धत्वान्मूढत्वादविदिताः कैतवप्रयोगा मुखसेचनादिकपटाचरणा
नि याभिस्ताः अतएव सपदि पराजयङ्गच्छन्त्यस्तास्तरुण्यः कान्तैः सहाभिसरणं स्वयमभि

चतुरङ्गादनिलचलांशुकान्तटान्ताश्चेतोभिः सह भयदर्शिनां प्रियाणा
म्। श्रोणीभिर्गुरुभिरतूर्णमुत्पतन्त्यस्तोयेषु द्रुततरमङ्गना निपेतुः ॥
३१ ॥ मुग्धत्वादविदितकैतवप्रयोगा गच्छन्त्यः सपदि पराजयं तरु
ण्यः। ताः कान्तैः सह करपुष्करेरिताम्बुव्यात्युक्षीमभिसरणग्लहा * * * * * * * * * * * * * * *
मदीव्यन् ॥ ३२ ॥ * * * * * * * * * * * * * * * * *

गमनं ग्लहो द्यूतं पणो यस्यास्ताम्। पणोऽक्षेषु ग्लह इत्यमरः। अक्षेषु ग्लह इति ग्रहेरेवाक्ष
पणेऽलत्वं निपातः। अप्रत्ययस्तु ग्रहवृदृनिश्चिगमश्चेत्येव सिद्ध इति केचित्। अन्ये तु ग्ल
हि प्रकृत्यन्तरमङ्गीकृत्याप्रत्यय एव निपातो घञ्वापदीत्याहुः। करपुष्करैः करकमलैरी
रितैः क्षिप्तैरम्बुभिर्व्यात्युक्षीं व्यतिहारेणोक्षणं परस्पराभ्युक्षणमित्यर्थः। कर्मव्यतिहारे णच्
स्त्रियामिति णच्प्रत्ययः णचः स्त्रियामञ् इत्यादेशः। टिड्ढाणञित्यादिना ङीप्। तां व्यात्यु
क्षीमदीव्यन् तया क्रीडयन्नित्यर्थः। दिवः कर्म चेति विकल्पात्कर्मत्वं। अत्राविदितकैतव
प्रयोगस्य विशेषणगत्या पराजयहेतुत्वात्काव्यलिङ्गमलङ्कारः ॥ ३२ ॥ * ॥

॥ योग्यस्येति ॥ त्रिनयनस्त्र्यम्बकः । क्षुभ्नादिषु चेति निषेधात्पूर्वपदात्संज्ञायामग इति ण-
त्वाभावः । तस्य लोचनानलार्चिषा निर्दग्धस्य स्मरस्य याः पृतनास्तासामधिराज्यमाधिप-
त्यं तदेव लक्ष्मीस्तस्याः योग्यस्यार्हस्य त्रैलोक्यविजयिनः स्थाने तादृशस्यैव स्थापनत्वादिति
भावः । कान्तायाः वक्त्रेन्दोः स्मरसखत्वादस्येति भावः । करावञ्जलिरेव कलशस्तेनोद्धृ-
तैर्दक्षिणैः पयोभिर्महाभिषेकङ्कश्चित्कामी अकृत कृतवान् करोतेर्लुङि तङ् तनादिभ्यस्त-
थासोरिति सिचो लुक् । अत्र जलक्रीडासेके महाभिषेकत्वोत्प्रेक्षा प्रतीयमाना रूपकानु-
प्राणितेति सङ्करः ॥ ३३ ॥ ************************ ॥

योग्यस्य त्रिनयनलोचनानलार्चिर्निर्दग्धस्मरपृतनाधिराजलक्ष्म्याः ।
कान्तायाः करकलशोद्धृतैः पयोभिर्वक्त्रेन्दोरकृत महाभिषेकमेकः ॥
३३ ॥ सिञ्चन्त्याः कथमपि बाहुमुन्नमय्य प्रेयांसं मनसिजदुःखदु-
र्बलायाः । सौवर्णम्बलयमवागलत्कराग्राल्लावण्यश्रिय इव शेषम-
ङ्गनायाः ॥ ३४ ॥ ***************

॥ सिञ्चन्त्या इति ॥ मनसिजदुःखेन स्मरपीडया दुर्बलाया अत एव कथमपि बाहुमुन्नम-
य्योद्यम्य प्रेयांसं प्रियतमम् प्रियस्थिरेत्यादिना प्रादेशः । सिञ्चन्त्याः स्नपयन्त्याः अङ्गना-
याः कराग्रात्सौवर्णं हिरण्मयं वलयं कङ्कणं । कङ्कणं वलयोऽस्त्रियामित्यमरः । लवणैव ला-
वण्यं कान्तिविशेषः । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्प्रत्ययः । लवणो रसरक्षोऽब्धिभेदेषु लव-
णान्विषिति विश्वः । यद्वा मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा प्रतिभाति यदङ्गेषु तल्लाव-
ण्यमिहोच्यते । तस्य श्रीः सम्पत्तस्याः शेषं अतिरिक्तं शरीरसंमितावशिष्टमिति यावत् । शे-
षः सङ्कर्षणेऽनन्तेऽप्युपयुक्तेतरेऽन्यवदिति विश्वः । तदिवावागलदपतत् । शेषमिति गुणनि-
मित्तजाति स्वरूपोत्प्रेक्षा ॥ ३४ ॥ ************************ ॥

॥ स्निह्यन्तीति ॥ कन्दर्पप्रवणमानाःस्मरपरवशचित्ता अतएव दृशं निधायपुरस्थेवदृष्टि त्वा स्निह्यन्तीदृष्टिविशेषेणस्नेहं प्रकाशयन्तीत्यर्थः । अपरा सखीसख्यासिसिक्षासेक्तुमिच्छा तस्याः लक्ष्येनव्याजेनबद्धाञ्जलिरेवनिष्ठन्तिनतुसिञ्चतीतिव्याननायसिसिक्षेतीच्छायां नःप्रयोगः । प्रतियुवंयुवानंप्रति । अनस्वेत्यव्ययीभावसमासान्तः । मूर्तेनमूर्तिमता प्रणय रसेनेवेत्युत्प्रेक्षा । पाठदर्थस्यवलीयस्त्वादिवशब्दस्यव्यवहितेनान्वयःवारिणापूर्णमञ्ज लिञ्चकार प्रार्थयामासेत्यर्थः ॥ ३५ ॥ ********************* ॥

॥ आनन्दमिति ॥ आनन्दंदधति प्रियसम्भावनयाहर्षंदधानेश्यामायामध्यमयौवना याःस्त्रियः । श्यामायौवनमध्यस्थेत्युत्पलः । मुखेवदनेदयिततमेन अतिशयेनदयितःप्रि

स्निह्यन्तीदृशमपरानिधायपूर्णम्मूर्तेनप्रणयरसेनवारिणेव । कन्द र्पप्रवणमनाःसखीसिसिक्षालक्ष्येणप्रतियुवमञ्जलिञ्चकार ॥ ३५

॥ आनन्दंदधतिमुखेकरोदकेनश्यामायादयिततमेनसिच्यमाने । ईर्ष्यन्त्यावदनमसिक्तमप्यनल्पस्वेदाम्बुस्नपितमजायततरस्याः ॥ ३६ ॥

यः । अतिशयेनतमप्प्रत्ययः । तेनकर्त्राकरोदकेनाञ्जलिजलेनसिच्यमानेसतिईर्ष्यन्त्याः असहमानायाः । परोत्कर्षाक्षमेर्ष्यास्यादितिलक्षणात् । इतरस्याःसपत्न्यावदनमसिक्त मपिप्रियेणेतिशेषः । अनल्पेनस्वेदाम्बुनास्नपितंसिक्तमजायतअभवत्ईर्ष्याक्रान्तकोपकार्य त्वात्स्वेदादीनामितिभावः । असिक्तमपिसिक्तमितिविरोधः । तस्यस्वेदाख्यकारणोक्तेः राभासत्वं ॥ ३६ ॥ ****************************** ॥

॥ उद्वीक्ष्येति ॥ प्रियस्यकरकुड्मलाभ्यांपाणिपुटाभ्यामपविद्धैःसिक्तैरम्बुभिरभिषि क्तं अन्यनार्याःसपत्न्याः वक्षोजद्वयमुद्वीक्ष्यवधूर्नायिका अमर्षादीर्ष्याक्रान्तकोपादात्मीयंव क्षोजद्वयंपृथुतरेणनेनयुग्मेनमुक्तैरम्भोभिर्वाष्पैर्मुहुरसिञ्चत् अभिषिक्तवती । तन्मत्स

रादिवेतिभावः। अतोवस्तुनालङ्कारध्वनिः। लिपिसिचिह्व्येतिसिच्चनेर्लुङि च्लेरङा देशः ॥ ३७ ॥ ************************************ ॥

॥ कुर्वद्भिरिति ॥ मुखरुचिंमुखकान्तिंउज्ज्वलांकुर्वद्भिर्यैस्तोयैर्विलासीविलसनशीलः कामी। वीकषलसेत्यादिनाघिनुण्प्रत्ययः वल्लभामजस्रमसिचतसिक्तवान्स्वरितेत्वाद् आत्मनेपदंआत्मनेपदेष्वन्यतरस्यामितिसिच्चिनेर्लुङि च्लेरङादेशः। शशधरदीधितच्छटाच्छैः शशिकरनिकरस्वच्छैस्तैरेवतोयैर्दूरात्प्रतियुवतेःसपत्न्याःकालुष्यंआविलत्वंवैवर्ण्यञ्चाकारिस्वच्छतोयैःकालुष्यंकृतमितिविरुद्धकार्योत्पत्तिरूपोविषयभेदः। तथान्यत्रेत्य

उद्वीक्ष्यप्रियकरकुड्मलापविद्धैर्वक्षोजद्वयमभिषिक्तमन्यनार्य्याः।
अम्भोभिर्मुकुरसिचद्घूरमर्षाद्दात्मीयंपृथुतरनेत्रयुग्ममुक्तैः॥ ३७॥
कुर्वद्भिर्मुखरुचमुज्ज्वलामजस्रंयैस्तोयैरसिचतवल्लभांविलासी। तैरे
वप्रतियुवतेरकारिदूरात्कालुष्यंशशधरदीधितिच्छटाच्छैः॥ ३८॥
रागान्धीकृतनयनेननामधेयव्यत्यासादभिमुखमीरितःप्रियेण। मानि
न्यावपुषिपतन्निसर्गमन्दोभिन्दानोहृदयमसाहिनाद्वज्रः॥ ३९॥

सङ्गतिकालुष्ययोरभेदाध्यवसायादतिशयोक्तिस्तदुत्थापितेतिसङ्करः ॥ ३८ ॥ * ॥

॥ रागेति ॥ रागेणविपक्षानुरागेणान्धीकृतनयनेनप्रियेणनामधेयव्यत्यासाद्विपक्षनाम पूर्वकमभिमुखमीरितःक्षिप्तोवपुषिपतन् निसर्गमन्दःस्वभावजडःतथापिहृदयम्भिन्दा नोविदारयन्नुदकमेववज्रोऽशनिरुदवज्रः। मन्थोदनेत्यादिनाविकल्पादुदादेशःमा निन्याविपक्षनामयोजनाजनितकोपवत्यानायिकयानासाहिनसोढः। तीक्ष्णयोगाद् तीक्ष्णमपितीक्ष्णम्भवतीतिभावः। उदवज्रइतिकेवलनिरवयवरूपकम् ॥ ३९ ॥

॥ प्रेम्णेति ॥ प्रणयिनिप्रेम्णाप्रियायाउरःसिञ्चतिसिक्तवतिसतिकठिनकुचस्थलाभिघा

नादुद्धूताउत्पतिताःनवजलस्यविप्रुषोबिन्दवः । पृषन्तिबिन्दुपृषताःपुमांसोविप्रुषःस्त्रि
यामित्यमरः । तस्याःतिलकायाःसन्तापंगृहीत्वाआदायासन्नासमीपस्थामपराङ्गनांसप
त्नीभृशमधाक्षुःसन्तापयन्तिस्म । दहतेर्लुङिवदव्रजेत्यादिनासिचिवृद्धिःघत्वादिकार्यं
कासेकादेवापरस्याःतापोदयात्तत्तापस्यैवात्राधानमुत्प्रेक्ष्यतेव्यञ्जकाप्रयोगादिग्म्या ॥४०॥
॥ संक्रान्तमिति ॥ प्रियतमवक्षसःसकाशात्संक्रान्तंगाढालिङ्गनात्कुचतटलग्नंअस्याःति
लकायाःअङ्गरागमधुनैवसरसिअम्भःकृतं । साधुनिःशेषंहरिष्यतेप्रमार्क्ष्यतिएवन्तुद्धाइ
तिबुध्वासपदितत्रतस्मिन्नङ्गरागेहृतेपिस्फुटनखलक्ष्मणोव्यक्तनखचिह्नायाःकस्याश्चि

प्रेम्णो रःप्रणयिनिसिञ्चतिप्रियायाःसन्तापंनवजलविप्रुषोगृहीत्वा ।
उद्धूताःकठिनकुचस्थलाभिघातादासन्नांभृशमपराङ्गनामधाक्षुः ॥
४० ॥ संक्रान्तंप्रियतमवक्षसोऽङ्गरागंसाध्वस्याःसरसिहरिष्यतेऽधुना
ऽम्भः । तुद्धैवंसपदिहृतेऽपितत्रतेपेकास्याश्चित्स्फुटनखलक्ष्मणःस
पत्न्याः ॥४१॥ हृतायाःप्रतिसखिकामिनाऽन्यनाम्नाह्रीमत्याःसर
सिगलन्मुखेन्दुकान्तेः । अन्तर्धिंन्दधतमिवकर्तुमश्रुवर्षैर्भूमानंगम
यितुमीषिरेपयांसि ॥ ४२ ॥ ❋❋❋❋❋❋❋❋❋❋❋❋

नायिकायाःसम्बन्धिन्यासपत्न्यातेपेतप्तमावेतिइ । तदिदमातपात्तस्यच्छायामन्विष्यतो
दाहणदवदहनवेष्टनंयदङ्गरागमेवद्रष्टुमक्षमायानखक्षतसाक्षात्कारइति । अत्रसु
खापशान्त्यर्थंनविपक्षाङ्गनाङ्गरागक्षालनेन तद्धिरुद्धसन्तापोत्पादनाद्विरुद्धकार्योत्प
त्तिरूपोविषमालङ्कारः ॥ ४१ ॥ ******************** ॥
॥ हृतायाइति ॥ प्रतिसखिसख्याःसमीपेसमक्षमित्यर्थः । समीपार्थेव्ययीभावेनपुंसक
त्वं । कामिनाप्रियेणान्यस्याःसपन्त्याःनाम्नाअन्यनाम्ना । सर्वनाम्नोवृत्तिमात्रेपुम्भङ्गा

वः । हूताया: अतएव गलन्मुखेन्दुकान्तेः ह्रीमत्याः लज्जितायाश्च कस्याश्चिदिति शेषः । सरसिरुहं शीघ्रमन्तर्द्धिं अन्तर्द्धानं । अदन्तरोरुपसर्गवद्वृत्तिवचनादुपसर्गे घोः किरिति किप्रत्ययः । कर्तुमश्नुवद्भिः कर्तृभिः पयांसि सरोजलानि भूमानं गमयितुं वृद्धिं प्रापयितुं इति बुद्धीन्यानाऽख्यिकर्तुः कर्मत्वं प्राधान्यादभिधानञ्च । ईर्विरेइयइ यानि किमुइ न्युप्रेक्षेय मधुपाननिमित्तानयामरणादुःखादपि दुःसहं सपत्न्याः दुःखमिति वस्तुध्वनिः ॥ ४२ ॥

॥ सिक्ताया इति ॥ प्रणयवता प्रियेण क्षणं पूर्वमन्यां सपत्नीमवसिच्य पश्चात् सिक्ताया अन्यस्या अवलायाः स्त्रियाः वक्तुं कर्म मन्युः कोप एव कर्त्ता कालिम्ना कार्ष्ण्येन वैवर्ण्येन सह इति यावत् समधिकं समहितं वते तिखेदे । सम्पूर्वाद्धधातेः कर्त्तरि लुङि तङ् स्थाघ्वोरिच्चेतीकारः सिचः

सिक्तायाः क्षणमभिसिच्य पूर्वमन्यामन्यस्याः प्रणयवतावतावलायाः ।
कालिम्ना समधितमन्युरेव वक्त्रं प्रापाऽक्ष्णोर्गलदपशब्दमञ्जनाम्भः ॥
४३ ॥ उद्वोढुं कनकविभूषणान्यशक्ताः सख्यो चावलयितपद्मनाल
सूत्रः । आरूढप्रतिवनिताकटाक्षभारः साधीयो गुरुरभवद्भुजस्त
रुण्याः ॥ ४४ ॥ ***************

कित्वान्न गुणः ह्रस्वादङ्गादिति सकारलोपः । गलन् स्रवदक्ष्णोः सम्बन्धि अञ्जनाम्भः कज्जलोदकमपशब्दं वर्णस्यापवारम्भापकोपकालिमनिरोधानेन स्वकालिम्न एव प्रकाशनादिति भावः । पूर्वेण वाक्यार्थेनोत्तरवाक्यार्थसमर्थनाद्वाक्यहेतुकङ्काव्यलिङ्गम् ॥ ४२ ॥

॥ उद्वोढुमिति ॥ कनकविभूषणान्युद्वोढुमशक्ताः सौकुमार्यादिति भावः । अतएव सहाध्वतीति सधृङ् तेन सहचरेण कर्त्रा । ऋत्विगादिना क्विन्प्रत्ययः । सहस्य सध्रिरिति सहशब्दस्य सध्र्यादेशः अनिदितामिति नकारलोपः अचइत्यकारलोपे चाविति दीर्घः । वलयितानि वलयीकृतानि पद्मनालसूत्राणि मृणालतन्तवो यस्य सः मृणालकृतकङ्कणइत्यर्थः ।

तथापिआरूढःआरूढवान् प्रतिवनितायाःसपत्न्याःकटाक्षएवभारोयस्यसःतयासारूढ यंदृष्टाइत्यर्थः । अतएवतरुण्याभुजोवाढंःसाधीयोवाढतरमितिक्रियाविशेषणंअन्ति कवाढयोर्नेदसाधाविनिबाढशब्दस्यसाधादेशः । गुरुर्भारवान्श्लाघ्यश्चाभवत् । अत्रक नकभूषणाभावेपितत्कार्यगुरुत्ववर्णनाद्विभावनासाच गुरुरितिश्लेषप्रतिभोत्थापितातिश योक्त्यनुप्राणितेतिसङ्करः ॥ ४४ ॥ ********************** ॥

॥ आबद्धेति ॥ उदस्यउदकस्यगाहोऽवगाहनंउदगाहःमन्थोदनेत्यादिनाउदादे शः । ततअनवरतमजस्रंनियास्ताःतामनवरतोदगाहभाजांरमाणांस्त्रीणांसम्बन्धीआबद्धाः श्रोताःप्रचुराभूयिष्ठाःपरार्ध्याःश्रेष्ठाश्चकिंकिण्योयस्मिन्सतथोक्तः । तथ्यृतश्चेतिकप् ।

आबद्धप्रचुरपरार्ध्यकिंकिणीकोरमाणामनवरतोदगाहभाजाम् । ना

शङ्केव्यतनुतमेखलाकलापःकस्मिन्वासजडगुणोगिरांपटुत्वम् ॥४५॥

पर्यङ्केसरसिहृतेंशुकेपयोभिर्लोलाक्षेसुरतगुणेवपत्रपिष्णोः । सु

श्रोण्यादलवसनेनवीचिहस्तन्यस्तेनद्रुतमकृताब्जिनीसखित्वम् ॥४६॥

मेखलाकलापःआरावंध्वनिंव्यतनुत । तथाहिजलेनसहसजलोजलार्द्रोगुणःसूत्रंयस्य सः तथाडलयोरभेदाज्जडगुणोजडधर्माजाड्यतोनसहेतिसजडगुणोजडस्तस्मिन् क स्मिन्वामेखलाकलापेपुंसिवागिरःवाचांध्वनीनाञ्चपटुत्वंसामर्थ्यंनकुत्रापीत्यर्थः । श्लेष मूलाभेदातिशयोक्त्यनुप्राणितोयमर्थान्तरन्यासः ॥ ४५ ॥ ************ ॥

॥ पर्यङ्क इति ॥ परिपरितःअङ्कंस्वच्छंअन्तर्गतवस्तुतिरोधायकमित्यर्थः । तस्मिन्सर सिपयोभिरंशुकेस्त्रीपरिधानेहृतेस्थानादपसारितेसतिसुरतगुणैरमणेचलोलाक्षेश्रोण्या सक्तदृष्टौसतीत्यर्थः । लोलश्चलसतृष्णयोरितिअमरः । बहुव्रीहौसक्थ्यक्ष्णोःस्वाङ्गात्ष च्अयत्रपिष्णोरपत्रपमाणायाः । लज्जासापत्रपान्यतइत्यमरः । अलंकृञित्यादिनाइ

सुच्प्रत्ययः। सुश्रोण्याः प्रियायाः प्रस्तुतोचितनिर्देशोयं अब्जिनीनलिनी कुतं वीचिरेव हस्तस्तेनन्यस्तेन दत्तं पर्णमेव वसनं तेनेन तद्वानेनेत्यर्थः। सखीत्वं अकृतसखी कृत्य च्व्यकारेत्यर्थः। अत्राब्जिन्यादिषु सखीत्वाद्यारोपात्समस्तवस्तुवृत्तिसावयवरूपकम् ॥ ४६ ॥ *॥
॥ नारीभिरिति ॥ नारीभिःकर्त्रीभिःगुरुजघनस्थलैरलसानां आस्यश्रीभिर्मुखशोभाभिर्विजितानि विकाशीनि वारिजानि पद्मानि येषां तेषां लोलत्वाच्चलत्वात्सतृष्णत्वाच्च। लोलश्चलसतृष्णयोरित्यमरः। तासामङ्गरागमपहरतां क्षालयतां च जलानां तोयानां जडानां च स आशयो ह्रदो हृदयं च कलुषोऽप्रसन्नः क्षुभितश्च सञ्जज्ञे सञ्जातः अपहर्त्तुस्ताडनसहरणादिभिराशयः कलुषो भवतीति ध्वनिः। अभिधायाः प्रकृतार्थे नियन्त्रणान्न श्लेषः ॥४७॥

> नारीभिर्गुरुजघनस्थलालसानामास्यश्रीविजितविकाशिवारिजानाम् ।
> लोलत्वादपहरतांतदङ्गरागंसंजज्ञेसकलुषआशयोजलानाम् ॥४७॥
> सौगंध्यंदधदपिकाममङ्गनानांदूरत्वाद्गतमहिमाननोपमानम्। नेदीयोजितमितिलज्जयेवतासामालोलेपयसिमहोत्पलंममज्ज ॥ ४८ ॥

॥ सौगंध्यमिति ॥ कामंपर्याप्तं सौगंध्यं सुरभिगन्धित्वं सम्यग्बन्धुत्वं च। गन्धोगन्धक आमोदे लेशेसम्बन्धिगर्वयोरितिविश्वः। दधदपिअहं दूरत्वात्पूर्वं दूरस्थत्वादङ्गनानामाननोपमानं मुखसादृश्यं गतं। दूरस्थाःपर्वतारम्याइतिवदितिभावः। सम्प्रतिपुनस्तासां नेदीयो नेदिष्ठमन्तिकतमं सत्अन्तिकबाढयोर्नेदसाधावित्यन्तिकशब्दस्य नेदादेशः जितम्परिभूतमभूवमितिलज्जयेवमहोत्पलमरविन्दं आलोलेचलेपयसिमसज्जययादूरे सांस्येनदृश्यमानोबन्धुःसन्निधावतमानितः कश्चिल्लज्जयानिलीयतेतद्वदितिपयस्तलनकृतेऽन्तमज्जनेलज्जाहेतुकत्वमुत्प्रेक्ष्यतइतिश्लेषमूलातिशयोक्तिहेतूत्प्रेक्षायाःसंसृष्टिः ॥४८॥
॥ प्रभ्रष्टैरिति ॥ सरभसंससत्वरं अम्भसोवगाह्याःएवक्रीडास्ताभिःप्रभ्रष्टैर्जलावगाहक्षो

भाद्रम्भसिच्युतैर्विदलिताविकसिता यूथिकाः पीतयूथिका हेमपुष्पिकापरपर्याया विवक्षिता । अन्यथापिशङ्गत्वायोगात् । गणिकायूथिकाम्बष्ठासापीना हेमपुष्पिकेत्यमरः । तद्वत्पिशङ्गैर्हिरण्मयैः सौवर्णैर्दाण्डिनायनादिनानिपातः । वधूनामाकल्पैर्भूषणैः सरसिऔर्वाग्निद्युतिशकलैर्ज्वालाशयत्वादत्रापिसन्निहितैर्वडवानलज्वालाखण्डैरिवेत्युत्प्रेक्षा । बराजिविराजितम्भावेलुङ् ॥ ४९ ॥ ********************॥

॥ आस्माकीति ॥ अस्माकमियमास्माकी अस्मदीया अस्मत्कारिणेत्यर्थः ॥ युष्मदस्मदोरन्यतरस्यांखञ्चेति चकारादण्प्रत्ययः । तस्मिन्नणिचयुष्माकास्माकाविति प्रकृतेरस्माकादेशः टिड्ढाणञ्नित्यादिना ङीप् । असौ कान्ताया कान्तिः विमलेतियावत् सैवयुवनिदृशा

प्रभृष्टैः सरभसमम्भसोऽवगाहक्रीडाभिर्विदलितयूथिकापिशङ्गैः । आकल्पैः सरसिहिरण्मयैर्वधूनामौर्वाग्निद्युतिशकलैरिवव्यराजि ॥ ४९ ॥

आस्माकीयुवतिदृशामसौतनोतिच्छायैवश्रियमनपायिनीं किमेभिः ।

मत्वैवं स्वगुणपिधानसाध्यहृद्यैः पानीयैरितिविदधाविरेञ्जनानि ॥ ५० ॥

अनपायिनीं स्थायिनीं श्रियन्तनोतिएभिरञ्जनैः किमेतन्साध्यन्नकिञ्चिदस्तीत्यर्थः । गम्यमानसाधनापेक्षयाकरणत्वात्तृतीयाइत्युक्तंप्राक् । एवंमत्वा उक्तप्रकारेणाञ्जनवैफल्यंनिश्चित्येत्यर्थः । अतएवगम्योत्प्रेक्षेयंस्वगुणस्यस्वाविष्कृतदृङ्नैर्मल्यगुणस्यपिधानंतिरोधानं । अपिधानतिरोधानपिधानाच्छादनानिचेत्यमरः । वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोरित्यकारलोपः । तेनसाध्यैः सेव्यैः पातुमर्हैः पानीयैः । अम्भोर्णस्तोयपानीयेत्यमरः । तव्यत्तव्यानीयरइतिपिबतेरनीयर्प्रत्ययः । अञ्जनानिकज्जलानिइत्यनेनस्वगुणप्रकाशनयोग्यतयाविवक्षितेनप्रकारेणनिःशेषत्वस्वरूपेणेत्यर्थः । विदधाविरेविदृधौतानिक्षालितानीत्यर्थः । धावुगतिशुद्ध्योरितिधातोःकर्मणिलिट् ॥ ५० ॥ ** ॥

॥ निर्धौतइति ॥ हरिचन्दनेरक्तचन्दनेजलौघैर्निर्धौतेक्षालितेसति । धावेःकर्मणि
क्तः च्छ्वोःशूडनुनासिकेचेतिवकारस्योठादेशः एत्येधत्यूठ्स्वितिवृद्धिरौकारः । आपा
ण्डोः पाण्डुवर्णादङ्गनायास्तनकलशद्वयात्गतपरभागयासावर्ण्याद्धिगतवर्णोत्कर्षया ।
अतएवसामान्यालङ्कारः । सामान्यंगुणसाम्येनयत्रवस्त्वन्तरैकताइतिलक्षणात् । हारय
ष्ट्याकर्ष्यासहृदययासचित्तयेवेत्युत्प्रेक्षानिजपरभागहानिपरज्ञानवत्येवेत्यर्थः । अस्ता
यस्पदि । झाक्क्षटित्यञ्जसाह्नायसाक्स्मंक्षुसपदिद्रुतमित्यमरः । विच्छेदःखण्डनमुपे
येप्राप्तः । हीनजीवनाद्जीवनमेवभरमितिभावः । उपपूर्वादिणःकर्मणिलिट् । वि
क्षोभहेतु कस्यहारविच्छेदस्यसहृदयहेतुकत्वोत्प्रेक्षासाचोक्तसामान्योत्थापितेतिसङ्करः

निर्धौतेसतिहरिचन्दनेजलौघैःपाण्डोर्गतपरभागयाङ्गनायाः । अ
स्नायस्तनकलशद्वयादुपेयेविच्छेदःसहृदययेवहारयष्ट्या ॥ ५१॥
अन्यूनंगुणममृतस्यधारयन्तीसंफुल्लस्फुरितसरोरुहावतंसा । प्रेयो
भिःसरसीनिषेव्यमाणारक्तान्त्वंव्यधितवधूदृशांसुरेव ॥ ५२ ॥ ❀

॥ ५१ ॥ ****************************** ॥

॥ अन्यूनमिति ॥ अन्यूनंसमग्रममृतस्यपीयूषस्यगुणंमाधुर्यादिकंधारयन्ती । अगन्धमच्छ
कारसंशीतलंचतृषापहं । अच्छंलघुचपथ्यञ्चतोयंगुणवदुच्यतेइति । उक्तोदयगुणञ्चधा
रयन्तीचसरसीपक्षेविशेषणम् । अमृतंयज्ञशेषःस्यात्पीयूषेसलिलेघृतमितिविश्वः । संफुल्ला
निविकचानिउत्फुल्लसंफुल्लयोरुपसंख्यानान्निष्ठातस्यलत्वं । स्फुरितानिउज्ज्वलानिच
यानिसरोरुहाण्येकत्रसहजानिअन्यत्रसंस्कारार्थंक्षिप्तानितान्यवतंसोभूषणंयस्याः सात
थोक्ता । प्रेयोभिःसहनिषेव्यमाणास्नानपानाभ्यामितिभावः । सरसीपुष्करिणीवधूदृशां
रक्तान्त्वमारुण्यंव्यधितविधत्तेस्म । तथासुराचव्यधितेति । धाञःकर्तरिलुङितङ् । इ

द्दीत्साहवर्द्धनायमुक्तःसेव्यत्वाच्छृङ्गारणीतिश्लोकेसलिलक्रीडासम्भारेषुमार्द्वीकमितिपरि
गणनाच्चसरसीवत्सुरायाअपिप्रकृतत्वविवक्षायान्तुल्ययोगितानद्विवक्षायां दीपकंस्युरेवे
तिपाठेत्वप्रकृतविवक्षैवकार्याअन्यथाचपमानुमानात् । नचतुल्ययोगितावकाशःइवश
ब्देनगम्यौपम्यलक्षणभङ्गादिति ॥ ५२ ॥ ****************** ॥

॥ स्नातीनामिति ॥ स्नातीनाञ्जलमवगाहमानानांरुचिरदृशांसुदृशांसम्बन्धिनौवृह
द्भिरमलैश्चोदविन्दुभिश्चित्रौ । मन्थोदनेत्यादिनाउदकशब्दस्योदादेशःउरोजकुम्भौ
उत्सूत्रैःहाराणांमुक्ताहाराणांमणिभिर्गुटिकाभिरुपहन्यतेउपगम्यतेपीड्यतेवाउपघ्नआ
श्रयेइतिहन्तेरप्रत्ययान्तउपधालोपोनिपातः । गुणवतःऔदार्य्यादिगुणवतःसूत्रवतश्च

स्नातीनांवृहदमलोदविन्दुचित्रौरेजातेरुचिरदृशामुरोजकुम्भौ ।
हाराणांमणिभिरुपाश्रितौसमन्तादुत्सूत्रैर्गुणवदुपघ्नकाम्ययेव॥५३॥
आरूढःपतितइतिस्वसम्भवोऽपिस्वच्छानांपरिहरणीयतामुपैति ।
कर्णेभ्यश्च्युतमसितोत्पलंवधूनांवीचीभिस्तटमनुयन्निरस्तरपः॥५४॥

उपघ्नस्यकाम्याआत्मनइच्छागुणवदुपघ्नकाम्यातयागुणवदुपघ्नकाम्ययाआत्मनोगुणव
दाश्रयापेक्षयेत्यर्थः । काम्यचेतिकाम्यच्प्रत्ययेप्रत्ययान्तधातुत्वादप्रत्ययादितिस्त्रियाम
प्रत्ययेटाप् । समन्तादुपाश्रितौसंश्रितौविवरेजातेराजेतेस्म । फणाञ्चसप्तानामितिविक
ल्पादेकाराभ्यासलोपौगुणवत्त्वलेनसूत्रत्वलेनसूत्रभेदेसूत्रानारमणिश्रयत् इतिप्र
तीतेःश्लेषानुप्राणितेनिश्चयोत्त्यनुप्राणितेयमुत्प्रेक्षा ॥ ५३ ॥ ** *****॥

॥ आरूढइति ॥ स्वसम्भवोयात्मसम्भवोपिआरूढउच्चस्थानगतउत्तमाश्रमस्थपतित
स्तयाभ्रष्टइतिहेतोःआरूढपतितत्वादित्यर्थः । स्वच्छानांनिर्मलानांपरिहरणीयतां
त्याज्यत्वमुपैति । प्रव्रज्यावसितोराज्ञोदासआमरणान्तिकइतिस्मरणादितिभावः । वी

धौभिस्तटमनुतटं प्रति निरस्तुश्चिक्षिपुः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः कुतः यस्मादापः वधूनां करेभ्यः च्युतमसितोत्पलं स्वसम्भवमपीति भावः सामर्थ्यं वाक्यगतत्वे षमूलानि श्लेषोक्त्या तद्वीर्यः ॥ ५४ ॥ ********************** ॥

॥ दन्तानामिति ॥ ते येष्वधिनोयन्विभक्त्यर्थेऽव्ययीभावः अङ्गनानामयावकं रक्षादिमलाक्षारागं अधरं दन्तानां पदानि दन्तक्षतानि तथा अविलेपनान्धौताङ्गरागान्तनुं शरीरं प्रत्ययान्तवान् . . . ङ्गाश्च श्रियमानिन्युः प्रापयामासुः । नीवस्योर्हरने चैवेनिवचनान्द्विकर्मकत्वं । तथाहि सन्तः सज्जनान् सुन्दरांश्चाश्रिताः सदाश्रिताः ये केचिदिति शेषः । विपदि विभवाभावकालेऽशोभायै वै भवाय भवन्ति । क्लृपेः सम्पद्यमाने चतुर्थी वक्तव्येति क्लृपेरर्थेति

दन्तानामधरमयावकं पदानि प्रत्यग्रास्तनुमविलेपनां नखाङ्काः । आनिन्युः श्रियमधितोयमङ्गनानां शोभायै विपदि सदाश्रिता भवन्ति ॥ ५५ ॥ कस्याश्चिन्मुखमनुधौतपत्रलेखं व्यातेने सलिलभरेऽवलम्बिनीभिः । किंजल्कव्यतिकरपिञ्जरान्तराभिश्चित्रश्रीरलमलकाग्रवल्लरीभिः ॥ ५६ ॥ ******************

वैशाच्चतुर्थी अर्थान्तरन्यासः ॥ ५५ ॥ ********************** ॥

॥ कस्याश्चिदिति ॥ धौतपत्रलेखं क्षालितपत्रावलीकं कस्याश्चिन्मुखमनुमुखेन सम्बद्धं यथा तथा मुखे इति यावत् । तृतीयार्थे इत्यनोः कर्मप्रवचनीयत्वात् द्वितीया । सलिलभरेणावलम्बिनीभिर्लम्बमानाभिः आर्जवङ्गताभिरित्यर्थः । किञ्जल्कव्यतिकरेण केसरमिश्रणेन पिञ्जराण्यन्तराणि मध्यभागा यासां ताभिः अलकाग्राण्येव वल्लर्यो मञ्जर्य इवेत्युपमितसमासः । वल्लरी मञ्जरी स्त्रियामित्यमरः । ताभिरलकाग्रवल्लरीभिश्चित्रश्रीर्मकरिकापत्रशोभा असंख्यातेन सम्पादिता तनोतेः कर्मणि लिट् । अत्र चित्रस्य श्रीरिव श्रीरिति निद

णैनाभेदः ॥ ५६ ॥ ****************************** ॥

॥ अथश्लोकद्वयेनपुंसामथवस्थाभेदम्वर्णयति ॥ वक्षोभ्यइत्यादि । वारिसरोदकंकर्तृय
दूनांयादवानांवक्षोभ्यो घनंसान्द्रमनुलेपनमङ्गरागमहरत । भित्वान्तङ् । अत्रबभूना
मितिक्वाचित्कःपाठः वक्षोजानुपेक्ष्यवक्षोमात्रनिर्देशादुत्तरश्लोकेनैषामितिपुल्लिङ्गपरा
मर्शाच्चतथाल्याः । मूर्द्धजेभ्यःशिरोरुहेभ्यःउत्तंसान्शेखरानहरतनेत्राणांमदरुचिर्मदरा
गोऽक्ष्णैवनष्टैवनष्ट्वावारिविहारस्यापिरागजनकत्वादितिभावः । अतएवरागद्वयस्या
प्यभेदाध्यवसायेननदवस्थानिर्देशादतिशयोक्तिः । तथाहिमहतात्वक्षुषिभवश्चक्षुष्यः
प्रियोऽक्षिजश्च । प्रियेऽक्षिजेचचक्षुष्यइतिविश्वः । शरीरावयवाच्चेतियत् । परैरलंघ्यो

वक्षोभ्योघनमनुलेपनंयदूनामुत्तंसानहरतवारिमूर्द्धजेभ्यः । नेत्राणा
म्मदरुचिरक्ष्णैवनष्टोचक्षुष्यःखलुमहताम्परैरगम्यः ॥ ५७ ॥
योवाह्यःसखलुजलैर्निरासिरागोयश्चित्तेसतुनदवस्थएवतेषाम् । धीरं
णांव्रजतिहिसर्वएवनान्तःपातित्वादभिभवनीयताम्परस्य ॥ ५८ ॥

दुर्द्धर्षःखलु । चक्षुष्यइतिश्लेषमूलातिशयोक्तिःतयापूर्वोक्तयाचसङ्कीर्णायमर्थान्तरन्या
सः ॥ ५७ ॥ ****************************** ॥
॥ यइति ॥ येषांयदूनांवहिर्भवोवाह्यःवहिर्घटिलोपोयञ्चेतिवचनात्यञ्प्रत्ययः ।
सोरागोऽङ्गरागःसरागोजलैस्तोयैर्जडैश्चनिरासिनिरस्तःखलु । अस्यतेःकर्मणिलुङ्चि
णेयोरागःसतुसैवावस्थायस्यसनदवस्थएवनतिनिरस्तइत्यर्थः । अत्ररागयोरभेदाध्यवसा
यादतिशयोक्तिः । तथाहिसर्वोपिधीराणांमहतामन्तःपातित्वादन्तर्गतत्वादेवेतियावत्
परस्याभिभवनीयतांनव्रजतिअन्यथाव्रजत्येवेत्यर्थः पूर्ववदलङ्कारः ॥ ५८ ॥ * ॥
॥ फेनानामिति ॥ वधूनांभ्रष्टभूषणानामपीतिभावः पयसिविभूषणांपर्याप्तंसमग्रमासी

दित्यर्थः। कुतः फेनानां डिण्डीराणां उरसिहृद्धल्लीयुरसिहृद्धाः स्तनाः। सुपीनियोगविभागात्कप्रत्ययः हृद्धदन्तादित्यलुक्। तेषु हारलीलामुक्तावलिश्रीः जातेति शेषः। शैवलानां जघनतलेषु चेलश्रीर्वसनशोभा जाता। गण्डेषु कपोलेषु शैवलादिति विभक्तिविपरिणामादनुषङ्गः। स्फुटरचनाव्यक्तविन्यासाब्जपत्रवल्लीपत्रप्रचलना जातेति शेषः। अत्र फेनानां हारलीलेव लीला शैवलानां चेलश्रीरिव श्रीरिति निदर्शनाभ्यां शैवलाः पत्रवल्लीरिति रूपकेण च वाक्यार्थैः स्तनुर्थवाक्यार्थसमर्थनात्तैरेवाङ्गाङ्गिभावेन सङ्कीर्णमिवाक्यार्थहेतुकङ्काव्यलिङ्गम्॥ ५९॥ ****************************॥

॥ भ्रष्यद्भिरिति ॥ वधूनामङ्गेभ्यो भ्रश्यद्भिः पतद्भिर्गुरुभिः सौवर्णत्वाद्गुरुत्वयुतैर्भूषणै

फेनानामुरसिहृद्देषु हारलीला चेलश्रीर्जघनतलेषु शैवलानाम्। गण्डे
षु स्फुटरचनाब्जपत्रवल्लीः पर्य्याप्तं पयसि विभूषणं वधूनाम्॥५९॥भ्र
श्यद्भिर्जलमभिभूषणैर्वधूनामङ्गेभ्यो गुरुभिरमज्जि लज्जयेव। निर्मा
ल्यैरथनन्दतेऽवधीरितानामप्युच्चैर्भवति लघीयसां ह्रियाष्टर्यम्॥६०॥

र्लज्जयाभ्रंशप्रयुक्तया ह्रियेवेत्युत्प्रेक्षा जलमभिअमज्जि जलेमग्नम्भावेलुङ्। अथानन्तरमेवनतु विलम्बेनेति भावः निर्माल्यैर्भुक्तोज्झितमाल्यैर्नन्दते जले भ्रंशेऽपि निर्लज्जैरिति भावः। तथाहि अवधीरितानां तिरस्कृतानामपि लघीयसां तुच्छानामुच्चैर्धाष्ट्यं निर्लज्जत्वमेवाधिकम्भवतीति अर्थान्तरन्यासः। महान्तः परभ्रंशेलज्जिताः क्वचिन्निलीयन्ते तुच्छास्तु निर्लज्जा विजृम्भन्त इति भावः। अप्रगुरूणामज्जनं लघूनि प्लवन्त इति परमार्थः॥ ६०॥ ****************************॥

॥ आमृष्टा इति ॥ तिलकरुचः पत्रशोभाः आमृष्टाः स्रजो मालानिरस्ताः वसनं कौसुम्भम्बालनीरक्तमरक्तं निरस्तरागमित्यर्थः। क्रान्तमिति शेषः। अङ्गरागोऽपाकृतः सर्वत्र जलैरित्य

र्थः। इतीत्थं स्वपक्षव्याघातात् स्ववर्गक्षयादनुशयवाननुतापवानद्भुवेत्युत्प्रेक्षा। कामः स्त्रीः स्त्रियःवाम् शसोरितीयङादेशविकल्पात्पक्षे स्ववर्णदीर्घः सुतरां चारुः पूर्वतोऽपि रमणीयाक्षकारः स्त्रीणां कामएवभूषणमन्यद्वैधव्यमेवेतिभावः ॥ ६१ ॥ ******* ॥

॥ शीतेति ॥ नीरैः सेथैरासेकाद्रासेचनात् शीतार्ति शीतबाधां बलवत् सुष्ठु उपेयुषेवप्राप्तवतेवेत्युत्प्रेक्षा। अतएवशिशिरसमीरकंपितेनशीतवातवेपितेन नवांशुकेनकर्त्रा अभिनवौ येयौवनोष्मा उष्णत्वं तद्भाजोरमणीस्तनतटयोराधारयोराश्लिष्टं संसक्तं भावेलु ङ्। सेकहेतुकस्यांशुकश्लेषस्य शीतार्तिहेतुकत्वमुत्प्रेक्षतइतिगुणहेतूत्प्रेक्षा ॥ ६२ ॥ * ॥

आमृष्टास्तिलकरुचः स्त्रजो निरस्ता नीरन्ध्रं वसनमपाकृतोऽङ्गरागः। कामः स्त्रीरनुशयवानिव स्वपक्षव्याघातादिति सुतरां चकार चारुः ॥ ६१ ॥ शीतार्तिं बलवदुपेयुषेव नीरैरासेकाच्छिशिरसमीरकम्पितेन। रमणीमभिनवयौवनोष्मभाजोराश्लिष्यस्तनतटयोर्नवांशुकेन ॥ ६२ ॥ श्च्योतद्भिः समधिकमात्तमङ्गसङ्गाल्लावण्यं तनुमदिवाम्बु वाससोऽन्तैः। उत्तेरे तरलतरङ्गरङ्गलीलानिष्णातैरथ सरसः प्रियासमूहैः ॥ ६३ ॥

॥ इत्थमासांजलक्रीडामुक्त्वा जलादुत्तरणं वर्णयति ॥ श्च्योतद्भिरिति। अथजलक्रीडानन्तरमङ्गसङ्गात् गात्रसम्पर्कात् आत्तमुपात्तं संसक्तमिति यावत्। समधिकमतिरिक्तान्तनुमत् मूर्तिमत् लावण्यमिव कान्तिसारमिवेत्युत्प्रेक्षा अम्बु श्च्योतद्भिः क्षरद्भिः भावादिकान्तजघपर्यगुणः तरलास्त्रपलास्तरङ्गाएव रङ्गान्त्यस्थानानि तेषु लीलानर्तितानि तासु निष्णातैः कुशलैः। निनदीभ्यां स्नातेः कौशलेइति षत्वं। वाससोऽन्तैःवस्त्राञ्चलैरुपलक्षितैः प्रियासमूहैः स्त्रीसंघैः सरसोहृदादुत्तेरे उत्तीर्णं निर्गतमित्यर्थः। तरतेर्भावेलिट् ॥ ६३ ॥

॥ दिव्यानामिति ॥ दिविभवादिव्यास्तेषामपिद्रष्टविस्मयासौन्दर्यातिरेकेण जनितमाद्भु

तरसांस्फुरदरविन्दाभ्यांचारुहस्तौयस्यास्तांपद्महस्तामित्यर्थः पुरस्ताद्ग्रतःअम्भसो
जलात्पञ्चम्यास्तसिल् । उत्तरन्तीन्निःक्रामन्तींकाञ्चित्स्त्रियंश्रियमिवमन्यमानात्समु
द्रात्सद्यःप्रादुर्भवन्तींलक्ष्मीमिवोद्वीक्ष्यजलनिधिमंथनस्यसमुद्रमंथनमित्यर्थः । मंथे
र्भौवादिकस्येदित्वान्नुमागमः । अधिगर्थेत्यादिनाकर्मणिषष्ठी । अस्मार्षीत्स्मृतवान् ।
अत्रसमुद्रमंथनस्मारिकयाश्रियमेवेत्युपमयासादृश्यात्शौरेःस्मृतेनिःस्मरणालङ्कारप्रतीते
रलङ्कारध्वनिः ॥ ६४ ॥ ************************** ॥

॥ श्लक्ष्णमिति ॥ एतयोरूर्वोरन्तर्द्धानार्थंकिलच्छादनार्थंश्लक्ष्णंस्निग्धंयत्दुकूलंपरि
हितमाच्छादितमुदकसेकेनसंसक्तंसंश्लिष्टंतत्दुकूलंकर्मविमलतरौनारीणामूरूपीवरौक

दिव्यानामपिकृतविस्मयांपुरस्तादम्भस्तःस्फुरदरविन्दचारुहस्ताम्
। उद्वीक्ष्यश्रियमिवकाञ्चिदुत्तरन्तीमस्मार्षीज्जलनिधिमन्थनस्य
शौरिः ॥ ६४ ॥ श्लक्ष्णंयत्परिहितमेनयोःकिलान्तर्द्धानार्थंत
दुदकसेकसक्तमूर्वोः । नारीणांविमलतरौसमुल्लसन्त्याभासान्तर्दधे
गुरुरूदुकूलमेव ॥६५॥ *************

रूरूएवकर्त्तारौसमुल्लसन्त्यास्फुरन्त्याभासानिजकान्त्याअन्तर्दधतुः छादितवन्तौतदेव
द्भीषणमितिभावः । अत्रदुकूलस्योरूच्छादकत्वेपितदभावोक्तेरसम्बन्धेपिसम्बन्ध
रूपातिशयोक्तिः । तदपेक्षयाचोर्वोर्दुकूलानाच्छादकयोराच्छादकत्वोक्तेरसम्बन्धे
सम्बन्धरूपातिशयोक्त्यनुप्राणितेतिसजातीयसङ्करः । तदनुप्राणितस्तुविषमालङ्कारः
इतिविजातीयसङ्करः । तेनचोर्वोर्लोकोत्तरंलावण्यंव्यज्यतइत्यलङ्कारेणवस्तुध्वनिः
॥ ६५ ॥ ****************************** ॥

॥ वासांसीति ॥ ताःयोषितोयानिवासांसिन्यवसितनिवसितवत्यःवस्त्र आच्छादनइतिधा

तोः कर्त्तरि लुङ् । शुभ्राभाणां द्युतिरिव द्युतिर्येषां तैः वासोभिर्मुदा नारीनिवसनानन्दे
नाहासीवहसितमिव भावे लुङ् । स्नपनेन गलज्जलानि स्रवन्ति यानि वासांसि अन्याक्षुःत्य
क्तवत्यः तैः शुचा स्थूलाश्रुस्रुतिर्येषां तैः अरोदीव रोदनं क्रन्दनमिव भावे लुङ् । अत्र धावल्यमु
गलज्जलगलनं क्रियानिमित्तयोर्हासरोदनक्रिययोः स्वरूपोत्प्रेक्षयोः संसृष्टिः ॥ ६६ ॥ *
॥ आर्द्रत्वादिति ॥ आर्द्रत्वाज्जलेन प्रेम्णा च सरसत्वादतिशयिनीमतिशयवतीं संसक्तिं सं
श्लेषं परिचयं चोपेयिवद्भिः प्राप्तवद्भिः अत एव भृशं भूरिशो बहुशोऽवधूतैर्निरस्तैरपि अन्य
त्रनिष्कासितैरपि नवरक्तैरेव नवरक्तकैः नूतनरक्तवस्त्रैर्नवानुरागिभिश्च वामलोचनानां स्त्री
णामङ्गेभ्यो विश्लेषः कथमपि प्रपेदे प्राप्तः । एकत्रातिश्लेषादन्यत्रातिपरिचयाच्चेति भावः

वासांसिन्यवसितयानयोषितस्ताः शुभ्राभद्युतिभिरहासितैः मुदेव ।
अन्याक्षुः स्नपनगलज्जलानियानिस्थूलास्रुस्रुतिभिररोदितः शुचेव
॥ ६६ ॥ आर्द्रत्वादतिशयिनीमुपेयिवद्भिः संसक्तिंभृशमपिभूरिशो
ऽवधूतैः । अङ्गेभ्यः कथमपिवामलोचनानांविश्लेषोवसनवरक्तकैः प्रपे
दे ॥ ६७ ॥ * * * * * * * * * * * * * * * * *

। अन्यासक्ताः कामिनो धनपरायणाभिर्वेश्याभिरवधूताः कथञ्चिन्मुञ्चन्तीत्यर्थान्तरप्रतीतिः
। इह विशेष्यस्यापि श्लिष्टत्वाच्छब्दशक्तिमूलो ध्वनिरेव ॥ ६७ ॥ * * * * * * * ॥
॥ प्रत्यंसमिति ॥ एकाः स्त्री प्रत्यंसमंसयोर्विभक्त्यर्थेऽव्ययीभावः ॥ विलुलितमूर्धजा विकी
र्णकेशा सती स्नानार्द्रं वपुः चिराय चिरमुद्वापयन्निरवापयत् अशोषयदित्यर्थः यावत्स्नपनेऽर्द्ध
नालुङ् । अर्त्तिह्रीत्यादिना पुगागमः किल खलु पुनस्तद्वपुस्तु अभिमतं प्रियमन्तिके
ऽभिवीक्ष्य स्वेदाम्बुनो द्रवन्द्रवशब्दः शुक्लादिवत् गुणे पुंसि गुणिनि भेद्यलिङ्गः आपोद्रवाः
सर्वाणि द्रवाणि तु स्वसुखेन स्नुतानीत्यादिप्रयोगात् । अभिमतरामनिशयेनाभवदित्य

र्थः । निरुक्षैर्नितरप्रक्रिमेनिङ्त्यादिनानिरुक्तायाम्प्रत्ययःनङ्गितस्यासर्वविभक्तिरित्व
व्ययत्वम् । नाजानानवाक्यार्थःकर्मनद्रवभवनंनाज्ञासीदित्यर्थःअविरतस्नेहार्द्रतामजा
नतीस्नानार्द्रमेवेतिमन्यमानापुनःपुनःवपुरुद्वापयन्त्येवास्तेइतितात्पर्यार्थः । अत्रवपुष्प
कर्तृकस्यवीक्षणस्यवपुष्युपचारात्द्रवनक्रियायाःसमानकर्तृकत्वात्पूर्वकालतानिर्वाहः ए
षा चहर्षौत्सुक्यादिसञ्चारिसङ्कीर्णस्वेदरोमाञ्चादिसात्त्विकसम्पन्नाश्लिनाद्यनुभाववतीचे
त्यनुसन्धेयं । अत्रोद्वापनयाकारणेसतिद्रवत्वनिवृत्तिरूपकार्यानुत्पत्तेस्तद्विरुद्धद्रव
त्वप्रतिपादनमुखेनाभिधानाद्विशेषोक्तिरलङ्कारः । तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निग
द्यतइतिलक्षणात् ॥ ६८ ॥ ************************ ॥

प्रत्यंसंविलुलितमूर्द्धजाचिरायस्नानार्द्रंवपुरुदवापयत्किलैका । ना
ज्ञासीदभिमतमन्तिकेऽभिवीक्ष्यस्वेदाम्बुद्रवमभवत्तदंपुनस्तत्॥ ६८॥
सीमन्तं निजमनुबध्नतीकराभ्यामालक्ष्यस्तननटबाहुमूलभागा। भर्त्रा
न्यामुहुरभिलष्यतानिदध्येनैवाहोविरमतिकौतुकंप्रियेभ्यः॥ ६९॥

॥ सीमन्तमिति ॥ निजमात्मीयंसीमन्तंमूर्द्धजमध्यपङ्क्तिः । सीमन्तमस्त्रियांस्त्रीणांकेश
मध्येतुपङ्क्तिरितिवैजयन्ती ॥ कराभ्यामनुबध्नतीग्रथ्नतीविभजन्तीत्यर्थः । अतएवसम
न्तात्लक्ष्यास्तननटेचबाहुमूलेचतस्यभागाःप्रदेशायस्याः साअन्यास्त्रीमभिलष्यताऽभि
लषताःवाभ्राशेत्यादिनावैकल्पिकःश्यन्प्रत्ययः । भर्त्रामुहुर्निदध्येध्यातानिरीक्ष्येत्यर्थः
। निर्वर्णनंतुनिध्यानंदर्शनालोकनेक्षणमित्यमरः । अहोआश्चर्येकौतुकमभिलाषःप्रीण
नोनिप्रियाःविषयाः । इगुपधज्ञाप्रीकिरःकः । तेभ्योनविरमतिउपभोगेपिनानिवर्त्ततेइ
तिआश्चर्यं । नजातुकामःकामानामुपभोगेनशाम्यतीतिभावः । जुगुप्साविरामप्रमादार्था
नामुपसंख्यानमितिपञ्चमीव्याङ्परिभ्योरमइतिपरस्मैपदं । अर्थान्तरन्यासः ॥ ६९॥

॥ स्वच्छेति ॥ स्वच्छेनाम्भसा स्नपनेनाभिषेकेण विधौतं क्षालितमङ्गं वपुस्ताम्बूलद्युत्या
ताम्बूलरागेण विशद उज्ज्वल ओष्ठोऽधरः प्रतनु सूक्ष्मं विविक्तं विमलं वा तत्स्व अथवा विवि
क्तमेकान्तस्थानं च। विविक्तौ पूतविजनावित्यमरः। इत्येवं रूप इयानेतावानेव विलासि
नीनामाकल्पो नेपथ्यमलङ्कृतिमन्यैरित्यर्थः। कुसुमेषुणा कामेन स मूल्यो यदि न चेत्। अन्य
था उद्दिजिनानामिव कनकभूषणमपि भारायतन एवेति भावः। एतेन विच्छित्याख्य आलम्ब
नचेष्टारूप उद्दीपनविभाग उक्तः। स्तोकभूषणयोगेऽपि विच्छित्तिरिति गम्यत इति लक्षणा
त्। अत्र स्नानताम्बूलादिपदार्थानां विशेषणगत्या अङ्गोष्ठादीनामाकल्पत्वप्रतिपाद
नार्थहेतुकत्वात्काव्यलिङ्गमलङ्कारः ॥ ७० ॥ ****************** ॥

स्वच्छाम्भः स्नपनविधौतमङ्गमोष्ठस्ताम्बूलद्युतिविशदो विलासिनी
नाम्। वासस्तु प्रतनु विविक्तमस्त्वितीयानाकल्पो यदि कुसुमेषुणा न
शून्यः ॥ ७० ॥ इति धौतपुरन्ध्रिमत्सरान्सरसि मज्जनेन श्रिय
माप्तवतोऽतिशायिनीमपमलाङ्गभासः । अवलोकयतदैवपाद्वा
नपरवारिराशेः शिशिरेतररोचिषाप्यपान्ततिघुमं तुमीषे ॥ ७१ ॥

॥ अथोत्तरसर्गं सूर्यास्तमयादि वर्णनं प्रस्तौति ॥ इतीति । इतीत्थं सरसि मज्जनेन स्ना
नेन धौतपुरन्ध्रिमत्सरान् क्षालितमानिनीमानान् अभीक्ष्णमतिशयेन अतिशायिनीमाभीक्ष्ण्ये
णिनिः श्रियमाप्तवतः अपमलाङ्गभासो विमलाङ्गकान्तीन् यादवानवलोकयतदैव शिशिरे
तररोचिषा उष्णांशुना अपरवारिराशेः पश्चिमाब्धेः पान्तं निघुणूरेषुमं क्रांप्रवेष्टुमीषे इष्टं भावे
लिट् परचेष्टासाक्षात्कारो विषयिणां दृग्विषयाभिलाषमनाराधन्त इति भावः। अत्र भा
नोः कालप्राप्तमज्जनस्य यादवमज्जनावलोकनहेतुकत्वमुत्प्रेक्ष्यते। अतिशायिनीवृत्तं ।
समौ जभौ गौ गिदकृत्स्नर इति छन्दोलक्षणात् ॥ ॥ ************** ॥

॥ इतिपदवाक्यप्रमाणपारावारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघव्याख्याने सर्वंकषाख्येऽष्टमः सर्गः ॥ ८ ॥ ****************** ॥

इतिश्रीमाघकृतौ शिशुपालवधे महाकाव्ये जलविहारोनामाष्टमः सर्गः ॥ ८ ॥ ********************



॥ अथदूर्वासमयम्बर्णयति ॥ अभितापेति । अथमिमंक्षानन्तरमुष्णरुचिःसूर्य्योनि जनेजसामभितापसम्पदंसन्तापाधिक्यमसहमानइवापराम्बुनिधेः पश्चिमाब्धेः पयसि प्रपित्सुःपतितुमिच्छुःपततेःसन्नन्तात्प्रत्ययः सनिमीमेत्यादिनाइसादेशःअत्रलोपोऽभ्यासस्येत्यभ्यासलोपःअस्तगिरिमस्ताद्रिं । अस्तस्तुचरमःक्ष्माभृदित्यमरः । अधिरोढुमभ्यपतत्अभ्यधावत् । अत्रासहमानइवेतिकालप्राप्तस्यपयसिप्रपातस्यनिजतेजोसहनहेतुकत्वमुत्प्रेक्षते । अस्मिन्सर्गेप्रमिताक्षरावृत्तं । प्रमिताक्षरासजससैरुदितेतिलक्षणात ॥ १ ॥ ******************************* ॥

॥ गतेति ॥ रतेनरत्यर्थं । प्रतिनोत्सुकाभ्यांनुनीयाचेतिसम्बन्ध्यर्थेनृतीया । भृशमुत्सुकतां

अभितापसम्पदमथोष्णरुचिर्निजतेजसामसहमानइव । पयसिप्रपित्सुरपराम्बुनिधेरधिरोढुमस्तगिरिमभ्यपतत् ॥ १ ॥ गतयापुरःप्रतिगवाक्षमुखंदधतीरतेनभृशमुत्सुकताम् । मुकुरंतरलभुवमस्तगिरेःसवितुस्त्रियोपिदमिमीतदृशा ॥ २ ॥ ********

कालाक्षमत्त्वलक्षणामौत्सुक्यन्दधतीयोषित्पुरोऽग्रेगवाक्षमुखङ्गवाक्षद्वारम्प्रतिगतयाअपहृतयादृशाअस्तगिरेःसवितुस्त्वान्तरालभुवंमध्याकाशदेशंमुकुरमिमीतमानितम् । हस्तमात्रमवशिष्टमरत्निमात्रमवशिष्टमित्यादिमानकरणेनास्तमयंप्रतिक्षिप्तवतीत्यर्थः । माङोलुङिघ्वास्थाविनिर्द्दिभावःभृञामिदित्याभ्यासस्येत्वं । एतस्यास्तमयप्रतीक्षणभ्रमादौत्सुक्यानुभवान्तरोपलक्षणंअनौत्सुक्यभाववचनात्प्रेयोलङ्कारः ॥ २ ॥ ******** ॥

॥ विरलेति ॥ परिणतिंपरिवृत्तिंअन्यत्रजरावस्थांचगतःअतएवविरलाअल्पाआतपस्यच्छविर्यस्यसःअन्यत्रक्षीणप्रभः अनुज्ज्वपुःअन्यत्रचोष्मक्षयादीषद्दग्धदेहः अलवणायबागूरिनिवत्अल्पार्थेनञ्प्रयोगःपरितोविपाण्डुरेकत्रमुग्धाअपटलच्छन्नत्वादपरत्रपलि

त्वैस्य पाण्डुरमभ्रमाकाशमेव शिरो दधद्वहन् परिमन्दं प्रक्षीणांशु सूर्य एव चक्षुर्यस्य
नयनं यस्य स दिवसः शिथिलः शिथिलवृत्तिः शिथिलाङ्गश्चाभवत्। अत्राभ्रशिरस्
त्वाद्यवयवरूपणाद्दिवसस्य स्थविर इत्यवयवरूपकसिद्धेः एकदेशवृत्तिरूपकं ज्ञेयानुप्रा
णितम्॥ ३ ॥ ************************** ॥

॥ अपराह्णेति ॥ अपरोऽपरभागोऽह्नोऽपराह्णो दिनान्तः। पूर्वापराधरोत्तरमेकदेशिनै
काधिकरणे इत्येकदेशिसमासः राजाहःसखिभ्यष्टच् अह्नोऽह्न एतेभ्य इत्यह्नादेशः अह्नो
ऽदन्तादिति णत्वं। तस्मिन्नपराह्णे शीतलतरेण निलेन शनैर्मन्दं चलिता चालिता लताः

विरलातपच्छविरनुष्णवपुः परितो विपाण्डु दधदभ्रशिरः। अभवद्ग
तः परिणतिं शिथिलः परिमन्दसूर्यनयनो दिवसः॥ ३ ॥ अप
राह्णशीतलतरेण शनैरनिलेन लोलितलताङ्गुलये। निलयाय शाखि
न इवाह्वयते ददुराकुलाः खगकुलानि गिरः॥ ४ ॥ उपसंध्यमा
स्त तनु सानुमतः शिखरेषु तत्क्षणमशीतरुचः। करजालमस्तसमये
ऽपि सतामुचितं खलूच्चतरमेव पदम्॥ ५ ॥ *******

त्वाङ्गुलयो यस्य तस्मै अत एव निलयाय निवासायाह्वयते अङ्गुलिसंज्ञया आह्वानं कुर्वाणाय
इव स्थितायेत्युत्प्रेक्षा। शाखिने वृक्षाय खगकुलानि पक्षिसंघा आकुलाः सन्तो गिर इव सा
शब्दानि प्रत्युत्तराणीव ददुरिवेत्यनुषङ्गादुत्प्रेक्षा ॥ ४ ॥ ************ ॥

॥ उपसंध्यमिति ॥ उपसंध्यं संध्यायाः समीपे समीपार्थेऽव्ययीभावे नपुंसकत्वाद्ध्रस्वत्वं।
अशीतरुचः उष्णांशोः तनु करजालं तत्क्षणमस्मिन्क्षणे तत्काले पीत्यर्थः। अत्यन्तसंयो
गे द्वितीया। सानुमतोऽद्रेः शिखरेष्वास्त आस्त निष्ठत् आसेः कर्तरि लङ्। सतां सत्समयेना
स्तसमयेऽप्युच्चतरमेव पदमुन्नतस्थानमेवोचितं खलु अर्थान्तरन्यासः ॥ ५ ॥ ***॥

॥ प्रतिकूलतामिति ॥ विधौ दैवे प्रतिकूलतामुपगते सति बहुसाधनता अनेकसाधनवत्ता
विफलत्वमेति महत्यपि साधनसम्पत्तिर्निष्फलैवेत्यर्थः । तथा हि पतिष्यत आसन्नपातस्य
दिनभर्तुः करा अंशवो हस्ताश्च । बलिहस्तांशवः कराः इत्यमरः । तेषां सहस्रमपि अवलम्ब
नायावष्टम्भनाय नाभूत् अतो दैवमेव प्रबलमिति भावः । विशेषेण सामान्यसमर्थनरूपो
ऽर्थान्तरन्यासः ॥ ६ ॥ ********************* ॥

॥ नवेति ॥ अतुषारकर उष्णांशुः नवकुङ्कुमवदरुणपयोधरया नवसंध्यारुणमेघया अन्यच
नवकुङ्कुमवदरुणकुचया स्वकरावसक्तरुचिराम्बरया स्वकिरणाक्रान्तरुचिराकाशया अन्य

प्रतिकूलतमुपगते हि विधौ विफलत्वमेति बहुसाधनता । अवलम्ब
नाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥ ६ ॥ नवकुंकुमारु
णपयोधरया स्वकरावसक्तरुचिराम्बरया । अतिसक्तिमेत्य वरुणस्य
दिशा भृशमन्वरज्यदतुषारकरः ॥ ७ ॥ गतवत्यराजत जपाकुसुम
स्तवकद्युतौ दिनकरे वनतिम् । बहलानुरागकुरुविन्ददलप्रतिबद्ध
मध्यमिव दिग्वलयम् ॥ ८ ॥ *********

त्र स्वहस्तलग्नचारुवस्त्रया वरुणस्य दिशा पश्चिमदिशा सहेत्यर्थः । वरुणसम्बन्धात्पर
ङ्गनात्वं च गम्यते वृद्धो यूनेति सूत्रादेव प्रयोगात्सहार्थानामप्रयोगेऽपि सहयुक्तेऽप्रधाने इ
ति सहार्थे तृतीया । अतिसक्तिमिति सन्निकर्षमत्यासक्तिं च एत्य प्राप्य भृशमन्वरज्यत् लोहि
तोऽरक्तवांश्चाभवत् । रज्जेर्दैवादिकात्कर्त्तरि लुङ् कुषिरजोः प्राचां श्यन्परस्मैपदं चेति कर्म
कर्त्तरि वा । अत्र वारुणी दिनकर महिम्नैव नवयोर्जारभावप्रतीतेः समासोक्तिरलङ्कारः ॥ ७ ॥
॥ गतवतीति ॥ जपाकुसुमस्तवकद्युतौ लोहितवर्णे दिनकरेऽवनतिमस्तनाशं गतवति सु
निबध्यमानेस्तीत्यर्थः । दिग्वलयं दिङ्मण्डलं कर्मणश्च ध्वन्यते । बहलानुरागैस्ताम्र

गैः कुरुविन्ददलैः पद्मरागशकलैः प्रतिबद्धः प्रत्युप्तो मध्यो यस्य तम् इव राजत इत्युत्प्रेक्षा । कुरुविन्दस्तु मुस्तायां कुल्माषव्रीहिभेदयोः । इङ्गुदे पद्मरागे च मुकुरेऽपि स्मृतः इति विश्वः ॥ ८ ॥ ************************************* ॥

॥ द्रुतेति ॥ द्रुतं तप्तं यत् शातकुम्भं तपनीयम् । तपनीयं शातकुम्भमिति सुवर्णपर्याये चामरः । तेन सदृशं तन्निभमिति नित्यसमासः । पयसि समुद्रोदके अर्द्धं यथा तथा मग्नं वपुर्यस्य तस्यांशुमतोऽर्कस्य मण्डलम् विरञ्चेर्ब्रह्मणो नखेन विभिन्नस्य द्विधा विदलितस्य बृहतो जगदण्डकस्य जगदाश्रयकोशस्य ब्रह्माण्डकस्यैकतरखण्डमन्यतरदलमिव रुरुचे रराज । अत्रोपमानस्य पुराणप्रसिद्धत्वादुपमालङ्कारः ॥ ९ ॥ ********* ॥

द्रुतशातकुम्भनिभमंशुमतो वपुरर्द्धमग्नवपुषः पयसि । रुरुचे विर-
ञ्चिनखभिन्नबृहज्जगदण्डकैकतरखण्डमिव ॥ ९ ॥ अनुरा-
गवन्तमपि लोचनयोर्दधतं वपुः सुखमतापकरम् । निरकासयद्र-
विमपेतवसुं वियदालयादपरदिग्गणिका ॥ १० ॥ ****

॥ अनुरागवन्तमिति ॥ अपरदिक्पश्चिमा सैव गणिका वेश्या अनुरागो लौहित्यमभिलाषश्च तद्वन्तमपि लोचनयोः सुखयतीति सुखं सुखकरं शान्तत्वादभिरूप्याच्च दर्शनीयञ्च वपुर्दधतमपि नितरामतापकरमौष्ण्यादशठत्वाच्चासन्तापकारिणं सुखसर्वस्वम् अपेतवसुं क्षीणरश्मिं निर्धनञ्च । देवभेदेनले रश्मौ वसुः रत्ने धने वसु स्यादित्यमरः । रविं सूर्यं विटञ्च गम्यं नीति वियदाकाशमेवालयो गृहं तस्मान्निरकासयत् निष्कासितवती धनपरा हि वेश्या निर्गुणमपि धनिकमा सर्वस्वहरणादत्यनुरक्तवदनुवर्त्तते गुणवन्तमपि हृतसर्वस्वं निर्वासयन्तीत्यर्थ एवेति भावः । अलङ्कारोऽर्कङ्कितश्लोकार्थः । अत्र वियदालयादपरदिग्गणिकादिष्वेकदेशरूपणाद्रवेर्विटत्वरूपणावगमादेकदेशवर्त्तिरूपकं श्लेषोऽनुप्रापितत्वादनु

सुरानुरक्तो वसवस्व चवस्तु नीभिनिरुपकपर्यवसितिनएवेत्यङ्गम् ॥ १० ॥ **** ॥

॥ अभीति ॥ नलिनी अभितिग्मरश्मि सूर्याभिमुखं चिरमाविरमात् समयादनिमेषतया अपक्ष्मपातनतया दलसंकोच एवात्र निमेषः । अवधानेनाभिमुखावस्थानिर्बन्धेन खिन्न मलसं अत एव विगलद्भिः सरन्मधुव्रतकुलमेवाश्रुजलं यस्य तत् अब्जमेव नयनं न्यमिमीलत् । मीलयति स्म । भ्राजभासेत्यादिना विकल्पादुपधाह्रस्वः अत एव नाभ्यासदीर्घः । अनुर क्ताहि कान्ता कान्तमनिमेषं पश्यन्ती तदपाये सति निमीलिताक्षी स्यादिति भावः । अत्राथवा नयनमित्याद्यवयवरूपणादवयविनोर्नलिनीतिग्मरश्म्योर्नायिकानायकत्वरूपकत्वसिद्धे रेकदेशविवर्तिरूपकं ॥ ११ ॥ ********************** ॥

अभितिग्मरश्मि चिरमाविरमादवधानखिन्नमनिमेषतया । विगल न्मधुव्रतकुलाश्रुजलं न्यमिमीलदब्जनयनं नलिनी ॥ ११ ॥ अवि भाव्यतारकमदृष्टहिमद्युतिबिम्बमस्तमितभानु नभः । विरतोरुताप भतमिस्रमभाद् पदोषतैव विगुणस्य गुणः ॥ १२ ॥ *****

॥ अविभाव्येति ॥ अविभाव्यतारकमलक्ष्यनक्षत्रं अदृष्टं हिमद्युतेरिन्दोर्बिम्बं यस्मिन् तत् अद्यापि तु दिनचन्द्रतारकमित्यर्थः अस्तमित्यदर्शनेऽव्ययं अस्तमितोऽस्तङ्गतो भानुर्य स्मिन् तत् । एतावता निर्गुणत्वमुक्तं अथ निर्दोषत्वमाह । अवसन्नतापं अर्कास्तमयात् प्रशा न्तसन्तापं अतमिस्रमनुदितान्धकारं नभोऽन्तरिक्षमभात् भाति स्म भानेर्लुङ् । ननु निर्गुण स्य कथं शोभेति वाच्यं निर्दोषतया अपि गुणत्वादित्यर्थान्तरन्यासेनाह । विगुणस्य गुणरही तस्यापदोषतानिर्दोषत्वमेव गुणः अतो गुणवत्वाच्छोभायुक्तेति कारणेन कार्यसमर्थनरूपो ऽर्थान्तरन्यासः ॥ १२ ॥ ************************ ॥

॥ रुचीति ॥ रुचिधाम्नि भर्तरि निबोधयेर्भर्तरि पत्यौ परलोकं देशान्तरङ्गते मृते सति विरि

भासः शुद्धास्त्विषो ज्वलनं विविशुः अग्निं वा आदित्यः सायं प्रविशतीति श्रुतेरिति भावः । अन
अमृते प्राग्निर्यने पत्यौ साध्वीयं पतिव्रते निस्सरणादिति भावः । अग्निप्रवेशफलमाह । इ
तरथा ज्वलनाप्रवेशे अन्यजन्मनि जन्मान्तरे प्राप्तव्यः स एव पतिः अन्यत्र तु योऽस्मिन् ज
न्मनि पतिः स एव कथं सुलभो न कथंचिदित्यर्थः । उद्यन्तं वावादित्यमग्निरनुसमारोहती
ति श्रुतेः । तेनैव सहैवोद्गत इति निस्सरणादिति भावः । अतोऽग्निप्रवेशो युक्त इति समर्थना
द्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ १३ ॥ ****************** ॥
॥ अथ संध्याप्रादुर्भावमाह ॥ विहितेति । जनतया जनसमूहेन । ग्रामजनेत्यादिना समू
हार्थे तल्प्रत्ययः । विहिताञ्जलिः कृतप्रणामा इत्यर्थः । विकसत्कुसुम्भकुसुमवदरुणा।

रुचिधाम्नि भर्तरि भृशं विमलाः परलोकमभ्युपगते विविशुः । ज्वलनं
त्विषः कथमिवेतरथा सुलभोऽन्यजन्मनि स एव पतिः ॥ १३ ॥ वि
हिताञ्जलिर्जनतया दधती विकसत्कुसुम्भकुसुमारुणताम् । चिरमु
ज्झितापि तनुरौज्झदसौ न पितृप्रसूः प्रकृतिमात्मभुवः ॥ १४ ॥

न्ती दधती रञ्जकत्वादिति भावः । तदुक्तं सर्गाय रक्तं रजसोपबृंहितमिति । प्रसूत इति प्रसूर्मा
ता । जनयित्री प्रसूर्मातेत्यमरः । पितॄणां प्रसूः पितृप्रसूः असावियं संध्यारूपिणी आत्म
भुवो ब्रह्मणस्तनुर्मूर्तिः चिरमुज्झितान्यतापि प्रकृतिं स्वभावं जगद्वंद्यादि निजधर्ममित्यर्थः
नौज्झत न विससर्ज । उज्झ विसर्गे लङ् आडजादीनामित्याडागमः । आटश्चेति वृद्धिः । भू
तपूर्वोऽपि महाजनपरिग्रहः फलतीति भावः । पितामहः पितॄन् सृष्ट्वा मूर्तिं तामुत्ससर्जह ।
सा प्रातः सायमागत्य संध्यारूपेण पूज्यत इत्यादि भविष्यपुराणवचनं प्रमाणं । अत्र तनुत्या
गरूपकारणसद्भावेऽपि प्रकृतित्यागरूपकार्यानुदयाद्विशेषोक्तिरलङ्कारः । तत्सामग्र्याम
नुत्पत्तिर्विशेषोक्तिर्निगद्यत इति लक्षणात् ॥ १४ ॥ *************** ॥

॥ अथेति ॥ अथसंध्योदयानन्तरंसान्द्रायेसांध्याःसंध्यायाभवाःसन्धिवेलावृत्तनक्षत्रेभ्यो
ण्यण्प्रत्ययः । तैःकिरणैररुणितमरुणीकृतमतएवविरहार्त्याविरहव्यापराद्दलतो
दीर्यमाणात्हृदयात्सुतेनक्षरितेनासृजारुधिरेणानुलिप्तमिवस्थितमित्युत्प्रेक्षा । हरे
र्विष्णोर्हेतिरायुधंचक्रमित्यर्थः । हेतिःशस्त्रेतुनृस्त्रियोरितिकेशवः । हरिहेतेर्हूतिरिव
हूतिराह्वायस्यतद्धरिहेतिहूतिचक्राह्वमित्यर्थः । पततःपक्षिणः । पतत्त्रिपत्त्रिपतगपत
त्पत्त्ररथाण्डजाइत्यमरः । मिथुनंचक्रवाकद्वंद्वमित्यर्थः । पृथक्भेदेनोत्पपातउ
ड्डीयत् ॥ १५ ॥ ************************** ॥

॥ निलयइति ॥ यत्जलेजन्मयस्यतत्जलजन्मजलजमेतदेवसततंश्रियोनिलयआलय

अथसान्द्रसांध्यकिरणारुणितंहरिहेतिहूतिमिथुनंपततेः । पृथ
गुत्पपातविरहार्त्तिदलद्धृदयासृगनुलिप्तमिव ॥ १५ ॥ निल
यःश्रियःसततमेतदितिप्रथितंयदेवजलजन्मतया । दिवसात्यया
त्तदपिमुक्तमहोचपलाजनंप्रतिनचोद्यमदः ॥ १६ ॥ **

इतिप्रथितंप्रसिद्धं । निकाय्यनिलयालयाइत्यमरः । तदपिनित्यवासभूतमपीत्यर्थः ।
लयाश्रियादिवसात्ययेसायंकालेमुक्तंत्यक्तंअहोदेवानामपिदुर्लभत्वंयदापदिमहोपकारिण
स्त्यागइत्याश्चर्यंअथवाचपलाचापलवतीस्त्रीकमलाच । चपलाकमलाविद्युत्पुंश्चल्योपि
पलीपुंचेतिविश्वः । सैवजनस्यचपलाजनःजानेयस्येतिसंज्ञापूरणयोश्चेतिचोभयत्रापिपुम्व
ङ्गावप्रतिषेधः । तस्मिन्जनेऽस्मिन्नित्यर्थः । अदइदंतस्यत्यागरूपंचोद्यंचोदनीयंकथमित्याक्षे
थंनचपलत्वात्तस्याश्चर्यमितिभावः । स्त्रीचपलेषुकियदेतदितिभावः । श्लेषमूलानिप्रायो
ण्यनुप्राणितोऽयमर्थान्तरन्यासः ॥ १६ ॥ ********************* ॥
॥ दिवसइति ॥ दिवसोवासरःपुमानितिभावः । मित्रंसूर्यंसुहृदञ्चानुमित्रेणसहेत्य

र्थः । तृतीयार्थे इत्यनोः कर्मप्रवचनीयत्वाद्द्वितीया । मित्रं सुहृदि मित्रोऽर्क इति विश्वः ।
विलयं नाशमगमद्गतः । गमेर्लुङि पुषादित्वात् च्लेरङादेशः । अबलया स्त्रिया मया । रुचिभ
र्तुस्तेजोनिधेः प्रेमास्पदपतेः सार्कस्य विरहाधिगमात् । ल्यब्लोपे पञ्चमी । विरहज्ञानं प्रा
प्येत्यर्थः । इहास्मिँल्लोके किमास्यते किमर्थं स्थीयते । आस्तेर्भावे लट् । बतेति खेदे इती
त्थमालोच्येवेत्यर्थः । अत एवोत्प्रेक्षा । संध्ययापि सपदि व्यगमि व्यपगामीत्यर्थः । गमेः
स्वार्थण्यन्ताद्भावे लुङ् मित्वाद्ध्रस्वः । अण्यन्तादुपधावृद्धिर्नायं स्याद्धेतुमति च । तस्मात्स्वा
र्थे णिजन्त्याद्यो मितां ह्रस्वो यतो भवेत् । विगमश्चेत्तत्करोतीति ण्यन्ताल्लुङि निकोचितः॥१७
॥ अथान्धकारं वर्णयति ॥ पतित इति । पतङ्गोऽर्क एव मृगराट् सिंह इति रूपकसमा

दिवसोऽनुमित्रमगमद्विलयं किमिहास्यते बत मयाऽबलया । रुचि
भर्तुरस्य विरहाधिगमादिति संध्ययापि सपदि व्यगमि ॥ १७ ॥
पतिते पतङ्गमृगराजि निजप्रतिबिम्बरोषित इवाम्बुनिधौ । अथ नागयू
थमलिनानि जगत्परितस्तमांसि परितस्तरिरे ॥ १८ ॥ ※※※

सः । तस्मिन्निजेन प्रतिबिम्बेन रोषितेः कोपित इवेत्युत्प्रेक्षा । स्वप्रतिबिम्बे प्रतिसिंहभ्रमा
दिति भावः । अत एवाम्बुनिधौ पतिते सति तज्जिघांसयेति भावः । भावलक्षणसप्तमी । अ
थास्तपतनानन्तरं नागयूथानि करिकुलानीव मलिनानि श्यामानि । उपमानानि सामान्य
वचनैरिति समासः । तमांसि जगल्लोकं परितः परितस्तरिरे आच्छादयामासुः । स्तृणा
तेः कर्तरि लिट् । ऋतश्च संयोगादेर्गुणः । अत्र यद्यपि नागयूथमलिनानीत्युक्त्या नुश
सनसिद्धोपमानुसारात् पतङ्गमृगराजीत्यत्राप्युपमितसमासाश्रयणेनोपमैवोचिता तथापि
तदुत्प्रेक्षायाः पतङ्गेऽसम्भवात् सिंहे सम्भवाच्च रूपकमेव युक्तम् । तया च रूपकानुप्राणितो
त्प्रेक्षेयमुपमेति सङ्करः । तत्रोत्प्रेक्षया भ्रान्तिमदुपमया रूपकं च व्यज्यत इत्यलङ्कारेणाल

ङ्काद्ध्वनिरितिसंक्षेपः ॥ १८ ॥ *********************** ॥

॥ व्यसरदिति ॥ वहलपङ्करुचिसान्द्रकर्दमच्छविर्दिवसावसानेदिनान्तेपटुनःसमर्थ स्तमसः पटलम्भूधरगुहानामन्तरतोऽभ्यन्तरदेशादागत्यबहिर्बाह्यप्रदेशेव्यसरत्नुविस्तृतम्बाबहिर्बाह्यदेशादेत्यगुहाअधिकम्भृशमभञ्जचाभजनेत्सकिम्प्रविष्टन्नेत्यर्थः । भञ्जनेर्लुङिनङ्भ्करोभ्करीतिसकारलोपः । अत्रव्यापकत्वसादृश्यात्तमसोन्तर्बहिरपादानकात्व सन्देहात्सन्देहालङ्कारः ॥ १९ ॥ *********************** ॥

॥ किमिति ॥ प्रचुरीभवद्बहुलीभवत्तमःकर्तृ । किमम्बरविलग्नमाकाशस्थंसत् अधोभूतलं

व्यसरन्नुभूधरगुहान्तरतःपटलंबहिर्वहलपङ्करुचिः । दिवसावसा
नपटुनस्तमसोवहिरेत्यचाधिकमभञ्जगुहाः ॥ १९ ॥ किमलम्बता
म्बरविलग्नमधःकिमवर्द्धतोर्द्धमवनीतलतः । प्रससारतिर्यगथदिग्भ्य
इतिप्रचुरीभवन्ननिरधारितमः ॥ २० ॥ युग्मम् ॥ स्थगिताम्बरक्षिति
तलेपरितस्तिमिरेजनस्यदृशमन्धयति । दधिरेरसांजनमपूर्वमतः
प्रियवेश्मवर्त्मसुदृशोदद्दृशुः ॥ २१ ॥ *･*･*･*･*･*･*

अथदिग्भ्यस्ति श्रितिअलम्बतास्थंसत्किमिवअवनीतलोभूतलादूर्ध्वमुपरिष्टादवर्धतकिं अथदिग्भ्यस्ति र्यग्विससारविस्तृतमितितर्नातरधारि अधोलम्बनादीनामन्यतमन्नावधारितमित्यर्थः धा रयतेःकर्मणिलुङ् । अत्रापिपूर्ववत्सन्देहालङ्कारः ॥ २० ॥ ********* ॥

॥ स्थगितेति ॥ स्थगितेनिरोहितेअम्बरक्षितितलेयेनतस्मिन्तिमिरेपरितोजनस्यदृश मन्धयतिअंधङ्कुर्वतिसतिसुदृशःस्त्रियोऽपूर्वनूतनंरसाञ्जनंरसंरागमेवाञ्जनंसिद्धाञ्जन न्दधिरेदभ्रुःअतोहेतोः प्रियवेश्मवर्त्मदद्दृशुःअत्ररसाञ्जनवाक्यार्थेनप्रियवेश्मदर्शनस मर्थनाद्वाक्यार्थहेतुकङ्काव्यलिङ्गमलङ्कारः । नेनसिद्धाञ्जनधारणेननिदध्यादित्युप

माध्वननाद्लङ्कारेणालङ्कारध्वनिः ॥ २१ ॥ ***************** ॥

॥ अवधार्येति ॥ सान्द्रतमं यत्तन्तमसन्ध्वान्तन्तमः विष्वक्सन्तमसमित्यमरः । अवसम न्धेभ्यस्तमसः इति समासान्तः अच्प्रत्ययः । तत्कर्तृ सुतनोः सुभ्रुव्या दयितोपगमेऽपि याभि सरणे कार्यगुरुतां सम्भोगकार्यस्यावश्यकत्वमवधार्य निश्चित्य भयाय नाभवत् । स्तनौ कुचौ च तनुः कृशो यो रोमराजेः पन्थाः रोमराजिपथो मध्यभागस्तस्य वेपथवे कम्पाय । द्वितोथुजित्यथु च्प्रत्ययः । नाभवतामिति परिणामेनानुषङ्गः कार्यः तत्तस्य तत्तापिकामुकस्य कुतो भयं क्लेश गणना चेति भावः । अत्र सन्तमसकुचभारयोः कामनिमित्तभयकम्पानुदये कार्यगौरवाव धारणहेतुकत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षेयमनेकेन संसृज्यते ॥ २२ ॥ ******** ॥

अवधार्यकार्यगुरुतामभवन्नभयायसान्द्रतमसंतमसम्। सुतनोःस्त नौचदयितोपगमेतनुरोमराजिपथवेपथवे ॥२२ ॥ ददृशेऽपिभास्क ररुचाऽह्निनयःसतमोन्नमोभिरभिगम्यततताम् । द्युतिमग्रहीद्ग्रहग णोलघवःप्रकटीभवन्तिमलिनाश्रयतः ॥२३ ॥ *·*·*·*·*·*

॥ ददृशेइति ॥ योग्रहगणोऽह्नि दिवसे भास्कररुचा सवितुस्त्विषा नददृशे नेक्षितः । सग्रहगणस्तमोभि स्तमोभिरभिगम्य व्याप्य ततां विस्तृतां ... ३ ... इति मतीति रात्रिं । रजनी यामिनी तमी त्यमरः । अभिगम्याप्राप्य द्यु तिमग्रहीत् । ग्रहेर्लुङि ग्रहोऽलिटी निदीर्घः । तथाहि लघवोऽल्पाः । त्रिष्विष्टेऽल्पे लघु रित्यमरः । मलिनाश्रयतो निकृष्टाश्रयणात्प्रकटीभवन्ति अर्थान्तरन्यासः ॥ २३ ॥ * ॥

॥ अनुलेपनानीति ॥ तेन समयेन प्रदोषकालेन कर्त्रा अनुलेपनानि कुङ्कुमचन्दनादी नि कुसुमानि माल्यादीनि । तथा पतिषु कृतमन्यवः कृतकोपाः अबलाः स्त्रियः तथा दीपशि खा दीपज्वालाश्चेत्येतानि सर्वाणि सुप्तस्य पूर्वं सुप्तवन्मनोभवस्य कामस्य बोधनमुद्दीपनं यस्मि न्कर्मणि तद्यथा तथा तत्पूर्वकमित्यर्थः । इतरथा अनुलेपनादिबोधकस्य वैफल्यासम्भवा

ध्वेतिभावः। समंसहैवाववोधिषतबोधितानि। बुध्यतेर्ण्यन्तात्कर्मणिलुङ्। अत्रगन्धमा
ल्यसम्पादनद्वीमनः प्रसाददीपशिखोत्पादनानामवोधिषतेत्येकेनश्लिष्टशब्देनाभिधा
नात्श्लेषमूलाभेदाध्यवसायरूपातिशयोक्तिरेका। तयासुप्तमनोभवबोधनमितिक्रिया
विशेषणसामर्थ्यात्समभिति यौगपद्याभिधानाच्चमनोभवेतरबोधनयाकार्यकारणभूतयोस्त
द्विपर्ययरूपयावाच्यानदुभयापेक्षयागन्धमाल्यादीनां प्रस्तुतानामेवबोधनरूपैकधर्मसम्ब
न्धात्तुल्ययोगितामेदश्चेतिसङ्करः॥ २४॥ ****************** ॥

॥ अथचन्द्रोदयवर्णनंप्रारभते ॥ वसुधेति। अथमनःप्रसन्नानन्तरंवसुधान्तोनभू

अनुलेपनानिकुसुमान्यबलाःकृतमन्यवःपतिषुदीपशिखाः। सम
येनतेनचिरसुप्तमनोभवबोधनंसमवबोधिषत॥ २४॥ वसुधा
न्तनिःसृतमिवाहिपतेःपटलंफणामणिसहस्ररुचाम्। स्फुरदंशु
जालमथशीतरुचःककुभंसमस्कुरुतमाघवनीम्॥ २५॥ विशदप्र
भापरिगतंविबभावुदयाचलव्यवहितेन्दुवपुः। मुखमप्रकाशदशनं
शनकैःसविलासहासमिवशक्रदिशः॥ २६॥ ✱✱✱✱✱✱

प्रान्तेननिःसृतन्बहिर्निर्गतमहिपतेःशेषस्यफणामणिसहस्राणांरुचाम्भासाम्पटलंस्तोम
इवेत्युत्प्रेक्षा। शीतरुचश्चन्द्रस्यसम्बन्धिस्फुरदुल्लसदंशुजालमथोनइमांमाघवनीमाहे
न्द्रीं। मघवावज्रुलमितिनिर्विकल्पान्नृआदेशः। ककुभन्दिशंसमस्कुरुतअभूषयत्प्राच्या
न्दिशिचन्द्रकिरणजालमलक्ष्यतेत्यर्थः। सम्परिभ्याङ्करोतौभूषणइतिकात्पूर्वस्यसुडाग
मः। अडभ्यासव्यवायेपीतिनियमात्॥ २५॥ ****************** ॥
॥ विशदेति॥ विशदप्रभापरिगतंशुभ्रकान्तिव्याप्तं। उदयइतिअचलःउदयःपूर्वपर्वत
इत्यमरः। तेनव्यवहितमिन्दुवपुरिन्दुमण्डलंयस्मिन्तच्छक्रदिशःप्राच्याःमुखमग्रभागः

वक्त्रत्वप्रतीयतेनद्भेदेनोत्प्रेक्ष्यतेअप्रकाशदशनमलक्ष्यरदनांसविलासहासंसविलासस्मि
तमिवशनकैर्मन्दस्वभौ ॥ २६ ॥ ************************ ॥

॥ कलयेति ॥ पुरःप्राच्यामग्रभागेचतुषारकिरणस्येन्दोःकलयाकिरणेनअन्यत्रापलक्षि
तंपरिमन्दमल्पम्भिन्नाविदलितास्तिमिरौघाएवजटायस्यतत् गगनंनमृषासत्यङ्गणाधि
पतेःप्रमथपतेरीश्वरस्य । गणाःप्रमथसंख्यौघाइतिवैजयन्ती । मूर्त्तिरितिजनैःक्षणम
भ्यपद्यतगगनमष्टानांशिवमूर्त्तीनामन्यतममितियतत्सत्यमभिन्नमित्यर्थः । कलामात्रो
दितचन्द्रइतिफलितार्थः । रूपकालङ्कारः ॥ २७ ॥ ************ ॥

॥ नवेति ॥ नवचन्द्रिकाभिरेवकुसुमैःकीर्णतमएवकबरीकेशपाशः । जानपदेत्यादिना

कलयानुषारकिरणस्यपुरःपरिमन्दभिन्नतिमिरौघजटम् । क्षणम
भ्यपद्यतजनैर्नमृषागगनंगणाधिपतिमूर्त्तिरिति ॥ २७ ॥ नवच
न्द्रिकाकुसुमकीर्णतमःकवरीभृतीमलयजार्द्रमिव । ददृशेलला
टतटहारिहरेर्हरितोमुखेतुहिनरश्मिदलम् ॥ २८ ॥ *·*·*

ङीप् । ताम्बिभर्त्तीतितञ्जनःहरेःशक्रस्यहरितोदिशोमुखमग्रभागएवमुखंवक्त्रमितिश्लि
ष्टरूपकतास्यललाटतटवद्धारिमनोहरंहिमरश्मिदलमिन्दुखण्डंमलयजेनचन्दना
र्द्रमिवददृशेधावल्यादितिभावः । अत्रनवचन्द्रिकाकुसुमेत्याद्येकदेशविवर्त्तिरूपक
महिम्नाहरिवधूत्वप्रतीतौतत्सहकृतश्लेषावगतवक्त्राभेदाध्यवसितमुखसम्बन्धप्रसादास
दितललाटतटोपमोज्जीवनेनेन्दुदलस्यानुपात्तनिजधावल्यगुणनिमित्तमलयजार्द्र
त्वगुणस्वरूपोत्प्रेक्षेतिसङ्करः ॥ २८ ॥ ******************** ॥

॥ प्रथममिति ॥ हिमदीधितिरिन्दुःप्रथमङ्कलाकलामात्रमभवत् । कलातुषोडशोभा
गइत्यमरः । अथार्धमात्रमभवत्अर्धोनन्तरं । अथोअथेत्यमरः । उदितःसाकल्याद्

त्थितः सन् अमहान् महान् सम्पद्यमानोऽभून्महदभूत् । अभूततद्भावे च्विः ह्वलन्तत्वान्नकार्यं मरप्राप्तिः । तथाहि द्युतिशालिनः तेजिष्ठाः क्रमशः क्रमेणैव उपचयं वृद्धिं दधति सहसा झटिति तु न दधति ध्रुवं सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ २९ ॥ ** ॥

॥ उदमज्जीति ॥ अपनिद्रपाण्डुरसरोजरुजा विकचपुण्डरीकश्रियातुहिनद्युतिनाच न्द्रेण प्रथमं हरेः पूर्वमेव प्रबुद्धायाः अन्यथा तन्मुखं द्रक्ष्येनेतिभावः नदराजसुतायाः सिन्धुकन्यायाः श्रियावदनेन्दुनेवेत्युत्प्रेक्षा । कैटभजितो हरेः शयनात् समुद्रादित्यर्थः । उत्प्रेक्षात्सभावनार्थमित्यनिर्देशः उदमज्जि उन्मग्नं उत्थितमित्यर्थः ॥ ३० ॥ *** ॥

प्रथमं कलाऽभवदथार्द्धमथो हिमदीधितिर्महदभूदुदितः । दधति ध्रुवं क्रमत एव न तु प्रथितौजसोऽपि सहसोपचयम् ॥ २९ ॥ उदमज्जि कैटभजितः शयनादपनिद्रपाण्डुरसरोजरुचा । प्रथमप्रबुद्धनदराजसुतावदनेन्दुनेव तुहिनद्युतिना ॥ ३० ॥ अथ लक्ष्मणाऽनुगतकान्तवपुर्जलधिं व्यतीत्य शशिदाशरथिः । परिवारितः परितऋक्षगणैस्तिमिरौघराक्षसकुलं विभिदे ॥ ३१ ॥ ******

॥ अथेति ॥ अथेदयानन्तरं लक्ष्मणा लाञ्छनेन लक्ष्मणेन सौमित्रिणा चानुगतमनुसृतकान्तवपुर्यस्य सः लक्ष्मणानुगतकान्तवपुरिति शब्दश्लेषः वस्तुनः शब्दभेदेनार्थद्वयाभासे जतुकाष्ठवदेकशब्दप्रतीतेः । परितः समन्तात् ऋक्षगणैः नक्षत्रगणैः जाम्बवदादिभल्लूकसमूहैः च इत्यर्थश्लेषः एकनालावलम्बिफलद्वयवदखण्डैकशब्दादर्थद्वयप्रतीतेः । नक्षत्रऋक्षभताराइत्यमरः । ऋक्षाच्छभल्लभल्लूका इति च । परिवारितः शशीव दाशरथिर्दशरथपुत्रो रामः । अनइत्वत् । जलधिमतिलंघ्य तिमिरौघ एव राक्षसकुलं तत् विभिदे विभेदयामास । भिदेः कर्तरि लिट् । श्लेषसङ्कीर्णसमस्तवस्तुवर्त्तिसावयवरूपकालङ्कारः ॥ ३१ ॥

॥ उपजीवतीति ॥ अम्भसांनिधिःसमुद्रोवणिगिवसततंपरिमुग्धतांसौन्दर्यंअन्यत्रमौग्ध्यं व्यवहारानभिज्ञमितियावत् । मुग्धःसुन्दरमूढयोरितिविश्वः । दधतोदधानस्यघना नांवीथिर्घनवीथिरन्तरिक्षंसावीथिःपण्यवीथिरिवेत्युपमितसमासः नामवतीर्णवतःप्रवि ष्टवतःउडुपतेर्नक्षत्रनाथस्यकस्यचिद्वणिजस्यकलाःषोडशांशान्मूलधनवृद्धीश्च । कलाख्यान्मूलरैवृद्धौशिल्पादावंशमात्रके । षोडशांशेपिचन्द्रस्येतिविश्वः । उपचया यस्वाम्बुवृद्धयेसमृद्धयेचोपजीवतिस्मसेवतिस्मअन्यत्रलभतेस्मेत्यर्थः । यथाक्रियादिकु शलोप्यकुशलान्महान्तंलाभमाप्नोतितद्वदितिभावः । श्लेषसङ्कीर्णेयमुपमाउपमासङ्की र्णःश्लेषइत्यन्ये ॥ ३२ ॥ ************************* ॥

उपजीवतिस्मसततंदधतःपरिमुग्धतांवणिगिवोडुपतेः । घनवीथि वीथिमवतीर्णवतोनिधिरम्भसामुपचयायकलाः ॥ ३२ ॥ रजनी मवाप्यरुचमापशशीसपदिव्यभूषयदसावपिताम् । अविलम्बितक्र ममहोमहतामितरेतरोपकृतिमच्चरितम् ॥ ३३ ॥ *****

॥ रजनीमिति ॥ शशीरजनीमवाप्यरुचिंशोभामापअसौशश्यपितांरजनींसपदिव्य भूषयत् महतांसतांचरितमवलम्बितप्रकारंयथातथाइतरेतरोपकृतिमत् अन्योन्योपकार वत् । अहो । इत्यविलम्बादाश्चर्यं । अत्ररजनीशशिनोर्मिथःशोभाकरत्वादन्योन्या लङ्कारः।तदन्योन्यंमिथोयत्रोत्पाद्योत्पादकताभवेदितिलक्षणात् । तत्समर्थकस्यायम र्थान्तरन्यासः इत्यङ्गाङ्गिभावेनसङ्करः॥ ३३ ॥ ************** ॥

॥ दिवसमिति ॥ मृगधरश्चन्द्रोदिवसन्दिवसंइत्यर्थः । कालाध्वनोरत्यन्तसंयोगेद्वि तीया।भृशंजलरुचेरुष्णांशोःपादेनांघ्रिणाच । पादारश्म्यंघ्रितुर्यांशाइत्यमरः । हुनात्ताडितांअतएवानवरतैरविच्छिन्नैरविरलैः रुदतींकन्दतीमिवस्थितांकुमुदिनी

वनितानांअग्राणिचते करास्चइत्यभेदेनसमासइतिवामनः। तैरग्रकरैरग्रांशुभिरग्रह
स्तैर्मुहुरामृशन्स्पृशन्उदश्विश्वसन्उच्छ्वासयति स्म। परामृष्टानांपतिभिराश्वासनो
यत्वादितिभावः। श्वसधातोर्णौ चङ्युपधाया ह्रस्वः। अत्रपादएवपादस्तेनहतामिति
हननसाधितश्लिष्टरूपकोत्थापितेयमत्निरुक्तैरितिव्यधिकरणपरिणामगर्भारोदनोत्प्रेक्षा
सापेक्षेयमुच्छ्वासनोत्प्रेक्षेतिएकोविजातीयसङ्करः। तथाकरैरेवकरैःकुमुदिनीवनिते
तिश्लिष्टाश्लिष्टरूपणान्मृगधरेवल्लभत्वप्रतीतेरेकदेशवर्त्तिरूपकं तत्सापेक्षेयमुदश्वि
सदितिगम्योत्प्रेक्षेत्यपरोविजातीयसङ्करः। रोदनोत्प्रेक्षासापेक्षेयमुच्छ्वासनोत्प्रेक्षेतिस
जातीयसङ्करोपि ॥ ३४ ॥ ************************ ॥

दिवसंभृशोष्णरुचिपादहतांरुदतीमिवानवरतालिरुतैः। मुहुरा
मृशन्मृगधरोऽग्रकरैरुदश्विसत्कुमुदिनीवनिताम् ॥ ३४ ॥
प्रतिकामिनीतिदृशश्चकिताःस्मरजन्मघर्मपयसेवचिताम्। सुदृ
शोऽभिभर्तृशशिरश्मिगलज्जलविन्दुमिन्दुमणिचारुवधूम् ॥ ३५

॥ प्रतीति ॥ सुदृशोङ्गनाः अभिभर्तृ भर्त्तारमभि। लक्षणेनअभिप्रतीआभिमुख्येइत्यव्ययीभा
वः। शशिरश्मिभिर्गलन्तः स्रवन्तोजलविन्दवोयस्यास्तामिन्दुमणिश्चन्द्रकान्तशिला
सैवदारुतस्यवधूस्तन्मयीवधूः स्त्रीप्रतिमानांस्मरादुज्जन्मयस्यतेनस्मरजन्मनाघर्मपयसा
स्वेदाम्बुनाउपचितांव्याप्तांस्विन्नगात्रामित्यर्थः प्रतिकूलाकामिनीसपत्नीइतिभ्रान्त्येतिशे
षः चकिताभीतादृशुः। अत्र चन्द्रशिलापुत्रिकायांसादृश्यनिबन्धनयाप्रतिकामिनीभ्रा
न्त्याभ्रान्तिमदलङ्कारः ॥ ३५ ॥ ******************** ॥
॥ अमृतेति ॥ ओषधिपतिश्चन्द्रएवोषधिपतिर्वैद्यइतिश्लिष्टरूपकं। अमृतमेवामृतमौष
धविशेषः॥ तेनाङ्गवैरङ्गैः करैःकिरणैरेवकरैःहस्तैरजद्दृशामपमार्गमङ्गपरिमार्जनंविर

धन् कुर्वन् परितो विसर्पि सर्वव्यापि भृशं परितापि सन्तापकारि मानः कोपः स एव विषं तत्त्वपुषः शरीरादवतारयन्निस्सारयन् अवारोपितवान् अत्र सावयवरूपकेणौषधविशेषजाङ्गुलिकहस्तसंस्पर्शाद्विषमिव निशाकरकरस्पर्शादेवाङ्गनानां वपुषि रोषो न स्पृष्ट इत्युपमाव्यज्यते ॥ ३६ ॥ ****************************** ॥

॥ अमलेति ॥ अधिकमवभासिताः प्रकाशिता दिशो याभिस्तासामिन्दुरुचां निकरोऽमलास्वस्तु निर्मलमूर्तिषु तरुणीनां ये कपोलाः फलकानीव तेष्वभिन्नो मुकुरः प्रतिफलन्स्संक्रान्तस्सान्द्रतरं प्रचुरतरं विततार दर्पणसंक्रमणाद्विनिभावः । अत्रेन्दुभासां कपोलासंक्रमेपि

अमृतद्रवैर्विदधदब्जदृशामपमार्गमोषधिपतिः स्म करैः । परितो विसर्पि परितापि भृशं वपुषोऽवतारयति मानविषम् ॥ ३६ ॥ अमलात्मसु प्रतिफलन्नभितस्तरुणीकपोलफलकेषु मुकुः । विससार सान्द्रतरमिन्दुरुचामधिकावभासितदिशां निकरः ॥ ३७ ॥ उपगूढवेलमलघूर्मिभुजैः सरितामचुक्षुभदधीशमपि । रजनीकरः किमिव चित्रमदो यदुरागिणाङ्गणमनङ्गलघुम् ॥ ३८ ॥ *****

संक्रमोक्तेरसम्बन्धे सम्बन्धोक्तिरूपातिशयोक्तिः ॥ ३७ ॥ ************ ॥

॥ उपगूढेति ॥ रजनीकरः चन्द्रः अलघुभिरूर्मिभिरेव भुजैरुपगूढा वेला येन तं सावष्टम्भमिति भावः । सरितामधीशं समुद्रमपि स्वभावादक्षोभ्यमपीति भावः । अचुक्षुभत्क्षोभयति स्म । क्षुभ्यतेर्ण्यन्तात्सौ चङ्युपधाह्रस्वः । अनङ्गेन लघुं तत्सारं यदुरागिणां तेषामङ्गणमचुक्षुभदित्यदः किमिव चित्रं न किञ्चिदित्यर्थः । अत्राक्षोभ्यमब्धिं क्षोभयतश्चन्द्रस्य दण्डापूपिकन्यायादवक्षोभकत्वोक्तेरर्थापत्तिरलङ्कारः ॥ ३८ ॥ ***** ॥

॥ भवनेति ॥ परिमन्दतया एकाकित्वादसमर्थतया भवनोदरेषु गृहाभ्यन्तरेषु शयितः इ

नेमदनोजालकमुखोपगतान् गवाक्षविवरप्रविष्टान् अनएवालसनःस्फटिकयष्टीनांरु
गिवरुक् शोभायेषान्तान् स्फटिकदण्डसन्निभान् इन्दुकिरणानवलम्ब्यावष्टभ्योदतिष्ठ
न् उत्थितः । अत्रोद्वोधात्यानयोरभेदविवक्षयाउदोनूर्ध्वकर्मणीतिपरस्मैपदसिद्धः ।
एतत्पदेचाभेदाध्यवसायमूलातिशयोक्त्या स्फटिकयष्टिरुचइत्युपमयासहकृतयाअवल
म्ब्येयत्रावलम्ब्येवेत्युत्यापनस्यावलम्ब्यदेतुकन्बोत्प्रेक्षांप्रत्याय्यतइत्येतासांसङ्करः ॥३९
॥ अविभाविनेति ॥ मदनोपिप्रथमञ्चन्द्रोदयात्प्राक् तमसाऽविभाविनोऽलक्षितःइषुवि
षयोबाणलक्ष्यंयेनसःसोऽभवत् नूनमित्युत्प्रेक्षा । यद्यस्मादघर्मधाम्निशीतकरेउदितेदि

भवनोदरेषु परिमन्दतया शयितोऽलसः स्फटिकयष्टिरुचः । अवल
म्ब्य जालकमुखोपगतानुदतिष्ठदिन्दुकिरणान्मदनः ॥ ३९ ॥
अविभाविनेषु विषयः प्रथमं मदनोऽपि नूनमभवत्तमसा । उदितेदि
शः प्रकटयन्नमुनायद् घर्मधाम्नि धनुराचकृषे ॥ ४० ॥ युगपद्वि
काशमुदयाद्गमिते शशिनः शिलीमुखगणोऽलभत । द्रुतमेत्य पुष्प
काशमुदयाद्गमिते शशिनः शिलीमुखगणोऽलभत । द्रुतमेत्य पुष्प

धनुषो धनुषः कुमुदेऽङ्गनामनसि चाऽवसरम् ॥ ४१ ॥ ***

चन्द्र एव महानुद्दीपको मदनस्या
शः प्रकटयन्निसतिअमुनामदनेनधनुराचकृषेआकृष्ट ******************** ॥
भूदितिभावः ॥ ४० ॥ ******** । तस्यध
॥ युगपदिति ॥ पुष्पधनुःपुष्पधन्वा । वासंज्ञायामितिविकल्पान्नानङादेशः । तस्यध
नुःपुष्पचापंपुष्पान्तरं चतस्माच्चलितोनिःसृतःशिलीशल्यंमुखंयेषान्तेशिलीमुखाःबाणाश्च
लयश्च । अलिबाणौशिलीमुखावित्यमरः । तेषाङ्गणःशशिनःउदयाद्विकाशमोन्मुक्यमु
न्मीलनञ्चयुगपदेकदागमितेप्रापितेसुदृशांहृदयेकुमुदेचावकाशमास्वासमलभत् उभ
यत्रप्रवेशंलब्धवानित्यर्थः । अत्रचन्द्रोदयेकुमुदकामिनीहृदययोर्द्वयोरपिप्रकृतयोःश्ले

चीमुखप्रवेशलक्षणैकधर्मयोगाद्दीपम्यानुप्रयोगिनाएकधर्मत्वं चात्रशिलीमुखेतिश्लिष्ट
पदोपात्तयोरखिलनामयोरेकत्वाध्यवसायमूलानिश्रयोक्तिप्रसादादितिसङ्करः ॥ ४१ ॥
॥ ककुभामिति ॥ ककुभान्दिशांमुखानिसहसाझटित्युज्ज्वलयन्उद्भासयन्रतयेसुरता
यअधिकमाकुलत्वमौत्सुक्यन्दधत्यूनामितिशेषः । अन्यत्ररतयेकामदेव्यैआकुलत्वंभय
विह्वलत्वंदधत् । अत्रेरत्रिमुनेर्नयनप्रभवःअत्रिनेत्रसमुद्भवइतिपुराणात्त्रिनयनप्रभ
वोनभवतीत्यत्रिनयनप्रभवः । अपरस्त्रिनयनप्रभवादन्योदहनोऽग्निरिन्दुःकुसुमेषुङ्कामं
मदिदीपत्दीपयतिस्म । दीप्यतेर्णौचङिभ्राजेत्यादिनाविकल्पान्नोपधाह्रस्वः । अत्रप्रक
तेकुसुमेषोर्दीपनंनामप्रवर्धनन्तत्पत्तनप्रतीयमानेनप्रज्वलनेनाभेदाध्यवसायात्तन्निमि

ककुभांमुखानिसहसोज्ज्वलयन्दधदाकुलत्वमधिकंरतये । अदि
दीपदिन्दुरपरोदहनःकुसुमेषुमत्त्रिनयनप्रभवः ॥ ४२ ॥ इतिनि
श्चितप्रियतमागतयःसितदीधितावुदयवत्यबलाः । प्रतिकर्मकर्तुमु
पचक्रमिरेसमयेहिसर्वमुपकारिकृतम् ॥ ४३ ॥ *****

त्तमिन्दोर्दिङ्मुखोद्भासनादिधर्मसम्बन्धादपरोयन्दहनइत्यपरशब्दप्रयोगसामर्थ्याद्द
हनत्वोत्प्रेक्षानरूपकमितिरहस्यं । चन्द्रोदयात्कामोववृधेइतितात्पर्य्यम् ॥ ४२ ॥
॥ एवंचन्द्रोदयाख्यंउद्दीपनविभावमुक्त्वातत्फलमाह ॥ इतीति । इत्येवंसितदीधि
तावुदयति । अबलाःस्त्रियोनिश्चिताप्रियतमानामागतिरागमनंयाभिस्ताःसत्यःप्रतिकर्म
प्रसाधनंकर्तुंउपचक्रमिरे । प्रतिकर्मप्रसाधनमित्यमरः । चन्द्रोदयात्प्रियागमननि
श्चित्यअलङ्कर्तुं प्रक्रान्ताइत्यर्थः । तथाहिसमयेकार्यकालेकृतमनुष्ठितंसर्वङ्कर्मउपका
र्य्युपकारकम्भवतिअन्यथाविफलमेवेतिभावः । अतोनिश्चित्यप्रवृत्तिरासांयुक्तेत्यर्थान्तर
न्यासः ॥ ४३ ॥ ****************************** ॥

॥ अथप्रसाधनमेवप्रपञ्चयति ॥ सममिति । स्तनतोःस्त्रियःउरोजतटौउरस्थाद्यमेकमेवहारमेवभूषणंसमतवैषम्येणदधतुः संहततयासंश्लिष्टतयाएकमत्येनचजनितांनिर्विवरतांनिरन्तरालतांनीरंध्रत्वञ्चदधते।रिदंसमभागित्वमेवघटते । अन्तर्भेदान्तरायाहिविषयिणाञ्चिषयोपभोगाल्लदभागात्समशोभाहारधारणंयुक्तमितिभावः ॥ ४४ ॥ ** ॥

॥ कदलीति ॥ वधूःकदलीप्रकाण्डरुचिरःरम्भास्तम्भगम्भीरऊरूरेवतरुर्वन्धनवृक्षोयस्मिन् अत्रकदलीकाण्डस्यसौन्दर्यमात्रोपमानत्वात्तबन्धनयोग्यवृक्षवाचिनातरुशब्देनपुनरुक्तिः । महतिजघनस्थल्येवपरिसरःप्रदेशस्तस्मिन् रशनाकलापकएवगुणस्तेनमकरध्व

सममेकमेवदधतुःस्तनतोरुरुहारभूषणमुरोजतटौ । घटतेहिसंहततयाजनितामिदमेवनिर्विवरतांदधतोः ॥ ४४ ॥ कदलीप्रकाण्डरुचिरोरुतरौजघनस्थलीपरिसरेमहति । रशनाकलापकगुणेनवधूर्मकरध्वजद्विरदमाकलयत् ॥ ४५ ॥ अधरेष्वलक्तकरसःसुदृशांविशदंकपोलभुविलोध्ररजः । नवमञ्जनंनयनपङ्कजयोर्विभिदेनशंखनिहितात्पयसः ॥ ४६ ॥ ********

जोमदनःसएवद्विरदस्तमाकलयदबध्नीत् । रशनाबन्धेनजघनमतीवमदनोद्दीपकमासीदित्यर्थः । समस्तवस्तुवर्त्तिसावयवरूपकम् ॥ ४५ ॥ ************ ॥

॥ अधरेष्विति ॥ सुदृशामधरेष्वोष्ठेषुअलक्तकरसोलाक्षाद्रवःतथाकपोलभुविगण्डस्थलेविशदंशुभ्रंलोध्ररजःतथानयनपङ्कजयोर्नवमञ्जनञ्चशंखनिहितात्पयसःक्षीरात् नविभिदेभिन्नन्नाभूत् । कर्मकर्त्तरिलिट् । अधरादिनिहितंलाक्षारागादिकंशंखनिहितक्षीरवत्तावर्णादाश्रयतोभेदेनदुर्ग्रहमभूदित्यर्थः । अत्रपदेनदधरालक्तकरसादिकं । नशङ्खनिहितंक्षीरमित्येतावतावाक्यार्थेनवाक्यार्थसमारोपादसम्भवद्वस्तुसम्बन्धोवाक्यार्थ

निष्ठोनिदर्शनालङ्कारःतेनाधरालक्तकादीनांगुणतः एकत्वरूपःसामान्यालङ्कारोगम्यते
सामान्यंगुणसाम्येनयत्रवस्त्वन्तरैकतेतिलक्षणात् ॥ ४६ ॥ ************ ॥
॥ स्फुरदिति ॥ प्रमदाःस्त्रियःस्फुरन्तश्चलनाःउज्ज्वलाःश्यामलाअधराओष्ठाएवदला
निपत्राणियेषांतैःपरितोविकसन्तोदशनांशवोदन्तकान्तयएवकेसरभराः किञ्जल्कपुञ्जा
येषांतैःधृतानिमुग्धानिगण्डाएवफलकानिकर्णिकायेषांतैर्विकसद्भिरास्यकमलैःविबभुः
अत्रास्यकमलैरितिनिरूपणात्प्रमदाएवसमरस्याङ्गमितिसिद्धेरेकदेशविवर्तिसावयवरूपक
म्। आस्यकुमुदैरितिपाठेकुमुदस्यमुखोपमानत्वंकविसमयविरुद्धमित्येकावल्यलंका
रः ॥ ४७ ॥ ***************************** ॥

स्फुरदुज्ज्वलाधरदलैर्दधतीर्विलसद्दशनांशुकेसरभरैः परितः । धृतमु
ग्धगण्डफलकैर्विबभुर्विकसद्भिरास्यकमलैः प्रमदाः ॥ ४७ ॥ भ
जते विदेशमधिकेन जितस्तदनुप्रवेशमथवा कुशलः । मुखमिन्दुरु
ज्ज्वलकपोलमतः प्रतिमाच्छलेन सुदृशामविशत् ॥ ४८ ॥ *

॥ भजतइति ॥ अधिकेनप्रबलेनजितोविदेशन्देशान्तरंभजतेतमेवशरणतयाप्रविश्य
जीवतीत्यर्थः । अतोहेतोरिन्दुरुज्ज्वलौकपोलौयस्यतदितिमुखस्यविम्बग्रहणयोग्यतो
क्तेःपदार्थहेतुककाव्यलिङ्गं । सुदृशांमुखंप्रतिमाच्छलेनप्रतिविम्बव्याजेनअविशत्प्र
विष्टःसाक्षाच्चन्द्रएवायंनप्रतिमाचन्द्रइतिच्छलशब्दात्प्रतीतेः छलादिशब्दैरसत्यत्वप्र
तिपादनरूपोऽपह्नवालङ्कारः । । पूर्वोक्तकाव्यलिङ्गसापेक्षइतिसङ्करःतेनकपोलयो
र्दीकोत्तरंलावण्यंदर्पणौपम्यञ्चव्यज्यतेइत्यलङ्कारेणालङ्कारध्वनिः ॥ ४८ ॥ ** ॥
॥ ध्रुवमिति ॥ मदनेषवःकामशराःमहतिकठिनेकुचतटेप्रतिहतिम्प्रतिघातमागताःप्रा
प्ताध्रुवं। यद्यस्माद्गरिम्णानिजभारेणगम्भपितङ्कर्शितंअवलग्नंमध्यंयेनतदिदंकुचतटं। इ

नरङ्गैर्मनुष्यमिन्नरङ्गवत् । नेननुष्यमितिवनिप्रत्ययः । ननु तां कार्यं नागमन् नाभजत । पु
षादित्वेनाङ्गेरङादेशः । तदा मदनेषुपातात्कुचानि रिक्तमङ्गनानामङ्गं लग्नमासीदि
त्यर्थः । अत्र काठिन्यस्य प्रतिहतिः । अत एव सुदृशां सम्यग्दर्शनीयानां स्त्रीणां मनः कर्तृम
नोरमास्वपि वसनाङ्गरागसुमनःसु वस्त्रगन्धमाल्येषु इदमेतदिति इदं पुरोवर्त्तिवस्त्रेतदि
ति वसनमिति अनुलेपनमिति सुमनस इति विशेषाकारेण यथायोग्यमस्याकान्धारणादिमि
ति यन्न निरचेष्टन निरधारयत् प्रियागमनहर्षातिरेकादिति कर्त्तव्यतामूढमभूदित्यर्थः ।
चिनोतेर्लुङि निङ्निङ्वेः सिच् सार्वधातुकार्धधातुकयोरिति गुणः । हर्षोऽत्र सञ्चारि निश्चय

ध्रुवमागताः प्रतिहतिं कठिने मदनेषवः कुचतटे महति । इत एव
भ्रयदिदं गरिमग्लपितावलग्नमगमत्तनुताम् ॥ ४९ ॥ नमनोरमा
स्वपि विशेषविदां निरचेष्टयोग्यमिदमेतदिति । गृहमेष्यति प्रियतमे
सुदृशां वसनाङ्गरागसुमनःसु मनः ॥ ५० ॥ वपुरन्वलिप्तपरिरम्भ
सुखव्यवधानभीरुकतयानवधूः । क्षममस्य वाढमिदमेव हि यत्प्रि
यसङ्गमेष्वनवलेपमदः ॥ ५१ ॥ ※※※※※※※※※※

सम्बन्धेषु सम्बन्धो नैरन्तर्ययोक्तिः सुमनः सुमनइति यमकविशेषस्येति संसृष्टिः ॥ ५०
॥ वपुरिति ॥ वधूः स्त्री परिरम्भसुखव्यवधानभीरुकतया आलिङ्गनसुखविच्छेदभीरुत्वेन
। कुकनपि वक्तव्य इति कन्प्रत्ययः । वपुर्नान्वलिप्तनानुलिप्तवती अङ्गरागमात्रव्यवधा
नमपि न सहत इत्यर्थः । लिम्पतेः कर्त्तरि लुङि तङ् । तथा हि अदो वपुः प्रियसङ्गमेषु अन
वलेपमचन्दनमगर्वं चेति यत् । अवलेपस्तु गर्वे स्यात् लेपने भूषणेऽपि चेति विश्वः । इदम
नवलेपनत्वमेवास्य वपुषो वाढं भृशं क्षमं युक्तं श्लेषानुप्राणितोऽयमर्थान्तरन्यासः ॥ ५१ ॥ ॥
॥ निजेति ॥ अपरा स्त्री निजपाणिपल्लवतनस्य स्खलनात् अभिधालारभिना सिकाविवरं

नातारं धं प्रतिउत्पतितैरास्यकमलस्य श्वसनैर्मुखमारुतैर्मुखवासं मुखवासनां शनकैः परीक्ष मुमुदे । इत्थं वासकसज्जिका नायिका ॥ ५२ ॥ ******************* ॥

॥ विधृतइति ॥ दिवा आकाशेन तत्ववयसा वयस्यया चतुरेऽग्रे विधृते निधारिते परिपूर्णमण्डलविकाशं बिम्बशोभाभिभर्त्तीति तन्न्नत्रस्मिन्हिमधाम्नि चन्द्रे दर्पणतले च मृगदृशः स्वियः स्वमुखश्रियं पूर्वं त्वोपमानभूता मुत्तरत्वोपमेयभूता चेत्यर्थः । मुहुर्ददृशे औपम्यपरीक्षार्थमितिभावः । अत्रान्यश्रियोऽन्यत्रासम्भवाच्चन्द्रेतत्सदृशीमितितत्सदृशापेक्षासम्भवच्छत्सम्बन्धानिदर्शना । तथा चन्द्रदर्पणयोर्द्युतुल्यवयोस्वयथासंख्यमन्वयाद्यथासंख्याल

निजपाणिपल्लवतटस्खलनादभिनासिकाविवरमुत्पतितैः । अपरा परीक्ष्य शनकैर्मुमुदे मुखवासमास्यकमलश्वसनैः ॥ ५२ ॥ विधृते दिवा सवयसा चतुरः परिपूर्णमण्डलविकाशभृति । हिमधाम्नि दर्पणतले च मुहुः स्वमुखश्रियं मृगदृशो ददृशुः ॥ ५३ ॥ अधिजानु बाहुमुपधाय नमत्करपल्लवार्पितकपोलतलम् । उदकण्ठिकण्ठपरिवर्त्तिकलस्वरशून्यगानपरयापरया ॥ ५४ ॥ ***

ङ्कारस्य । तदुभयापेक्षया चन्द्रदर्शनयोर्मुखश्रीदर्शनस्थानत्वेन प्रस्तुतयोरेवौपम्यस्य गम्यत्वानुल्ययोगितेतिसङ्करः ॥ ५३ ॥ ********************* ॥

॥ अधिजान्विति ॥ नमति कपोलार्पणाय प्रह्वीभवति करपल्लवे पाणिपल्लवे अर्पितं निहितं कपोलतलं गण्डस्थलं यस्यास्तथा बाहुं अधिजानु जानुनि विभक्त्यर्थेऽव्ययीभावः उपधाय निधाय कूर्परेण जानुमवष्टभ्येत्यर्थः । कण्ठे परिवर्त्तत इति कण्ठपरिवर्त्ती न तु मुखोच्चारित इत्यर्थः । कलमव्यक्तमधुरं स्वरहीनं तार ध्वनिशून्यं षड्जादिस्वराभिव्यक्तिशून्यं हीनं वा यद्गानं तत्परया तदासक्तया मन्दं कण्ठेनैवा गीयतेत्यर्थः । कान्तश्लेषार्थमिति भावः ॥ अथ

त्कण्ठानुभावः अपरस्त्रियाउत्कण्ठउत्कण्ठनंप्रियसङ्गमायेत्सुकयास्थितमित्य र्थः । भावेतुङिचिणोलुक्अत्रकालापेक्षासहिष्णुचलक्षणमौत्सुक्यसञ्चारिनन्निबन्ध नाप्रेयोलङ्कारः । परयापरयेतियनकविशेषसंसृष्टिःनयाविरहेोत्कण्ठना । चिरपत्यव लोपेतुविरहोत्कण्ठेतोन्मनाइतिलक्षणात् ॥ ५४ ॥ ************* ॥

॥ प्रणयेति ॥ अथप्रसाधनानन्तरंमुग्धतरोऽत्यन्तकाममोहितस्तरुणीजनःप्रणयप्रकाश नविदोऽनुरागव्यञ्जनचतुरइत्यर्थः । मधुराःमधुरभाषिणीःअन्यत्ररम्याकृतीःसुतरा मभीक्ष्णंजनस्यचित्तहृतोमनोहारिणीःसखीर्दूतीइवकान्तमनुप्रयोजनं प्रतिप्रजिघायप्रे षितवान् । हितोतेर्लिङ्दूत्वेनसहसमासवचनात्दूतीइवेतिसमासः । तयासखीनामा

प्रणयप्रकाशनविदोमधुराःसुतरामभीष्टजनचित्तगृहः । प्रजिघाय कान्तमनुमुग्धतरस्तरुणीजनोदूतीइवाऽथसखी ॥ ५५ ॥ नचमे ऽवगच्छतियथालघुतांकरुणांयथाचकुरुतेसमयि । निपुणान्तथैनमु पगम्यवदेरभिदूतिकाचिदितिसंदिदिशे ॥ ५६ ॥ ****

॥ ५५ ॥ ****** ॥ सत्त्यान्तरङ्गत्वकार्यदर्शित्वादिव्यञ्जनादलङ्कारेणवस्तुध्वनिः ॥ ५५ ॥ **** ॥

॥ नचेति । समेदयितोयथामयिकरुणां ॥ तथाकाचिन्नायिकादूतीमाचिकमनुशास्ति ॥ एनन्दयितमुपगम्यप्राप्यतथानेनप्र कुरुतेयथालघुतामल्पतान्चनावगच्छतिनमन्यते । अभिदूति । अभि कारेणनिपुणम्वदेः । विध्यर्थेप्रार्थनेवालिङ् । इतीत्यङ्काचिन्नायिकाअभिदूति । खरितेत्वात्ता लक्षणेऽव्ययीभावेनपुंसकाद्रूस्वत्वं । सन्दिदिशेसन्दिष्टवतीकर्त्तरिलिट् । कोपात्कान्तंपराणुद्यपश्चात्तापसमन्वितेतिलक्ष णात् ॥ ५६ ॥ ************************ ॥

॥ दयितायेति ॥ मानपरयाअभिमानवत्या । अतएवापरयानायिकयाअगदितादयि

नमानयेत्यनुक्तां सखीं दयितावद्वितमानेतु । क्रियार्थोपपदस्य चकर्मणि स्थानिन इति च
तुर्थी । त्वरितं शीघ्रं यथा अन्यथा मरणमाशङ्क्ये ति भावः । तथाहि शोभनं हृदयं येषां ते सुहृ
दो मित्राणि । सुहृद्दुर्हृदौ मित्रामित्रयोरिति निपातः । चोदिताः प्रेरिताः सन्तः सुहृद
स्प्रियो ह्यद्यः हितः श्रेयस्कर स्तयोर्थ संकुर्वन्तीति प्रियहितार्थ कृतः कृतमेषामस्तीति कृतिनः
कृतकृत्या भवन्ति किमु किन्तु चोदनाम्बिनैव कृत्याः कृतिनः इति भावः । अर्थान्तरन्या
सः । नायिका च पूर्ववत् ॥ ५७ ॥ ************************** ॥

॥ अथ काचित्कलहान्तरिता कान्तम्प्रति निभिर्दूतीं सन्दिशति ॥ प्रतिभिद्येत्यादि । अ

दयितायमानपरयाऽपरयात्वरितं यया वर्गादितोऽपि सखी । किमु चो
दिताः प्रियहितार्थकृतः कृतिनो भवन्ति सुहृदः सुहृदाम् ॥ ५७ ॥
प्रतिभिद्य कान्तमपराधकृतं यदि तावदस्य पुनरेवमया । क्रियतेऽनुवृ
त्तिरुचितैव ततः कलयेदमानमनसं सखि माम् ॥ ५८ ॥ अवधीर्य
धैर्यकलितादयितं विदधे विरोधमथ नेन सह । तव गोप्यते किमिव क
र्तुमिदं न सहास्मि साहसमसाहसिकी ॥ ५९ ॥ ******

पराधकृतमागस्कारिणं कान्तम्प्रतिभिद्य निराकृत्य पुनर्मयैवास्यानुवृत्तिरनुसरणं क्रियते य
दि तावदुचितैव पतिव्रतानां प्राणेश्वरचित्तानुवृत्तेर्धर्मत्वादिति भावः । किन्तु हे सखि ततो
नुवृत्तेर्मां अमानमनसमभिमानहीनचित्ताङ्कलयेन्मन्यते ॥ ५८ ॥ ******* ॥
॥ तर्ह्येलाघवाय विगृह्यैव स्थीयतान्तत्राह ॥ अवधीर्येति । धैर्यकलिता कलितधैर्या सती
। आहिताग्न्यादिषु इति निष्ठायाः परनिपातः । दयितमवधीर्य तिरस्कृत्य तेन सह विरोध
म्विरधे करोमीति चेत् । इधाते: कर्तरि लिट् । हे सखि तव किमिव गोप्यते निगूह्यते न कि
ञ्चिदित्यर्थः किन्तु कथ्यत एवेति कथयतीव सहसा बलेन वर्त्तत इति साहसिकी ओजःसहो

अभ्यस्तापर्त्तिनइतिठक्। सानभवतीत्यसाहसिकीअद्यमितिशेषः। इदंसाहसंमितिशेषविरोधाचरणरूपंसाहसंत्कर्त्तुं। शकधृषेत्यादिनातुमुन्। सहतइतिसहासमर्था। पचाद्यच्। नास्मिअत्रासाहसिकत्वस्यविशेषणगत्या चासाहसासहनहेतुत्वोक्तेःपदार्थहेतुकाव्यलिङ्गमलङ्कारः ॥५९॥ ********************** ॥

॥ तर्हिकिमत्रकार्यमतआह ॥ तदिति। तत्तस्मात्त्वत्सभमुपेत्यमास्मोपालभथाःनोपालभस्वतद्दोषंनगणयेरित्यर्थः। स्मोत्तरेलुङ्चेतिउपाङ्पूर्वाल्लभेर्लङ्माङ्योगेलङ्त्यट्प्रतिषेधः। ननुसापराधःकथंनोपालभ्यस्तत्राह। वयमस्यदोषमपराधंनविद्मःकिलअज्ञानानाइवनिष्ठामइत्यर्थः। कार्यार्थिनःकुतोगर्वइति। विदोलटोवेतिणलादेशः। इ

तदुपेत्यमास्मनमुपालभथाकिलदोषमस्यनहिविद्मवयम्। इतिसं
प्रधार्य्यमरणायवधूर्विहिताऽगसेपिविससर्जसखीम्॥ ६०॥ ननु
संदिशेतिसुदृशोदितयात्रपयानकिंचनकिलाऽभिदधे। निजमै
क्षिमन्दमनिशंनिशितैःकृशितंशरीरमशरीरशरैः॥ ६१॥ *

तिसंप्रधार्यनिश्चित्यवधूर्नायिकाविहितागसेकृतापराधायापिमरणायप्रेयसे। क्रियाग्रहणाच्चतुर्थी। सखींविससर्जप्रजिघायविरहासहिष्णुत्वेतिभावः। एषाकलहान्तरिताप्रौढाच॥ ६०॥ ***************************** ॥

॥ नन्विति ॥ ननुसंदिशसंदेशंब्रूहिइत्युदितयादूत्याकथितयासुदृशानायिकया त्रपाहेतुनाकिंचननाभिदधेकिलनाभिहितंखलु। किन्तुनिशितैरशरीरशरैरनङ्गबाणैरनिशंकार्श्यनंकृशीकृतंकृशभावंअदात्तत्करोतीतिणिजन्तात्कर्मणिक्तः। शाविष्ठवङ्गवेरिष्ठेमाद्यलादेवैचेतिऋतुणाद्यारस्यरेफादेशः। निजंशरीरंमन्दमैक्षिईक्षितं। एषापिकलहान्तरितामध्याच। त्रपयानिजदूरयानभिधानान्निजशरीरनिरीक्षणेनसाप

स्या निर्वेदनाचनुत्स्यत्वज्जागरत्वावगमादिति । इयञ्चपञ्चमीकार्श्यारख्याकामावस्था । स्मृत्तिनःसङ्कल्पाज्जागरःकृशतारतिः । ह्रीत्यागोन्मादमूर्च्छान्ताइत्यनङ्गदशादश ॥ ६१ ॥ ** ॥ ********************************** ॥

॥ इत्थन्नायिकाभिरुपदिष्टादूत्यःकिमकुर्वन्नित्यत्रआह । ब्रुवतइति । प्रगल्भाःधृष्टाः मतिगर्भाःप्रतिभासारश्चगिरोयासांतादूत्यःनरानपुरुषानुपस्त्यनरवत्नरैःपुंभिस्तुल्यं । तेनतुल्यंक्रियाचेद्वतिरितिवतिप्रत्ययः । ब्रुवते सन चैनाबतावेजात्यं दूषणमित्यर्थांतरन्या सेनाह । सुहृदर्थमिति । तथाहिअजिह्मधियामकुटिलबुद्धीनांसम्बन्धिसुहृदेसुहृ दर्थं । अर्थेनसहनित्यसमासःसर्वलिङ्गताचेतिवक्तव्या । ईहितंचेष्टितंप्रकृतेर्विरुद्धम

ब्रुवतेस्सदूत्य उपसत्यनरवत्प्रगल्भमतिगर्भगिरः । सुहृदर्थमी हितमजिह्मधियांप्रकृतेर्विराजतिविरुद्धमपि ॥ ६२ ॥ मम रूपकीर्तिमहरद्भुवियस्तदनुप्रसक्तहृदयेयमिति । त्वयिमत्सरादि वनिरस्तदयःसुतरांक्षिणोतिखलुतांमदनः ॥ ६३ ॥ *** 

पिस्वभावविपरीतमपिविराजतिशोभते । तस्मान्नधार्ष्ट्यंदोषइत्यर्थः ॥ ६२ ॥ ** ॥

॥ अथकाचिद्दूतीकञ्चित्प्रियम्प्रतिसप्तभिःप्रार्थयते । ममेत्यादि । योभुविममरूपकी र्तिंसौन्दर्यप्रथममहरत्इयंचत्वियातदनुप्रविष्टहृदयातन्निमग्नासक्तचित्तेतिअतोहेतो स्त्वयिमत्सरादिवमदनोनिरस्तदयोनिःकृपःसन्त्वातत्प्रियांसुतरांक्षिणोतिक्षपयतिखलु । एतेनकार्श्यावस्थोक्ता । अत्रसाक्षात्प्रतिपक्षभूतनायकपीडासमर्थस्यमदनस्यतदीय नायिकापीडनोक्त्याप्रत्यनीकालङ्कारः । सचत्वयिमत्सरादिवेतिहेतूत्प्रेक्षोत्थापितश्चेति सङ्करः । बलिनःप्रतिपक्षस्यप्रतीकारेसुदुष्करे । यस्तदीयतिरस्कारःप्रत्यनीकन्तदुच्य तेइतिलक्षणात् ॥ ६३ ॥ ******************************** ॥

॥ नवेति ॥ सा त्वत्प्रियानवकथासु गुणकीर्तनेषु मुकुरङ्गुलीमुखेनाङ्गुल्यग्रेण श्रवणं श्रोत्रविवरं परिघट्टयन्तिस्फालयन्ती नियतं यद्वर्त्तते तेन परिघट्टनेन भवद्गुणपूगपूरितं श्रवणं अतृप्ततया नावद्गुणग्रहणेनासन्तुष्टतया घनतां नयति । बहुगुणसमानार्थं प्रशस्तादिवह्नयोः गुणप्रवेशाय स्थिरयतीत्यर्थः । ध्रुवमित्युत्प्रेक्षायाम् अत्र कण्डूविनोदनार्थं श्रोत्रघट्टने घनतानयनत्वमुत्प्रेक्ष्यते ॥ ६४ ॥ ********************** ॥

॥ उपेति ॥ अनयुरनः सन्तापाधिकः उष्णिमा उष्णत्वं येषां तैः श्वसितैर्निश्वासैरुपतप्यमानं सितेतरसरोजदृशो नीलोत्पलाक्ष्या अधरं नवनागवल्लिदलानां नागवल्लीदलानां रागरसः ...

नवत्वत्कथासु परिघट्टयति श्रवणं यदङ्गुलिमुखेन मुकुः । घनतां ध्रुवं नयति तेन भवद्गुणपूगपूरितमतृप्ततया ॥ ६४ ॥ उपतप्यमानमलघूष्णिमभिः श्वसितैः सितेतरसरोजदृशः । द्रवतामनेनु मधरं श्रमतेनवनागवल्लिदलरागरसः ॥ ६५ ॥ दधति स्फुटं रतिपतेरिषवः शितनां यदुत्पलपलाशदृशः । हृदयं निरन्तरवृहत्कठिनस्तनमण्डलावरणमप्यभिदन् ॥ ६६ ॥ ********

रसोरञ्जकः ओष्ठयोर्नवतामार्द्रतां नैतुं न क्षमते न शक्नोति । एतेनञ्जसव ष्ठोत्काद्वक्तसम्बन्धेप्यसम्बन्धोक्तेः सम्बन्धेऽसम्बन्धरूपातिशयोक्तिः स्वतः सिद्धकविप्रौढोक्तिसिद्धातिशयोक्तौ भेदाध्यवसाय इति रहस्यम् ॥ ६५ ॥ ********************** ॥

॥ दधतीति ॥ रतिपतेरिषवः शितनां नैशित्यं दधति स्फुटमित्युत्प्रेक्षायां । यद्यस्मान्निरन्तरं नीरंध्रं वृहत्कठिनञ्चयत् स्तनमण्डलं तदेवावरणं वर्म यस्य तत्तादृशपि उत्पलपलाशदृशः उत्पलदलाक्ष्याः हृदयमभिभिदन् भिन्दन्ति स्म । भिदेर्लुङि इरितो वेति ङेरङादेशः । सावरणमपि भिन्नमिति विरोधात्यापितेयं शरधरनैशित्योत्प्रेक्षा तथा चरं धान्वेधिणाकामे

न तपीड्यमानायास्तस्याश्चिद्विरहे जीवितसंशयमापादयतीति वस्तु द्योत्यते ॥ ६६ ॥

॥ कुसुमादिति ॥ स्मितदृशः स्मेराक्ष्याः अङ्गं कुसुमादपि सुतरां सुकुमारं कोमलमिती दं न परथा अन्यथा न किन्तु सत्यमेवेत्यर्थः । यद्यस्मात्कुसुमेषुरकरुणो निःकृपः सन्निजैर्विशिखैर्बाणैः । पृषत्कबाणविशिखाइत्यमरः । कुसुमैरेवेत्यर्थः । करुणां दीनं यथा तथा अनिशं नित्यमुत्तपति तापयतीत्यर्थः । तपतिरयम्भौवादिकः सकर्मकः । कुसुमाधिक सौकुमार्याभावे कुसुमैः पीड्यतइति कुसुमाधिकसौकुमार्यगुणोत्प्रेक्षा नापरथेति व्यञ्जक प्रयोगाद्वाच्या ॥ ६७ ॥ *************************** ॥

॥ विषतामिति ॥ अपक्रियया विपरीतप्रयोगेण निषेवितमुपयुक्तं सर्वं अमृतमपीति भावः ।

कुसुमादपि स्मितदृशः सुतरां सुकुमारमङ्गमिति नाऽपरथा । अनि
शं निजैरकरुणः करुणां कुसुमेषुरुत्तपति यद्विशिखैः ॥ ६७ ॥
विषतां निषेवितमपक्रियया समुपैति सर्वमिति सत्यमदः । अमृतस्तुतो
पि विरहाद्भवतो यदमूं दहन्ति हिमरश्मिरुचः ॥ ६८ ॥ ***

विषतामिति विषदहितत्वं समुपैतिइत्यदइदम्विषत्वं सत्यं ध्रुवं अमृतस्तुतोपि । स्रवतेः क्विपि तुक् । हिमरश्मिरुचश्चन्द्रपादाः भवतो विरहाद्धेतोस्त्वया विनासेवनादित्यर्थः । अमूं त्वत्प्रियां दहन्ति यतः पूर्वं त्वया सहसेवनादाह्लादयन्तीति भावः । एतेन विषयद्वेषरूपा अरत्यवस्थोक्ता । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६८ ॥ ******* ॥

॥ उदितमिति ॥ प्रियाम्प्रति प्रियामुद्दिश्य हृदयस्येदं हार्दं प्रेम । प्रेमा ना प्रियता हार्दं प्रेमस्नेहइत्यमरः । तस्येदमित्यण्प्रत्ययः । हृदयस्य हृल्लेखयदण्लासेष्विति हृदयस्य हृदादेशः । सुहार्दं स्नेहं इत्युदितम् । वदेः कर्मणि क्तः वचिस्वपीत्यादिना संप्रसारणं । वचो दूतीवाक्यं प्रियतमेन श्रद्धीयत विश्वसितम् । दधातेः कर्मणि लङ् श्रदन्तरोरु

पसर्गवचनाच्छकद्स्यप्राक्प्रयोगः । हियस्मात्पुरःपूर्वमेवविदितेङ्गितेविदितपराभि
प्रायेजनेइङ्गितंहृद्गतोभावः । सज्जनेसमुदीरिताःगिरःसपदिलगन्तिसज्जन्तिखलुख
यंप्रियाहृदयवेदित्वात् । खलुर्हेतुस्मादेतद्इतिकथितंप्रियाविरहदुःखमिंशश्वासेत्य
र्थः । अर्थान्तरन्यासः । एषाकलहान्तरिताअनएवमानाख्योविप्रलंभःशृङ्गारःपूर्वानुरा
गमाख्यायप्रवासकरुणात्मनाविप्रलम्भस्तुर्थीयमित्युक्तं ॥ ६९ ॥ ******* ॥
॥ दयितेति ॥ प्रथमञ्चन्द्रोदयात्प्राक्परिमूढतांनिजमनोपहर्त्तृमार्गानभिज्ञतामुप
गतैःततःपश्चात्क्षणदाकरेचन्द्रेउदितेसतिसपदिलब्धपदैःदृष्टचौरपदचिह्नैःअदःद

उदितंप्रियांप्रतिसहार्द्दमितिश्रद्दधीयतप्रियतमेनवचः । विदितेङ्गि
तेहिपुरएवजनेसपदीरिताःखलुलगन्तिगिरः ॥ ६९ ॥ कुलकम् ॥
दयिताहृतस्ययुवभिर्मनसःपरिमूढतामिवगतैःप्रथमम् ॥ उदितेततः
सपदिलब्धपदैःक्षणदाकरेऽनुपदिभिःप्रयये ॥ ७० ॥ निपपात
संभ्रमभृतःश्रवणात्स्खलितभुवःप्रणादितालिकुलम् । दयितावलोकवि
कसन्नयनप्रसरप्रणुन्नमिवनीररुहम् ॥ ७१ ॥ ****

यिताभिर्हृतस्याकृष्टस्यापहृतस्यचमनसोऽनुपदिभिरन्वेष्टृभिरन्विष्यद्भिरित्यर्थः । अ
नएवगम्योत्प्रेक्षाप्रागवलम्बितधैर्यत्यागनिमित्ताअनुपद्यन्वेष्टेतिनिपातः । अन्वेष्टानुप
दीक्रीडांनिवेजयन्तीयुवभिःप्रययेप्रयतं । यातेर्भावेलिट् । अत्रोक्तपदान्वेषणोत्प्रेक्षाया
यूनांचोरग्राहिभिरूपगम्यतइत्यलङ्कारेणालङ्कारध्वनिः ॥ ७० ॥ ****** ॥
॥ अथयूनांगृहप्राप्त्यनन्तरंवृत्तान्तंवर्णयति ॥ निपपातेति । सम्भ्रमभृतःप्रत्युत्थानसंर
म्भवत्याःअसितभ्रुवोअङ्गनायाःप्रणादितालिकुलङ्गुञ्जदलिपुञ्जं । उपसर्गादसमासेपि
णोपदेशस्येतिणत्वं । वारिरुहंश्रवणोत्पलंदयितावलोकेनविकसितोविस्तारङ्गच्छतोन

चनस्यप्रसरेणप्रसारेणप्रगुणमिवप्रेरितमिव। पूर्ववत्सत्वं। निपपातनयोःसम्भ्रान्तमित्यर्थः। अत्रसम्भ्रमहेतुकस्यकर्णोत्पलपातस्यनयनप्रसारहेतुकत्वमुत्प्रेक्ष्यते। एषाचद्दृष्टा॥ ७१ ॥ ****************************** ॥

॥ उपनेतुमिति ॥ सहसोपगतःहठादागतःकश्चनयुवाअतएवरभसेनोत्थितां अतएवोन्नतिमनाकुचयोर्युगेनकरणेनपुरस्थं द्विवमाकाशमुपनेतुमिवोर्ध्वमुत्थेतुमिवेतिफलोत्प्रेक्षा। उत्थाननिमित्तोन्नत्यगुणनिमित्तातरसावलेनाकलितां व्याक्षिप्तांवधूमिवाभ्यपरिरभ्याश्लिष्यारुधतरुद्धवान् उपवेष्टितवान्कर्ध्वोत्क्षेपान्निवारितवानित्यर्थः। रुधेर्लुङिइरितोवेतिविकल्पाच्चेरङादेशः। एषाद्दृष्टारोमाञ्चिताद्यनुभाववतीच ॥ ७२ ॥ * ॥

उपनेतुमुन्नतिमतेव दिवं कुचयोर्युगेन तरसा कलिताम्। रभसोत्थिता-
मुपगतः सहसा परिरभ्य कश्चन वधूमरुधत् ॥ ७२ ॥ अनुदेहमा-
गतवतः प्रतिमां परिणायकस्य गुरुमुद्वहता। मुकुरेण वेपथुभृतोऽ-
तिभराद्विवशभ्रमे नववधूकरतः ॥ ७३ ॥ * * * * * * * * * *

॥ अनुदेहमिति ॥ अनुदेहन्देहस्यपश्चात्। अव्ययंविभक्तीत्यादिनापश्चादर्थेऽव्ययीभावः। आगतवतःपरिणायकस्यपरिणेतुःवोढुरित्यर्थः। नयतेर्ण्वुल्प्रत्ययः। उपसर्गादसमासेपीतिणत्वं। गुरुम्पूज्याम्भारवतीञ्चप्रतिमाम्प्रतिबिम्बमुद्वहतापश्चात्स्थितस्यापितदाभिमुख्यादितिभावः। मुकुरेणदर्पणेनकर्त्रा। दर्पणेमुकुरादर्शावित्यमरः। वेपथुभृतोनवोढतयाभयशृङ्गाराभ्याङ्कम्पमानात्। अतिभरोभरस्यातिशयः। भारतिभारात्प्रतिबिम्बगुरुमुकुरधारणादितिभावः। नववधूकरतःपाणितलात्। पञ्चम्यास्तसिल्। कथमपितापातितमपतितंमहताप्रयत्नेनावधारितइत्यर्थः। भावेलुङ्। एषाचमुग्धा। अत्रवधूकरस्खलनसम्बन्धेपिसम्बन्धोक्तेरतिशयोक्तिःगुरुमितिश्लेषःयापिते

तिसङ्करः ॥ ७३ ॥ ****************************** ॥

॥ अवनम्येति ॥ अवनम्यगाढमुपगूढवता आश्लिष्टवता अतएव वक्षसि निमग्नकुचद्वितयेन दयितेन तत्क्षणे चलन् उद्गच्छन् रशनायाः कलकिङ्किणीघोषो यस्मिन् कर्मणि तद्यथा तथा वधूरङ्गनाउदासि उत्क्षिप्ता। अस्यतेः कर्मणि लुङ्। एषा चद्दृष्टारोमाञ्चाद्यनुभाववतीच । स्वभावालङ्कारः ॥ ७४ ॥ ****************** ॥

॥ कररुद्धेति ॥ दयितोपगतौ प्रियागमने सति अतएव त्वरया विरहितं न्यक्तमासनं यया तया उत्थितयेत्यर्थः कयाचित् इति शेषः अतएव गलितं स्रस्तं अतएव कररुद्धनीविकरगृहीत

अवनम्यवक्षसि निमग्नकुचद्वितयेन गाढमुपगूढवता। दयितेन तत्क्ष णचलद्रशनाकलकिङ्किणीरवमुदासि वधूः ॥ ७४ ॥ कररुद्ध नीविदयितोपगतौ गलितं त्वरणविरहितासनया । क्षणदृष्टहाटक शिलासदृशस्फुरदूरुभित्तिवसनंववसे ॥ ७५ ॥ पिदधानमन्वगु पगम्यदृशौ ब्रुवते जनाय वद कोयमिति। अभिधातुमध्यवससौ न गिरा पुलकैः प्रियं नववधूर्न्यगदत् ॥ ७६ ॥ ✱✱✱✱✱✱✱

वत्क्वसनं क्षणं दृष्टा हाटकशिलासदृशी हेमशिलाप्रतिमा स्फुरन्ती ऊरुभित्तिरूरुदेशो यस्मिन् कर्मणि तद्यथा तथा । हिरण्यं हेमहाटकमित्यमरः । ववसे आच्छादितम्। वसे राच्छादनार्थात्कर्मणि लिट् । ऊरुभित्तिरिवेत्युपमितसमासः । अत्रोपमयोः संसृष्टिः ॥ ७५ ॥ ****************************** ॥

॥ पिदधानमिति ॥ नववधूर्नवोढा अन्वक् पश्चादुपगम्य दृशौ पिदधानं छादयन्तं प्रियं दृष्टिच्छादकः कः वद इति ब्रुवते पृच्छते जनाय गिरा वाचा ऽभिधातुं नाध्यवससौ नोत्सहे त्रपयेति भावः। अध्यवपूर्वात्स्यतेः कर्तरि लिट् । किन्तु पुलकैर्न्यगदत्। अत्र प्रियज्ञानपूर्व

स्यार्थस्य लज्जया असंलक्षितस्य पुलकैः प्रकाशनात् सूक्ष्मालङ्कारः । असंलक्षितसूक्ष्मा
र्थप्रकाशः सूक्ष्मस्तदुच्यत इति लक्षणात् ॥ ७६ ॥ ****************** ॥

॥ उदितेति ॥ अभिभर्तृ भर्तृसमक्षं । लक्षणेनाभिप्रती आभिमुख्ये इत्यव्ययीभावः । उ
दितः उत्पन्नः ऊरुसादः ऊर्वोर्निश्चेष्टता यस्य तत् अतिवेपथुमत् अतिकम्पवत् । एतेन विशेष
णद्वयेन प्रत्युत्थानादिलङ्घनविरोधेन स्तम्भवेपथू सात्त्विकावुक्तौ । त्रपया विधुरं विलक्षं । एते
न लज्जा सञ्चारिणा प्रियवाक्कुशलत्वमुक्तं । एवं प्रतिपत्तिमूढमपि इतिकर्तव्यतामूढम
पि सुदृशो वपुर्बाढं भृशं आदरातिशयशंसि मुखरागादिलिङ्गैरादरविशेषव्यञ्जकमभूत् स
त्यादरे किमुपचारैरिति भावः ॥ ७७ ॥ ************************ ॥

उदितोरुसादमतिवेपथुमत् सुदृशोऽभिभर्तृ विधुरं त्रपया । वपुराद
रातिशयशंसि पुनः प्रतिपत्तिमूढमपि बाढमभूत् ॥ ७७ ॥ परिम
न्थराभिरलघूरुभरादधिवेश्म पत्युरुपचारविधौ । स्खलिताभिरप्य
नुपदं प्रमदाः प्रणयातिभूमिमगमन् गतिभिः ॥ ७८ ॥ ***

॥ परीति ॥ प्रमदा अधिवेश्म निजवेश्मनि पत्युरुपचारविधौ प्रत्युत्थानादिकर्मणि अलघो
र्महत ऊरुभरात् परिमन्थराभिरलसाभिः अनुपदं पदे पदे स्खलिताभिरपि गतिभिः प्रण
यातिभूमिं प्रेमप्रकर्षमगमन् । परं प्रेमास्पदीभूता इत्यर्थः । प्रत्युत्थानादपि स्खलित
गमनमेव पत्युः प्रीतिकरमभूदिति भावः । स्त्रीणां स्खलनं पत्युः प्रीतिकरमिति विरोधाभा
सोऽलङ्कारः ॥ ७८ ॥ ************************** ॥

॥ मधुरेति ॥ मधुरं मनोहरं यथा तथा आनते उच्चलिते भ्रुवौ यस्मिन् तन्मधुरोन्नतभ्रु । गोस्त्रि
योरुपसर्जनस्येति ह्रस्वः । दृशोर्ललितं नयनचेष्टा च सत्कारप्रयोगं हस्ताभिनयसहितं तच्च
म चतुरश्च तच्च तस्य तनोः स्त्रियाः प्रह्वातिसाध्यमेव स्वभावसिद्धमेव सदर्पि निपुणेन निपुणा

चार्येणागमितमभ्यासितं। अतएवस्फुटंप्रथितंयन्नृत्यनतस्थलीलेवलीलायस्यतत्तयोक्तमभ बदितिनिदर्शनालङ्कारः। तथानर्तकुपमागम्यते ॥ ७९ ॥ ********** ॥

॥ अथकस्याश्चित्सपत्नीनामग्रमाहूतायाःकान्तोपालंभंत्रिभिःकुलकेनाह ॥ नदित्या दि। अङ्गेत्यामंत्रणे। विम्बस्यजाविधात्रानवद्दक्षणसहस्रनयंतेत्रसहस्रसमूहः। संख्या याअवयवेतयप्। तत्कृतंतत्स्पष्टमितियत्तत्रयुक्तंकुतःयेनकारणेनमयिविषयेस्फुटंप्रत्यक्ष मेवगोत्रभिदानामभेदिनाच। गोत्रंनाम्निकुलेपर्वतेविनियादवः। त्वयेतिशेषः। अ द्यइन्द्रताजगतिप्रकटीकृताखलु। अत्रगोत्रभिदितिश्लेषानुप्राणितसहस्राक्षमिन्द्रत्वमु

मधुरेणनतभ्रुललितञ्चदृशोःसकरप्रयोगचतुरञ्चवचः। प्रकृतिस्थमे वनिपुणागमितंस्फुटनृत्यलीलमभवत्तुततोः ॥ ७९ ॥ तदयु क्तमङ्गतवविम्बरुजानयनंयदीक्षणसहस्रनयम्। प्रकटीकृताजग तियेनखलुस्फुटमिन्द्रताऽद्यमयिगोत्रभिदा ॥ ८० ॥ नविभाव यत्यनिशमक्षिगतामपिमांभवानऽतिसमीपतया। हृदयस्थिताम पिपुनःपरितःकथमीक्षतेवहिरभीष्टतमाम् ॥ ८१ ॥ ****

त्प्रेक्ष्यते ॥ ८० ॥ **************************** ॥

॥ नेति ॥ अनिशमक्षिगतांचक्षुःसन्निकृष्टामपिद्वेष्यामितिचगम्यते। द्वेष्योऽक्षिगतइ त्यमरः। मामतिसमीपतयाभवान्नविभावयति। शेषेप्रथमइतिप्रथमपुरुषः। इन्द्रियस न्निकृष्टमपिनलक्ष्यतइतिविरोधाभासनाऽर्थोऽपिशब्दः। परमार्थस्तुद्वेष्यत्वादतिसामी प्याच्चविभावनंनचित्रमितिभावः। अभीष्टतमांपुनर्हृदयस्थितांहृदयानपेतांअन्तर्हि तामितिचगम्यते। अतएवविरोधाभासकोऽपिशब्दःबहिःपुरतः कथम्भवानीक्षतेइ दन्तुचित्रंअतिसामीप्यव्यवधानस्यापिदर्शनप्रतिबन्धकत्वादितिभावः। प्रेमास्पदन्तूप

रोक्षमथपरोक्षमीक्षते इतरद्परोक्षमपिपरोक्षमेवेतितात्पर्यार्थः । विरोधाभासयोः स
ङ्करः ॥ ८१ ॥ ************************* ॥

॥ इतीति ॥ इत्यभिधायपुरोगन्तुमिच्छुं क्षणं दृष्ट्योःपातेनविकसद्वदनां परस्परदृष्टिपा
तमात्रगतकोपामित्यर्थः । काञ्चिन्नायिकां तरुणोयुवा स्वकरावलम्बनं प्रियकरेणग्रहणं ते
नविमुक्तामुक्तबन्धना । अतएवगलन्तीध्वंसमाना कलामधुरा काञ्चीयस्मिन् कर्मणि तद्यथा
तथा अरुणत् रुद्धवान् । रुधादिभ्यःश्नम् । एषाचकलहान्तरिता ॥ ८२ ॥ *** ॥

॥ अपयातीति ॥ सरोषयामृगाक्ष्या निरस्ते कामिनि भर्त्तरि अपयाति निर्यति सति तत्कंठ

इति गन्तुमिच्छुमभिधायपुरःक्षणात् दृष्टिपातविकसद्वदनाम् । स्वकरा
ऽवलम्बनविमुक्तगलत्कलकाञ्चिकाञ्चिदरुणत्तरुणः ॥ ८२ ॥
अपयाति सरोषया निरस्ते कृतकं कामिनि चुक्षुवे मृगाक्ष्या । कलयन्न
पि सव्यथोऽवतस्थेऽशकुनेन स्खलितः किलेतरोऽपि ॥ ८३ ॥ आ
लोक्य प्रियतमममंशुके विलग्नं यत्तस्थे नमितमुखेन्दु मानवत्या । तन्नूनं
पदमवलोकयाम्बभूवे मानस्य द्रुतमपयानमास्थितस्य ॥ ८४ ॥

त्रिमं यथा तथा चुक्षुवे तन्निर्गमनप्रतिबन्धार्थं क्षुतं कृतमित्यर्थः । क्षु शब्दे भावे लिट् । इ
तरोऽपि नायकोऽपि कलयन्नपि कृतकोपमिति जानन्नपि अशकुनेन स्खलितः किल निरुद्ध इ
व सव्यथः सनिर्वेद इव तस्थौ स्थितः न गत इत्यर्थः उभावपि समानानुरागाविति भावः । ए
षा च कलहान्तरिता ॥ ८३ ॥ ************************* ॥

॥ आलोक्येति ॥ मानवत्या कोपवत्या स्त्रिया स्त्रीणां ईर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रि
ये प्रियतममालोक्य स्थित्या । समानकर्तृकत्वात् क्त्वानिर्देशः । अंशुके विलग्नं प्रियावलो
कनाङ्कमञ्चितबन्धे सति । भाषितपुंस्कत्वात्पुंवद्भावः । ह्रीकटीवस्त्रबन्धेऽपि नीवीपरिपणी

पिचेत्यमरः । ननिनमुखेन्दु यथातथा न स्थैर्यं स्थितमिति यत् न तस्यानननमुखावस्थाभ्यामिदं
शीघ्रं प्रियावलोकनक्षणे एवेत्यर्थः । अपयानमाश्रितस्य प्रयाणं कुर्वतस्तस्य मानस्य कोपस्य प
दम्पदं चिह्नमवलोकयाम्बभूवे अन्वेषितमित्यर्थः । लज्जानिमित्तायां मुखनतेः अन्वेषण
र्थत्वमुत्प्रेक्ष्यते नूतनमित्तिमानगन्धोऽयस्त्वमित इति भावः ॥ ८४॥ ********** ॥
॥ सुदृश इति ॥ सरसमार्द्रं नूतनमिति यावत् । तेन व्यलीकेनापराधेन नप्रनतया यौ
वनोष्मणा सहवर्त्तत इति सयौवनोष्मा । किञ्च स्मरानलोष्मः कामाग्निसन्तप्तः एवं चावि
धाग्नितप्तोऽपि सुदृशः स्तनभारनरसावेगेनानिदाहदशायामेवेत्यर्थः । आश्लिष्टवतः आलि
ङ्गितवतः प्रियस्य कथमपि कथं वा कुतो हेतोरित्यर्थः । नखम्पचं निर्वापयतीति नखम्पचः

सुदृशः सरसव्यलीकनम्रस्तरसाश्लिष्टवतः सयौवनोष्मा । कथमप्यभव
त्स्मरेऽनलोष्मः स्तनभारोऽननखम्पचः प्रियस्य ॥ ८५ ॥ दधत्युरोज
द्वयमुर्वशीतलं भुवोगतेव स्वयमुर्वशी तलम् । वभौ मुखेनाप्रतिमेन का
चन श्रियाऽधिकायां प्रतिमेन काचन ॥ ८६ ॥ ******

पचिरत्नापवाची । मितनखे चेति खश्प्रत्ययः । अरुर्द्विषदजन्तस्य मुमिति मुमागमः ।
नाभवत् तयोस्तु ईषदुष्णोऽपि नाभूदित्यर्थः । प्रियासङ्गप्रतीकारः खलु कामिनां सन्तापा
इति भावः । तादृगौष्ण्यसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ॥ ८५ ॥ ****** ॥
॥ दधतीति ॥ उरुमहद् शीतलं स्मरयौवनोष्माभ्यामुष्णमुरोजद्वयं कुचद्वयं दधती भुवस्त
लङ्गतास्वयं साक्षादुर्वशीवास्थितेत्युत्प्रेक्षा । काचित् स्त्री अप्रतिमेन मुखेन वभौ तां प्रतिमेन
कामेन काथ्याप्सरसश्रिया सौन्दर्येणाधिकानेत्यतिशयोक्तिः । तयोर्यमकेन संसृष्टिः ।
वंशस्थवृत्तम् ॥ ८६ ॥ ********************** ॥
॥ इत्थमिति ॥ इत्थमनेन प्रकारेण । इदमस्थमुरिति थमुप्रत्ययः । सपदि शान्तः शमितो

मानःकोपएवान्तरायोयाभिस्ताः। वाशानैत्यादिना शमैरर्थन्तात् शानौतिनिपातः। प्रालेयांशोश्चन्द्रस्यरुचयोनारीःकामिभिर्घटयितुं। मितंद्रुतः। पर्यायैर्वचनैर्बलमथैश्विनितुमुन्प्रत्ययः। कामंप्रकामंसमर्थाआसन्नूत्यइवेतिभावःविलसन्तोमन्मथश्रीःविलासमणितसीत्कारादिमदनानिरेकविकारायाभिस्ताःश्रीरेवप्रत्यूहेविघ्नस्तस्यप्रशमेनिवारणेकुशलाःशेरतेआभिरितिशीघवोमदिराः। शीङ्ोधुगित्यौणादिकोधुक्प्रत्ययः। आसांरतिषुआचार्यत्वमाचार्यमुपदेशञ्चक्रुः। नर्मसख्यइवेतिभावः। अत्रप्रथमार्द्धेप्रस्तुतचन्द्रभासांमानसमानकामिघटनपाटवविशेषणसाम्यादप्रस्तुतदूतीत्वप्रतीतेःसमासोक्तिर्द्वितीयार्द्धेतुशीधुष्वारोपितस्याचार्यत्वस्यप्रकृतोपयोगात्परिणामः। तयोःसापेक्षत्वात्सङ्करःनै

इत्थन्नारीर्घटयितुमलङ्कामिभिः काममासन्प्रालेयांशोः सपदिरुच
यः शान्तमानान्तरायाः। आचार्य्यंचंरतिषुविलसन्मन्मथश्रीविला
साह्रीप्रत्यूहप्रशमकुशलाःशीधवश्चक्रुरासाम् ॥ ८७ ॥ ✲✲
इतिश्रीमाघकृतौशिशुपालवधेमहाकाव्येप्रदोषवर्णनन्नामनवमःस
र्गः ॥ ९ ॥ ✲✲✲✲✲✲✲✲✲✲✲✲✲✲✲✲✲✲

नचदूतीनर्मसख्युपमाध्वनिः। उत्तरसर्गेपिकमधुपानरतोत्सववर्णनायास्यायमेवप्रस्तावः। मन्दाक्रान्तावृत्तं। मंदाक्रान्ताजलधिषडगैर्म्भौनतागुरूचेतिलक्षणात् ॥ ॥

इतिश्रीपदवाक्यप्रमाणपारावारीण श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघव्याख्यानेसर्वङ्कषाख्येनवमःसर्गः ॥ ९ ॥ ✲✲✲✲✲✲✲✲✲✲✲✲✲✲✲✲✲ ॥



॥ आचार्यवर्यैर्निपुणैर्वसन्तुरित्युक्तं तत्प्रपञ्चनायास्मिन्सर्गे मधुपानन्तावद्वर्णय
ति ॥ सञ्जितानीति । अथपानगोष्ठीप्रस्तावानन्तरं सञ्जितानि यावकक्षालनादीनि
संस्कृतानि सुरभीणि यथायोगं स्वभावसंस्काराभ्यां सुगन्धीनि नयनानिवारिरुहाणीवउ
ल्लसन्नयनानीववारिरुहाणि वासनार्थं क्षिप्तानि तान्युल्लसन्ति येषु तानि तथोक्तानि सुघ
टितानि सुघटमुखैर्योजितानि शोभनसंस्थानवन्ति यानि निर्मितानि वा प्रियतमावदनानि यूनां
कामिनां सुरायाः पात्रतां पानभाजनतां ययुः प्रियामुखसम्पर्कजनितरसास्वादलोभात्तासां
मुखसुरामेवपपुरिति भावः । अत्र वदनेष्वारोप्यमाणायाः पात्रतायास्तादात्म्येनतेषां पान
साधनतापादनेनतत्वदनोपयोगात्परिणामालङ्कारः । आरोप्यमाणस्य प्रकृतोपयोगि

सञ्जितानि सुरभीण्यथ यूनामुल्लसन्नयनवारिरुहाणि । आययुः
सुघटितानि सुरायाः पात्रतां प्रियतमावदनानि ॥ १ ॥ सोपचार
मुपशान्तविचारं सानुतर्षमनुतर्षपदेन । तेमुहूर्तमथ मूर्तमपीप्यन्
प्रेममानमवधूय वधूः स्वाः ॥ २ ॥ ✱✱✱✱✱✱✱✱✱✱✱

त्वेपरिणाम इति लक्षणात् । तेन श्लेषसङ्कीर्णोऽनोपमा व्यज्यते । अस्मिन्सर्गे स्वागतावृत्तं
स्वागतेति रनभागुरुयुग्मम् ॥ १ ॥ ✱✱✱✱✱✱✱✱✱✱✱✱✱✱✱✱✱✱✱✱ ॥
॥ सोपचारमिति ॥ अथपात्रीकरणानन्तरं तेयुवानः सोपचारं सप्रार्थनं उपशान्तविचा
रं निवृत्तशंकं निर्विवादे इति पाठे मानमवधूयेति पुनरुक्तिः चारश्चारमित्यनुप्रासक्रमभङ्गश्च
स्यात् सानुतर्षं सतृष्णं च यथा तथा अनुतर्षयत्यनेनेत्यनुतर्षो मद्यं । मद्योऽनुतर्षस्तत्पात्रेतृ
ष्णाभिलाषयोरित्युभयत्रापि विश्वः । तस्य पदेन च्छलेन मूर्तं मूर्तिमत् स्वाः स्वीया वधूर्मुहू
र्तं क्षणमात्रं तोयमवधूयापीप्यन् । पाययन्तिस्म । पिबतेर्णौ चङि लोपः । पिबतेरी
त्वाभ्यासस्येति धात्वाकारलोपः ई कारोभ्यासस्य । नपादम्याङ्यम इत्यादिना निगरणार्थत्व

मितिपरस्मैपदनिषेधेपिणिचश्चेत्यात्मनेपदविकल्पात्पाक्षिकंपरस्मैपदम् । गतिबुद्धी
त्यादिनावधूरित्यणिकर्तुःकर्मत्वं । अनुतर्षपदेनेत्यत्रतुतर्षोरपह्नवेनमुहूर्त्तप्रेमत्वेनोत्प्रेक्षस्य
च्छन्दकाप्रयोगाच्चप्रतीयमानासापह्नवोत्प्रेक्षा ॥ २ ॥ ************** ॥
॥ कान्तेति ॥ कान्तंसंक्रान्तंकान्तावदनप्रतिबिम्बंयस्मिन्तस्मिन्नेत्रनिवृत्तिकारइत्यर्थः ।
भग्नाःक्षिप्ताःबालसहकारस्यचूतविशेषपल्लवाः । आम्रश्चूतोरसालश्चसहकारेतिसौरभइ
त्यमरः । तैःसुगन्धोसुरभिस्तिघ्राणतर्पणइत्यर्थः । तृतीयादिषुभाषितपुंस्कंपुम्वद्गालव
स्येतिपुम्वद्भावः । स्वादुनिमधुरेरसनाकर्षिणीत्यर्थः । प्रणदितालिनिगुञ्जन्मधुकरेगु
णिसुखइत्यर्थः । शीतेस्पर्शसुखेइत्यर्थः । एवम्पञ्चविषयसमष्टौमधुनिमद्येइन्द्रियव

क्रान्तकान्तवदनप्रतिबिम्बेभग्नबालसहकारसुगन्धौ । स्वादुनिप्रण
दितालिनिशीतेनिर्ववारमधुनीन्द्रियवर्गः ॥ ३ ॥ कापिशायन
सुगन्धिविघूर्णन्नुन्मदोधिशयितुंसमसेत । फुल्लदृष्टिवदनंप्रमदा
नामब्जचारुचषकञ्चषडङ्घ्रिः ॥ ४ ॥ *********

र्गश्चक्षुरादिपञ्चकंनिर्ववारनिवृत्तमभूत् । अत्ररूपरसादिपदार्थानांमधुविशेषणाभावेन
निर्वृत्तिहेतुत्वात्पदार्थहेतुकङ्काव्यलिङ्गम् ॥ २ ॥ ***************** ॥
॥ कापिशायनेति ॥ उन्मदउद्भूतमदःअतएवविघूर्णन्भ्रमन् षडङ्घ्रिःषट्पदःकापि
शायनेनसुगन्धिनि । सुरभिकश्यंकल्पनायामद्यंमैरेयंकापिशायनमितिवैजयन्ती । फुल्ल
दृष्टिविकसितनेत्रम्वनितानाम्वदनंअधिवासनार्थेनचारुचषकम्पानपात्रञ्च । चषको
ऽस्त्रीपानपात्रमित्यमरः । अधिशयितुमधिष्ठातुसमसेतइदम्भजामीदम्भजामिवेत्युभय
लोभार्थंदोलायमानंमानसआसीदित्यर्थः । अत्रप्रकृतयोरेववदनचषकयोःषट्पदा
भिलाषास्पदत्वरूपैकधर्मयोगादौपम्यस्यगम्यतायांतुल्ययोगिताभेदः ॥ ४ ॥ ** ॥

॥ बिम्बितमिति ॥ भृतापरिशुद्धारुणीयस्मिंस्तस्मिन्। परिशुद्धरुणात्मजेत्यमरः। भाजनेपानपात्रेबिम्बितम्प्रतिबिम्बितं। अबलायाः अक्षिजलजमिति जानन्तादृशान्तयाभ्रान्त्यमित्यर्थः। भ्रमरोघ्रातुंपततिस्म। तथाहिभ्रान्तिर्भ्रमणंविपरीतज्ञानञ्चतद्भाजिविवेकोविचारः क्वभवतिनक्वापीत्यर्थः। अत्रभ्रमरस्याक्षिजलजभ्रान्तेर्भ्रान्तिमदलङ्कारः तत्समर्थकत्वात् श्लेषमूलातिशयोक्त्युत्थापितोऽर्थान्तरन्यासः। तेन तदाङ्गाङ्गिभावेनसङ्करः ॥ ५ ॥ दत्तमिति ॥ इष्टतमयादत्तंमधुमद्यंपिबतःपत्युर्बाढंरसवत्तांप्रेयसीकरस्पर्शादतिस्वादुतामाप। अतिशायनेतमप्। बाढंध्रुवमित्युत्प्रेक्षा। कुतः यद्यस्माच्चेतनाविरहितैरचेतनैः सुवर्णमुकुटांशुभिरपिमधुनिप्रसृतैरितिभावः। पीतंपीतवर्णम्पीतञ्चासीत्। अत्रपीतमि

बिम्बितंभृतपरिश्रुतिजानन्भाजनेजलजमित्यबलायाः। घ्रातुमक्षि
पततिभ्रमरःस्मभ्रान्तिभाजिभवतिक्वविवेकः ॥ ५ ॥ दत्तमिष्टतमयाम
धुपत्युर्बाढमापपिबतोरसवत्ताम्। यत्सुवर्णमुकुटांशुभिरासीच्चेतना
विरहितैरपिपीतम् ॥ ६ ॥ स्वादनेनसुतनोरविचारादोष्ठतःसमचरिष्ट
रसोऽत्र। अन्यमन्यदिवयन्मधुयूनःस्वादमिष्टमतनिष्टतदेव ॥ ७ ॥

तिश्लेषमूलातिशयोक्त्यापीतिक्रियाभेदाध्यवसायाभेदेनांशुकर्तृकपानक्रियानिमित्तकप्रेयसीत्वदत्तसदानाहितरसवत्तोत्प्रेक्षा। तथाचयदचेतनानामपिपेयन्तच्चेतनानाङ्किमुतवक्तव्यमित्यर्थापत्तिध्वननादलङ्कारेणालङ्कारध्वनिः ॥ ६ ॥ ********* ॥ स्वादनेनेति ॥ सुतनोःकुर्च्यास्वादनेनास्वादेनओष्ठतःओष्ठात्रसोऽत्रमधुनि अविचारात्संशयात्समचरिष्टसंक्रान्तः। संपूर्वाच्चरतेर्लुङ्। समस्तृतीयायुक्तादित्यात्मनेपदं। कुतः यद्यस्मात्तदेवपूर्वभुक्तमेवमधुअन्यदिवापूर्वमिवान्यमपूर्वमिष्टंप्रियंस्वादरसंयूनोऽतनिष्ट। तनोतेर्लुङितङ्। ओष्ठस्पर्शानन्तरमेवरसान्तरप्रादुर्भावाद्यनन्तरन्या

वानङ्गस्तंक्रमणोत्प्रेक्षासाचाविचारादिनिव्यञ्जकप्रयोगाद्वाच्या ॥ ७ ॥ **** ॥
॥ विभ्रताविति ॥ रागिभिःकामिभिरतिमात्रंमधुरतांस्वादुतांप्रियत्वञ्चाविभ्रतौमधुरंरत
वत्। स्वादुप्रियेषुमधुरोऽन्यवदितिविश्वः। विकसद्भिर्विकसन्तीभिस्त्वविकसद्भिःगुष्ल
याविजृम्भमाणैः। नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामितिनपुंसकैकशेषः। आननैः
मधुरसोमद्यरसःनासिकाभिर्घ्राणैरसितोत्पलगन्धश्चयुगपदेवपपानेपीतौ। भिन्नेन्द्रियग्रा
ह्यावपिगन्धरसौयुगपत्स्वेन्द्रियसम्बन्धात्युगपद्गृहीताविन्यर्थः। अत्रमनतःआस्तुतचा
रत्वेयौगपद्याभिमानः। शतपत्रशरव्यविभेदवदित्यणुपरिणामवादिनः। वास्तवमेवयौग
पद्यमितिमध्यमपरिणामवादिनः। सर्वपथीनासुकवयइत्यलमतिपल्लवेन। अत्ररग

> विभ्रतौमधुरतामतिमात्रंरागिभिर्युगपदेवपपाते। आननैर्मधुरसोवि
> कसद्भिर्नासिकाभिरसितोत्पलगन्धः ॥ ८ ॥ पीतवत्यभिमतेमधुतु
> ल्यस्वादमोष्ठरुचकंविददंष्ठ्रौ। लभ्यतेस्मपरिरक्ततयाम्भायावकेन
> वियतापियुवत्याः ॥ ९ ॥ **************

न्धयोःप्रकृतयोरेकपानक्रियासम्बंधात्तुल्ययोगिताभेदः ॥ ८ ॥ ********* ॥
॥ पीतवतीति ॥ विददंष्ठ्रौविदष्टुमिच्छौउपदंशवानित्यर्थः। उपदंशस्तुभक्षणनियम
रः। दंशेःसनन्तादुप्रत्ययः। अभिमतेवल्लभेमधुनातुल्यःस्वादंतुल्यरसत्वञ्चवहृद्यता
मात्रेणनान्यथाविलक्षणरसस्यअनुपदंशत्वात्ओष्ठोरुचकमाभरणमिवेत्युपमितसमासः
। रोचनायानुरुचकमस्त्वाभरणमाल्ययोरितिविश्वः। नमोष्ठरुचकंओष्ठश्रेष्ठंपीतवतिसु
तिवियताअपगच्छतापि। इणोलटःशत्रादेशेइणोयणितियणादेशः। युवत्याःयुवतेः
। ङितिह्रस्वश्चेतिवानदित्वादाडागमः। यावकेनालक्तकेनपरिरक्ततयादन्तनिष्पीडन
कृतेनरागेणहेतुनाआत्माखरूपंलभ्यतेस्मलब्धःपुनरुद्गतमित्यर्थः। अत्राधरपानाद

पगतस्यापियावकस्यरागप्रादुर्भावनिमित्ताविरोधगर्भापुनरुद्भवेत्प्रेक्षा बन्धकाप्रयोगाद्र
म्याच ॥ ९ ॥ ****************************** ॥

॥ कस्याचिदिति ॥ समदनंयथातथामदयतीतिमदनीयंमदकारि । कृत्यल्युटोबहुलमि
तिकर्त्तर्यनीयरप्रत्ययः । तस्यप्रेयसीवदनस्यपानंपरंप्रधानंयस्यतस्यकामुकत्वात्प्रिया
मुखपानासक्तस्यकस्यचित्कामिनःस्त्वादिवस्ता दिनःअवाङ्मुख्येनपीनः । इवशब्दोवाक्याल
ङ्कारे । आसवएवप्रत्युतवैपरीत्येइतिगणव्याख्याने । क्षणंविदंशपदेउपदंशस्थानेऽभू
त् । अन्येषांमधुपानलोलुपानामधरस्वादउपदंशअस्यत्वधरपानेकपरस्यमध्वेवोपदंश
इत्यर्थः । अधरपानस्योपदंशत्वसम्बन्धेप्यसम्बन्धः आसवस्यतदसम्बन्धइत्यतिशयोक्तयोः

कस्यचित्समदनमदनीयम्प्रेयसीवदनपानपरस्य । स्वादितःसद्वा
दिवासवएवप्रत्युतक्षणविदंशपदेऽभूत् ॥ १० ॥ पीनशीधुमधुरै
र्मिथुनानामाननैःपरिहृतंचषकान्तः । व्रीडयाहृदिवालिविरावैर्नी
लनीरजमगच्छदधस्तात् ॥ ११ ॥ *********

सापेक्षत्वात्सङ्करः ॥ १० ॥ ***************************** ॥

॥ पीनेति ॥ पीनशीधूनिपीनमद्यानि । अतएवमधुराणिमनोज्ञानितैर्मिथुनानांस्त्रीपुंसा
माननैश्चचषकान्तःपात्राभ्यन्तरेपरिहृतंत्यक्तंनीलनीरजम्वासनार्थनिःक्षिप्तनीलोत्पलंव्री
डयापरिहारलज्जयाअलिविरावैःरुदद्दिवाधस्तादगच्छत् । अत्रमद्यापगमनिमित्तस्य
नीलनीरजाधोगमनस्यरोदनविशिष्टलज्जाहेतुकत्वोत्प्रेक्षा । साचालिविरावैरितिव्यधि
करणकारिपरिणामोज्जीवितेतिसङ्करः ॥ ११ ॥ ************** ॥

॥ अथमदानुभावान्वर्णयति ॥ प्रातिभमित्यादि । त्रयाणांसरकाणांसमाहारस्त्रिसर
कंत्रिवारमधुपानं । सरकंशीधपात्रेस्यात्सरोधुपानेचशीधुनीतिविश्वः । तद्भिनेत्यादिना

समाहारे द्विगुः पात्रादित्वान्नपुंसकत्वं। तेन चिरतरकोण त्रिपानान्मद्रानिभूरिनिपानप्रसि
द्धिः प्रतिभैव प्रातिभम्प्रतिभाविशेषः। प्रज्ञादित्वात्स्वार्थेऽण्प्रत्ययः। यद्वाज्ञानबीजभूतः
संस्कारविशेषः प्रतिभाइतिकाव्यप्रकाशकारः। तत्रभवं प्रातिभम्प्रतिभाविशेषएव। भवा
र्थेऽण्प्रत्ययः तत्प्रातिभङ्गतानांत्रिवारमधुपानोत्कटमदोद्बुद्धसंस्कारप्रभावितप्रगल्भम
तीनामित्यर्थः। सुभ्रुवांस्त्रीणांवक्रवाक्यरचनारमणीयः प्रतिकूलवाक्यप्रयोगरम्यं। गूढा
निपूर्वलज्जयासंवृतानिरहःस्थितानिसंप्रतिमदेनप्रकाशितानिरहस्यानिग्राम्यावयवचेष्टा
प्रजल्पितानियस्मिन्सगूढरहःस्थितरहस्यःसः चासौसहासश्चेतिविशेषणसमासः। वैव
क्षिकविशेषणविशेष्यभावात्। हास्योहास्यमित्यमरः। परीहासोनर्मकेलिउपहासक्री

प्रातिभंत्रिसरकेणगतानांम्बक्रवाक्यरचनारमणीयः। गूढरहस्थितरह
स्यसहासःसुभ्रुवांप्रववृतेपरिहासः ॥ १२ ॥ हावहारिहसितं
वचनानाङ्कौशलन्दृशिविकारविशेषाः। चक्रिरेभृशमृजोरपिवध्वाः
कामिनेवतरुणेनमदेन ॥ १३ ॥ ⁂⁂⁂⁂⁂⁂⁂⁂⁂

डेतियावत्। द्रवकेलिपरीहासइत्यमरः। प्रववृतेप्रवृत्तः इतःपरम्मदसञ्चारी ॥
१२ ॥ ***************************************** ॥
॥ हावेति ॥ तरुणेनोत्कटेनयुनेचमदेनकामिनेवऋजोर्मुग्धायाअपिवध्वाःकिमुतप्रौ
ढानामितिभावः। हावहारिविलासमनोहरंहसितंहासःवचनानांकौशलंप्रागल्भ्यंदृ
शिविकारविशेषाः। विलासविशेषाश्चक्रिरेकृतानि। पुंसेवमौग्ध्यन्त्याजयित्वाप्रौढांनीते
त्यर्थः। अत्रहसितकौशलविकाराणांयौगपद्योक्त्यासमुच्चयः। गुणक्रियायौगपद्यंसमुच्च
यइतिलक्षणं। तस्योपम्ययोगेनसङ्करःतेनऋजोरपिइत्यत्रकिमुतप्रौढानामित्यर्थापत्ति
र्व्यज्यते ॥ १३ ॥ ***************************** ॥

॥ अप्रसन्नमिति ॥ अपराद्धरि आगस्कारिणि । राधेस्तृच् प्रत्ययः । पत्यौ विषये अप्रसन्नं प्र
सुसंक्षुभितमित्यर्थः । कोपदीप्तं कोपेन ज्वलितं उररीकृतधैर्यं अङ्गीकृतकाठिन्यं । ऊर्यादि
च्विडाचश्चेति गतित्वात्कुगतिप्रादय इति समासः । वधूनां हृदयं मधुवारैः मद्यपर्यायैः । म
धुवारामधुक्रमाइत्यमरः । क्षालितं धौतं नु । शमितं निर्वापितं नु । द्रावितं द्रवीकृतं नु ।
अन्यथा कथं तादृगप्रसन्नता दीप्तता कठिनता नो हृदयान्निवृत्तिरिति भावः । अत्र क्षालि
तत्वादीनामेकत्राविरोधात्सादृश्याच्च संशयालङ्कारः । सति सादृश्ये विरुद्धानेककोटि
गोचरत्वात्तस्य किं त्वप्रसन्नत्वादिनिरासनिमित्तकं क्षालितत्वाद्युत्प्रेक्षात्रयं नु शब्दानुवृत्तेः न
चाप्रसन्नत्वाद्युद्देशिनां क्षालितत्वाद्यनुद्देशिभिर्यथासंख्येनान्वयमपेक्षत इति यथासंख्या

अप्रसन्नमपराद्धरि पत्यौ कोपदीप्तमुररीकृतधैर्यम् । क्षालितन्नु शमि
तन्नु वधूनान्द्रावितन्नु हृदयम्मधुवारैः ॥ १४ ॥ सन्तमेव चिरम
प्रकृतत्वादप्रकाशितमदिद्युतदङ्गे । विभ्रमम्मधुमदः प्रमदानान्धा
तुलीनमुपसर्गइवार्थम् ॥ १५ ॥ ******************

लङ्कारेणसङ्कीर्यते ॥ १४ ॥ ************************** ॥

॥ सन्तमिति ॥ मधुमदः प्रमदानामङ्गे वपुषि । अन्यत्र यस्मात्प्रत्ययविधिरित्युक्तलक्षणे प्रकृ
त्याख्ये शब्दरूपे चिरं सर्वदा सन्तमेव एकत्र स्वभावात् अन्यत्र त्वनेकार्थत्वाद्धातूनामिति भावः
। किन्त्वाप्रकृतत्वादप्रस्तुतत्वात् अप्रसक्तत्वादिति भावः । अप्रकाशितमव्यञ्जितं विभ्रमं वि
लासं धातौ भूवादिके लीनं गूढं अर्थमभिधेयं उपसर्गः प्रादिरिवादिद्युतत् द्योतयति स्म । द्यु
तेर्णौ चङ्युपधाया ह्रस्वः । द्युतिस्वाप्योः सम्प्रसारणमिति अभ्यासस्य सम्प्रसारणमिकारः ।
उपसर्गस्य धातुलीनार्थद्योतकत्वमादानसन्दानादावनुसन्धेयं । उपमालङ्कारः ॥ १५ ॥
॥ सावशेषमिति ॥ सावशेषाण्यर्द्धोक्तानि पदानि यस्मिन्तदुक्तमुक्तिर्वाक्यं सत्सलेषु माल्य

वसनाभरणेषु उपेक्षा अनादरः । अकारणतोऽकस्मादेव गन्तुमुत्थितमुत्थानञ्च आसां स्त्रीणां मदविभ्रमं मदविकारं द्योतयन्तिस्म । एतैरनुभावैरासां मदसञ्चारो ज्ञात इत्यर्थः । अत्राङ्गोत्त्यादीनां खलेकपोतिकया मदद्योतने प्रवृत्तत्वात्पराख्यो द्वितीयसमुच्चयः । खले कपोतन्यायेन बहूनां कार्यसाधने कारणानां समुद्योगः स द्वितीयः समुच्चय इति लक्षणात्

॥ १६ ॥ ************************************॥

॥ मद्येति ॥ मद्येन मद्यपानेन मन्दमल्पं विगलत्रीत्रपा यस्य तत् । अतएव मदनिमिषितानि पक्ष्माणि लोमानि यस्य तत् चक्षुर्दधत्या नववध्वा नवोढया कामिनः प्रियस्य मुखमधोमु

सावशेषपदमुक्तमुपेक्षा स्रस्तमाल्यवसनाभरणेषु । गन्तुमुत्थितमकारणतः स्म द्योतयन्ति मदविभ्रममासाम् ॥ १६ ॥ मद्यमन्दविगलत्त्रपमीषच्चक्षुरुन्मिषितपक्ष्म दधत्या । वीक्ष्यते स्म शनकैर्नववध्वा कामिनो मुखमधोमुखयैव ॥ १७ ॥ या कथञ्चन सखीवचनेन प्रागभिप्रियतमम्प्रजगल्भे । व्रीडजाड्यमभजन्मधुपा सा स्वाम्मदात्प्रकृतिमेति हि सर्वः ॥ १८ ॥ ************

खयैव नमितवदनयैव । स्वाङ्गाच्चोपसर्जनादिति विकल्पादनीकारः । शनकैरसम्भ्रमेण वीक्ष्यते स्म तिर्यगीक्षितमित्यर्थः । अत्रापि मदमानाभ्यां त्रपैव जीयते इति मौग्ध्यानिवृत्तेः । समुद्यद्यौवना मुग्धा लज्जाविहितमन्मथा ॥ १७ ॥ ******** ॥

॥ येति ॥ या स्त्री कथञ्चन कृच्छ्रेण सखीवचनेन सखीप्रेरणया प्राक् मदात्पूर्वं अभिप्रियतमं प्रियतमसमक्षं । आभिमुख्येऽव्ययीभावः । प्रजगल्भे प्रजगल्भते स्म । सा स्त्री मधु पिबतीति मधुपा । आतोनुपसर्गे कः । व्रीडजाड्यं मौग्ध्यमभजत् विहाय गतं तत्कौमारं स्वभावमभजन्मदात् इत्यर्थः । तथाहि सर्वो जनो मदाद्धेतोः स्वां स्वकीयां प्रकृतिमेति स्वभावं गच्छति स्वाभावि

कधर्मः प्रकाशनं मद्धर्मः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १८ ॥ *

॥ छादित इति ॥ रमण्याः यः प्रियम्प्रति रागो विषयाभिलाषः चिरायान्तः छादितः संवृतः असावयमेव रागोऽथास्मिन्नवसरे वारुणीमदविशंकं मद्यमदेन निःशंकं चक्षुषो नेत्राद्वाविरभूदिवाविरभवत । किं अत्र रतिरागमद्रागयोरभिलाषपाटलिमरूपयोः श्लेषप्रतिभोत्थापिताभेदाध्यवसायमूलातिशयोक्तिमहिम्नायोन्तर्गतो रागो स एव चिरं निरोधोद्धुषः स्वमतिमदोद्घाटितकपाट्या चक्षुर्द्वारा बहिर्लङ्घित इत्युत्प्रेक्ष्यते । आविर्भावोत्प्रेक्षाविधानं कविस्तानं च्यात् ॥ १९ ॥ **************************** ॥

॥ आगतानिति ॥ आगतान् स्वयम्प्राप्तान् तथा पयगणितान् अतः प्रतियाताश्चेति । सतानानु

छादितः कथमपि त्रपयाऽन्तः प्रियम्प्रति चिरयरमण्याः । वारुणीमदविशङ्कमथाविश्चक्षुषोऽभवदसाविव रागः ॥ १९ ॥ आगतानगणितप्रतियातान्वल्लभानभिससारयिषूणाम् । प्रापि चेतसि सविप्रतिसारैः सुभ्रुवामवसरः सरकेण ॥ २० ॥ *******

लिप्तइ तिवत्पूर्वकाले समासः । तान्वल्लभानभिससारयिषूणां सम्प्रति चन्द्रोदये स्वयमेवाभिसारयितुमभिसर्तुमिच्छूनां । अभिसारयतेः स्वार्थण्यन्तात्सनन्तादुप्रत्ययः । सुभ्रुवां स्त्रीणां चेतसि सविप्रतिसारे कष्टमस्माभिरकार्यं कृतमिति पश्चात्तापयुक्ते सति । पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपीत्यमरः । सरकेण मधुना मधुपानेन । वासरकं शीधुपाने स्यात्सीधुपाने च शीधुनीति विश्वः । अवसरः प्रापि प्राप्तः स्वयङ्गमनसौकर्याय मधुपानं च कुरित्यर्थः । अत्राभिसारणस्य पश्चात्तापकारणकस्य मदयोगात्सौकर्योक्तेः समाध्यालङ्कारः । समाधिः सुकरं कार्यं कारणान्तरयोगतः इति काव्यप्रकाशे ॥ २० ॥ ** ॥

॥ मा पुनरिति ॥ मदेन विमोहितचित्ताभ्रमित चित्ताः सतीः अहमिति शेषः । आगस्कारि

णमपराधकृतं। अतः क्षामित्यादिनाविसर्जनीयस्य सत्वं। तं पुनर्भूयोमभिसीसरं नाभिस रयाणि। सरतेः स्वार्थेणौ चङ्युपधाया ह्रस्वः दीर्घोलघोरित्यभ्यासस्य दीर्घः। इतिइत्या लोच्येत्यर्थः। मेतिगम्यमानार्थत्वादप्रयोगः। अन्यथापौनरुक्त्यमित्यलङ्कारिकाः। योषित्काचितखौहालांस्तरां। सुरह लाप्रियाहालेत्यमरः। नाभिललाष। तथाहिसु खादपिमानोदुस्त्यजः खलु अतोऽल्पकारणादधिकार्थहानिरितिनाशंकनीयमित्यर्थान्तरन्यासः॥ २१॥ ****************************** ॥

॥ ह्रीति॥ सप्रसादंमनःप्रसादपूर्वकंममेदंश्रेयस्कारमितिभावनापूर्वकमित्यर्थः। अन्य

मापुनस्तमभिसीसरमागस्कारिणमदविमोहितचित्ताः। योषिदित्यभिललाषनहालाद्दुस्त्यजः खलु सुखादपिमानः॥ २१॥ ह्री विमोहमहरद्दयितानामन्तिकंरतिसुखायनिनाय। सप्रसादमिव सेवितमासीत्सद्य एवफलदम्मधुतासाम्॥ २२॥ दत्तमात्तमदन न्दयितेनव्याप्तमातिशयिकेनरसेन। सस्वदेमुखसुरम्प्रमदाभ्योनाम रूपमपिचव्युदपादि॥ २३॥ ***********

थामहोदयएवनस्यात। दैवद्वेभेषजेगुरा विनिवचनादिनिभावः। सेवितमुपभुक्तमितिहेतोर्मधुतासांसद्यएवफलदमासीत्। कुतः ह्रीविमोहंव्रीडाजाड्यंअहरत्। रतिसुखाय सुरतसुखायदयितानामंतिकंनिनाय। अत्र ह्रीहरणमन्तिकनयनवाक्याभ्यांफलदत्वनवाक्यार्थसमर्थनादनेकवाक्यार्थहेतुकङ्काव्यलिङ्गमलङ्कारः॥ २२॥ ****॥

॥ दत्तमिति॥ आत्तमदनमाहितमदनंयथातथादयितेनदत्तं। अतएवातिशयिकेनातिशयप्रचुरेण। विनयादिभ्यष्ठक्। रसेनस्वादेनव्याप्तंस्वादुतरमित्यर्थः। मुखस्यसुरमुखसुरंगण्डूषमद्यं। विभाषासेनासुराच्छायाशालानिशानामितिनपुंसकत्वं। प्रकृष्टोम

दीयासंताभ्यःप्रमदाभ्यःस्त्रीभ्यः। रुच्यर्थानांप्रीयमाणइतिसम्प्रदानसंज्ञा। सखदैत्य
चेप्रीतिकरमभूदित्यर्थः। कर्त्तरिलिट्। अतएवनदेवतासांमदकरत्वासीदित्याह। ना
मेति। रूढंप्रागम्बकर्णादिवदव्युत्पन्नं। नामापिप्रमदेतिनामधेयञ्चव्युदपादिव्युत्पन्नं
जातं। यथाप्रकृष्टमदयोगात्प्रमदेत्यन्वर्थनामत्वंभवेत् तयानासोनामाद्युन्नित्यर्थः। पद्य
तेरण्यन्तात्कर्त्तरिलुङ् चिणतेपदइतिचिण्प्रत्ययेचिणोलुक्। प्रमदाभिरितिपाठे त्व
देसदयात्वकेइत्यर्थः। खादनमशनम्भक्षणमाहारोभोजनंखदनमितिहलायुधे। ख
दिखाद्योरेकार्थत्वाभिधानात्कर्मणिलिट्। अत्रपूर्ववाक्यार्थस्योत्तरवाक्यार्थहेतुत्वा
त्काव्यलिङ्गम्॥ २३ ॥ ************************ ॥

लब्धसौरभगुणोमदिराणामङ्गनास्यचषकस्यचगन्धः।मोदितालिरि

तरेतरयोगादन्यतामभजतानिशयन्नु ॥ २४ ॥ मानभङ्गपटुनाऽसु

रतेच्छाजन्यताप्रथयतादृशिरागम्। लेभिरेसपदिभावयतान्तर्योषितः

प्रणयिनेवमदेन॥ २५॥ ✱✱✱✱✱✱✱✱✱✱✱✱

॥ लब्धेति ॥ लब्धसौरभगुणोमेलनात्प्राप्तसौरभोत्कर्षः। अतएवमोदिताालिःआनन्दितम
भृङ्गःमदिराणांमद्यानांअङ्गनास्यमेवचषकन्तस्यचगन्धोगन्धगुणः इतरेतरस्ययोगान्मि
श्रणादन्यतामपूर्वतानिशयन्नुतत्रैवोत्कर्षत्वाअभजत। पक्षकर्दमादौघृतात्तकुंकुमादौ
चोभययादर्शनादयंसंशयइतिभावः। अतएवसंशयालङ्कारः॥ २४ ॥ *** ॥

॥ मानेति ॥ मानभङ्गपटुनाकोपशमनसमर्थेनसुरतेच्छातन्वतामदनोद्दीपकेनदृशि
रागमारुण्यम्प्रीतिञ्चतन्वताप्रथयताप्रकाशयताअन्तःकरणम्भावयतारञ्जयतामदेनप्रण
यिनेवयोषितःस्त्रियालेभिरेप्राप्ताः। रागमितिश्लेषमूलातिशयोक्तिसङ्कीर्णेयमुपमा ॥२५

॥ पानेति ॥ उपान्तिआन्त्याःसमीपे। समीपार्थेव्ययीभावः। अतएवनिभृतचुम्बनदक्षाः

गूढचुम्बनचतुराः सुभ्रुवः पानधौतनवयावकरागं मधुपानक्षालितलाक्षारागं स्वमधरं प्रेयसामधरे पुरागरसलाम्बूलरागद्रवसेनरररञ्जुः। किलअन्यगुणस्यान्यत्राधानमहरञ्जोरर्थः ।किलेत्यपरमार्थे। तेनपानधौतरागे षुस्वाधरेषु प्रेयोधररागसंक्रमणानाटिनकेनतथोसमक्षमेवप्रियाश्चुम्बनङ्कारयामासुरित्यर्थः । अत्रागन्तुनारञ्जनेनसहज नुम्बननिगूहनान्मीलनालङ्कारभेदः। मीलनम्बस्तुनायत्रवस्त्वन्तरनिगूहनमितिलक्षणात् ॥ २६ ॥*॥

॥ अर्पितमिति ॥ दयितेनान्ययुवतेःसपत्न्याःनामग्राहंनामगृहीत्वा। नाम्न्यादिशिग्रहोरितिणमुल्प्रत्ययः । अर्पितन्दत्तंमद्यंरसितवतीआस्वादितवत्यपि । रसितेणस्वादना

पानधौतनवयावकरागं सुभ्रुवोनिभृतचुम्बनदक्षाः । प्रेयसामधररागरसेनस्वं क्विलाधरमुपालिररञ्जुः ॥ २६ ॥ अर्पितंरसितवत्यपिनामग्राहमन्ययुवतेर्दयितेन। उज्झतिस्ममदनमपिवन्तीवीक्ष्यमद्यमभितसनुममाद ॥ २७ ॥ अन्ययावनितागतचित्तं चित्तनाथमभिसङ्कितवत्या। पीतभूरिसुरयापिनमेदेनिर्वृत्तिर्हिमनसोमदहेतुः॥२८॥

र्थात्कृतवती । उगितश्चेतिङीप् । कांचिदितिशेषः । मदनमुज्झतिस्मममादेत्यर्थः । इतरस्तुसपत्नीतुमद्यमपिबन्त्यपिवीक्ष्यदृष्ट्वैवममादमत्ता । मनोनिर्वृत्तिरेवमदहेतुरितिभावः। अत्रपूर्वार्द्धेरसितवत्यपिनममादेतिविशेषोक्तिः उत्तरार्द्धेत्वपिबन्त्यपिममादेतिभावः। नकारणेनविनाकार्यस्योत्पत्तिःस्याद्विभावनातत्सामर्थ्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यतेनयोःसंसृष्टिः॥ २७ ॥ ******************************* ॥

॥ अन्ययेति ॥ चित्तनाथम्भर्त्तारमन्यवनितागतचित्तंसपत्नीसंक्रान्तमभिशंकितवत्याऽभिशङ्कितवत्याअन्ययाकयाचित्स्त्रियापीतभूरिसुरयापिनमेदेनमत्तं। माद्यतेर्भावेलिट् । तथाहिमनसोनिर्वृत्तिर्मदहेतुर्हिसामान्येनविशेषणसमर्थनादर्थान्तरन्यासः । एघान

वोढाभीरुश्च। अन्यथाशांशंकायाःपानाघटनादिति ॥ २८ ॥ ******** ॥ ॥ कोपवतीति ॥ कोपवतीसरोषा। अतएवानुनयान्प्रियप्रार्थनान्यगृहीत्वाअनादृत्य। अथोसम्प्रतिविरहखेदिन चिन्तापश्चात्तापतप्ताकाचित्मधुमदेनाहितमोहाक्रान्तचित्तवि भ्रमासतीकान्तमेवकोपितमात्मनारोषितंकलयन्तीजानतीअनुनिन्ये। सापराधाहंक्षम स्वेतिप्रार्थितवतीमत्तेषुकिन्नसम्भावितमितिभावः। एषाकलहान्तरिता ॥ २९ ॥ * ॥ कुर्वतेति ॥ मुकुलिताक्षियुगानां। अवसादितवाचाङ्कुशिठतगिरामासांस्त्रीणामङ्गसाद मङ्गस्यादरूपःशरीरनिश्चेष्टतनांकुर्वताह्रियंहरतामदेनईर्ष्ययेवेत्युत्प्रेक्षा। तस्याःह्रि

कोपवत्यनुनयानगृहीत्वाप्रागथोमधुमदाहितमोहा। कोपितम्बि रहखेदितचित्ताकान्तमेवकलयन्त्यनुनिन्ये ॥ २९ ॥ कुर्वतामुकु लिताक्षियुगानामङ्गसादमवसादितवाचाम्। ईर्ष्ययेवहरताह्रिय मासान्तद्गुणःस्वयमकारिमदेन ॥ ३० ॥ गण्डभित्तिषुपुरस्तु शीधुव्याञ्जिताञ्चितदृशाम्प्रतिमेन्दुः। पानपाटलितकान्तिषुपश्चा ल्लोध्रचूर्णतिलकाकृतिरासीत् ॥ ३१ ॥ * * * * * * *

योगुणस्तद्गुणःअक्षिनिमीलनवाक्सादाङ्गसादरूपःस्वयमकारिकृतःह्रीमदयोस्तुल्यानु ******************** ॥ भाविकत्वादितिभावः ॥ ३० ॥ ****** ॥ गण्डेति ॥ प्रतिमेन्दुःप्रतिबिम्बचन्द्रःसद्यःशीधुस्वसमानवर्णाञ्च। अञ्चितदृशांसुदृशां गण्डभित्तिषुपुरःसुरापानात्पूर्वंनव्याञ्जितभेदि। तदेकतापत्यानद्विविक्ततयाअनुगृहीत इत्यर्थः। अतएवसामान्यालङ्कारः। सामान्यंगुणसाम्येनयत्रवस्त्वन्तरैकतेतिलक्षणात् । विपूर्वादञ्जेःकर्मणिलङ्। आडजादीनामित्याडागमः। पश्चात्पानानन्तरं। पानेनमध अमदेनपाटलितापाटलीकृताकान्तिर्यासांतासुगण्डभित्तिषुलोध्रचूर्णस्यलोध्रपरागस्यंव

स्तिलकश्चित्रकं । तमालपत्रतिलकचित्रकाणिविशेषकाः द्वितीयञ्चतुरीयञ्चत्रिषुयामि त्यमरः । तस्याकृतिरिवाकृतिर्यस्यसआसीत् । वैवर्ण्याद्विन्नित्तएवासीदित्यर्थः । ति लकाकृतिरितिनिदर्शनापूर्वोक्तसामान्यसंसृष्टा ॥ ३१ ॥ ************* ॥

॥ उच्चैरिति ॥ उच्चैः दृढैरिवकुचकुम्भैःपरस्परसङ्घाद्दन्योन्यसङ्घर्षाद्भयतईरिता न्यालष्टानितयाविभ्रमातिशयञ्जितासविशेषंपुस्ति नातिनत्पुंसि । नपुंसकस्यभलच इतिनुमागमः । योषितान्वपूंषिपूर्ववन्नुमागमः । सान्तमहतःसंयोगस्येतिदीर्घोविशेषः। अतिमदेनजुघूर्णुः स्रेमुः । दृप्तसङ्घर्षस्तटस्थपीडाकरः । यथावृषभकलहाद्वत्सपारभङ्ग इतिभावः ॥ ३२ ॥ ***************************** ॥

उच्चैरिवपरस्परसङ्घादीरितान्युभयतःकुचकुम्भैः । योषितामतिम देनजुघूर्णुर्विभ्रमातिशयपूंसिवपूंषि ॥ ३२ ॥ चारुतावपुरभूष यद्वासान्तामनूनन्नवयौवनयोगः । तम्पुनर्मकरकेतनलक्ष्मीस्तामदो दयितसङ्गमभूषः ॥ ३३ ॥ **************

॥ चारुतेति ॥ आसांयोषितान्वपुश्चारुतासौन्दर्यमभूषयत् । ताञ्चारुतांअनूनंसमग्रं नवयौवनयोगोऽभूषयत् । तंपुनर्नवयौवनयोगन्तुमकरकेतनलक्ष्मीर्मदनसम्पत्तिरभूषय त् । तांमकरकेतनलक्ष्मीन्दयितसङ्गमाएवभूषायस्यसमदोऽभूषयत् । तांमदःचद यितसङ्गमइत्यर्थः प्रक्रमानुसारात्तांमदस्त्वमपिबलभसङ्ग इत्यायथाप्रोक्तत्वेविशेषणत्वे णप्रयोगोमहाकवीनामनुद्वेगात् । यथाभारवेःप्रयोगःस्पृचिभूषयतीत्यादौश्लोकेसेन याङ्कः सचसिद्धिभूषणइतिवक्तव्येसेनयापादितसिद्धिभूषणइतिअत्रोत्तरोत्तरस्यपूर्वपू र्वविशेषत्वादेकावली । यत्रोत्तरोत्तरेषांस्यात्पूर्वपूर्वम्प्रतिक्रमात् । विशेषकत्वकथनमसा वेकावलीमतेति लक्षणात् ॥ ३३ ॥ ********************** ॥

॥ क्षीबतामिति ॥ क्षीबतां मत्ततां । क्षीबृमदे इत्यस्माद्धातोरनुपसर्गात्फुल्लक्षीबकृशो ल्ला
घाइति निष्ठान्तो निपातितः । उपगतासु प्राप्तासु । अतएवानुवेलम्प्रतिक्षणं रोषपरितो
षवतीषु तासु स्त्रीषु विषये अनङ्गः सशरन्धनुरगृहीत उज्झितनिषङ्गन्त्यक्ततूणीरं यथातथा
उज्झयामासनु । तत्याज । उज्झतेर्लिङ्इजादे स्सगुरुमतोऽनृच्छ इत्यत्राम्प्रत्य
यः । रुष्टासु धनुर्ग्रहणं परितुष्टासु त्यागश्च रोषपरितोषाभ्यामुत्प्रेक्ष्यते । अन्यथा रोषात
त्परितोषात्परितोषानन्तरं रोषश्च तस्यानामिति भावः । रोषपरितोषयोर्धनुर्ग्रहणाग्र
हाभ्यां यथासंख्येनान्वयाद्यथासंख्यालङ्कारभेदः तेनोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः ॥ ३४

क्षीबतामुपगतास्वनुवेलन्तासु रोषपरितोषवतीषु । अग्रहीन्नुस
शरन्धनुरुज्झयामासनूज्झितनिषङ्गमनङ्गः ॥ ३४ ॥ शङ्क
याऽन्ययुवतौ वनिताभिःप्रत्यभेदि दयितःस्फुटमेव । नह्यसम्भवति
तत्वविचारमत्सरेण हतसंवृति चेतः ॥ ३५ ॥ आननैर्विचकसे
हृषिताभिर्वल्लभानभितनूभिरभावि । आर्द्रतां हृदयमापचरोषैर्लोल
तिस्सवचनेषु वधूनाम् ॥ ३६ ॥ ※※※※※※※※※※

॥ शङ्कयेति ॥ वनिताभिरन्ययुवतौ सपत्न्यां शङ्कयान्तस्सङ्ग शङ्कामात्रेण दयितः स्फुटमेव
निश्चितवदेव प्रत्यभेदि । भिन्नवत्कृपोद्घाटित इत्यर्थः अनुचितोयमविमृश्य मिथ्याभियो
गइति शङ्कां परिहरति । नेति । मत्सरेण वैरेण हता संवृत्तिर्गोप्यगोपनं यस्य तच्चेन तत्व
विचारे भूतार्थचिन्तायां क्षमं सहिष्णु न भवति । मत्सरग्रस्तचेतसामेष स्वभाव इति भावः सा
मान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३५ ॥ ※※※※※※※※※※※※ ॥
॥ आननैरिति ॥ वल्लभानभिवल्लभस्य समक्षमित्यर्थः । अभिरभागे इति लक्षणार्थे कर्मप्रव
चनीयत्वात् द्वितीया । वधूनामाननैर्विचकसे विकसितं । भावे लिट् । तनूभिरङ्गैर्हृषिता

भिःपुलकिताभिः। द्युर्वैर्वैमिखितीडागमः । अभाविअभूत। भावेलुङ्। हृदयस्यार्द्रता मावकाठिन्यञ्चहाविव्यर्थः । रोधोवचनेषुलोलतिस्मचलतिस्म । वचनगतोरोधोवक्तता पिनिवृत्तेव्यर्थः । अत्रवधूवाननविकासाद्यनेकक्रियायौगपद्यात्समुच्चयालङ्कारः । गुणक्रियायौगपद्यंसमुच्चयइतिलक्षणात् ॥ २६ ॥ **************** ॥

॥ रूपमिति ॥ अप्रतिविधानमप्रतियत्नमेवमनोज्ञंस्वभावसुन्दरमित्यर्थः । रूपमाकृतिः । कार्यम्प्रयोजनमनपेक्ष्यविकाशिवर्द्धमानंअनैापाधिकमित्यर्थः । प्रेमअकृतकसम्भ्रममहार्तिमसंरम्भत्वात्प्रियवचनत्वात्खीणांरमणेषुविषयेषुकार्मणत्वं वशीकरणकर्मत्वं । वशक्रियासंवननंमूलकर्मतुकर्मणमित्यमरः । तद्युक्तात्कर्मणोण् । अगमन्प्रा

रूपमप्रतिविधानमनोज्ञम्प्रेमकार्यमनपेक्ष्यविकाशि । चाटुचाकृतकसम्भ्रममासांकार्मणत्वमगमन्रमणेषु ॥ २७ ॥ लीलयैवधनुनोस्तुलयित्वागौरवाढ्यमपिलावणिकेन । मानवञ्चनविदावदनेनक्रीतमेवहृदयन्दयितस्य ॥ २८ ॥ ***********

प्तानि। गमेर्लुङ्च्लेरङादेशः । अत्ररूपादिष्वारोप्यमाणस्यकार्मणत्वस्यप्रकृतोपयोगात्परिणामालङ्कारः ॥ २७ ॥ ************************* ॥

॥ लीलयेति ॥ लावण्यङ्कान्तिविशेषोऽस्यास्तीतिलावणिकंलावण्यवत् । अतइनठनाविति ठन्प्रत्ययेठस्येकः । यस्येतिचेत्यलोपेहलस्तद्धितस्येतियकारलोपः । अन्यत्रतुलवणंपण्यमस्यास्तीतिलावणिकोलवणव्यवहारी। लवणाट्ठञ्प्रत्ययः । तेनलावणिकेन मानवञ्चनविदाअहङ्कारहरणदक्षेण। अन्यत्रपरिमाणप्रतारणपटुना । धनुनोस्तुलयाःवरनेनकर्त्रागौरवाढ्यंगाम्भीर्यसम्पन्नमपि । अन्यत्रगुरुत्वयुक्तमपिदयितस्यहृदयं लीलयाविलासेनैवतुलयित्वा । अन्यत्रानायासेनैवउन्मायगुर्वपिलघुतयामीत्वेव्यर्थः।

क्रीतत्वशीकृतमेव । अन्यत्रदानेनस्वीकृतमेवअत्रविशेषणमहिम्नैववदनेलावण्यकस्य हृदयेपण्यत्वस्यचप्रतीतेःसमासोक्तिरलङ्कारः । हृदयस्यप्रतीयमानपण्याभेदेनक्रीतत्वो क्तेरलौकिकहृदयावर्जनेलौकिकक्रयव्यवहारसमारोपः ॥ ३८ ॥ ******* ॥ ॥ एवंमदानुभावंवर्णयित्वासम्प्रतिसुरतकेलिवर्णनंप्रस्तौति ॥ तत्रसुरतंद्विविधम्बाह्यं आभ्यन्तरञ्चेति । बाह्यंचप्रेक्षणभाषणाश्लेषणचुम्बनाद्यनेकभेदभिन्नं । तत्रदृष्टिविशे षणावदाह । स्पर्शेति । स्पर्शभाजिसुखस्पर्शेविशदाविमलाशुभ्राचयाच्छविःकान्ति स्तयाचारैरम्ये । सुरनायकल्पितेरतिसुखदत्तेनखदृष्टेविहारयोग्यतयासज्जीकृतेचसन्न तिमानुकूल्यंसर्वतःसाम्यञ्चदधतिदधानेप्रियतमेशयनेचमृगदृशांदृष्टयोऽनन्यमविच्छि

स्पर्शभाजिविशदच्छविचारौकल्पितेमृगदृशांसुरताय । सन्नतिन्द घतिपेतुरजस्रंदृष्टयःप्रियतमेशयनेच ॥ ३९ ॥ यूनिरागतरलै रपितिर्यक्कायातिभिःश्रुतिगुणेनयुतस्य । दीर्घदर्शिभिरकारिवधूनां ******** लङ्घनन्ननयनैःश्रवणस्य ॥ ४० ॥

न्नपेतुःपतिताःयुगपदुभयावलोकनादभिलाषंव्यञ्जयामासुरित्यर्थः । अत्रप्रियतमशय नयोःप्रकृतयोरेवधर्मसाम्यादौपम्यप्रतीतेःकेवलप्रकृतगोचरातुल्ययोगिता ॥ ३९ ॥ ॥ यूनीति ॥ रागेणतरलैश्चपलैरपिदर्शनोत्सुकैरपीत्यर्थः । यूनिप्रियेतिर्यक्यातिभि स्तपयाचसाचविप्रसारिभिः दीर्घदर्शिभिरायतान्तैःआलोकनव्यापारैरित्यर्थः । वधूनां नयनैःश्रुतिगुणेनशब्दग्रहणपाटवेनयुतस्य । श्रूयतेऽनेनेतिश्रवणंश्रोत्रन्तस्यलङ्घनमति क्रमोनाकारिनचक्रे । कर्णान्तेविश्रान्तमित्यर्थःअन्यत्रतुश्रुतिःश्रवणंअभ्यासइतियावत् । तेनगुणास्तेनयुतस्यश्रूयतइतिश्रवणं शास्त्रंलङ्घनंनाकारिरागद्वेषग्रस्तोपिशास्त्रज्ञःकदाचि च्छास्त्रातिक्रमाद्बिभेतीतिभावः । अयञ्चव्यवहारोनयनेपुरागतरलैरित्यादिश्लिष्टविशे

यत्समहिम्नागम्यत इतिसमासोक्तिभेदः इयञ्चरागदृष्टिरौत्सुक्यानुभावः ॥ ५० ॥ * ॥
॥ संकथेति ॥ नतभ्रूःस्त्री । संकथायांसम्भाषणे इच्छुरिच्छावत्यपि । बिन्दुरिच्छुरित्यु
प्रत्ययान्तोनिपातः । अभिधातुंसम्भाषयितुमनीशाऽक्षमाऽभवत् । अत्रापर्यर्थकोचशब्दः
दिदृक्षुर्द्रष्टुमिच्छुरपि । दृशेःसनन्तादुप्रत्ययः । संमुखीअभिमुखीनबभूव । अङ्गसङ्ग
चपलागात्रस्पर्शचपलापिदयितस्यस्पर्शनेनचकम्पेकम्पितवती । एतेकम्पादयोलज्जा
साध्वसानुभावाःलज्जाविजितमन्मथेयंमुग्धा ॥ ४१ ॥ ************* ॥
॥ अथालिङ्गनम्वर्णयति ॥ उत्तरीयेति । अन्यास्त्री । उत्तरीयविनयात्कुचांशुकाकर्षणा
त् । त्रपमाणानदीक्षणमार्गन्तस्यवोढुर्दृष्टिपथंरुन्धती । किलआवृण्वतीवनतुवस्तुतइ

सङ्कथेच्छुरभिधातुमनीशासम्मुखीनचबभूवदिदृक्षुः । स्पर्शनेनदयि
तस्यनतभ्रूरङ्गसङ्गचपलापिचकम्पे ॥ ४१ ॥ उत्तरीयविनयात्त्रप
माणारुन्धतीकिलतदीक्षणमार्गम् । आवरिष्टविकटेनविवोढुर्वक्ष
सैवकुचमण्डलमन्या ॥ ४२ ॥ ***********

तिकिलार्थः । विकटेनविशालेन । विशङ्कटम्विशालंस्यात्करालंविकटन्त्रयेतिवैजय
न्ती । सम्प्रोदश्चकटजितिचकाराद्वेःकटच्प्रत्ययः । विवोढुःपरिणेतुःवक्षसैवकुचमण्ड
लंआवरिष्टआवृतवतीकुचावरणव्याजेनालिङ्गितवती । वृत्तोतङ्लिङ्इडागमःअत्र
कुचसम्वरणेनालिङ्गनेच्छानिगूहनान्मीलनाभेदः एषालज्जामन्मथमध्यस्थामध्यमा
॥ ४२ ॥ ************************************** ॥
॥ अंशुकमिति ॥ अंशुकमुत्तरीयंहृतवतापरिणेत्राभर्त्रातन्वोःकृशयोःबाह्वोःस्वस्तिको
बन्धविशेषःतेनापिहितेआच्छादितेसुग्धेसुन्दरेकुचाग्रेयस्याःसातयोक्ता । अचिरोढात
वोढाभिनातिशङ्कस्यवलयानियस्मिन् कर्मणितद्यथातथारभसाद्वेगात्पर्यरम्भिगाढमा

श्लिष्टेत्यर्थः । रभेर्ण्यन्तात्कर्मणिलुङ् । रभेरशब्लिटोरितिनुमागमः । एषान्तिरोहितमु
ग्धा ॥ ४३ ॥ ******************************** ॥
॥ सञ्जहारेति ॥ तरुणोयुवकृत्युविरोधंप्रणयकलहंविरहय्यविहाय । रहयतेःस्वार्थरव
न्तात्क्लात्स्यल्यप्ल्यपिलघुपूर्वादित्ययादेशः । सहसापरिरब्धाःप्रेयस्योयेनतेषुपरिरब्ध
प्रेयसीषुआश्लिष्टवधूकेषुसत्सु । ईयसश्चेतिकवभावःईयसोबहुव्रीहौपतिषेधोवक्तव्यइ
त्युपसर्जनस्यह्रस्वनिषेधः । रतिपतिःकामःसंहितम्प्रागारोपितंमहेषुंमहान्तंशरंहि.नभि
न्नकोधंखयत्नसाफल्यात्स्मितमुद्रितपूर्वरोषंयथातथासमुत्सञ्जहार । हिंद्वयेंसाधन

अंशुकंहृतवतातनुवाऽऽक्ष्लस्तिकापिहितमुग्धकुचाग्रा । भिन्नशङ्ख
वलयम्परिणेतापर्यरम्भिरभसादचिरोढा ॥ ४३ ॥ सञ्जहारसह
सापरिरब्धप्रेयसीषुविरहय्यविरोधम् । संहितंरतिपतिस्मितभिन्न
क्रोधमाशुतरुणेषुमहेषुम् ॥ ४४ ॥ स्वंसमानमुपयन्तरिवध्वाः
श्लिष्टवत्युपसपत्निरसेन । आत्मनैवरुरुधेक्षतिनेवस्वेदसङ्गिवसन
ञ्जघनेन ॥ ४५ ॥ ************

॥ इतिभावः ॥ ४४ ॥ ******** ॥
तानवकाशादित्यर्थःपरिरम्भान्तोयूनाम्बिहरणइतिभावः
॥ स्वंसमानमिति ॥ उपयन्तरिभर्त्तरिरसेनरागान्धनयेत्यर्थः । उपसपत्नि सपत्नीसमीपे ।
समीपार्थेऽव्ययीभावेनपुंसकह्रस्वत्वं । श्लिष्टवतिसतिस्वंसमानंस्पर्शसुखपारवश्याद्धृश्य
मानंतथापिस्वेदसङ्गिस्वेदेनतात्विकेनसक्ताम्बध्वाःवसनंक्षतिनाकुशलेनस्वस्येदंलाघव
मितिजानतेवेत्यर्थः । जघनेनकर्त्राआत्मनैवस्वयमेवरुरुधे । रुद्धंसातुनवेत्तीतिभावः
स्वदेहेनुकस्यवसनरोधस्यज्ञानहेतुकत्वमुत्प्रेक्ष्यते ॥ ४५ ॥ ************ ॥
॥ पीडितइति ॥ युवत्याःयुवतेःस्तनयुगेनभर्त्तरिप्रतिनार्याःपुरोऽग्रेसपक्षसमक्षमेवउरः

प्रतिपिष्य । उरःप्रतिपेषं । परिक्लिश्यमानेचेतिणमुल् । कृन्मेजन्तइत्यव्ययसंज्ञा । वक्षः प्रतिपीड्येत्यर्थः पीडितेवनिदलितइर्ष्ययादीर्यमाणस्यप्रतिनार्याः सपत्न्याःहृदयस्यतन्म यत्वंभर्तृतदात्म्यंसद्यमभवदेव । अन्यथाकथमन्यपीडनादन्यद्दलनमितिभावः । अत्र एवेयमसङ्गत्यलङ्कारोपजीविनातन्मयत्वोत्प्रेक्षेतिसङ्करः कार्यकारणयोर्भिन्नदेशत्वेसत्यस सङ्गतिः ॥ ४६ ॥ ****************************** ॥

॥ दीपितेति ॥ वल्लभेदीपितस्मरं उद्दीपकामंयथातयाउरस्युपपीड्यउरस्युपपीडं । स मन्यांचोपपीडइतिसप्तम्यर्थेइतिणमुल् । तत्पुरुषेकृतिबहुलमित्यलुक् । घनङ्गाढमभिषज्य

पीडितेपुरउरःप्रतिपेषंभर्तरिसतियुगेनयुवत्याः । स्पष्टमेवदलितप्र
तिनार्यास्तन्मयत्वमभवद्धृदयस्य ॥ ४६ ॥ दीपितस्मरमुरस्युपपी
डम्बल्लभेघनमभिषज्यमाने । वक्रतान्नययतुःकुचकुम्भौसुभ्रुवःक
ठिनतातिशयेन ॥ ४७ ॥ सम्प्रवेष्टुमिवयोषितईषुःश्लिष्यतांहृ
दयमिष्टतमानाम् । आत्मनःसततमेवतदन्तर्वर्तिनोनखलुनूनमजा
नन् ॥ ४८ ॥ ************************

मानेपरिरभ्यमाणेसति । परिरम्भःपरिष्वङ्गसंश्लेषउपगूहनमित्यमरः । सुभ्रुवःकुचकु म्भौकठिनतातिशयेनवक्रताम्परिमण्डलतांनययतुर्नप्रापतुः । अत्रगाढालिङ्गनात्कुचकु म्भयोर्वक्रत्वसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिरलङ्कारः ॥ ४७ ॥ ********* ॥

॥ सम्प्रवेष्टुमिति ॥ योषितःश्लिष्यतामालिङ्गतामिष्टतमानांहृदयंसंप्रवेष्टुमीषुरिच्छन्ति स्मेवइतिगाढालिङ्गननिमित्ताक्रियास्वरूपोत्प्रेक्षावाविवक्षाभेदात । उतप्रवात्मनःसा त्मसततमेवतदन्तर्वर्तिनस्तेषामिष्टतमानां अन्तर्हृदयेकेवस्थितान्नाजानन्नूनं अन्यथाकथंपु नःप्रवेशेच्छेतिभावः इयमज्ञानोत्प्रेक्षापूर्वोत्प्रेक्षासापेक्षेतिसजातीयसङ्करः ॥ ४८ ॥ *

॥ स्नेहेति ॥ स्नेहनिर्भरम्प्रेमरसपूर्णन्तैलादिकद्रवद्रव्यपूर्णञ्च । स्नेहोऽस्त्रीद्रवहार्दयोरि
तिवैजयन्ती । अतएववधूनांवपुरन्तराऽऽर्द्रतान्द्रवत्वमघत्तस्नेहद्रव्यसम्पूर्णमन्तरार्द्रम्भव
तीतिभावः । असंशयंसंशयस्याभावः । अर्थाभावेऽव्ययीभावः । यद्यस्माद्यूनिपुंसिगाढ
म्परिरम्भतइतिपरिरम्भिणिगाढाश्लेषिणिसतिअनेनवपुषाकर्त्रावस्त्रंक्नोपयित्वापरिषिच्य
वस्त्रक्नोपं । क्नोपिधानेत्यर्थनादर्तिह्रीव्यादिनापुगागमेचेलेक्नोपेरितिणमुल् । अम्बुवव
र्षे । वृषेःकर्मणिलिट् । अन्तरार्द्रस्यनिष्ठीउनाद्वहिरम्बुस्रावसम्भवात् । तन्निमित्तेयम
न्तरार्द्रत्वोत्प्रेक्षाप्रियाङ्गसङ्गात्तथाखिन्नेतिसात्विकोदयोक्तिः ॥ ४९ ॥ ****** ॥
॥ नस्मेति ॥ प्रमदानामिष्टनमसङ्गमेनजन्मयस्यसःवर्द्धविपुलः । विपुलानेकयोर्वद्धरि

स्नेहनिर्भरमधत्तवधूनामार्द्रतामवपुरसंशयमन्तः । यूनिगाढपरिर
म्भिणिवस्त्रक्नोपमम्बुववृषेयदनेन ॥ ४९ ॥ नसमातिवपुषःप्र
मदानामन्तरिष्टतमसङ्गमजन्मा । यद्वर्द्धर्वहिरवाप्यविकाशंव्यान
शेतनुरुहाण्यपिहर्षः ॥ ५० ॥ ✻✻✻✻✻✻✻✻✻

तिवैजयन्ती । हर्षोवपुषोन्तर्नमातिस्मअत्युद्रेकान्तःशमितइत्युत्प्रेक्षा । कुतःयद्यस्माद्व
हिर्वपुषोवहिर्विकाशंवृद्धिमवाप्यतनुरुहाणिरोमाण्यपिव्यानशेव्याप । कर्त्तरिलिट् । अ
श्नोतेश्चेतिनुडागमः । अत्रवहिर्विकाशनिमित्तकान्तरमानोत्प्रेक्षा । आनन्दरोमाञ्च
योःश्लेषमूलाभेदाध्यवसायात्निश्चयोक्त्यनुप्राणितेतिसङ्करः ॥ ५० ॥ ****** ॥
॥ यदिति ॥ वनितानांप्रमदानांस्त्रीणांप्रियस्यभर्त्तुर्व्यतिकरात्सम्पर्कात्सङ्गमाच्चाङ्गजेना
ङ्गव्यापिनापुत्रेणचपुलकेनबभूवेभूतमित्यितियावत् । भावेलिट् । तेनपुलकोदयेनपुत्रोद
येनचभृशमुच्छ्वसिताभिरुच्छ्वनाभिर्मोक्षाशयाभिराश्वासिताभिश्चनीवीभिःलक्षणयाक
टिवस्त्रैःअन्यथावन्धनशब्देनपौनरुक्त्यात् । सपदिवन्धनमोक्षोग्रन्थिभेदोनिगडमोच

त्प्राप्यपिप्राप्तः । कर्मणिलुङ् । अभ्युदयेषुराजानोवध्यान्मोचयन्तीतिभावः अत्रप्रस्तुतपुल
कनीवीगतानुरञ्जनत्वाच्छ्वसितत्वादिविशेषणसाम्याद्बन्धनमोक्षणसम्बन्धाच्च प्रस्तुतपुत्रका
रागतप्रतीतेःसमासोक्तिरलङ्कारः ॥ ५१ ॥ ****************** ॥

॥ अथचुम्बनक्रीडाम्वर्णयति । ह्रीति । परिरम्भेआलिङ्गनेह्रीरेवभरस्तस्मात्स्वनतम्भा
स्तकाननंमतोतिभावः । अर्पितंसमुखेनिहितमोष्ठएवदलंपत्रंयस्यतद्योषितआननमेव
पद्मंरागवान्रागीअवटुजेषुचरमशिरोरुहेषु । अवटुर्घाटाकृकाटिकेत्यमरः । अवकृष्य
वटुनाकर्षणेनोन्नमय्यमुकुलिताक्षंनिमीलितनेत्रंयथातथा । बहुव्रीहौसक्थ्यक्ष्णोःस्वा
ङ्गात्षजितिषच्प्रत्ययः । अधासीत्पपौ । धेटोलुङ् आदेचइत्यात्वंयमरसिसिचोपृक्ताइतीं

यत्प्रियव्यतिकराद्वनितानामङ्गजेनपुलकेनबभूवे । प्रापितेनभृशमु
च्छ्वसिताभिर्नीविभिःसपदिवन्धनमोक्षः ॥५१॥ ह्रीभरादवनतम्प
रिरम्भेरागवानवटुजेष्ववकृष्य । अर्पितोष्ठदलमाननपद्मंयोषितोमु
कुलिताक्षमधासीत् ॥५२॥ पल्लवोयमितिसाम्यसपक्षमिष्टवत्यधर
बिम्बमभीष्टे । पर्यकूजिसरुजेवतरुण्यास्तारलोलवलयेनकरेण ॥५३

डागमः । अत्राननोष्ठस्यपद्मदलत्वरूपणात्तत्रानुरागिणांमधुपत्वंच गम्यतइत्येकदे
शरूपकं ॥ ५२ ॥ ************************** ॥

॥ पल्लवेति ॥ पल्लवोयमित्याशङ्क्येनयत्साम्यन्तेनसपक्षंउभयोरपिपल्लवैकोपमान
त्वसाधर्म्यात्तुल्यमित्यर्थः । अधरोबिम्बमिवतदधरबिम्बंअभीष्टेप्रियतमेइष्टवतिसति । सहरु
जासरुक्तेनसहेतिबहुव्रीहिःसहस्यस । तेनसरुजेवसव्यथेनेव । स्त्रीरुग्रुजाचोपतापेत्य
मरः । तारास्थूलैःक्वणन्तःलोलानिचलानिवलयानिकङ्कणानियस्यतेनतरुण्याःक
रेणपर्यकूजिपरिकूजितं । भावेलुङ् । सुहृद्दुःखादुःखायतेसुहृदइतिभावः । अत्र

ङ्गणाङ्गारनख्यकरकूजनख्याविधूननहेतुकस्यसहजेवेमिहक्हेतुकात्वमुत्प्रेक्ष्यते ॥ ५३॥

॥ केनचिदिति ॥ केनचिद्रागिणामधुरंरसवत्तमुल्बणरागमतिरिक्तंतथापिविहरेष्वधि

कम्बाष्पेणविरहोष्मणानप्तंसुभ्रुवओष्ठपल्लवमपास्यसरसंसान्द्रशोणंअक्षिचुचुम्बेचुम्बितं

अत्रतप्तत्वरसत्वयोर्विशेषणगत्याधरत्यागाक्षिचुम्बनहेतुकङ्काव्यलिङ्गद्वयंतापेक्षत्वात्सङ्की

र्यते ॥ ५४ ॥ ****************************** ॥

॥ एवञ्चात्यसुरतमुक्त्वाभ्यन्तरसुरतवर्णनमप्रस्तौति ॥ रेचितमित्यादि । परिजनेनरेचि

तंरिक्तीकृतं । अतएवकेवलाभिरक्ताद्म्पतीजायापतीएवयस्मिन्तत् । रज

केनचिन्मधुरमुल्बणरागम्बाष्पतप्तमधिकम्विरहेषु । ओष्ठपल्लवमपा

स्यमुहूर्त्तंसुभ्रुवःसरसमक्षिचुचुम्बे ॥ ५४ ॥ रेचितम्परिजनेनम

द्दियःकेवलाभिरक्तदम्पतीधाम । साम्यमापकमलासखविष्वक्सेन

सेवितयुगान्तपयोधेः ॥ ५५ ॥ आवृतान्यपिनिरन्तरमुच्चैर्योषि

तामुरसिजद्वितयेन । रागिणामितनोविमृशद्भिःपाणिभिर्जगृहिरे

हृदयानि ॥ ५६ ॥ ********************

न्यामहत्तरंधामकेली

दनादिगुजायाभद्रस्यजम्भावोद्भावस्यविकल्पान्निपातितः । मह्यीयामहत्तरंधामकेली

गृहंकमलासखेनलक्ष्मीभर्त्राविष्वक्सेनेनजनार्दनेनविष्णुनासेवितस्याधिष्ठितस्ययुगान्त

पयोधेःसाम्यमापेत्युपमालङ्कारः युगान्तविशेषणंविविक्ततद्योतनार्थंएनेनेच्छाविरहतो

का ॥ ५५ ॥ ****************************** ॥

॥ अथविस्रम्भविहारएवेवाह ॥ आवृतानीति । उच्चैरुन्नतेनोरसिजद्वितयेननिरन्तरं

नीरंध्रमावृतान्यपिसन्वृतान्यपियोषितांहृदयानिवक्षांसिचेतांसिच इतनङ्गतोविमृशद्भि

रितस्ततःपरामृशद्भिःरागिणाम्पाणिभिर्जगृहिरेगृहीतानि । निगूढंवस्तुहस्तपरामर्शी

लभ्यत इति एतत्रभावः अन्यत्र कुचलब्धः प्रियकरस्पर्शस्तासां हृदयग्राह्योऽभूदिति भा
वः नैरन्तर्येण प्रनिबद्धैरपि कुचयोः कथंचिदन्तः सम्यग्गृहृदयानि स्पृष्टान्येवेति वाक्या
र्थः। अत्र हृदयानामपि हृदयानां प्रहृष्टत्वात्कियच्छहृत शेषः ॥ ५६ ॥ ***** ॥

॥ कामिनामिति ॥ स्वेदवारिणा सान्त्विकेनांगुली स्वेदेन मृदुभिः कोमलनाङ्गैरत एव विभु
ग्नैर्विनम्रैः कामिनां करजाग्रैः नखाग्रैः कठिनेषु कामिनीकुचतटेषु असकलान्यसमग्राणि पदा
निह्नतानि कथंचिदक्रियन्त कृतानि। कठिनेषु मृदूनां पदलाभो दुःसम्पाद्य इति भावः न
एव क्रियाप्रवृत्तेरित्यर्थः। अन्यकुचानामीदृक्काठिन्यासम्बन्धेपि सम्बन्धोक्तेरतिशयोक्तिः ॥
५७ ॥ ****************************** ॥

कामिनामसकलानि विभुग्नैः स्वेदवारिमृदुभिः करजाग्रैः। अक्रिय
न्त कठिनेषु कथंचित्कामिनीकुचतटेषु पदानि ॥ ५७ ॥ सोष्मण
स्तनशिलाशिखराग्रादाप्तधर्मसलिलैस्तरुणानाम्। उच्चकैस्त
मलघारुहहस्तैर्निम्ननाभिसरसीषु निपेते ॥ ५८ ॥ ****

********** ॥

॥ सोष्मण इति ॥ सोष्मणो यौवनोष्मयुक्तात् स्तनावेव शिलाशिखरे तयोरग्रादुपरिभागा
दाप्तधर्मसलिलैः स्वेदेरविहारत्प्रसन्नेः तरुणानां हस्तैः उच्चकैस्तमलघारुहमलैः सा
रसेषु निम्ननाभिषेव सरसीषु निपेतेन निपतितं। कष्टखिन्नानां कुतश्चित् उन्नतात्प्रपतिपाते पु
नरिति भावः। प्रथमं कुचौ स्पृष्ट्वा ततो नाभिदेशमपृशन्नित्यर्थः। अत्र कुचयोः शिलाशिख
रत्वेन नाभीनां सरसीत्वेन रूपाणां हस्तानां आपातपुरुषत्वरूपणाङ्गम्यत इत्येकदेशवि
वर्तिरूपकम् ॥ ५८ ॥ *************************** ॥

॥ आमृशद्भिरिति ॥ वदयोर्नीवयद्यवद्भिर्नीचैरभिन आमृशद्भिः जेतारमात्तावसनग्री
वाः। ताकीयवयोरवचनशक्तिपुचातम्। ननु यानवद्भोतनो प्रसक्त्यैपदिनात्। अतएव

लोलमानादयस्थानशइतिवामनः । लोलमानाविततः प्रसारिता अङ्गुलयो येषां तै
र्यथाविधाहस्तायेषां तैरभीष्टैः प्रियतमैः सुभ्रुवां मध्यं मुष्टिमेयमिति मुष्ट्या मातुं शक्यमिति
अनुभवात्प्रत्यक्षेणमुष्ट्या मानं कृत्वैव प्रतिपेदे प्रतिबुद्धं न तु प्रसिद्धिमात्रेमिति भावः । अमु
ष्टिमेयस्य मुष्टिमेयत्वोक्तेरतिशयोक्तिभेदोऽलङ्कारः ॥ ५९ ॥ ********** ॥

॥ प्राप्येति ॥ नाभिरेवनदोह्रदइतिरूपकान्तर्गतमज्जनं प्राप्य अमुं निवसनग्रहणाय वस्त्रा
कर्षणायेत्यर्थः । स्नानस्यवस्त्रग्रहणं युक्तमितिभावः । प्रस्थितंप्रवृत्तं । उपनीविनीविस
मीपेप्रायेणभवमौपनीविकंतंन्यायात्तमित्यर्थः । उपजानूपकर्णोपनीवेष्ठक् । वल्लभस्य

॥ ************************************************* ॥

आमृशद्भिरभितोवलिवीचीर्लोलमानविततङ्गुलिहस्तैः । सुभ्रुवा
मनुभवात्प्रतिपेदेमुष्टिमेयमितिमध्यमभीष्टैः ॥ ५९ ॥ प्राप्यनाभि
नदमज्जनमाशुप्रस्थितंनिवसनग्रहणाय । औपनीविकमरुन्ध
किलस्त्रीवल्लभस्यकरमात्मकराभ्याम् ॥ ६० ॥ कामिनः कृतरता
वकालक्षेपमाकुलवधूकरसङ्गि । मेखलागुणविलग्नमसक्त्यान्वी
घस्त्वमकरोत्परिधानम् ॥ ६१ ॥ ************

करं स्त्रीआत्मकराभ्यामरुन्धकिलरोधनादिनवतीत्यर्थः ॥ ६० ॥ ********* ॥

॥ कामिनइति ॥ आकुलेप्रियकरनिवारणाव्यग्रेवधूकरेसङ्गिसक्तंमेखलैवगुणस्तत्रविल
ग्नंदीर्घत्वं नेआनतंनुकंचुकधावीष्टनमित्यर्थः । चिरंक्रियचदीर्घस्त्वंत्वचिरंक्रियइत्यम
रः । एवंकृतोरनस्यैवावस्त्रस्यकालक्षेपःकालविलम्बोयेनतत्परिधानमंशुकंकामिनोऽ
स्त्रयामकरोत् । इच्छाविघातादीर्घाञ्जनयामासेत्यर्थः । अत्रकरसङ्गादिपदार्थानां
विशेषणगत्याअस्त्रयाक्रेनोपदार्थहेतुकङ्काव्यलिङ्गमलङ्कारः ॥ ६१ ॥ **** ॥

॥ अम्बरमिति ॥ अम्बरंविनयतोऽपसारयतः प्रियपाणेर्योषितःकरयोस्तनस्थिनूरीधक

वेरितिभावः । कलहस्यवारणांविधातुंनिरावर्णंकर्तुमिवेतिकलोत्प्रेक्षा । कक्ष्ययाकांच्या । कक्ष्याकक्षेवरत्रायांकांच्यांगेहेप्रकोष्ठयोरितिविश्वः । कक्षयेतिक्षान्तपाठेतुकक्षायहणिकाकाञ्चीप्रकोष्ठेगजरज्जुष्वितिक्षान्तेषुविश्वः । वलयैःकंकणैस्तुभ्यमभीक्ष्णंशिशिञ्जेचुकुशे । भावेलिट् । भूषणानांतुशिञ्जितमित्यमरः । द्वयोःकलहापमानयोःपार्श्वस्थाःसाक्रोशंनिवारयन्तीतिभावः । शिञ्जितिरयन्ताजव्यादिर्नेरन्त्यादिःयोषेवीशब्द्दैत्तिमुनिः ॥ ६२ ॥ ******************************* ॥

॥ ग्रन्थिमिति ॥ हृदयेशेप्रियेवाससोग्रन्थिमुद्ग्रथयितुंविस्रंसयितुं । ग्रथयतेश्चैरादि

अम्बरम्बिनयतःप्रियपाणेर्योषितस्तुकरयोःकलहस्य । वारणामिव विधातुमभीक्ष्णङ्कक्ष्ययाचवलयैश्चशिशिञ्जे ॥ ६२ ॥ ग्रन्थिमुद्ग्रथयितुंहृदयेशेवाससःस्पृशतिमानधनायाः । भ्रूयुगेनसपदिप्रतिपेदेरोमभिश्चसममेवविभेदः ॥ ६३ ॥ आश्रुलङ्घितवतीष्टकराग्रेनीवीमर्द्धमुकुलीकृतदृष्ट्या । रक्तवैणिकहताधरतन्त्रीमण्डलक्वणितचारुचुकूजे ॥ ६४ ॥ *·*·*·*·*·*·*·*·*·*·*·*·*

कान्तुमुत् । स्पृशतिसतिमानधनायाःमानवत्याःकामिन्याइतिशेषः । भ्रूयुगेनरोमभिश्च । कर्त्तरितृतीये । सपदिसमंयुगपदेवविभेदोभेदःभङ्गोहर्षश्चप्रतिपेदेप्राप्तःअत्रमानवतीत्वात्कामिनीत्वाच्चनीवीस्पर्शेषु युगपदमर्षहर्षयोरुदयात्तदनुभाववोरपियुगपदाविर्भावइतिभावःअत्रभ्रूभङ्गरोमाञ्चक्रिययोःसमुच्चयात्समुच्चयभेदःसचविभेदइतिश्लेषप्रतिभोत्थापिताभेदाध्यवसायमूलातिशयोक्त्यनुप्राणितइतिसङ्करः ॥ ६३ ॥ ******* ॥

॥ आश्विति ॥ इष्टस्यप्रियस्यकराग्रेनीवीम्वस्त्रग्रन्थिंआशुहठात्लङ्घितवतिअतिक्रान्तवतिउरमूलङ्घनेसतीत्यर्थः । अर्द्धमुकुलीकृतदृष्ट्यासुखपारवश्यादर्धनिमीलिताक्ष्या

स्त्रियारक्तोरागःकण्ठःस्वयङ्गानकुशलःवीणाशिल्पमस्यवैणिकोवीणावाद्यनिपुणः । शि ल्पमितिठक् । रक्तेनवैणिकेनयच्चगानकुशलेनहस्तन्यादिनंयदधरतंत्रीणांमण्डलं मृदुः बकुतंत्रीकस्वरमण्डलादिभेदःनस्वकणितनिवचारुयथातया चुकूजेकूजितम्भावेलिट् । अधरग्रहणात्तत्रमाधुर्यनिश्चयात् । स्पर्शसुखातिरेकात्तत्कोकण्ठस्वरव्यतिकरमनोहरः कोपिस्वरस्तवसम्भूतःकण्ठकूजितविशेषःकृतइत्यर्थः । अत्रएवरक्तवैणिकहस्तेतिविशेष णंकणितचार्वितिउपमालङ्कारः ॥ ६४ ॥ ******************* ॥

॥ आयतेति ॥ आयताःअङ्गुलयोयस्यसप्रियकरःकृशस्यभावःकृशिमाकार्श्यं । पृथ्वादि भ्यइमनिचूरचर्तोलघ्वादेर्लघोरितिरेफादेशः । नेनशालतेशोभनेनस्मिन्स्तुभ्रुवांमध्ये

आयताङ्गुलिरभूदतिरिक्तःसुभ्रुवांकृशिमशालिनिमध्ये । श्रोणि षुप्रियकरःपृथुलासुस्पर्शमापतकलेनतलेन ॥ ६५ ॥ चक्रुरेवल लनोरुपुराजीःस्पर्शलोभवशलोलकराणाम् । कामिनामनिहितान्य पिरम्भास्तम्भकोमलतलेषुनखानि ॥ ६६ ॥ ******

ऽतिरिक्तोऽधिकोभूत् । मध्यस्यातिकार्श्याद्धस्तस्यैकदेशोऽभूदित्यर्थः । पृथुलासुश्रोणि षुकटेषु । वहिश्रिभ्युयुङ्ग्लोनिस्हत्रेणाप्युधानोःनिप्रत्ययःसकलेनतलेनस्पर्शमापप्राप्तम् । भावेलिट् ॥ ६५ ॥ ******************************** ॥

॥ चक्रुरेवेति ॥ कामिनांपुरुषाणांस्पर्शलोभवशलोलकराणांनखानि । पुनर्भवःकररु होनखोऽस्त्रीनखरोऽस्त्रियामित्यमरः । रम्भास्तम्भकोमलतलेषुकदलीप्रकाण्डतलेवस्लरु षुललनामूरुपुराजीः रेखाश्चक्रुरेवऊरुपरामर्शानान्तरीयकनखस्पर्शमात्रादेवरेखाजा ताइत्यर्थः । अत्रकोमलतायाःविशेषणगत्याराजीकरणेहेतुत्वात्काव्यलिङ्गभेदः ॥ ६६ ॥

॥ कर्विति ॥ एताःस्त्रियःचरणमूलेचपलेक्षणांलोलचक्षुषंप्रियंयेवेतंसकुसुमैःकर्णावतंस

पुष्पैः। षष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोरित्यकारलोपः। अघ्नन्नताडयन्। हनेर्ल ङ्। गमहनेत्यादिनाउपधालोपः। होहन्तेरितिकुत्वं। तानिवनंसकुसुमानि। मनोम थ्नातीतिमन्मथः। पृषोदरादित्वात्साधुः। तस्यमन्मथस्यकुसुममायुधंयस्येतिकुसुमायु धइतियन्नामतद्यथार्थंचक्रिरेचक्रुःतदानेषान्तत्कार्यकारित्वादितिभावः। अत्रवसन्ते यारोप्यमाणस्यमन्मथायुधत्वस्यप्रकृतोपयोगात्परिणामालङ्कारः॥ ६७॥ **** ॥

॥ धैर्यमिति॥ तरुण्यःरमण्यःउल्बणःउद्रिक्तोमनोभवभावोरागोयासान्ताअपिअभि रुचितेषुप्रियेषुधैर्यमौदासीन्यन्तेनिरे। वपुःस्वाङ्गमर्पितवत्योयथेष्टकरणायदत्तवत्योपि वामताञ्चवक्रताञ्चतेनिरे। ललितंमनोहरंस्मरतंस्मरतत्सम्बन्धिधार्ष्ट्यम्प्रागल्भ्यंयासान्ता

> ऊरुमूलचपलेक्षणामघ्नन्यैर्वनंसकुसुमैःप्रियमेताः। चक्रिरेसपदि
> तानियथार्थंमन्मथस्यकुसुमायुधनाम ॥ ६७ ॥ धैर्यमुल्बणम
> नोभवभावावामताञ्चवपुरर्पितवत्यः। व्रीडितंललितसौरतधार्ष्ट्यास्ते
> निरेभिरुचितेषुतरुण्यः ॥ ६८ ॥ **********

स्तथापिव्रीडितंव्रीडान्तेनिरे इह स्त्रीरहसिरागाङ्गार्पणधार्ष्ट्यादिगुणाअप्यागन्तुकतया सहजधैर्यवक्रताव्रीडितैःपुनःपुनःप्रतिबध्यन्तएवेतिभावः। अत्ररागादिभिःसहसमावेश विरोधस्यसहजागन्तुकाभ्यामाभासीकरणाद्विरोधाभासोऽलङ्कारः धैर्यादिगुणसमुच्चया लङ्कारस्येतिसङ्करः॥ ६८॥ ************************* ॥

॥ पाणीति॥ मणिबन्धादाकनिष्ठंकरस्यकरभोबहिरित्यमरः। करभइवऊरूयस्याःसा करभोरूःस्त्री। ऊरूत्तरपदादौपम्येइत्यूङ्प्रत्ययः। अविरोधितवाञ्छमनिच्छवारित प्रियमनोरथंयथातथाकामिनःपाणिरोधंनीविमोक्षणेव्यापृतस्यप्रियपाणेर्निवारणंकुर्व तीस्म। तथामधुरंमनोहरंस्मितकूर्भमनवर्त्तितास्तुतामन्दहासमिश्राःभर्त्सनातर्जनाश्च

कुर्वतेस्म । तथासुखेपिअधरपीडनादौसुखानिरेकेसत्यपिहारिमनोहारि मुष्करुदितं मनस्तुत्पादनार्थंकृत्रिमरोदनञ्चकुर्वतेस्म । स्त्रीणामेषस्वभावोयदिष्टमप्यनिष्टतयानिवारयन्त्यएवसुरतसुखमुपभुञ्जतइत्यर्थः । अत्रसुखेपिदुःखवदुपचारात्कुट्टमिताख्योऽनुभावोद्रष्टव्यः । केशाधरादिग्रहणेमोदमानेपिमानसेदुःखितेवबहिःकुप्येद्यत्रकुट्टमितं हितदितिलक्षणात् ॥ ६९ ॥ ************************ ॥

॥ वारणार्थेति ॥ ईर्ष्ययाअतिपीडानासहिष्णुतयाअपत्रपयाचरहस्यप्रकाशनवैलक्षण्येनचमुहुर्वारणार्थपदेषुमामेत्यादिनिषेधवाचकशब्दप्रयोगेषुगद्गदवाचांस्खलद्गिरां

पाणिरोधमविरोधितवाञ्छंभर्त्सनाश्चमधुरस्मितगर्भाः । कामिनःस्म कुरुतेकरभोरूर्हारिशुष्करुदितञ्चसुखेपि ॥ ६९ ॥ वारणार्थपदगद्गदवाचामीर्ष्ययामुहुरपत्रपयाच । कुर्वतेस्मसुदृशामनुकूलम्प्रातिकूलिकतयैवयुवानः ॥ ७० ॥ अन्यकालपरिहार्यमजस्रन्तद्द्वयेनविदधेद्वयमेव । धृष्टतारहसिभर्तृषुताभिर्निर्दयत्वमितरैरबलासु ॥ ७१ ॥ ✻✻✻✻✻✻✻✻✻✻✻✻✻✻✻

दृशाम्प्रातिकूल्यम्वर्त्तनंतइतिप्रातिकूलिकाःप्रतिकूलचारिणः । तस्यत्वनुपूर्वमौपलोमकूलमितिठक् । तत्तयाप्रातिकूलिकतयैवप्रतिकूलाचरणेनैवयुवानोऽनुकूलमिष्टंकुर्वतेस्मस्त्रीत्रिमनिवारणाद्यत्प्रतिकूलमिवाचरितमधरपीडनादिकन्तत्तासामिष्टत्वादनुकूलमेवेतिप्रतिकूलाचारणमेवानुकूलम्भवतीत्यर्थः । अतएवप्रतिकूलमप्यनुकूलमितिविरोधाभासोऽलङ्कारः ॥ ७० ॥ ************************ ॥

॥ अन्येति ॥ अजस्रन्नित्यंअन्यकालपरिहार्यंसुरतेतरकालेत्याज्यन्तद्द्वयंकर्मद्वयेनकर्त्राविदधेविहितमेव । धात्रःकर्मणिलिट् । एतदेवव्यनक्तिरहसिताभिरबलाभिर्भर्तृषु

विषयेषुधृष्टताविरचेइतरैर्भर्तृभिरबलास्तस्त्रीषुनिर्दयत्वञ्चविदधे। अन्यस्त्रावयापुंसांस्त्री षुदयालासान्तेवप्रागल्भ्यंअलङ्कारस्तद्वत्तुरतेषुनन्दिरुत्क्रमेवालङ्कारइतिभावः। अत्र स्त्रीपुंसयोर्दयानिर्दयत्वयोःप्रक्रमयोर्विधानक्रियायोगपद्यंगम्यतइतितुल्ययोगिताभेदः॥ ७१॥ ****************************॥

॥ बाह्विति॥ तरुणीनान्तनीतेइतितनुशब्दःतनुषष्ठ्यन्तः। अधिकरणेशेनेरित्यच्प्रत्य यः। विषमेषुःकामःवाहुपीडनंनिर्दयाश्लेषः। कचग्रहणंकेशाकर्षणंताभ्यामाहतेनमु ष्टिघातेन। नपुंसकेभावेक्तः। नखानान्दन्तानाञ्चनिपातैःक्षतैश्चवोधितःसन्विशदंनि र्व्याजंयथातथाउन्मिमीलउद्बुद्धःसर्वमेतत्कामस्योद्दीपकमासीदित्यर्थः। अत्रप्रकृत

बाहुपीडनकचग्रहणाभ्यामाहतेननखदन्तनिपातैः। वोधितस्तनुश यस्तरुणीनामुन्मिमीलविशदम्विषमेषुः॥ ७२॥ कान्तयासप दिकोप्युपगूढःप्रौढपाणिरपनेतुमियेष। संहतस्तननिरस्तनदृष्टि र्भ्रष्टमेवनदुकूलमपश्यत्॥ ७३॥ ********

विषमेषुविशेषणसामर्थ्यात्प्रस्तुतप्रवुद्धपुरुषःप्रतीतेःसमासोक्तिरलङ्कारः। एवमेवप्रवो धनेखलुनिद्रालुरित्यलौकिकेवस्तुनिलौकिकवस्तुव्यवहारसमारोपः॥ ७२॥ *॥

॥ कान्तेति॥ कान्तयासपदिवस्त्राकर्षणएवोपगूढआश्लिष्टःकोपियुवाकामीप्रौढपाणि र्व्यग्रहस्तः सन्अपनेतुन्दुकूलमाक्रष्टुमियेषसंहताभ्यां निरन्तराश्लिष्टाभ्यांस्तनाभ्यांनिर स्तनदृष्टिस्तिरोहिताक्षः सनभ्रष्टमेवप्रागेवस्रस्तन्दुकूलंनापश्यत् अत्रदृष्टिनिरस्कार स्यविशेषणगत्याअदर्शनहेतुत्वात्पदार्थहेतुकङ्काव्यलिङ्गम्। नचदृष्टेस्तननिरस्कारस म्बन्धेपिसम्बन्धरूपातिशयोक्त्युत्थापितमितिसङ्करः। तेनचकुचयोर्लोकोत्तरसौन्दर्यव्यं ज्यतइतिअलङ्कारेणवस्तुध्वनिः॥ ७३॥ ******************॥

॥ आहतमिति ॥ तरुण्याः सम्बन्धिना कुचतटेनाहतमाहतिरमुना साधु सोढमिति हेतोः
स्तुष्यतः शीर्यमाणाद्धारान्मौक्तिकवृष्टिः पुष्पवृष्टिरिव प्रियतमोरसि पपातेत्युत्प्रेक्षा विक्रा
न्तः पूज्यते पुष्पवृष्ट्येति प्रसिद्धिः ॥ ७४ ॥ ******************** ॥
॥ सीत्कृतानीति ॥ तरुण्याः सीत्कृतानि सीत्काराः । दन्तनिःपीडनायां सीरिति शब्दप्रयो
गः । मणितं रतिकाले स्त्रीणां कण्ठकूजितविशेषः । मणितं रतिकूजितमित्यभिधानात् । क
रुणोक्तिः त्रायस्वेत्यादि दीनोक्तिः । स्निग्धं स्नेहार्द्रमुक्तमुक्तिः त्वं मे प्राण इति प्रियवाद इत्य
र्थः अलमर्थानि निषेधार्थानि वचांसि मामेत्यादिना वारणवचनानि । हासानां भूषणानां च र

आहतं कुचतटेन तरुण्याः साधु सोढममुनेति पपात । ध्यानतः प्रियतमो
रसि हारात्पुष्पवृष्टिरिव मौक्तिकवृष्टिः ॥ ७४ ॥ सीत्कृतानि मणि
तं करुणोक्तिस्निग्धमुक्तमलमर्थवचांसि । हासभूषणरवाश्च रमण्याः
काममूत्रपदतामुपजग्मुः ॥ ७५ ॥ उज्झितैर्निभृतमेकमनेकै
श्छेदवन्मृगदृशामविरामैः । श्रूयते स्म मणितं कलकाञ्चीनूपुरध्वनि
*************
भिरक्षतमेव ॥ ७६ ॥

वाः स्वनाः कामसूत्रस्य वात्स्यायनादिकामतन्त्रप्रतिपादकशास्त्रस्य पदताम्भ्यद्यत इति ष
दमर्थः । प्रमेयलक्षणमिति यावत्तत्तामुपजग्मुः इति गम्योत्प्रेक्षा । यद्वा कामेनैव क्लृप्तं सूत्रं
स्य पदानि सुप्तिङन्तशब्दरूपाणि तस्य शास्त्रस्यैतान्येव पदानि तत्तामुपजग्मुरित्युत्प्रेक्षेति ॥
७५ ॥ ****************************************** ॥
॥ उज्झितैरिति ॥ निभृतमनुद्धतं सूक्ष्ममित्यर्थः । एकमेकाकि छेदवत् विच्छेदयुक्तं । मृग
दृशां मणितं रतिकूजितं उज्झितैः स्यूतैरनेकैर्बहुभिरविरामैरविच्छेदैः कलैरव्यक्तमधुरैः का
ञ्चीनां नूपुराणां च ध्वनिभिरच्छिन्नमनिरस्तमेव श्रूयते स्म श्रुतं मणितस्य निरोधायकशब्दा

मारथङ्गावेपिताङ्घ्रयोनापत्तेरनङ्गुणालङ्कारः । शब्दिनेनावद्रूपस्वीकारः स्यादनङ्गुरा इतिलक्षणात् ॥ ७६ ॥ ************************** ॥

॥ ईदृशस्येति ॥ रतेषुसुरतेषुउर्व्याक्षिप्तंरतिसम्भ्रमात्पतितंआयतन्दीर्घभूतङ्काञ्चिदा ममेतल्लाघवं मुकुरस्पतनपाटवंयस्येत्यमायतरञ्चेकवेष्टनपर्याप्तमितिभावः इतिइत्यन्वि क्षितेतिशेषः । गम्यमानार्थत्वादप्रयोगःभवतः जघनस्यईदृशस्यघनस्यमहत्त्वमदर्शि यदिवअत्रोर्व्यामायतत्वनिमित्तकाञ्चीदामकर्तृकविस्मयपूर्वजघनमहत्त्वदर्शनमुत्प्रेक्ष्यते ॥ ७७ ॥ ***************************** ॥

॥ प्राप्यतइति ॥ गतानिविमर्दात्प्रमृष्टानिचित्रकाचित्राणितमालपत्ररचनानियेषां

ईदृशस्यभवतःकथमेतल्लाघवम्मुकुरतीवरतेषु । क्षिप्तमायतमदर्शि
दूर्व्याङ्काञ्चिदामजघनस्यमहत्त्वम् ॥ ७७ ॥ प्राप्यतेस्मगतचि
त्रकचित्रैस्त्रिचमार्द्रनखलक्ष्मकपोलैः । दध्रिरेथरभसच्युतपुष्याःस्वे
दबिन्दुकुसुमान्यलकान्ताः ॥ ७८ ॥ ********

***********

तैःकपोलैःआर्द्रंयन्नखलक्ष्मतदेवचित्रचित्रमितिरूपकम्प्राप्यतेस्मप्राप्तं । किञ्चरभसेनर तिसम्भ्रमेणच्युतपुष्पाअलकान्तास्त्रूर्णकुन्तलाग्राणिस्वेदबिन्दूनेवकुसुमानीतिरूपंदधि रेदधुः । धरतेर्भौवादिकाल्लिटित्त्वादात्मनेपदं । स्वेदोऽत्रश्रमानुभावः । श्रमः खेदोध्वरत्यादेःश्वासखेदोतिभूमिकृत् ॥ ७८ ॥ **************** ॥

॥ यद्यदेवेति ॥ रुचितेभ्योरमणेभ्योयद्यदेवचेष्टितंरुरुचेरोचतेस्मप्रियमभूदित्यर्थः । रुचदीप्तावभिप्रीतौचेतिधातोर्लिट् । रुच्यर्थानांप्रियमाणइतिसम्प्रदानत्वं । सुभ्रुवोर हसितत्तदकुर्वन् । तथाहितरुण्यःअनुकूलम्वर्त्ततइत्यानुकूलिकाः । तत्प्रत्यनुपूर्व मीपलोमकूलमितिठक् । तासाम्भावस्तत्तातयाआनुकूलिकतयाअनुकूलवर्त्तितयैवन

रुणांपुंसांहृदयान्याक्षिपन्त्यावर्जयन्तीत्यर्थान्तरन्यासः ॥ ७९ ॥ ******* ॥
॥ प्राप्येति ॥ दुर्वहस्तनभरेणयासांतानाएतेनोपरिसुरतमभिव्यज्यते । अन्यथाविशेषणवैय
र्थ्यात् । असिताआयताश्चकेशायासांताअसितायतकेश्यःस्त्रियः । स्वाङ्गाच्चेत्यादिना
ङीष् । मन्मथरसात्स्मररागात्सुरतस्यातिभूमिम्परकाष्ठाम्प्राप्यमोहानांसुरतम्प्राप्येत्य
र्थः । श्रमजलेनस्वेदाम्बुनाआर्द्रेललाटेश्लिष्टाःकेशायस्मिन्कर्मणितद्यथातथाशश्रमुः
इतिसानुभावस्यश्रमभावोक्तिःभावनिबन्धनात्प्रेयोऽलङ्कारः ॥ ८० ॥ ***** ॥
॥ अथसुरतावसानम्वर्णयति ॥ सङ्गताभिरिति । उचितैःपरिचितैःप्रियतमैःसहसङ्गता

यद्यदेवरुरुचेरुचितेभ्यः सुभ्रुवोरहसितत्तदकुर्वन् । आनुकूलि
कतयाहिनराणामाक्षिपन्तिहृदयानितरुण्यः ॥ ७९ ॥ प्रा
प्यमन्मथरसादतिभूमिंदुर्वहस्तनभराःसुरतस्य । शश्रमुःश्रमजला
र्द्रललाटश्लिष्टकेशमसितायतकेश्यः ॥ ८० ॥ सङ्गताभिरुचितैश्च
लितापिप्रागमुच्यतचिरेणसखीव । भूयएवसमगंस्तरतान्तेह्रीर्वधूभि
रसहाविरहस्य ॥ ८१ ॥ ***********

भिर्वधूभिःप्राक्सुरतादौचलितागन्तुम्प्रचलितापिह्रीःसखीवचिरेणामुच्यतमुक्ता । नसह
तइत्यसहा । पचाद्यजन्तेननञ्समासः । विरहस्यासहाविरहमसहमानासतीत्यर्थः ।
कर्तृकर्मणोःकृतीतिकर्मणिषष्ठी । रतान्तेभूयएववधूभिःसमगंस्तसङ्गतास्ततोसखीवेत्येव
। सम्पूर्वाद्गमेर्लुङ्समोगम्पृच्छिभ्यामित्यात्मनेपदम्वागमइतिसिचःपक्षेकित्त्वाभावात्
नुदात्तोपदेशेत्यादिनानुनासिकलोपेन । सुरतेनरकालेस्त्रीणांलज्जैवभूषणमितिभावः
। उपमालङ्कारः ॥ ८१ ॥ ******************** ॥
॥ प्रेक्षणीयकमिति ॥ क्रियाविभङ्गुरःस्खलिताविलोचनपातादृष्टिपातायेषुतेसम्भ्रमेण

द्रुतं गृहीतेन दुकूलेन च्छाद्यमानानि वपूंषि अन्तरङ्गाणि येषु तैः सुरतान्ताः सुरतावसानाः
विक्षणं प्रेक्षणीयकं दृश्यमिवासन् इत्युपमा नाटकादिरूपकेष्वाहार्यकं वस्तु नटैर्दृश्यं प्रेक्षणी
यकमिति चोच्यते इह विभावतिरोधानादिना तत्तुल्यत्वम् ॥ ८२ ॥ ******* ॥
॥ अप्रभूतमिति ॥ तन्वी क्षणाङ्गी अभीष्टतमेन प्रेयसा कान्तपल्लवं गृहीताञ्चलं । अत एव
तनीयसि महीयसि काञ्चिधाम्नि जघने अप्रभूते आच्छादयितुमपर्याप्ते अत एव पिहितः च्छादि
तः एकतरः एवोरुर्येन तत् क्षौमं दुकूलं आकुलकराभ्यां पाणिभ्यां नीविं चकर्ष तेनाञ्चलेनापिधानार्थ
माचकर्ष लज्जानुभावोऽयं । अत्र क्षौमविशेषणानामाकर्षणहेतुत्वात्पदार्थहेतुकं काव्यलि

प्रेक्षणीयकमिव विक्षणमासन् ह्रीविभङ्गुरविलोचनपाताः । सम्भ्रमद्रु
तगृहीतदुकूलच्छाद्यमानवपुषः सुरतान्ताः ॥ ८२ ॥ अप्रभूत
मतनीयसि तन्वी काञ्चिधाम्नि पिहितैकतरोरुः । क्षौममाकुलकरा
विचकर्ष क्रान्तपल्लवमभीष्टतमेन ॥ ८३ मृष्टचन्दनविशेषकभक्ति
भ्रष्टभूषणकदर्थितमाल्यः । सापराधइवमण्डनमासीदात्मनैव सुदृ
शामुपभोगः ॥ ८४ ॥ ************

ङ्गमलङ्कारः ॥ ८३ ॥ ************************** ॥
॥ मृष्टेति ॥ मृष्टा प्रमृष्टा चन्दनानां विशेषकाणां तमालपत्राणां च भक्ती रचना येन सः
। तमालपत्रतिलकचित्रकाणि विशेषकाइत्यमरः । भ्रष्टानि भूषणानि यस्मिन् स भ्रष्टभूष
णः कुत्सितोऽर्थः कदर्थः लोकतो विशेष्यलिङ्गत्वं । कोः कत्तत्पुरुषेऽचीति कुशब्दस्य कदादेशः
कदर्थीकृतानि कदर्थितानि दूषितानि माल्यानि येन सः तत एतयोर्वैवक्षिको विशेष्यविशेष
णभावाद्विशेषणसमासः एवम्भूत उपभोगः सापराध इव पूर्वं मण्डनापहारात्कृतापराध इव सु
दृशामात्मनैव स्वयमेव । प्रकृत्यादित्वात्तृतीया । मण्डनमासीत् । प्रतीतोऽधिकरणेन

स्यापरधनितम्बार्थमित्युत्प्रेक्षा । स्त्रीणां सम्भोग एव मण्डनं तद्भावे मण्डनानां रस्याथम
ण्डनादि तिभावः ॥ ८४ ॥ ************************ ॥

॥ योषितइति ॥ मोहनातिरभसेन सुरतसम्भ्रमेण पतितकाञ्चनी काञ्चनस्य विकारः का
ञ्ची यस्याः तस्मिन्मेखलेयोषितो नितम्बे परितः । सर्वतो विचित्रा विविधरचना नवनखक्षत
लक्ष्मीर्मेखलेव राजते स्मेत्युत्प्रेक्षालङ्कारः ॥ ८५ ॥ ************** ॥

॥ भानुनामेति ॥ सुदृशां सम्बन्धी पाटलो रक्तो दशनांको दन्तक्षतं धवलगण्डतलेषु पोतेषु
भानु नामवैवर्ण्यहेतुनेन प्रकाशतां नामेत्यङ्गीकारे । दन्तवाससि अधरे तु समानगुणश्रीः

योषितः पतितकाञ्चनकाञ्चौ मोहनातिरभसेन नितम्बे । मेखलेव परि
णः स्म विचित्रा राजते नवनखक्षतलक्ष्मीः ॥ ८५ ॥ भानुनाम सु
दृशां दशनांकः पाटलो धवलगण्डतलेषु । दन्तवाससि समानगुण
श्रीः सम्मुखोऽपि परभागमवाप ॥ ८६ ॥ सुभ्रुवामधिपयोधरपीड
म्पीडनैस्त्रुटितवत्यपि पत्युः । मुक्तमौक्तिकलघुर्गुणशेषो हारयष्टिर
भवद्गुरुरेव ॥ ८७ ॥ ***********

त्यवर्णोऽपि तथा सम्मुखोऽपि सन्परभागं गुणोत्कर्षं न तथापस्वाङ्गागच्छावापइति सावर्ण्ये वैवर्ण्ये
॥ ***
योः सम्मुखपराङ्मुखत्वयोश्च विरोधः उपरिभागमवापेत्युभयत्रपरिहाराद्विरोधाभासद्वयसंस्
ष्टिः न तत्राद्यश्लेषभित्तिकाभेदाध्यवसायमूलातद्गुणोत्थापितेति सङ्करः ॥ ८६ ॥ ** ॥

॥ सुभ्रुवामिति ॥ सुभ्रुवां पयोधरपीडके कुचतटे अधिपयोधरपीडमिति विभक्त्यर्थेऽव्ययीभावः
। पत्युः पीडनैः परिरम्भादिविमर्दैस्त्रुटितवती छेदङ्गतापि । अत एव मुक्तमौक्तिका सा च
तालघुश्च अत एव गुणशेषा सुत्रमात्रशेषापि हारयष्टिर्गुरुः श्लाघ्यैवाभवत् लघुरपि गुरुरि
तिविरोधाभासोलङ्कारः ॥ ८७ ॥ ****************** ॥

॥ विश्रमेति ॥ योषितामुप्रथमरत्यवसानेविश्रमार्थंश्रमापनोदार्थं । श्राम्यतेर्घञ्प्रत्ययः । नोदात्तोपदेशस्यमान्तस्यानाचमेरितिवृद्ध्यभावः । वद्जस्यम्प्रियैरुपगूढंउपगूहनं । नपुंसकेभावेक्तःनलोकेत्यादिनाषष्ठीप्रतिषेधः । उदितमन्मथमुत्पादितकाममित्यर्थः । अतएवतदुपगूहनं द्वितीयसुरतस्यादौबभूवश्रमापनोदमन्मथोद्बोधाभ्यांउभयोपयोगात् दुभयार्थमभूत्संयोगपृथक्त्वप्रसङ्गादित्यर्थः अत्रमध्यवर्त्तिनउपगूढस्यैकस्यपूर्वोत्तरसुरतशेषत्वेनविशेषणगत्याविश्रमार्थोदितमन्मथपदार्थयोर्हेतुत्वात्काव्यलिङ्गद्वयनादङ्गाङ्गिभावेनसङ्कीर्यते ॥ ८८ ॥ ************************ ॥

॥ आस्तृतेइति ॥ अनारतमश्रान्तंरतेसुरतेअभिरताभ्यआसक्ताभ्योवधूभ्यः । क्षणमुत्स

विश्रमार्थमुपगूढमजस्रंयत्प्रियैःप्रथमरत्यवसाने । योषितामुदितम
न्मथमादौतद्द्वितीयसुरतस्यबभूव ॥ ८८ ॥ आस्तृतेऽभिनवप
ल्लवपुष्पैरप्यनारतरताभिरताभ्यः । दीयतेस्मशयितुंशयनीयेनक्षणः
क्षणदयापिवधूभ्यः ॥ ८९ ॥ *************

वस्तुखन्दद्नीतिक्षणदारात्रिस्तयापिनकेवलंमदमदनाभ्यामेवेतिभावःअभिनवैःपल्लवैःपुष्पैश्चास्तृतेआच्छादितेपिसुखशयनार्हेपीत्यर्थः । शेतेस्मिन्निति शयनीयेतल्पे। कृत्यल्युटोबहुलमित्यधिकरणेऽनीयर् । शयितुंशयनंकर्तुंक्षणोऽल्पकालोपिनदीयतेस्मनदत्तः किंत्वाप्रभातमरमयतक्षणदादेवेतिभावःक्षणदयापिक्षणोनदत्तइतिविरोधस्योत्सवार्थत्वेनपरिहारस्तद्विरोधाभासोऽलङ्कारः । निर्व्यापारस्थितौकालविशेषोत्सवयोःक्षणइत्यमरः ॥ ८९ ॥ ************************** ॥

॥ योषितामिति ॥ नवलूननवलुठनं । नयतञनांनयदूनांइतिपदच्छेदः । अतितरामतिमात्रं। अव्ययादामप्रत्ययः । नखैर्लूनंक्षतंनखलूनं। ल्वादिभ्यइतिनिष्ठानत्वं ।

नयांशुज्ज्वलनतयाऔज्ज्वल्येननऊनंनन्युनंकिन्तुसमग्रमेवेत्यर्थः । नखक्षतानांकामिनीगा
त्रमखण्डनत्वादिनिभावः । अतएवामुहृदयम्प्रियचित्तंक्षोभम्विकारंनयत्प्रापयत् । नय
नेर्लदःशत्रादेशः । योषिताङ्गात्रंयदूनांयादवानांरागवृद्धिंऊनांन्यूनांनाकरोन्नखलु
किंतुभूयोपिसमग्रामेवाकरोदित्यर्थः । अत्रयमकशब्दालङ्कारःऔज्ज्वल्यस्यविशेषण
गत्यारागवृद्धिहेतुत्वात्काव्यलिङ्गमलङ्कारः ॥ ९० ॥ ************** ॥

॥ इतीति ॥ इतीत्थंमदमदनाभ्यांस्पष्टरागान्सर्वदारागित्वेपितदानाभ्यामपिव्यञ्जितरा
गानित्यर्थःअनवरतरतश्रीसङ्गिनःअविच्छिन्नसुरतसम्पत्संपदानन्तान्रागिणोरागिस्त्र

योषितामतितराननखलूनङ्गात्रमुज्ज्वलतयानखलूनम्
। क्षोभमाप्सुहृदयन्नयदूनांरागवृद्धिमकरोन्नयदूना
म् ॥ ९० ॥ इतिमदमदनाभ्यांरागिणःस्पष्टरागानन
वरतरतश्रीसंगिनस्तानवेक्ष्य । अभजतपरिवृत्तिंसाथ
पर्यस्तहस्तारजनिरवनतेन्दुर्लज्जयाधोमुखीव ॥९१॥

स्त्ररागिणश्चतान्रागिणः । पुमान्स्त्रियेत्येकशेषः । अवेक्ष्यअयावेक्षणानन्तरंपर्यस्तःपरिवृ
त्तोहस्तोनक्षत्रविशेषःकरश्चयस्याःसा । हस्तोनक्षत्रभेदेस्यात्करेभकरयोरपीत्युभयत्रा
पिविश्वः । अवनतेन्दुःस्रस्तचन्द्राअतएवसारजनिर्लज्जयाग्राम्यचेष्टादर्शनजनितयेनि
भावःअधोमुखीनम्रमुखीवेत्युत्प्रेक्षा । परिवृत्तिंनिवृत्त्युन्मुखतामभजतप्रभातप्रायाऽभूदि
त्यर्थः । स्त्रियोपरकीयाग्राम्यचेष्टादर्शनेनेत्रपावनतमुख्योहस्तोनदृष्टिमन्तर्धायद्रागपसर
न्तीतिभावःअतएवानन्तरसर्गेप्रभातवर्णनायप्रस्तावः । मालिनीवृत्तमेतत्लक्षणंतूक्तंव
क्ष्यतेचोत्तरसर्गादौ ॥ ९१ ॥ ****************** ॥

इतिश्रीमाघकाव्येशिशुपालवधेसुरतवर्णनोनामदशमःसर्गः ॥ १०॥

॥ इतिश्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितेमाघकाव्यव्याख्यानेसर्वङ्कषाख्येदशमःसर्गः ॥ १० ॥ ************ ॥

॥ अथप्रस्तुतम्प्रभातवर्णनंप्रारभते ॥ श्रुतीति । नास्तिकाकुर्येषान्तेऽकाकुर्विकृतध्वनिः ।
काकुःस्त्रियांविकारोयःशोकभीत्यादिभिर्ध्वनेरित्यमरः । श्रावयन्तीतिश्रावकोदूरध्वनिः ।
स्निग्धोमधुरःकण्ठःस्वरोयेषान्तेअकाकुश्रावकस्निग्धकण्ठाःरक्तकण्ठाइत्यर्थः । मागधावै
तालिकाःश्रुतयोनामषड्जादिस्वरारम्भकावयवाःशब्दविशेषाः । तदुक्तंप्रथमश्रवणाच्छब्दः
श्रूयतेह्रस्वमात्रिकःसाश्रुतिःसम्परिज्ञेयास्वरावयवलक्षणेति । ताभिःश्रुतिभिःसमधिकञ्च
ऊलंषड्जविशेषणंपञ्चमविशेषणञ्चोभयोरपितथात्वात् । तदुक्तंचतुश्चतुश्चतुश्चैवषड्जमध्य
मपञ्चमाः । द्वेद्वेनिषादगान्धारौत्रीस्त्रीऋषभधैवताविति । षड्जोमयूरस्यकूजितानुका
रीस्वरविशेषःषड्जंमयूरोवदतीतिलक्षणात् । तत्रषड्जंभिन्नएवभिन्नकस्तंकृत्वाभिन्नकीकृत्यत
त्कालनिषिद्धस्वरसङ्कीर्णंकृत्वेत्यर्थः । पञ्चमोनामकोकिलकूजितानुकारीस्वरविशेषः ।

श्रुतिसमधिकमुच्चैःपञ्चमम्पीडयन्तःसततमृषभहीनम्भिन्नकीकृत्यष
ड्जम् । प्रणिजगदुरकाकुश्रावकस्निग्धकण्ठाःपरिणतिमितिरात्रेर्माग
धामाधवाय ॥ १ ॥

पिकःकूजितपञ्चममितिलक्षणात् । तम्पञ्चमम्पीडयन्तःतत्कालनिषेधात्परित्यजन्तइत्य
र्थः । सततम्वीणादिवाद्ययुक्तं । ततम्वीणादिकम्वाद्यमित्यमरः । ऋषभोपिवृषभनर्दिता
नुकारीस्वरभेदएव । गावस्तुऋषभभाषिणइतिलक्षणात् । तेनहीनंतस्यापितत्कालनि
षिद्धत्वादित्यर्थःसततंवृषभहीनञ्चयथातथारात्रेःपरिणतिंपरिवृत्तिमित्यर्थः । इतिव
क्ष्यमाणप्रकारेणोच्चैस्तरंयथातथामाधवायकृष्णाय । क्रियाग्रहणात्सम्प्रदानत्वं । प्रणिज
गदुर्गानेनाचख्युरित्यर्थः । नेर्गदनदेत्यादिनाणत्वं । पञ्चमादिनिषेधेनरतःप्रभातेसुरतो
निद्यः । ऋषभोपिचपञ्चमस्यविशेषोयंकथितःपूर्वसूरिभिःप्रगेप्रगीतेजनयेद्गुणंनस्यवि
पर्ययमितिवृत्त्यनुप्रासोऽलङ्कारःअस्मिन्सर्गेमालिनीवृत्तम् । ननमयययुतेयंमालिनीभो

गिजोकेरितिलक्षणात् ॥ १ ॥ **************************** ॥

॥ अथपूर्वश्लोकेइतिशब्दपरामृष्टानपरात्रप्रभृत्युत्तरोत्तरक्रमभाविनः प्रभातवृत्तान्ता न्सर्गसमाप्तिंवर्णयन्नाह ॥ रतीति। रतिरभसविलासात्तांतुरततन्मुमलीलानांअभ्या सेनावर्त्तनेनतान्तंक्लान्तंनयनयुगंकर्तृकामिनामितिशेषः। यावन्नामीलत्नमुकुलीभवति तावदेवासौरजनिविरतिशंसीनिशावसानख्यापकोउच्चैर्मृदङ्गः कामिनीनांभविष्यता नन्तरक्षणभाविनाविरहेणविहितः कृतोनिद्राभङ्गोयस्मिन्कर्मणितद्यथातथाआहत स्ताडितः। अत्रविरहशब्देनसामर्थ्यात्तच्चिन्तालक्ष्यतेअन्यथाअसतःसाम्प्रतिकनिद्राभ ङ्गहेतुत्वायोगादिति। अत्ररतितान्तत्वरजनिविरतिशंसनयोर्विशेषणगत्यानेत्रनिमील

रतिरभसविलासाभ्यासतान्तन्नयावन्नयनयुगममीलत्तावदेवाहतोसौ। रजनिविरतिशंसीकामिनीनाम्भविष्यद्विरहविहितनिद्राभङ्गमुच्चैर्मृदङ्गः ॥ २ ॥ स्फुटतरमुपरिष्टादल्पमूर्त्तेर्ध्रुवस्यस्फुरतिसुरमुनीनाम्मण्डलव्यस्तमेतत्। शकटमिवमहीयःशैशवेशार्ङ्गपाणेश्चपलचरणकाञ्जप्रेरणोत्तुङ्गिताग्रम् ॥ ३ ॥ ***********

नहेतुत्वात्पदार्थहेतुकङ्काव्यलिङ्गम् ॥ २ ॥ ***************** ॥

॥ स्फुटेति ॥ अल्पमूर्त्तेर्दूरत्वात्सूक्ष्मबिम्बस्यध्रुवस्योत्तानपादेःउपरिष्टात्स्फुटतरंउज्ज्व लतरंव्यस्तम्पर्यस्तमेतत् सुरमुनीनांसप्तर्षीणांमण्डलंशार्ङ्गपाणेःकेशवस्यशैशवेबाल्य ऽर्थेःशैशवेप्रचलितस्यचपलस्यचरणकाञ्जस्याज्यचरणारविन्दस्य। अल्पेद्व्यत्वाथैकत्र न्ययः। प्रेरणयानोदनेनोत्तुङ्गितमुत्तुङ्गीकृतमग्रंयस्यतत् विपर्यासिताग्रमित्यर्थः। महीयोमहत्तरं शकटमिवशकटाकारंशकटासुरशरीरमिवस्फुरतिदीप्यतेउपमालङ्कारः। पुराकिलतान्त्येकल्पः शकटरूपधारिणंशकटासुरस्यादघातेनपातयामासेतिपौराणिकी

कथात्रानुसन्धेया ॥ ३ ॥ *************************** ॥

॥ प्रहरकमिति ॥ स्वंस्वकीयंस्वपार्श्वमित्यर्थः प्रहरएवप्रहरकोयामः । द्वौयामप्रहरौस

मावित्यमरः । तमपनीयतीत्वानिनिद्रासनानिद्रातुमिच्छता । निद्रानेःसनताल्लटःश

प्रादेशः । केनचिद्गीतप्रहरतापेनेत्यर्थः । जागृहिबुध्यस्वेतिप्रतिपदंप्रत्येकपदंउच्चैरु

पहूतोमनुष्योऽनन्तरयामिकोमुहुर्निद्रयाअविशदवर्णाअस्पष्टाक्षरमतएवशून्यशून्यां

शून्यप्रकारामनर्थप्रायामित्यर्थः । प्रकारेगुणवचनस्येतिद्विर्भावः । कर्मधारयवदुत्तरेष्वि

तिकर्मधारयवद्भावात्स्वयवसुपोलुक् । गिरमयमहञ्जानामीतिप्रतिवाचन्ददद्पिप्रत्र

त्यपि । नाम्यस्याच्छतुरितिनुमागमप्रतिषेधः । अतःअन्तःकरणेनेबुध्यते । नजाग

प्रहरकमपनीयस्वन्निनिद्रासतोच्चैः प्रतिपदमुपहूतः केनचिज्जागृ

हीति । मुहुरविशदवर्णान्निद्रया शून्यशून्यां ददपिप्रतिवाचमबु

ध्यमानोमनुष्यः ॥ ४ ॥ विपुलतरनितम्बाभोगरुद्धेरमण्याः शयि

तुमनधिगच्छन्जीवितेशोवकाशम् । रतिपरिचयनश्यन्नैद्रतन्द्री

कथञ्चिद्गमयतिशयनीयेशर्वरीकिङ्करोतु ॥ ५ ॥ *****

र्ति । बुध्यतेरैवादिकात्कर्त्तरिलिट् । अप्रबोधप्रतिवचनदानयोर्विरोधेऽपिप्रदःनिद्रा

ख्याभ्यान्तमाधानाद्विरोधाभासोऽलङ्कारः ॥ ४ ॥ *********** ॥

॥ विपुलेति ॥ रमण्याःविपुलतरस्यनितम्बस्याभोगेनविस्तारेणरुद्धेआक्रान्तेशयनीये

शयितुमवकाशमनधिगच्छन्नलभमानोजीवितेशः प्रेयान्रतिपरिचयेनपुनःस्मरतावृत्त्या

नश्यन्तीनिवर्त्तमानानिद्रायाइमंनैद्रीनिद्राप्रयुक्तातन्द्रीआलस्यंयस्यसतथाभूतःसन्शर्व

रीकथञ्चिद्गमयतिनक्लेशेनयतिकिङ्करोतुकिमन्यत्कुर्यात् । शयनानवकाशेस्मरतएव

कालयापनोपायइतिनचैवप्रविचारइतिभावः । अत्रशयनीयस्येद्धयोधासम्बन्धेपिसम्

न्योक्तेरनिश्चयोक्तिरलङ्कारः । तादृग्दोषस्यविशेषणगत्याश्रयणानवकाशानधिगमहेतु
त्वात्काव्यलिङ्गभेद इति सङ्करः ॥ ५ ॥ ********************* ॥

॥ क्षणेति ॥ क्षणंशयिताः सुरतश्रमापनोदायविसुप्ताः विबुद्धाः यथाकालप्रबुद्धत्वादि
ति भावः क्षणशयितविबुद्धाः । स्नातानुलिप्तवत्पूर्वकालेति समासः । महीपाः कवय इव अप
ररात्रेऽपररात्रौ रात्रेःपश्चिमयामेत्यर्थः । पूर्वापरेत्यादिनाएकदेशिसमासे समासान्तः अच
। रात्राह्नाहाः पुंसीति पुंस्त्वं । तत्र प्राप्तबुद्धिप्रकाशाः सन्तः उदधिमहति समुद्रगम्भीरे एक
त्रकविस्तरणादिभिरपरत्र रसभावादिभिश्चेति भावः । अतएव दुर्विगाहे दुःप्रवेशे राज्ये का
व्ये इव काव्यवत् । तत्र तस्येवेति वतिप्रत्ययः । प्रयोगान् समासाद्युपायानुष्ठानानि । अ

क्षणशयितविबुद्धाः कल्पयन्तः प्रयोगानुदधिमहति राज्ये काव्यवद्दु
र्विगाहे । गहनमपररात्रप्राप्तबुद्धिप्रकाशाः कवय इव महीपाश्चि
न्तयन्त्यर्थजातम् ॥ ६ ॥ क्षितितटशयनान्तादुत्थितं दानपङ्कप्लुतब
हुलशरीरं शाययत्येष भूयः । मृदुचलदपरान्तोदीरितान्दूनिनादं ग
जपतिमधिरोहः पक्षकव्यत्ययेन ॥ ७ ॥ *******

न्यत्रार्थं गुणसाधुशब्दः गुणाकल्पयन्तः समर्थयन्तः प्राह्णे मुहूर्ते ब्राह्मे चिन्तयेदात्मनो
हितमिति स्मरणादिति भावः । गहनं दुःप्रापमन्यत्र दुर्दर्शमर्थजातं त्रिवर्गमित्यर्थः अन्य
त्र वाच्यलक्ष्यगम्यरूपमभिधेयजातं चिन्तयन्ति विचारयन्ति इव शब्दस्योपलक्षणत्वात्का
व्यवदिति वतिप्रत्यये अनेन शब्दार्थ इति पूर्णोपमा वाचककाव्यवदिति निर्दिष्टगता
कवय इति समासगता चेति संकीर्णा ॥ ६ ॥ ********************* ॥

॥ क्षितीति ॥ क्षितितटं भूतलं भवं शयनाग्नः शयनस्थानं तस्मादुत्थितं उत्थितमित्यर्थः
। अतएव दानपङ्कप्लुतबहुलशरीरं मदकर्दमोक्षितमहाकायं गजपतिमेषः अधिरोहतीत्या

चिरोहधारोहणः । पचाद्यच् । मृदुमन्दचलनाअपरानेनपश्चिमपादेनोदीरितोऽन्या दितेन्दुनिनादःमृङ्खलारवोयस्मिन्कर्मणितद्यथातथापक्षएवपक्षकःपार्श्वः । पक्षःपार्श्वगरुत्साध्यसहायबलभित्तिष्विति वैजयन्ती । तत्सव्यत्र्यवेनपार्श्वान्तरेणेत्यर्थःभूयःशय यनिशयनङ्कारयतिगमिवुद्धीत्यादिनाअणिकर्तुःकर्मत्वंस्वभावोक्तिरलङ्कारः ॥ ७ ॥ *

॥ द्रुतेति ॥ द्रुततरकराअनिलघुहस्ताश्चलनेदक्षाःसमर्थाःबल्लवागोपाला ः । अहीरःस्यान्म हाशुद्रोगोपालोवल्लवस्तथेति वैजयन्ती । विशाखाप्रयोजनमस्येति वैशाखोमन्थनद ण्डः । वैशाखमन्थमन्थानमन्थामन्थनदण्डकेइत्यमरः । विशाखाषाढादण्मन्थदण्ड योरित्यणप्रत्ययः । वैशाखशैलइवेत्युपमितसमासःसाहचर्यात्क्षिप्तोवैशाखशैलोयस्मिन्

द्रुततरकरदक्षाःक्षिप्तवैशाखशैलेदधतिदधनिधीरनारवान्वारिणीव । शशिनमिवसुरौघाःसारमुद्धर्तुमेतेकलशिमुदधिगुर्वींम्बल्लवालोड यन्ति ॥ ८ ॥ अनुनयमगृहीत्वाव्याजसुप्तापराचीस्तनमथवाक वाकोस्तारमाकर्ण्यकल्ये । कथमपिपरिवृत्तानिद्रयाऽन्धाकिलस्त्रीमु कुलितनयनैवाश्लिष्यतिप्राणनाथम् ॥ ९ ॥ ** ** ** ** ** **

धीरनाभीरनारवान्दधनिदधनिदध्नि । विभाषाङिश्योरितिविकल्पादल्लोपाभावः । वा रिणीवसुरौघाःशशिनमिवसारंनवनीतमुद्धर्तुंउत्क्षुन्दधिएवगुर्वीं । उपमानानिसा मान्यवचनैरितिसमासः । कलशिङ्कुम्भीमेतेलोडयंतिमथ्नन्ति । एषापिपूर्ववत्पूर्णोपमा वाक्यार्थोपमावाक्यसमाससङ्कीर्णाच ॥ ८ ॥ ****************** ॥

॥ अनुनयमिति ॥ अनुनयम्प्रियप्रार्थनामगृहीत्वानङ्गीकृत्यपराचीपराङ्मुखीव्याजेनक पटेनसुप्ताखी । अथकल्येप्रभातेकृकवाकोःकुकुटस्य । कृकवाकुस्ताम्रचूडःकुकुटश्चर णायुधइत्यमरःतारंतारं रुतंकूजनमाकर्ण्यकथमपिगात्रजृम्भणादिव्याजेनपरिवृत्तासंमु

खीनानिद्रयान्धाकिलअजानगीवमुकुलितनयनेवमिलिताक्षीसत्येवप्राणनाथमाह्वयति ॥ एषाकलहान्तरिता ॥ ९ ॥ ************************ ॥

॥ गतमिति ॥ अनुगतवीणैरनुस्यूतवीणैर्वीणास्वनादिभिर्वेणुनादैर्वंशस्वरैःएकतानैक रूपतांगतंकलमव्यक्तमधुरंअविकलोऽविसंवादीतालःकांस्यादितालोयस्यतत्बोधए बहेतुस्तस्यबोधहेतोःबोधकारणेनबोधनार्थमित्यर्थः। फलस्यापिकारणत्वमिच्छाद्वा रा स्वर्गादिवत्फलरागस्यतत्साधनप्रवृत्तिहेतुत्वात्षष्ठी। गायकैर्वैतालिकैरनवगीतमगर्हि तं। अवगीतंतुनिर्वादेमुहुर्दृष्टेपिगर्हितेइतिविश्वः। गीतङ्गीयमानम्वस्तुआवृत्तिर्वागी तशब्दस्यगीतङ्गानंसमाकर्णयन्तोनरेन्द्राः सुखेनगानसुखेनमुकुलितनेत्रानिमीलिता

गतमनुगतवीणैरेकतानैर्वेणुनादैःकलमविकलतालंगायकैर्बोधहेतोः। असकृदनवगीतङ्गीतमाकर्णयन्तःसुखमुकुलितनेत्रायान्तिनिद्रान्न रेन्द्राः ॥ १० ॥ परिशिथिलितकर्णग्रीवामीलिताक्षःक्षणमयम नुभूयस्वप्नमूर्द्ध्वज्ञुरेव। रिरसयिषतिभूयःशष्पमग्रेविकीर्णम्पटुतरच पलौष्ठःप्रस्फुरत्प्रोथमश्वः ॥ ११ ॥ ※※※※※※※※※

क्षाःसन्तःनिद्रांयान्तिभजन्ति। वृत्यनुप्रासोऽलङ्कारः॥ १० ॥ ********** ॥

॥ परीति ॥ अयमश्वःपरिशिथिलितंसलमुक्तंकर्णग्रीवंकर्णौचग्रीवाचयस्मिन्कर्म णितद्यथातथाआमीलिताक्षःऊर्ध्वेजानुनीयस्यसऊर्ध्वज्ञुःऊर्ध्वजानुस्तिष्ठन्नित्यर्थः। ऊ र्ध्वज्ञुरूर्ध्वजानुःस्यादित्यमरः। ऊर्ध्वाद्विभाषेतिजानुशब्दस्यज्ञुरादेशःक्षणंस्वप्नंनिद्राम नुभूयच्चनमाश्वलक्षणमेतत्। भूयःपुनरपिपटुतरौग्रासग्रहणसमर्थौचपलौचञ्चलौचोष्ठौ यस्यसतत्प्रस्फुरत्प्रोथम्प्रस्फुरमाणघोणंयथातथा। घोणंतुप्रोथमस्त्रियामित्यमरः। अग्रेविकीर्णंक्षिप्तंशष्पंघासं। शष्पंबालतृणंघासइत्यमरः। रिरसयिषतिरसयितुमास्वा

इयितुमिच्छति। रसयतेः स्तननाम्नह। स्वभावोक्तिरलङ्कारः स्वभावोक्तिरसौ चारु यथा वद्वस्तुवर्णनम्॥ ११॥ ****************************॥

॥ उदयमिति॥ यइन्दुः मेममसंगतावुदितदीप्तिः प्रवृद्धद्युतिः सन उदयमुदयाद्रिं अभ्युदयञ्चयाति स इन्दुरेवोऽपराम्यस्मिमाशाम्यराङ्गनाञ्चगत्वापतति अस्तमेतिप तितश्च गच्छति नवरमनर्हमित्यर्थः। इति सद्यः साभ्यसूयं यथा तथा पूर्वकाष्ठा प्राचीसैवाङ्गनापूर्वनायिका च गम्यते तस्याः स्मितरुचिर्मन्दहासकान्तिरिवेयाप्रभा विशदं निर्मलं स्फुरति प्रकाशते प्राच्यामीषद्विशदं प्रभाप्रादुरभूदित्यर्थः। अत्र प्राचीगतप्रभायामिन्दोः पराङ्गनासङ्गपातित्यनिमित्ताचेतनधर्मस्मितरुचित्वोत्प्रेक्षा। पूर्वकाष्ठाङ्गनायाइति रूढिव्यूढेत्यन

उदयमुदितदीप्तिर्यातियः सङ्गतौमे पततिनवरमिन्दुः सोपरमेषगत्वा। स्मितरुचिरिवसद्यः साभ्यसूयम्प्रभेतिस्फुरतिविशदमेषापूर्वकाष्ठाङ्गनायाः ॥ १२ ॥ चिररतिपरिखेदप्राप्तनिद्रासुखानाञ्चिरमितिच शयित्वापूर्वमेवप्रबुद्धाः। अपरिचलितगात्राः कुर्वतेनप्रियाणामशिथिलभुजचक्राश्लेषभेदन्तरुण्यः ॥ १३ ॥ *·*·*·*·*·*·*

************************ ***

योरङ्गाङ्गिभावेनसङ्करः॥ १२॥

॥ चिरेति॥ चिरमितिशयित्वापश्चात्सुप्ताषिपूर्वमेवप्रबुद्धाः। सुप्तपश्चाच्चयाशेते पूर्वमेव प्रबुध्यते। नान्यङ्कामयते चित्ते साध्वीज्ञेया पतिव्रतेतिस्मरणादितिभावः। तथापि तरुण्यः अपरिचलितगात्राः अनिस्पन्दवपुष्काः सत्यः चिररतिपरिखेदेन प्राप्तनिद्रासुखानां प्रियाणां अशिथिलो गाढभुजचक्रेणपरस्परभुजवलयेनाश्लेषः तस्यभेदं विश्लेषं विस्रंसनं न कुर्वते किन्त्वाश्लिष्यैवस्थिताः अन्यथा तन्निद्राभङ्गं स्यात शयानं न प्रबोधयेदिति निषेधात्स्पन्दनभयादितिभावः। रतिक्रमोऽत्र सञ्चारी तत्तदनुभवो निद्रा॥ १३॥ ***॥

॥ कृतेति ॥ हिमरुचिश्चन्द्रःअरुणिम्ना अरुणवर्णेन हेतुना रज्यमानैर्लोहितायमानैः। रञ्जेर्दैवादिकात्कर्त्तरि शानच् । अनिदितामितिनलोपः। रज्यतिर्लोहिते जनि लोहितायतिवान्नन्दनिभट्टवल्लभः। जरठस्य परिणतस्य कमलकन्दस्य च्छेदा इव गौराःप्रभाःखेतइतिभावः। खेनइतियदणान्थावस्यर्थङ्गैराःपीनेसिनेहणइतिविश्वः। नैर्मयूखैःकुङ्कुमेनकिञ्चित्कृतोधवलिमभेदोधावल्यभङ्गोयेषान्तैरीषद्गयस्तधावल्यैः मलयरुहरजोभिश्चन्दनरेणुभिरिव पश्चिमाशांप्रेयसीमिवेतिभावः। भूषयन् राजते। उपमालङ्कारः॥ १४ ॥ ******************************** ॥

॥ दधदिति ॥ एकं कुमुदखण्डंआनमद्भिर्मुकुलीभवद्भिःपलाशैर्दलैरसकलमर्द्धख

कृतधवलिमभेदैःकुङ्कुमेनेव किञ्चिन्मलयरुहरजोभिर्भूषयन्पश्चिमा
शाम्। हिमरुचिररुणिम्ना राजते रज्यमानैर्जरठकमलकन्दच्छेदगौ
रैर्मयूखैः॥ १४ ॥ दधदसकलमेकं खण्डितामानमद्भिःश्रियमपर
मपूर्णामुच्छसद्भिःपलाशैः। कलरवमुपगीयंषट्पदौघेनधत्तःकुमु
दकमलखण्डे तुल्यरूपामवस्थाम्॥ १५ ॥ ✻✻✻✻✻✻✻

ण्डितांक्षीयमाणामित्यर्थः श्रियन्दधत्अपरं कमलखण्डमुच्छसद्भिःपलाशैरपूर्णान्त्वर्धमानांश्रियन्दधत् षट्पदौघेनकलरवंयथातथाउपगीयमित्यर्थः। कुमुदकमलखण्डेकुमुदानांकमलानांचखण्डेकदम्बे। कन्दम्बंखण्डमस्त्रियामित्यमरः। तुल्यरूपामवस्थान्धत्तः। दधातेअत्रक्षयवृध्योरर्थप्रवृत्तेरैकरूप्येकस्यक्षयःकस्यवावृद्धिरितिदुर्ग्रहमितिभावः। अत्रोभयाविशेषाणान्तुल्यावस्थाधारणहेतुकत्वंकाव्यलिङ्गम्। तेतद्वयोःक्रमेणोपमानोपमेयभावरूपोपमेयोपमाव्यज्यते ॥ १५ ॥ ******************* ॥

॥ मदेति ॥ सम्प्रति। सितकरस्येन्दोःइदंकरजालंकर्तृउद्गच्छता उद्यता अरुणेनअनूरु

णामदर्शनतुल्यांअहरिणमाणमित्यर्थः अतएव निदर्शनालङ्कारः । लम्भितस्यप्रापित स्य । लभेर्ण्यन्तात्कर्मणिक्तः । रभेरशब्लिटोरितिनुमागमः । अतएव चिरयस्थायिनीलज्जामामुत्यजतइवमुखप्रकाशनादियमुत्प्रेक्षावा । वासवाशाप्राचीनस्याएववधुवध्याःमुखस्य प्राग्भागस्याननस्यचवसनमिवावगुण्ठनपटइववस्त्रंस्रंसनेगलितवस्त्राःस्त्रियःपाटलमुखानिर्लज्जाश्चभवन्तीतिभावः । अत्रमुखस्येतिप्राग्भागवदनयोरभेदाध्यवसायात्श्लेषमूलातिशयोक्तिःतयापूर्वोक्तनिदर्शनोत्प्रेक्षाभ्याम्वानुगृहीतवसनमित्युत्प्रेक्षेतिसङ्करः ॥ १६ ॥
॥ अविरतेति ॥ अविरतरतलीलयासेनाविच्छिन्नसुरतक्रीडाप्रयासेनजातश्रमाणामङ्गनानांसन्धिभिनिःसहतइतिनिःसहेअक्षमे । पचाद्यच् । अङ्गेउपशममुपयातंशाम्यन्तं

मदरुचिमरुणेनोद्गच्छतालम्भितस्यत्यजतइवचिरयस्थायिनीमामुलज्जाम् । वसनमिवमुखस्यस्रंसनेसम्प्रतीदंसितकरकरजालम्बासवाशायुवत्याः ॥ १६ ॥ अविरतरतलीलयाचजातश्रमाणामुपशममुपयान्तन्निःसहेऽङ्गेऽङ्गनानाम् । पुनरुषसिविविक्तैर्मातरिश्वावचूर्णञ्ज्वलयतिमदनाग्निम्मालतीनांरजोभिः ॥ १७ ॥ ****

मदनएवाग्निस्तंपुनरुषसिमातरिअन्तरिक्षेश्वयतिवर्द्धयतेइतिमातरिश्वा । श्वनुक्षन्नित्यादिनाऔणादिकोनिपातः । विविक्तैरमलैरनार्द्रैश्चमालतीनांजातीकुसुमानां । सुमनामालतीजातीरित्यमरः । रजोभिःपरागैःकरीषैरिवेतिभावः । अवचूर्ण्यअवध्वंस्यसंधुक्ष्येतिभावः । ज्वलयत्युद्दीपयतिप्रभातिकमालतीवातस्पर्शात्पुनरुद्बुद्धोमदनइत्यर्थः उपमालङ्कारः ॥ १७ ॥ **************************** ॥
॥ अनिमिषमिति ॥ इदंपुरोवर्त्तिअस्फुटास्त्वर्यतेजोभिभवान्मन्दायमानाआलोकसंपत् प्रकाशसम्पत्तिर्यस्यतत्अन्यत्रनिद्राभिभवादनुदबुद्धविषयावसानशक्तिकन्दीपस्येदन्दै

यमर्चिर्ज्वाला । ज्वालाभासोनपुंस्यर्चिरित्यमरः । सर्वस्यां रात्रावितिसर्वरात्रं । पूर्वकालै
क्यादिनासमासःअहः सर्वैकदेशसंख्यातपुण्याच्चरात्रेरिति समासान्तः रात्राह्नाहाःपुंसीतिपुल्लिङ्गताअत्यन्तसं
योगेद्वितीया । अविरामाःअविच्छिन्नाःरागिणांकामिनां । पुमान्स्त्रियाइत्येकशेषः । न
वनिधुवनलीलाःसुरतविलासान् । व्यवसायोग्राम्यधर्मोमैथुनंनिधुवनञ्चेत्यमरः । कौतु
केननिमिषतीत्यनिमिषंयथातथा । पचाद्यच्कुटादित्वान्नगुणः । अनिवीक्ष्यअतएव
सनिद्रंउदवसितानांगृहाणांसम्बन्धि । गृहंगेहोदवसितंवेश्मसद्मनिकेतनमित्यमरः
। नयनमिवेत्युत्प्रेक्षा । घूर्णतेभ्रमति ॥ १८ ॥ ****************** ॥
॥ विकचेति ॥ प्रमदमदनाभ्यांहर्षमन्मथाभ्यांमाद्यन्तीनांयौवनेनोद्दामानांचरमाणां

अनिमिषमविरामारागिणांसर्वरात्रंनवनिधुवनलीलाःकौतुकेनातिवी
क्ष्य । इदमुदवसितानामस्फुटालोकसम्पन्नयनमिवसनिद्रंघूर्ण
तेदैपमर्चिः ॥ १८ ॥ विकचकमलगन्धैरन्धयन्भृङ्गमालाःसुर
भितमकरन्दंमन्दमावातिवातः । प्रमदमदनमाद्यद्यौवनोद्दामरमा
रमणरभसखेदस्वेदविच्छेददक्षः ॥ १९ ॥ ******

स्त्रीणांरमणरभसेनखेदस्वेदेनसुरतसंरम्भश्रमेणयःस्वेदःतस्यच्छेदेहरणेदक्षःवातःप्र
भातमारुतःविकचकमलगन्धैर्भृङ्गमालाः । अन्धयन्नन्धाःकुर्वन्मोहयन् । अन्धयतेस्तत्क
रोतीतिण्यन्तात्लटःशत्रादेशः । सुरभितःसुरभीकृतोमकरन्दोयस्मिन्कर्मणितद्यथात
थामन्दमावातिप्रचलति । अत्रवृत्त्यनुप्रासोऽलङ्कारः । श्लेषःप्रसादःसमतामाधुर्यंसुकु
मारताअर्थव्यक्तिरुदारत्वंमोक्षकान्तिसमाधयइतिआचार्योक्ताःदशप्राणाः प्रायेणात्रस
म्भवन्तीतिनिपुणैरुन्नेया ॥ १९ ॥ ********************** ॥
॥ लुलितेति ॥ लुलितनयनताराःनिद्राकलुषितास्तिकनीनिकाःअन्यत्रापसरन्नक्षत्राः

चक्षुर्क्षाक्षिमध्ययोस्तारे निविस्त्रः । वक्त्राणीन्दुबिम्बानीड्वेत्युपमितसमासः । तिमिरमिवे त्यादिना लिङ्गात् अन्यत्रवक्त्राणीवेन्दुबिम्बानि ता निक्षामा रिस्फुरतप्रभाताभ्यांम्लानानि यातानाः निद्रयाखन्नेनमुकुलीभावेनक्लान्तानि नीलोत्पलानि अक्षीणीवनीलोत्पलानीव याक्षीणियासानाः स्त्रंसिनः केशपाशाः तिमिरमिवान्धत्र तुना निव तिमिरन्ध्यानाः अतएव रजनयइव स्थिताः । अमूर्वारवध्वेश्याः । वारस्त्रीगणिकावेश्येत्यमरः । अवनिपतिगृहेभ्योयान्ति निर्यान्ति । श्लिष्टविशेषणोयमुपमेयैकेसेपएवायमुभयविशेषः उपमातुप्रतिभामात्रसारा इत्यन्ये ॥ २० ॥ ********************** ॥

॥ शिशिरेति ॥ एषाचरजनीर्वासरान्तेरवेःशिशिरकिरणश्चन्द्रस्तमेवकान्तमभिसार्याभि

लुलितनयनताराः क्षामवक्त्रेन्दुबिम्बारजनयइव निद्राक्लान्तनीलोत्पलाक्ष्यः । तिमिरमिवदधानाः स्त्रंसिनः केशपाशानवनिपतिगृहेभ्यो यान्त्यमूर्वारवध्वः ॥ २० ॥ शिशिरकिरणकान्तम्वासरान्तेऽभिसार्यश्वसनसुरभिगन्धिः साम्प्रतंसत्वरेव । व्रजतिरजनिरेषातन्मयूखाङ्गराङ्गैः परिमिलितमनिन्द्यैरम्बरान्तम्वहन्ती ॥ २१ ॥ **

हृत्य । सार्यैणिच् । साम्प्रतंश्वसनैः तत्कालवातैः निश्वासैश्चसुरभिर्गन्धिः सुगन्धिअनिन्द्यैः मनोहरैर्मयूखैरेवाङ्गरागैः परिमिलितम्व्याप्तम्वासितञ्चाम्बरान्तं नभःप्रान्तम्वस्त्रान्तञ्च वहन्तीभजन्तीसत्वरेवव्रजति । अत्रेन्दन्मयूखादीनांकान्ताङ्गनात्वादिरूपणावगमादेकदेशवर्तिनिरूपकम् ॥ २१ ॥ ********************** ॥

॥ नवेति ॥ अभिकरुचिरयमिन्दुर्नवकुमुदवनश्रियोविकाशः परिहासश्चसएवकेलिस्तस्याम्प्रसङ्गाद्वासंगाद्शेषामप्युषांसकलामपिरात्रिं ॥ विभावरीनक्तमुषाशर्वरीतिविश्वः । अत्यन्तसंयोगे द्वितीया । जागरित्वाजागरणंकृत्वाशिशयिषुः शयितुमिच्छुरिव । शनैः सन

त्वादुपमत्ययः । स सोऽह्लोनक्षत्रविशेषः कारस्थयस्यस तनअपरा दिशः पश्चिमदिशाङ्कस मीपेतत्संगे चपाण्डुस्यपाण्डुवर्णम्लानंक्लान्तमात्मानं स्वशरीरं मुञ्चति दक्षिणनायकः कयापि स्त्रहविहृत्यश्रान्तः कस्याश्चिदङ्केशेते न द्वितीयं भवः । अत्रप्रहासकेल्यङ्करास्थानादिव व्यहारादिन्दुकुमुदनवश्रीपश्चिमानां नायकत्वप्रतीतेः समासोक्तिरलङ्कारः । विशेषणसा म्यं तूपलक्षणमित्यलङ्कारसर्वस्वकारः ॥ २२ ॥ ****************** ॥

॥ सेति ॥ अधिनिशं । विभक्त्यर्थेऽव्ययीभावः सरभसः सत्वरः परिरम्भ एवारम्भो व्यापार

नवकुमुदवनश्रीहासकेलिप्रसङ्गादधिकरुचिरशेषामप्युषां जागरि त्वा । अयमपरदिशाऽङ्केमुञ्चति स्रस्तहस्तः शिशयिषुरिवपाण्डु म्लानमात्मानमिन्दुः ॥ २२ ॥ सरभसपरिरम्भारम्भसंरम्भभाजा यद धिनिशमपास्तं वल्लभेनाङ्गनायाः । वसनमपि निशान्तेनेष्यते तत्प्रदा तुं रथचरणविशालश्रोणिलोलेक्षणेन ॥ २३ ॥ सपदि कुमुदिनीभि र्मीलितं हा क्षपापि क्षयमगमदपेतास्तारकास्ताः समस्ताः । इतिद यितकलत्रश्चिन्तयन्नङ्गमिन्दुर्वहति कृशमशेषं भ्रष्टशोभं शुचेव ॥ २४ ॥ ******************

स्तत्र संरम्भसङ्गा जावल्लभेनाङ्गनायाः सम्बन्धियद्वसनं अपास्तं तद्वसनं निशान्तेप्रभाते पि रथचरणश्चक्रनद्वद्विशालायां श्रोणौ लोलं सतृष्णमीक्षणं यस्य तेन वल्लभेन प्रदातुं नेष्य तेनापेक्ष्यते । अत्र वसनाप्रतिदानस्य श्रोणीक्षणलौल्यहेतुकत्वात्काव्यलिङ्गम् ॥ २३ ॥

॥ सपदीति ॥ सपदि सद्यः कुमुदिनीभिर्मीलितं । भावे क्तः हा हन्त क्षपा रात्रिरपि अनिश्च यमगमत्ताः समस्तास्तारकाः अपेताइति शुचा शोकेन चिन्तयन्निव दयितकलत्रः प्रियस्त्री र्थः इन्दुः क्लान्तमशेषं निःशेषं यथा तथा भ्रष्टशोभं नष्टप्रभमङ्गं स्वदेहं निकलत्रप्रियस्त्री युगपत्सक

सकलचनाशनिमित्तहेतुकत्वमुत्प्रेक्षते ॥ २४ ॥ **************** ॥

॥ व्रजतीति ॥ अंशुमाली सूर्यः । अौस्यादित्वादिनिप्रत्ययः । यावदृश्यां विषयभूमिं न व्रजति न दृश्यत इत्यर्थः तावदेवारुणेनानूरुणा अखिलं तिमिरमसं परेषां परिभवितिर स्कारकं । जिदृक्षीत्यादिनाइनिप्रत्ययः । तेजः प्रतापं तत्त्वनाम्प्रथयतां अग्रेसरनीत्यग्रेस रः पुरःसरोपि । पुरोग्रतोग्रेषुसर्तेरिति टप्रत्ययः विपक्षस्य शत्रोरुच्छेदं कर्तुं समर्थः प्रभवतिश क्तोतिहि सामान्येन विशेषस्य समर्थनरूपोर्थान्तरन्यासः ॥ २५ ॥ ****** ॥

॥ विगतेति ॥ विरहेन खिन्नः रथचरणे न चक्रेण समाह्वम् सत्याख्यःतस्यैव समाख्याय स्येति वा रथचरणसमाह्वयश्चक्रवाक इत्यर्थः । कोकश्चक्रश्चक्रवाकोरथाङ्गाह्वयनामकइत्यम

व्रजति विषयमक्ष्णामंशुमाली न यावत्तिमिरमखिलमस्तं तावदेवारुणेन । परपरिभवितेजस्तन्वतांप्रागमुकर्तुं प्रभवति हि विपक्षोच्छेदमग्रेसरोपि ॥ २५ ॥ विगततिमिरपङ्कं पश्यति व्योम यावद्धुवति विरहखिन्नः पक्षती यावदेव । रथचरणसमाह्वस्तावदौत्सुक्यनुन्नासरिदपरतटान्तादागता चक्रवाकी ॥ २६ ॥ *********

रः । तिमिरं पङ्कमिवेत्युपमितसमासः । तद्विगतं यस्मात्तद्व्योम यावत्पश्यति यावदेव पक्ष सीपक्षमूले । पक्षमूलन्तु पक्षतिरित्यमरः । पक्षात्तिरिति तिप्रत्ययः । धुवति उत्पतितुं धु नोति । धूविधूनन इति धातोस्तौदादिकत्वादुवङादेशः । तावदेवोत्पतनात्प्रागेव चक्रवा की चक्रवाकस्त्री । जातेरस्त्रीविषयादयोपधादिति ङीष । औत्सुक्येनोत्कण्ठया नुन्ना प्रेरिता सती सरितोऽपरतटान्तात्परभूमेः सकाशादागता एतेनानयोरन्योन्यसकाशमन्योन्यानु रागइत्युत्प्रेक्षा । अत्र गौत्सुक्ययोरसम्भावयोस्तिर्यग्गतत्वेनाभासयोर्निबन्धनादूर्जस्वी नामालङ्कारः रसभावतदाभासप्रशमांनिबन्धनेरसवत्प्रेयऊर्जस्वी समाहितानीति लक्षणा

न ॥ २६ ॥ ***************************** ॥

॥ मुदितेति ॥ प्रदोषेरात्रौमुदितानियूनांमनांसियाभिर्हेतुभिस्ताःमुदितयुवमनस्काः। उरःप्रभृतिभ्यःकप्। कल्पिताउपभोगायसम्पादिताः भूषिताश्चवस्त्रवसनादिभिरुपस्कृता स्त्रउभय्यःउभयविधाःयुवतयःपुष्पमालाश्च । उभादुदात्तोनित्यमितितयप्रत्ययस्यायजादेशःटिड्ढाणञित्यादिनाङीप्। तुल्यमेवाविशेषंयथातथारुचंशोभामदधुर्धृतवत्यः। धाञोलिट्। प्रभातेतूपभोगान्नीरुचोनिःप्रभाःपुष्पमालाःपरिमलेनविमर्दगन्धेनरुचिराभिरुपभोगादविस्तरभिभिर्युवतिभिर्न्यक्कृताःस्त्यक्ताःअवधीरिताश्च । अत्रपुष्पमालाभ्योयुवतीनांसौम्योक्तिपूर्वकविमर्दसहत्वेनाधिक्योक्तेर्व्यतिरेकः ॥ २७ ॥ **** ॥

मुदितयुवमनस्कास्तुल्यमेवप्रदोषेरुचमदधुरुभय्यःकल्पिताभूषिताश्च। परिमलरुचिराभिर्न्यक्कृतास्तुप्रभातेयुवतिभिरुपभोगान्नीरुचः पुष्पमालाः ॥ २७ ॥ विलुलितकमलौघःकीर्णवल्लीवितानःप्रतिवनमवधूताशेषशाखिप्रसूनः। क्वचिदयमनवस्थःस्थास्नुतामेतिवायुर्वधुकुसुमविमर्दोद्गन्धिवेश्मान्तरेषु ॥ २८ ॥ ✻✻✻

॥ विलुलितेति ॥ वनेवनेप्रतिवनं। यथार्थेऽव्ययीभावः। विलुलिताःलोलिताःकमलौघायेनसः कीर्णाविक्षिप्तावल्लीनांमालत्यादीनांवितानाविस्तारायेनसः अवधूतान्यशेषशाखिनाम्बकुलचम्पकादीनाम्प्रसूनानियेनसःतथापिकचित्पूर्वोक्तकमलवनादौकुत्रापिनास्त्यवस्थास्थितिरस्येत्यनवस्थःस्थितिमप्राप्तोऽयंवायुःवधूनांकुसुमानाञ्चविमर्देनसङ्घर्षेणउद्गन्धिषुउद्गतगन्धेषु। गन्धस्येत्वं। वेश्मान्तरेषुगृहान्तरेषुयथास्थास्नुतांस्थायित्वमेतिपूर्वोक्तसर्वोत्कृष्टसौरभलोभादितिभावः। ग्लाजिस्थश्चग्स्नुचइतिगस्नुच्प्रत्ययः।यद्वामधुकुसुमेतिपाठेमधुयुक्तःकुसुमस्तेषाम्विमर्देनेतिभावः । अत्रवायोरस्थायित्वसम्बन्धोक्तौ

रनिश्लेषोक्तिः ॥ २८ ॥ *************************** ॥

॥ नखपदेति ॥ नखपदेषु नखक्षतेषु वलिषु त्रिवलिषु नाभ्यां सन्धिभागेषु देहसम्बन्धिस्था
नेषु दशनानां क्षतिषु दन्तव्रणेषु च सशेषः सावशेषः किञ्चिद्दृश्यमानः अतएव लक्ष्यो दृश्यो ऽ
ङ्गनायाः सम्बन्धि असौ वर्णयति वर्णं करोति स्तुति यती निवर्णकोऽङ्गरागो वाग्विहीनो वागि
न्द्रियरहितोपि सन् रहसि स्थितानामपि सुरतविलसितानां सुरतचेष्टितानाम्वर्णयतीति वक्ती
ति वर्णको व्यक्ताव्यक्तवादित्यर्थः । वर्णयतेर्ण्वुल्प्रत्ययः । वर्णक्रियायाम्विस्तारे गुणोक्तौ व
र्णयत्यद इति भट्टमल्लः । जातः नखक्षतादिष्वेव लक्ष्यमाणोऽङ्गरागो अन्यत्र स्वविलोपाच्चेष्टा
विशेषानुमापको जात इत्यर्थः । अत्र वाग्विहीनोपि रहस्यस्थितानामपि वर्णको वक्तेति वि

नखपदवलिनाभीसन्धिभागेषु लक्ष्यः क्षतिषु च दशनानामङ्गनायाः स
शेषः । अपि रहसि कृतानाम्वाग्विहीनोपि जातः सुरतविलसितानां
म्वर्णको वर्णकोऽसौ ॥ २९ ॥ प्रकटमलिनलक्ष्मा मृष्टपत्रावली
कैरधिगतरतिशोभैः प्रत्युषप्रोषितश्रीः उपहसित इवासौ चन्द्रमाः का
मिनीनाम्परिणतशरकाण्डापाण्डुभिर्गण्डभागैः ॥ ३० ॥ ** 

रोधस्य व्यञ्जकत्वलक्षणया परिहाराद्विरोधाभासोऽलङ्कारः ॥ २९ ॥ ***** ॥
॥ प्रकटेति ॥ उषसि प्रत्युषः । विभक्त्यर्थेऽव्ययीभावः । यद्वा प्रत्युषः प्रभातं । उषः प्रत्युष
सोऽप्युत्यमरः । तत्र प्रोषितश्रीर्भ्रष्टशोभः अतएव प्रकटमलिनलक्ष्मा स्पष्टदृष्टकलङ्को ऽ
सौ चन्द्रमा मृष्टाः प्रमृष्टाः पत्रावल्यः पत्रभङ्गा येषान्तैः । नद्यृतश्चेति कप् । तथाप्यधिगतार
तिशोभा सम्भोगश्रीर्येषान्तैः परिणताः परिपक्वाः शरकाण्डा बाणाख्यतृणकाण्डाः । शरो वा
णो बाणतृणमिति यादवः । तद्वदापाण्डुभिः कामिनीनाङ्गण्डभागैर्गण्डस्थलैरुपहसित
इवेत्युत्प्रेक्षा । अपाण्डुगुणनिमित्तानिः कलङ्काः सकलङ्कसमानमानिनमुपहसन्तीति भा

रः ॥ ३० ॥ ************************************ ॥

॥ अथ काचित्खण्डिता नायिका सागसम्प्रेयसं सम्प्राप्तं रागमन्यत्र च भिन्ह्युपालभते ॥ सकलमि

त्यादि । कामेन लोलाया अन्यनार्याः सपत्न्याः रतिरभसेषु सुरतसम्मर्देषु विमर्दैः पीडनैः

रज्यते नेते, निरागः अङ्गस्य रागोऽङ्गरागः विलेपनं अङ्गविवासस्तत्क्षिप्तं अङ्गरागे सकलमपि

निःशेषं यथा तथा निकामं भिन्नवति क्लिष्टवति सति अभास्वर्यधाम्नः सर्वाङ्गीतनिधानस्य तव मु

खरागो मुखविकाशो भेदं विश्लेषं न प्रयातः इति यत् इदमेवातिमहदाश्चर्यं खलु मुखस्याप्यङ्ग

रागत्वेन ङ्गागस्याप्यङ्गरागत्वादिति भावः । अत्र विलेपनविकाशाख्ययोरङ्गरागयोरेवात्रा

ध्यवसानेन विरोधः भेदाननुसन्धानत्वेन विरोधइति श्लेषमूलातिशयोक्त्युत्थापितो विरोधा

सकलमपि निकामङ्कामलोलान्यनारीरतिरभसविमर्दैर्भिन्नवत्यङ्गरा

गम् । इदमतिमहदेवाश्चर्यमाश्चर्यधाम्नस्तव खलु मुखरागो यन्न भेद

म्प्रयातः ॥ ३१ ॥ प्रकटतरमिमम्माद्राक्षुरन्यारमण्यः स्फुटमति

सविशङ्कङ्कान्तयातुल्यवर्णाः । चरणतलसरोजाक्रान्तिसंक्रान्तयासौ

वपुषि नखविलेखो लाक्षयारक्षितस्ते ॥ ३२ ॥ ******

भासोलङ्कारः ॥ ३१ ॥ ******************************* ॥

॥ प्रकटेति ॥ किञ्च । प्रकटतरमतिस्फुटमिमं नखविलेखं अन्यारमण्यो निजसपत्न्यः स्फु

टम्माद्राक्षुः न पश्यन्तु । दृशेर्लुङ् न दृशइति क्साभावपक्षे सिचि वृद्धिः । इति बुद्ध्याकान्त

यास्तविशङ्कं यथा तथा तुल्यवर्णो लाक्षासमानवर्णः विवरणस्य दुरपह्नवत्वादिति भावः ।

असौ तेन व वपुषि नखविलेखो नखव्रणः चरणतलं सरोजमिवेत्युपमितसमासः आक्रान्तिलि

क्रान्तस्याक्रान्त्या आघातेन संक्रान्तया लाक्षयारक्षितो गुप्तः आच्छादित इत्यर्थः ह्नलसानु

पापीयसी लाक्षा स्वयमेव सर्वं दुर्वृत्तपिशुनेतिसावरकाते प्रियावेत्तीति भावः अत्र नखस्य ला

श्लासावर्ण्यान्तरैकतापत्तेःसामान्यालङ्कारः । साम्यङ्गुणसाम्येनयत्रवस्त्वन्तरैकतेतिलक्षणात् ॥ ३२ ॥ ****************************** ॥

॥ नदीति ॥ किञ्चममत्वमेवप्रियेतियद्वादीरवोचः । वदेर्लुङिवदव्रजेत्यादिनावृद्धिः । नद्वितथंसत्यंकुतःयद्यस्मात्प्रियजनेनपरिभुक्तंदुकूलन्नदीयमित्यर्थःदधानःधृतइत्यर्थः दधानइत्यत्रवसानइतिपाठेवसनआच्छादयन । वसआच्छादनाल्लटःशानचादेशःस्त्वंमदधिवसतिंममनिवासमागाःप्राप्नः। इणोगालुङि । युक्तञ्चैनदित्याह । कामिनांमण्डनश्रीर्वल्लभानांप्रेयसीनामालोकनेनसफलत्वंव्रजतिहिअप्रियाचेत्कथमीदृशीमेसम्भावनेतिभावःअर्थान्तरन्यासः ॥ ३३ ॥ ********************** ॥

नद्वितथमवादीर्यन्ममत्वम्प्रियेतिप्रियजनपरिभुक्तय्यँद्दुकूलन्दधानः । मदधिवसतिमागाःकामिनाम्मण्डनश्रीर्व्रजतिहिसफलत्वम्वल्लभालोकनेन ॥ ३३ ॥ नवनखपदमङ्गङ्गोपयस्यंशुकेनस्थगयसिपुनरोष्ठम्पाणिनादन्तदष्टम् । प्रतिदिशमपरस्त्रीसङ्गशंसीविसर्पन्नवपरिमलगन्धःकेनशक्योवरीतुम् ॥ ३४ ॥ ✱✱✱✱✱✱

॥ नवेति ॥ किञ्चनवानिनखपदानियस्मिन्तदङ्गन्वपुरंशुकेनगोपयसिच्छादयसि । गुपेश्चौरादिकात्स्वार्थेणिच् । दन्तेनंदष्टमोष्ठम्पुनरोष्ठनुपाणिनास्थगयसिच्छादयसि । स्थगिरपिचौरादिकः । दिशिदिशिप्रतिदिशं । विभक्त्यर्थेव्ययीभावःअव्ययीभावेशरत्प्रभृतिभ्यइतिसमासान्तःटचप्रत्ययः । विसर्पन्प्रसर्पन्अपरस्त्रीसङ्गशंसीस्यनारसङ्गस्यवक्ता अन्यप्रभवत्वात्तस्येतिभावःनवःपरिमलाख्योगन्धः । परिमलगन्धःविमर्देत्थेपरिमलइत्यमरः । केनकेनोपायेनवरीतुमाच्छादयितुं । वृतोवेतिइटोदीर्घः । शक्यःनकेनापिशक्यइत्यर्थः ॥ ३४ ॥ ****************************** ॥

॥ इतीति ॥ इतिपूर्वोक्तरीत्याक्तवचनायाःकृतोपलम्भायाःगलितनयनवारेर्धैर्यान्मुक्तायाःप्रेयस्याइतिशेषःकश्चिन्नायकोबिभ्यन्त्रस्यन्। नाभ्यस्तान्चतुरितिनुमभाव। अभ्येत्यागत्यपादयोरवनाममनवनिंयातिप्रणामेनप्रसादयतीत्यर्थः। ननुकथमीदृशार्दवतयाहङ्कारिणस्तस्यरोदनमात्रेणनत्राह। करुणमिति। तथाहिविग्रहेषुप्रणयकलहेषुयोषितांकरुणमपिदीनमपिरुदितमश्रुमोचनंमानिनामहङ्कारिणाम्पुसांमानभेदेऽहङ्कारनिराशेसमर्थंशक्तमस्त्रंसाधनमुदितमुक्तं। वदेःकर्मणिक्तः। वचिस्वपीत्यादिनासम्प्रसारणं। दीनेप्रणयिजनेपुंसाङ्कोऽहङ्कारइतिभावः अर्थान्तरन्यासःएषाचखण्डितानायिका। नीत्वान्यत्रनिशाम्प्रातरागतेप्राणवल्लभेअन्यासङ्गोपचिन्हैस्तुखण्डितेर्ष्याकषायिते

इतिक्षतवचनायाःकश्चिदभ्येत्यबिभ्यद्गलितनयनवारेर्यातिपादावनाम्। करुणमपिसमर्थम्मानिनाम्मानभेदेरुदितमुदितमस्त्रंयोषिताम्विग्रहेषु ॥ ३५ ॥ कुलकम्॥ मदमदनविकासस्पष्टधार्ष्ट्योदयानांरतिकलहविकीर्णैर्भूषणैरर्चितेषु। विदधतिनगृहेषूत्फुल्लपुष्पोपहारम्बिफलविनययत्नाःकामिनीनाम्बयस्याः ॥ ३६ ॥ *

तिलक्षणात्नायकस्तुधृष्टःव्यक्तागानिर्भयोधृष्टइतिलक्षणात्। नचेहबिभ्यद्विशेषणविरोधःआगमनकालेतिनिर्भीकतयाएवलक्षणोपयोगात्अन्यथावैरस्यादितिअयच्चपुंसांसहृदयःअन्यथारसाभासइत्याहुः ॥ ३५ ॥ ***************** ॥

॥ मदेति ॥ मदमदनयोर्विकाशेनविजृम्भणेनस्पष्टोधार्ष्ट्यस्योदयआविर्भावोयासान्तासांकामिनीनांरतिरेवकलहस्तस्मिन् विकीर्णैरितस्ततोविक्षिप्तैर्भूषणैरर्चितेषुगृहेषुवयस्याःस्निग्धपरिचारिकाःविनीयन्तेऽस्मिन्निनिविनयोऽधिकारः तत्रयत्नोविफलोयासान्ताःविफलविनययत्नाःनिःफलस्वाधिकारोद्योगाःसंतउत्फुल्लैःपुष्पैरुपहारंपूजांनविद

श्वतिनकुर्वन्निमन्त्रत्तसमृद्धवस्तुवर्णनादुदात्तालङ्कारः । तदुदात्तम्भवेद्यत्तु समृद्धं वस्तुवर्ण्यते इति लक्षणात् । तेन तासान्तेषु आभरणेषु भुक्तावस्त्रमाल्यादि निर्माल्यबुद्धिर्ध्वन्यते ॥ ३६ ॥ ****************************** ॥

॥ करजेति । विलसनशीलो विलासी । वौकषलसेत्यादिना घिनुण् प्रत्ययः । अङ्केति ज्ञाङ्के निशायाम्भवं नैशं । निशाप्रदोषाभ्यां चेत्यण् प्रत्ययः । करजदशनचिह्नं नखदन्तक्षतं अन्यनारीजनितं सपत्नीकृतमिति शङ्कमानाम विश्वसन्तीम नन एवेर्ष्यया अक्षमया सरोषां स्त्रियं निजवधूम्मन्तया मूढयान्वयैवैतद्दत्तमेवं कृतं खलु न स्मरसि नाभिजानासि किमिति काकुः इत्यमनेन प्रकारेण व्रीडमानां स्वकृतत्वप्रत्यभिज्ञानाल्लज्जितां सतीमनुनयति अङ्गीकारयति स

करजदशनचिह्नं नैशमङ्केऽन्यनारीजनितमितिसरोषामीर्ष्ययाशङ्कमानाम् । स्मरसि न खलु दत्तम्मत्तयैतत्त्वयैवस्त्रियमनुनयतीत्थम्व्रीडमानाम्विलासी ॥ ३७ ॥ कृतगुरुतरहारच्छेदमालिङ्ग्य पत्योपरिशिथिलितगात्रे गन्तुमापृच्छमाने । विगलितनवमुक्तास्थूलवाष्पाम्बुविन्दुस्तनयुगमबलायास्तत्क्षणं रोदितीव ॥ ३८ ॥ ***

मौग्ध्यवाचात निर्वेदस्सलज्जयाव्यज्यते ॥ ३७ ॥ *************** ॥

॥ कृतेति ॥ कृतो गुरुतरस्य हारस्य च्छेदो यस्मिन् तत्तथा आलिङ्ग्य परिशिथिलितगात्रे शिथिलीकृताङ्गे पत्यौ भर्त्तरि गन्तुमापृच्छमाने आमन्त्रयमाणे सति । आङि नुपृच्छ्योरुपसंख्यानादात्मनेपदं कर्त्तरि वर्त्तमानकालेशानज्वादेशः । तत्क्षणं तस्मिन् क्षणे । अत्यन्तसंयोगे द्वितीया । अबलायाः स्तनयुगं कर्तृ विगलितानि स्रुतानि नवमुक्तानूतनमौक्तिकान्येव स्थूलवाष्पाम्बुविन्दवो यस्मिन् कर्मणि तत्तथा रोदितीव विरहासहिष्णुतया रोदनं करोतीवेत्युत्प्रेक्षारूपकसङ्कीर्णा । रुदादिभ्यः सार्वधातुके इटोडागमः ॥ ३८ ॥ ********* ॥

॥ वह्निति ॥ अह्निदिवसेव्यपगतमदयामुग्धवध्वासखीभ्यो विदितं रात्रौत्वयेत्थंकृतमि
तिसखीभिराख्यानमित्यर्थः । रात्रिवृत्तंरात्रौकृतंस्वचेष्टितमित्यर्थः । मत्तामदमूढाश्च
हन्तस्यप्रियस्यपुरस्तादग्रेवकुअनेकञ्जगदकिलजगादा निस्त्रकिलकिलेतिरेतिस्त्रो। अत
एवपरेक्षेलिङ्गणुत्तमो वेतिपक्षेणित्वाभावाद्वृद्ध्यभावः । चपुनःप्रौढबोधितानुल्यम्प्रौढ
बोधिवदित्युपमानेनतुल्यमितिवतिप्रत्ययः । अस्यप्रियस्यचाटुप्रियवचनंचकारकिलअ
कार्षीत्कृत । लिडादिपूर्ववत् गुणोविशेषः । इतिविचिन्त्यविमृश्यव्रीडितंलज्जितं । भा
वोक्तः । निजकार्यप्रकाशेनलज्जात्रसञ्चारीतिभावः । भावनिबन्धनात्प्रेयोलङ्कारः ॥
३९ ॥ *************************************** ॥
॥ अरुणेति ॥ अरुणजलजराजीवरक्तकमलश्रेणीवमुग्धंसुन्दरं हस्ताग्रपादं हस्तौचपा

बकुजगदपुरस्तात्तस्यमत्ताकिलाहस्त्वकरचकिलचाटुप्रौढ्योषिद्व
त्स्य । विदितमितिसखीभ्योरात्रिवृत्तम्विचिन्त्यव्यपगतमदयाह्निव्री
डितम्मुग्धवध्वा ॥ ३९ ॥ अरुणजलजराजीमुग्धहस्ताग्रपादा
बकुलमधुपमालाकज्जलेन्दीवराक्षी । अनुपततिविरावैःपत्रिणा
न्व्याहरन्तीरजनिमचिरजातापूर्वसन्ध्यासुतेव ॥ ४० ॥ ❋❋

दौचयस्याःसावकुलंमधुपमालाकज्जलङ्कज्जलमिवमधुपमालायचोस्तेनेइन्दीवरेयस्याः
सावकुलमधुपमालाकज्जलेन्दीवराक्षीपत्रिणांपक्षिणाम्विरावैर्व्याहरन्तीलपन्ती । व्या
हारउक्तिर्लपितमित्यमरः । अचिरजातासद्योभवावालाचपूर्वसंध्याप्रातःसंध्यासुतेवपु
त्रीवरजनीमनुपतति अनुधावतिजननीमिवेत्यर्थः । इहविरावैर्व्याहरन्तीतिव्यधिकरण
परिणामः । तत्सङ्कीर्णेयमुपमा ॥ ४० ॥ ******************** ॥
॥ प्रतीति ॥ अग्निराहितायैस्तेषामग्न्याहितानां । वाहिताग्न्यादिष्विति निष्ठायाःपर
निपातः । प्रतिशरणम्प्रतिगृहं । शरणंगृहरक्षित्रोरित्यमरः । अशीर्णज्योतिरक्षितार्चि

इयमग्निराहवनीयः विधिनायज्ञकर्मण्यजपन्यजुःसामसिन्त्यादिशास्त्रोक्तरीत्याविहिताय थायोगमुच्चारितानिविरिब्धाःस्वराएकश्रुत्यादयःचचारोयेस्तैः । क्षुब्धस्वान्तेत्यादिनारेभृश ब्दे इति धातोःस्वरे विरिब्धशब्दो निष्ठान्तोऽनिट्त्वेनानिपातितः अध्वर्युवर्यैः ऋत्विक्श्रे ष्ठैःऋत्विग्विशेषवाचिनाअध्वर्युशब्देनऋत्विङ्मात्रलक्षणात् । यद्वाऽध्वर्युवर्येमुख्याये षान्तैःअध्वर्युप्रमुखैश्चतुर्भिऋत्विग्भिरित्यर्थः । तस्माद्दर्शपूर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विजइति श्रवणात् । दर्शश्चायंसन्नैवसान्नाय्यविधानादिति सामिधेनीःप्रवोवाजाइ त्यादिकाअग्निसमिन्धनीऋचोऽधीत्यपठित्वा । ऋक्सामिधेनीधाय्याचयास्यादग्निसमि न्धनेइत्यमरः । सामिधेनीग्रहणंयाज्यापुरोनुवाक्यादिमन्त्रान्तराणामप्युपलक्षणं । कृतो गुरुतरदुरितानामोघध्वंसोयस्मिन् कर्मणितद्यथातथासाधुसम्यक् हुतन्देवतोद्देशेन

प्रतिशरणमशीर्णज्योतिरग्न्याहितानांविधिविहितविरिब्धैःसामिधे नीरधीत्य । कृतगुरुदुरितौघध्वंसमध्वर्युवर्यैर्हुतमयमुपलीढेसाधु सान्नाय्यमग्निः ॥ ४१ ॥ ✻✻✻✻✻✻✻✻✻✻✻

विहि तंसन्नीयतइतिसन्नाय्यंहविर्विशेषंऐन्द्रन्दध्यमावास्यायामैन्द्रंपयोमावास्यायामितिविहि तं... ऐन्द्रन्दध्यमावास्यायामैन्द्रंपयोमावास्यायामितिविहि

त्यक्तंसन्नीयतइतिसन्नाय्यंहविर्विशेषंऐन्द्रन्दध्यमावास्यायामैन्द्रंपयोमावास्यायामितिविहि नेदधिपयसित्यर्थः । पाय्यसान्नाय्यनिकाय्येत्यादिनाहविर्विशेषेसंपूर्वान्नयतेर्ण्यन्तादाया देशोपसर्गदीर्घनिपातः । उपलीढेआस्वादयति । लिहआस्वादनइतिधातोःस्वरितेत्वा ल्लटितङिटेरेत्वंढत्वष्टुत्वढलोपदीर्घाः । अत्राग्नेःसान्नाय्योपलेहनस्योत्तरकालभावि त्वेपितदुपलक्षितस्यकर्मणःउदितेआदित्येपौर्णमास्यास्तन्त्रं प्रयुक्तंअतिप्रागुदयादमावा स्यायाइतिशास्त्रात्तकालप्रक्रान्तस्यवर्त्तमानत्वात्तस्यापिवर्त्तमानतान्यपदेशःएतच्चाहिता ग्नित्वमात्रेणकालविशेषानादरेणोक्तमितिपूर्वोक्तचन्द्रोदयाद्यविरोधःअथवाउदितेजुहो त्यनुदितेजुहोतिप्रातर्जुहोत्यग्निहोत्रतत्कालत्वात्सामिधेनीसान्नाय्यशब्दयोर्मन्त्रहवि

र्मात्रपरत्वमाश्रित्याग्निहोत्रपरत्वेनव्याख्येयं । तस्मादग्निहोत्रस्ययज्ञक्रतोःएकत्वेऽपिविगि
त्वेकाध्वर्युकत्वेर्वैरिनिवक्तृवचनंयजमानवक्तृत्वादुपपद्यतइत्याकूरित्यलंच्छान्दसगोष्ठी
व्यसनेनवृत्त्यनुप्रासोऽलङ्कारःस्पष्टएव ॥ ४१ ॥ ****************** ॥

॥ प्रकृतेति ॥ प्रकृतजपविधीनांप्रक्रान्तजपकर्मणांनियमभाजान्तपस्विनांसम्बन्धेओष्ठे
भवैरोष्ठ्यैः । शरीरावयवाच्चेतियत्प्रत्ययः । अक्षरैर्वर्णैःउपूपध्मानीयैरित्यर्थः । उपूपध्मा
नीयानामोष्ठावित्यनुशासनात् । मुकुरपिहितमावृतमन्यैरनोष्ठ्यैरक्षरैर्लक्ष्यन्दर्शनीयं
अतएवोद्भिन्नदन्तांउद्गतांशवोदन्तायस्यतदास्यंमुखंअनुवेलंप्रतिक्षणंचद्धिनोद्भिन्नस्य
भाणिवान्मुकुर्घटितविघटितस्य । विशेषणसमासः । मुग्धंसुन्दरंयन्मुक्तानांमुक्ताफला

प्रकृतजपविधीनामास्यमुद्भिन्नदन्तम्मुकुरपिहितमोष्ठ्यैरक्षरैर्लक्ष्य
मन्यैः । अनुकृतिमनुवेलङ्घट्टितोद्घट्टितस्यव्रजतिनियमभाजाम्मुग्ध
मुक्तापुटस्य ॥ ४२ ॥ नवकनकपिशङ्गम्वासराणाम्विधातुःककु
भिकुलिशपाणेर्भातिभासाम्वितानम् । जनितभुवनदाहारम्भमम्भां
सिदग्ध्वाज्वलितमिवमहाब्धेरूर्ध्वमौर्वानलार्चिः ॥ ४३ ॥ ※

नांपुटंकोटिःशुक्तिरितियावत्तस्यानुकृतिंसाम्यंव्रजति । उपमालङ्कारः । एतेनश्लोक
द्वयेनबहवःकर्मनिष्ठास्तपोनिष्ठास्वब्राह्मणाभगवन्तमनुनयन्तीतिकथितं ॥ ४२ ॥

॥ नवेति ॥ कुलिशंपाणौयस्यसकुलिशपाणिरिन्द्रः । प्रहरणार्थेभ्यःपरेनिष्ठासप्तम्यौभ
वतइतिनिपातः । एतदेवात्रव्यधिकरणबहुव्रीहेस्सूचापकं । तस्यककुभिप्राच्यांदिशिन
वकनकवत्पिशंगंवासराणांविधातुर्दिनकरस्यभासांवितानंकरजालंमहाब्धेरम्भांसिदग्ध्वा
जनितभुवनदाहारंभं कृतजगद्दाहोद्योगंसदूर्ध्वमब्धेरुपरिज्वलितमौर्वानलार्चिर्वडवान
लज्योतिरिवभातीत्युत्प्रेक्षा ॥ ४३ ॥ ****************** ॥

॥ विततेति ॥ विततामिः प्रसारिताभिः पृथुवरत्राभिर्महारज्जुभिस्तुल्यरूपैस्तुल्याकारै
र्मयूखैः किरणैर्गरीयान् कलशइवाकृष्यमाणः सन्नेषोऽर्कः क्लान्तश्चपलः सत्वरो विहङ्गालाप
एव कोलाहलः कलकलो याभिस्ताभिः दिग्भिर्जलनिधेः जलमध्यादुत्तार्यते उद्ध्रियते ।
तरतेर्ण्यन्तात्कर्मणि लट् । यथा कुतश्चित्कूपात् कुम्भः पाशैराकृष्य सकलकलं बह्वीभिः स्त्रीभि
रुद्ध्रियते तद्वदिति भावः । अत्र वरत्रातुल्यरूपैः कलशइवेति चोपमाभ्यां विहङ्गालापको
लाहलेति रूपकाचोज्जीवितार्कस्यादिक्कर्तृकोत्तरणोत्प्रेक्षाव्यञ्जकाप्रयोगात्प्रतीयमानेति
सङ्करः ॥ ४४ ॥ ****************************** ॥

विततपृथुवरत्रातुल्यरूपैर्मयूखैः कलशइवगरियान् दिग्भिराकृष्यमा
णः । क्लान्तचपलविहङ्गालापकोलाहलाभिर्जलनिधिजलमध्यादेष
उत्तार्यतेऽर्कः ॥ ४४ ॥ पयसि सलिलराशेर्नक्तमन्तर्निमग्नः स्फुटम
निशमतापि ज्वालया वाडवाग्नेः । यदयमिदमिदानीमङ्गमुद्यन्दधा
ति ज्वलितखदिरकाष्ठाङ्गारगौरं विवस्वान् ॥ ४५ ॥ अनुहिमरु
चिनासौ केवलं नोदयाद्रिः क्षणमुपरिगतेन क्ष्माभृतः सर्वएव । नवकर
निकरेण स्पष्टबन्धूकसूनस्तवकरचितमेते शेखरं बिभ्रतीव ॥ ४६ ॥

॥ पयसीति ॥ अयञ्च विवस्वान् नक्तं सलिलराशेः पयसि निमग्नोऽन्तर्वाडवाग्नेर्ज्वालया अनि
शमतापि तप्तः स्फुटमित्युत्प्रेक्षा । कुतः यदिदानीमुद्यन् इदं ज्वलितः प्रज्वलन्यः खदिरका
ष्ठस्याङ्गारस्तद्वद्गौरमरुणमङ्गं दधाति । गौरेरुणे सिते पीते इति विश्वः ॥ ४५ ॥ * ॥
॥ अनुहिमेति ॥ क्षणमुपरिगतेन स्थितेनानुहिमरुचिनार्केण नवकरनिकरेण केवलम
सावुदयाद्रिः पूर्वाद्रिः । उदयाद्रिः पूर्वपर्वत इत्यमरः । शेखरं अवतंसं पुष्पमालां स्पष्टबन्धु
कसूनस्तवकरचितं न बिभर्ति किन्तु एते क्ष्माभृतः पर्वताः बिभ्रतीवेत्युत्प्रेक्षा न केवलमर्केणो

दयाद्रिरेववन्धुकशेखरन्बिभ्रत्तीर्वकिंनुनत्करजालेनसर्वेषांसर्वैपिपर्वतास्तथेत्यर्थः ॥४६॥

॥ उदयइति ॥ एषवालउदितमात्रःशिशुर्वालश्चासौसूर्यश्चवालसूर्यः उदयशिखरिशृङ्गस्यउदयाद्रिशिखरस्यप्राङ्गणेषुरिङ्गन्सञ्चरन्पद्मिनीभिर्नलिनीभिःस्त्रीविशेषैश्च। पद्मिनीस्त्रीविशेषोपीतिविग्वः । कमलान्येवमुखानितेषांहासेनहास्येनचसहयस्मिन्कर्मणितद्यथातथावीक्षितःसन्वयोभिःपक्षिभिः । वयःपक्षिणिबल्यादाविति विश्वः । शब्दयन्त्याः शब्दंकुर्वन्त्याःआगच्छआगच्छवत्सेतिव्याहरंत्याइत्यर्थः । शब्दशब्दात्कारेणियन्ताल्लटःशतरिङीप् । दिवोन्तरिक्षस्यमातुश्चांकेसमीपेउत्संगेचविततानिप्रसृतानिमृदूनिकराग्राणिहस्ताग्रेवयस्यसतन्हेलयालीलयापरिपतति । ईषमूलानिश

उदयशिखरिशृङ्गप्राङ्गणेष्वेषरिङ्गन् सकमलमुखहासम्वीक्षितःपद्मिनीभिः । विततमृदुकराग्रःशब्दयन्त्यावयोभिःपरिपततिदिवोङ्केहेलयावालसूर्यः ॥ ४७ ॥ क्षणमयमुपविष्टःक्ष्मातलन्यस्तपादःप्रणतिपरमवेक्ष्यप्रीतमह्नायलोकम् । भुवनतलमशेषम्प्रत्यवेक्षिष्यमाणःक्षितिधरतटपीठादुत्थितःसप्तसप्तिः ॥ ४८ ॥ ※※※

षोक्त्यनुगृहीतरूपकं ॥ ४७ ॥ *************************** ॥

॥ क्षणमिति ॥ अयंसप्तसप्तिरर्कःक्षणमुपविष्टःक्षितिधरपीठमासीनःक्ष्मातलन्यस्तपादःप्रणामस्वीकारायभूतलप्रसारितांघ्रिरित्यर्थः । प्रणतिपरंनमस्कारंकुर्वाणंप्रीतंप्रणामस्वीकारात्तुष्टंलोकंजनमह्नायझटितिअवेक्ष्यकृपावलोकेनसम्भाव्याशेषंभुवनतलंलोकस्वरूपंप्रत्यवेक्षिष्यमाणःअनुसन्धास्यमाणः क्षितिधरस्यतटंपीठमिवसिंहासनमिवअन्यचतटमिवपीठंतस्मादुत्थितःउदयाद्रिमतिक्रान्तइत्यर्थः । यथाकश्चिन्महाराजःसिंहासनोपविष्टःक्षणंप्रणतजनमादृत्यअथसकलस्वराष्ट्रप्रत्यवेक्षणायसहसोत्थायगच्छ

तिनद्व इत्यर्थः । अत्र प्रस्तुतार्कविशेषणवैभवात् प्रस्तुतमहाराजप्रतीतेः समासोक्तिः ॥

॥ ४८ ॥ ************************************ ॥

॥ परिणतेति ॥ नद्यः बालातपेन च्छुरितं रूषितं । अतएव परिणतेन मदिराभं सुपक्वसुरास

न्निभं उभाभ्यां रोधाभ्यां वारि तत् मवकं उभयरोधोवारितं । उभादुदात्तो नित्यमिति अयच् नि

त्यग्रहणसामर्थ्यात् वृत्तिविषये उभशब्दस्य स्थाने उभयशब्दप्रयोग इत्युक्तं प्राक् । वारिजलं

भास्करेण । कस्कादित्वात्सत्वं । अंशुभिरेव बाणैः सर्वदिक्षु क्षतायाः प्रहृतायाः तिमिरमेव

करिघटा गजसंघः तस्याः रुधिरमिव इत्युत्प्रेक्षा वहन्त्यो भान्ति ॥ ४९ ॥ ***** ॥

परिणतमदिराभम्भास्करेणांशुबाणैस्तिमिरकरिघटायाः सर्वदिक्षु क्ष

तायाः । रुधिरमिव वहन्त्यो भान्ति बालातपेन च्छुरितमुभयरोधोवारि

नद्यः ॥ ४९ ॥ दधति परिपतन्त्यो जालवातायनेभ्यस्तरुण

तपनभासो मन्दिराभ्यन्तरेषु । प्रणयिषु वनितानाम्प्रातरिच्छत्सु गन्तु

कुपितमदनमुक्तोत्तप्तनाराचलीलाम् ॥ ५० ॥ अधिरजनि वधूभिः पी

तमैरेयरिक्तं कनकचषकमेतद्रागतलोहितेन । उदयदहिमरोचि

र्ज्योतिषाक्रान्तमन्तर्मधुन इव तथैवापूर्णमद्यापि भाति ॥ ५१ ॥ *

॥ दधतीति ॥ जालवातायनेभ्यः गवाक्षविवरेभ्यः मन्दिराणामभ्यन्तरेषु परिपतन्त्यः तरुण

तपनभासो बालार्ककिरणाः वनितानां प्रणयिषु प्रातर्गन्तुमिच्छत्सु कुपितेन मदनेन मुक्ताना

मुत्तप्तानामग्निज्वलितनेजसां नाराचानां बाणविशेषाणां लीलां शोभान्दधति । अत्र लीलेव

लीलेति सादृश्याक्षेपात् संभवद्वस्तुसम्बन्धा निदर्शना ॥ ५० ॥ ********* ॥

॥ अधीति ॥ अधिरजनि रजन्यां । विभक्त्यर्थेऽव्ययीभावः । वधूभिः पीतं मैरेयं मद्यं य

स्य तत् । अतएव रिक्तं पीतमैरेयरिक्तं एतत् कनकचषकं स्वर्णपानपात्रं प्रातः आलोहितेन

गोरोचनारुणेनउद्यनउदीयमानस्याहिमरोचिषोऽर्कस्यज्योतिषातेजसाअन्तरभ्यन्त
रेआक्रान्तंव्याप्तंसत् । अद्यापिइदानीमपितथैवपूर्ववदेवमधुनआपूर्णमिवेत्यर्थः ।
समानवाक्यायोग्यविशेषःपर्यवसाननियमात् । षष्ठीशेषइतिसम्बन्धसामान्येषष्ठी करण
स्यापिकारणत्वादितिभाति शोभात्रानयनकान्तोमधुपूर्णत्वोत्प्रेक्षयाआतपेमधुभ्रमान्भ्रान्ति
मानव्यज्यते ॥ ५१ ॥ ****************************** ॥

॥ सितेति ॥ नक्तंरात्रौशयनीयेतल्पे । एकान्तमुक्तमत्यन्तात्यक्तंसितरुचिम्शुभ्रवर्णं । कि
न्तुदिनादौप्रभातेदिनकरकरसंगेनार्कांशुकरव्यतिकरेणव्यक्ताकौसुम्भीकुसुम्भस्यरागद्र
व्यस्यसम्बन्धिनीकान्तिर्यस्यतत्तथाभासमानंरतिबन्धोः प्रियस्योत्तरीयंनिजमात्मीय

सितरुचिशयनीयेनक्तमेकान्तमुक्तन्दिनकरकरसङ्गव्यक्तकौसुम्भका
न्ति । निजमितिरतिबन्धोर्जानतीमुत्तरीयम्परिहसतिसखीस्त्रीमाद
दानान्दिनादौ ॥ ५२ ॥ स्नुतमिवशिशिरांशोरंशुभिर्यन्निशासु
स्फटिकमयमराजद्राजताद्रिस्थलाभम् । अरुणितमकठोरैर्वेश्म
काश्मीरजाम्भःस्नपितमिवतदेतद्भानुभिर्भातिभानोः ॥ ५३ ॥

मितिजानती । अतएवाददानांस्त्रीनायिकां । वामशस्तोरितीयङ्भावपक्षेअमिपूर्वइ
तिपूर्वरूपं । सखीपरिहसति । अत्राकुसुम्भेकुसुम्भभ्रमात्सादृश्यनिबन्धनाद्भ्रान्तिमद
लङ्कारः ॥ ५२ ॥ ****************************** ॥

॥ स्नुतमिति ॥ रजताद्रिस्थलाभंसुधावलितत्वात्कैलासतटसन्निभंयद्वेश्मनिशासुशि
शिरांशोरिन्दोरंशुभिश्चन्द्रिकाभिःस्नुतंधौतंसत्स्फटिकमयंस्फटिकविकारइवाराजत्तदे
तदेतद्वेश्मभानोःसूर्यस्याकठोरैःकोमलैःभानुभिररुणितमरुणीकृतंसत्काश्मीरदेशे
जातंकाश्मीरजंकुंकुमन्तस्याम्भसास्नपितंसिक्तमिवभाति उत्प्रेक्षयोःसंसृष्टिः ॥ ५३ ॥

॥ सरसेति ॥ प्रणयिनियोषितांसरसनखपदानामार्द्रनखक्षतानामंतर्मध्येदष्टानांव
श्चानांकेशानांशिरोरुहाणांप्रमोकंप्रमोचनं विदधानेसतिसीत्कृतेर्येयाविर्भूतसीत्कारैराविष्
कृतानांदशनानामुल्लसन्त्यः वैपुल्याद्दन्तेषुप्रतिफलन्त्यः अभिनवरविभासःपद्मरागा
णामनुकरणंविदधतिउपमालङ्कारः। रविभासामारुण्यप्रतिपादकाभिनवविशेषणप्र
साद्लब्धइतिकाव्यलिङ्गेनसङ्करः॥ ५४ ॥ **************** ॥

॥ अविरतेति ॥ अविरतेनाविच्छिन्नेनदयितानांप्रेयसामंगस्यासंगेनशरीरसंपर्केणसं
चारितेनसंक्रामितेनाभिनवस्यास्टजोरक्तस्येवकान्तिर्यस्यतेन कुङ्कुमेनछुरितंकनकस्यया
निकषानिकषोत्पलेरेखाराजिस्तद्वत्कोमलंमनोहरमित्युपमा । कामिनीनांवपुरातपेपि

सरसनखपदान्तर्दष्टकेशप्रमोकम्प्रणयिनि विदधानेयोषितामुल्लस
न्त्यः । विदधतिदशनानांसीत्कृताविष्कृतानामभिनवरविभासःपद्म
रागानुकारम्॥ ५४ ॥ अविरतदयिताङ्गासङ्गसञ्चारितेनच्छुरित
मभिनवास्रक्कान्तिनाकुङ्कुमेन । कनकनिकषरेखाकोमलङ्कामिनी
नामभवतिवपुरवाप्तच्छायमेवातपेऽपि ॥ ५५॥ *·*·*·*·*

वाप्तप्राप्तच्छायंलब्धवर्णोत्कर्षमेवभवतिस्तनःसुवर्णवर्णस्यततः कुङ्कुमांकितस्यकामि
नीगात्रस्यपुनर्वातातपव्याप्तिरितिमहतीवर्णोत्कर्षसामग्रीतिभावः। आतपेच्छायानात
पइतिविरोधाभासेऽपिशब्दःच्छायात्वनातपेकान्ताविव्यमरः। अत्रसंक्रान्तिकुङ्कुमछुरि
तत्वकनकनिकषरेखाकोमलत्वयोरुपमापेक्षयाछायाव्याप्तिहेतुत्वादुपमासंकीर्णकाव्यलि
ङ्गेनदातपेप्यवाप्तच्छायमित्यत्रएकवाचकानुप्रवेशेनसंकीर्यते॥ ५५ ॥ ***** ॥
॥ सरसीति ॥ सरसिजातानिसरसिजानि। सप्तम्यांजनेर्डः। तत्पुरुषेकृतिबहुलमित्य
लुक्। नन्दनस्यकान्तंप्रियं । अन्यत्रतत्कान्तांरम्यं आलोकशक्तेर्लोकलोचनानांविषय

ग्रहणशक्तेर्हेतुंआलोकान्तरसहस्रानामेवनेषांसहस्रंकरनयनसहस्रंबिभ्रत् अभ्रान्ते
भ्रमध्येवृत्तिर्यस्यसोऽभ्रान्तवृत्तिःअन्यत्राभ्रान्तोमेघेवृत्तिर्यस्यसःमेघवाहनइत्यर्थः। अभ्र
म्भःस्वर्गबलाहकेष्वितिविश्वः। हरितोऽश्वायस्यसहरिदश्वोऽर्कःहरिरिन्द्रइवाभातिम
हिम्नाअतिमहत्तयास्ववृद्ध्येत्यर्थः। लोकमाक्रान्तवंतंव्याप्तवंतंएकत्रप्रत्यक्षादन्यत्रस्त इषु
मात्रमिषुमात्रंविष्कङ्वर्द्धनस्तइमानलोकानावृणोति इत्यागमाद्देतिभावः। वृत्रंध्वान्तंदा
नवंचसाधुहिनस्तिहन्ति। ध्वान्तारिदानवावृत्राइत्यमरः। उपमास्वेषोवामनभेदा
न॥ ५६ ॥ ********************************* ॥
॥ अवतमसेति ॥ अवतमसन्तिमिरं। अवसमन्धेभ्यस्तमसइतिसमासान्तः। यद्यपिक्षी

सरसिजवनकान्तिम्बिभ्रदभ्रान्तवृत्तिः करनयनसहस्रंहेतुमालोकशक्तेः ॥ अखिलमतिमहिम्नालोकमाक्रान्तवन्तंहरिरिवहरिदश्वः साधुवृत्रंहिनस्ति ॥ ५६ ॥ अवतमसभिदायैभास्वताभ्युद्गतेनप्रसभमुडुगणोसौदर्शनीयोऽप्यपास्तः । निरसितुमरिमिच्छोर्येनदीयाश्रयेणश्रियमधिगतवन्तस्तेपिहन्तव्यपक्षे ॥ ५७ ॥ *-*-*

णोऽवतमसन्तमइत्युक्तथानपीहविरोधाद्विशेषानादरेणसामान्यमेवग्राह्यन्तस्यभिदायैभे
दाय। षिद्भिदादिभ्योऽङ्। अभ्युद्गतेनाभ्युदितेनोद्यतेनचभास्वतासूर्येणदर्शनीयोप्यु
डुगणोसोप्रसभंबलात् अपास्तःतथाहि अरिंनिरसितुमिच्छोर्येनदीयेनाश्रयेणाश्रयणेन
श्रियंसंपदंशोभाञ्च। शोभासम्पत्तिपद्मासुलक्ष्मीःश्रीरपिगद्यतइतिविश्वः। अधिगतव
न्तःप्राप्तवन्तस्तेपिहन्तव्यपक्षेवध्यकोटावेवअरिवदरिपक्षाअपिवध्याएवेत्यर्थः। उडुग
णोपिनमसिशोभनेअतस्तत्पक्ष्यइतिभावः। सामान्येनविशेषसमर्थनरूपोऽर्थान्तर
न्यासः॥ ५७ ॥ ********************************* ॥

॥ प्रतीति ॥ घर्मभानुरुस्रांशुः संमुखावस्थितायां सान्द्रचन्द्रांशुवद्गौर्य्यां धवलायामित्युप
मा। षिद्गौरादिभ्यश्चेति ङीष्। रजतकटकमेव भित्तिस्तस्यां करौघे स्वकिरणजाले प्रतिफल
ति सति अद्रेर्बहिरभिहतं संहतं कन्दराणां दरीणां अन्तर्गतं तिमिरौघमपि भिनत्ति पुरोगत
रजतभित्तिप्रतिहतस्य निजतेजसः कन्दरान्तःप्रवेशादिति भावः । अत्र करौघस्यान्तःस
म्बन्धाभावेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ५८ ॥ **************** ॥
॥ बहिरिति ॥ बहिर्विलसन्त्योऽपि दिवसकररुचोऽर्कभासः अन्तर्गृहेभ्यः प्रस्तावाद्गृहाणा
मेवान्तःस्थं यथेष्टं ध्वान्तमन्तं नाशं मानिन्यिरे प्रापयामासुरिति यत् नयतेर्द्विकर्मकत्वात्कर्त्तरि
लिट् । सोऽन्तर्गृहध्वान्तनिरासो नियतविषये नियतस्थाने च वृत्तिर्यस्य तस्य जिगीषोरपो

प्रतिफलति करौघे सम्मुखावस्थितायां रजतकटकभित्तौ सान्द्रचन्द्रांशु
गौर्याम् । बहिरभिहतमद्रेः संहतङ्कन्दरान्तर्गतमपि तिमिरौघड्घर्म
भानुर्भिनत्ति ॥ ५८ ॥ बहिरपि विलसन्त्यः काममानिन्यिरे यद्दि
वसकररुचोऽन्तं ध्वान्तमन्तर्गृहेभ्यः । नियतविषयवृत्तेरप्यनल्पप्रता
पक्षतसकलविपक्षस्तेजसः स स्वभावः ॥ ५९ ॥ ❋···❋···❋···❋···❋

त्यर्थः। तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्येति पुंवद्भावः। तेजसोऽनल्पेन प्रतापेन स्वप्रकाशेन स्वप्रभावेनैवे
त्यर्थः। प्रतापैपैरुत्थानपाविनि वैजयन्ती। क्षतसकलविपक्षः निरस्तसमस्तप्रतिपक्षः स्व
भावः। तेजस्विनामेष स्वभावो यत्प्रतापेनैव परोच्छेदनमतो युक्तार्कभासामपि ध्वान्ताहर
णमित्यर्थः। अत्र सामर्थ्यासामर्थ्ययोः सामान्यविशेषणभावादर्थान्तरन्यासः ॥ ५९ ॥
॥ चिरमिति ॥ अयमर्कः पुनर्भूयोऽपि उदयाय स्ववृद्धये स्वं स्वकीयमेव धाम स्थानं तेजो वा
प्राप्य मनिरसनौत्सुक्यात्क्षणमात्राद्रसेषु विषयेषु चलौत्सुक्यादासक्तैः सरोजे चिरं बन्धनं लब्धं भिना
नां प्रापितानां षट्पदानां सरभसः सत्वरोऽपि दलितं विघट्टितं दलमेव कपाटं येन स सत्तगुप्ति

स्फोटंबन्धनमोक्षंकरोतीतिवेत्युत्प्रेक्षा यथाकश्चित्परभ्रष्टःपुनर्लब्धपदःपूर्वंबद्धान्स्वबन्धूनाम
त्यस्वयमेवकाराकपाटमुद्घाट्यमोचयतितद्वदितिभावः ॥ ६० ॥ ********* ॥

॥ युगपदिति ॥ अयुगाविषमाःसप्तयोऽश्वायस्यसअयुगसप्तिःसप्ताश्वोऽर्कःयुगशब्दस्य
युग्मशब्दस्यवृद्धिविशेष्यलिङ्गतावगन्तव्या । युगपदेकदैवतुल्यसंख्यैःसहस्रसंख्यैरित्यर्थः
मयूखैःकरैःदशशतानियेषान्तानिदशशतानिसहस्रमित्यर्थः । तेषान्दलानांभेदश्चिद्
द्रनंकौतुकेनाकुलत्वात्अलिकुलस्यगीतैर्लालितांसंस्कृतां पङ्कजमेवान्तर्भवनंगर्भगृहंअधि
शयानान्तत्रशयानामित्यर्थः । अधिशीङ्स्थासांकर्मेतिकर्मत्वं । श्रियसादरात्पश्यतीवेत्यु
त्प्रेक्षा । कश्चित्कान्तःकान्तामिवैकान्तगतामितिभावः ॥ ६१ ॥ ********* ॥

चिरमतिरसलौल्याद्बन्धनंलम्भितानाम्पुनरयमुदयायप्राप्यधामस्वमे
व । दलितदलकपाटःषट्पदानांसरोजेसरभसइवगुप्तिस्फोटमर्कः
करोति ॥ ६० ॥ युगपदयुगसप्तिस्तुल्यसङ्ख्यैर्मयूखैर्दशशतदलभेद
कौतुकेनाकुलत्वा । श्रियमलिकुलगीतैर्लालिताम्पङ्कजान्तर्भवनम
धिशयानामादरात्पश्यतीव ॥ ६१ ॥ अदयमिवकराग्रैरेषनिष्पी
ड्यसद्यः शशधरमहरादौ रागवानुष्णरश्मिः । अवकिरतिनितान्त
ङ्कान्तिनिर्यासमच्छन्नवजलपाण्डुम्पुण्डरीकोदरेषु ॥ ६२ ॥

॥ अदयमिति ॥ अहरादौप्रभातेरागवानुदयरागवान्पुण्डरीकस्नेहवांश्चैषउष्णरश्मि
रर्कःशशधरंचन्द्रंकराग्रैःरश्म्यग्रैःहस्ताग्रैश्चअदयंनिर्दयंसद्यो निष्पीड्यअद्यान्मेघात्सुतं
स्रस्तंनवजलमिवपाण्डुंशुभ्रङ्कान्तिनिर्यासंलावण्यसारंपुण्डरीकाणां सिताब्जानामुदरे
ष्वभ्यन्तरेषुनितान्तमवकिरतीवक्षिपतीव । अत्रसूर्योदयेचन्द्रस्यकान्तिक्षयात्पुण्डरीका
णान्तत्प्रादुर्भावाच्चसूर्यश्चान्द्रीमेवकान्तिःपुण्डरीकस्नेहान्तरेषुसिञ्चतीत्युत्प्रेक्षा । यथा

च्छिवनांप्रपीड्यमदीयमेवसुतारं इहदेप्रयच्छनितद्दरिनिभावः ॥ ६२ ॥ **** ॥

॥ प्रविकसन्तीति । द्यौनिनः प्रकाशिनोऽशेषलोकोयेनतस्मिन्दृश्यशनानियेषांतेदृश

शनालेकरायस्याःसादृशशतकरासहस्रकरमूर्त्तिर्यस्यतस्मिन्दृशशनकरमूर्त्तौखूर्यैच्छिनौ

येऽक्षिणिचक्षुषीवचिरायप्रविकसनिसनिसप्रत्यासौद्यौरकाशं खीचगम्यतेविगलितकिर

णेननिःप्रकाशेनसितकरंमुभ्रंकिरणंवपुर्यस्यतेनसितकरवपुषाचन्द्रेणव्यङ्गितविकलीक

तमेकेक्षणमेकनेत्रंयस्याःसाव्यङ्गितैकक्षणाकाणेवलक्ष्यते अचाद्दिवःकाणत्वमुत्प्रेक्ष्यते ॥

तच्चकाणत्वमक्षित्वेनाध्यवसितेननिःकाशितेनचन्द्रेणेतियुक्तौ । नत्रयेनाङ्गविकारइति

॥ ****************** ॥

तृतीया ॥ ६२ ॥ **************************

॥ कुमुदेति ॥ कुमुदवनंअपगताश्रीर्यस्यतदपश्रिविगतशोभं । गोऽस्त्रियोरुपसर्जनस्येति

प्रविकसतिचिरायद्यौनिताशेषलोकेदृशशतकरमूर्त्तावक्षिणीवद्भिनी

ये । सितकरवपुषासौलक्ष्यतेसम्प्रतिद्यौर्विगलितकिरणेनव्यङ्गिते

केक्षणेव ॥ ६३ ॥ कुमुदवनमपश्रिश्रीमदम्भोजखण्डंत्यजति

मुदमुलूकःप्रीतिमांश्चक्रवाकः । उदयमहिमरश्मिर्यातिशीतांशु

रस्तंहतविधिललितानांह्रीविचित्रोविपाकः ॥ ६४ ॥ *** 

॥ ६४ ॥

इस्वत्वं । अम्भोजखण्डंश्रीमत्शोभायुक्तंउलूकोपिचकोमुदंत्यजतितस्यदिवाभीतत्वाद्दि

निभावः । चक्रवाकःप्रीतिमान्रजनीविरहाभावत्वात्तस्येतिभावः । अहिमरश्मिरुष्णां

शुरुदयंयातिहिमांशुरिन्दुरस्तमदर्शनंयाति । अस्तमित्यव्ययंकथमेतद्वैपरीत्यमतआह

हतेति । हतविधिललितानांदुष्टदैवचेष्टितानांविपाकःपरिपाकःततत्कर्मानुरू

पफलदानप्रकारइतियावत्विचित्रोविविधःनत्वेकविधइत्यर्थः । ह्रीतिविस्मयेसाम्ये

ह्रिह्रौचविस्मयेइत्यमरः । विधिविपाकवैचित्र्याज्जगद्वैचित्र्यमुत्पद्यतेइतिकारणेनका

र्थं समर्थनरूपोऽर्थान्तरन्यासः ॥ ६४ ॥ ********************** ॥

॥ क्षणमिति ॥ अनुहिनधाम्नि उष्णांशौ दिग्वध्व इवेत्युपमितसमासः । तासां दि-
ग्वधूनां पाणिं गृह्णातीति पाणिग्राहो निजभर्तुरिव पाणिग्राहवत् । तत्र तस्येवेति तत्रार्थे व-
तिः । क्षणं प्रोष्य प्रवासं कृत्वा । प्रपूर्वाद्वसधातोः क्त्वान्तस्य समासेन ल्यपि वचिस्व-
पीत्यादिना सम्प्रसारणं । भूयः पुनरपि पुरस्तात्पूर्वस्यां दिशि मार्गे चोपगतवत्यागतवति स-
ति असौ चन्द्र उपपतिर्जार इव । जारस्तूपपतिः समावित्यमरः । स्रंसमानं स्रुतो गलद-
भिमानः । शैषिकः कप्प्रत्ययः । स्रस्तवस्त्रश्च नीचैर्नम्रः पश्चिमान्तेन पश्चिमदिक्कोणे-

क्षणमनुहिनधाम्नि प्रोष्य भूयः पुरस्तादुपगतवति पाणिग्राहवद्दिग्व-
धूनाम् । द्रुततरमुपयाति स्रंसमानं पुंश्चलोऽसावुपपतिरिव नीचैः पश्चि-
मान्तेन चन्द्रः ॥ ६५ ॥ प्रलयमखिलतारालोकमह्नाय नीत्वा श्रिय-
मतिशयशोभां सानुरागां दधानः । गगनसलिलराशिं रात्रिकल्पाव-
साने मधुरिपुरिव भास्वानेष एकोऽधिशेते ॥ ६६ ॥ *****

न केनचिदपरद्वारेण द्रुततरमपयात्यपसरति यथा पूर्वद्वारेण निजपतावागते पश्चान्मार्गे-
णोपपतिरपसरति तद्वदित्यर्थः ॥ ६५ ॥ ****************** ॥

॥ प्रलयमिति ॥ अखिलस्तारालोको लोक इव तारानक्षत्रं तमखिलतारालोकमह्नाय झा-
क् प्रलयं क्षयं नीत्वा अस्तमेव यतो नास्त्यतिशयः सोऽनतिशयास्सर्वातिशायिनी श्रीर्महिमा यस्य
सोऽनतिशयश्रीः सानुरागामुदयरागवतीं श्रियं शोभामन्यत्र सानुरागमनुरागवतीं श्रियं रमां
दधानः एवं भास्वानेको मधुरिपुर्विष्णुरिव रात्रिः कल्पावसानं कल्पान्त इव तस्मिन् रात्रि-
कल्पावसाने गगनं सलिलराशिरिव तं गगनसलिलराशिमधिशेतेऽधितिष्ठति अत्र मधुरि-
पुरिवेति वाक्यगतोपमैव समासेनोपमानं प्रसाधिकेति सर्वत्रोपमितसमासाश्रयणमेवोचितं

॥ ६६ ॥ ****************************** ॥

॥ ज्ञातेति ॥ ज्ञातसकलजगद्विबोधः ज्ञाताखिलजगत्प्रबोधः विधूतो विक्षिप्तोऽन्धकारस्योदय उज्जृम्भणं येन सो विधूतान्धकारोदय इति महागुणोक्तिः । दोषमाह क्षयिता नाशिता कुमुदानां नारकाणां च श्रीर्येन सः कामिनः स्त्रीपुंसान्वियोगं नयन्प्रापयन् । तथापि बहुतरगुणस्य पूर्वोक्तमहागुणस्य दर्शनादभ्युपेतो लोकैरङ्गीकृतोऽल्पदोषः पूर्वोक्त एव यस्य सः । एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्क इति न्यायादिति भावः । अत एव बहीनोक्तनार्थो यमह्नां नायकः प्रभुः सूर्यो हे वरद कामद नव सुप्रातं सुप्रभातं करोतु । आशिषि लिङ्लोटाविति आशीरर्थे लोट् । शोभनं प्रातर्यस्येति सुप्रातः शोभनप्रातवानुच्यते । सुप्रा

ज्ञातसकलजगद्विबोधो विधूतान्धकारोदयः क्षयितकुमुदनारकश्रीर्वियोगं नयन्कामिनः । बहुतरगुणाद्दर्शनादभ्युपेताल्पदोषः कृतीत
ववरद करोतु सुप्रातमह्नामयं नायकः ॥ ६७ ॥ *****

इति श्रीशिशुपालवधे महाकाव्ये माघकृतौ प्रत्युषवर्णनो नामैकादशः सर्गः ॥ ११ ॥ ************

तसुज्वेत्यादि बहुव्रीहावचप्रत्ययान्तो निपातितः अत्र भावप्रधानो निर्देशः नव सुप्रातं सुप्रभातं त्वं करोत्वित्यर्थः । महामालिनी वृत्तमेतत् यदि हन युगलं ततो वेदरेफैर्महामालिनी नमिनलक्षणात् ॥ ६७ ॥ ******************* ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीण श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघकाव्यव्याख्याने सर्वङ्कषाख्ये एकादशः सर्गः ॥ ११ ॥ ********* ॥



॥ एवम्प्रभातम्वर्णयित्वाभगवतःप्राभातिकप्रस्थानवर्णनायप्रक्रमते इत्थमिति । इत्थम्भूते पू
र्वसर्गोक्तविधेइत्यर्थः । प्रगेप्रातःकाले । सायंसायेप्रगेप्रातरित्यव्ययेष्वमरः । अथशय्यो
त्थानानन्तरंरथाश्वेभनिषीदन्तीतिरथाश्वेभनिषादिनांरथेषुअश्वेषुइभेषुचस्थितानामित्य
र्थः । नृपाणांगणःतोरणाद्भगवतःबाह्यद्वाराद्बहिः । अपपरिबहिरञ्चवःपञ्चम्येतिपञ्च
मीसमासविधानाज्ज्ञापकात्पञ्चमी । तोरणोऽस्त्रीबहिर्द्वारमित्यमरः । प्रस्थानकाले
प्रयाणकालेक्षमउचितोवेषःआकल्पःआकल्पवेषौनेपथ्यमित्यमरः । तस्यकल्पनयास
म्पादनेनकृतःक्षणक्षेपःक्षणविलम्बोयेनतमच्युतंहरिमुदैक्षतप्रतीक्षितवानित्यर्थः । अ
त्राच्युतविलम्बस्यविशेषणगत्याप्रतीक्षणंहेतुत्वात्पदार्थहेतुकङ्काव्यलिङ्गंअस्मिन्सर्गेविष

इत्थंरथाश्वेभनिषादिनाम्प्रगेगणोनृपाणामथतोरणाद्बहिः । प्रस्था
नकालक्षमवेषकल्पनाकृतक्षणक्षेपमुदैक्षताच्युतम् ॥ १ ॥ *
स्वक्षंसुपत्रङ्कनकोज्ज्वलद्युतिञ्जवेननागान्जितवन्तमुच्चकैः । आ
रुह्यतार्क्ष्यंनभसीवभूतलेययावनुद्घातसुखेनसोऽध्वना ॥ २ ॥

मपादयोर्जगतमिन्द्रवंशावृत्तंस्यादिन्द्रवंशाततजैरसंयुतैरितिलक्षणात् । समपादयोस्तु
कागतमेववंशस्थंवृत्तम् । जतौतुवंशस्थमुदीरितंजराविति लक्षणात् । तदेवमुभयमे
लनादुपजातिभेदोयं अतएवत्रिष्टुभीन्द्रवज्रोपेन्द्रवज्रालक्षणानन्तरं स्यादिन्द्रवज्राय
दितौजगौगः उपेन्द्रवज्राजतजास्ततोगौः अनन्तरोदीरितलक्ष्मभाजौपादौयदीयावुप
जातयस्ताइत्युक्तोक्तंइत्थंकिलान्यास्वपिमिश्रितासुवदन्तिजातिष्विदमेवनामेति ॥ १ ॥
॥ स्वक्षमिति ॥ सहरिःशोभनोऽक्षश्चक्रधारणदारुभेदोयस्यतंस्वक्षं । स्यादक्षश्चक्रधा
रणइतिवैजयन्ती । अन्यत्रशोभनेन्द्रियं । यथाक्षमिन्द्रियमित्यमरः । सुपत्रंशोभनं
पत्रंवाहनंयस्यतमित्यर्थः अन्यत्रसुपक्षं । पत्रंवाहनपक्षयोरित्यमरः । कनकोज्ज्वलद्युतिं

धनैर्वार चनावनं अन्यत्र कनकवदुज्ज्वलद्युतिं कनकवर्णं । जवेन नागान् गजान् गजानुर
गांश्च जितवन्तस्तेोऽधिकवेगमित्यर्थः । अन्यत्र नागकमित्यर्थः उच्चैः स्त्रनंतं तार्क्ष्यैरथं गरुडं
च । तार्क्ष्यः स्यात् स्वकर्णाख्येवृक्षेरथतुरङ्गयोः तार्क्ष्यैरसाञ्जनेतार्क्ष्यो गरुडेगरुडाग्रजा
इति विश्वः । अथ रुद्धा नभसीव भूतले अनुद्धाते नाप्रतिघाते नसुख सुगमे नेनाध्वना
यथै गरुडमारुह्य नभसीव रथमारुह्य भूतलेऽप्यप्रतिहतं ययौ गरुडवदेव न क्व यस्यापि सर्वत्रा
प्रतिहतगतिश्चचारेत्यर्थः नायं श्लेषः प्रकृताप्रकृतवादेऽपि तार्क्ष्यमिति विशेष्य श्लेषाद्योगात्
न्यत्राप्रसङ्गाच्च श्लेषसङ्कीर्णैवमुपमा ॥ २ ॥ ******************* ॥
॥ हस्तेति ॥ अत्र नृविशेषणानि शार्ङ्गिण्यपि विभक्तिविपरिणामेन योज्यानि । हस्तस्थितैः

हस्तस्थिताखण्डितचक्रशालिनन्दिजेन्द्रकान्तं श्रितवक्षसंश्रिया ॥
सत्यानुरक्तं नरकस्यजिष्णवोगुणैर्नृपाः शार्ङ्गिणमन्वयासिषुः ॥ ३ ॥
मुग्धैः सनारैर्मुकुलोद्गतः स्थुलैः कुमुद्वतीनाङ्कुमुदाकरैरिव । व्यष्टम्भ
यागश्च वियोगवेदनाविदूननारीकमभूत्समन्ततः ॥ ४ ॥ ***

यितथोक्ताः । अन्यत्र चक्रं सुदर्शनंतच्छालितं द्वि
अखण्डितैश्चक्रैः खाभिःशालन्त इतितथोक्ताः । अन्यत्र चक्रं सुदर्शनं
जेन्द्रकान्ताः ब्राह्मणोत्तमप्रियाः अन्यत्र द्विजेन्द्रश्चन्द्रः । तस्मात्सोमराजानो ब्राह्मणा इति
श्रुतेः । अतएव द्विजराजः शशधर इत्यमरः । तद्वत्कान्तं सुन्दरं श्रिया शोभया श्रितवक्षसो
धामैरक्ताः । अन्यत्र रमयाऽधिष्ठितोरस्कं सत्ये सत्यवचनेऽनुरक्ताः । अन्यत्र सत्यायां स
त्यभामायामनुरक्तं । नरकस्य जिष्णवः अन्यत्र नरकासुरस्य जेतारं । ग्लाजिस्थश्चग्स्नु
च । नरकोनिरयेदैत्येइति विश्वः । एवम्भूता नृपा एवम्भूतं शार्ङ्गिणं गुणैर्विनयादिभिर्हेतु
ना अन्वयासिषुः अनुजग्मुः गुणैः पूर्वोक्तैरन्वकार्षुश्च । यातेर्लुङि ङ्लेः सिच् ॥ ३ ॥
॥ मुग्धैरिति ॥ मुग्धैः सनारैः सरज्जूभिः सकर्णिकैश्च मुकुलोद्गतैर्वहनसौकर्यायसंको

चितैः । अम्बरमणिविकासिस्यान्मुकुलनं नीवैरन्नैरिति यावत् । कुमुदाकरैः कु
मुदहृदैरिवोपलक्षितं मन्थ च सूलैरिव कुमुदाकरैरुपलक्षितं वियोगवेदनया विरहव्यथ
याविदूनाः परितप्ताः । स्वादिभ्य इति निष्ठानत्वं । मानार्थो यस्मिन्नन्तयोरुक्तं द्वयोरपि
वियोगकातरत्वादिति भावः । नद्यूनस्येति कप् । कुमुदान्यासु सन्तीति कुमुद्वत्यः कु
मुदप्रायाः भूमयः । कुमुद्वान्कुमुदप्राय इत्यमरः । कैरविण्येव कुमुद्वती कैरविण्य
मिति विश्वः । कुमुदनडवेतसेभ्यो ड्मतुविति ड्मतुप् प्रत्ययः । मादुपधायाश्चेति मस्य
वत्वं । नासां कुमुद्वतीनां सम्बन्धि व्युष्टप्रभातं । व्युष्टं प्रभातं प्रत्युषमित्यभिधानचिं
तामणिः । न त्र किञ्चित्करत्वात्तत्सम्बन्धित्वं प्रयाणं च तेना नामिति शेषः । तदानीं
ककालेसमुत्कारीण्या अन्योन्यस्य दुःसममभूत् । व्युष्टप्रयाणयोर्द्वन्द्वेपि समुदायविवक्षायामभू

उत्क्षिप्तगात्रः स्मविडम्बयन्नभः समुत्पतिष्यन्तमगेन्द्रमुच्चकैः । आ
कुञ्चितप्रोहनिरूपितक्रमं करेणुरारोहयते निषादिनम् ॥ ५ ॥ उ

दित्येकवचनं व्युष्टं प्रयाणं च द्वयमपि सममभूदित्यर्थः । अत्र वर्ण्यत्वेन प्रकृतस्य प्रयाणस्या
प्रकृतव्युष्टसाम्योक्तेरुपमाक्षेपसङ्कीर्णम् ॥ ४ ॥ ****************** ॥

॥ उत्क्षिप्तेति ॥ उत्क्षिप्तगात्र उन्नमितपूर्वकायः अत एव नभः स्तनामूनि समुत्पतिष्यन्तं उत्प
तनोद्युक्तं अगेन्द्रं महाद्रिं विडम्बयन्ननुकुर्वन्नित्युत्प्रेक्षा । अभूतोपमेति केचित् उच्चकैरुन्न
तः करेणुरिभः करेणुरिभ्यां स्त्री नेभे इत्यमरः । आकुञ्चितेनानमितप्रोहेन जानुना । अङ्घ्रि
प्रोह इति विश्वः । तत्र निरूपितक्रमं दत्तपादन्यासं निषादिनं यन्तारं आरोहयते स्वस्क
न्धमेव स्वात्मन्यारोपयतीत्यर्थः । रोहं गत्यर्थत्वाद्गतिबुद्धीत्यादिना अणिकर्तुर्निषादिनः क
र्मत्वं । अत्र कर्त्रभिप्राये णिचस्तेन आत्मनेपदे सिद्धे अचोऽयं वैचित्र्यख्यापनार्थं कर्त्रर्थं
भिप्रायेपि रोहयते आत्मनेपदं अणिकर्मणः करेणोः

नत्वेनेव शृंखलाकास्ते च यर्थान्किमर्थं चादिति नानुपत्नत्वं श्रुत मन्यक मौर्घ्यं मित्युक्ताने नकर्मेनात्र
निषेधात्कार्यं निषादि निकर्मण्यात्मनेपदं स्तव्यं अन्येषां मतं भाष्यकारस्यानुदर्शनत्वे भूत्यात्
इङोन्युदाहरणादन्यकर्तृ कमस्थानिरिक्तकर्मत्वएवानिषेधो विवक्षितइति कैयटः गदेनत्तल्म
ग्विवेचितमस्माभिः किरानार्जुनीयटीकायां घण्टापथेसंततं दर्शयतेनतस्मपद्यत
भातोक्तिः ॥ ५ ॥ * * * * * * * * * * * * * * * * * * * * * * * * * ॥
॥ खैरमिति ॥ तुरङ्गिणोऽश्वारोहाःपुरःपूर्वं खैरं मन्दं वल्गनंयद्रास्फालनंपाणिजवेना
भ्यंघट्टनंतेनलालितान्तनुपादितान्त्वाजिनोवेगानित्यर्थः । अतएवस्फुरत्तनून्कम्पि
तदेहान्तुरङ्गमानश्वान्दर्शितं लाघवशैघ्र्यंयास्तुताः क्रियाः उत्पतनकर्माणियेषान्तेवल्गः
कश्यास्तु कोटिः वल्गःपश्चार्धभागे स्यादिति विश्वः । तत्रविलग्नःसक्तएकाएकोकंसवल्गोयेषु

रङ्गतास्फालनलालितान्पुरःस्फुरत्तनूद्दर्शितलाघवक्रियाः । वल्ग
विलग्नैकसवल्गपाणयस्तुरङ्गमानारुरुहुस्तुरङ्गिणः ॥ ६ ॥ *
अहायया वन्न चकार भूयसे निषेदिवानासनबन्धमध्वने । तीव्रोत्थि
तास्तावदसह्यरंहसो विशृङ्खलं शृङ्खलकाः प्रतस्थिरे ॥ ७ ॥ *

तेआरुरुहुआरूढाःस्वभावोक्तिः ॥ ६ ॥ * * * ॥
वत्तीहनपाणिर्येषान्तेनथोक्ताः सन्तःआरुरुहुःआरूढाःस्वभावोक्तिः
॥ अहायेति ॥ निषेदिवानुपर्युपविष्टः निषादीनि शेषः । भाषायांसदवसश्रुवइ निक
सुप्रत्ययः । भूयसेदरीयसेअध्वनेभूयांसमध्वानंगन्तुमित्यर्थः । क्रियार्थोपपदस्येति
चतुर्थी अहायभटितिं । द्राक्भटित्यंजसाह्नायेत्यमरः । यावदासनबन्धंदूराध्वगम
नौपायिकमानसविशेषंयावन्नचकारतावत्तीव्रतीक्ष्णंउत्थिताः असह्यरंहसोदुःसहवे
गाःशृङ्खलकाःकरभाउष्ट्रभेदाः । करभाःस्युःशृङ्खलकादारवैःपादबन्धनैरित्यमरः । वि
शृङ्खलमनर्गलंयथातथाप्रस्थिताः समवप्रविभ्यःस्थ इत्यात्मनेपदं । एषापिस्वभावे

न्तिः ॥ ७ ॥ ******************************** ॥

॥ गण्डेति ॥ सुखमक्लिष्टं यथा तथा प्राप्तुं गन्तुं मनो यस्य स प्राप्तुमनाः अन्यत्र सुखमानन्दल
ब्धकामः । तुङ्कामनसोरपीति मकारलोपः । शोभनः सारथिर्यस्य तत्सुसारथिः अन्यत्र
सुसहायवान् । कश्चित्कोपि रथी कामी च गण्डे चिह्नैः उज्ज्वलामन्यत्र कपोलोज्ज्वलां । ग
ण्डः कपोले चिह्ने चेति विश्वः । उज्ज्वलनाभिर्विलमध्यं ययोस्ते चक्रे रथाङ्गे यस्यास्तयोज्ज्व
लनाभिचक्रया अन्यत्रोज्ज्वलं नाभिचक्रं नाभिमण्डलं यस्यास्तया । नाभिः प्राण्यङ्गके क्षेत्रे
चक्राङ्गे चक्रवर्त्तिनोरिति विश्वः । नवया प्रत्यग्रया उदुन्नता अराश्चक्रशलाकाः । अ
रः शीघ्रे च चक्राङ्ग इति विश्वः । नवां श्रिया अन्यत्र उदरस्य मध्यस्य श्रिया शोभया विराज

गण्डोज्ज्वलामुज्ज्वलनाभिचक्रया विराजमानां नवयोदरश्रिया । क
श्चित्सुखम्प्राप्तुमनाः सुसारथी रथीं युयोजाविधुरां वधूमिव ॥ ८ ॥ उ
त्थातुमिच्छन् विधृतः पुरो बलान्निधीयमाने भरभाजि यन्त्रके । अर्द्धो
ज्झितोद्गारविघर्घरस्वरः स्वनामनिन्ये रवणः स्फुटार्थताम् ॥ ९ ॥

मानां विगता धूरग्रं यस्याः सा विधुरा । धूः स्त्री क्लीबे यानमुखमित्यमरः । ऋक्पूरब्धूरित्या
दिना समासान्तः । सा न भवतीत्यविधुरा तां साधुरामित्यर्थः । अन्यत्राविधुरामविकलां र
थीं शकटीं । वह्वादिभ्यश्चेति विकल्पेन ङीष् । वधूमिव युयोज योजयामास । अत्र शब्द
मात्रसाधर्म्यात्सभङ्गाभङ्गपदमिश्रणादुभयगोचरत्वाच्च प्रकृताप्रकृतगोचरगोचरः शब्दार्थ
श्लेषः ॥ ८ ॥ ******************************** ॥

॥ उत्थातुमिति ॥ उत्थातुमिच्छन् उत्थाय गन्तुमिच्छन्नित्यर्थः । अत एव पुरोग्रे बलाद्विधृतो
गृहीतः । रौतीति रवणः उष्ट्रः । रुशब्द इति धातोश्चलनशब्दार्थादकर्मकाद्युजिति युच्प्रत्य
यः । भारारोपणाय यन्त्ररूपेण निर्मिते भरभाजि भारयुक्ते यन्त्रके गोण्यादौ निधीयमाने सति

बलादुत्थातुमिच्छन्परोमुखभागेविधृतः परिगृहीतःएवंसैरचारव्याघातनैाभग्नैरित्यभग्नैा
भिःनेनोद्गारेणस्वजग्धपिचुमन्दादिपत्ररसनेनविभ्रभर्रोविषमःस्वरोयस्यसस्वरःउष्ट्रः
स्वनामस्फुटार्थनांनिन्ये। रौतीतिरवणइतिव्युत्पन्नंस्वनामययार्थमकरोदित्यर्थः॥ ९ ॥
॥ नस्येति ॥ नस्यानासिकायानस्तादेशः। नासिकाभवानस्या। दिगादित्वाद्यत्। नस्यां
नासिकाप्रान्तरज्जौगृहीतोऽपि विषाणयोर्युगंधुवन्विधुन्वन्शृङ्गद्वयंकंपयन्ससूत्कारे
तिससूत्कारइतिशब्दानुकरणं अमर्षजःसशब्दनिश्वासोवाससूत्कारंयथातथाविवर्त्तितं
त्रिकंपृष्ठवंशाधरसन्धिर्येन। पृष्ठवंशाधरेत्रिकमित्यमरः। उक्षतरोमहोक्षःपृष्ठेनिधातु
ञ्जनेनानुक्षणमुद्धृतां गोणीनप्रतीच्छतिस्मनस्वीकृतवान्निधातुमवसरंनददावित्य

नस्यागृहीतोपिधुवन्विषाणयोर्युगंससूत्कारविवर्त्तितत्रिकः
। गोणींजनेनस्मनिधातुमुद्धृतामनुक्षणंनोक्षतरःप्रती
च्छति ॥ १० ॥ नानाविधाविष्कृतसामजस्वरःसह
स्रवर्त्माचपलैर्दुरध्ययः। गान्धर्वभूयिष्ठतयासमानतांससा
मवेदस्यदधौबलोदधिः ॥ ११ ॥ *******

*************************** ॥
र्थः ॥ १० ॥ **************
॥ नानेति॥ सामजाःगजाः। सामजोगजस्सामर्थ्याद्विनिविष्टः। नानाविधमाविष्कृतास्सा
मजानांस्वराःध्वनयोबृंहितानियस्मिन्सःसहस्रवर्त्माबहुभिर्मार्गैर्गच्छन्। गन्धर्वैर्निर्गं
धर्वाःअश्वाः। वाजिवाहार्वगंधर्वाइत्यमरः। तैर्भूयिष्ठतयाचपलैरस्थिरैःदुरध्ययोदुःप्रा
पः। इणगताविति तस्मात्कृच्छ्रार्थेखल्। ईदृशःसबलोदधिःसेनासमुद्रः सामवेद
स्यसमानतांदधौतत्समोऽभूदित्यर्थः। सामवेदोपिबहुधाविःकृतबृहद्रथंतरादिसामो
च्चितस्वरःसहस्रशाखत्वात्सहस्रवर्त्मागांधर्वंगानंगानबहुत्वाच्चपलमतिभिःअध्येतुमश

कयइत्यर्थः । इङ्अध्ययनेइत्यस्माद्धातोःखलिद्दुरध्ययइत्येवरूपं ॥ ११ ॥

॥ प्रत्यन्येति ॥ अन्यनागंप्रतिचलितःऊर्ध्वायतदंतमंडलंमूर्धानंधुन्वन्कम्पयन्द्विर

दः कुम्भमतीक्ष्णंअङ्कुशंनिरस्यान्यमकुम्भमं कुशंदधताच्चरावतानिषादिनाअरोधिरुद्धः ॥

॥ १२ ॥ ******************************* ॥

॥ संमूर्च्छन्निति ॥ मूर्च्छामोहसमुच्छ्राययोरितिधातुःसंमूर्च्छन्नुच्छ्रायंगच्छन्प्रचुरीभ

वन्उच्छृंखलोऽनर्गलःसर्वव्यापीशंखस्यनिःस्वनोयस्मिन्शार्ङ्गिणिप्रयातेयातुमुपक्रान्ते

पटहस्यस्वनःद्वयेषामुभयेषामपिमेदिनीभृतांराज्ञांपर्वतानांचमहांत्यपिसत्त्वानिबलानि

प्रत्यन्यनागञ्चलितस्त्वरावतानिरस्यकुम्भन्दधताऽन्यमङ्कुशम् । मू

र्द्धानमूर्ध्वायतदन्तमण्डलन्धुवन्नरोधिद्विरदोनिषादिना ॥ १२ ॥

संमूर्च्छनुच्छृङ्खलशङ्खनिःस्वनःस्वनःप्रयातेपटहस्यशार्ङ्गिणि ।

सत्वानिनिन्येनितरांमहान्त्यपिव्यथान्द्वयेषामपिमेदिनीभृताम् ॥

॥ १३ ॥ कालीयकक्षोदविलेपनश्रियन्दिशन्दिशामुल्लसदंशु

मद्द्युति । खातङ्खुरैर्मुद्गभुजामिवप्रथेगिरेरधःकाञ्चनभूमिजं

रजः ॥ १४ ॥ ***************

भूतानिचनितरांव्यथांनिन्येकृष्णस्यपटहश्रवणाद्धात्वांबलान्यभिभवशंकयाव्यथितान्यास

न्यथागिरिस्थिताःसिंहादयोजन्तवस्तुकिमिदमितिससाध्वसाआसन्नित्यर्थः । व्यवसा

स्वयेभावेचपिशाचादौगुणेबलेद्रव्यात्मभावयोस्त्वेवसत्त्वंप्राणेषुजंतुष्विति शाश्वतः ॥१३॥

॥ कालीयेति ॥ कालीयंकुङ्कुमंकाश्मीरजन्म । घुसृणंकालीयंकुङ्कुमंबिन्दुरितिशाश्व

तः । कालीयकक्षोदैःकुङ्कुमचूर्णैःकृतानुलेपनश्रियंदिशांदिशन्ददत् । उल्लसदिति

उद्यदादित्यसमानद्युतिर्यस्यतन्मुद्गभुजामश्वानांखुरैःखातंविदारितङ्काञ्चनभूमिजंरजो

गिरेरधोगुहत्वाद्गिरेरधस्तादेवविपर्यये। विस्तिर्णमभवन् ॥ १४ ॥ ****** ॥

॥ मन्द्रैरिति ॥ मन्द्रैर्गम्भीरैः। मंद्रस्तुगम्भीरइत्यमरः। रथमण्डलस्वनैःनादृशंतद्रूपमेवगजानांबृंहितंनिजुह्नुवेनिरस्तृतं। गजध्वनिरेकरूपत्वेनरथशब्दान्नपृथगश्रावीत्यर्थः। तारैरुच्चैर्मन्द्रस्वरविलक्षणैस्तुरङ्गह्रेषितैःपरभागलाभतस्तेगुणादृशध्वनिगुणभेदलाभेपरिस्फुटैर्बभूवेतुरगह्रेषयोःसुव्यक्तायवभ्रुश्रुविरेइत्यर्थः। बृंहितंकरीणांश्चहेषाह्रेषाचवाजिनांबभूवेइति। भावेलिट्। निजुह्नुवइतिकर्मणिलिट्॥ १५॥

॥ अन्वेतीति ॥ अन्तिकागताङ्करेणुकाङ्करिणीअन्वेतुकामोअनुगंतुकामःअंकुशंगृह्णातीत्यंकुशग्रहोनिषादोवमतोयेनसः निषादिनासांकुशङ्कृतंनिरोगतंअङ्कुशाकर्षेणतिर्यग्भूतंशिरोमस्तकंउद्वहन्गजः अग्रेनिकरिणीग्रहणायप्रसारितकराग्रेभूत्वास्तु

मन्द्रैर्गजानांरथमण्डलस्वनैर्निजुह्नुवेनादृशमेवबृंहितम्।
तारैर्बभूवेपरभागलाभतःपरिस्फुटैस्तेषुतुरङ्गहेषितैः॥ १५॥
अन्वेतुकामोवमताङ्कुशग्रहस्तिरोगतंसाङ्कुशमुद्वहन्शिरः।
स्थूलोच्चयेनागमदन्तिकागताङ्गजोग्रयाताग्रकरःकरेणुकाम् ॥ १६॥ यान्तोऽस्पृशन्तश्चरणैरेवावनिञ्जवान्यकीर्णाः।
अद्यापिसेनातुरगाःसविस्मयैरलूनपरभितःप्रकीर्णकैः। ॥ १७॥ ********
क्षाइवमेनिरेजनैः

[illegible] लोच्चयेनगतिविशेषेणागमत्जगाम। गजमध्यगतौस्थूलोच्चयःसाकल्यमुच्चयोरितिरन्निकारणः॥ १६॥ ******************************* ॥

॥ यान्तइति ॥ जवाद्वेगाच्चरणैरवनिमस्पृशन्तइवयांतःसेनातुरगाःअभितःप्रकीर्णैर्हृभयतःप्रवृत्तैःप्रकीर्णकैश्चामरैः। चामरन्तुप्रकीर्णकमित्यमरः। कण्ठभूषणचामरैर्

तुभिरश्वानिश्रबूनवक्षाङ्कवेतिसविस्मयैर्जनैर्मेनिरे पूर्वंतुरगाणामपिपक्षाआसन्पश्चात्के
नवित्कारणेनदैवैःपक्षच्छेदःकारितइतिप्रसिद्धिः ॥ १७ ॥ ********** ॥
॥ ऋटज्वीरिति ॥ ऋटज्वीरवक्राःसलावचूडाःचलितकंठभूषणाः । शिरःशिखाभूषणेपुचूडे
त्यादवः । चलितशिरस्थिइतिवाकंधराःशिरोधराःअवनत्यनितत्यद्धानैःघर्घरारवैः । घ
र्घराक्षुद्रघण्टीस्यादथवाघर्घरारवाइतिशब्दानुकरं तत्घर्घरारवैःक्रमेलकैरुष्ट्रैरवि
लंबितक्रमंक्रमःपदक्षेपःद्रुतपादक्षेपंयथातथामहत्यपिभूमिस्तत्क्षणमेवचिच्छिदेअति
क्रांता ॥ १८ ॥ ****************************** ॥

ऋटज्वोर्द्धानैरवनत्यकन्धराःसलावचूडाकुलघर्घरारवैः । भूमिर्मह
त्यप्यविलम्बितक्रमङ्क्रमेलकैस्तत्क्षणमेवचिच्छिदे ॥ १८ ॥ तूर्णं
प्रणोदाहननादमुच्चकैःप्रणोदितम्बेसरयुग्ममध्वनि । आत्मीयने
मिक्षतसान्द्रमेदिनीरजश्चयाक्रान्तभयादिवाद्रवत् ॥ १९ ॥
व्यावृत्तवक्त्रैरखिलैश्चमूचरैर्व्रजद्भिरेवक्षणमीक्षिताननाः । बला
द्वरीयकुचकम्प्रकञ्चुकंययुस्तुरङ्गाधिरुहोवरोधिकाः ॥ २० ॥

॥ तूर्णमिति ॥ प्रणेत्रासारथिनाप्रणोदितंगमनायप्रेरितं । अतएवउच्चकैरुच्चैस्तरांह्नन
नादंयथातथावेसरयुग्मं । सङ्करोऽश्ववेसरः । वेसराभ्यांयुग्मंशकटमात्मीयनेमिश्चक्रधा
राखनेमिक्षतस्यसांद्रस्यमेदिनीरजसश्चयेनसमूहेनपदाक्रमणं तद्भयादिवतूर्णमध्वनि
अद्रवत् । आत्मीयनेमिसमुद्भूतधूलिजालेनास्पृष्टंसतद्रुतमगमदित्यर्थः ॥ १९ ॥
॥ व्यावृत्तेति ॥ व्यावृत्तवक्त्रैर्विवृतमुखैर्व्रजद्भिरेवाखिलैश्चमूचरैःक्षणमीक्षिताननाःतु
रङ्गाधिरुहस्तुरङ्गानधिरुहंतीति । क्विप् । तुरङ्गाधिरूढाःअवरोधिकाःअवरोधस्त्रि
यःबलाद्भिसंचलैःगरीयैर्गुरुतरैस्तनैःकंप्रःकम्पनशीलःकञ्चुकोयस्मिन्कर्मणितद्यथा

चायवुः ॥ २० ॥ ***************************** ॥

॥ पादैरिति ॥ कूवरिणां रथानां। कूबरस्तुयुगन्धरइत्यर्थः। सएषामस्तीतिरथास्तेषां

पादस्वक्रैःपुरःपूर्वंविदारिताः ततोगजैःप्रकाममाक्रान्ततलाःभग्नेत्युक्तप्रकारेणपूर्वंभग्न

त्वादुन्नतैरनंतरैरुभयभागैःपूरितांतराःसमीकृतनिम्नप्रदेशाः यद्वा पूर्वंरथचक्रविदारि

ताद्भग्नोन्नताःअनन्तरंगजपतिपरिक्रमणेनपूरितान्तरप्रदेशाःभुवःकृष्टसमीकृतापूर्वंहलैः

कृष्टाअनन्तरंबीजवापनार्थंसमीकृताइवबभुःशुशुभिरे ॥ २१ ॥ ****** ॥

॥ दुर्दान्तमिति ॥ उरोविलंबिनःपर्याणतःपलायमानानत्रस्तंमतएवोत्प्लुत्यनिरस्तसा

पादैःपुरःकूबरिणांविदारिताःप्रकाममाक्रान्ततलास्ततोगजैः । भ

ग्नोन्नतानन्तरपूरितान्तराबभुर्भुवःकृष्टसमीकृताइव ॥ २१ ॥ दुर्दा

न्तमुत्प्लुत्यनिरस्तसादिनंसहासहाकारमलोकयज्जनः । पर्याणत

स्स्रस्तमुरोविलम्बिनस्तुरङ्गमम्प्रद्रुतमेकयादिशा ॥ २२ ॥ भूभृद्भि

रप्यस्खलिताःस्खलन्नतैरपह्नुवानाःसरितःपृथूरपि । अन्वर्थसंज्ञैवपरं

त्रिमार्गगाययावसङ्ख्यैःपथिभिश्चमूरसौ ॥ २३ ॥ *·*·*·*·*

दिनंस्वपृष्ठात्पातितावरोहंएकयादिशाद्रुतंपलायितंदुर्दान्तंदुर्विनीतंतुरङ्गमञ्जनःसहा

सहाकारमलोकयन्हास्यदर्शनजनितेनहाकारेणहासशब्देनचसहितंयथातथाअथ

वाहासहकृतेनहाकारवेणेनसहजनोऽवलोकितवान् ॥ २२ ॥ ******** ॥

॥ भूभृद्भिरिति ॥ उन्नतैरपिभूभृद्भिःभूधरैर्भूपैश्चास्खलिताअप्रतिहताःपृथुर्महतो

रपिसरितोयमुनाप्रभृतीर्नदीरपह्नुवानाःस्वमहिम्नाच्छादयन्तीत्रिभिर्मार्गैर्गच्छतीति

त्रिमार्गगागङ्गापरमत्यन्तमन्वर्थाअनुगतार्थासंज्ञात्रिमार्गगानामधेयंयस्याःसैवखलुत्रिभिरे

वमार्गैर्ययौनचतुर्थेनेत्यर्थः। असौचमूरसंख्यैःपथिभिर्ययौ अतोगङ्गयाप्यधिकाचमूरि

तिभावः। अत एव व्यतिरेकालंकारः। भेदप्राधान्ये साधर्म्यमुपमानोपमेययोः अधिका
ल्पत्वकथनाद्व्यतिरेकः स उच्यत इति लक्षणात् ॥ २३ ॥ ************ ॥

॥ त्रस्ताविति ॥ समासन्नस्य प्रत्यासन्नस्य करेणोरिभस्य सूत्कृतात् सूत्कारात् त्रस्तौ करभौ
वेसरौ। करभावेसरेप्युष्ट्रे इति सज्जनः। नियन्तरि सारथौ व्याकुले सत्यग्रं यथा तथा मुक्तर
ज्जुके त्यक्तप्रग्रहे सति क्षिप्ताः पतिताः अवरोधाङ्गना यस्मिन्कर्मणि तद्यथा तथा उत्पथेनाप
थेन। ऋक्पूरब्धूरित्यादिना समासान्तः। गां भूमिं विलङ्घ्य दूरमतीत्य लघ्वीं रथीं बभञ्ज
तुः भग्नवन्तौ। अत्र त्रासस्य विशेषणगत्या भञ्जनहेतुत्वात्पदार्थहेतुकं काव्यलिंगं स्वभावो
क्त्या संकीर्यते ॥ २४ ॥ ************************** ॥

त्रस्तौ समासन्नकरेणुसूत्कृतान्नियन्तरि व्याकुलमुक्तरज्जुके । श्रि
तावरोधाङ्गनमुत्पथेन गाम्बिलङ्घ्य लघ्वीङ्करभौ बभञ्जतुः ॥ २४ ॥
स्रस्ताङ्गसन्धौ विगताक्षपाटवे रुजा निकामम्बिकलीकृते रथे । आ
प्तेन तक्ष्णा भिषजेव तत्क्षणात्प्रचक्रमे लङ्घनपूर्वकः क्रमः ॥ २५ ॥

॥ स्रस्तेति ॥ स्रस्ता विश्लिष्टा। अङ्गयोरथांगयोरंगानां करचरणादीनां च संधयः संधि
भागा यस्य तस्मिन् विगतमक्षस्य चक्राधारकाष्ठस्याक्षाणामिन्द्रियाणां च पाटवं सामर्थ्यं य
स्य तस्मिन् तस्मिन् रथे स्यंदने शरीरे च। रथः स्यात्स्यंदने काय इति विश्वः। रुजा भङ्गेन
रोगेण च निकामं विकलीकृते सति आप्तेन हितेन तक्ष्णा वर्द्धकिना आप्तेन भिषजा वैद्येनेव।
तक्षा तु वर्द्धकिस्त्वष्टेत्यमरः। तत्क्षणं तस्मिन्नेव क्षणे। अत्यंतसंयोगे द्वितीया। लङ्घनं
पादेन क्रमणं उपवासश्च। लङ्घनं तूपवासे स्याद्गमने प्लवनेपि चेति विश्वः। तत्पूर्वकः
क्रमो विधिः प्रचक्रमे प्रक्रान्तः प्रायेण ज्वरादिचिकित्सया लङ्घनपूर्वकत्वादिति भावः श्लेषा
लङ्कारः ॥ २५ ॥ ************************** ॥

॥ धूर्भङ्गेति ॥ स्थाणौ कीले । स्थाणुः कीले स्थिरे हरे इति विश्वः । निषङ्गिणि सक्ते । अ नसि शकटे । क्लीबेऽनः शकटोऽस्त्री स्यादित्यमरः । धुरोऽक्षस्य भङ्गेन यः संक्षोभो विपर्या सः तेन विदारिता भिन्ना या उष्ट्रिका मृन्मयं मद्यभाण्डं । उष्ट्रिका मृत्तिकाभाण्डभेदे करभ योषितीति विश्वः । ततो गलता स्रवता मधुना मद्येन स्राविनि सिक्ते दूरवर्त्मनि दीर्घाध्वायेन मध्वन्नत्याः तत् पुरः पूर्वं लाभाय क्लान्तः क्रयोविक्रयणं येन स वणिक् क्षणं शुशोच । अत्र मधु स्रावधर्मत्वयोर्विशेषणगत्या शोकहेतुत्वात् काव्यलिङ्गभेदः ॥ २६ ॥ ******* ॥

॥ भेरीभिरिति ॥ भेरीभिराकृष्टानि निन्दितानि गुहामुखानि येन सः भेरीभ्यः ज्ञारभर्त्सित

धूर्भङ्गसंक्षोभविदारितोष्ट्रिकागलन्मधुस्राविनि दूरवर्त्मनि । स्थाणौ
निषङ्गिण्यनसि क्षणं पुरः शुशोच लाभाय कृतक्रयो वणिक् ॥ २६ ॥
भेरीभिराकृष्टमहागुहामुखो ध्वजांशुकैस्तर्जितकन्दलीवनः । उत्तु
ङ्गमातङ्गजिता लघूपलो बलैः स पश्चात् क्रियते स्म भूधरः ॥ २७ ॥
वन्येभदानानिलगन्धदुर्धराः क्षणान्तरक्षोदविनोदितक्रुधः । व्याल
द्विपा यन्तृभिरुन्मदिष्णवः कथञ्चिदाराद्‌पथेन निन्यिरे ॥ २८ ॥

नितान्तवाद्यमुखरमहागुहाद्वार इत्यर्थः । मुहुर्ध्वजांशुकैस्तर्जिताभिभर्त्सितानि कन्दली दलानि गुल्मपत्राणि येन सः उत्तुङ्गैर्मातङ्गैर्जिताः अलघूचपला स्थूलपाषाणा येन सः भूध रो रैवतकाद्रिः बलैः सैन्यैः पश्चात् क्रियते स्म पश्चात्कृतः स्वयं दूरगमनेन पृष्ठतः कृत इत्यर्थः उक्तविशेषमहिम्ना अधरीकृत इति च प्रतीयते लट् स्मे इति भूतार्थे लट् । आकृष्टेतिको प्र ने: कर्मणि क्तः अत्रादित्वान् षत्वेष्टुत्वं । अत्र पश्चात्करणस्याकृष्टादिपदार्थहेतुकत्वात् काव्य लिङ्गं तच्चोत्कर्षं प्रतीयमानाभेदाध्यवसायादि तिश्लेषभूतातिशयोक्तिः संकीर्णा ॥ २७ ॥

॥ वन्येभेति ॥ वन्येभदानानिलगन्धेन वनगजमदमारुतगन्धाघ्राणेन दुर्धराः क्रोधान्धाः

दर्घ्नेहाः । अतएवक्षणंतरुच्छेदेनविनोदितकुधःप्रतिगजासन्निधेवृक्षाणामङ्केनापनीतक्रोधाःउन्मदिष्णवोऽत्यंतमदशीलाः । अलंकृञ्नित्यादिनाइष्णुच् । व्यालद्विपाःदुष्टगजाःयंतृभिराधोरणैःकथंचिदारान्दूराद्पथेनमार्गेण । पथोविभाषेतिनिषेधविकल्पाद्वृक्पूरित्यादिनासमासांतः । अपथंनपुंसकमितिनपुंसकत्वं । निन्यिरेनीताः अत्रापिद्विपविशेषणानांतदुपमेयहेतुकत्वात्स्वभावोक्त्यासंकीर्यते ॥ २८ ॥ ******* ॥

॥ तैरिति ॥ वैजयंत्यःपताकास्तावनराजयइववनाभीराजन्तीतितथोक्तैःगिरिणांप्रतिच्छंदाःप्रतिनिधयस्तत्सदृशाइत्यर्थः । एतस्मादेवसप्टोपमालिंगाद्न्यत्राप्युपमितसमासाश्रवणं । तेमहामतङ्गजायेषुतैः । जनताजनसमूहास्तानद्यइववनास्तांशतानिप्रसर्पंति

तैर्वैजयन्तीवनराजिराजिभिर्गिरिप्रतिच्छन्दमहामतङ्गजैः । बह्वीः
प्रसर्पज्जनतानदीशतैर्भुवोबलैरन्तरयाम्बभूविरे ॥ २९ ॥
तस्थेमुहूर्तंहरिणीविलोचनैःसदृक्शिदृष्ट्वानयनानियोषिताम् । म
त्वाथसत्रासमनेकविभ्रमक्रियाविकारैर्गिमृगैःपलाय्यत ॥ ३० ॥

प्रवहंतियेषुतैस्तथोक्तैःतैर्बलैःसैन्यैर्बह्वीर्बह्वः बह्वादिभ्यश्चेतिविकल्पादीकारः । भुवोभूमयःअंतरयांबभूविरेअन्तरादूराःकृताइतिकान्ताइत्यर्थः । नकेवलंरैवतकाद्रिरेवेतिभावः । बलैर्वैपुल्याद्राच्छादिताइत्यर्थः । उक्तविशेषणावगतसादृश्याद्गृहीतभेदाःकृताइतिचगम्यते । एतेनाभेदाध्यवसायादेवास्याक्रमरूपांतरीकरणस्यवलविशेषणावगतसादृश्यस्यहेतुत्वात्तदंगभूतोपमासंकीर्णंपदार्थहेतुकंकाव्यलिंगंश्लेषमूलाभेदातिशयोक्त्यापितमितिसङ्करः । अन्तरशब्दात्तत्करोतीतिण्यंतात्कर्मणिलिट् । आम्प्रत्ययेभुवोऽनुप्रयोगः । २९ ॥ ********************* ****** ॥

॥ तस्थइति ॥ हरिणीविलोचनैःसदृंशिसदृशानि । नपुंसकस्याकृत्स्वचइतिनुम् ।

योषितां नयनानि दृष्ट्वा । मृगैः कुरङ्गैः कर्तृभिर्मुहूर्तमल्पकालं । मुहूर्तमल्पकालेस्त्री

त्रुटिकाद्वितयेपि चेति विश्वः । तस्थे स्थितं । हरिणीविलोचनशङ्कयेति भावः अथानंत

रमनेकविभ्रमक्रियाविलासक्रियाएवविकरायेवांतानिमत्वा सविलासानिवात्वेत्यर्थः सत्रा

संतभयं यथा तथा पलाय्य न पलायितं । हरिणीदुर्लभैर्विलासैर्योषितां निस्वया इति भा

वः । अतएव निश्चयांतः संशयोलङ्कारः । परापूर्वादयतेर्भावेलट् । उपसर्गस्यायता विति

लत्वं ॥ ३० ॥ ************************* ॥

॥ निम्नानीति ॥ अर्वतामश्वानां । वाजिवाहार्वगंधर्वहयसैंधवसप्तय इत्यमरः । अर्व

णस्त्रसावनञ इति तृ आदेशः । व्रजाः समूहाः । सादिभिरश्वारूढैः सयत्नमाकृष्टकशाः

निम्नानि दुःखादवतीर्य सादिभिः सयत्नमाकृष्टकशाः शनैः शनैः । उ

त्तेरुरुत्तालखुरारवं द्रुताः श्लथीकृतप्रग्रहमर्वतां व्रजाः ॥ ३१ ॥

अध्यध्वमारूढवतैव केनचित्प्रतीक्षमाणेन जनं मुहुर्धृतः । दार्ढ्यं

हि सद्यः फलदं व्यधत्त स्वखाद दासेरयुवा वनावलीः ॥ ३२ ॥

यद्यप्यश्वादेस्ताडिनी कशेत्यमरः । तयार्थं तनाडिनीवल्गयोः कृ

दृढगृहीतवल्गाः संतः । शनैः शनैर्दुःखात्कृच्छ्रान्निम्नानि निम्नभूप्रदेशानवतीर्य उत्ताल

श्रेणिदर्शनाद विरोधः । शनैः शनैर्दुःखात्कृच्छ्रात् श्लथीकृतप्रग्रहं शिथिलितवल्गं च यथा तथा द्रुताः सत्वराः सन्तः

खुरारवं उच्चतरशफशब्दं श्लथीकृतप्रग्रहं शिथिलितवल्गं च यथा तथा द्रुताः सत्वराः सन्त उ

त्तेरुः उत्प्लुविरे । निम्नेषु शनैरवतीर्यो ध्वदीर्घं धावंतीत्यश्वानां स्वभाव इति भावः । अतए

वस्वभावोक्तिः ॥ ३१ ॥ ************************* ॥

॥ अध्यध्वमिति ॥ दृढस्य भावो दार्ढ्यं कौशलं सद्यः फलदं कुतः यद्यस्मादध्यध्वमध्व

नि । विभक्त्यर्थेऽव्ययीभावः । अनश्चेति समासांतोऽच्प्रत्ययः नस्तद्धित इति टिलोपः ।

आरूढवतैव आरूढेनैव स्थितेन । निष्ठेनिरूढेः क्तवतुप्रत्ययः । जनं शनैः पश्चादागच्छं

नं स्वजनं प्रतीक्षमाणेन केनापि वस्तुं स्थितेति शेषः । मुकुर्धूर्तः स्यात् पिनोपिरासेरयवानरूणोष्ट्रः विशेषणसमासः । अग्रतो वनावलीस्थखादपुरः पिचुमंदादिकं भक्षयन्तास्त इत्यर्थः । न हि कुणलो वृथा कालं यापयतीति भावः । अत्र दाक्षिण्यापकत्व युतामान्यस्य न दिशेषण द्वारेण कौशलेनसमर्थन द्विशेषणसामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३२ ॥

॥ शौरेरिति ॥ शौरेः कृष्णस्य पताकिनी सेना । ब्रीह्यादित्वादिनिः । प्रतापेन हरितेज सा उपनतैर्नम्रैर्विधेयैरित्यर्थः । अत एवेतस्ततः समागतैः पार्श्वदेशाद्दागतैः प्रश्रयनम्रमूर्त्तिभिर्हरिसन्निधौ विनयनम्रविग्रहैः पृथिवीभृतां राज्ञां गणैर्हेतुना बहुच्छत्रतया असंख्या तापत्रवत्तया निमित्तेन एकानि केवलानि आतपत्राणि यस्याः सा एकातपत्रा एकतालमयी

शौरेः प्रतापोपनतैरितस्ततः समागतैः प्रश्रयनम्रमूर्तिभिः ।
एकातपत्रा पृथिवीभृतां गणैरभूद्बहुच्छत्रतया पताकिनी
॥ ३३ ॥ आगच्छतोऽनूचि गजस्य घण्टयोः स्वनं समाक
र्ण्य समाकुलाङ्गनाः । दूराद्पावर्त्तितभारवाहणाः पथोपस
सुस्त्वरितञ्चमूचराः ॥ ३४ ॥ ***********

अभूत् । आतपत्रातिरिक्तं न किंचिद् लक्ष्यत इत्यर्थः । एके मुख्यान्यकेवला इत्यमरः । बहु च्छत्राप्येकच्छत्रेति विरोधभासनाद्विरोधाभासोऽलंकारः ॥ ३३ ॥ ****** ॥

॥ आगच्छत इति ॥ अन्वंचतीत्यन्वङ् तस्मिन् अनूचि पृष्ठदेशे । ऋत्विगादीना क्विः प्रत्ययः । आगच्छतो गजस्य घंटयोः स्वनं समाकर्ण्य समाकुलांगनाः संभ्रान्तवधूकाः चमूचराः दूरादेवापावर्त्तिता अपसारिता भारस्यान्नादेर्वाहना भारवाहणा भारवाहिन उष्ट्रादयो यैस्ते तथा सन्तः । वाहनमाहितादिति णत्वं । वहेर्ण्यन्तात्कर्त्तरि ल्युट् । त्वरितं चपलं शीघ्रं पथो मार्गादपससुरपजग्मुः । स्वभावोक्तिः ॥ ३४ ॥ ************ ॥

॥ ओजस्वीति ॥ वन्दिनःस्तुतिपाठकाः। वन्दिनस्तुतिपाठकाइत्यमरः। ओजस्विवर्णैःते
जस्विवर्णैःक्षत्रजातेःयदुज्ज्वलंवृत्तमुदग्रव्यापारः विजयाख्यःतेनशालतइतिशालीनस्य
अन्यत्रओजस्विवर्णैःसमासभूयिष्ठाक्षरैरुज्ज्वलाललेचनेवृत्तशालिनावसन्ततिलकादिच्छ
न्दोविशेषशालिनस्य । वृत्तंचरित्रच्छंदसोरपीतिविश्वः । नानुप्रसादोऽस्यास्तीति
प्रसादीतस्यप्रसादिनोऽनुग्रहशीलस्य। अन्यत्रप्रसादगुणयुक्तान्प्रसिद्धार्थपदत्वंयत्तत्प्र
सादोनिगद्यतइति अनुद्धितौगोत्रसंविदौकुलाचारौयेनतस्ययादववंशोत्पन्नस्येत्यर्थः।
अन्यत्रकुलनामनीयैस्तान्। वंशनामाङ्कितानित्यर्थः। संविद्युद्धेप्रतिज्ञायांसङ्केताचा
रनामस्विनिवैजयंती। एवंभूतस्यउपेंद्रस्यहरेर्गुणान्समुद्दिश्याधिकात्यभूयसोबहुलान्

ओजस्विवर्णोज्ज्वलवृत्तशालिनः प्रसादिनोऽनुद्धितगोत्रस
म्बिदः। श्लोकानुपेन्द्रस्यपुरःस्मभूयसोगुणान्समुद्दिश्यपठ
न्तिवन्दिनः॥ ३५॥ निःशेषमाक्रान्तमहीतलोजलैश्चलन्स
मुद्रोपिसमुज्झतिस्थितिम्। ग्रामेषुसैन्यैरकरोद्वारितैःक्रिम
व्यवस्थाञ्चलितोपिकेशवः॥ ३६॥ ********

श्लोकान्स्तुतिपद्यानिपुरोऽग्रेपठंतिस्म । अत्रोपेंद्रस्यतच्छ्लोकानांचपर्य्यायेनप्रकृता
नांश्लेषसाधर्म्यादौपम्यगतायांश्लेषप्रतिभोत्थापिताकेवलप्रकृतगोचरातुल्ययोगिताश्लेषस्य
प्रकृतित्वमर्थः॥ ३५॥ ************************** ॥
॥ निःशेषमिति ॥ चलन्। कल्पान्तेक्षुभितःसमुद्रोपिजलैर्निःशेषमाक्रान्तमहीतलःसन्
स्थितिंमर्यादांवेलालंघनलक्षणांसमुज्झतित्यजति। केशवस्तुप्रचलितोपिप्रस्थितोपिअ
वारितैरपरिमितैःसैन्यैर्निःशेषमाक्रान्तमहीतलःसन्ग्रामेषु अव्यवस्थाममर्यादांकिमकरो
दाक्रोदेवेत्यर्थः। अत्रोपमानात्समुद्रादुपमेयस्यकेशवस्यमर्यादानतिक्रमेणाधिक्यकथ

नार्द्धनिरेकालङ्कारः । लक्षणंतूक्तं ॥ २६ ॥ ****************** ॥

॥ कोशातकीति ॥ कोशातकीपुष्पगुलुच्छकान्तिभिःपटोलोप्रसूनगुच्छसच्छायैःस्मरपा ण्डुरैरित्यर्थः । कोशातकोपटोलोस्यादिति हलायुधः । मुखैरुपलक्षिताःविनिद्रंविक सितं । अतएवोज्ज्वलंविपुलंवाणानीलसैरेयपुष्पमिव चक्षुर्येषांतानाः । नीलाझिंटीच द्वौर्वाणाइत्यमरः । ग्रामेषुभवाग्रामीणाः । ग्रामाद्यखञ्चाविति खञ्प्रत्ययः । नास्यवध्व स्तंवल्लीजयनङ्कृतंग्रामांनगामिनमितिभावः । जनैस्समूचरैर्लक्षिताबृतोभिस्तिरो हिताइत्यर्थः । चिरंवृतीनांकंटकशाखावरणानामुपरिउपरिततावकाशेव्यलोकयन्उप लाखभावोक्त्येसङ्करः ॥ २७ ॥ ************************* ॥

कोशातकीपुष्पगुलुच्छकान्तिभिर्मुखैर्विनिद्रोज्ज्वलवाणचक्षुषः । ग्रा
मीणवध्वस्तमलक्षिताजनैश्चिरम्बृतीनामुपरिव्यलोकयन् ॥ २७ ॥
गोष्ठेषुगोष्ठीकृतमण्डलासनान्सनाट्मुत्थायमुहुःसवल्गतः । ग्राम्या
नपश्यत्कपिशम्पिपासतःस्वगोत्रसङ्कीर्त्तनभावितात्मनः ॥ २८ ॥

॥ गोष्ठेष्विति ॥ सव्रजोगावस्तिष्ठंत्येष्विति गोष्ठानिगोस्थानानि । गोष्ठंगोस्थानकमि त्यमरः । घुपिस्थइतिकप्रत्ययः । अम्बाम्बगोभूमीत्यादिनाषत्वं । गोष्ठीषुवार्त्तासु । गो ष्ठीसभायामालापइतिविश्वः । कृतानिमण्डलासनानिमण्डलाकारेणोपवेशनानियैस्ता न्मुहुःसनादंक्ष्वेलाट्टाट्टहासाघाररवसहितंयथातथोत्थायवल्गतउत्प्लवमानान्कपिशंम द्यं । कश्यंमद्यंचमैरेयंकपिशंकापिशायनमितिहलायुधः । पिपासतोमुहुर्मुहुःपातुमिच्छ तः । पिबतेःसन्नन्ताल्लटःशतरिरूपम् । स्वगोत्रसङ्कीर्त्तनेस्वनामसङ्कीर्त्तनेभावितात्मनःप्रव र्त्तितचित्तान्कृष्णनामानिगायनइत्यर्थः । ग्रामेषुभवान्ग्राम्यान्ग्रामीणजनानित्यर्थः । ग्रामाद्यखञ्चाविति यञ्प्रत्ययः । अपश्यद्दालोकितवान् स्वभावोक्तिः ॥ २८ ॥ * ॥

॥ पश्यन्निति ॥ एकान्तमौग्ध्येनात्यंतमुग्धतया अनवबुद्धविभ्रमैरज्ञातविलासैः किन्तु प्रसिद्धा विस्तारगुणा येषां तैरतिविशालैरित्यर्थः । कृतार्थैरपि सकृद्दर्शनालब्धविस्तारफलैरित्यर्थः । विलोचनैर्जनताधिनाथं कृष्णं पश्यन् बल्लवीजनो गोपाङ्गनाजनः वितृष्णतां तृष्णां नयतीति भूयो भूयः पश्यन्नपि तावन्तं तृप्तिमवापेत्यर्थः । तृप्तिकारणे दर्शनेसत्यपि तृप्तिकार्यानुत्पत्तेर्विशेषोक्तिः तच्च श्रुत्या रतकौटिल्यलावण्यलक्ष्मीं व्यंजयति ॥ ३९ ॥

॥ प्रीत्येति ॥ नियुक्तान् वामपादे एवसंयतनान् स्तनं धयंति पिबन्तीति स्तनन्धयास्तान् । नासिकास्तनयोर्ध्माधेटोरिति खश्प्रत्ययः । प्रीत्या निह्नुवतीर्जिह्वया स्वादयन्तीः रोहि-

पश्यन्कृतार्थैरपि बल्लवीजनो जनाधिनाथं नयति स्म वितृष्णताम् । ए-
कान्तमौग्ध्यानवबुद्धविभ्रमप्रसिद्धविस्तारगुणैर्विलोचनैः ॥ ३९ ॥
प्रीत्या नियुक्ताल्लिहतीः स्तनन्धयान्निगृह्य पारीमुभयेन जानुनोः ।
वर्द्धिष्णुधाराध्वनि रोहिणीः पयश्चिरं निदध्यौ दुहतः स गोदुहः ॥
॥ ४० ॥ अभ्याजतोऽभ्यागततूर्णतर्णकान्निर्याणहस्तस्य पुरो दुधुक्षतः ।
वर्गादवांक्ङ्कृतिचारु निर्यतीमरिर्मघोरैक्षत गोमतल्लिकाम् ॥ ४१ ॥

णीर्गाः । अर्जुन्यघ्न्यारोहिणी स्यादित्यमरः । पयःक्षीरं जानुनोरुभयेन जानुद्वयेन पारी पात्री । पारी पात्रोपगवोरिति विश्वः । निगृह्य निरुध्य । वर्धिष्णुधाराध्वनि वर्द्धमानधाराध्वनि दोहनपात्री । दुहेः लटः शतरि शप् । दुग्धा र्द्धनशीलक्षीरधाराशब्दं यथाभवति तथा दुहतः प्रपूरयतः । दुहेः लटः शतरि शप् । स्सर्ध्वि त्याद्रिनाक्किप् । पीतिद्विकर्मकत्वं । गान्दुहन्तीति गोदुहः गोदुहकान् । स्सृध्वि त्यादिना क्विप् । निध्यानं अवलोकनमिति वैजयन्तीस्वभावे सहरिश्चिरं निदध्यौ अवलोकयति स्म । स्य-

॥ तिः ॥ ४० ॥ ********************************************** ॥

॥ अभ्येति ॥ अभ्याजतः दोग्धुमभिमुखमागच्छतः । अजेर्लटः शत्रादेशः । निर्याणं पदबं-

घनन्दाम । निर्यागंदामसंदानंपश्वूनांपादबन्धनेइत्यमरः वैजयन्ती । नक्षत्रैस्यस्त स्यानियाणहस्तस्यदधुक्षेनोदेग्धुमिच्छनोदेग्धुरितिशेषः । दुहेः स्तनन्ताज्झटः शत्रवेशः धत्वधत्वे । पुरोऽग्रेभ्यागतोऽभिमुखमागतस्तूर्णंस्तनपानेत्वरमाणस्तर्णकोनिवालोवत्सो यस्यास्तां । सद्योजातस्तुतर्णकइत्यमरः । गवान्वर्गाद्गोव्रजात्कुञ्ज्जूनिवास्कुञ्ज्जारम नोहरंयथानयानिर्यातीन्निर्गच्छन्ती । इणःशत्रीङीप्इणोयणादेशः । प्रशस्तांगां त्रामतल्लिकां । प्रशंसावचनैश्चेतिनित्यसमासः । मतल्लिकामचर्चिकाप्रकाण्डमुद्धतल्ल जौप्रशस्तवाचकान्यमूनीत्यमरः । मधोरारिर्मधुसूदनएक्षतईक्षितवान् । ईक्षतेर्लु ङ्याडजादीनामित्याडाटश्चेतिवृद्धिःस्वभावोक्तिः ॥ ४१ ॥*********** ॥

सद्यो व्रीहीणांयावदपासितुङ्गताः शुकान्मृगैस्तावदुपद्रुतश्रियाम् । कैदा रिकाणामभितःसमाकुलाःसहासमालोकयतिस्मगोपिकाः ॥ ४२ ॥

व्यासेद्धुमस्तानवधानतःपुराचलन्यसावित्युपकर्णयन्नसौ । गीतानि गोप्याःकलमंमृगव्रजोननूनमत्तीतिहरिर्व्यलोकयत् ॥ ४३ ॥

॥ सद्य इति ॥ यावच्छुकान्कीरानपासितुङ्गतास्तावन्मृगैरुपद्रुतश्रियामुद्रुतसम्पदांव्रीहि णांव्रीहिमतां । व्रीह्यादिभ्यश्चेतिइनिप्रत्ययः । कैदारिकाणांक्षेत्रसमूहानां । पुंनपुंस कयोर्वप्रःकेदारःक्षेत्रमस्यतु । कैदारिकंस्यात्कैदार्यंक्षेत्रंकैदारिकंगणेइत्यमरः । ठञ् कवचिनश्चेतिचकाराट्ठञ्प्रत्ययः । कृद्योगात्कर्मणिषष्ठी । गोपिकागोपस्त्रीयरभितःसमा कुलाःव्यग्राःउभयतःसमाकृष्यमाणाःसतीरित्यर्थः । सहरिःसह समालोकयतिस्म । अ त्रसहासावलोकनस्यविशेषणगत्यासमाकुलपदार्थहेतुकत्वात्काव्यलिङ्गभेदः ॥ ४२ ॥

॥ व्यासेद्धुमिति ॥ गोप्याःशालिगोप्याः । गौरादित्वान्ङीष् । गीतानिउपकर्णय न्शृण्वन् असौमृगव्रजःनूनंनिश्चितंकलमंनात्तिनखादतिइतिकिंकलमभक्षणेगीतश्रवण

विशेषइत्यत आह यतोगोपीअस्मान्व्यासेद्धुं निवारितं अवधाननेतोगीतैकाग्र्यात्परावर्त्य निवर्तयिष्यति । यावत्पुरानिपातयोर्लडितिभविष्यदर्थेलट् । इतीत्थंतर्कयन्निति शेषः । हरिर्व्यलोकयत् । अत्रमृगाणांकवलमग्रासादननिवृत्तेर्गीतासक्तिनिमित्तायास्तदाकर्णनसुखभङ्गहेतुकत्वमुत्प्रेक्ष्यते ॥ ४३ ॥ ****************************** ॥

॥ लीलेति ॥ अनुगताआपोयेषुतेअनूपाःजलप्रायदेशाः । जलप्रायमनूपंस्यात्पुंसिकच्छस्तथाविधइत्यमरः । तेषांसमीपेउपानूपं । समीपार्थेव्ययीभावः । लीलयाचलन्तिचलन्तीयेस्त्रियास्तरणेअरुणोत्पलेएवतयोःस्खलंत्योयेतुलाकोटीनूपुरे । पादाङ्गदंतुलाकोटिर्मञ्जीरोनूपुरोऽस्त्रियामित्यमरः । तयोर्निनादइवकोमलोमधुरःउन्मदसारसार

लीलाचलत्स्त्रीचरणारुणोत्पलस्खलत्तुलाकोटिनिनादकोमलः ।
शौरेरुपानूपमपाहरन्मनःस्वनान्तराद्उन्मदसारसारवः ॥ ४४ ॥
उच्चैर्गतामस्खलितांगरीयसींतदातिदूरादपितस्यगच्छतः । ए
कोसमूहैर्बलरेणुसंहतिंशिरोभिराज्ञामपरेमहीभृतः ॥ ४५ ॥

वःमत्तहंसकूजितं । चक्राङ्गसारसौहंसइतिशब्दार्णवे । शौरेर्मनःस्वनान्तरादपाहरत् ॥ अत्रमनोहरणलीलेत्यादिविशेषणार्थहेतुकत्वादुपमासङ्कीर्णंकाव्यलिङ्गं ॥ ४४ ॥

॥ उच्चैरिति ॥ तदातस्मिन्समयेअतिदूराद्गच्छतोपितस्यहरेःसम्बंधिनीमुच्चैर्गतामन्यूर्ध्वमुन्नतां । अन्यत्रोर्ध्वलोकेष्वपिव्याप्तांअस्खलितामभंगुरांसत्यांचगरीयसीमतिमहतींपूज्यांचबलरेणुसंहतिंसेनारेणुसंघातंएकेकतिपयेमहीभृतःपर्वताःआज्ञांशासनं । अपरेमहीभृतोराजानश्चशिरोभिःशेखरैश्चशीर्षैश्चसमूहुःसमाग्रहंतिस्म । वहेर्लिटिभ्रेर्जुसो । वचिस्वपीत्यादिनासंप्रसारणं । अत्रहरिमहिमावर्णनायोभयेषामपिमहीभृतांप्रस्तुतत्वात्केवलप्रकृतस्यतानुल्ययोगितास्श्लेषप्रतिभोत्थापिताचेतिसङ्करः ॥ ४५ ॥ ** ॥

॥ प्रायेणेति ॥ प्रायेण प्राचुर्येण नीचान् कुब्जान् अपि मेदिनीभृतोऽद्रीन् जनो लोकः समेन सुगमेन पथा मार्गेणैवाधिरोहति । सा मुरारेः सेना पुनः पथो मार्गान् त्वचमहामहीधान् महाद्रीन् परितोऽध्यरोहयत् । लोके हि तन्निक्षुत्तेऽध्वनि तेन शैलारोहणसंभवः सेना सर्वपथातिरेकिण्यभूत् । पूर्वापरः सहस्र पथानः स्वारोहणेन प्रवर्त्तिता इत्यर्थः । रोहतेर्गत्यर्थत्वाद् अनिबुद्ध्योत्यादिना पथामणिकर्तृणां णौ कर्मत्वं । महीधराणीति महीधाः मूलविभुजादित्वात्कः । अत्र सेनायाः पथां शैलाधिरोहणे तोपमानलोकजनाद् आधिक्यकथनाद्व्यतिरेकः ॥ ४६ ॥ ******************************** ॥

प्रायेण नीचानपि मेदिनीभृतो जनः समेनैव पथाधिरोहति । सेना मुरारेः पथ एव सा पुनर्महामहीध्रान्परितोऽध्यरोहयत् ॥ ४६ ॥ दन्ताग्रनिर्भिन्नपयोदमुन्मुखाः शिलोच्चयानारुरुहुर्महीयसः । तिर्यक्कटप्लाविमदाम्बुनिम्नगाविपूर्यमाणश्रवणोदरन्द्विपाः ॥ ४७ ॥ स्त्रोतन्मदाम्भःकटकेन केनचिज्जनस्य जीमूतकदम्बकद्युता । नागेन नागेन गरीयसोच्चकैररोधि पन्थाः पृथुदन्तशालिना ॥ ४८ ॥ **

॥ दन्ताग्रेति ॥ द्वाभ्यां पिबन्तीति द्विपाः । सुपीति योगविभागात्कप्रत्ययः । उन्मुखा उन्नमितमुखाः सन्तः दन्ताग्रैर्निर्भिन्ना विदारिताः पयोदाः मृङ्गगनाय स्मिन्कर्मणि तद्यथा तथा तिर्यगूर्ध्वमुखत्वात्तिरश्चीनं यथा तथा कटेभ्यः प्लवन्ते क्षरन्तीति कटप्लाविनीभिर्मदाम्बुनिम्नगाभिर्मदजलप्रवाहैर्विपूर्यमाणानि श्रवणोदराणि यस्मिन्कर्मणि तद्यथा तथा महीयसो महत्तरान् शिलोच्चयान् शैलान् आरुरुहुः । स्वभावोक्तिः ॥ ४७ ॥ ****** ॥

॥ स्त्रोतदिति ॥ स्त्रोतन्तः क्षरन्तो मदाम्भःकणा यस्य कटकस्य गण्डस्य तेन । शैषिकः कप्रत्ययः । जीमूतकदम्बकस्येव द्युतिर्यस्य तेन । पृथुभ्यां दन्ताभ्यां शालनशीलेन त्व्का

लिना । गरीयसा गुरुतरेणोच्चैरुन्नतेन । केनचिन्नागेन गजेन जनस्य पन्थाः मार्गः यथा धरोधिरुद्धः । अगेनाचलेन न तथाऽरोधिरुद्धः । मत्तमातङ्गस्य दुरासदत्वाच्छैलवद् नतिक्रमणीयत्वादिति भावः । अतएवोपमानादगादुपमेयस्य नागस्याधिक्याद्व्यतिरेकः ॥ ४८ ॥ **************************** ॥

॥ भग्नेति ॥ दन्तिनो गजाइतस्ततो भग्नद्रुमाः स्वभग्नाखिलवृक्षाः । दिशः समुल्लसद्भिः केतनैरेव काननैराकुलाः सङ्कीर्णाश्चक्रुः । तथा तरसा बलेन पिष्टानि चूर्णितानि अद्रिपृष्ठानि यासु ता भुवो भूमीः चलद्भिर्निजाङ्गैरेवाचलैर्दुर्गमाः प्राय श्चक्रुः । अत्र केतनेष्वङ्गेषु च काननाचलत्वरूपणाद्रूपकालङ्कारः तेन गजानां पुराणनष्टिसंहारेण सृष्ट्यन्तरप्रवर्त्तनरूपं लोकोत्तरं सामार्थ्यं गम्यत इत्यलंकारेण वस्तुध्वनिः ॥ ४९ ॥ ******** ॥

भग्नद्रुमाश्चक्रुरितस्ततो दिशः समुल्लसत्केतनकाननाकुलाः । पिष्टा
द्रिपृष्ठास्तरसा च दन्तिनश्चलन्निजाङ्गाचलदुर्गमा भुवः ॥ ४९ ॥
आलोकयामास हरिर्महीधरानधिश्रयन्तीर्गजताः परःशताः । उ
त्पातवातप्रतिकूलपातिनीरुपत्यकाभ्यो बृहतीः शिला इव ॥ ५० ॥

॥ आलोकेति ॥ हरिर्महीधरान् अधिश्रयंतीरधिरोहंतीः परःशताः शतात्पराः असङ्ख्याता इत्यर्थः । परःशताद्यास्ते येषां परा संख्या शताधिका इत्यमरः । पञ्चमीति योगविभागात्समासः राजदन्तादित्वादुपसर्जनस्यापि शतशब्दस्य परनिपातः पारस्करादित्वात्सुडागमः । गजता गजसमूहान् । गजाच्चेति वक्तव्यमिति सामूहिकस्तल्प्रत्ययः । उपत्यकाभ्य आसन्नभूमिभ्यः । उपत्यकाद्रेरासन्ना भूमिरित्यमरः । उपाधिभ्यां त्यकन्नासन्नारूढयोरिति त्यकन्प्रत्ययः । उत्पातवातेन । तत्प्रतिकूलं पतन्तीति तत्पातिनीरूर्ध्वगामिनीरित्यर्थः । बृहतीः शिला इवेत्युत्प्रेक्षा । आलोकयामास ॥ ५० ॥ **** ॥

॥ शैलेति ॥ शैलाधिरोहाभ्यसनेन पर्वतारोहणाभ्यासेनाधिकोद्धुरैरत्युन्नतैः पयोधरैः स्त
नैरुपलक्षिताः आमलकीवनाश्रिताः धात्रीवनगताः । पर्वते निवासो येषां ते पर्वतीयाः कि
रातादयः । पर्वताच्छ इति छप्रत्ययः । तेषां प्रमदाः । विकाशेन विस्मयजनितविस्तारेण वि
स्फारिता विवर्त्तिताः विभ्रमा विलासा येषां तानीक्षणानि यासां तास्तथा सत्यः तं हरिं चचा
यिरे ददृशुः । चायृ पूजानिशामनयोरिति धातोः कर्त्तरि लिट् । निशामनं दर्शनं निरूप
णमपि निशामयते इति निदर्शनपर्यायेषु भट्टमल्लः । एतेन हरेर्लोकोत्तरं लावण्यं व्यज्यत इति
वस्तुना वस्तुध्वनिः स्वभावोक्तिवृत्त्यनुप्रासयोः संसृष्टिः ॥ ५१ ॥ ********** ॥
॥ सावज्ञमिति ॥ सावज्ञमनादरं यथा तथा विलोचने सकृदेकवारं । एकस्य सकृदिति सकृ

शैलाधिरोहाभ्यसनाधिकोद्धुरैः पयोधरैरामलकीवनाश्रिताः । तम्पर्व
तीयप्रमदाश्चचायिरे विकाशविस्फारितविभ्रमेक्षणाः ॥ ५१ ॥ सा
वज्ञमुन्मील्य विलोचने सकृत्क्षणान्मृगेन्द्रेण सुषुप्सुना पुनः । सैन्या
न्नयातः समयापि विव्यथे कथं सुराजम्भवमन्यथाथवा ॥ ५२ ॥ *

द्धेर्निपातः । क्षणमुन्मील्योन्मिष्य । पुनः सुषुप्सुना स्वप्तुमिच्छुना । सनन्तादुप्रत्ययः ।
रुदविदेत्यादिना सनः कित्वाद्वचिस्वपीत्यादिना सम्प्रसारणं । मृगेन्द्रेण सिंहेन समया स
मीपे । समया निकषा शब्दौ समीपे सम्प्रकीर्त्तिताविति सज्जनः । यातो गच्छतोपि । यातेर्ल
टः शत्रादेशः । सैन्यात्सेनातः । भीत्रार्थानां भयहेतुरित्यपादानत्वं । न विव्यथे न विभ्ये ।
व्यथ भयसंचलनयोरिति धातोर्भावे लिट् । अथवा तथा भीत्यर्थः । अन्यथा भीतत्वे कथं सु
राजंभवं सुखेन राज्ञा भूयते न कथमपीति भावः । राजा चायं मृगाणामिति भावः । कर्तृकर्म
णोश्च भूकृञोरिति कर्त्तरीषदादौ चोपपदे भवतेः खल्प्रत्यये नलोपमुमागमौ । अर्थान्तर
न्यासः ॥ ५२ ॥ ****************************** ॥

॥ उत्क्षेपेति ॥ नागैर्गजैरधिक्षिप्ताक्षिप्ताः स्तृता महाशिला येन तत्तथोक्तं सैन्यं ध्वजैरुत्क्षेपेणोर्ध्वगत्या निर्धूता अवगणिता महीरुहा येषु तेषां उत्क्षेपश्चोत्क्रय इत्यमरः जनैरवरुद्धं प्रतिब द्धमुद्धतमुद्वेल्लं सिंधुरंहो नदीवेगो येषां तेषां महीभृतां पर्वतानां उपरि मुहुर्बभूव मार्गवशाद्भू यसो भूधरान्मुहुरारुरोहेत्यर्थः हयौघरुद्धइति पाठे हयौघेन घोटकसमूहेन रुद्धमित्यादि पूर्व वत् । अत्रारोहणवद्दुत्कर्षस्योपरिभावो विशेषणवैभवात्प्रतीयत इति तद्भेदेनोपरिभाव स्यतत्तभूधरविशेषणपदार्थहेतुकत्वाच्छ्लेषप्रतिभोत्थापितकाव्यलिङ्गविशेषः ॥ ५३ ॥ ॥ स्रस्नूयेति ॥ तरोर्वृक्षस्य स्रस्नूयमाणे स्रस्नुवदाचरति तद्दाचरमान इत्यर्थः । उपमाना

उत्क्षेपनिर्धूतमहीरुहं ध्वजैर्जनावरुद्धोद्धतसिन्धुरंहसाम् । ना
गैरधिक्षिप्तमहाशिलम्मुहुर्बलम्बभूवोपरि तन्महीभृताम् ॥ ५३ ॥
स्रस्नूयमाणे मधुजालके तरोर्गजेन गण्डङ्कषता विधूनिते । क्षुद्राभिर
क्षुद्रतराभिराकुलम्विदश्यमानेन जनेन दुद्रुवे ॥ ५४ ॥ नीते पला
शिन्युचिते शरीरवद्गजाननकेनान्तमदान्तकर्मणा । सस्वेरुरण्यानइ
वापरं क्षणात्स्वमारुहन्द्रुमिव क्षवङ्गमाः ॥ ५५ ॥ ※※※※

चारकर्त्तरि क्यङ्सलोपश्चेति क्यङ् तान्ताल्लटः शानजादेशः अकृत्सार्वधातुकयोर्दीर्घः । गंडं कपो लं कषतानारुस्कन्धेन कण्डूयमानेन गजेन मधुजालके क्षौद्रपुटे विधूनिते कम्पिते सति । धू ञ्कम्पने श्रुत्वाच्छन्दसि क्यः ह्रस्वः श्ना प्रत्यये सति घूङ्प्रीञोर्नुग्वक्तव्य इति नुगागमः । अक्षुद्रतराभिरतिस्थूलाभिः क्षु द्राभिः सरघाभिः । क्षुद्राव्यंगानटीवेश्यासरघाकण्टकारिका इत्यमरः । विदश्यमानेन चंचुभिस्तुद्यमानेन जनेन समाकुलं व्यग्रं यथा तथा दुद्रुवे पलायितं । भावे लिट् । स्वभा वोक्तिरुत्प्रेक्षोपमासंसृष्टा ॥ ५४ ॥ ****************************** ॥
॥ नीतइति ॥ उचिते परिचिते पलाशिनि द्रुमे । पलाशी द्रुद्रुमागमा इत्यमरः । शरीरवत्

पूर्वशरीरवत् । तत्रतस्येवेतिवतिप्रत्ययः । अदान्तकर्मणादुर्दान्तव्यापारेणगजेनान्तकइ
वेत्युपमितसमासः । साहचर्यात्तेनगजान्तकेनान्तंनाशंनीतेगमितेसतिप्लवैर्गच्छन्तीति
प्लवंगमाःकपयः । गमेःखेतिखच्प्रत्ययेमुमागमः । आत्मानोजीवाइवापरंक्ष्मारुहंदेहमि
वक्षणात्संवेशःसम्प्रविष्टाइत्यर्थः । अन्तकेवशब्दवाक्यार्थोपमासाचशरीरवदितितद्धि
तसमता । अन्यत्रसमासगतेतिसङ्करः ॥ ५५ ॥ **************** ॥

॥ प्रह्वानेति ॥ क्वचिदतीवनितानांप्रह्वान्प्रवणान् । अन्यत्रानुकूलान्क्वचिदुन्नतिंश्रयन्ती
त्युन्नतिश्रितःऔन्नत्याभाजऔद्धत्यभाजश्च । श्रयतेःक्विप्तुक् । क्वचित्प्रकाशान्प्रकटानव
गूढवृत्तींश्च । क्वचिदतिगह्वरान्अपि । अपिश्चार्थे । अप्रवेशान्अन्यत्रगूढांश्च । इत्ी

प्रह्वानतीवक्वचिदुन्नतिश्रितःक्वचित्प्रकाशानथगह्वरान
पि । साम्यादपेतानितिवाहिनीहरेस्तदानिचक्रामगि
रीन्गुरूनपि ॥ ५६ ॥ सव्याप्नुवन्यापरितोपथान्यपि
स्वसेनयासर्वपथीनयातया । अम्भोभिरुल्लङ्घिततुङ्ग
रोधसःप्रतीपनाम्नीःकुरुतेस्मनिम्नगाः ॥ ५७ ॥ *

त्थंसाम्यादपेतान्विषमरूपान्विषमवृत्तांश्च । अतएवगुरून्महतोऽपिपूज्यानपिगिरीन्त
दाहरेर्वाहिनीसेनाअतिचक्रामातीत्यगताउल्लंघिताच । गुरोरप्यवलिप्तस्यकार्याकार्यमजा
नतःउत्पथप्रतिपन्नस्यपरित्यागोविधीयतेइतिस्मरणादितिभावः । गुरूणामप्यतिक्रमइ
तिविरोधेऽपिशब्दःसचोक्तवैषम्यदोषोद्भावनेनपरिहृतइतिविरोधाभासःसचगुरूनिववा
च्यप्रतीयमानयोरभेदाध्यवसायादितिश्लेषमूलातिशयोक्त्युत्थापितइतिसङ्करः ॥ ५६ ॥

॥ सइति ॥ सहरिःपरितःसमन्तादपथान्यपमार्गानपि । पथोविभाषेतिनिषेधविकल्पा
द्वृक्पूरित्यादिनासमासान्तः । अपथंनपुंसकमितिनपुंसकत्वं । व्याप्नुवन्यपिसर्वान्पथोव्या

ञ्जतीतिसर्वपथीना। नत्सर्वादेरित्यादिनाखप्रत्ययः। नयासर्वपथीनयातयाखसेनयानि
मित्तेनअंभोभिरुल्लङ्घितानियुगपदखिलसेनाप्रवेशेनप्रतीपगमानादुपर्याक्रांतानितुङ्ग
रोधांसियासान्ताःनिम्नंगच्छन्तीतिनिम्नगानद्यःप्रतीपनाम्नोःकुरुनेस्म। प्रतिगतानगाआ
पोयासान्ताःप्रतीपाः ऋक्पूरित्यादिनासमासान्तःद्व्यन्तरुपसर्गेभ्योऽपइतीकारःअथवाप्र
तीपनिम्नगानामविरुद्धंनामउन्नतगाइतिनामधेयंयासान्ताःप्रतीपनाम्न्यः। अनउपधा
लोपिनोन्यतरस्यामितिङीप्। तास्तथाचकारेत्यर्थः। अत्रनिम्नगानांप्रतीपनामासंबन्धे
पिसम्बन्धोक्तेरतिशयोक्तिः॥ ५७ ॥ ********************* ॥
॥ यावदिति॥ दन्तिनांघटागजव्रजायावन्नव्यगाहन्तनव्यलोडयन्तावत्तुरङ्गमैःकर्तृभिः

यावद्व्यगाहन्तनदन्तिनाङ्घटास्तुरङ्गमैस्तावदुदीरितंखु
रैः। क्षिप्तंसमीरैःसरितामुरःपतज्जलान्यनैषीद्रज
एवपङ्कताम् ॥ ५८ ॥ रन्तुंक्षतोत्तुङ्गनितम्बभूमयोमु
हुर्व्रजन्तःप्रमदम्मदोद्धताः। पङ्ककरापात्तशैवलांशु
काःसमुद्रगाणामुदपादयन्निभाः ॥ ५९ ॥ **

खुरैःकरणैःउदीरितंउत्थापितं। अथसमीरैःमारुतैःक्षिप्तंविकीर्णं। अतएवपुरोगजप्रवे
शात्प्रागेवपतद्रजोभूरेणुरेवसरितांजलानिपङ्कतामनैषीन्निनाय। नयतेर्द्विकर्मकत्वात्लु
ङिवृद्धिः। अत्रापिसरितांपङ्कत्वासम्बन्धेपिसम्बन्धोक्तेःपूर्ववदतिशयोक्तिः॥ ५८ ॥
॥ रन्तुमिति ॥ रन्तुंक्रीडितुंक्षताएकत्रविषाणैरन्यत्रनखैस्सविदलितानाउत्तुङ्गानितम्ब
भूमयोरोधभागाःश्रोणिभागाश्चयैस्ते। नितम्बोरोधसिस्कन्धेशिखरेपिकटीतटइतिवि
श्वः। मुहुःप्रमदंहर्षंव्रजन्तःमदेनदानेनदर्पेणवोद्धताः। करैर्हस्तैरपाकृतानिशैवलानि
अंशुकानीवचांशुकानिवैस्तेइभाःसमुद्रंगच्छन्तीतिसमुद्रगाणांसमुद्रपत्नीनांनदीनां।

एकाशुत्तरपदेणाइतिणत्वं । पंकंकर्दमंकलुषंचोदपादयन्। पङ्कोऽस्त्रीकर्दमैनतोरि
निविश्वः। यथामदोद्धताःपराङ्गनानांदोषमन्यायंनितद्वदितिभावः। अत्रप्रकृतेभवि
शेषणादप्रकृततोसंग्रहणसाहसिकप्रतीतेः समासोक्तिःश्लेषोपमयोरभेदाध्यवसायादितिश्ले
षमूलातिशयोक्त्युत्थापितेतिसङ्करः ॥ ५९ ॥ ***************** ॥
॥ ह्रदैरिति ॥ इभाहस्तैर्भद्रैर्हस्तिभिर्महद्भिरोघोभिस्तदैःपरिपूरितांभसोमृतस्रोपदोषिताः
भसइत्यर्थः। पुराभवाःपुरातनीः सायंचिरमित्यादिनाट्युप्रत्ययःतुडागमश्चटिड्ढाणञि
त्यादिनाङीप्। नदीःसमस्थलीकृत्यसमस्थलानिकृत्वा। मदांबुभिःसमदोदकैःकूलंक
षंतीतिकूलंकषाःओघायासांताःउभयकूलप्रवाहिन्योपराअन्याःसरितःप्रवर्त्तयामासुः ।

ह्रदैर्ह्रदौघैः परिपूरिताम्भसः समस्थलीकृत्य पुरातनीर्नदीः । कूल
ङ्कषौघाः सरितस्तथापराः प्रवर्त्तयामासुरिभा मदाम्बुभिः ॥ ६० ॥
पद्मैरनन्वितवधूमुखद्युतो गता न हंसैः श्रियमातपत्रजाम् । दूरेऽभव
न्भोजबलस्य गच्छतः शैलोपमातीतगजस्य निम्नगाः ॥ ६१ ॥ *

एतेनगजसम्पत्तिरुक्ता। अत्रनदीनांसमस्थलत्वासंबंधेपितत्संबंधोक्तेरतिशयोक्तिरि
तिसजातीयसङ्करः ॥ ६० ॥ ************************ ॥
॥ पद्मैरिति ॥ पद्मैरनन्वीताअप्राप्तावधूमुखद्युतःश्रीर्याभिस्ताःवधूमुखश्रीजितपद्मेत्यर्थः।
अन्वीतेतिईङ्गताविति धातोःकर्मणिक्तः। हंसैरातपत्रजांछत्रजन्यांश्रियंनगताअ
गताःआतपत्रजितहंसश्रीकाइत्यर्थः। निम्नगानद्यःशैलोपमामतीताःशिलासाम्यमति
क्रांतागजायस्मिन्तस्यगच्छतोभोजबलस्ययादवसैन्यस्यदूरेऽभवन्अतिव्यवहिताइत्य
र्थः। अपकृष्टाचगम्यतेतद्भेदाध्यवसायेनैवनिम्नगानांदूरभवनस्यतद्विशेषणपदार्थ
हेतुकत्वात्श्लेषमूलातिशयोक्तिसमुत्थापितःकाव्यलिङ्गभेदः ॥ ६१ ॥ ***** ॥

॥ स्निग्धेति ॥ स्निग्धांजनमिवश्यामाभिस्तनूभिरुन्नतैःकरिणांकदंबकैर्निरन्तरालानीरंध्रा या सेनासुधयालेपनविशेषेणक्षालिताधवलिताःसौधसम्पदोयासान्तासां। लेपभेदेमृते सुधेतिवैजयन्ती । बहूनांपुरांपुरीणांपरभागंविप्रकृष्टदेशमापदूरमतीत्यगतेत्यर्थः। वर्णोत्कर्षस्यपरभागः तद्भेदाध्यवसानेनपरभागाप्तौविशेषणगत्याश्यामकरिकदम्बक नेरुत्कर्षस्यहेतुत्वात्पूर्ववत्काव्यलिङ्गभेदः ॥ ६२ ॥ *************** ॥

॥ प्रासादेति ॥ पथिमार्गे। प्रभोःकृष्णस्यनिवासाःसेनानिवेशाःप्रासादशोभायाअति शयालुभिरतिशायकैः। आलुचिशीङ्ग्रहणमपिकर्त्तव्यमित्यालुच्प्रत्ययः। पटवेश्मभि

स्निग्धाञ्जनश्यामतनूभिरुन्नतैर्निरन्तरालाकरिणाङ्कदम्बकैः । सेना
सुधाक्षालितसौधसम्पदाम्पुराम्बहूनाम्परभागमापसा ॥ ६२ ॥
प्रासादशोभातिशयालुभिःपथिप्रभोर्निवासाःपटवेश्मभिर्बभुः । नूनं
सहानेनवियोगविक्लवापुरःपुरश्रीरपिनिर्ययौतदा ॥ ६३ ॥ वर्ष्म
द्विपानांविरुवन्तउच्चकैर्वनेचरेभ्यश्चिरमाचचक्षिरे । गण्डस्थ
लाघर्षगलन्मदोदकद्रवद्रुमस्कन्धनिलायिनोऽलिनः ॥ ६४ ॥

पटवस्त्रैर्बभुः । तेनोत्प्रेक्ष्यते । तदाद्वारकानिर्याणकालेऽनेनकृष्णेनसहवियोगविक्लवा विरहभीरुःपुरश्रीर्द्वारकानगरलक्ष्मीरपिपुरोऽग्रेनिर्ययौनिर्गता। नूनंद्वारकातोनभि न्नोअस्यनिवासाःशोभयेतिभावः ॥ ६३ ॥ ***************** ॥

॥ वर्ष्मेति ॥ गण्डस्थलानामाघर्षणसङ्घर्षणगलतास्रवतामदोदकेनद्रवेषुआर्द्रेषुद्रुमस्क न्धेषुनिलीयन्तइतिनिलायिनस्तन्निवासिनः उच्चकैर्विरुवन्तोगुंजन्तोऽलयःद्विपानांसे नागजानांवर्ष्मप्रमाणं। वर्ष्मदेहप्रमाणयोरितिविश्वः। वनेचरेभ्यःकिरातेभ्यःचिरमाच चक्षिरेइयंतोगजाइत्याख्यानवंतइत्यर्थः। गजवर्ष्मानुमापकेष्वलिषुविशेषयोगादाख्या

नमुत्प्रेक्ष्यते । वाक्याप्रयोगाद्गम्योत्प्रेक्षा ॥ ६४ ॥ ****************** ॥

॥ आयामेति ॥ आयामो दैर्घ्यं सोऽस्ति येषां तद्वद्भिरायतैरित्यर्थः । करिणां संबंधिभिर्घ टाशतैर्व्यूहशतैः । करिणां घटना घटाइत्यमरः । अभ्रंकषा तिरस्कृता अट्टालकपंक्तयो ऽट्टश्रेण्यो यया सा । अट्टालाट्टालकाः स्मृता इति वैजयन्ती । सा च मूरुच्चकैरुन्नतैः दूष्यैः पटम ण्डपैः जितान्युदग्राणि गृहाणि येषां तानि भूयांसि पुराणि अनीत्यावर्त्तत । अतिक्रम्य गतेत्य र्थः । शोभया अतिशय्यास्थितेति च गम्यते । तद्भेदाध्यवसायेन श्लेषमूलातिशयोक्त्युत्था पितं पूर्ववत्पदार्थहेतुकं काव्यलिङ्गम् ॥ ६५ ॥ ****************** ॥

आयामवद्भिः करिणां घटाशतैरधः कृताट्टालकपंक्तिरुच्चकैः । दूष्यै र्जितोदग्रगृहाणि सा च मूरनीत्यभूयांसि पुराण्यवर्त्तत ॥ ६५ ॥
उद्धूतमुच्चैर्ध्वजिनीभिरंशुभिः प्रतप्तमभ्यर्णतया विवस्वतः । आह्ला दि कल्हारसमीरणाहतेपुरः पपाताम्भसि यामुने रजः ॥ ६६ ॥
या घर्मभानोस्तनयापि शीतलैः स्वसा यमस्यापि जनस्य जीवनैः । कृष्णा पि शुद्धेरधिकं विधातृभिर्विहन्तुमंहांसि जलैः पटीयसी ॥ ६७ ॥

॥ अथ हरिसेना कालिन्दीं प्रत्यासेदुरित्याह ॥ उद्धूतमिति । ध्वजिनीभिः सेनाभि रुच्चैरुद्धूतं उद्धेक्षिप्तं । अत एव अभ्यर्णतया अन्तिकतया । उपकंठिकाभ्यर्णमित्यमरः । वि वस्वतोंऽशुभिः । प्रतप्तं प्रतप्तमिवेत्यर्थः । अत एव व्यञ्जकाप्रयोगाद्गम्योत्प्रेक्षा । आह्लादि त आह्लादकोयेकह्लारसमीरणः वायुः । सौगन्धिकं तु कह्लारमित्यमरः । तेनाहतेकंपिते यामुने यमुनासम्बन्धिन्यंभसि पुरोऽग्रे रजो धूलिः पपात । सन्तप्ता हि सन्तापमसहमानाः पुरो भावित्वात्केनापि चतुःशिशिरे पयसि पतंतीति भावः ॥ ६६ ॥ ************ ॥
॥ अथ चतुर्भिर्यमुनां वर्णयति ॥ येत्यादि । या यमुना । घर्मभानोरुष्णांशोस्तनयापि

तनीशीतैर्जलैरपि विरोधे सा चोष्मा पावकस्थैः शैत्यनुपपत्तेरिति भावः । यमस्यान्तकस्य स्वसा पितृजनस्य जीवनैरुज्जीवकैः । अत्रार्थे कोदराणां भिन्नक्रियानुपपत्तेर्विरोधः । कालिंदी सूर्यतनया यमुना शमनः स्वसेत्युभयत्रापयमरः । कृष्णा कृष्णवर्णा मलिना च तयापि मुग्धैरपस्या धिकं विधातृभिः सम्पादकैर्जलैरंहांसि पापानि विहर्तुं पटीयसी समर्थतरा । अत्र यमुनातज्जलगतत्वेनानिर्दिष्टयोर्गुणक्रिययोः स्वेति त्रिविधेपि तं स्वेष्टस्वात्मीयः । कृष्णापि ज्ञोत्रेषप्रतिभोत्थापित इति संक्षेपः ॥ ६७ ॥ ****************** ॥

॥ यस्यामिति ॥ हिमपिण्डपाण्डुरो हिमसंघशुभ्राः घना मेघाः । द्रुताद्रवीकृता महानीलतटीः इन्द्रनीलस्थलानीव कालीं कृष्णवर्णाः । जानपदेत्यादिना ङीष् । यस्याः कालिं

यस्यां महानीलतटीरिव द्रुताः प्रयान्ति पीत्वा हिमपिण्डपाण्डुराः । का
लीरपस्ताभिरिवानुरञ्जिताः क्षणेन भिन्नाञ्जनवर्णतां घनाः ॥ ६८ ॥
व्यक्तं बलीयान्यदि हेतुरागमादपूरयत्सा जलधिं न जाह्नवी । गङ्गौ
घनिर्भर्त्सितशम्भुकन्धरासवर्णमर्णः कथमन्यथास्य तत् ॥ ६९ ॥

द्याः अपः पीत्वा ताभिः पीताभिरद्भिरनुरञ्जिता इव क्षणेन भिन्नाञ्जनवर्णतां स्नेहभृदिनक अत्र तटीरिवानुरंजिता इवेति चोत्प्रेक्षा यासङ्कीर्णेत्यं । घनानामं ञ्जनवर्णतां प्रयान्ति । ****************** ॥

तेनोपमेति संग्रहः ॥ ६८ ॥ ****************** ॥

॥ व्यक्तमिति ॥ हेतुर्युक्तिरनुमानमिति यावत् । आगमाद्गंगासागरपूरिणीत्यागमप्रमाणा न् । बलीयान्यदि प्रबलस्तेन सा यमुना जलधिमपूरयत् । जह्नोरपत्यं स्त्री जाह्नवी नापूरयत् । व्यक्तं सत्यमित्युत्प्रेक्षा । कुतः । अन्यथा विपर्यये अस्य जलधेः तत्प्रसिद्धमर्णोंभः । अंभोर्णस्तोयपानीयमित्यमरः । गाङ्गेन गङ्गासंबन्धेन ओघेन प्रवाहेन निर्भर्त्सितायाः भस्मकाया शंभुकंधरायाः हरकण्ठस्य सवर्णं समानवर्णं कृष्णवर्णमित्यर्थः । ज्योतिर्जनपदेत्यादि

नासमानस्य सभावः। अन्यथागङ्गौघस्य धावल्यादुल्लमेव स्यात्। तथा च ग्रीवाप्लवनवाक्य पदागमोप्यन्यथा नेयइति कवेराशयः ॥ ६९ ॥ ******************** ॥

॥ अभीति ॥ तमालवृक्षवन्नीलाकृत्स्नानि निजरन्ध्रभूतायतिरन्यतोऽकृतदैर्घ्यो वेलापि सा महापगा महानदी यमुना। जवेन गां भुवञ्चक्रमितुमाक्रमितुं। अभ्युद्यतस्योद्युक्तस्य तस्य महतो बलाम्बुराशेः सेनासमुद्रस्य पुरोऽग्रे क्षणं सीमेव वेलाव भाति इत्युत्प्रेक्षा। क्षणमात्रनिरोधेकामवदनंतरमेव तटः स्यादिति भावः ॥ ७० ॥ ************************ ॥

॥ लोलैरिति ॥ अभितः उभयतो लोलैश्चलद्भिररित्रैः केनिपातकैः। क्षेपणी स्यादरित्रं

अभ्युद्यतस्य क्रमितुं जवेन गां तमालनीला निजरन्ध्रभूतायतिः। सीमेव दत्ता तस्य पुरः क्षणम्बभौ बलाम्बुराशेर्महतो महापगा ॥ ७० ॥ चतुर्भिः कालापकम् ॥ लोलैररित्रैश्चरणैरिवाभितो जवाद्व्रजन्तीभिरसौ सरिज्जनैः। नौभिः प्रतेरे परितः प्लवोदितभ्रमीनिमीलज्जलनावलम्बितैः ॥ ७१ ॥ तत्पूर्वमंसद्वयसं द्विपाधिपाः क्षणं सहेलाः परितो जगाहिरे। सद्यस्ततस्तेहरनारतस्रुतस्वदानवारिप्रचुरीकृतम्पयः ॥ ७२ ॥

केनिपातक इत्यमरः। चरणैः पादैरिवेत्युत्प्रेक्षा। जवाद्व्रजन्तीभिर्गच्छन्तीभिर्नौभिः। साधनैरसौ सरिद्यमुना करर्णप्लवेनोदिता नौवेगेनोत्पन्ना भ्रमीर्भ्रान्तिक्त्। भयान्नीमीलज्जलोभिर्भयादक्षिनिमीलनं कुर्वतीभिर्ललनाभिरवलंबितैर्जनैः कर्तृभिः परितः सर्वतः। सर्वोभयोर्थैं वर्तमानाभ्यां पर्य्यभिभ्यां तसिविधानात्। प्रतेरे प्रतीर्णा ॥ ७१ ॥ **** ॥

॥ तत्पूर्वमिति ॥ द्विपाधिपा महागजाः। पूर्वं प्रथमं अंसौ प्रमाणमस्य अंसद्वयसं अंसप्रमाणं तेषां। नथोन्नतत्वादिति भावः। प्रमाणे द्वयसज्दघ्नञ्मात्रच इति द्वयसच्प्रत्ययः। तत्तथा गम्भीरं पयो यमुनाजलं सहेलाः सावज्ञाः। परितो जगाहिरे प्रविशंति स्म। ततः प्रवेशाऽनन्तरं सद्य

विलंबेन अनारतमविच्छिन्नं स्रुतेन स्रवता स्वदानवारिणा स्वमदोदकेन प्रचुरीकृतं बहुली-
कृतं पयस्तोयं तैर्नागैस्तस्या आपगाया आनन्दाय वारि ऐकस्यादरोषितामाहः ॥ अत्र गम्भीरस्यापि तस्याः सत्त्वातिशयो विकाशः । गजानां अन्ये
पुनस्तस्यैव तन्मदांबुसंभेदाहरायतेतया । तेषां पदानि रेकस्य व्यज्यते ॥ ७२ ॥ ** ॥
॥ प्रोथैरिति ॥ स्फुटशब्दं स्पष्टध्वानं यथा तथा स्फुरद्भिश्चलद्भिः प्रोथैर्घोणाभिरुपल-
क्ष्यते । घोणा तु प्रोथमस्त्रियामित्यमरः । उन्मुखैरूर्ध्वमुखैस्तथा उत्कर्णं यथा तथा उद्ग्रा-
हिता । ऊर्ध्वप्रसारिता धीरा निश्चला कन्धरा ग्रीवा येषां तैरग्रे पुरः । तटे दत्तदृष्टिभिस्तु-
रङ्गैर्मैरायताः प्रसारिताः कीर्णा विक्षिप्ता वालधयो यस्मिन्कर्मणि । तद्यथा तथा अतीर्यत ।

प्रोथैः स्फुरद्भिः स्फुटशब्दमुन्मुखैस्तुरङ्गमैरायतकीर्णवालधि । उत्क-
र्णमुद्ग्राहितधीरकन्धरैरतीर्यतानेतटदत्तदृष्टिभिः ॥ ७३ ॥
तीर्त्वा जवेनैव नितान्तदुस्तरां नदीं प्रतिज्ञामिव ताङ्गरीयसीम् । मृङ्गै-
रपस्कीर्णवृहत्तटीभुवामशोभतोच्चैर्नदितं कुदान्नाम् ॥ ७४ ॥ सी-
मन्त्यमानायदुभूभृतां बलैर्वभौतरङ्गैर्गवलावलिद्युतिः । सिन्दूरिता
नेकपकङ्कणाङ्किता तरङ्गिणी वेणिरिवायता भुवः ॥ ७५ ॥ **
नेकपकङ्कणाङ्किता तरङ्गिणी वेणिरिवायतामुवः

पङ्कस्वभावोक्तिः ॥ ७३ ॥ ******
अनारिसरिदि निशेषः । कर्मणि लिङ् । पङ्कस्वभावोक्तिः ॥ ७३ ॥ ******
॥ तीर्त्वेति ॥ नितान्तदुस्तरमतिमहत्तया अत्यन्ताशक्यं तरणं तां गरीयसीमतिदु-
स्तरां प्रतिज्ञामिव प्रतिज्ञावचनमिव जवेन वेगेनैव तीर्त्वा । मृङ्गैर्विषाणैरपस्कीर्णा आलेखि-
तामहत्यस्तटीरप्रदेशा यैस्तेषां । अपाच्चतुष्पाच्छकुनिष्वालेखन इति किरतेः कात्पूर्वतः सु-
डागमः । ककुद्मतामुक्ष्णामुच्चैस्तरं नदितं नादः । अशोभत । उपमा स्वभावोक्तिः ॥ ७४
॥ सीमन्त्यमानेति ॥ तरङ्गिर्यदुभूभृतां यादवभूपानां बलैः सैन्यैः सीमन्त्यमाना सीमन्तवती क्रि-
यमाणा । सीमन्तवच्छब्दात्तत्करोतीति णिच्यन्तात्कर्मणि शानच् । शानजादेशः णाविष्टवद्भा-

बात्मनेर्लुक् । गवलावलिद्युतिः माहिषविषाणमिवप्रभा । गवलंमाहिषंशृङ्गमित्यमरः । सिन्दूरिताः सिन्दूरवत्कृताः । सिन्दूरवत्करोतीति सिन्दूरात्तत्करोतीति ण्यन्तात्कर्मणि क्तः । णाविष्ठ वद्भावाद्विन्मतोर्लुक् । नैरनेकपैर्द्विपैः कांकणैः सिखरैः अंकिताश्चिह्निताः । कांकणंशि खरेहस्तसूत्रमंडनमपोनिर्विम्बः । तरङ्गिणीयमुनानदी आयता दीर्घभुवो वेणिरिवबभौ इत्युत्प्रेक्षा ॥ ७५ ॥ ************************** ॥

॥ अव्याहतेति ॥ अत्रोर्म्मीणां भुजानां विशेषणान्युभयविपरिणामेनयोज्यानि । केचित् ना। नावातार्यं नाव्यं। नाव्यंत्रिलिङ्गंनौतार्यमित्यमरः । नौवयोधर्मेत्यादिनायत्प्रत्ययः । पयोजलमव्याहतक्षिप्रगतैरप्रतिहतशीघ्रगमनैरनुज्झितोद्राघिमदैर्घ्यंयैस्तैरतिदीर्घैरित्य

अव्याहतक्षिप्रगतैः समुच्छ्रितानानुज्झितद्राघिमभिर्गरीयसः । ना
व्यम्पयः केचिदतारिषुर्भुजैः क्षिपद्भिरूर्मीनिपरैरिवोर्मिभिः ॥ ७६ ॥
विदलितमहाकूलामुक्ष्णाम्विषाणविघट्टनैरलघुचरणाकृष्टग्राहान्वि
षाणिभिरुन्मदैः । सपदिसरितंसाश्रीभर्तुर्बृहद्रथमण्डलैःस्खलितस
लिलामुल्लङ्घ्यैनामगाद्यमवरूथिनी ॥ ७७ ॥ *****

र्थः । समुच्छ्रितानुन्नतान्गरीयसोगुरूनराञ्ऊर्म्मीन् क्षिपद्भिरपाकुर्वद्भिरतएवापरैरू र्मिभिस्तरङ्गैरिवेत्युत्प्रेक्षा । भुजैर्बाहुभिरतारिषुस्तरन्तिस्म । तरतेर्लुङि सिचिवृद्धिर डागमः ॥ ७६ ॥ ************************** ॥

॥ विदलितेति ॥ साप्रकृताश्रीभर्तुःकृष्णस्य वरूथिनीसेनाउक्ष्णामनडुहां विषाणविघ ट्टनैः शृङ्गाघातैर्विदलितानिमहाकूलानियस्यास्तां उन्मदैरुद्गतमदैर्विषाणिभिरल घुभिर्गुरुभिश्चरणैः । पादैराकृष्टावाहिनीतः ग्राहाजलग्राहायस्यास्तां बृहद्भिरथमंडलै रथसमूहैःस्खलितानिव्याकुलीकृतानिसलिलानियस्यास्तामेनां यमुनां सपदि उल्लंघ्य

जित्वानीत्वैत्यर्थः । भुक्त्वेवगम्यतोविशेषणसामर्थ्याज्जगाम । अत्रजयस्यविशेषणगत्याद्भू
तत्वादिहेतुकत्वात्काव्यलिङ्गभेदः । हरिणावृत्तंभवतिहरिणासैन्नैगौरसंबुद्धिवि
ष्टपौरितिलक्षणात् ॥ ७७ ॥ ************************ ॥

॥इतिपदवाक्यप्रमाणपारावारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
माघकाव्यव्याख्यायांसर्वंकषाख्यायांद्वादशःसर्गः ॥ १२ ॥ ******** ॥

इतिश्रीशिशुपालवधेमहाकाव्येकविश्रीमाघकृतौप्रयाणकवर्णनोना
मद्वादशः सर्गः ॥ १२ ॥ ************



॥ यमुनामिति ॥ अथयमुनातरणानन्तरं। तपसस्तनुजोधर्मनन्दनः। अधुनायमुनाम
तीतंअमुंहरिंशुश्रुवान्। भाषायांसदवसश्रुवइतिक्वसुप्रत्ययः। इतिनोच्यते। किन्तुसह
रिर्यदानिजपुराद्चलत्। नचजनमारिर्यांक्षमतूकर्मणिनत्रादितप्रभृति। अहश्चनि
शाचअहर्निशं। समाहारेद्वंद्वेकवद्भावेअत्यंतसंयोगेद्वितीया। नृपतेर्धर्मराजस्यवार्त्त
याइहनिविष्टइतोनिर्गतइतिवृत्तान्तेनसमा चारिसञ्चरितयागतमितियावत्। भावेतु
ङ्। सन्निहितयमुनातरणवृत्तान्तवद्यत्रहितसकलवृत्तान्तोनिजनगरप्रस्थानात्प्रभृति
क्षणमागतएवेत्यर्थः। अस्मिन्सर्गेमंजुभाषिणीवृत्तं। सजसाजगौभवतिमंजुभाषिणी

यमुनामतीतमथशुश्रुवानमुन्तपसस्तनूजइतिनाधुनोच्यते। सयदा
चलन्निजपुरादहर्निशन्नृपतेस्तदादिसमाचारिवार्त्तया॥ १ ॥ य
दुभर्तुरागमनलब्धजन्मनःप्रमदादमानिवपुरेमहीयसि। सहसात
तःससहितोऽनुजन्मभिर्वसुधाधिपोभिमुखमस्यनिर्ययौ॥ २ ॥
रभसप्रवृत्तकुरुचक्रदुन्दुभिध्वनिभिर्जनस्यबधिरीकृतश्रुतेः। समवा
दिवक्तृभिरभीप्सकुथाप्रक्वतार्थशेषमथहस्तसंज्ञया॥ ३ ॥ ❋

तिलक्षणात्॥ १ ॥ ******************************* ॥
॥ यदुभर्तुरिति ॥ ततोहरेर्यमुनोत्तरणानन्तरंसवसुधाधिपोधर्मराजः। यदुभर्तुःहरे
रागमनेनलब्धजन्मनोलब्धोदयात्। जातादित्यर्थः। प्रमदाद्धर्षात्। प्रमदसंमदौहर्षे
इत्यप्रत्ययांतोनिपातः। महीयस्यतिविपुलेपिपुरेअमान्हर्षकृतशरीरवृद्धेरिवापरिमि
तविकाशःसन्नित्युत्प्रेक्षा। सहसाअनुजन्मभिरनुजैःसहितोस्यहरेरभिमखंनिर्ययौ॥ २ ॥
॥ रभसेति ॥ रभसोवेगहर्षयोरितिविश्वः। तेनप्रवृत्तैः। कुरुचक्रदुन्दुभिध्वनिभिः
कौरवसेनातूर्यघोषैःबधिरीकृतश्रुतेर्विकलीकृतश्रोत्रेंद्रियस्य। श्रोतुंजनस्यवक्तृभिः कथ

कैरभीष्टसंकथाविष्टालापेषुप्रत्यक्षतस्यवक्तुःप्रकृतस्यार्थस्यविवेयस्यशेषंवक्तव्यावशिष्ट । अथवाविर्ययानंतरंहस्तसंज्ञया । हस्तसंकोचेनसमवादिसंवादिना । श्रीकृष्णस्यागम नसंगेषाणतथादुन्दुभीनाजघ्नुः । यथोक्तशेषङ्करसंज्ञयानिष्पाद्यतइत्यर्थः । अवधिरा कारणस्यजनविशेषणद्वाराहस्तसंज्ञयावृत्तिहेतुकत्वात्काव्यलिङ्गभेदः ॥ ३ ॥ ** ॥

॥ अपदेति ॥ द्रुतंशीघ्रं । भ्रमिताःपरिवर्त्तिताःहेमनेमयःकनकप्रचक्रान्तयेषान्तेचक्रधा राप्रधिर्नेमिरितिहलायुधः । अतएवजविनावेगवतामारुतेनाश्चितानिकम्पितानिपरस्प रमुपमांनीतिःपरस्परोपमानानि । अन्योन्यसदृशानिक्षितिरेणुकेतुवसनानिस्तोत्थापित भूरेणवः । स्वारोपितंध्वजपटास्त्वयेषान्तेक्षितिक्षियन्तीशेतेइतिक्षितिक्षितःक्षितीशाःक्षि

अपदान्तरञ्चपरितःक्षितिक्षितामपतन्द्रुतंभ्रमितहेमनेमयः ।
जविमारुताश्चितपरस्परोपमक्षितिरेणुकेतुवसनाःपताकिनः ॥ ४ ॥
द्रुतमध्वनन्नुपरियाणिवृत्तयःपणाचाङ्वाम्बुचरणाक्षताभुवः । नन्ततु
स्ववारिधरधीरवारणाध्वनिहृष्टकूजितकलाःकलापिनः ॥ ५ ॥

निवासइतिधातोर्लीडादिकाक्षिपितुक् । क्षितिपतिष्वेवासौक्षितिक्षित्इतिभट्टमल्लः । निवासइतिधानोस्लौडादिकाक्षिपितुक् । परितःसर्वतः तेषांसम्बन्धिनःपताकाःयेषुसन्तीतिपताकिनोरथाःवृक्षादित्वादिनिः । परितःसर्वतः नास्तिपदस्यांतरमवकाशोयस्मिन्कर्म्मणितदपदांतरंसंसक्तंयथातथा । संसक्तत्वंच वहितसमपदान्तरमपीत्यमरःअपतन्नधावन् । अत्रस्वराष्ट्रवर्णनवहूनांकेतूनांचप्रस्त तंथावपरस्परोपमेवमितिविशेषणाद्रेणुवत्केतवः नकेवलप्रकृतानांसदानुल्ययोगिता । केकेतवः । इतिअसंसयस्वव्यज्यतेइत्य केतुवस्त्ररेणवइतिउपमेयोपमायकेरेणवः । लङ्कारेणालंकारध्वनिः ॥ ४ ॥ ************************ ॥

॥ द्रुतमिति ॥ अम्बुचरणाक्षमाःतुरगखुरघट्टिताःभुवःउपरिपृष्ठभागेपाणिवृत्तयःपा

णिनामानि । येषान्तानुपरिपाणिवृत्तयःपणवावाद्यविशेषाइवेत्युपमा । द्रुतंद्रुतमेषा
ध्वननुध्वनतिस्म । द्रुतंशीघ्रमित्यमरः । वारिधरशब्देनतद्गर्जितंलक्ष्यते । तद्वद्गीरैर्गभी
रैर्वारणध्वनिभिर्गजैर्बृंहणैर्हृष्टाअतएवकूजिनोकलाकूजिताइत्यर्थः । ननोविशेषणसमा
सःकलापाःयेषांसंतीतिकलापिनोवर्हिणस्तननृनुर्नृत्यंतिस्म । अत्रोपमयोःसंसृष्टिःक्व
चवारिधरोयंयथाकलापिनोगजबृंहितेषुध्वनगर्जितेभ्रान्तिमन्तरेणनृत्यासम्भवान्भ्रांति
मदलंकारोव्यज्यते । अलङ्कारेणालङ्कारध्वनिः ॥ ५ ॥ ************* ॥
॥ व्रजतोरिति ॥ तदानस्मिन्समयेकालेअस्तुरारिपाण्डुसुतसैन्ययोःहरिपार्थसैन्ययोः ।
प्रणयपूर्वस्नेहमेकतामैक्यं । व्रजतोर्गच्छतोःसतोरपि । विषाणिभिरुभयसेनावर्तिभिःगजैरु

व्रजतोरपिप्रणयपूर्वमेकतांकुरुराधिनाथकुरुनाथसैन्ययोः । रुरुवे
विषाणिभिरनुक्षणम्मिथोमदमूढबुद्धिषुविवेकताकुतः ॥६॥ अ
वलोकएवनृपतिःस्मदूरतोरभसाद्रथादवतरीतुमिच्छतः । अवती
र्णवान्प्रथममात्मनाहरिर्विनयम्बिशेषयतिसम्भ्रमेणसः ॥ ७ ॥

नुक्षणंप्रतिक्षणंमिथःपरस्परंरुरुषेचक्रुधे । भावेलिट् । तथाहिमदमूढबुद्धिषुविपरीत
प्रज्ञेषुप्राणिषुविवेकिताकार्याकार्यविचारताकुतःनास्त्येवेत्यर्थः । अथतेषांस्वामिसौहा
र्दमपिस्वयंविरोधितानदोषायेतिभावः । सामान्येनविशेषणसमर्थनरूपोऽर्थान्तरन्या
सः ॥ ६ ॥ ****************************** ॥
॥ अवलोकइति ॥ दूरतोदूरादेवावलोकहरेर्दर्शनएवरभसाद्धर्षाद्रथादवतरीतुमव
तरीतुं । वृतोवेतिविकल्पाद्दीर्घः । इच्छतोनृपतोधर्मराजात्प्रथमंतदवतरणात्पूर्वमेवे
त्यर्थः । आत्मनास्वयमेव । प्रकृत्यादित्वात्तृतीया । अवतीर्णवान् । रथादवरूढःसंन् ।
निष्ठेतितरतेःक्तवतुप्रत्ययः । ऋतइद्धातोरितीत्वंवोंरुपधायादीर्घःरदाभ्यामितिनि

कानन्वेरपाभ्यामितिशाल्वं। सहरिःसंभ्रमेणात्वरातिशयेनविनयंमानौद्धत्यंविशेषयतिस्म। अतिशाययतिस्म। एतेनहरेःपूज्ययुधिष्ठिरइतिभावोध्वन्यते ॥ ७ ॥ ****** ॥

॥ वपुषेति ॥ पुराणपुरुषःहरिः। सर्वलोकज्येष्ठोपीतिभावः। नयाभुवनैर्नतेनमस्कृतेनापि। विहितंसंवादितमात्मनागौरवमुत्कर्षोयेनसतस्यनपूज्येषुनमस्येषुकनत्यहेतुत्वादितिभावः। अतएवात्रविचित्रालङ्कारः। विचित्रंतत्स्वविरुद्धस्यफलस्याप्त्यमुद्यमाइति लक्षणात्। पुरःक्षितावग्रहभूमौपरिपूज्यमानापरितःपूजांक्रियमाणापृथुःस्थूलाहारयष्टिरिवहारोमुक्तावलिर्यस्यतेनवपुषाशरीरेण। नत्वंजलमात्रेणतथास्यपूज्यत्वादितिभावः। पूज्यत्वेहेतुमाह। पितृष्वसुस्तनयमितिपितृभगिनीपुत्रंधर्मराजमित्यर्थः। विभा

वपुषापुराणपुरुषःपुरःक्षितौपरिपूज्यमानपृथुहारयष्टिना। भुवनैर्नतोपिविहितात्मगौरवःप्रणनाम नाम तनयम्पितृष्वसुः ॥ ८ ॥

मुकुटांशुरञ्जितपरागमग्रतःसनयावदापशिरसामहीतलम्। क्षितिपेनतावदनपेक्षितक्रममभुजपञ्जरेणरभसाद्गृह्यत ॥ ९ ॥

षास्तस्यपत्योरितिनिषेपदेशस्येतियत्वं। अत्रापिपूर्ववत्भावंध्वनिः। भुवनैर्नतापिहरिर्लोकयात्रानुवर्तीस्वयमेनंननवानितिनिविरोधाभासोलङ्कारोविचित्रेणोक्तेनसङ्कीर्णः। नामनामेतिवृत्त्यनुप्रासभेदस्यसंसृष्टिइत्याधूह्यं ॥ ८ ॥ ************* ॥

॥ मुकुटेति ॥ सहरिर्मुकुटांशुभिः। रञ्जितःस्वर्णमापादितःपरागोरेणुर्यस्यतदग्रतःपुरतोमहीतलंशिरसायावन्नापनस्पृशदित्यर्थः। तावत्क्षितिपेनधर्मराजेनानपेक्षितक्रमंअनपेक्षितःक्रमःपरिपाटीयस्मिन्कर्म्मणितत्तथा। भुजाभ्यामेवपञ्जरेणइतिकिंरूपकंरभसाद्वेगादगृह्यतगृहीतः। प्रणामक्रियासमाप्तःप्रागेवअग्राक्षिप्यतीत्यर्थः ॥ ९ ॥

॥ तेति ॥ कपाटतटविस्तृतंतनतोमुरवैरिणोहरेर्वक्षस्तनकल्पे। क्षमाभुजोधर्म्मराजस्योर

स्तिकममैनपरिमितमित्यर्थः । तथापिविकटीकृतेनविपुलीकृतेदीर्घयोर्भुजयोर्युगलेनप रितःसमन्तातअभिषस्वजेआलिङ्गितानांवक्षसांभुजाभ्यांचकथंचित्परिच्छिन्नमभूत् । ननु वक्ष्यसेत्यर्थः । सदिस्वंज्योःपरस्यलिटीतिधातुसकारस्यषत्वनिषेधात्स्थादित्वेयभ्यास स्यैवषत्वं । अत्रहरिवक्षसोवैपुल्यादतिशयद्योतनायनृपवक्षःसमानेप्यसमानोक्तेःसम्ब न्धेअसंबन्धरूपातिशयोक्तिश्च । अनयोश्चसतःसिद्धविप्रौढोक्तिसिद्धयोरप्यतिशययोर भेदाध्यवसायादुत्तापनंविरहस्य ॥ १० ॥ ********************* ॥

॥ गतयेति ॥ नाभ्यांपरिपरिणाभि । विभक्त्यर्थेऽव्ययीभावः । वारिजंनाभिकमलमित्यर्थः । अवमुच्यविहायअध्युरःउरसिनिरन्तरंसततंगतयाप्राप्तयाश्रियानाभिसरोजत्यागेनात्रनि

नममौकपाटतटविस्तृतमत्तनौमुरवैरिवक्षउरसिक्षमाभुजः । भुजयो स्तथापियुगलेनदीर्घयोर्विकटीकृतेनपरितोभिषस्वजे ॥ १० ॥ ग तयानिरन्तरनिवासमध्युरःपरिनाभिमूलमवमुच्यवारिजम् । कुहरु जनिर्दयनिपीडनाभयान्मुखमध्यरोहिमुरविद्विषःश्रिया ॥ ११ ॥

वासेनतस्मादपहृत्यमितिध्वनितंकुहरुजस्यनिर्दयनिपीडनागाढाश्लेषरूपात्तोभया न्मुरवैरिणांमुरद्विषोमुखमध्यरोहिअधिरूढः । भीतास्त्रीऽधमारोहतीतिलोकवेदयोःप्रसि द्धमितिभावयोनूनमित्युत्प्रेक्षाअत्रवाध्यावाःसुहृदाश्लेषप्रभावाःशोभायाःश्रियेतिश्लेषम हिम्नाप्रतीयमानायारसयास्तहाभेदाध्यवसायात् । क्रमेणनाभिकमलासेनोनाधारसम्ब न्धनात् । श्लेषमूलातिशयोक्तिरुत्थापितानावदर्थःपर्यायेद्रक्रमेणैकमनेकस्मिन्नाधार्व र्त्तनं । यदिएकस्मिन्नर्थवानेकम्पर्यायालङ्कृतिर्मतेतिलक्षणात् । नमुपजीविनाश्री मुखारोहणस्यभयहेतुकत्वकथनादुत्प्रेक्षेति । अनयोरंगांगिभावेनसङ्करः ॥ ११ ॥ *

॥ शिरसीति ॥ नृपोधर्मराजःसुरारिबंधनेपुराबलिबंधनेकृतवामनंकपटवामनं । तदा

पयेोपपत्तिसमर्थेतु विनयवामन विनयनम्र मित्यर्थः । तं हरिमिति शेषः वीर्यविजितामरद्रुमप्रसवेन पारिजातहरणे प्रख्यातः शौर्यव्यंजिना निजानां कुसुमयशसैव पारिजातविजयस्त्रनयेव कीर्णत्वादाइत्युत्प्रेक्षा । वासितशिरोरुहे सुरभितकेशे शिरसि जिघ्रतिस्म । प्रसवे यमूर्द्धन्यवघ्राणमिति स्मरणात पुराकिलभगवान्सत्यभामाप्रीतये वज्रादिंद्रलोकादपहृत्यपारिजातं निजगृहे चारोपितवानिति कथानुसंधेया ॥ १२ ॥ ****** ॥

॥ सुखेति ॥ वसुदेवाज्जन्म यस्य तस्मिन्वसुदेवजन्मनि वसुदेवो जन्मोत्तरपदत्वाद्धाधिकरणे बहुव्रीहिर्वामनवचनादित्युक्तं प्राक् । शिथिलीकृतेपि सत्यपि सुखवेदनया आलिंगनसुखानुभवेन हृषितानि उद्गतानि रोमकूपविमलायस्यां तया । हृदयेर्लोमभिर्खिनीडा

शिरसिस्मजिघ्रतिसुरारिवन्धनच्छलवामनम्विनयवामनन्तदा । यशसेववीर्यवीजितामरद्रुमप्रसवेनवासितशिरोरुहेन्रुपः ॥ १२ ॥

सुखवेदनाहृषितरोमकूपयाशिथिलीकृतेपिवसुदेवजन्मनि । कुरुभर्तुरङ्गलतयाननत्यजेविकसितकदम्बनिकुरम्भचारुताम् ॥ १३ ॥

गमः । कुरुभर्तुर्द्धर्मराजस्य अंगलतया विकसितः कदंबनिकुरम्भस्य कदंबकुसुमसमूहस्य चारुतां कामनीयकं न तत्यजे न त्यक्ता किन्तु स्वीकृतेत्यर्थः । आश्लेषापगमेपि तज्जन्मसुखानुवृत्या तत्कार्य्यस्य रोमहर्षस्यानुवृत्तिरिति तात्पर्यार्थः । अतएव शिथिलीकृते हृषितरोमकूपयेत्यकारणाकार्यकथनाद्विभावनानपेक्षयावेयमुत्प्रेक्षा कदम्बनिकुरम्भचारुतानिदर्शनतयासहांगेनसंकीर्यते ॥ १३ ॥ ********************** ॥

॥ इतरानिति ॥ जनसभाजनोचितः सर्वजनसंभावनार्हः प्रसभेन बलात् उद्धृता असुरसभा असुरसंघो येन सः । प्रमनाः हृष्टचित्तः स हरिः प्रमोदपरिफुल्लचक्षुषो हर्षोत्फुल्लनेत्रान् इतरान् भीमादीन् क्षितिभुजोन्द्रपश्चानुपश्चाजन्म येषां तान् अनुजन्मनः अनुजान्

यथोचितान्यथार्हं संमान् असभाजयत् स्नेहआलिंगनादिभिरानंदयामासेत्यर्थः । आनन्दनसभाजनेत्यमरः । सभाजप्रीतिदर्शनयोरिति धातोश्चौरादिकाल्लिङ् ॥ १४ ॥ *

॥ समिति । तुल्यमहसः समानतेजस्कान् शिलाइवशिलाभिर्घनान् क्षितिपतीन् । घनपक्ष्मदीर्घतरबाहुशालिनः एवंभूतान् । क्षितीश्वरः समं युगपदुपेत्य । आङ् पूर्वादिणः क्त्वाल्यपितुक् । पुरन्दरः कुलिशपाणिरेणकुलिशेनक्षतेपूर्वमित्यर्थः । संप्रतिअसंभावादितिभावः परशेनिविभक्तिप्रतिरूपकमव्ययं । गिरयेगिरीनपरिशिश्लिषुः आलिङ्गितवन्तः उपमा ॥ १५ ॥ ******************************॥

इतरानपिक्षितिभुजोऽनुजन्मनः प्रमनाः प्रमोदपरिफुल्लचक्षुषः । स यथोचितान्स्वनसभाजनोचितः प्रसभोद्धृतासुरसभोऽसभाजयत् ॥ १४ ॥ समुपेत्यतुल्यमहसः शिलाघनान्घनपक्ष्मदीर्घतरबाहुशालिनः । परिशिश्लिषुः क्षितिपतीन्क्षितीश्वरः कुलिशाण्यरेणगिरयेगिरीनिव ॥ १५ ॥ इभकुम्भतुङ्गघटितेतरेतरस्तनभारदूरविनिवारितोदराः । परिफुल्लगण्डफलकाः परस्परम्परिरेभिरे कुकुरकौरवस्त्रियः ॥ १६ ॥

॥ इभेति ॥ इभकुम्भाइवतुंगाः कठिनाः घटिताः इतरेतरस्तनभारास्तैर्दूरेविनिवारितान्यनिकार्ण्यादिस्फुटतयास्थापितान्युदराणि यासान्ताः । स्वांगाच्चेतिविकल्पाद्नोकारः । परिफुल्लगण्डफलकाः हर्षपुलकितगण्डस्थलाः कुकुरकौरवस्त्रियोयादवपाण्डवाङ्गनाः परस्परं परिरेभिरे । परिफुल्लगण्डस्थलकाः आश्लिष्टवन्त्यः । परिरंभः परिष्वङ्गः आश्लेषउपगूहनमित्यमरः । परिफुल्लेति । फुल्लतेः पचाद्यजन्तनतुफुल्लेतिनिष्ठान्तोऽनुपसर्गाद्धेतिकथनाविरोधात् ॥ १६ ॥ ******************॥

॥ रथेति ॥ रथवाजिपत्तिकरिणीभिः समाकुलं सङ्कीर्णं करिणीग्रहणं पुङ्गजव्यावृत्यर्थं

अनेयुद्धानर्हं तयतासामस्तेनांगत्वान्नवद्वंद्वैकवद्भावः । तदनीकयोः सैन्ययोः । वरूथि
नोवलंसैन्यंचक्रंचानीकमस्त्रियामित्यमरः । द्वयंमिथस्सान्योन्यंसमागतसंगतं । गमे
र्लङिसमोगमृच्छेत्यादिनावात्मनेपदंवागमइतिचिचः किच्चादनुदात्तोपदेशेत्यादिना
अनुनासिकलोपः ह्रस्वादङ्गादितिसकारलोपः । करिणःपुङ्गजाःदूरतएवपृथगसंमतंद
धिरेधृताःस्थापिताइत्यर्थः अथवाकिमत्रचित्रमितिभावः । महतांमहासत्वानांसंबंधि
सर्वंचेष्टितमितिभावः । जनानतिगच्छतीतिजनातिगमतिजनंसर्वलोकविलक्षणमिति
भावः सामान्येनविशेषणसमर्थनरूपोऽर्थान्तरन्यासः ॥ १७ ॥ ********* ॥

रथवाजिपत्तिकरिणीसमाकुलन्तदनीकयोस्समागतद्वयम्मिथः । द
धिरेपृथक्करिणएवदूरतोमहतांहिसर्वमथवाजनातिगम् ॥१७॥ अ
धिरुह्यतामितिमहीभृतेरितःकपिकेतुनार्पितकरोरथंहरिः । अ
वलम्बितैलविलपाणिपल्लवः श्रयतिस्ममेघमिवमेघवाहनः ॥१८॥
रथमास्थितस्यचपुराभिवर्त्तिनस्तिसृणाम्पुरामिवरिपोर्मुरद्विषः । अथ
धर्ममूर्त्तिरनुरागभावितःस्वयमादितप्रवयणम्प्रजापतिः ॥ १९ ॥

॥ अधीति ॥ अथहरिरधिरुह्यतांरथमारुह्यतामित्येवंमहीभृताधर्मराजेनेरितःउक्तः
सन् । वदेःकर्मणिक्तः वचिस्वपीत्यादिनासंप्रसारणं । कपिकेतुनार्जुनेनार्पितकरोदत्तह
स्तःसन् । अवलम्बितोवष्टब्धःऐलविलस्यकुबेरस्यपाणिपल्लवोयेनसः मेघवाहनइन्द्रः
इन्द्रोमेघमिवरथंश्रयतिस्म । आरूढवानित्यर्थः उपमा ॥ १८ ॥ ****** ॥
रथमिति । चेतिचार्थः अथरथारोहणानन्तरंरथमास्थितस्यारूढस्यपुराभिवर्त्तिनः
इन्द्रप्रस्थाभिवर्त्तिनः त्रिपुराभिवर्त्तिनश्चमुरद्विषोहरिस्तिसृणांपुरांरिपोः त्रिपुरान्त
कस्येव । नतिसृचतसृइतिनामिदीर्घप्रतिषेधः । धर्ममूर्त्तिर्धर्मात्माप्रजापतिजीवनेऽव

रः धर्मराजो ब्रह्मा च। प्रवीयते प्रेर्यतेऽनेनेति प्रवयणं प्राजनं प्रतोदरण्ड इत्यादयः। अत एव प्रवयणोदण्डः प्रजनोदण्ड इति काशिका। अजेःकरणेल्युट् अजेर्व्यघञपोरिति विकल्पाद्जेर्वीभावः पूर्वपदात्संज्ञायामग इति णत्वं। स्वयमादित गृहीतवान्। सारथ्यं कृतवानित्यर्थः दद्रातेः कर्त्तरि लुङि तङ् स्थाघ्वोरितीकारे सिचः कित्वे चह्रस्वादङ्गादिति सलोपः। अत्र त्रिपुरहरणे ब्रह्मा हरस्येव हरेरयं सारथ्यं चकारेत्युपमार्थः। तस्य प्रजापतिरिवरण्ज ब्रह्मणोऽश्लेषमूलाभेदाध्यवसायादतिशयोक्तिर्व्यूढ इति सङ्करः॥ १९॥ ***॥

॥ शनकैरिति॥ चेतिकिञ्चिदर्थः तस्य हरेस्तनुषु सूक्ष्मेषु जालकान्तरेषु गवाक्षरन्ध्रेषु। स्फुरितस्य प्रसृतस्य तपाकरोत्करस्यांशिभिरकरणपुञ्जस्याहतिरिवाहतिर्यस्य तत्प्रकीर्णकं

शनकैस्ततस्तनुजालकान्तरस्फुरितस्तपाकरकरोत्करसङ्गतिः। पृथुफेनपुटमिव निम्नगापतेर्मरुतस्य सूनुरधुवन्प्रकीर्णकम्॥ २०॥ विकसत्कलायकुसुमासितद्युतेरलघूडुपाण्डुजगतामधीशितुः। यमुनाह्रदोपरिगहंसमण्डलद्युतिजिष्णुजिष्णुरधृतातपवारणम्॥ २१॥

चामरं निम्नगापतेः समुद्रस्य महद्वायुः पृथुविपुलं फेनपुटं फेनपुञ्जमिवास्य मरुतः सूनुर्भीमसेनः शनकैरधुवनधुवतिस्म। धुवतिरयं तौदादिक इत्युक्तं। उपमयोः सङ्करः॥२०॥

॥ विकसदिति॥ विकसत्कलायकुसुमं। कालपुष्पं कलायः स्यादिति वैजयन्ती। तद्वदसितद्युतेर्नीलवर्णस्य जगतामधीशितुर्जगन्नाथस्य जिष्णुरर्जुनः अलघूडुपाण्डु स्थूलनक्षत्रधवलं। अत एव यमुनाह्रदस्योपरि सुपरिगतं अन्यत्रापि दृश्यत इति डप्रत्ययः। तस्य हंसमण्डलस्येव शोभाया जिष्णु जयनशीलं। ग्लाजिस्थश्च ग्स्नुरिति ग्स्नु। चत्रम् वारणमातपत्रमधृतधृतवान्। धृञः कर्त्तरि लुङ् स्वरितञित इत्यात्मनेपदं ह्रस्वादङ्गादिति सकारलोपः अत्राप्युपमाशङ्करः॥ २१॥ ************॥

॥ पवनेति ॥ पवनात्मजेन्द्रसुतमध्यवर्त्तिना भीमार्जुनमध्यगतेन रुचिरेण चक्रिणा ह रिणा उभयोर्ग्रहाणामन्यतमयोरन्तरे मध्ये स्थित्यावासेन कारितं संपादितं । वृत्तिविषये उभशब्दस्य स्थाने नूभयशब्दस्य च प्रयोगो व्याख्यातः । दुरुधुरेत्याख्या यस्य तत् दुरुधुराख्यं योगं ध्वान्तग्रहमध्यगतेनेत्यर्थः । इन्दुनेवेत्युपमा । नितरामतिशयेन । अव्ययादामुप्रत्ययांतः । अरोचि अशोभि । रोचतेर्भावे लुङ् । शोभा च रमणीयस्यानुरूपान्तर समायोगाच्छोभातिशयो जायते रनफा चनवोविवेतिभावः अत्र भगवानाचार्यमिहिरः । हित्वार्कं सुनफा नफा दुरुधुराः स्वान्त्योभयस्थैर्ग्रहैः शीतांशोरिति । एवमदेवस्यटीकांकत्र्या यांशर्मणा रविवर्जैर्द्वादशगरमका । चन्द्राद्द्वितीयगैः सुनफा उभयस्थितैर्दुरुधुरकेम

पवनात्मजेन्द्रसुतमध्यवर्त्तिना नितरामरोचि रुचिरेण चक्रिणा । ध्व
ध्वनेव योगमुभयग्रहान्तरस्थितिकारितं दुरुधुराख्यमिन्दुना ॥२२॥
वशिनं क्षितीश्वरयनया विवेश्वरन्नियमोयमस्य नियतं यतिर्यथा । विज
यश्रियावृतमिवार्कमारुतावतुसस्ततस्तमथदस्नयोः सुतौ ॥ २३ ॥

॥ २२ ॥ ************************* ॥

द्रुमसंज्ञित इतोऽन्यदिति ॥ २२ ॥ अथ भीमार्जुनौ प्रवेशनानंतरं वशिनमिन्द्रियजयवन्तं । अव्यसनिनमि ॥ वशिनमिति ॥ अथ भीमार्जुनौ पवेशनानंतरं वशिनमिन्द्रियजयवन्तं । अव्यसनिनमि तियावत् । क्षितीश्वरं भूपतिं अयः शुभावहो विधिर्नयनीतिनयः ताविव देवपुरुषकाराविवेत्यर्थः । नियतमाचारनिष्ठयतिं जितेन्द्रियं । ग्रामायग्रामाः यतिनोयतयस्तेत्यमरः । नियमः शरीरानिरिक्तदेशकालादिसाधनापेक्षः संध्योपासनजपादिः । यमः शरीरमात्र साधननापेक्षोहिंसादिः शरीरसाधनापेक्षं नित्यं यत्कर्मतत्पनः । नियमस्तु यत्कर्म नित्यमा गन्तुधनं सवयथा यमनियमाविन्यर्थः । इववत्यथाशब्दादिनिदंरिङन्यभिधानात् । वि जयश्रियायुतं । आसन्नविजयं विजीगीषुं रिपुमित्यर्थः अर्कमारुताविव दस्रयोरश्विनोः सु

नौनकुलसहदेवौ । नाशत्यावश्विनौ दस्रावित्यमरः । तंहरिमनुससृतुरनुचेरतुःपृष्ठो
पसर्पणंचक्रतुरित्यर्थः इहसर्वकर्तृमनोरथानुकूलव्यापारवचानुसरणं । इयंमालोपमा
॥ २३ ॥ *************************** ॥

॥ मुदितैरिति ॥ तदानस्मिन्समये इति मुदितैर्हृष्टैरविनीयोऽकल्कोकपटइतियावत्
सम्भ्रमःआदरस्तेनविकाशिनीभिर्भक्तिर्येषांतैः । विपूयविनीयजित्येतिक्यप् नपुंसकपूर्वप
दः स्त्रीलिङ्गपूर्वपदोवाबहुव्रीहिः । अविनीतंशासतीत्यविनीतशासिभिः दुष्टशिक्षकैः
पाण्डवैःदितिजन्मनांरिपोःकृष्णस्यविषयेउपसमीपेसीदन्तिअस्मेत्युपसेदिवांसः नेवासिनः
। भाषायांसदवसश्रुवःइतिसदेर्लिट्कसुरादेशः । तैरुपसेदिवद्भिरुपदिष्टैरिगुणवित्युप
मा । विनीतमनुद्धतञ्चववृतेवृत्तं । भावेक्तः । ननुविकाशिभक्तिरितिअत्रकथंपूर्वपद

मुदितैस्तदेतिदितिजन्मनांरिपावविनीयसम्भ्रमविकाशिभक्तिभिः ।
उपसेदिवद्भिरुपदेष्टरीवतैर्ववृतेविनीतमविनीतशासिभिः ॥ २४॥

स्यपुंवद्भावः । भक्तिशब्दस्यप्रियादिपाठत्वात् स्त्रियाःपुंवदितिपुंवद्भावस्तत्रेप्रियादिष्वि
तिनिषेधादितिविकाशिशब्दस्यापिविकाशिनिवृत्तिमात्रपरमस्त्रीत्वस्याविवक्षितत्वान्नपुंस
कपूर्वपदोबहुव्रीहिरितिकेचित्तदेतदभिप्रेत्योक्तंवृत्तिकारेणइष्टभक्तिरित्येवमादिषुस्त्री
पूर्वपदस्याविवक्षितत्वात्सिद्धिरितिएतदेवस्पष्टीकृतंगणव्याख्याने । दृढंभक्तिर्यस्येति
। नपुंसकंपूर्वपदं । धात्वर्थविशेषणमात्रपरेदृढशब्देलिङ्गविशेषस्यापकारत्वात्स्त्रीत्व
विवक्षितमिति । भोजराजस्तुभक्तिःकर्मसाधनायमित्यनेनसूत्रेणभज्यतेसेव्यतेइतिक
र्मार्थत्वेनविरलीभक्तिरित्यादिभवति । भावसाधनायांतुदृढभक्तिर्भवत्यादिवदतीत्याह
ति । तदेतत्सर्वमस्माभिरितकालिकदासत्रयसञ्जीविन्यांदृढभक्तिरित्यादिषुविवेचि
तंतस्माद्विकाशिभक्तिर्भवत्यत्रापितद्धानेनपूर्वपदस्यस्त्रीत्वनपुंसकत्वैष । रूपसिद्धिर

स्लीनिस्थितं ॥ २४ ॥ ************************** ॥

॥ गतयोरिति ॥ इतिसैन्ययोःभानुजह्नुतनयेयमुनाजाह्नव्योर्नद्योरम्भसोःप्रवाहेगतयोरि वअभेदमैक्यंगतयोःसतोः । यस्यचभावेनभावलक्षणमितिसप्तमी । एतेनसैन्ययोरचार्य त्वमुक्तं । अथसैन्यमेलनानन्तरंआनकैर्मण्डलदुन्दुभिर्दुन्दुभिरेदवेंवाइवेत्युत्प्रेक्षा । प्रतिना दितानिअमरविमानानिङ्द्वमागत्याम्बरस्थितानिविमानानिदेवयानानिपरमयेवआद रपरायणतयेवयस्मिन्कर्मणिनद्ध्यातयानितरान्दध्वनेर्ध्वनितमभावैजिड् ॥ २५ ॥ ॥ मखमिति ॥ क्षितिपतेर्धर्मराजस्यमखंक्रतुमीक्षितुमुपेयुषांतत्स्थानआगतानांभूभृतां

गतयोरभेदमितिसैन्ययोस्तयोरथभानुजह्नुतनयाम्भसोरिव । प्रति
नादितामरविमानमानकैर्नितरामुदापरमयेवदध्वने ॥ २५ ॥
मखमीक्षितुंक्षितिपतेरुपेयुषाम्परितःप्रकल्पितनिकेतनम्बहिः ।
उपरुध्यमानमिवभूभृताम्बलैःपुटभेदनन्ददनुसुतारिरैक्षत ॥२६॥
प्रतिशब्दपूरितदिगन्तरःपतन्पुरगोपुरम्प्रतिससैन्यसागरः ।रुरुचे
हिमाचलगुहामुखोन्मुखःपयसाम्प्रवाहइवसौरसैन्धवः ॥ २७ ॥

राज्ञांबलैःसैन्यैःबहिःपरितःप्रकल्पितानिनिर्मितकेतनानिनिवासानियस्यतत्अतएवोप रुध्यमानंशत्रुसेनावेष्ट्यमानमिवास्थितमित्युत्प्रेक्षा । पुटभेदनमयद्धनमिन्द्रप्रस्थं । प त्तनंपुटभेदनमित्यमरः । दनुसुतारिर्दानवारिःपुरोग्रेप्रैक्षतापश्यत् ॥ २६ ॥ * ॥ ॥ प्रतीति ॥ प्रतिनादैःप्रतिध्वानैःपुरितंव्याप्तदिशांअन्तरमन्तरालंयेनसः । पुरगोपुरं द्वारंप्रति । गोपुरंतुपुरद्वारिद्वारमात्रेनपुंसकइतिविश्वः । एवंचनपुरशब्दस्यपौनरु क्त्यशंका । पतन्धावनसैन्यसागरःसेनासमुद्रः हिमाचलगुहामुखस्योन्मुखोभिमुखःसु रसिंधोगङ्गायांभवसौरसैन्धवः । सुरसिंधुशब्दस्यपूर्वपदस्यवेत्युभयपदवृद्धिः । पयसांप्र

वाहइवलसचेरेजे। उपमालङ्कारः॥ २७ ॥ ****************** ॥

॥ असकृदिति ॥ असकृद्वहुशोगृहीतोलोकधारणायस्वीकृतोवपुर्देहेषुमत्स्यकूर्मादिषुदेहेषुशरीरेषुसम्भवःप्रादुर्भावोयेनसः। अन्यत्रस्वकर्मणाप्राक्तनयोनित्वंधसंभवइत्यर्थः। पुरुषःपुराणःपुरुषोहरिजीवश्च। विभक्तानिनराणांगोपुराणद्वाराणिइन्द्रियद्वारभेदानियस्मिंस्तत्पुरं। पत्तनंशरीरंचापुरपुरिशरीरोचेतिविश्वः। पंचभिरिन्द्रियैःसमनिवपञ्चभिर्नरेन्द्रसूनुभीराजपुत्रैःपाण्डवैःसहअसौहरिस्तत्पुरंप्रविशतिस्म। जीवोपिदेहाद्देहान्तरंपूर्वेन्द्रियैःसहप्रविशतिलिंगशरीरस्यानपायादितिभावःश्लेषसंकीर्णेयमुपमा ॥ २८ ॥ ************************** ॥

असकृद्गृहीतबहुदेहसम्भवःतदसौविभक्तनरगोपुरान्तरम्। पुरुषःपुरम्प्रविशतिस्मपञ्चभिस्समिन्द्रियैरिवनरेन्द्रसूनुभिः॥२८॥ तनुभिस्त्रिनेत्रनयनानवेक्षितस्मरविग्रहद्युतिभिरद्युतन्नराः। प्रमदाश्चयत्रखलुराजयक्ष्मणःपरतोनिशाकरमनोरमैर्मुखैः ॥२९॥

॥ तनुभिरिति ॥ यत्रपुरेनराःपुरुषाःत्रिनेत्रस्त्र्यंबकः। पुर्वपदात्संज्ञायामगइतिणत्वं। तस्यनयनेनानवेक्षितस्यस्मरविग्रहस्यद्युतिरिवद्युतिर्यासांताभिःस्तनुभिःमूर्त्तिभिः। स्त्रीयांस्तनूरित्यमरः। अद्युतन्द्युतादिभ्योलुङ्लुङीतिविकल्पात्परस्मैपदंपुषादिस्वत्रेणच्लेरङादेशः। प्रमदाःस्त्रियश्चराज्ञश्चन्द्रस्ययक्ष्माक्षयरोगःराजानंयक्ष्मेतिश्रवणात्राजयक्ष्माक्षयःशोषइत्यमरः। तस्मात्परःपूर्वमित्यर्थःनिशाकारवन्मनोरमैरक्षिणैरिन्दुसुन्दरैरित्यर्थः। मुखैरद्युतन्तत्पुरंप्रतिइतिपूर्वेणान्वयःउपमयोःसंसृष्टिः ॥ २९ ॥

॥ अवलोकेति ॥ अथहरेःपुरःप्रवेशानंतरंपटहप्रणादैर्दुन्दुभिध्वनिभिर्विहितोपहूतयःआहूयमानाइवेत्यर्थःपुरेभवाःपौराःतासांयोषितःपौरयोषितःस्त्रियः। पुम्बद्भावः। उर

द्विषांअसुराणांद्विषोहरेरवलोकनायदर्शनार्थमवधीरितान्यकरणीयाः त्यक्तान्यत्का
र्याःतास्सत्वराःरथ्यांप्रतिप्रतिरथ्यं। यथार्थेऽव्ययीभावः। ईयुःप्राप्ताः। एतेनस्त्रीणां
हृदिविलोकालक्षत्वंक्षणमौत्सुक्यमुक्तं अत्रपौराङ्गनाप्राप्तेः प्रवेशवार्थश्रवणानंतंयत्तदुप
हृतनदूत्प्रेक्षा। व्यञ्जकाप्रयोगाद्गम्या ॥ ३० ॥ **************** ॥
॥ अथाष्टादशभिःपौराङ्गनाशृङ्गारचेष्टांवर्णयति ॥ अभीति। सामिकृतमण्डनमर्द्धं
विरचितप्रसाधनंयथातथायतीर्गच्छन्तीः। इणःशतरिङीप्। कररुद्धनीवीनिकरगृही
तग्रंथानिगलदंशुकानिभ्रंसमानानिपरिधानानियासांताः विलसदितिपाठान्तरंनद्रा

अवलोकनायसुरविद्विषाद्विषःपटहप्रणादविहितोपहूतयः। अ
वधीरितान्यकरणीयसत्वराःप्रतिरथ्यमीयुरथपौरयोषितः ॥ ३० ॥
अभिवीक्ष्यसामिकृतमण्डनंयतीःकररुद्धनीविलसदंशुकाःस्त्रियः।
दधिरेधिभित्तिपटहप्रतिस्वनैःस्फुटमट्टहासमिवसौधपङ्क्तयः॥ ३१
परिरभसेनहारपददत्तकाञ्चयःप्रतिमूर्द्धजन्निहितकर्णपूरकाः। परि
वर्त्तिताम्बरयुगाःसमापतन्वलयीकृतश्रवणकुण्डलाःस्त्रियः ॥ ३२ ॥

विलसदुल्लसदित्यर्थःउरोंऽशुकंयासां अंशुकंवस्त्रमात्रेस्यात्परिधानोत्तरीययोरितिश
द्धार्णवे। स्त्रियःस्त्रीःअभिवीक्ष्यसौधपंक्तयःअधिभित्तिभित्तिषु। विभक्त्यर्थेव्ययीभावः।
पटहप्रतिस्वनैःस्फुर्यप्रतिध्वनिभिःस्फुटमुद्गतंअट्टहासंउच्चैर्हसितंदधिरेइवेत्युत्प्रेक्षा।
विवृतदर्शनाद्धासोभवतीतिभावःअत्रकुतूहलाख्याचेष्टोक्ताकुतूहलंरम्यदृष्टौचापल्यंप
रिकीर्त्तितमितिलक्षणात्॥ ३१ ॥ ******************* ॥
॥ रभसेनेति ॥ रभसेनत्वरयाहारपदेमुक्तास्थानेवक्षसिदत्तकांचवयोन्यस्तरशनाःप्रति
मूर्द्धजंमूर्द्धजेषुकेशेषु। विभक्त्यर्थेऽव्ययीभावः। निहिताःकर्णपूरकाः। कर्णावतंसाया

भिन्नाः । परिवर्त्तितं विपर्यासेन धृतं अंबरयुगवासस्तीयाभिन्नाः परिधानीकृतमुत्तरीयंकु
चांशुकञ्चजघने दत्तमित्यर्थः । वलयीकृताः कङ्कणीकृताः श्रवणपूरकाः कुण्डलायाभि
स्ताः स्त्रियाः समापतन् एतेन विभ्रमाख्याप्रचेष्टोक्ताः विभ्रमस्त्वरयाकालेभूषास्थानविपर्यय
इतिलक्षणात् । सचभ्रान्तिविभ्रमाख्योचेष्टोक्ताविभ्रममूलइतिभ्रान्तिमदलङ्कारोव्यज्यते
॥ ३२ ॥ ****************************** ॥

॥ व्यतनोदिति ॥ काचनस्त्रीरसवशेनहरिविक्षणपारतंत्र्येण । गुणेद्रवेरसइत्यमरः ।
प्रसाधिकायाः अलंकर्त्र्याः करपल्लवाच्चरणमपास्य असमाप्तानेवक्षिप्य । हरार्द्धतांहर
स्यार्द्धनरङ्गनागतेव अन्यथैकपादालक्तकासम्भवादितिभावः । गिरिजागौरीइव । याव

> व्यतनोदपास्यचरणम्प्रसाधिकाकरपल्लवाद्रसवशेनकाचन । द्रुतया
> वकैकपदचित्रितावनिम्पदवीङ्गतेवगिरिजाहरार्द्धताम् ॥ ३३ ॥
> व्यचलन्विशङ्कटकटीरकस्थलीशिखरस्खलन्मुखरमेखलाकुलाः ।
> भवनानितुङ्गतपनीयसङ्क्रमक्रमणक्वणत्कनकनूपुराःस्त्रियः ॥ २४ ॥

कैकपदेनार्द्रालक्तकेनचित्रिताचित्रवर्णाकृताअवनिंययातांपदवींव्यतनोदकरोत् । उ
पमालङ्कारः एषाकुतूहलाचेष्टारसदिदृक्षाजनितांचापलरूपत्वादिति ॥ ३३ ॥ *

॥ व्यचलन्निति ॥ विशंकटानांविशालानांकटीरकस्थलीनांकटिभागानांशिखरेषुस्ख
लंत्योलुठंत्यः अतएवमुखराः शब्दायमानाः ताभिर्मेखलाभिराकुलाः तुंगेषुतपनीयसंक्रमेषु
कनकसोपानेषुक्रमणैवक्रमणेनक्वणन्तः कनकनूपुरायासान्ताः स्त्रियः भवनानिहर्म्याणि
व्यचलनतत्रगत्वारोहन्नित्यर्थः । चलेगत्यर्थाल्लङ् । एतदपिपूर्ववदतिकुतूहलमेववृत्त्य
नुप्रासोलङ्कारः ॥ २४ ॥ ************************ ॥

॥ अथेति ॥ मुरजितोहरेर्दिदृक्षयाद्रष्टुमिच्छया । दृशेःसनन्तादप्रत्ययादितिस्त्रि

यामप्रत्ययेटाप् । मन्दिरस्यकनकहर्म्यस्यगवाक्षेअधिरूढमन्दिरगवाक्षं । विभ क्त्यर्थेऽव्ययीभावः । उल्लसत्प्रकाशमानंसुदृशःस्त्रियावदनारविन्दंउदयाद्रिकन्द रविवरोदरस्थितंतत्रस्थितंयदिन्दुमण्डलमिवक्षात्वमणस्यरम्यदर्शनार्थंचापलरूपत्वान् कूतूहलमिवमुरजिद्दिदृक्षयेत्यादिनाविक्तमेव ॥ ३५ ॥ ************
॥ अधीति ॥ उच्चकैर्निजनिकेतं । स्वसौधमधिरूढयाआरूढवत्या । पवनेनावधूतः कम्पितःवसनान्तोवस्त्रांचलोयस्यास्तयाएकयाकाचिदंगनयाहेतुनातत् नगरंइंद्रप्रस्थ माधवेउपयात्यागच्छति । यातेर्लटःशत्रादेशः । पताकयावैजयन्त्याविहितोपशोभत

अधिरूढमन्दिरगवाक्षमुल्लसत्सुदृशोरराजमुरजिद्दिदृक्षया ।व दनारविन्दमुदयाद्रिकन्दराविवरोदरस्थितमिवेन्दुमण्डलम् ॥३५॥
अधिरूढयानिजनिकेतमुच्चकैःपवनावधूतवसनान्तयैकया । विहि तोपशोभमुपयातिमाधवेनगरम्व्यरोचतपताकयेवतत् ॥ ३६॥ करयु ग्मपद्ममुकुलापवर्जितःप्रतिवेश्मलाजकुसुमैरवाकिरन् । अवदीर्ण शुक्तिपुटमुक्तमौक्तिकप्रकरैरिवप्रियरथाङ्गमङ्गनाः ॥ ३७॥ ※

कृतशोभमिवालंकृतमिवेत्युत्प्रेक्षा । व्यरोचतव्यराजत । हास्तस्यापिनगरस्यस्वयंपताकेव बभावित्युत्प्रेक्षा । तस्याःसकलपौराङ्गनानिशायितावरणंव्यज्यत इत्यलङ्कारेणवस्तुध्व निः । अत्रापिप्रासादारोहणंपूर्ववत्कुतुहलमेव ॥ ३६ ॥ *********** ॥
॥ करेति । प्रतिवेश्मवेश्मनि । विभक्त्यर्थेव्ययीभावःअङ्गनाःपुरंध्रयः । करयुग्मान्यंज लयस्तानिपद्ममुकुलानीवेत्युपमितसमासः । तैरपवर्जितैरतएवावदीर्णैर्विभिन्नैःशुक्तिपु टैःशुक्तिकोशैःमुक्ताउत्सृष्टायैमौक्तिकप्रकरामुक्तानिकरास्तैस्थितैरित्युत्प्रेक्षा । लाजाःकु सुमानिवावलाजकुसुमैःआचारलाजैरित्यर्थःअवाकिरन्च्छादयामासुः ॥ ३७ ॥

॥ हिमेति ॥ हिममुक्तःशिशिरापगमाद्धिमान्निर्मुक्तोयश्चंद्रःसइववक्त्रंचिरअन्यत्रतेनहरिवि
रःपद्मेनपद्मयाचसहवर्त्ततेइतिसपद्मःसपद्मकःपद्महस्तःसश्रीकश्च । शैषिकःस्वार्थि
कोवाकप्रत्ययः । अन्यत्रेसंपङ्कजःशैषिकःकप्रत्ययः । द्विजान्ब्राह्मणान्अन्यत्रपक्षि
गणानकोकिलादीन्मदयन्हर्षयन् । जनितमीनकेतनःप्रद्युम्नजनकःअन्यत्रमदनो
दीपकः । प्रसादिनाअनुगृहीतासुरायेन । अन्यत्रप्रसादिनानिर्मलीकृतासुरायस्यमःव
वोहरिर्वसन्तश्च । माधवस्तुवसन्तोस्याद्धिशायेगरुडध्वजेइतिविश्वः । प्रमदैवजनस्तस्य
प्रमदाजनस्य । जातावेकवचनं । चिरायमहोत्सवोभवत् । तद्दानन्दकरोभूदित्य
र्थः । इहानन्दकरत्वसाम्येनमाधवेमहोत्सवारूपा । रूपकसिद्धविशेषस्तुहरिवसन्त

हिममुक्तचन्द्ररुचिरस्सपद्मकोमदयन्द्विजानजनितमीनकेतनः ।
अभवत्प्रसादितसुरोमहोत्सवःप्रमदाजनस्यसचिरायमाधवः ॥ ३८
॥ धरणीधरेन्द्रदुहितुर्भयादसौविषमेक्षणःस्फुटममूर्न्नपश्यति ।
मदनेनवीतभयमित्यधिष्ठिताःक्षणमीक्षतेस्मसपुरोविलासिनीः ॥
३९ ॥ ✲✲✲✲✲✲✲✲✲✲✲✲✲✲✲✲✲✲✲✲

योरिहनास्त्येव । प्रकृताप्रकृतश्लेषेविश्लेषविशेषाभावायोगात् । तदुक्तंप्रकृतंप्रकृतैभयग
तमुक्तावच्छब्दमात्रसाधर्म्यश्लेषोयंश्लिष्टत्वंसर्वत्रायंद्वयेनांत्यइति । श्लिष्टत्वञ्चात्रविशे
ष्यंमाधवइतिकिन्तुमूलोध्वनिरेव ॥ ३८ ॥ ****************** ॥
॥ धरणीति ॥ असौत्रिपुरदाहकोविषमेक्षणस्त्र्यक्षःधरणीधरेन्द्रदुहितुःपार्वत्याःभी
त्यार्थानांभयहेतुरितिपञ्चमी । भयात्स्फुटंसत्यंअमूःपौरयोषितःनपश्यतीतिहेतोरिति
विश्वासादित्यर्थः । अतएवगम्योत्प्रेक्ष्यतेचमदनेनवीनभयमित्यधिष्ठिताआक्रान्ताअत्या
रूढमदनाइत्यर्थःपुरोविलासिनीस्सहरिःक्षणमीक्षतेस्मसविस्मयमितिभावः ॥ ३९ ॥

॥ विपुलेति ॥ युगक्षयैकव्याने । सागरे शेतेइतिसागरशयस्य । अधिकरणेशेतेरित्य
च्चयः शयवासवासिष्वकालादितिविकल्पादयलुगभावः तस्यहरेर्विपुलेनकुक्षिणांभुवनानि
पपिरेपीतानि । पिवतेःकर्मणिलिट् । सहरिरेकतमयापुरस्त्रियापुनःकयापि त्यौरांगन
थामदविभ्रमेणसकलयासमग्रयाएकयादृशापपेपीतःसतृष्णंदृष्टइतिभावःकुक्षिकोणानि
विष्टपस्यहरेर्महतः आधेयस्यात्यल्पतरैककान्ताकटाक्षकोणाधारत्वोक्त्या चमत्काराधिका
लङ्कारः । आरोधेपयोधरानुरूपभावोधिकोमतइतिलक्षणात् । अयञ्चतात्कालिकवि
कारात्माविलासाख्योभावोत्कटाक्षणं । तात्कालिकविशेषस्याद्विलासाङ्गक्रियादिष्विति
दशरूपकात् ॥ ४० ॥ ***************************** ॥

विपुलेनसागरशयस्यकुक्षिणाभुवनानियस्यपपिरेयुगक्षये । मदवि
भ्रमात्सकलयापपेपुरःसपुरःस्त्रियैकतमयैकयादृशा ॥ ४० ॥ अधि
कोन्नमद्घनपयोधरम्मुहुःप्रचलत्कलापिकलशङ्खकस्वना । अभिक
स्रमङ्गुलिमुखेनकाचनद्रुतमेककर्णविवरव्यघट्टयत् ॥ ४१ ॥

॥ अधिकेति ॥ काचनकान्ता । अभिकसंक्रान्ताभिमुखं । आभिमुख्येऽव्ययीभावः ।
अधिकंभृशोन्नमन्नादूरावुन्नमतघनःकठिनः पयोधरःस्तनोयस्याःसामुहुःप्रचलतोनृत्यतः
कलापिनोवर्हिणःअविकलोमधुरशंखस्वनोवलयध्वनिर्यस्यास्तासती । शंतोशंखकंबल
वेकम्बातिविश्वः । अङ्गुलिमुखेनांगुल्यग्रेणैकस्यकर्णस्यविवरंरंध्रंद्रुतंशीघ्रंव्यघट्टयत् ।
कर्णच्छिद्रेदीर्घमिवाताडयत् । वस्तुतस्तुभावाःकरणार्थमेवेतिभावःअयञ्चपूर्ववद्विलास
एवकलापिकेत्युपमा ॥ ४१ ॥ ***************************** ॥

॥ परेति ॥ अपरास्त्री । परिपाटलाब्जदलचारुणारक्तोत्पलपत्रवद्रुचिरेणअसकृन्मुहुस्त्व
लितान्यंगुलीनिकिशलयानिइवांगुलीकिशलयानियस्यतेनपाणिनासशिरःप्रकंपंशिरः

कम्पयुक्तंयथातथामघोरिपुंहरिंअनुदीर्णवर्णंअनुच्चारिताक्षरं अतएवनिभृतार्थम्परेषा
मविदितार्थं यत्तदनुदीर्णवर्णंनिभृतार्थंयथातथाआह्वयत् परप्रकाशनभयात्तदव्याहर
णीचेष्टाआह्वानंतत्तवतीत्यर्थः अत्रापिपूर्ववद्विज्ञासोपमेयउपमावालङ्कारः ॥ ४२ ॥
॥ नलिनेति ॥ अपरास्त्री । नलिनांनिकेउपहितस्यपल्लवस्यश्रीरिवश्रीर्यस्यतेनमुखस्वं
निधानादितिभावः । एकपाणिनाचारुनिसर्गसुन्दरंमुखंव्यवधायतिरोधायस्फुरदंगुली
विवरनिःसृताअङ्गुल्यांगुल्यन्तरालनिर्गताअतएवोल्लसन्तउत्सर्पन्तोदशनप्रभाएवांकुरा
यस्मिन् कर्मणितद्यथातथाजृम्भतजृम्भमाणस्सेवविचरन्तच्छेयवस्तुसाक्षात्कारस्तनजा

परिपाटलाब्जदलचारुणासकृच्चलिताङ्गुलीकिशलयेनपाणिना । स
शिरःप्रकम्पमपरारिपुमघोरनुदीर्णवर्णनिभृतार्थमाह्वयत् ॥ ४२ ॥
नलिनान्तिकोपहितपल्लवश्रियाव्यवधायचारुमुखमेकपाणिना ।
स्फुरिताङ्गुलीविवरनिःसृतोल्लसद्दशनप्रभाङ्कुरमजृम्भतापरा ॥ ४३ ॥
वलयार्पितासितमहोपलप्रभाबहुलीकृतप्रतनुरोमराजिना । हरि
वीक्षणाक्षणिकचक्षुषान्ययाकरपल्लवेनगलदंशुकंदधे ॥ ४४ ॥

ड्यानुभवः अत्रनलिनपल्लवयोरसंबंधयोःसम्भावनयासंबंधाभिधानादतिशयोक्तिः ॥४३॥
॥ वलयेति ॥ हरिविक्षणेअक्षणिकचक्षुषास्थिरचयोरदृष्ट्याविस्मयादराभ्यांस्तिमितने
त्रयेत्यर्थः । अन्ययास्त्रियागलत्सुखपारवश्याद्भ्रंश्यमानमम्बरंवलयार्पिताःसंचितायेअ
सितमहोपलानीलमहामणयः । उपलोमणिपाषाणाविति विश्वः । तेषांप्रभाभिर्बहुली
कृतासांद्रीकृता । प्रतनुःसूक्ष्मारोमराजिर्यस्यतेनकरपल्लवेनदधेधृतं । अयंचतात्का
लिकविहारलक्षणविलासः । अत्रेंद्रनीलप्रभाणांरोमावलीबहुलीकरणोक्त्याप्रभासधि
रोमराजिप्रतीतेर्भ्रान्तिमदलङ्कारोव्यज्यते । इतिवस्तुनालङ्कारोध्वनिः ॥ ४४ ॥ * ॥

॥ निजेति ॥ काचित्स्त्री निजेनात्मीयेन सौरभेण सौगंध्येन भ्रमितानां भ्रमणकारितानां भृङ्गाणां पक्ष्मतयः पक्ष्ममूलानि । स्त्रीपक्ष्मतिः पक्ष्ममूलमित्यमरः । पक्षात्तिरिति तिप्रत्ययः । ता एव व्यजनानि इति रूपकं । खेदहरणलिङ्गात् । तासामनिलेन लक्ष्यितं नाशितं घर्मवारि स्वेदो यस्यास्तेन । अभिशौरि । शौरेरभिमुखं । आभिमुख्येऽव्ययीभावः । अनिमेषाद्दृष्टिर्यस्यास्तेन वपुषा निमित्तेन पुरदेवतेव इन्द्रप्रस्थाधिदेवतेव व्यभाव्यत विभाविता न किं तेति यावत् । अनिमेषत्वं चेष्टादरनिजने त्रासंचार्यानुभावः अप्रतिपत्तिर्जडतास्यात् । इष्टानिष्टदर्शनं श्रुतेर्निनिमेषत्वं च लवीक्षणं तूष्णीभावादयस्तत्रेति लक्षणात् इहाङ्गसौरभादिनिमित्ताभ्यां पुराधिवासाच्च पुराधिदेवतात्वमुत्प्रेक्ष्यते । इत्युपात्तगुणनिमित्ताजातिस्व

निजसौरभभ्रमितभृङ्गपक्ष्मतिव्यजनानिललक्ष्यितघर्मवारिणा । अ<br>
भिशौरिकाचिदनिमेषदृष्टिना पुरदेवतेव वपुषा व्यभाव्यत ॥ ४५ ॥<br>
अभियाति नस्सतृष्ण एष चक्षुषो हरिरित्यखिद्यत नितम्बिनीजनः ।<br>
न विवेद यस्सततमेनमीक्षते न वितृष्णतां व्रजति खल्वसावपि ॥ ४६ ॥

पद्मिनीत्वं व्यज्यते इत्यलङ्कारेणवस्तुध्वनिः निजसौरभेत्यनेन रूपोत्प्रेक्षानमाशास्त्रजात्याः पद्मिनीत्वं व्यज्यते । कमलमुकुलमृद्वी स्फुल्लराजीवगंधिः सुरतपयसि यस्याः सौरभं दिव्यमंगं इत्यादि पद्मिन । कमलमुकुलमृद्वी स्फुल्लराजीवगंधिः सुरनवयसि यस्याः सौरभं दिव्यमंगं इत्यादि पद्मिनीलक्षणोपलक्षणादिभिर्विपुलेनेत्यादि लोकोक्ताः षडपि नायिकाः प्रौढास्तु धारणस्वलनीलक्षणोपलक्षणादिभिर्विपुलेनेत्यादि ॥ अन्यभासांकितचेष्टावर्णनानौचित्यात्सेत्यलमिति प्रपंचनः ॥४५॥

अत्रस्तामसम्मदान । अन्यभासांकितचेष्टावर्णनानौचित्या

॥ अभीयातीति । असौ नितम्बिनीजनः नोऽस्माकं चक्षुषः सतृष्णः सतृष्णस्यैव मनसश्चक्षुषि सतृष्णस्यैव अनादृत्येत्यर्थः । षष्ठी चानादर इति षष्ठी । एष हरिरभियात्यभिगच्छतीत्यखिद्यत खेदं गतः । खिद इति दैवादित्वात्कर्तरि लिङ् अतोऽत्प्रेक्ष्यते । योजनएनं हरिं सततमीक्षते । सोऽपि खल्वपि वितृष्णतां न समुपैति न विवेद नित्योदर्शनमप्यपूर्ववदेव भवतीति मा

वपुष्मतेत्यर्थः । वेदविन्नविद्यतीतिभावः । अत्राविघ्नेनेतिक्षीणंप्रारब्धंहरिवीक्षणसुख विच्छेदहेतुत्वविदाख्यसञ्चारितभावः निबंधनात्प्रयासालङ्कारः तदुन्मादिनावेयमुक्तावेदेन योत्प्रेक्षेतिसङ्करः प्रारब्धकार्यसिद्धादेवविघादेः सत्वसंक्षयइतिदशरूपकेसत्वसंक्षयश्चित्त भङ्गः ॥ ४६ ॥ **************************** ॥

॥ अहृतेति ॥ अंगनाजनः । अच्युतेनसहगतंमनः प्रतिपालयन्प्रतीक्षमाणइवेत्युत्प्रे क्षा । शून्यतांमितः निरोजस्कतांगतः । अहृतस्वसद्मगमनादरः निवृत्तनिजगृहप्राप्त्यपे क्ष्यः सन् । लिपिकर्मनिर्मितः चित्रलिखितइवइत्युत्प्रेक्षा । क्षणंव्यतिष्ठतनिस्पन्दमास्थे त्यर्थः समवप्रविभ्यः स्थइत्यात्मनेपदं । इतः शून्यतानुभावाच्चिन्तागम्यध्यानंचिंतेतिनाना

> अहृतस्वसद्मगमनादरः क्षणंलिपिकर्मनिर्मितइवव्यतिष्ठत । गत
> मच्युतेनसह शून्यतामितः प्रतिपालयन्मनइवाङ्गनागणः ॥ ४७ ॥
> अलसैर्मदेनसुदृशः शरीरकैः स्वगृहान्प्रतिप्रतियियुः शनैः शनैः । अ
> लघुप्रसारितविलोचनाञ्जलिद्रुतपीतमाधवरसौघनिर्भरैः ॥ ४८ ॥

सुः शून्यतांस्वस्थतापन्नादितिदशरूपकेअत्रोत्प्रेक्षत्वात्सङ्करः ॥ ४७ ॥ ***** ॥

॥ अलसैरिति ॥ अलघुमधिकंप्रसारितैर्विलोचनैरेवाञ्जलिभिर्द्रुतंसत्वरं । लघुक्षि प्रमरंद्रुतमित्यमरः । पीतोयोमाधवोहरिरेवरसोमृतं अन्यत्रमधुमद्यंतत्सम्बन्धिरसोमा धुर्यंमाधवरसः । रसोरागेविषेवीर्येतिक्तादौपारदेद्रवेरेतस्यास्वादरेनहेमिनिर्यासेमृत शब्दयोरितिवैजयन्ती । तस्यौघः समुदस्तेननिर्भरैर्गुरुभिरितियावत् अतएवमदेनालसै र्मन्थरैः शरीरकाण्यल्पशरीराणीत्यर्थः । अल्पइतिपरिमाणेकन्प्रत्ययः । तैरुपलक्षिताः सुदृशः शनैः शनैः स्वगृहान्प्रतिययुः प्रतिनिर्गताः स्वयंलघून्यपिद्रव्याणिरसद्रवभरणा द्गुरुभवंतीतिभावः । अत्रमाधवरसौघनिर्भरत्वविशेषणगत्याशनैः शनैः प्रतियानहेतुत्वा

त्कार्यहेतुकङ्काव्यलिङ्गनाच्चमाधवरसेनेनिक्षेवमूलातिशयोत्यापितमितिसङ्करः ॥ ४८ ॥

॥ नवेति ॥ अथपुरप्रवेशानंतरंहरिणापुरः पूर्वंनवगंधवारिभिर्गंधरसोवासितैःतोद्वैः विरजीकृताअविरजसाविरजसःसंपमानाःकृताः । अरुरुन्मनसच्क्षुचेतोरहोरजसालोपश्चेत्यभूततद्भावेच्चिप्रत्ययेसलोपःअस्यचाविनीकारः । घनैःधूपानामगुरुधूपानांधूमैःकृतेनोरेणुविभ्रमोरजोभ्रमयाभिस्ताः प्रचुरंबहुलमुद्धतेषुध्वजेषुध्वजस्तंभेषुविलम्बानिविलम्बमानानिवासांसिपताकायास्ताःपुरवीथयोऽतिपेतिरेपतिताःअतिक्रांताइत्यर्थः । पतेःकर्मणिलिट् । एत्वाभ्यासलोपौ । अत्रसादृश्याद्धूलेरेणुभ्रान्त्याभ्रान्तिमदलङ्कारःरेणुविभ्रमशब्देनरजोविलासस्यापिप्रतीतेस्तस्यविरजीकरणेनविरोधाद्विरोधाभासश्चेतिअन

नवगन्धवारिविरजीकृताःपुरोघनधूपधूमकृतरेणुविभ्रमाः । प्रचुरोद्धतध्वजविलम्बिवाससःपुरवीथयोऽथहरिणातिपेतिरे ॥ ४९ ॥

उपनीयबिन्दुसरसोमयेनयामणिदारुचारुकिलवार्षपर्वणम् । विदधेवधूतसुरसद्मसम्पदंसमुपासदत्सपदिसंपदंसताम् ॥ ५० ॥

योरेकवाचकानुप्रवेशलक्षणःसङ्करः ॥ ४९ ॥ ****************** ॥

॥ उपनीयेति ॥ मयेनासुरशिल्पिना । वृषपर्वानामकश्चिदसुरेश्वरःवृषपर्वणइदंवार्षपर्वणं । तस्येदमित्यण् । चारुमनोहरंमणिरेवदारुकाष्ठःमणिमयंस्तंभादिकलापमित्यर्थः । तद्बिंदुसरसोहैमवनान्सरोविशेषात् उपनीयसमीपमानीयविदधेनिर्मिता । अवधूताअधरीकृतासुरसद्मसंपत्इन्द्रभवनलक्ष्मीर्ययातानांसंपदंसभां । सभाऽस्त्रीसमास्थानमित्यमरः । सहरिः । सपदिसमुपासदत्प्रापत् । सदेर्लुङिपुषादित्वादङादेशः । पुराकिलपांडवदाहेपांडवेनाग्निदाहान्मोचितेनमयेनप्रत्युपकारार्थंपूर्वमात्मनिर्वर्तितविन्दुसरसिगुप्तेवृषपर्वगृहनिर्माणावसिष्टेनमणिशिलाकलापेनकाञ्चनसभाधर्मराजस्यनिर्मितेतिभारते

वर्णनां गतत्वेनार्ज्जुनमवरचितवर्णनाद् दाक्षात्कारः अप्रभूतमहापुरुषचिन्तनं चेति ह्रत्र्यं ॥ ५० ॥ ********************************** ॥

॥ अथ दशभिः सभां वर्णयति ॥ अधीत्यादि । अधिरञ्चि । विभक्त्यर्थेऽव्ययीभावः । यत्र सभायां नभोलिहामभ्रंलिहां । क्विप् । कलधौतरौप्यं । कलधौतं रूप्यहेम्नोरित्यमरः । तद्धतधौताः धवलाः शिलायेषान्तानि वेश्मानि स्फटिकभवनानीत्यर्थः । तेषां रुचो प्रभायां निपतन् प्रविशन् । अनिदाघदीधितिरनुष्णरश्मिर्हिमांशुः पुनरपि दुग्धवारिधौ क्षीरक्षोभक्षणं गर्भवासं व्याप्यननुमथनात्प्राक् इव चिरगर्भवासमिति भावः अवापत् प्रापदिवेत्युत्प्रेक्षा । तयावेश्मनां चन्द्रमण्डलातिरिक्तमौज्ज्वल्यं व्यज्यते ॥ ५१ ॥ ********* ॥

अधिरञ्चि यत्र निपतन्नभोलिहः कलधौतधौतशिलवेश्मनां रुचः ।
पुनरप्यवापदिव दुग्धवारिधिक्षणगर्भवासमनिदाघदीधितिः ॥ ५१॥
लयनेषु लोहितकनिर्मिता भुवः शितिरत्नरश्मिहरितीकृतान्तराः ।
जमदग्निसूनुपितृतर्पणीरपस्तनुते स्म या विरलशैवला इव ॥ ५२ ॥

॥ लयनेष्विति ॥ लीयन्ते एष्विति लयनानि तेषु गृहेषु शितिरत्नानां नीलमणीनां रश्मिभिर्हरितीकृतानि हरितवर्णीकृतानि अंतराणि मध्यानि यासां ताः लोहितमणयो लोहितकाः पद्मरागाः । लोहितान्मणाविति कन्प्रत्ययः । तैर्निर्मिताः भुवो भूमीर्विरलाः शैवालाया ... स्ताः जमदग्निसूनोः परशुरामस्य पितॄणां तृप्तिकरीरपस्तनेत्युपमावहन्ति स्म । विरलाः शैवलाय त्र लोहितभूतजामदग्न्यक्षत्रियास्त्रैः पञ्च शोणितह्रदानुत्पाद्य ताभिरद्भिः पितॄन् तर्पयन्त्यासू रुधिरप्रकृतिकत्वाद् रक्तवर्णा इवेति पुराणं ॥ ५२ ॥ ******* ॥

॥ विशदेति ॥ किञ्चेति चार्थः यत्र सभायां विशदाश्मकूटघटिताः स्फटिकशिलासंघातनिर्मिताः । अतएव स्वच्छ गृहाङ्क्षपाङ्गतो निशाकरस्य रुचा चांद्रिकया एकतां सावर्ण्यादभेद

ङ्गताः अतएवतमसीवहस्तपरिमर्शसूचिताः। पाणिपरामर्शैकगम्या इत्यर्थः गृहपंक्तयः
जनैस्तिमिरमनीयिरे अतिक्रांताप्रकृतार्थस्फाटिकवेश्मनां गुणसाम्यादप्रस्तुतचन्द्रकांतया
सामान्यालङ्कारः सामान्यं गुणसाम्येन यत्र वस्त्वंतरैकतालक्षणात् ॥ ५३ ॥ ** ॥
॥ निलयेष्विति ॥ यत्र सभायां निलयेषु नक्तं रात्रौ । बिसिन्यो दीर्घिकापद्मिन्यस्ता एव वध
ध्वस्तासां परिभवेन निमीलितेन दूषितेन च स्फुटागसः स्पष्टापराधाः शशलाञ्छनांशवः
चंद्रपादाः अत्रसद्भिरत्रस्तांगैरपि निर्दे[illegible]रि[illegible] इति चार्थः त्रासो भा मणिदोषयोरिति वि
श्वः। वाभ्राशैत्यादिनाश्य नभावपक्षे शतृप्रत्ययः। असिताश्मनां इन्द्रनीलमणीनां चयैः
समूहैः गौरवान्नयं प्रभूतत्वाच्च उपांशु अंशुसमीपे। रहस्युपांश्वालिंगेत्यमरः।

विशदाश्मकूटघटिताः क्षपाकरैः क्षणदासु यत्र च मरुच्चैकताङ्गताः ।
गृहपङ्क्तयस्तिमिरमनीयिरे जनैस्तमसीव हस्तपरिमर्शसूचिताः ॥५३
॥ निलयेषु नक्तमसिताश्मनां चयैर्बिसिनीवधूपरिभवस्फुटागसः ।
मुहुरत्रसद्भिरपि यत्र गौरवाच्छशलाञ्छनांशव उपांशु जघ्निरे ॥५४

जघ्निरे । निरोद्धिनामारिनास्च । हन्तेः कर्मणि लिट् । समीपगताश्चन्द्रांशवः प्रभूतैरिन्द्र
नीलांशुभिस्तिरस्कृता इत्यर्थः अनत्रान्तः पुरस्ते हि गोनिर्भीकैरूपसंभावितैर्दुःकीर्त्तिभ
याद्दूढं हन्यत इति भावः अत्र बिसिनीनां वधूत्वनिरूपणात्तत्परभाविनां चन्द्रांशूनां धूर्त्तका
मुकत्वरूपणप्रतीतेः एकदेशविवर्त्तिरूपकमत्र गौरवादुपांशु जघ्निरे इति च स्वैरेणात्रस
ङ्करयोनिर्विरोधेन संकीर्यते ॥ ५४ ॥ ****************** ॥
॥ सुखिन इति ॥ यत्र सभायां नवः संगमो येषां तैर्नवसंगमैरत एव त्रपाभरेण पराङ्मुखैरपि
गृहाणां रत्नभित्तिषु प्रतिमासु तत्संक्रान्तप्रतिबिम्बेषु पुरोऽग्रेऽभिमुखतामुपागतैः प्रियाज
नैः कांताजनैः सुखिनो भोगिनः प्रमदं हर्षं अविभरुः बिभ्रतिस्म । भृञ्जो लङ्ग्लाविति द्वि

भौवेस्तिजभ्यस्त्वविदिभ्यश्चेतिभिर्जुसादेशः । स्त्रीणां चैवमुखेपितत्प्रतिबिम्बाभिमुख्यात्सु
खांखुखमेवस्त्रीणांतुउभययापिश्लिष्टमित्यर्थः । अत्रविमुखेप्यभिमुख्यमितिविरोधस्यप्र
तिमाचित्तनिरासाद्विरोधाभासोलङ्कारः ॥ ५५ ॥ ************** ॥
॥ तृणेति ॥ यत्रसभायांहरिताश्मवेश्मनांमरकतमणीनांगृहाणां । गारुत्मतंमरकतम
श्ममर्भौहरिन्मणिरित्यमरः । निचयेषुसंघेषुतृणवाञ्छयातृणाशयामुकुरवाञ्छितानननान्नि
मितमुखान् । अतएवरसनाग्रेषुलग्नाःअंकुराइवकिरणाःयेषान्तेतान । अतएवगृहीतकव
लान्उपात्ततृणग्रासानिवस्थितान्हरिणान् । जनःऐक्षतइक्षितवान् । ईक्षतेर्लङ्

सुखिनः पुरोभिमुखतामुपागतैः प्रतिमास्तुयत्रगृहरत्नभित्तिषु । न
वसङ्गमैरविभक्तः प्रियाजनैः प्रमदस्त्रपाभरपराङ्मुखैरपि ॥ ५५ ॥ तृण
वाञ्छयामुकुरवाञ्छिताननान्निचयेषुयत्रहरिताश्मवेश्मनाम् । रस
नाग्रलग्नकिरणाङ्कुरान्जनोहरिणानगृहीतकवलानिवैक्षत ॥ ५६ ॥
विपुलालवालभृतवारिदर्पणप्रतिमागतैरभिविरेजुरात्मभिः । यदुपा
न्तिकेषुदधतोमहीरुहस्सपलाशराशिमिवमूलसन्ततिम् ॥ ५७ ॥

आदीनामित्याटआटश्चेतिवृद्धिः अत्रतृणवाञ्छयेतिहरिणानांमरकतेषुतृणभ्रान्तेर्भ्रान्ति
मदलंकारःतन्मूलाचेयंगृहीतकवलत्वोत्प्रेक्षेतिसङ्करः ॥ ५६ ॥ ******* ॥
॥ विपुलेति ॥ यदुपान्तिकेषुयस्याःसभायाःउपान्तिकेषुसमीपेषुमहीरुहोवृक्षाः । विपुले
ष्वालवालेषुमूलजलाधारेषु । स्यादालवालमावालमित्यमरः । भृतानिसंभृतानिवारी
ण्येवदर्पणास्तेषुप्रतिमांप्रतिबिम्बतांगतैःप्रतिबिम्बितैरित्यर्थः । आत्मभिःस्वैरंस्वमूर्तिभि
रित्यर्थः सपलाशराशिंमूलसन्ततिंमूलसंहतिंदधतइवदधानाइवाभिविरेजुः आलवा
लेषुस्वप्रतिबिम्बितैरधोमुखैःमूलेष्वपिसपत्राइवरेजुरित्युत्प्रेक्षा ॥ ५७ ॥ **** ॥

॥ उरगेन्द्रेति ॥ उरगेन्द्राणांमूर्द्धरुहाणिरुढानि । इगुपधलक्षणःकः । तेषांरत्नानांसंनिधेःसंनिधानात् मुहुरुन्नतस्ययद्वायद्वानत्वंनिधिस्तद्वानरोदितस्येत्यर्थः पयोमुचांमेघस्यरसितैःस्तनितैर्यदङ्गणभुवोयस्याःप्राङ्गणप्रदेशाःसमुच्छ्वसन्तः प्रादुर्भवन्तोनवाःप्रत्यग्राःवालवायजमणिस्थलांकुराः वैदुर्यप्रभवोदेशविशेषःउरगेंद्रमूर्द्धन्यरत्नांकुरैःसहोदितमेघध्वनेर्विदुरभूमिरुद्भिन्नांकुराभवतीतिप्रसिद्धिः । तत्रसमृद्धिमद्वस्तुवर्णनादुदात्तालङ्कारभेदः।तदुदात्तंभवेद्यत्रसमृद्धंवस्तुवर्ण्यतेइतिलक्षणात् ॥ ५८ ॥ **

॥ नलिनीति ॥ यत्रसभायांनिगूढसलिलादलक्षितत्वादत्रस्थलमिवास्तानलिनीवर्त्ततइतिशेषः । यानलिनीसुष्टुयोधनइतिसुयोधने । भाषायांशासियुधिदृशिधृषिमृषिभ्योयुचवक्तव्यः । स्थलमितिभ्रान्त्याअधःपततिसतिअनिलात्मजस्यभीमस्यप्रहसनेनाकुलानांक्षुभितानामखिलक्षितिपानांक्षयागमोविनाशप्राप्तोनिमित्ततांदधौ । नलिनीदलिनीदलक्छिन्नत्वात्सुयोजनस्यजलेस्थलभ्रान्तिः । तयानस्यपततस्तेनभीमसेनेनप्रहासस्तेनराज्ञांक्षोभस्ततस्तेषामारणेरणःप्रवृत्तइतिपरस्पर यातस्यपातस्तेनतत्क्षयकारणत्वंगमेत्यर्थः अत्रसभावर्णनांगतयाभीमसेनादिचरितवर्णनादुदात्तालङ्कारः लक्षणंचोक्तं

उरगेन्द्रमूर्द्धरुहरत्नसन्निधेर्मुहुरुन्नतस्यरसितैःपयोमुचः । अभ
वन्यदङ्गणभुवःसमुच्छ्वसन्नववालवायजमणिस्थलाङ्कुराः ॥५८॥
नलिनीनिगूढसलिलाचयत्रसास्थलमित्यधःपततियासुयोधने ।
अनिलात्मजप्रहसनाकुलेऽखिलक्षितिपक्षयागमनिमित्ततांदधौ
॥ ५९ ॥ ****************

॥५९॥ ******************************** ॥

॥ दधिसुमिति । यत्रसभायांपरितःपरिस्फुरताकरवालकोमलाअसिश्यामाद्युतिर्यस्यास्त

स्याइन्द्रनीलभुवि हसितुंपरेणजननान्येनजनेनोपेक्षितैः स्थलमेतत्नजलमितिउपादि ष्टैर्जनैर्मन्दराद्रेरागंतुकजनैर्जलशंकया जलभ्रान्त्यामुक्तैर्दूरंसंवरं अमर्षिणाउदकर्षिति तत्वादुद्धृतं। अत्रेंद्रनीलस्थलसादृश्यात्सलिलभ्रान्तेर्भ्रान्तिमदलङ्कारः॥ ९० ॥ **

॥ अभितइति ॥ अथामलांशुमण्डलेनतेजःपुञ्जेनसमुल्लसंत्योभासमानेनतनूर्त्त्यो स्तोन्नतंनंदनौनेत्रानंदकरौहरिपाण्डवौरथादभितःसभाभिमुखं। अभितःपरित इतिहिनीश। रथात्शशिभार्गवौसमेत्यादिविशेषणविशिष्टौचंद्रशुक्रौनभोभितोन भोभिमुखउदयाख्यात्पर्वताद्दयाचलादिवावतेरतुः। अवतीर्णवन्तौ। तरतेर्लिट्।

हसितुम्परेणपरितःपरिस्फुरत्करवालकोमलरुचावुपेक्षितैः। उद्
कार्थिभिःजलशङ्कयाजनैर्मुक्तरिन्द्रनीलभुविदूरमम्बरम्॥ ९० ॥
अभितस्सदोथहरिपाण्डवौरथादमलांशुमण्डलसमुल्लसत्तनू। अ
वतेरतुर्नयननन्दनौनभःशशिभार्गवावुदयपर्वतादिव॥ ९१ ॥ त
दलक्ष्यरत्नमयकुड्यमादरादभिधानरीतइतइत्यथोन्वये। धवला
श्मरश्मिपटलाविभावितप्रतिहारमाविशदसौसदःशनैः॥ ९२ ॥

नृफलभजनत्वपक्षेतिएताभ्यासलोपौउपमा॥ ९१ ॥ ****************॥

॥ तदिति॥ अथोरथावतरणानन्तरंअसौहरिर्नृपैर्बुधिष्ठिरे। आदराद्इतइतर्थं अभिधानरीसतिइतंइतःआगम्यतामित्यभिधानेसतीत्यर्थः। तत्पूर्वोक्तमलक्ष्यरत्नम यकुड्यंअदृश्यरत्नभित्तिकं। बहुलेनइराणाश्मरश्मिपटलेनमणिप्रभापुंजेनाविभावित प्रतिहारमलक्ष्यद्वारं। द्वौद्वार्द्वारंप्रतिहारइत्यमरः। सदःसभांशनैराविशत्। प्रविष्ट वान्। अत्रकुड्यप्रतिहारयोरलक्ष्यत्वासम्बन्धेपितत्सम्बन्धोक्तेरतिशयोक्तिः॥ ९२ ॥

॥ नवेति॥ अथप्रवेशनानन्तरंसहरिस्तत्रसंसदिसभायांनवहाटकेष्टकाभिर्हिरण्येष्ट

काभिषिक्तं। हिरण्यं हेमहाटकमित्यमरः। इष्टके घी कामालानाश्चितनूलंभारिषितिष्ठ स्वः। पक्वमृत्तिकाविशेषवाचकस्येष्टकाशब्दस्यनाट्टशिस्तुवर्णविकारेसुवर्णवदुपचारप्रयोगात। क्षितिपस्ययुधिष्ठिरस्ययत्तंसदनंददर्श। गगनस्पृशांउच्चैस्तरांमणिरुचांचयेनसमूहेननाकिनांदेवानामपिसदनानिउदस्मयतेसम्बंधोक्तेरतिशयोक्तिः॥ ६३ ॥ *॥ उदयाद्रीति ॥ अयन्तपसदनदर्शनानन्तरंउदयाद्रिमूर्द्धिशिखरेयुगपच्चकासतोःप्रकाशमानयोः। चकास्तदीप्ताविति धातोःलटःशत्रादेशः। दिननाथपूर्णशशिनोःसूर्यपूर्णचन्द्रमसोःअसम्भवांसंभवरहितांनान्तयोसूयाभूतयोर्योगपद्ययोरभूतपूर्वामित्यर्थःरुचि

नवहाटकेष्टकचितन्ददर्शसःक्षितिपस्ययस्तमथतत्रसंसदि।गगनस्पृशान्मणिरुचाञ्चयेनयत्सदनान्युदस्मयतनाकिनामपि॥६३॥

उदयाद्रिमूर्द्धियुगपच्चकासतोर्द्दिननाथपूर्णशशिनोरसम्भवाम्।रुचमासनेरुचिरधाम्निविभ्रतावलघुन्यथन्यषदतान्नृपाच्युतौ॥६४॥

स्तुनरंसुखेनसकलक्लमच्छिदासनिदाघमङ्गमिवमातरिश्वना।यदुनन्दनेनतदुदन्वतःपयःशशिनेवराजकुलमापनन्दथुम्॥६५॥

शोभांविभ्रतौनृपाच्युतौरुचिरधाम्निउज्ज्वलतेजांसि। अलघुनिविपुलेआसनेसिंहासनेन्यषदतां। सदेर्लुङ्पुषादित्वाल्लेरङादेशःसदिरप्रतेरितिषत्वं। अत्रसंभावनयार्कपूर्णेन्दुशोभासम्बन्धोक्तेरसम्बन्धेसम्बन्धरूपातिशयोक्तिः॥ ६४ ॥ ******॥

॥ स्तुनरमिति ॥ नद्राजकुलंकुरुकुलं। सकलक्लमच्छिदासकलदुःखहारिणायदुनन्दनेनकृष्णेनसनिदाघंससंतापमंगंमातरिश्वनःवायुसेन। उदकान्यस्यसन्तीतिउदन्वान्। उदधिप्रधेवेतिनिपातः। तस्यपयोजलंशशिनेवस्तुनरामत्यन्तं। अव्ययारामितिआम्प्रत्ययःसुखेनाक्लेशेननन्दथुंआनन्दमाप। स्यादानंदथुरानंदइत्यमरः। द्वितीयु

जिनियुच्प्रत्ययःसाक्षोपमा ॥ ६५ ॥ ******************** ॥

॥ अनवद्येति ॥ सविलासेविलासयुक्तोलासिकविलासिनीनांजनःनर्त्तकीस्त्रीजनःसवि
लासलासिकविलासिनीजनः । नर्त्तकीलासिकेसमेइत्यमरः । अनवद्यमगर्ह्यंवाद्यंदोषं
दंशादिनखलवः साम्यङ्गीतस्यसमकालत्वतङ्गामिकोमसंतदनविलम्बवादीवचनानुव
र्त्तीयर्थतथाअनृत्यन्तसमन्वितलयस्त्वेकतालीवीणानिसरः । नवङ्गीतंयस्यतन्नवगीतंत
थ्यनवगीतंनादधदिनिविरोधेऽपिशदः अगर्हितत्वंदधरत्यन्नविरोधाभासस्यलयः ।
अवगीतंतुनिर्वादेमुहुर्गीतेचगर्हितेइतिविश्वः । सत्वमंतःकरणंतेननिर्वृत्तंइतिसात्विकं
अंगंहस्तादितेननिर्वृत्तमाङ्गिकं । निर्वृत्तेत्वङ्गसत्वाभ्यांद्वेत्रिष्वाङ्गिकसात्विकेइत्यमरः ।

अनवद्यवाद्यलयगामिकोमलन्नवगीतमप्यनवगीततान्दधत् । स्फु
टसात्विकाङ्गिकमनृत्यदुज्ज्वलं सविलासलासिकविलासिनीजनः
॥ ६६ ॥ सकलेचतत्रगृहमागतेहरौनगरेप्यकालमहमादिदेशसः ।
सततोत्सवमितिनूनमुन्मदोरभसेनविस्मृतममूमहीभृतः ॥ ६७ ॥

तेस्फुटेयस्मिंस्तत्तथोक्तं । वाचिकस्याप्युपलक्षणमेतन्नथाहभगवान्भरतःसामान्यभिन्नयो
नामज्ञेयोवाचाङ्गसात्विकंइति । अतएवाहकालिदासोपिआङ्गसत्ववचनाश्रयंमिथः
स्त्रीपुन्दत्युपधायदर्शयन्निनिकोमलंमधुरं अन्दत्यत्उज्ज्वलंमुद्धतंनृत्यंवानृत्यनंतत्तयोक्तं
दशरूपकेभावाश्रयतुनृत्यंस्यान्नृत्यंतालयाश्रयं । आद्यंपदार्थाभिनयोमार्गदेशीयत
थापरः । मधुरोद्धतभेदेनतद्वयंद्विविधंपुनःलास्यदण्डकरूपेणनाटकाद्युपचारकमिति
॥ ६६ ॥ ****************************** ॥

॥ सकलइति । किंस्वभिमिति चार्थः ॥ सराजाहरौकृष्णेगृहमागतवतिगृहान्गतेसति ।
गृहाःपुंसिचभूम्न्येवेत्यमरः । सकलेतत्रनगरे । इन्द्रप्रस्थेअकालेप्रभातसंध्यादिरिक्ते

काले । महमुत्सवं । महउद्धवउत्सवइत्यमरः । आदिदेशआज्ञापयामास । नूनम चोत्प्रेक्ष्यते उन्मदः उच्चगमनात् कूटानंदनस्यमहीभृतोधर्मनन्दनस्यतन्नगरंसततंउत्सवा यस्मिन् सततोत्सवमितिइत्येवतद्भसेनत्वरयाविस्मृतममूत् अन्यथाकथंतत्कारणोपदेश इतिभावः ॥ ६७ ॥ ****************************** ॥

॥ हरिरिति ॥ किंचेतिचार्थः । सखीनांवंधूनामखिलान्यभिधानानिवेत्तीति । अखि लाभिधानवित् । सकलनामप्रपञ्चाभिज्ञस्य । नामरूपेव्याकरणवानीतिश्रुतेरितिभावः । आख्यंख्याचेअभिधानंचनामधेयंवचनामत्वेत्यमरः । अयंहरिःकृष्णःकुमारमारभ्येत्या कुमारआकुमारमारभ्येत्यर्थः । आङ्मर्यादाभिविध्योरित्यभिधानादव्ययीभावः । स्वजन

हरिराकुमारमखिलाभिधानवित्स्वजनस्यवार्त्तमयमन्वयुङ्क्त सः । म हतीमपिश्रियमवाप्यविस्मयः सुजनोनविस्मरतिजातुकिञ्चन॥६८ ॥ मर्त्यलोकदुरवापमवाप्तरसोदयन्नूतनत्वमतिरिक्ततयानुपद्रन्दधत् । श्रीपतिःपतिरसावकनेश्चपरस्परंसङ्कथामृतमनेकमसिस्वदत्तामुभौ ॥ ६९ ॥ *-*-*-*-*-*-*-*-*-*-*-*-*-*-*-*-*-*-*-*-*

स्यबन्धुजनस्य । वन्धुस्वस्वजनासमाइत्यमरः । वार्त्तमानामयंअरोग्यमित्यर्थः । वार्तंफ ल्गुन्यारोगेचेत्यमरः । ब्राह्मणंकुशलंपृच्छेत्क्षत्रवंधुमनवार्त्तमयमितिमदनस्मरणात् अ न्वयुङ्क्त अपृच्छत् प्रश्नोनुरागःपृच्छावेत्यमरः । युजेःकर्तरिलुङ् । तथाहिमहतीश्रियंसं पदमवाप्यापिविस्मयः निरहंकारःसुजनः अतएवजातुकदाचिदपिकिञ्चनकमपिविस्म रति । सुजनःसंपन्नोप्यहंकारंनकरोतीतिभावः सामान्येनविशेषणसमर्थनरूपोऽर्था न्तरन्यासः ॥ ६८ ॥ ****************************** ॥

॥ मर्त्येति । उभौश्रीपतिःकृष्णःअसाववनेःपतिःधर्मसुतश्चपरस्परंमर्त्यलोकेमनुष्यलो

कोदुरवापंदुर्लभंआवाप्तरसोदयंप्राप्तरसोत्कर्षंअभूदित्यर्थः अनिरिक्तनया अतिस्निग्धतया
अनुपदमनुक्षणंप्रतिवाक्यं च नूतनत्वमपूर्वतां दधत् अनेकं वक्तृ तं तं कथासंभाषणं चेदिरा
जजरासंधादिकाचित्ना रूपं तदेवामृतं नदसि खदनां खादितवन्तौ आकरः खदनालङ्कारः
खादन्तौ लिङ्गान् ॥ ६९ ॥ ****************************॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचि
तेमाघकाव्यव्याख्यानेसर्वंकषाख्यायांत्रयोदशःसर्गसमाप्तिमगमत् ॥ १३ ॥****॥

इतिश्रीशिशुपालवधेमहाकाव्येशब्दालङ्कृतसर्गान्तेयुधिष्ठिरसमागमो
नामत्रयोदशःसर्गः ॥ १३ ॥ ***********



नमिति । वदतीति वदः कुत्सितस्य वदः कद्वदः गर्ह्यवाक् । गर्ह्यवादी तु कद्वद इत्यमरः रथवदयोश्चेति कोः कदादेशः । न कद्वदतीत्यकद्वदः साधुवादी नृपो युधिष्ठिरः यज्ञकर्मणि यज्ञानुष्ठाने मनः समादधत् । सम्यगादधत् तदेव हृदि दधानेत्यर्थः । आहितविकाशया कृतप्रसादया दृशा दृष्ट्या स्नेहमुद्गिरन्नुद्वमन्निवेत्युत्प्रेक्षा । दृष्टिविकाशात् प्रकटितस्नेहः सन्नित्यर्थः । वचो वदन्तीति वक्तृविवेकं च जानातीति वाग्विदः वाक्यकोविदाः । सत्सूद्विषेत्यादिना क्विप् । तेषां वरः श्रेष्ठस्तं हरिं गिरं जगाद ब्रुवेरर्थग्रहणात् दुह्याचीत्यादिना वदेर्द्विकर्मकत्वं । अनेनोत्प्रेक्षावृत्त्यनुप्रासयोः संसृष्टिः अस्मिन्सर्गे रथोद्धतावृत्तं रनराविह रथोद्धता लगौ इति लक्षणात् ॥ १ ॥ ******************* ।

तं जगाद गिरमुद्गिरन्निव स्नेहमाहितविकाशया दृशा । यज्ञकर्मणि
मनः समादधद्वाग्विदाम्वरमकद्वदो नृपः ॥ १ ॥ लज्जते न ग
दितः प्रियम्परो वक्तुरेव भवति त्रपाधिका । व्रीडमेति न तव प्रियम्वदन्
ह्रीमता नु भवतैव भूयते ॥ २ ॥ **********

॥ गिरं जगादेत्युक्तां तामेव गिरां प्रपञ्चयति ॥ लज्जत इत्यादि । परः अन्यः कश्चित्तु मान् प्रियङ्गदितः प्रियवाक्यमुक्तः सन्नित्यर्थः । गदेर्दुहादित्वादप्रधाने कर्मणि क्तः । अप्रधाने दुहादीनामिति वचनात् । न लज्जते न स्तोत्तुकत्वादिति भावः किन्तु वक्तुः स्तोतुरेव त्रपाधिका भवति । भयादिना मिथ्यावाचकत्वादिति भावः । प्रकृते तु नैवमित्याह । तव प्रियंवदन् त्वां स्तुत्वा व्रीडं न एति । अनन्तगुणाधाने त्वयि वक्तुरपि प्रियस्यामिथ्यात्वादिति भावः । तेन भवान् च भवतां पूजानां ह्रीमता भूयते प्रत्युपेतत्वमेवात्र ह्रीरीत्यर्थः महतामनुत्सेकित्वादिति भावः पूज्यस्तत्रभवानिति निघुज्जनः सार्वविभक्तिकस्तत्त्विडुपेति समासः
॥ २ ॥ ****************************** ॥

॥ तोषमिति ॥ परस्त्वदन्यः वितथैरसत्यभूतैः स्तवैः स्तोत्रैः । स्तवः स्तोत्रंनुतिः स्तुतिरित्यमरः । तोषमुत्सकमेतितेचतस्यपरस्ततेमिथ्यास्तवशरीरिभिः सुलभाः असम्बद्धप्रलापाः नामसुगमत्वादितिभावः त्वयितुनैवमित्याह । अस्तीति । हेस्तोत्रयोग्य । गुणाकरादितिभावः । अतएवतवसंबंधिस्तुतिवचोंऽनृतंनास्तिनभवन्ति । तेनस्तुतिवचसानतुष्यसितनप्रसिद्धं गम्भीरत्वादितिभावः अत्र श्लोकद्वयेपुरुषान्तरादुपमानभूतादाधिक्यकथनाद्व्यतिरेकालङ्कारः ॥ ३ ॥ ************************************ ॥

॥ वह्वपीति ॥ अयञ्जनः स्वयमित्यर्थः परामृश्यते अर्थाद्बह्वपितवप्रियंब्रुवन्सन् अनृतकादिनांमिथ्यावादित्वंनव्रजतिनगच्छतियद्यस्मात्हेसार्वसर्वहितत्वात्सार्वःतत्संबोधने ।

> तोषमेतिवितथैः स्तवैः परस्तेचतस्युस्सुलभाः शरीरिभिः । अस्तिनस्तुतिवचोऽनृतन्तवस्तोत्रयोग्यनचतेनतुष्यसि ॥ ३ ॥ बह्वपिप्रियमयन्तवब्रुवन्नव्रजत्यनृतवादितांजनः । सम्भवन्तियदृदोषदूषितेसार्वसर्वगुणसम्पदस्त्वयि ॥ ४ ॥ साविभूतिरनुभावसम्पदांभूयसीन्तवयदायतायतिः । एतदूढगुरुभारभारतम्बर्षमद्यममवर्त्ततेवशे ॥ ५ ॥

यतदोषदूषितेनभवतीत्यदोषदूषितेसर्वगुणावर्जितेत्वयि । सर्वगुणसम्पदः सम्भवन्ति । अनारोपितगुणवादोभूयानपितविपर्ययइतिभावः अत्रोत्तरवाक्यार्थेनपूर्ववाक्यसमर्थनाद्वाक्यार्थहेतुकंकाव्यलिङ्गम् ॥ ४ ॥ *********************** ॥

॥ सेति ॥ हेऊढगुरुभार । विश्वंभरत्वादितिभावः । एतद्भरतस्यराज्ञइदंभारतं । भारताख्यंवर्षवर्षांस्त्रीभारतादौचेतिहेमः । लोकोऽयंभारतंवर्षमित्यमरः । अद्येदतीभायतायतिर्बहूत्तरकालास्थिरंयथातथेत्यर्थः । उत्तरकालआयतायतिरित्यमरः । ममवशेआयत्ततायावर्त्ततइतियावत् । वशआयत्ततायांचेतिविश्वस्तद्वशवर्त्तनंविधेयमा

धान्यात् त्वौलिङ्गना । तवानुभावसंपदां सामर्थ्यातिशयानां भूयसीत्याविभूतिर्महिमाकार्य
मिति । त्वत्प्रसादलब्धमिदमैश्वर्यमित्यर्थः । अत्र निजैश्वर्यस्य तदनुभावसंपदा वा
संबंधेऽसंबंधोक्तिरतिशयोक्तिः ॥ ५ ॥ ******************** ॥

॥ तदेवं स्तुत्वा हरिमभिमुखीकृत्य उक्त्याशयमावेदयति ॥ सप्तेति । सप्ततंतरवसंज्ञाव
स्यन्तं सप्ततंतुं क्रतुं । सप्ततंतुर्मखः क्रतुरित्यमरः अधिगन्तुम्प्राप्तुमिच्छतो मम तनुज्ञया नुज्ञाद
नेनानुग्रहं प्रसादं कुर्वन् कुर्वित्यर्थः समर्थस्य किं मदनुग्रहेणेत्याह हे प्रभो त्वयि मूलतां मुख्य
कारणतां नामश्रियं चोपगते सति । मया धर्ममयवृक्षता धर्मात्मकवृक्षता प्रापि प्राप्ता । प्राप्तेः
कर्मणि लुङ् । प्रागपि त्वदनुग्रहादेव धर्मप्रज्ञानयनधर्मराजोहमस्मीति भावः अत्र नृपस्य

सप्ततन्तुमधिगन्तुमिच्छतः कुर्वनुग्रहमनुज्ञया मम । मूलतामुपग
तेखलुत्वयि प्रापि धर्ममयवृक्षता मया ॥ ६ ॥ सम्भृतोपकरणेन निर्म
लांकर्तुमिष्टिमभिवाञ्छता मया । त्वं समीरण इव प्रतीक्षितः कर्षकेण व
लजान्पुपूषता ॥ ७ ॥ ***********

धर्मवृक्षत्वेन हरेस्तन्मूलत्वेवारोपणात् । सावयवरूपकं तेन त्वदनुग्रहः सर्वथा प्रार्थनीयो मम
था धर्मार्थिने इति तात्पर्यं व्यज्यते ॥ ६ ॥ ******************** ॥

॥ संभृतेति ॥ निर्मलां निर्दोषां इष्टिं यागं । यजेः स्त्रियां क्तिन् वचिस्वपीत्यादिना संप्रसा
रणं कर्तुमभिवाञ्छता अतएव संभृतोपकरणेन संपादितसाधनेन मया बलजान् धान्यराशी
न् । बलजो धान्यराशिः स्यादिति वैजयन्ती । पुपूषता किंतु शोधितुं निर्बुसां कर्तुमिच्छता ।
पुनातेः सन्नतात् लटः शत्रादेशः सनि ग्रहगुहोश्चेति चकारादिटः प्रतिषेधः । कर्षकेण कृषी
वलेन समीरणो वायुरिव प्रतीक्षितः प्रवातेः स्तूर्पादिना धान्यस्योत्क्षेपेपवनं वातं ॥ ७ ॥ *

॥ वीतविघ्नमिति ॥ सेमखेन क्रतुना कर्त्रा वीतविघ्नमविघ्नं अनघेन निर्दोषेन भाविता भवि

ध्यंनअधुनातवसन्निधेरित्यर्थः। स्वस्तिचसोजुडीत्यादिनाजुटिचिखल्ङात्वृद्धिः । तथा हिअशीतदीधितावुष्णांशावास्थितोदयेसति। कोवासरश्रियन्दिनशोभांविहंतुमलंशक्तः नकोपीत्यर्थःअत्रहरिमरीचिमालिनोर्वाक्यभेदात् । बिम्बप्रतिबिंबतयासन्निहितयोःति तयोःसमानधर्मतयानिर्देशाद्दृष्टांतालङ्कारः यत्रवाक्यद्वयेबिंबप्रतिबिंबतयोच्यतेसामान्य धर्मवाक्योक्तेःसदृष्टांतोनिगद्यतइतिलक्षणात्॥ ८ ॥ ************* ॥

॥ स्वापतेयमिति ॥ यत्स्वपतौस्वामिनिसाधुस्वापतेयंवित्तं । द्रव्यंवित्तंस्वापतेयमित्यम रः। धर्मतः अधिगम्यलब्ध्वा। पर्यपालयंपालितंअवीवृधंवृद्धिंप्रापितं। तत्तीर्थगामिविप्रा धीनंकरवैकरिष्यामि । विधानतःअनलेजुहवानिनत्सर्वंपालितंवर्द्धयनेनीत्यापात्रे धुनि

वीतविघ्नमनघेनभाविता सन्निधेस्तवमखेनमेऽधुना। कोविहन्तुमलमा स्थितोदयेवासरश्रियमशीतदीधितौ ॥८॥ स्वापतेयमधिगम्यधर्मतः पर्यपालयमवीवृधच्चयत् । तीर्थगामिकरवैविधानतस्तज्जुषस्वजुह वानिचानले ॥ ९ ॥ पूर्वमङ्गजुहुधित्वमेववास्नानवत्यवभृथेततस्त्व यि । सोमपायिनिभविष्यतेमयावाञ्छितोत्तमवितानयाजिना ॥१०॥

वैपेदितिस्मरणात्। नचपात्रंत्वमेवेत्याह। जुषस्वसेवस्वसदैवभुंक्ष्वेत्यर्थः। जुषीप्रीतिसे वनयोरितिधातोर्लोट। अनलेजुहवानितन्मुखेनापितवैवभोक्तृत्वादितिभावः । जुहोतेः संप्रश्ने लोटिमेर्निरादेशः ॥ ९ ॥ ********************* ॥

॥ पूर्वमिति ॥ वेतिपक्षांतरे अथवेत्यर्थः। हेअङ्ग हेवत्स। अथसंबोधनार्थकाःस्युःअङ्ग हेभोइत्यमरः। पूर्वंत्वमेवजुहुधियजस्वेत्यर्थः। हुझल्भ्योहेर्धिरितिहेर्धिरादेशः। सो मपायिनित्वयिअवभृथेजज्ञे। दीक्षांतोवभृथोयज्ञइत्यमरः । स्नानवतिसतिततोनंतरंम या वांछितंउत्तमोवितानः एनस्तद्याजिनः। क्रतुविस्तारयोरस्त्रीवितानंत्रिषुतुच्छकेइति

। तेनतथायाजिताभविष्यते । भावेलृट् । त्वयाइष्टवतिपश्चादहंयक्ष्येइत्यर्थः अत्रश्लेषच्छेनहृदयैगासंबंधोक्तेरतिशयोक्तिः ॥ १० ॥ ******************** ॥

॥ किमिति ॥ अथवात्वत्प्रसादेनत्वदनुग्रहेणजितयाजयलब्ध्याअनयार्थसंपदाधनसंपदाकिंविधेयंकिमनुष्ठेयंविधीयतांत्वयैवक्रियतांअहंतुअस्तंतंत्रइत्याह । हेजगत्त्रयस्यशासककिन्तुममेतिभावःमांशाधिसिक्षयेत्यर्थः । शासेर्लोटिजुझकत्वभ्योहेर्धिरिर्तिधिरादेशःभकलोंभक्लोतिसकारलोपः । सहानुजःसानुजः । वोपसर्जनस्येतिसहशब्दस्यसभावविकल्पः । भवतःतवाश्रवोविधेयोस्मि । विधेयोविनयग्राहीवचनेस्थितआश्रवइत्यमरः ।श्रवानाश्रवत्वसंबंधोक्तेरतिशयोक्ति इतिदशश्लोक्यामचार्यमनेतिप्रियतमाख्यानान्त्येयालं

किम्बिधेयमनयाविधीयतान्त्वत्प्रभावजितयार्थसम्पदा । शाधिशासकजगत्त्रयस्यमामाश्रवोस्मिभवतःसहानुजः ॥ ११ ॥ तम्बदन्तमितिविष्टरश्रवाःश्रावयन्नथसमस्तभूभृतः । व्याजहारदशनांशुमण्डलव्याजहारशबलन्दधद्वपुः ॥ १२ ॥ ******

कारःप्रियःप्रियतराख्यानमितिलक्षणात् आधुनिकास्तभाविनिवंधनेप्रेयोलंकारइतिलक्षयन्ति । तचोन्नीयमस्तत्रतत्रोन्नेष्यतेच ॥ ११ ॥ *************** ॥

॥ तमिति । अथानन्तरंविष्टराविवश्रवसीयस्यसविष्टरश्रवाः । विष्णुर्नारायणःकृष्णोवैकुण्ठोविष्टरश्रवाइत्यमरः । इतिएतादृशंतंवदन्तंनृपं । समस्तभूभृतःसर्वान्नृपान्श्रावयन् दशनांशुमण्डलमितिव्याजोपदेशोयस्यतेनहारेणमुक्ताहारेणशबलंश्यामंवपुर्दधत्व्याजहारव्याहृतवान् । अथतत्रदशनांशुमण्डलस्यव्याजशब्देनासत्यत्वप्रतिपादनात्यद्रुपभेदः ॥ १२ ॥ ************************ ॥

॥ यदुतांसाविभूतिरित्यादि ॥ तत्रोत्तरमाहसाधितेति । संप्रतितेतवमहत्महत्तेजःस

नयसंपदैवनिजानीतिमहिम्नैवसाधिताखिलनृपंविजितसमस्तराजकं । ननुमदनुभावा
दितिभावः नयाहिपथ्याहितावृत्तिरन्नपानादिक्रियायस्यसोपिअरोगितामारोग्यंसमश्नुते
यदिप्राप्नोतिस्वतःसोपितदारोग्यमित्यर्थःविधेयप्राधान्यात्पुल्लिङ्गता। परस्यभिषजस्सगु
णःकिन्नेत्यर्थः। पथ्यवृत्तेरारोग्यमौषधसाध्यत्वाद्भिषजोगुणोस्तुहिनमेधाशितेतिनेत्यर्थः
स्वयमसमर्थःपराधीनसिद्धिरित्युपचारइतिभावःदृष्टान्तालङ्कारःसुगमः ॥ १३ ॥
॥ यदुक्तंपूर्वमंगजत्वृधित्वमेवेतितत्नाप्याह ॥ तदिति। तत्तस्मादुक्तरीत्यानवैवाधिका
रित्वादित्यर्थः। सुराज्ञि। विजयप्रजारक्षणादिगुणयोगात्सुक्षत्रियेनपूजनादिति
। समासत्वंनप्रतिषेधः। भवतित्वयिपुरःस्थितेसतिकस्त्वदन्यःकइत्यर्थः। राज्ञःक्षत्रियस्यल

साधिताखिलनृपम्महन्महस्समप्रतिस्वनयसम्पदैवते । किम्परस्यस
गुणःसमश्नुतेपथ्यवृत्तिरपियद्यरोगिताम् ॥ १३ ॥ तत्सुराज्ञिभवति
स्थितेपुरःकःक्रतुंयजतुराजलक्षणम् । उद्धृतौभवतिकस्यवाभुवः
श्रीवराहमपहाययोग्यता ॥ १४ ॥ ※※※※※※※※※

क्षणंचिह्नमसाधारणंयस्यतंक्रतुंराजसूयमित्यर्थःयजतुनकोपीत्यर्थः। राजाराजसूयेनय
जेतइतिराजाधिकारतास्रवणाद्राजात्वमेवेतिभावः। संभावनायांलोट्। अत्रदृष्टान्त
माह। भुवउद्धृतौभुवउद्धरणेश्रीवराहंआदिवराहंअपहायकस्यपुनर्योग्यतासामर्थ्यंभव
तिनकस्यापीत्यर्थः। योगायप्रभवतीतियोग्यःयोगाद्यच्चेतियत्प्रत्ययः। अत्रराजवराहयोःवा
क्यभेदेप्रतिबिम्बकरणाद्दृष्टान्तालङ्कारः ॥ १४ ॥ *************** ॥
॥ यथोक्तंसंभृतोपकरणेत्यादिनातत्रगृहीतलक्षणेत्याहशासनइति ॥ गुरुणागुरूणा
मिदुःकरेपिशासनेनियोगेव्यवस्थितंस्थितवन्तमित्यर्थः कृत्यवस्तुषुकर्तव्यार्थेषुकामितोय
थेच्छंनियुङ्क्ष्वप्रेरय। अनुचितुमेतन्नियंतरीतिसंकोचंसंचारयन्नाह। त्वदिति। त्वद्यो

जनमेव धनंयस्य तं धनानि जयमीति धनंजयोऽर्जुनः । संज्ञायाभृतृवृजिधारिसहितपिद मइति खश्प्रत्यये मुमागमः । तस्मादेवोऽन्यःक्वत्वइतिमां मावगाःमावेहि । नियोगसमुच्च यार्थस्थकारः । अत्रमाङ्पूर्वादिणः इणोगालुङीतिगादेशः । नमाङ्योगइत्याडिनिषे धः उभयोस्तत्समिति विधानान्नारायणार्जुनयोर्भेदप्रतिपत्तिः कार्येत्यर्थः तथा चतेद्वेदेव कर्मसुनियोगेच्यसंकोचउक्तइतिभावः अतएवानयोर्वाक्यार्थयोर्हेतुमद्वाक्यार्थहेतुकंकाव्य लिंगमलङ्कारः सचकस्यचेभेदाभेदरूपातिशयोक्तिमूलइतिअनयोरङ्गाङ्गिभावेनसङ्क रः ॥ १५ ॥ ****************************** ॥

॥ यच्चोक्तंवीतविघ्नमित्यादितत्राभयदानप्रतिज्ञानीनोयइति ॥ योभूपतिःतवेहास्मिन्स्त्व

त्प्रयोगासनेऽपिगुरुणिव्यवस्थितङ्क्रत्यवस्तुषुनियुंक्ष्वकामतः । त्वत्प्रयो जनधनन्धनञ्जयादन्यएषइतिमाऽस्मावगाः ॥ १५ ॥ यस्तवे हसवनेनभूपतिःकर्मकर्मकरवत्करिष्यति । तस्यनेष्यतिवपुःकव न्धतामबन्धुरेषजगतांसुदर्शनः ॥ १६ ॥ *******

कर्मकरवत्कर्मनकरिष्यतितस्य वनेयज्ञे । सवनंयजनेस्नानेसोमेनिर्दलनेपिचेतिविश्वः । ...दर्शनेपिचेतिविश्वः । एषसुसुदर्शनोमच्चक्रंसुदर्शनः । शंखोस्य भूपतेःचतुर्जगतांबंधुःक्षेमंकरत्वादितिभावःएषसुसुदर्शनोमच्चक्रंसुदर्शनः । शंखोल क्ष्मीपतेःपाञ्चजन्यस्तच्चक्रंसुदर्शनइत्यमरः । तस्यवपुषःकबंधतांशिरःशून्यतांनेष्यतिचक्रो णास्यशिरइत्यर्थः । कबंधंसलिलेप्रोक्तमपमूर्द्धकलेवरइतिविश्वः । अतोहिंशकोपितं कोविदितिभावःअत्रसुदर्शनेबंधुत्वरूपणाद्रूपकालङ्कारः ॥ १६ ॥ ***** ॥

॥ इतीति ॥ इतीत्यंउदीरितगिरमुपन्यस्तवाचंशौरिंहरिंनृपोयुधिष्ठिरः । त्वयिश्रेय स्यभ्युदयेस्थितवतित्वयिक्षेमंकरेसतीत्यर्थःममसर्वसंपत्स्थिरेत्युक्तवान् । मुदंउद्वहन् सहायसंपत्त्यासंतुष्यन् । क्रतावुद्यस्थितक्रतुंकर्तुंउद्युक्तवानित्यर्थः । तिष्ठतेर्लुङि उदो

ऽनुर्द्धकर्मणिइत्यादिनात्मनेपदं स्याघोरिखेतिस्चिचःकित्वमिकारःह्रस्वादंगादितिसका रलोपः ॥ १७ ॥ ******************************** ॥

॥ अथपञ्चत्रिंशच्छ्लोकैरनेकधाकर्त्तुवर्णयति । आननेत्यादि । आननेनशशिनःक लामिवकलांकान्तिंदधत् । निदर्शनालङ्कारःशशिमुखइत्यर्थः । अन्यत्रशशिखण्डध रेत्यर्थः । दर्शनेनक्षयितोकामविग्रहोकामक्रोधौयेनसः । अन्यत्रदृष्टिदग्धस्मरशरीरः । विमलैर्जलैराप्लुतःस्नातः । नद्यांस्नातीतिदीक्षीवांस्नानविधानादितिभावः । अन्यत्रग ङ्गोदकशिक्तःगङ्गाधरइत्यर्थः । सनृपः । अष्टानांपूरणीअष्टमी । तस्यपूरणेडटितिड ट्प्रत्ययःनान्तादसंख्यादेर्मडितिमडागमःटिड्ढाणञित्यादिनाङीप् । अष्टानांमूर्त्तीनां

इत्युदीरितगिरन्नृपल्लयिश्रेयसिस्थितवतिस्थिरामम । सर्वसम्पदि तिशैरिमुक्तवानुदहन्मुदमुदस्थितक्रतौ ॥ १७ ॥ आननेन शशिनःकलान्दधद्दर्शनक्षयितकामविग्रहः । आप्लुतस्सविमलैर्ज लैरभूदष्टमूर्त्तिधरमूर्त्तिरष्टमी ॥ १८ ***********

समाहारोऽष्टमूर्त्तिः । तद्धितार्थइत्यादिनासमाहारेद्विगुरेकवचनंनपुंसकत्वञ्च । तस्यध रोधारयिताऽष्टमूर्त्तिधरःशिवःतस्यअष्टमीमूर्त्तिरभूत्सोमदीक्षितोभूदित्यर्थःतस्याप्याग मेशिवमूर्त्तित्वप्रसिद्धिःअत्रप्रकृताप्रकृतयोर्नृपशिवयोःशिवशब्दमात्रसाधर्म्यात्श्लेषालङ्का रः ॥ १८ ॥ ******************************* ॥

॥ तस्येति ॥ क्रियाकर्माणिहोमादीनि । अन्यत्रपुण्यपापकर्माणि । स्वयमकुर्वतोननु ष्ठितस्य । अन्यत्रउदासीनस्य । अतएवसांख्यपुरुषेणसांख्यशास्त्रोक्तेनात्मतुल्यतांविभ्र तस्तस्यरञ्जःकरणेअंतःकरणेयथावुद्धाविव्यर्थःऋत्वीयजतेतिऋत्विकयाजकः । ऋत्वि जोयाजकास्तैवइत्यमरःऋत्विग्दधृगितिनिपातः । तस्मिन्वृत्तिभाजिहोमादिव्यापारंकु

वतीत्यर्थः अन्यत्र पुण्यपापकारिणि सति । तदुपलंभतः तस्यात्त्विकवृत्तेरुपलंभात्मा
मिदमित्यनुसंधानादेव कर्तृता क्रियानुष्ठातृत्वमभवत् । तथैव विधिसामर्थ्यादिति भावः ।
अत एवाह भगवान् जैमिनिः अन्यो वा स्यात्परिक्रियाख्यानात्तस्य यथात्मनेपदं इति । अन्य
यत्तदुपलंभतस्तस्या बुद्धिवृत्तेरुपलंभात्साक्षित्वेनानुसंधानादेव कर्तृत्वमभवत स्वयं क्रिया
भोगरहितोपि आत्मा बुद्धेः सन्निधानाद्रक्तस्फटिकवत्तथाभवतीत्यर्थः उपमालङ्कारः ॥
१९ ॥ ************************************ ॥
॥ शब्दितामिति ॥ वाक्यलक्षणविदो [illegible] क्षमाः । यजनकर्मिणो याजनव्यापार
वतः चऋत्विजः । व्रीह्यादित्वादिनिप्रत्ययः । अनूच्यत इति अनुवाक्या अनुवाक्यया । अ

तस्य साङ्ख्यपुरुषेणातुल्यतामिभ्रतः स्वयमकुर्वतः क्रिया । कर्तृतानद्
पलम्भतो भवदृत्विभाजि करणीयथर्त्विजि ॥ १९ ॥ शब्दितामन
पशब्दमुच्चकैर्वाक्यलक्षणविदोऽनुवाक्यया । याज्यया यजनकर्मिणो
ऽत्यजन्द्रव्यजातमुपदिश्य देवताम् ॥ २० ॥ ******

वचेः ऋदहलोर्ण्यत् चजोः कुघिण्यतोरिति कुत्वं शब्दसंज्ञ
नुवाक्यया याज्यया जुहोतीति श्रुतेः । उच्चकैः अनपशब्दं शब्दितां अभाहितां मंत्रवर्णा
त्वाद्वचो शब्दसंज्ञायामिति न प्रतिषेधः । शब्दसंशब्दनेइति धातोः
प्रकाशितामित्यर्थः उच्चैः ध्वता क्रियातेनइ ति विधिनात् । देवतामिंद्रादिकामुपदिश्य द्रव्यजातं पशुपुरोडाशादि हविः समूह
यदिकात्कर्मिणाः । पूर्ववत्ण्यन्तात ऋदहलोर्ण्यत् इति करणे ण्यत् तस्मिन्य
इज्यतेनयेति याज्यया मन्त्रविशेषेण । देवतोद्देशेन
रेयजया चऋच्प्रवचर्चेति कुत्वप्रतिषेधः । तया अत्यजत् अयजदित्यर्थः । देवतोद्देशेन
द्रव्यत्यागो याग इति लक्षणात् । स च त्यागः सामान्यत आहवनीये जुहोतीति तद्राहवनीय
श्रुति सामान्यन्यायात् विधानादाध्वर्यवेति धेयं । द्रव्यत्यागस्याध्वर्युमातृकत्वेपि पुरयाज्या

पुरोनुवाक्यद्वारा होतृप्रशस्तिसाद्भिद्वारान्यास्त्वर्जान्नितिबहुतरव्यपदेशः । तथामैत्रावरुणेनपुरामनुवाक्यातमनूक्तायांतत्प्रकाशितदेवतोद्देशेनाध्वर्युहोतृप्रतिनिवायाज्योतेनवषट्कारेणसोमादिकंहविरग्नौवत्याक्षीदित्यर्थः स्वभावोक्तिरलङ्कारः ॥ २० ॥ ***** ॥

॥ सप्तेति ॥ तत्रक्रतौ । सामानिवेत्तीतिसामविदुद्गाता । सप्तप्रकारंयथाक्रमेणहस्तेनकल्पिताःसम्यादिनाःस्वराःनिषादाःयस्यतत् करविन्यासभेदादिभिर्व्यञ्जितसप्तस्वरमित्यर्थः । निषादर्षभगान्धारषड्जमध्यमधैवतापञ्चमस्तेयमीसप्तस्वराः । सामबृहद्रथन्तरादिकमसङ्गमस्खलितमुज्जगौउदगायत् । किञ्च । सूनृतगिरःसत्यवाचः । प्रियसत्यञ्चसूनृतं । स्वरयेविद्वांसोहोत्रध्वर्य्वादयःपुण्यंश्रेयस्करं । चतचस्त्रयजूंषिचतत्स्त्रग्यजु

सप्तभेदकरकल्पितस्वरंसामसामविदसङ्गमुज्जगौ । तत्रसूनृतगिरश्चसूरयःपुण्यमृग्यजुषमध्यगीषत ॥ २१ ॥ वद्धदर्भमयकाञ्चिदामयावीक्षितानियजमानजायया । सुग्भिपाणायनाभिसंस्कृतेनैर्हवींषिजुहवाम्बभूविरे ॥ २२ ॥ *********

षमग्निमततइर्वेत्यादिकं । द्वं द्वैकवद्भावः । अचतुरेत्यादिनाद्वंद्वेसमासांतनिपातः । अध्यगीषत । इङोलुङिविभाषालुङ्लृङोरितिगाङादेशःपक्षेकुटादित्वान्ङित्वात्तेघुमेत्यादिनाईत्वं । अत्रसप्तेत्यादिचतुर्थ्यनुप्रासभेदोद्रष्टव्यः ॥ २१ ॥ **** ॥

॥ वद्धेति ॥ वद्धंदर्भमयंदर्भविकारंकाञ्चिदामरशनागुणोयस्यास्तया । द्वामेतिद्वाभ्यामन्यतरस्यामितिडाप्रत्ययः । यजमानेयष्टा । पूर्वयजोःशानन्नितियजेःशानन्प्रत्ययः । तस्यजाययायत्न्यावीक्षितानिदृष्टानिहवींषिआज्यादिप्राणप्रणयित्वावीक्षितत्वेव्यपदेशः प्रणयनेनगार्हपत्यादुद्धृत्यमंत्रेणापतनेशादनं अभिसद्यान्परिस्तरणंयतिधानसंमार्गादिसंस्कारसंग्रहःतैःप्रणयनादिभिःसंस्कृतैःआहितानिश्रयेमुग्धाणिअग्नौवर्हि

शुष्माक्तस्त्वन्मैंत्यमरः । नत्वायाहवनायजुहोतीतिक्रुयमानेऽध्वर्य्युकर्त्तांजुक्रुयात्तांष्यो
चष्टेनयास्तवेनहवनीयेप्रधानमितिन्यायवचनात्तैःक्रतूकैरग्नौजुहवांबभूविरे । जुहोतेः
कर्मणिबिहभीह्रीभृकुवांस्तुवचेतिविकल्पादाम्प्रत्ययः । अत्रविषयस्ययोक्तस्यानुपादाने
नविषयिणःकाञ्चीगुणस्यैवनदभेदेननिर्द्देशाङ्गेदेअभेदरूपातिशयोरनुप्राशेनसङ्करः
॥ २२ ॥ ************************** ॥

॥ नेति ॥ नत्रतस्मिन्कर्मणियज्ञकर्मणि । अन्ययाश्रुतस्यशब्दस्यान्यथालिङ्गवचना
दिभेदनविपर्य्यणीनमन्मन्त्रमूहःनत्रकुशलाः । प्रयोगोऽस्यअस्तीतिप्रयोगिनःप्रयोक्ता
रऋत्विजः आगमेआम्नायेनिखिलाभिर्विभक्तिभिःप्रथमादिभिः सुचिवचोभिर्व्यक्तिवि
श्वास्तःविभक्तिग्रहणंवचनोपलक्षणं । व्यक्तिभिर्लिङ्गैश्चाञ्जसासुखेननिगदितुंपठितुनभव

नाञ्जसानिगदितुम्विभक्तिभिर्व्यक्तिभिश्चनिखिलाभिरागमे । तत्रक
र्मउविपर्ययणीनमनन्मन्त्रमूहकुशलाःप्रयोगिनः ॥ २३ ॥ ** **

त्यशक्यत्वादितिनाञ्जसादिनिगदितुम् अञ्जसउपसंख्यानमितिअलुक्नञर्थस्यनशब्द
स्यसुप्सुपेतिसमासःअथवाअंजसेतितृतीयान्तप्रतिरूपकमव्ययंतत्वार्थअञ्जसातत्वानूर्णबो
रितिविश्वः । अंजसातत्वतोरित्यर्थः । अस्मिन्यज्ञेमंत्रोनियमःतंमंत्रंमंत्ररूपंदेवनारू
पंवाक्यंविपर्ययणीनमनविपरिणामंनिरस्यविपरिनवंतइत्यर्थः । विपरिपूर्वकात्रणयन्तात्रम
भधातोः लुङसन्वल्लघुनिचङ्परेऽनग्लोपे इत्यभ्यासस्येत्वंदीर्घोलघोरितिदीर्घःउपसर्गादसमासेपि
णोपदेशस्येतिणत्वं । अत्रनाञ्जसानिगदितुमिति । अनाञ्जसेतिनिपातविशेषारम्भग
म्यामंत्रविपरिणामनहेतुत्वात्पदार्थहेतुकंकाव्यलिङ्गम् ॥ २३ ॥ ******** ॥
॥ संशयायेति ॥ संशयायसंदेहोत्पादनायतत्रूपतांसादृश्यंदधतोरुभयत्ररूपसाम्या
द्द्वयंसमासोवेतिसंशयंकुर्वतोरित्यर्थः । यथेन्द्रशत्रुरित्यत्रेन्द्रस्यशत्रुः । षष्ठीतत्पुरुषः

इन्द्रश्चासौशत्रुश्चेतिकर्मधारयः उतेन्द्रः शत्रुर्यस्येतिबहुव्रीहिरितिसन्देहस्थशंसयःतत्र
इन्द्रशत्रुरित्यत्र नियमेदोषमाह । दूरभिन्नफलयोःक्रियांप्रतितात्पर्यमित्यर्थः दूरभिन्नमत्यन्तविलक्षणं फ
लंययोस्तयोरर्थभेदात्कर्मणःफलभेदप्रतिपादतोरित्यर्थःयथेन्द्रशत्रुरित्यत्रैवषष्ठीसमास
योरत्वेवृत्रस्येन्द्रहंतृत्वंबहुव्रीहौतुतस्येन्द्रेणवध्यत्वमितिफलभेदइतिभावः । समासयो
रेवम्विषयोःप्रसक्तयोःस्तेोरित्यर्थः । भावलक्षणसप्तमी । शब्दशासनविदःशब्दशास्त्र
ज्ञाः । अन्येषामनधिकारादितिभावः तेप्रद्धनात्मस्वरेणनतत्समासविहितस्वरवशेन
विग्रहंवाक्येनसमवनिधानंव्यवसितः नि शङ्कंअस्मिन्स्वरेऽयंसमासःनचायम्विग्रहइ
ति अन्यतरपक्षावधारणंचक्रुः । यथेन्द्रशत्रुरित्यत्रैवपूर्वपदेउदात्तत्वेनबहुव्रीहिस्वरेणव

संशय्यायद्धतोःसरूपतान्दूरभिन्नफलयोःक्रियाम्प्रति । शब्दशास
नविदस्समासयोर्विग्रहव्यवसितःस्वरेणते ॥ २४ ॥ लोलहे
तिरसनाग्रलप्रभामण्डलेनलसताहसन्निव । प्राज्यमाज्यमसकृद्वष
ट्कृतन्निर्मलीमसमलीढपावकः ॥ २५ ॥ *******

हुव्रीहिसमासनिश्चयः । इंद्रःशत्रुर्यस्येतिविग्रहावधारणमित्यर्थःव्यवपूर्वस्यस्यतेर्लि
ट्यादेचइत्यात्वेद्विवचनादिकार्यैर्भरेगुसादेशः । अत्रस्यतेर्यज्ञत्वेफलभेदप्रतिपाद
कपदार्थयोर्विशेषणगत्याख्यन्दिखेन्यायःप्रवर्त्ततेइतिन्यायेनविप्रव्यवसायहेतुत्वात्पदार्थ
हेतुकङ्काव्यलिङ्गमलङ्कारः ॥ २४ ॥ ******************** ॥
॥ लोलेति ॥ लसताप्रकाशमानेनलोलाश्चलाहेतयोज्वालासैवरसनारसज्ञा । वह्नेर्हे
योर्ज्वालकीलावर्चिर्हेतिःशिखास्त्रियांरसज्ञारसनाजिह्वेत्यमरः । तासांग्रनानितेषांप्रभा
मण्डलेनहसन्निवेतिरूपकंसंकीर्णोत्प्रेक्षा । पावकोवह्निःवषट्कृतंवषट्कारेणप्यत्तांहुत
मित्यर्थः । हुतंनिषुवषट्कृतमित्यमरः । निर्मलीमसममलिनंशुद्धमित्यर्थः । मलीमसं

तुमलीनमित्यमरः । ज्योत्स्नानमिस्रेत्यादिनानामिनशब्दान्मत्वर्थईमसच्प्रत्ययान्तो निपातः । प्राज्यंप्रभूतमाज्यमसकृल्लीढआस्वादयन् । लिहेःस्वरितत्वात्लङिनङ् होढइतिढत्वंझषस्तथोर्धोधइतिधत्वंष्टुत्वेढत्वेढलोपदीर्घौ ॥ २५ ॥ ***** ॥

॥ नत्रेति ॥ नत्रक्तौ । मंत्रैर्मन्त्रपवनादिमंत्रैःपवित्रंपविचित्रंपूतंशोधितमित्यर्थः । पुङ्स्वेतिविकल्पादिडागमः । हविराज्यादिकमश्नतोभुञ्जानस्य । अश्नेतिभोजनार्थाल्लटः शत्रादेशः । हवींषिभुनक्तीतिहविर्भुजोऽग्निःतस्यसंबंधिअतिस्फुटांअतिविकसितां । वर्णसंपदंरूपसमृद्धिंदधत् । केवलंएकं । केवलंत्वेककृत्स्नयोरितिशाश्वतः । वपुरेवोज्ज्वलमजिह्मंभानाऽभूत् । किन्तुअतिस्फुटामतिव्यक्तांवर्णसम्पदमक्षरसमुदायंदधत् । वर्णोद्विजादौशुक्लादौस्तुतौवर्णंतुचाक्षरः । नामहविर्भुगितिनामधेयंचोज्ज्वलंरूढंअभूत्

नत्रमन्त्रपवित्रंहविःक्षताववश्नतोनवपुरेवकेवलम् । वर्णसम्पदमतिस्फुटान्दधन्नामचोज्ज्वलमभूद्धविर्भुजः ॥ २६ ॥ *****

निरंतरंहविर्भोजनाद्वपुःपुष्टिमापनामचार्थवेदासीत्यर्थः अत्रभोजनस्थाश्नतइतिविशेषणगत्याहेतुत्वात्पदार्थहेतुकङ्काव्यलिङ्गम् ॥ २६ ॥ ************ ॥

॥ स्पर्शमिति ॥ उचितंस्वाभाविकंउष्णंउष्णाख्यंस्पर्शंस्पर्शेनेन्द्रियमानगुणविशेषंदधत् दधानंशिखीअग्निः । वृक्षादिन्धादिनिः । हविराज्यादिकंददाहभस्मीचकारेतियन्तद्दहनंतउष्णस्पर्शसहक्तस्याग्नेःपार्थिवद्रव्यदहनशक्तेःस्वाभाविकत्वादितिभावःकुतःअनहव्यसम्भवात्कृनहवनीयहविर्जन्यात्गंधतोगंधानअपिसंक्रामिकगुणादपीत्यर्थःदेहिनांप्राणिनामित्यर्थःअंहसांपापानामोघमपीतिभावः अदहन्भस्मीकृतवान् नाशितवानित्यर्थः । अदाहद्दाहकस्पर्शंदहनंवाश्चर्यमितिभावः अत्रोष्णस्पर्शधारणस्याग्निविशेषणभावेनास्याघविद्दाहहेतुत्वस्यपदार्थहेतुकङ्काव्यलिङ्गम् उत्तरार्द्धेत्वंहसां

भ ङ्गीभावेनलक्षणा। दाहविरोधस्य नाशनलक्षणया समाधानाद्विरोधाभासेनलक्षणस्यवाचा भेदाध्यवसायमूलानिशयोक्तिप्रतिभोत्थापितः सएवदाह्यदाहकत्वरूपोवाक्यार्थोभूतापू र्वोक्तपदार्थहेतुकङ्काव्यलिङ्गमंहसां ततो हविर्दहनाङ्कूतत्वहेतुरिति वाक्यार्थहेतुकङ्काव्य लिङ्गमन्यैःप्राधान्यैर्नसङ्कीर्यते ॥ २७ ॥ ******************** ॥

॥ उन्नमन्निति ॥ सपदिहोमक्षणमेवोन्नमनउद्गच्छन् दिशोधूम्रयन्धूम्रवर्णाः कुर्वन्सां द्रनांनीरंधनांदधत्अतएवाधःकृतांबुदः सोमयावधीरिनोमेघोपरिगतश्चदहनस्याग्नेःके तनःकेतनःकेतुर्धूम्र इत्यर्थःधौम्रःकेतुर्येषांतेषांदिवौकसान्देवानां । पृषोदरादित्वात्सा धुः । अथवा दिवमोकोयेषामितिविग्रहः । दिवंस्वर्गान्तरिक्षेचेतिविश्वः । तेषांप्रियंद्र

स्पर्शमुन्नमुचितन्दधच्छिखीयद्दाहद्दविरङ्गतन्नतत् । गन्धतो
पिङ्गतहव्यसम्भवाद्देहिनामदहदोघमंहसाम् ॥ २७ ॥ उ
न्नमन्सपदिधूम्रयन्दिशःसान्द्रतान्दधदधःकृताम्बुदः । द्यामियाय
दहनस्यकेतनःकीर्त्तयन्निवदिवौकसाम्प्रियम् ॥ २८ ॥ ✲✲

व्यंकीर्तयन्कथयन्इवत्कीर्तनहेतुरिवकीर्तनार्थीवेत्यर्थः अतएवफलोत्प्रेक्षाकीर्त्तय न्नितिलक्षणहेतोःक्रियायाःहेतौलटशत्रादेशः। द्यामन्तरिक्षमियायप्राप । इणःलिट् ॥ २८ ॥ ****************************** ॥

॥ निर्जितेति ॥ नाकःस्वर्गोयेषामस्तीतिनाकिनोदेवाःअखिलार्णवोमहार्णवोपधीनांम हार्णवमंथनसमयेउत्थितानांदिव्यौषधिलतानांसंदोमंथनात्प्रसृतोरसस्तस्यसारोअमृत मितियावत्सनिर्जितोयेनअमृतादहरणस्वादुरित्यर्थः । अमृतंयज्ञशेषेस्यात्पीयूषेसलिले घृतेइतिमेदिनी । अमृतंवक्तिरवेवस्तुभोजनेकर्त्तरिलिट् । तस्यामृतापेक्षयंच नत्ति अनलेहूयमानंदीयमानंगव्यघृतमितिभावः प्रतीक्षितुंकथमपिविषेहिरेसोढवन्तःहोमवि

सम्बकथञ्चिनसहन्तेवेत्यर्थः नृणामनुसारेवजिघ्रनीनिरसानि शयोक्तिः अत्र हविषाममृतमित्यो भेदोऽप्यभेदाभेदेरूपानिशयोक्तिस्तद्विशेषणपदार्थस्यवल्गानहेतुत्वात्काव्यलिङ्गभेदःतयासंकीर्यते। परिनिविभ्यःसेव सितसयसिवुसहसुटस्तुस्वंजामितिषत्वं॥ २९ ॥ *

॥ तत्रेति ॥ तत्रक्रतौनित्यविहितोपहूतिषुक्रदाह्वानेषुपनिषुभर्तृषुइन्द्रादिषुप्रोषितेषु वसेःकर्त्तरिक्तःवसतिक्षुधोरिनीडागमः । द्युयोषितांस्वर्गस्त्रीणांइंद्राण्यादीनांशिरसि वेण्योजटाएवगुंफिताग्रंथिताःप्रफुल्लाःविकासिनाःसुरपादपस्रजःमालाःताःअभवन्अत्र सुरयोषितांवन्यसंबंधोपिसंबंधोक्तेःसक्संबंधोाथसंबंधोक्तेस्वसंबंधेअसंबंधरूपासंबंधेअसंबं

निर्जिताखिलमहार्णवौषधिस्वादुसारममृतम्बवल्गिरे । नाकिनः

कथमपिप्रतीक्षितंहूयमानमनलेविषेहिरे ॥ २९ तत्रनित्यवि

हितोपहूतिषुप्रोषितेषुपतिषुद्युयोषिताम् । गुंफिताःशिरसिवेणयो

भवन्नप्रफुल्लसुरपादपस्रजः ॥ ३० ॥ प्राश्नुराशुहवनीयमत्र

यत्तेनदीर्घममरत्वमध्यगुः । उद्धतानधिकमेधितौजसोदानवांश्च

विबुधाःविजिग्यिरे ॥ ३१ ॥ *·*·*·*·*·*·*·*·*·*·*

वरूपाचातिशयोक्तयानाद्भ्याक्तनोरजसत्वंवज्यते इत्यलङ्कारेणालङ्कारवस्तुध्वनिः ३०

॥ प्राश्नुरिति ॥ विबुधाःअत्रक्रतौआशुक्षिप्रंहूयतइतिहवनीयःहविःयत्प्राश्नुःप्राशितवं तःइतियावत् । अशभोजनेलिट्द्विवचनादिकार्येअतआदेरित्यभ्यासदीर्घः । तेनह विःप्राशनेनदीर्घममरत्वंदेवत्वममरत्वमध्यगुःप्रापुः। इणोगालुङीतिगादेशः। किञ्चअ धिकमत्यंतमेधितौजसोवर्द्धितवलास्ततःउद्धतानदृप्तान्दानवान्असुरांश्चविजिग्यि रेजितवंतः । विपूर्वाज्जयतेःकर्तरिलिट्विपराभ्यांजेरित्यात्मनेपदं । अत्रविबुधानां दीर्घामरत्वमसुरविजयत्वासम्बन्धेपिसम्बन्धोक्तेरतिशयोक्तिरेधितौजसःस्वविशेषणग

ण्याविजयहेतुत्वात्काव्यलिङ्गं तदुत्थापितश्चामरत्वं प्राप्ताक्रियालङ्कार इति सङ्करः गुणक्रि
यायौगपद्यं समुच्चयः ॥ २१ ॥ ********************** ॥

॥नापचारेति॥ अत्र क्रतौ । क्वचित् कुत्रापि क्रियाः कर्माणि अपचारं लोपविपर्यासादि
दोषं नागमन् । गमेर्लुङि पुषादित्वाच्चेरङादेशः । अनपचारे हेतुमाह । अत्र सर्वं साध
नं समपादि संपन्नं । पद्यतेः कर्त्तरि लुङ् चिण्ते पद इति चिण्प्रत्ययः कर्मणि वा । संपादित
मित्यर्थः चिण्भावकर्मणोरिति चिण्प्रत्ययः साधनसंपत्तिमेवव्यनक्ति । सचिवइतं त्रयेषाम
स्तीति सचिवाणां चरत्विजां । सत्रमाच्छादने यज्ञमित्यमरः । धियउत्तरोत्तरप्रयोगेतिशा
नानि । तदुक्तं मानचतुर्थात्कार्मणेतिसमीक्ष्ये दं करिष्यामीदं करिष्यामीति । तथा नर

नापचारमगमन्क्वचित्क्रियाः सर्वमत्र समपादि साधनम् । अत्यशे
रत परस्परं धियः सचिवानां नरपतेश्च सम्पदः ॥ २२ ॥ दक्षिणीय
मवगम्य पङ्क्तिशः पङ्क्तिपावनमथ द्विजव्रजम् । दक्षिणः क्षितिपतिर्व्य
शिश्रणद्दक्षिणाः सदसि राजसूयकीः ॥ २३ ॥ * * * * *

पतेराज्ञः संपदः पदार्थसमृद्धयश्च परस्परं अत्यशेरत अतिशयितवत्य उभय्योऽपि तिसमया
इत्यर्थः ज्ञानद्रव्येति क्रियापदसाधनं तत्संपन्नत्वं कुतः क्रियाप्रचार इति भावः अत्रानपचा
रवाक्यार्थे स्वसाधनसंपत्तिवाक्यार्थहेतुकत्वाव्यलिंगातपरस्परातिशयक्रियारूपधर्मसाम्य
गम्यौपम्यकेवलप्रस्तुतालङ्कारः ॥ २२ ॥ ********************** ॥

॥ दक्षिणीयमिति ॥ दक्षिणः उदार्यवान् । दक्षिणः सरलोदार इत्यमरः । क्षितिप
तिः राजा । दक्षिणामर्हतीति दक्षिणीयं दक्षिणार्हः । तत्र दाक्षिण्यदक्षापीत्यमरः । कड
ङ्गरदक्षिणाच्छ इति छप्रत्ययः । तं पंक्तेः स्वाध्यायश्रुतादिभिः पावनं पावितारं इति पंक्तिपा
वनं । पावयतेः कर्त्तरि ल्युट् । द्विजव्रजं तदृत्विक्वर्गमित्यर्थः पंक्तिशः पंक्त्यानुसारेण अधि

अभ्यस्तदक्षिराजत्वयत्कोर्दक्षिणः। दक्षिणार्थएवढको विधानात् । व्यशिश्रणनविश्राणं
वनिस्मविनोर्णवानित्यर्थः। विश्राणनंवितरणमित्यमरः । श्रणदानेइतिधानोर्लुङ्णौ च
ङ्युपधायाह्रस्वः। वृत्यनुप्रासोलङ्कारः ॥ ३३ ॥ ************** ॥
॥ वारीति ॥ नराधिपोराजा। सत्क्रिया अभिषेकसंस्कारैर्लब्धानिर्दीघनायाभिस्तास्तुवि
भक्तास्तु। द्विजाएवक्षेत्रभूमयःकेदारभूमयः। तासुक्षेत्रंगेहेपुरेदेहेकेदारेयोनिभार्ययो
रितिवैजयन्ती। भाविभविष्यत्महत्फलंस्वर्गादिकंधान्यादिकंचविभ्रतिबिभ्राणानीत्य
र्थः। वानपुंसकस्येतिविकल्पान्नुमागमप्रतिषेधः। धनानिबीजवत्बीजैस्तुल्यैर्वारिपूर्वकं
दानमपवत् । उप्तवान्दत्तवानित्यर्थः। अत्रबीजवत्इत्युपमानानि। तेनतुल्यमितितु

वारिपूर्वमखिलासुसत्क्रियालब्धशुद्धिषुधनानिबीजवत् । भावि
विभ्रतिफलम्महद्द्विजक्षेत्रभूमिषुनराधिपोऽवपत् ॥ ३४ ॥ कि
मुचित्रमधिवेदिभूप निर्दक्षयन्दिदजगणानपूयत । राजतःपुपूविरे
निरेनसःप्राप्यतेपिविमलम्प्रतिग्रहम् ॥ ३५ ॥ *****

...क्रियायोगात्बीजक्षेत्रेतिरूपकसमासोनोपमितसमासः
स्यार्थेवत् विधानात्तयाथावापक्रियायोगात्बीजक्षेत्रेतिरूपकसमासोनोपमितसमासः
किंतुरूपकस्यागममुपमानात्तदुन्यापितत्वादितिसङ्करः ॥ ३४ ॥ ****** ॥
॥ किमिति ॥ भूपतिरधिवेदिवेद्यांमहावेद्यामित्यर्थः। विभक्त्यर्थेऽव्ययीभावः। द्वि
जगणान्त्विग्गणान्दक्षयन् हर्षयनदक्षिणाप्रतिग्रहेणसदक्षिणान्कुर्वन् प्रतिग्राहय
न्नित्यर्थःतत्क्षणेदक्षिणाप्रतिगृह्यैतिश्रुतिदर्शनात्दक्षिणैवपुण्यइति। दक्षधानोर्ण्यन्ता
च्छतृप्रत्ययः। अतएवनिस्नातेदक्षिणेवापितेपुण्येतिपुणात्यपीतिभट्टः। अपूयतपू
तोभवेदिति। कर्मकर्तरिलङ्। किञ्चितन्द्रातापूतइतितचित्रमित्यर्थःकिन्नुप्रतिगृ
ह्णीतापिपूतइतिचित्रमाह। तेद्विजगणाअपिनिरेनसोनिःपापानराजतोराज्ञः। पञ्च

स्यास्तस्मिन् । विमलं शुद्धं प्रतिग्रहं प्राप्य पुपूविरे पूता बभूवुः । विशुद्धाश्च प्रतिग्रहश्रीलक्ष्म
भिज्ञानादिति भावः। अत्रापि पूञो कर्मकर्त्तरि लिट् । प्रतिगृहीताश्चपि शुद्धा इति विरोधः
यएव वाक्यार्थभूतश्चित्रत्वनिषेधहेतुकस्तथाविधयोरङ्गाङ्गिभावेन सङ्करः ॥ ३५ ॥
॥ स इति ॥ पाको नाम कोपि राक्षसस्तस्य शासनः शासको हन्ता पाकशासनः इन्द्रस्तेन समाना
शासनानुस्याज्ञा यस्य स इत्यर्थः स राजा स्वहस्तेन कृतं लिखितं चिह्नं स्वनामलेखनादि यत्र
शासनानि शासनपत्राणि यस्य सः दत्तस्वहस्तलेखाङ्कितशासनः सन्नित्यर्थः । आशशांकत
पनार्णवस्थितेः शशांकतपनार्णवानामभिव्याप्य आकल्पमित्यर्थः । अभिविधावाङ् । आ
ङ्मर्यादाभिविध्योरिति विकल्पात्समासः । भूयसीर्भुवो देयभूमीः विप्रसात् विप्राधीनाः । देवे

स स्वहस्तकृतचिह्नशासनः पाकशासनसमानशासनः । आशशा
ङ्कतपनार्णवस्थितेर्विप्रसादकृत भूयसीर्भुवः ॥ ३६ ॥ शुद्धमश्रु
तिविरोधिविभ्रतं शास्त्रमुज्ज्वलमवर्णसङ्करैः । पुस्तकैः सममसौगण
मुरुर्वाच्यमानमशृणोद्द्विजन्मनाम् ॥ ३७ ॥ ****

त्रा चेति चकारात्सातिप्रत्ययः । अकृत कृतवान् दत्तवानित्यर्थः । कृञो लुङि तङ् । उश्चे
ति सिचः कित्वात् ह्रस्वादङ्गादिति सकारलोपे गुणाभावश्च । पाकशासन इत्युपमानुप्रास
योः संसृष्टिः ॥ ३६ ॥ ************************** ॥
॥ शुद्धमिति ॥ असौ नृपः शुद्धमाचारपूतं । अन्यत्र विभक्तिविपरिणामेन । शुद्धैरक्ष
कैः । श्रुतिविरोधि वेदविरुद्धं न भवतीत्यश्रुतिविरोधि शास्त्रं विभ्रतं आत्मनि धारयन्तं सन्तं वै
दिकशास्त्राभिज्ञमित्यर्थः । नाभ्यस्ताच्छतुरिति नुम्प्रतिषेधः । अन्यत्र वाच्यमानैर्द्विज
गणेन व्याख्यायमानैरित्यर्थः । वचेर्णिजादिकात्कर्मणि लटः शानजादेशः । द्विजन्मनां
ब्राह्मणानां अवर्णसङ्करैः असङ्कीर्णाक्षरैः अन्यत्र जातिसंकररहितैरिति विपरिणामः । पु

स्तकैः समं पुस्तकाक्षरैर्वाक्यैः सह अमृणोत् । दानकाले प्रत्येकं ब्राह्मणानां गणनां गणनात्
गोष्ठीष्वनुनवानित्यर्थः । मुखस्थविद्यानामपुस्तकधारणं विलक्षणत्वेनोक्तमित्यदोषः
अन्यत्र पुस्तकैः समं द्विजगणं अमृणोदिति । सम्बन्धिभेदे भिन्नयोः श्रवणयोरभेदाध्यवसाय
भेदअभेदरूपातिशयोक्तिचमत्कारिणो द्विजानां प्रकृतत्वात् पुस्तकादौ च द्विजानिति वैव
श्लिष्टोपमानोपमेयभावपर्यवसायिनां श्लेषसंकीर्णसहोक्तिरलङ्कारः । सहार्थेनान्वयेन
अभेदातिशयोक्तिः कल्पितौ सम्भ्यपर्यन्तायास्सहोक्तिरिष्टेप्यतेऽतिलक्षणात् । कचि
त् पुस्तकैः समं वाच्यमानमिति योजयित्वा पुस्तकेषु द्विजगणान् । लेख्येष्वायतमानानिति
व्याचक्षते । तैः पुस्तकेषु शास्त्रभरणासम्भवाद्वर्णसङ्करेति । श्लिष्टविशेषणावगतश्लेष
प्रकृतमभङ्गः पुस्तकानां वाचनकरणत्वात्सहाविरुद्धे वैयर्थ्यमुक्तसहोक्त्यालङ्कारः भ्रंशास्त्र

तमप्रतीतमनसामुपेयुषान्दृष्टुमाहवनमग्रजन्मनाम् । आतिथेय
मनिवारितातिथिः कर्तुमाश्रमगुरुः स नाश्रमत् ॥ २८ ॥ *

निएवमाद्ये दोषादुष्करइत्यलं विस्तारेण ॥ २७ ॥ ************* ॥
॥ तदिति ॥ अनिवारिताः अप्रत्याख्याता अतिथयो येन सः आश्रमाणां ब्रह्मचर्यादीनां
गुरुर्नियमानात्सराजा । आसमंताज्जुहोत्यस्मिन्नित्याहवनं यागं जुहोतेर्ल्युट् । दृष्टुमुपेयु
षामागतानां । अतएव प्रतीतमनसां सत्कर्मदर्शनात् हृष्टचित्तानां अग्रजन्मनां । अति
थिषुसाध्वातिथेयमतिथिसत्कारं । पथ्यतिथ्यादिना मयङ्प्रत्ययः । कर्तुं नाश्रमत् । न
अांतः । श्राम्यतेः पुषादित्वात् लुङि च्लेरङादेशः । अत्रानिवारितातिथित्वस्य विशेषणग
त्याश्रमनिषेधहेतुत्वात्काव्यलिंगं सदनुप्रासेन संसृज्यते ॥ २८ ॥ ******* ॥
॥ मृग्यमाणमिति ॥ यत् रत्नं मृग्यमाणं अन्विष्यमाणमपि दुरासदं दुर्लभं । भूरिसारं महा
सारं उपढौकनमुपायनीकृतं मनसा तया संकल्पितमित्यर्थः उपायनमुपग्राह्यमुपहारस्त

योपदेत्यमरः । नद्रत्नं श्रेष्ठवस्तु निरत्नं श्रेष्ठमणावपीति विश्वः । नृपाः स्वयमुपनीयतस्य
राज्ञोऽवसरकांक्षिणः सेवावसरं प्रतीक्षमाणाः बहिरासत तिष्ठन्ति स्म इत्यै स्वर्यानि रायोक्तिः । अ
चरत्ने उपनीयत्वस्यारोप्यमाणस्य प्रकृतोपयोगात्परिणामालङ्कारः ॥ ३९ ॥ *** ॥
॥ एक इति ॥ एकएवन्रुपेयद्वसुधनं ददौ । उपायनमिति भावः । तद्धनमेवक्रतोः
समापकं संपूरकं अनर्घ्यं तद्दानादानादि सर्वक्रतुव्ययपर्याप्तं तथा तर्कितमित्यर्थः । तपःस्तु
ते धर्मस्तु तेत्यागशालिनि सति सर्वपार्थिवधनान्यपि क्षयं व्ययं ययुः । अत्रैकपार्थिवधनस्य
क्रतुसमापकत्वासंबंधेपि तत्संबंधोक्तेरतिशयोक्तिः । तयोस्तु सापेक्षत्वात्सजातीयसङ्करः

मृग्यमाणमपि यद्रसातले भूरिसारमुपनीय तत्स्वयम् । आसतावसर
काङ्क्षिणो बहिस्तस्य रत्नमुपदीकृतं नृपाः ॥ ३९ ॥ एकएवव
सु यद्ददौ नृपस्तत्समापकमनर्घ्यंतक्रतोः । त्यागशालिनि तपः सुते
ययुः सर्वपार्थिवधनान्यपि क्षयम् ॥ ४० ॥ प्रीतिरस्य ददतोऽभव
त्तथा येन तत्प्रियविकीर्षवो नृपाः । स्पर्शितैरधिकमागमन्मुदं ना
धिवेश्मनि हितैरुपायनैः ॥ ४१ ॥ *********

॥ ४० ॥ ****************************** ॥
॥ प्रीतिरिति ॥ ददतो दानं कुर्वतोऽस्य राज्ञस्तथा तेनैव प्रकारेण राज्ञोपायनानां अर्थिसा
त्करणेनैव प्रीतिरासीत् न तु कोशगृहार्पणेनेत्यर्थः । कुतः येन प्रकारेण तस्य राज्ञः प्रियं विकी
र्षवः प्रियं कर्तुमिच्छवः गम्यादिनामुपसंख्यानमिति द्वितीयासमासः । नृपाः स्पर्शितैः प्र
तिपादितैः । स्पर्शनं प्रतिपादनमित्यमरः । उपायनैरुपहारैरधिकं यथा तथाऽगमन्प्रा
प्ताः । तथैव प्रीतिसिद्धेस्सोपायनानां सिद्धिनियोगलाभात् चेति भावः । तेनोपायनाना
मर्थित्वात्साक्षात्कारणादेव राज्ञः प्रीतिरासीत् न कोशगृहार्पणादित्यर्थः । अतएव दानत्वं

थर्द्वयोः प्रकृतयोः प्रीतिःसंग्रहपरिहारेणदानएव नियमनात्परिसंख्यालङ्कारः । एकस्मि
नेकत्रप्राप्तावेकत्रनियमनंपरिसंख्येतिलक्षणात् । एतेनसर्वस्वदानंव्यज्यतइत्यलङ्कारे
णवस्तुध्वनिः॥ ४१ ॥ *************************** ॥

॥ यमिति ॥ लघूकृताअल्पीकृताआहिताःशत्रवोयेनसः । सराजा शिष्येणतुल्यंशिष्यभूतं
। भूतंक्ष्मादौपिशाचादौभाव्येसत्योपमानयोरितिविश्वः । सुप्सुपेतिसमासः । यंनृपंलघू
न्यपि ...यपसुरक्षणादिकर्मणिअशिषत् । शासइदङ्हलोरितीकारःअसौकर्म्मका
रोनृपः । अपरैस्तैरन्यैर्नृपतिभिःसस्पृहंतद्वोन्मानइतिसाभिलाषंगौरवेणदृशेतरां
। अतिशयेनदृष्टः । दृशेःकर्मणिलिट्तिङश्चेतितरपप्रत्ययेकिमेत्तिङव्ययघादाम्द्रव्य

यंलघून्यपिलघूकृताहितःशिष्यभूतमशिषत्सकर्मणि । सस्पृहंनृ
पतिभिर्नृपोऽपरैर्गौरवेणददृशेतरामसौ ॥ ४२ ॥ आद्यकोल
तुलितामप्रकम्पनैःकंपितामुहुरनीदृशात्मनि । वाचिरेपितवतामु
नामहीं राजकाय विषया विभेजिरे ॥ ४३ ॥ *·*·*·*·*

...सर्वविभक्तौरव्ययसंज्ञा । अत्रकर्मकरणस्यन्टपस्येनर
प्रकर्षइत्याम्प्रत्ययःतद्धितस्थासर्वविभक्तौरव्ययसंज्ञा । निरशयोक्तिःतथाराज्ञोनिरकुशाज्ञः यं
न्टपकर्तृकविशिष्टदर्शनकर्मकत्वासंबंधेपिसंबधोक्तेरतिशयोक्तिःतथाराज्ञोनिरकुशाज्ञ
व्यज्यतइत्यलङ्कारेणवस्तुध्वनिः ॥ ४२ ॥ ***************** ॥
॥ आद्येति ॥ आद्यकोलःआदिवराहः । सूकरोघृष्टिःकोलःपोत्रीकिरिःकिटिरित्यम
रः । तेनतुलितांकल्पादौउद्धृतां । तथापिकंपनैःप्रक्षोभकैर्हिरण्याक्षप्रमुखैःकंपितांक्षो
भितांमहीं । अनीदृगात्मनिअनेकरूपायांकेनाप्यकंपितायामस्तलितायांवाचिरेपि
नवनास्थापितवतांस्थिरधारणोपायेनस्थिरीकुर्वतेत्यर्थः । अमुनाराज्ञा । राजकायरा
ज्ञांसमूहाय । गोत्रोक्षेत्यादिवुप्रत्ययः । विषयाःदेशाःनीवृज्जनपदोदेशविषयोतूपवर्त्त

कमित्यमरः । विभेजिरे । अस्थायमितिविभक्ताःप्राक्विजयोद्धताराज्ञःपुनःपदेषुस्थाप
यामासेत्यर्थः । अत्रादिवराहोमहीमुद्धृतवानिवनिरातंकंस्थापितवांश्चेतिउपमानादुप
मेयस्याधिक्यकथनाद्व्यतिरेकालङ्कारः ॥ ४३ ॥ ****************** ॥
॥ आगतादिति ॥ सवसंपद्गुणाधिक्येनअविकारीमानसोलाभालाभाभ्यांअनुपप्लुत
चित्तइत्यर्थः । सत्वंगुणेपिशाचादौबलेद्रव्यविशेषयोरितिविश्वः । असौसराजातस्मिन्
आसमन्तात्जुह्वंतिअस्मिन्नित्याहवोयागः । ऋदोरविनिजुहोतेरपप्रत्ययः । गुणाबादे
शो । आहूयतेशत्रवोयस्मिन्नित्याहवोयुद्धं । आङ्युद्धेइतिह्वयतेराङ्पूर्वादप्प्रत्ययः
संप्रसारणं । आहवःयागयुद्धयोरितिविश्वः । समहाहवस्तस्मिन्महाहवेव्यवसितेननि

आगताद्व्यवसितेनचेतसासत्त्वसम्पदविकारिमानसः । तत्रनाभवद
सौमहाहवेशात्रवादिवपराङ्मुखोऽर्थिनः ॥ ४४ ॥ नैक्षतार्थिन
मवज्ञयामुहुर्याचितस्तुनचकालमाक्षिपत् । नाददातल्पमथनव्यक
त्थयद्दत्तमिष्टमपिनान्वशोचत ॥ ४५ ॥ *******

श्चितेननिश्चलेनधनलाभंनिश्चितवान । अन्यत्रशत्रोर्मृत्युर्वैतिनिश्चितवतेत्यर्थः । व्यव
पूर्वात्स्यतेः सकर्मकत्वाद्यविवक्षितेकर्मकर्त्तरिक्तः प्रसिद्धेरविवक्षातःकर्म्मणोकर्म्मि
काक्रियेतिवचनात् । चेतसाआगतात्चेतसास्वयंनिश्चित्यागतादित्यर्थःअर्थिनोयाच
कात् । शत्रुरेवशात्रवः । स्वार्थेऽणप्रत्ययोराक्षसवत् । पराङ्मुखोनाभवत् । आहवेष्व
निवर्त्तित्वंप्रजानांचैवपालनंशुश्रूषाब्राह्मणानांचराज्ञःश्रेयस्करंपरमितिस्मरणात् इति
भावःश्लेषसंकीर्णेयमुपमा ॥ ४४ ॥ ************************ ॥
॥ नैक्षतेति ॥ सराजाअर्थिनंयाचकंमुहुरवज्ञयाअनादरेणनैक्षत । नहिवितर्केणेत्याह
। याचितस्तुकालमाक्षिपत्नयाचकवञ्चत्वात्तर्ह्यल्पदानानेत्याह । अल्पमपिनाददात

दृष्टैौकिंतुयथार्थिकाममितिभावः । दृदानिर्लुङितङ्स्थानेरिचेतीकारः । ह्रस्वादंगा
दितिसलोपः । नर्हिंव्यकत्थयतकिन्नेत्याह । नव्यकत्थयत् आत्मश्लाघांनचकारः कत्थ
श्लाघायां । किंच । इष्टंप्रियमपिदत्तंवस्तुनान्वशेत् । दत्तानुतापस्यातिप्रत्यवायहेतु
त्वादितिभावः । अत्रार्थिसंदेहानयाच्वादिकारणनापेक्षबह्वाविलम्बादिकार्यानुत्पत्ते
र्विशेषोक्तिरलङ्कारः । तस्यास्तामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यतेइतिलक्षणात् ।
तयादातुःसात्विकत्वंव्यज्यतेइत्यलङ्कारेणवस्तुध्वनिः ॥ ४५ ॥ ******** ॥
॥ निर्गुणइति ॥ दानशौण्डमनसोदानगतचित्तस्यवकुप्रदस्येत्यर्थः । सुर्वदान्यस्तु
ललक्ष्यदानशौंडावकुप्रदे । मत्तेशौंडोत्कटाक्षीवाइत्यमरः । भूपतेःपुरोऽग्रेनिर्गुणस्त
पोविद्यादिगुणहीनोविविमुखोनिःफलंनाभवत् । किन्तुपूर्णकामएवाभूत्भूरिदानेसर्वे

निर्गुणोपिविमुखोनभूपतेर्दानशौण्डमनसःपुरेऽभवत् । वर्षतस्तु
किमपःक्वनोन्नतेरम्बुदस्यपरिहार्यमूषरम् ॥ ४६ ॥ ***

स्यापिपात्रत्वादितिभावः । अतएवनेनापात्रवर्षदेदोषोपिकिरणवृत्तेरित्याशयेनदृष्टां
नमाह । वर्षुकस्येति । अपोजलानि । नलोकेत्यादिनाषष्ठीप्रतिषेधः । वर्षुकस्यवर्षण
शीलस्य । लषपतेत्यादिनाउकञ्प्रत्ययेलघूपधगुणः । क्वनेन्नतेःक्वनोदयस्यांबुदस्य
अंबुदेनेत्यर्थः । कृत्यानांकर्तरिवेतिषष्ठी । स्यादूषरःक्षारमृत्तिकेत्यमरः । तद्वन्नक्षेत्रमू
षरं । ऊषरोद्वावपयन्यलिङ्गादित्यमरः । ऊषस्तुषमुषमधुभ्यरइतिरप्रत्ययः । परिहार्यं
त्याज्यंनेत्यर्थः । अत्रपर्जन्यभूपालयोवाक्यभेदेनबिम्बप्रतिबिम्बतयासमानधर्माभिधा
नात्दृष्टांतालङ्कारः ॥ ४६ ॥ ************************ ॥
॥ प्रेमेति ॥ तस्यराज्ञोगुणेषुअधिकंप्रेमनेतिनकिन्तुअस्त्येवेत्यर्थ राजागुणांतरंगुणविशे
षंनवेदनवेत्तिस्मेतिनचकिन्तुवेदेवेत्यर्थः । लटस्मेइतिभूतार्थेलट् । विदोलटोवेतिण

त्वादेशः संभाव्यनिषेधनिवर्त्तनार्थेऽप्रतिषेधौ इति वामनः संभावितस्यार्थविमर्शादेवगुणत्व
गीतिज्ञानं येन न निषेध इति भावः । तदपि तथा । पृथिव्या ईश्वरः पार्थिवः । सर्वभूमिपृ
थिवीभ्यामणञावित्यञ्प्रत्ययः । दित्सया दातुमिच्छया सर्वशामिदानाकौतुकेनेत्यर्थः ।
सनिमिमेत्यादिनाइसादेशः । अत्र लोपोऽभ्यासस्येत्यभ्यासलोपः । अर्थिनं याचकं गुणीगु
णवान् अगुण्योन गुणवानिति न व्यजीगणत् न गणयति । गुणप्रियोऽपि गुणज्ञोऽपि दानशौ
ण्डोऽपि अर्थितया गुणावगुणौ न गणयामासेत्यर्थः । गणेर्णौ चङीई च गण इत्यभ्यासस्य विक
ल्पादीकारः अत्र गुणप्रियत्वगुणज्ञत्वे रूपकारणसाम्येऽपि गुणागुणविमर्शरूपकार्यानुत्पत्तेः
। दित्सयेत्युक्तनिमित्ताविशेषोक्तिरिति लक्षणात् ॥ ४७ ॥ ************ ॥

प्रेम तस्य न गुणेषु नाधिकं तस्य वेद न गुणान्तरं खलः । दित्सया तदपि
पार्थिवोऽर्थिनं गुणगुणय इति न्यजीगणत् ॥ ४७ ॥ दर्शनानु
पदमेव कामतः स्वं वनीयकजनेऽधिगच्छति । प्रार्थनार्थरहितं तदा
भवद्दीयतामिति वचोऽतिसर्जने ॥ ४८ ॥ ******

॥ दर्शनेति ॥ वनीयकजनेऽर्थिजने । दर्शनानुपदं राजावलोकनानंतरमेव प्रार्थनाम
कृत्वेत्यर्थः । वनीयको याचनको मार्गणो याचकार्थिनौ अहंकारवानहंयुः स्याच्छुभंयुस्तु
शुभान्वित इत्यमरः । कामतो यथेच्छं स्वं धनमधिगच्छति लभमाने सति । ममदीयता
मिति वचो दीयतामित्येतत्पदं प्रार्थनावाच्यामह्यं दीयतामिति वाञ्छामेवार्थस्तेन शून्यं र
हितं व्यर्थं सत् तदा अतिसर्जने त्यागेऽभवत् । अनतर्जनेमह्यं दीयतामिति अर्थिदात्याभा
वाद् भूदीयतामिति दानुवाक्यादेवात्रार्थसभूदित्यर्थः । अर्थिनामागमनमेव याचनमि
ति विवेकिना किं याच्ञादैन्यदर्शनाचापलेनेति भावः अत्र दीयतामिति वचसः प्रार्थनार्थव
र्जनेनेनातिसर्जनार्थतां कथनादेषा स्यान्नप्रसक्तावेकत्र नियमनाख्या परिसंख्या ॥ ४८ ॥

॥ नानेति ॥ अर्थकाम्यता अर्थमात्मन इच्छता धनार्थिना । काम्यचेति काम्यच्प्रत्यये सनादि धातुत्वाल्लटि शत्रादेशः । तत्सदः उपेयुषा प्राप्तवता पुरुषेण अनवाप्तवस्तुना अलब्धधनेन न प्रत्ययगामिता न्यवर्त्ति । रोगिणा उपेयुषा अचिकित्सितगदेन अशमितरोगेण । रोगव्याधिगदामया इत्यमरः । न प्रत्ययगामि । आशितुंभोक्तुं इच्छता उपेयुषा अनाश्रुषा च अनाशितेन अभुक्तवतेत्यर्थः । उपेयिवाननाश्वाननूचानश्चेति क्वसुप्रत्ययान्तो निपातितः । न प्रत्ययगामि किंतु सर्वेणापि पूर्णकामेनैव प्रत्ययगामीत्यर्थः । गमेर्भावे ल्युट् अनार्थिरोगिबुभुक्षितानां प्रकृतानामेव पूर्णकामत्व साम्याद् भैम्याः प्रसह्यत्वात् केवलप्रकृत विषेयातुल्ययोगिता तथा च योयत्काम आगतः स तत्सर्वमेवमस्मादालभतेति व्यज्यते ॥ ४९ ॥ ********* ॥

नानवाप्तवसुनार्थकाम्यता नाचिकित्सितगदेन रोगिणा । इच्छताशितुमनाश्रुषा न च प्रत्ययगामि न तदुपेयुषा सदः ॥ ४९ ॥ स्वादयन्न समनेकसंस्कृतप्राक्तनैरकृतपाचसङ्करैः । भावशुद्धिविहितैर्मुदं जनो नाटकैरिव बभार भोजनैः ॥ ५० ॥ *********

॥ स्वादयन्निति ॥ अनेकानि बहूनि संस्कृतानि हिंगुमरीच्यादिना कृतसंस्काराणि प्राक्तनानि प्रकृतिसिद्धानि संस्काराणि स्वादूनि कृतानि फलादीनि च येषु तैः । अन्यत्रानेकविधानि प्रकृतिसिद्धानि संस्काराणि स्वादूनि कृतानि फलादीनि च येषु तैः । अन्यत्रानेकविचित्रसंस्कृतप्राकृतभाषाविशेषो येषु तैः अकृतपाचाणां भाजनानां संकरः अन्यत्र भूमिकाचसङ्करो व्यतिरेको येषु तैः । भावशुद्धि पदार्थानां मृष्टता अथवा भावमर्हा विरहः तत्स्वहितैः । अन्यत्र भावस्थापितो रत्यादयः तेषां शुद्धिः सजातीयविजातीयानिरस्कृतरूपकं सजातीयैर्विजातीयैरतिरस्कृतमूर्त्तिमान् यावद्रसं वर्त्तमानः स्थायिभाव उदाहृतः इति लक्षणान् । तत्सहितैर्भोजनैरभ्यवहारैर्नाटकेरूपविशेषैरसं मधुरादिकं चस्वादयन्ननुभवन् जनो भोक्तृजनः सामाजिकजनश्च मुदमानंदं बभार श्लेषसंकीर्णोपमा ॥ ५० ॥ **

॥ रक्षितारमिति ॥ इति एवंभूपतिर्युधिष्ठिरः । तत्रकर्मणि एतत्स्वयेदुष्टानां दमनेक्षमंसमर्थंहरिंरक्षितारं विघ्नेभ्यस्त्रातारंन्यस्यविधाय । अक्षतानिअविहतानिदानहोमयजनानिनिरवर्त्तयद्न्वविघटन्स्वकीयस्यद्रव्यस्यस्वत्वनिवृत्तिपरस्वत्वोत्पादनेदेवतोद्देश्येनाग्नौहविषःप्रक्षेपोहोमःकृतस्यदेवतोद्देश्येनवाङ्मनसाभ्यांत्यक्तिस्त्यागोयोगः। अत्रदुष्टदमनक्षमत्वस्यविशेषणगत्याहरेरध्याधिकारहेतुत्वात्सहेतुत्वात्पदार्थहेतु कंका व्यलिङ्गम् ॥ ५१ ॥ ************************ ॥

॥ एकइति ॥ सुन्वतांसोमानभिसवंकुर्वतांसोमयाजिनामित्यर्थः । सुनोतेर्लटःशत्रादेशः । सुसखासत्सहायः । नपूजनादितिसमासान्तप्रतिषेधः । एषशौरिरेकएवेत्य

> रक्षितारमितितत्रकर्मणिन्यस्यदुष्टदमनक्षमंहरिम् । अक्षतानि
> निरवर्त्तयत्तदादानहोमयजनानिभूपतिः ॥ ५१ ॥ एकएवसुस
> खैषसुन्वतांशौरिरित्यभिनयादिवोद्धकैः । यूपरूपकमनीनमद्भुज
> मूस्त्वषालतुलिताङ्गुलीयकम् ॥ ५२ ॥ ********

भिनयादिवएवमभिनयंव्यंजकचेष्टांकृत्वेत्युत्प्रेक्षा । व्यञ्जकाभिनयौसमावित्यमरः । भुर्वैवयजनभूमिस्थघालेनयज्ञभागेनचषालोयूपकंटकइत्यमरः । तेनतुलितंतुलीकृतंसमीकृतमंगुलीयकमित्यर्थः अंगुलिः स्वामूल्यंगुलःइतिभावेक्तप्रत्ययः उच्चैःकृतमनीनमद्यूपरूपकंपसुभुजांनदारुविशेषंअंगुलीयकमित्युत्प्रेक्षा । भूजंअनीनमत्उन्नमितवान । नमेर्णौचङिसन्वद्भावे अत्रसापेक्षत्वादुत्प्रेक्षायाश्चसङ्करः ॥ ५२ ॥ ***************** ॥

॥ इत्थमिति ॥ इत्थंक्रतौविततकर्मविस्तृतानुष्ठानेसतिअथानन्तरंधर्मात्जन्मयस्यतेनधर्मजन्मनाधर्मात्मजेन । जन्मउत्तरपदेबहुव्रीहिरित्यधिकरणेइतिवामनः धर्मंधर्मशास्त्रमनुस्मृत्येत्यर्थःअर्घदानंपूजादानमनुसदस्यपूजामुद्दिश्येत्यर्थःषड्भूत्रिकर्ध्यम

र्घार्थेपाद्यंपादायवारिणीत्यमरः। चोदितःकस्मैदेयमिदमितिपृष्टःशंतनोःसुतोभीष्मः। सभ्यंसभायांसाधु। सभायांयइतियप्रत्ययः। वचोवाक्यमभ्यधितअभिहितवान्। द
धातेर्लुङितङ्स्थाघ्वोरिच्चेतिकित्वेह्रस्वादङ्गादितिसकारलोपःवृत्यनुप्रासः ॥ ५३ ॥
॥ अथासर्गसमाप्तेःभीष्मवचःप्रपंचमेवसुफलंदर्शयतिआत्मनेति। तत्वान्मकथनात्प्रीत
स्तत्रभवानभीष्मोराजानंतावत्तत्साहार्थमेकेनोपश्लोकयति। वेत्तीतिविदोज्ञात्वा। इ
गुपधलक्षणकःप्रत्ययः। ओकसोवेदस्थानस्यविदःकोविदःगुणदोषयोःकोविदोविवेक्ता
। करणीयवस्तुषुकर्तव्यार्थेषुआत्मनैवस्वयमेवपरोपदेशापेक्षयैवेत्यर्थः। प्रकृत्यादित्वात्तृ
तीया। किन्नवेत्सिसर्वंजानासीत्यर्थःतथापिज्ञात्वागुरुन्नपृच्छसीतिनकिन्तुपृच्छस्येवेति

इत्थमत्र विततक्रमेक्रतौवीक्ष्यधर्ममथधर्मजन्मना। अर्घदानमनु
चोदितोवचःसभ्यमभ्यधितसन्तनोःसुतः ॥ ५३ ॥ आत्मनैवगु
णदोषकोविदः किन्नवेत्थकरणीयवस्तुषु। यत्तथापिनगुरुन्नपृच्छ
सित्वक्रमोयमितितच्चकारणम् ॥ ५४ ॥ *******

तत्रगुर्वनुयोगेअयंक्रमइतिएवासदाचार
वत्त्रानप्रसक्तंपृच्छामीतिकारणायतन्न्घथं अत्रकर्तव्यार्थःप्रश्नस्यज्ञानहेतुकान्तरहेतुष
परिपाटीत्येनदेवकारणंतत्वज्ञानमित्यर्थः।
त्वेनियोगमनानापूर्वांक्तलक्षणपरिसंख्यानं ॥ ५४ ॥ ************** ॥
॥ एवंराजानंउपश्लोकेणप्रश्नस्योत्तरमाहस्नातकमितिस्नातकोगृहस्थविशेषस्तंगुरुं पित्रा
दिकंअभीष्टमिष्टबन्धुमृत्विजंयाजकंसंयुज्यतइतिसंयुक् संबंधीजामातावातेनसहमेदि
नीपतिंराजानंचतं समेदिनीपतिं चेत्यर्थः। षट्षडेतान्अर्घभाजःपूजार्हान्इति। इति
शब्देनाभिहितत्वान्नकर्मणिद्वितीया। यथाहवामनःनिपातेनाप्यभिहितेकर्मणिनकर्म
णिविभक्तिःपरिगणनस्यप्रायकत्वादितिकीर्त्तयंतिकथयंति। षड्वेतिशेषः। नेचनेइह

इत्याहद्वयंचतेषडपिनेतेवसभांयुगपदागताः अत्रस्नातकादीनांप्रकृतागतानामेवार्घभाक्त्वसाधर्म्यादौपम्यावगमात्तुल्ययोगिताभेदः ॥ ५५ ॥ ************** ॥

॥ शोभयन्तीति ॥ किंचप्रतापयितुंशीलमेषांतेप्रतापिनस्तेनिशत्रुतापकाः । तार्किकयोगिनिः । अन्यत्रतेजस्विनः । सप्रतापःप्रभावश्चयत्तेजःकोशदण्डजमित्यमरः । अतइन्नताविनिइन्प्रत्ययः । मन्त्रशक्त्यावेदमहिम्नाअन्यत्रविचारसामर्थ्येनविनिवारिताःआपदोदैवमानुषविपत्तयोयैस्ते । वेदवादेगुप्तमन्त्रेमन्त्रइत्यमरः । परलोकस्यलोकान्तरस्यशत्रुजनस्यचजिष्णवोजयशीलाः । स्वयंभुवोब्रह्मणोमुखभुवोमुखजाताःब्राह्मणाः

स्नातकंगुरुमभीष्टमृत्विजंसद्युजाचसहमेदिनीपतिम् । अर्घभाजइतिकीर्तयन्तिषट्तेचतेयुगपदागताःसदः ॥ ५५ ॥ शोभयन्तिपरितःप्रतापिनोमन्त्रशक्तिविनिवारितापदः । त्वन्मखम्मुखभुवःस्वयम्भुवोभूभुजश्चपरलोकजिष्णवः ॥ ५६ ॥ आभजन्तिगुणिनःपृथक्पृथक्पार्थसत्कृतिमकृत्रिमामभी । एकएवगुणवत्तमोथवापूज्यइत्ययमपिप्यतेविधिः ॥ ५७ ॥ ********

। ब्राह्मणोस्यमुखमासीदितिश्रुतिः । भूभुजोराजनश्च । त्वन्मखंक्रतुंपरितःशोभयन्तिपरिस्फुरन्तिसर्वेयागत्यवत्तन्तोत्यर्थः अत्रब्राह्मणानांचप्रकृतानामेवप्रकृतत्वादिसाधर्म्येणोपगमात्तुल्ययोगितामेदात्साधर्म्यश्लेषनिबंधनमितिसङ्करः ॥ ५६ ॥ ******** ॥

॥ आभजंतीति ॥ हेपार्थपृथापुत्र । नस्येदमित्यणप्रत्ययःसामान्यस्ययोगविशेषपर्यवसाननियतार्थलाभः अन्यथास्त्रीभ्योढगितिढक्स्यात् गुणिनोगुणवानमीपूर्वश्लोकद्वयोक्ताःस्नातकादयः पृथक्पृथक्प्रत्येकमकृत्रिमामकपटांसत्कृतिंसंस्कारंआभजन्तिअर्हन्ति । सममेषांप्रत्येकंपूजाकार्येत्यर्थः । अथस्वाभिमतंपक्षान्तरमाहअथवेति । अथवागुण

धत्तमोत्तिगुणाधानेकएवपूज्यइत्ययमपिविधिः शास्त्रमनुष्ठानंवेद्यतेवृद्धैरितिशेषः । अ
त्रस्नानकादीनांपूज्यत्वेगुणविशेषणगत्याहेतुरितिकाव्यलिङ्गभेदः। तदपेक्षयागुणवत्त्व
मेकस्यैवपूज्यत्वेनथैवहेतुरितिकाव्यलिङ्गान्तरमितिसजातीयसङ्करः ॥ ५७॥ **
॥ अत्रयथाएकस्तथासर्वैंपुनअर्घदानयोग्यःकोन्योहरिंविनेत्याह ॥ अत्रेति । अत्रा
स्मिन्कालेपिभूमिदेवाब्राह्मणाः नरदेवाराजानस्तेषांसङ्गमेब्राह्मणक्षत्रियसमवायेइत्य
र्थः। अशेषगुणानांबंधुः। सुहृत्सर्वगुणाढ्यइत्यर्थः । असाधारणगुणान्नाह । पूर्वेति
पूर्वदेवासुरद्विषस्तेषांरिपुर्हतोपमः। हरिःकृष्णःअर्हणांपूजांअर्हतिप्राप्नोतीतिमाम्भि
ह्यभातिममप्रतिभातीत्यर्थः अन्येवानार्हंतीत्यपिसिद्धमितिभावः । अत्रत्यान्येषुचप्रस

अत्रैवैषसकलेपिभातिमाम्प्रत्यशेषगुणबन्धुरर्हंति। भूमिदेवनरदे
वसङ्गमेपूर्वदेवरिपुरर्हणांहरिः ॥ ५८ ॥ मर्त्यमात्रमवदीधरङ्ग
वान्मैनमानमितदैत्यदानवम् । अंशएषजनतानिवर्तिनोवेधसःप्र
तिजनङ्कृतस्थितेः ॥ ५९ ॥ **********

क्तायांपूजायांहरएवेवनियमात्परिसंख्यालङ्कारः । एकस्यवस्तुनःप्राप्तावनेकत्रयदाए
कोनियमःपरिसंख्यानिगद्यतइतिलक्षणात् ॥ ५८ ॥ ********** ॥
॥ ननुतस्मिन् ब्राह्मणक्षत्रियसमूहेकथमस्यैवपूज्यत्वमित्याशंक्यसर्वोत्तमत्वादास्यदन्त्वा
श्येनसर्गसमाप्तेरेनंस्तौति । मर्त्येत्यादि । आनमिताःप्रह्वीकृताः। दैत्याःदितिसु
ताःदानवाःदनुसुतायस्येनतमेनंहरिंभवान्मर्त्यमात्रंमनुष्यमात्रंमावदीधरत्नजानीया
न्। शेषेप्रथमइतिप्रथमपुरुषःकुतःएषःकृष्णोजनतानिवर्तिनः। सर्वलोकाह्लनस्यप्रति
जनंकृतस्थितेश्चैतस्यसर्वभूतांतर्यामिणइत्यर्थः । वेधसःपरमात्मनोंशःकथंअतोनमर्त्य
मात्रमित्यर्थःअतएववाक्यहेतुकङ्काव्यलिङ्गम् ॥ ५९ ॥ ********** ॥

॥ पुनरप्यमानुषत्वमेवव्यनक्ति ॥ ध्येयमिति । योगिनोनारदादयः । एकमद्वितीयंउत्तमंसर्वोत्तममेनंध्येयंध्यानव्यं । एकार्थगोचरात्मधारणंध्यानन्तदर्हमित्यर्थः । तथाधियोज्ञानस्यापथेऽमार्गेस्थितंतदगोचरमित्यर्थः । पथोविभाषेतिसमासान्तःअपथंनपुंसकमितिनपुंसकं । आमनंतिकथयन्ति । पाघ्रादिनाम्नाधातोर्मनादेशः । स्तुत्यंस्तोतुमर्हं । तथाहिअतीतोवाक्पथोयेनतंअवाङ्मनसगोचरमित्यर्थः । यतोवाचइत्यादिश्रुतेः । आमनन्तिआदराद्दाश्रयाउपास्यंसेव्यं । तथापि । अतीवात्यन्तं । निपातसमुदायोअन्यर्थेऽव्ययं । दूरवर्त्तिनंआमनन्ति यमेवंवितर्कूपमामनन्तितमेनंमर्त्यमात्रंमावधारयेदितिपूर्वेणान्वयः वाङ्मनसगोचरंचदूरवर्त्तिनाध्येयत्वस्तुत्यत्वोपास्यत्वैःसहविरोध

ध्येयमेकमपथेस्थितन्धियस्तुत्यमुत्तममतीतवाक्पथम् । आमनन्ति
यमुपास्यमादराद्दूरवर्त्तिनमतीवयोगिनः ॥ ६० पद्मभूरितिसृज
ञ्जगद्रजःसत्वमच्युतइतिस्थितिन्नयन् । संहरन्हरइतिश्रित
स्तमस्त्रैधमेषभजतित्रिभिर्गुणैः ॥ ६१ ॥ ❋❋❋❋❋❋

स्यहरेरित्थंमहिमत्वेनसमाधानाद्विरोधाभासोऽलङ्कारः ॥ ६० ॥ ********* ॥

॥ ननुहरिहरहिरण्यगर्भास्त्रयस्त्रयोदेवाःमहोचमहिमानः ॥ सत्येननजानीमःइत्यतआह । पद्मभूरिति । एषहरिःरजःरजोगुणाश्रितःजगत्सृजन्पद्मभूर्ब्रह्मेति । सत्वंसत्वगुणाश्रितःजगत्स्थितिन्नयन्स्थापयन्अच्युतोविष्णुरिति । ततस्तमोगुणाश्रितःजगत्संहरन्हरइति । त्रिभिर्गुणैःसत्वरजस्तमोभिस्त्रैधंत्रैविध्यंभजति । द्वित्र्योश्चधमुञ्विधार्थेधमुञ्प्रत्ययः । अस्यैवगुणभिन्नास्तास्तिस्रोपिमूर्त्तयः । इत्ययमेवसर्वोपास्यइतिभावः । अचसत्वादिगुणयोगस्यसृष्ट्यादिक्रियायोगेणभिन्नाःतिस्रोपिमूर्त्तयःइत्ययमेवसर्वोपमास्यइतिभावः ॥ ६१ ॥ *********************** ॥

॥ अत्रसत्वादिगुणयोगस्यसृष्ट्यादिक्रियायोगस्यविशेषणगत्यात्रैधंनिरूपयन्नाह । सर्वे
ति । अमुंकृष्णंसर्ववेदिनंनित्यंसर्वज्ञमित्यर्थः । अतएवानादिमादिरहितंअनादिनित्य
मित्यर्थः । तथापिदेहिनांप्राणिनांअनुजिघृक्षयाअनुग्रहीतुमिच्छयाभूरवनरणांनारखा
र्थमित्यर्थः । ग्रहःसन्नन्तात्स्त्रियामप्रत्ययात्प्रत्ययेटाप् । वपुराश्थितंमानुषविग्रहमा
स्थितंनरकघ्नशरीरभाजमित्यर्थः । अतएवक्लेशकर्मफलभोगवर्जितं । पञ्चक्लेशाःअविद्याः
द्वेषाभिवेशाख्याः । कर्माणिपुण्यपापानितेषांफलंसुखदुःखेनयोभोगोनुभवस्तेनक्लेशेनव
र्जितंतैरसंस्पृष्टमित्यर्थः । ईश्वरंसशदितंपुंविशेषक्षेत्रज्ञविलक्षणंपुरुषविशेषंपरमपु
रुषंविदुर्वदन्तिसन्तइतिशेषः । विदोलटोवेतिझेर्जुसादेशः अत्रनरकध्वंसत्वान्नित्यज्ञा

सर्ववेदिनमनादिमास्थितन्देहिनामनुजिघृक्षयावपुः । क्लेशकर्म
फलभोगवर्जितम्पुम्विशेषममुमीश्वरम्विदुः ॥ ६२ ॥ भक्तिमन्तइ
हभक्तवत्सलेसन्ततंस्मरणरीणकल्मषाः । यान्तिनिर्वहणमस्यसंसृ
तिक्लेशनाटकविडम्बनाविधेः ॥ ६३ ॥ ✲✲✲✲✲✲✲

नत्वादिविरोधसमर्थनाद्विरोधाभासोलङ्कारः । तेषामेवगुणानांविशेषणगत्यानुविशेष
हेतुत्वात्काव्यलिंगमितिसङ्करः ॥ ६२ ॥ ✲✲✲✲✲✲✲✲✲✲✲✲✲✲✲✲ ॥
॥ एवंहरेःस्वरूपंनिरूप्यतदुपासनाफलंयुग्मेनाह ॥ भक्तिमन्तइति । भक्तवत्सलेभ
क्तप्रियेइहास्मिन्हरौ । भक्तिमंतोऽनुरागवन्तोजनाः । पूज्येषुअनुरागोभक्तिरितिसन्त
तसततंतत्स्मरणेननिरन्तरध्यानेनरीणकल्मषाः । क्षीणपापाःसन्तः । रीक्षयेत्वादिभ्य
इतिष्ठानत्वं । अस्यसंसृत्युक्तस्यसंसृतिःसंसारस्तस्यक्लेशःसंसारदुःखंतदेवनाटक
मितिरूपकं । तस्यविडम्बनाभर्त्सनातस्याःयाविधिस्तस्यानिर्वहणंसमाप्तिंयान्तिमुच्यन्तेइ
त्यर्थः । तमेनंविद्यानाम्नतइहभवतीतिश्रुतिरितिभावः ॥ ६३ ॥ ✲✲✲✲✲✲✲✲✲ ॥

॥ ग्राम्येति ॥ ग्रामेभवाःग्राम्याःप्राकृताःमूढाइतियावत्। ग्रामाद्यखञौचेतियञ्प्रत्ययः। तेषांभावस्तंअपहातुंमोक्तुमिच्छवः मुमुक्षवोमोक्षार्थिनः अपुनःनिवृत्तयेऽपुनरावृत्तयेपुनरावृत्यभावायमोक्षायइत्यर्थः। दुःखेनगम्यतेइतिदुर्गं। दुःप्रापंएकमद्वितीयंवशिनंस्वतंत्रंयंहरिंयोगमार्गपतितेनध्यानमार्गविनष्टेन। योगःसन्नहनोपायध्यानसंगतियुक्तिष्वित्यमरः। चेतसाविशन्तिध्यायंतीत्यर्थःयंविशंतिइदभक्तिमन्तःइतिपूर्वेणान्वयः॥ ६४ ॥ ****************************** ॥

॥ अथभक्त्याइकाननमस्करोति ॥ आदितामिति। देहिनांप्राणिनांआदितांकारणतां। अन्ततांकरोतीतिअंततांनाशहेतुत्वं। नमस्करोतीतिशेषः। तस्माद्ग्रंथादन्ततनतःपश्चाद्यच। तामं

ग्राम्यभावमपहातुमिच्छवोयोगमार्गपतितेनचेतसा। दुर्गमेकमपुन
र्निवृत्तयेयम्बिशन्तिवशिनंमुमुक्षवः ॥ ६४ ॥ आदितामज
ननायदेहिनामन्ततांचदधतेऽनपायिने। बिभ्रतेभुवमधःसदाय
चब्रह्मणोऽप्युपरितिष्ठतेनमः ॥ ६५ ॥ ********

ततांचदधते। यतोवाइमानिभूतानिजायंतइतिश्रुतेः। यःस्वयमजननायजन्मरहिताय। अपायोऽस्यास्तीत्यपायीसनभवतीत्यनपायीतस्मैअनपायिनेनाशरहितायचकालेनोपरिच्छिन्नायेत्यर्थः। दिशतोदिनयेत्याहसदाऽधःपातालेभुवंबिभ्रतेकूर्मरूपेणेति। अथवानयैवब्रह्मणोलोकस्याप्युपरितिष्ठते। सर्वव्यापिनेइत्यर्थः। तस्मैहरयेइतिशेषः। नमःनमस्कारः। नमःस्वस्तीत्यादिनाचतुर्थी। हरेर्हरेनादिनिधनत्वेनलक्षणःपुरुषांतराधिक्यवर्णनाद्व्यतिरेकालङ्कारः ॥ ६५ ॥ ********** ॥

॥ केवलमिति। सृजतिसृसंहृतिसशास्तिसृसृजतिसंहृतिशास्तयः॥ सृजविसर्गे। हृञ्हरणेसंपूर्वोयं। शासुअनुशिष्टौइत्येतेत्रयइत्यर्थःइकश्तिपौधातुनिर्देशेइतिवच

नादेवतिप्रत्ययः। धातवोभूवादयोधातवइत्युक्तलक्षणाःशब्दविशेषाः। इहास्मिन्भगवति। नदन्तायभवतीत्यर्थः। जातुकदाचित्कर्मणिप्रत्ययान्कर्मार्थविहितान्योगादीन्नदधतिनतदंताभवन्तीत्यर्थः। सर्वकर्तृत्वान्नियन्तृत्वाच्चसृजतिस्रष्टासंहरतिहर्ताशास्तीतिशास्तेत्यादिभिःकर्तृत्वेननिर्दिश्यतेनकदाचित्सृज्यतेसृष्टेयातशिष्यते। इत्यादिभिःकर्मत्वेनअनादिनिधनत्वादिनियम्यत्वाच्चेतिभावः। किंचअत्रभगवतिस्तौति। ष्टुञ्स्तुताविति धातुः। विपरीतंकारकंयस्यसःविपरीतकारकःस्तूयतेस्तुत्यइत्यादिकर्मप्रत्ययान्तरंनतुकदाचित्स्तौतिस्तोताइत्यादिकर्तृप्रत्ययान्तः। सकलैकस्तुत्यस्यतस्यस्तुत्यांतराभावादिनाअत्रशब्दानां कर्मकर्तृप्रत्ययविधिनिषेधद्वाराविभक्त्यंतरेणसक

केवलन्दधतिकर्तृवाचिनःप्रत्ययानिहनजातुकर्मणि। धातवःसृजतिसंहृतिशास्तयःस्तौतिरत्रविपरीतकारकः ॥ ६६ ॥ पूर्वमेषकिलसृष्टवानपस्तासुवीर्यमनिवार्यमादधौ। तच्चकारणमभूद्धिरण्मयम्ब्रह्मणोसृजदसाविदञ्जगत् ॥ ६७ ॥ *********

र्तृकसर्वोपास्यत्वादिलक्ष्यार्थबोधपरत्वात्सौक्ष्म्याख्यागुणःअन्तःसकलरूपत्वंशब्दानांसौक्ष्म्यमुच्यतइतिलक्षणात्। अत्रभगवतःस्रष्ट्यादिकर्तृकर्मत्वोभयप्राप्तावेकैकनियमात्परिसंख्या। नतजातुकर्मणीतिशब्ददेवकर्मत्वनिषेधादिनिवृत्तिः। शब्दास्तुनोकर्तृत्वनिवृत्तिराधीनिभेदद्वयसंसर्गः। अनयातत्भगवतःपुरुषान्तराधिक्यप्रतीतेर्व्यतिरेकस्यप्रतीयतइत्यलङ्कारध्वनिः ॥ ६६ ॥ ************************* ॥

॥ पूर्वमिति ॥ एषहरिःपूर्वंप्रथममपःसृष्टवान्। किलेतिवार्त्तायांतासुअनिवार्यंवीर्यंरेतः। शुक्रंतेजोरेतसीचवीजवीर्येन्द्रियाणिचेत्यमरः। आदधावादितवान्। तद्वातुहिरण्यस्यसुवर्णस्यविकारःहिरण्मयं। दाण्डिनायनहास्तिनायनेतिनिपातःब्रह्मणस्च

नुर्मुखस्यकारणमभूत्। ब्रह्माजातमित्यर्थः असौब्रह्माब्रह्माण्डमिदञ्जगदखिलन्सर्वस्यापि
प्रपंचस्यापएवमूलकारणमितिभावः अत्रमनुः अपएवससर्जादौतासुवीर्यमवाक्षिपत्।
तदण्डमभवद्धैमंसहस्रांशुसमप्रभं। तस्मिन्यज्ञेस्वयंब्रह्मासर्वलोकपितामहइतिअत्र
वीर्यमुनिवीर्यमितिवृत्यनुप्रासः ॥ ६७ ॥ ********************** ॥

॥ अथैनंत्रिभिर्विशिनष्टि ॥ मत्कुणाविवेत्यादिना। पुरापूर्वं परिप्लवौचंचलौमुद्धरित
त्वातस्खलनादित्यर्थः। चञ्चलञ्चपलंतूर्णंपरिप्लवपरिप्लवेइत्यमरः। मधुकैटभावसुरविशेषौ
मत्कुणौखट्वासृक्पायिनौमलोद्भवौकीटविशेषौतावीवोपमा। सिंधुनाथःसरित्पतिःस
एवशयनंतत्रनिषेदुषोनिषिण्णस्यसमुद्रशायिनइत्यर्थः। भाषायांसदवसश्रुवइ नवि

मत्कुणाविवपुरापरिप्लवौसिन्धुनाथशयनेनिषेदुषः। गच्छतःस्ममधु
कैटभौविभोर्यस्यनैद्रसुखविघ्नतांक्षणम् ॥ ६८ ॥ ज्ञानमार्गसुख
गानकोविदब्रह्मषट्चरणगर्भमुज्ज्वलम्। श्रीमुखेन्दुसविधेपिशोभते
यस्यनाभिसरसीसरोरुहम् ॥ ६९ ॥ ********

टःक्वसुरादेशः। विभोःप्रभोःयस्यहरेःक्षणंनिद्रायास्संबंधिनःआगतंवानैद्रंयत्सुखंत
स्यविघ्नतांविघ्नानुष्ठानीगच्छतःस्मागतौतादृशौवापिमहासुरौमत्कुणःक्षणमात्रेणप्रनष्टा
वितिसुगमः प्रभावातिशयोक्तिःएषात्रयशांपूर्वेणान्वयः ॥ ६८ ॥ ********** ॥

॥ ज्ञानेति ॥ ज्ञानमार्गस्यसुखकरं यद्गानंतस्यकोविदोऽभिज्ञःकोविदोव्याख्यातास्या
सौब्रह्माचसएवषट्चरणोभृङ्गःसःगर्भेयस्यतत्उज्ज्वलंनिर्मलं। यस्यहरेर्नाभिरेवसर
सीसरःकासारः। कासारःसरसीसरइत्यमरः। तस्यांसरोरुहंपद्मंश्रियोमुखमिवेन्दुस्त
स्यसंनिधौसमीपेपिशोभतइतिविरोधः। सचमुखस्येंदुत्वरूपणायत्तइत्यनयोरंगाङ्गिभा
वेनसङ्करः ॥ ६९ ॥ ************************ ॥

॥ सत्येति ॥ यंहरिंसत्यवृत्तंअकपटचरितंअपिमायिनंमायाविनंकपटवन्तमितिविरोधः मायानामशक्तिःतद्वन्तंयमित्यविरोधः । व्रीह्यादित्वादिनिप्रत्ययः । जगद्वृद्धंसर्वलोक पितामहत्वात् स्थविरमपि । प्रवयाःस्थविरोवृद्धइत्यमरः । उचितम्परिचितंयोगनिद्रंअ र्भकंडिंभ । वटस्यपत्रस्यपुटेशयानंबालंमुकुन्दंमनसास्मरामीत्यागमवचनादितिभावः पोतःपाकोर्भकोडिम्भइत्यमरः । नजायतइत्यजोजन्मरहितःअन्येभ्योपिदृश्यतेइतिजने र्डप्रत्ययः । तमपिजन्म,विभ्रतंकामवशात्कृष्णादिजन्मभाजमित्यर्थः । नवंतर्वमितिरम णीयत्वादिभिर्नवंतथापिपुराणंप्राचिनमनादिंचपुरुषंप्रचक्षतेवुधाः । इतिवाक्यंसंबं ध्यतेभविरोधःसर्वसर्वतद्धरेरचिन्त्यमहिमत्वेवात्तइत्यविरोधाभासचतुष्टयसंसृष्टिः ॥ ७० ॥

सत्यवृत्तमपिमायिनञ्जगद्वृद्धमप्युचितनिद्रमर्भकम् । जन्मविभ्रत
मजन्नवम्बुधायम्पुराणपुरुषम्प्रचक्षते ॥ ७० ॥ स्कन्धधूनन
विसारिकेशरक्षिप्तसागरमहाप्लवामयम् । उद्धृतामिवमूहूर्त्तमैक्ष
नस्थूलनासिकवपुर्वसुन्धराम् ॥ ७१ ॥ *******

॥ अथषोडशभिरवतारान्विगणयिष्यन्वराहावतारंतावदेकेनाह । स्कंधेति । स्थूलना सिकवपुर्वराहमूर्त्तिरयंहरिःस्कंधस्यकंधरायाःधूननेनकंपनेनविसारिभिःप्रसर्पिभिःकेश रैःसटाभिःक्षिप्तोऽवकीर्णःसागरस्यमहाप्लवोमहापुरःयस्यास्तांजलांअपसारेणप्रकाशि तामित्यर्थःवसुन्धरांभुवंमुहुर्त्तंक्षणमात्रं । मुहुर्त्तमल्पकालेपीतिशब्दार्णवे । उद्धृतांअ नावृतत्वात्सागरादुत्क्षिप्तामिवऐक्षतप्रेक्षितवान् । इत्युत्प्रेक्षा । ईक्ष्यतेर्लङ्याडजादीना माटस्येतिवृद्धिः ॥ ७१ ॥ ************************* ॥

॥ ताभ्यांनृसिंहावतारमाह ॥ दिव्येति । दिव्यकेशरिवपुर्दिव्यसिंहमूर्त्तिर्हरिरायुधैर्व ज्रादिभिरपितैर्वज्राशममप्राप्तशान्तिंदुर्निवारकंदुर्जयंरणकण्डुयस्यतत्तरणव्यसनोत्क

गै। द्वियोरुपसर्ज्जनस्येतिखङ्गः। सुरद्विषो हिरण्यकशिपोर्वक्षःकोमलैर्नखैः निरदारय न्नभिनत्। वज्रतुल्यकोमलनखविदार्यत्वंभाववत्वप्रभावात् विरोधाभासोलङ्कारः॥ ७२ ॥

॥ वारिधेरिति ॥ करग्राणिवीचीवेत्युपमितसमासः। वारिधेरिवेतिलिंगात्। ताभिःष सग्रवीचिभिर्दिगन्तविततताभिरितिभावः। अतएवदिङ्मतङ्गजानांमुखान्यभिघ्नतोरोधा तिरेकात्प्रहतोयस्यसिंहमूर्त्तेर्हरेर्वारिधेरिवचारुनखाःशुक्तयइवचारुनखशुक्तयः। पू र्ववदुपमितसमासः। स्फुरन्मौक्तिकप्रकरोदिग्गजकुम्भसंभूतमुक्ताव्रातोगर्भेतोगतोयासां तासांभावस्तत्तनांदधुरएवनिरधारयदितिपूर्वेणान्वयः। एतेननरहरिक्रोधस्यमहाद्भु

दिव्यकेसरिवपुःसुरद्विषोनैवलब्धशममसायुधैरपि। दुर्निवाररणक
ण्डुकोमलैर्वक्षएषनिरदारयन्नखैः॥ ७२ ॥ वारिधेरिवकराग्रवी
चिभिर्दिङ्मतङ्गजमुखान्यभिघ्नतः। यस्यचारुनखशुक्तयःस्फुरन्मौ
क्तिकप्रकरगर्भतान्दधुः॥ ७३ ॥ दीप्तिनिर्जितविरोचनादय
ङ्गाम्बिरोचनसुताद्भीप्सितः। आत्मभूरवरजाखिलप्रजःस्वर्प्पतेरव
रजत्वमाययौ॥ ७४ ॥ ✻✻✻✻✻✻✻✻✻✻✻✻✻

रोपितपालितमितिव्यञ्यतइतिवस्तुनावस्तुध्वनिः॥ ७३ ॥ ✻✻✻✻✻✻✻✻✻✻✻ ॥

॥ अथचतुर्भिर्वामनावतारमाह॥ दिप्तीत्यादि। आत्मनोभवतीतिआत्मभूःस्वयंभूर पि। अवरजाश्चरमजाअखिलाःप्रजाजनायस्यसोपिसर्वज्येष्ठोपीत्यर्थः। अयंहरिःदीप्ति निर्जितविरोचनात्ज्योतिविजितमार्त्तण्डात्। विरोचनःप्रह्लादपुत्रः। विरोचनोऽर्कदह नेचंद्रेप्रह्लादनंदनेइत्युभयत्रापिविश्वः। तस्यसुताद्बलेर्गाम्भुवंअभीप्सितःप्राप्तुमिच्छ तोप्राप्ताहर्त्तुमिच्छतः। आप्नोतेर्सनटःश्चादेशः। स्वर्पतेरवरजत्वमनुजत्वंययौ। बलि ध्वंसनार्थमितिशेषः। लोकानुग्रहार्थीकिन्नकुर्वतीतिभावः। अत्रावरजत्वसामानाधि

करणं विरोधो भगवतः अभासात् आभासत्वं न इति विरोधाभासोऽलङ्कारः ॥ ७४ ॥ ** ॥

॥ किमिति ॥ एष वामनः खर्वः । खर्वो ह्रस्वो वामनः इत्यमरः । किं क्रमिष्यति । इत्थं अ नेन प्रकारेण दानवा दैत्याः अहसन् । तावत् कृतः प्रागेव लंघितेऽतिक्रान्तोऽर्कशशिमण्डले येन सोऽस्य हरेः क्रमः पादविक्षेपो नभस्थले न ममौ न परिमाणं गतवान् इत्यर्थः । अत्राश्रय नभस्थलाधेयस्य विस्तीर्णाधिक्यकथनादधिकालङ्कारभेदः । आश्रयाश्रयिणोरनुरू प्याधिक्यमिति लक्षणात् ॥ ७५ ॥ ************************ ॥

॥ गच्छतेति ॥ गगनाग्रं गगनोपरिभागं गच्छतापि विरोधः । भूधर इव गरीयसेत्युपमा ।

किं क्रमिष्यति किलैष वामनो यावदित्यमहसन्न दानवाः । तावदस्य
न ममौ नभःस्थले लङ्घिताऽर्कशशिमण्डलः क्रमः ॥ ७५ ॥ गच्छ
ताऽपि गगनाग्रमुच्चकैर्यस्य भूधरगरीयसाङ्घ्रिणा । क्रान्तकन्धर इवाच
लो बलिः स्वर्गभर्तुरगमत्सुबन्धुताम् ॥ ७६ ॥ क्रामतोऽस्य ददृशुर्दि
वौकसो दूरमूरुमलिनीलमायतम् । व्योम्नि दिव्यसरिदम्बुपङ्क्ति
॥ ७७ ॥ *******
स्पर्द्धयेव यमुनौघमुत्थितम्

॥ यस्य वामनस्योच्चकैरुन्नतेनाङ्घ्रिणा क्रान्तकंधरोऽवष्टब्धकंठ इवाचलो बलिर्बैरोचनिः स्वर्ग भर्तुरिन्द्रस्य सुखेन बध्यत इति सुबंधुः । ईषदित्यादिना खल्प्रत्ययः । तत्तामगमत् । गु रुणा क्रान्तकंधरो हि सुखेन बध्यत इति भावः । न लोकेत्यादिना तद्योगलक्षणाया एव षष्ठ्या बहुव्यधिकरणो हि सुखेन बध्यत इति भावः । अत्र क्रान्तकंधर इवेत्युत्प्रेक्षया भूधरगरीयसेत्युपमा प्रकाशितेऽन्स्वर्गभर्तुरिति षष्ठी । विरोधे चानपेक्षिता संसृष्टिः ॥ ७६ ॥ ********** ॥ सापेक्षत्वात्संकरः ।

॥ क्रामत इति । क्रामतः पादं विक्षिपतोऽस्य संबंधिनं दूरमायतं अलिनीलं भृङ्गश्यामं ऊ रुं सर्वे दिवौकसो देवा व्योम्नि दिव्यसरितो मंदाकिन्या अम्बुपङ्क्त्या जलप्रवाहेण सह स्पर्द्धया च

त्थितमूर्द्धतः प्रवृद्धं यमुनाप्रवाहमिव ददृशुरित्युत्प्रेक्षेयमुपमासंकीर्णा ॥ ७७ ॥ * ॥

॥ अवतारान्तरमाह ॥ यस्येति । कायनिग्रहेणामृतविभागकाले गृहीतः विग्रहो येन सः । कृती कुशलो राहुर्यस्य हरेः किंचिदपकर्तुं छेदनमक्षमः सन् कान्तं रम्यं यद्वक्त्रं हरिमुखं तेन सदृशी आकृतिर्यस्य तं सुहृदमित्यर्थः । इन्दुं अधुनापि बाधते पीडयति । उपरागमिषेणेति भावः । अत्र साक्षात्प्रतिपक्षहरिनिग्रहाशक्त्या तदीयेन्दुनिग्रहोक्त्या प्रत्यनीकालङ्कारः । तथा च सूत्रं प्रतिपक्षप्रतिकाराशक्तौ तदीयतिरस्कारः प्रत्यनीकमिति ॥ ७८ ॥ * ॥

॥ संप्रदाय इति ॥ अविनाशी विग्रहो अनपायस्वरूप एवाप्रतिहता स्मृतिः स्मरणं नित्यं यस्य स एष हरिः सम्प्रदाय उपदेशपरम्परा तस्या विगमादपायान्नाशं कालदोषादध्ययनवि

यस्य किञ्चिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः । कान्तव
क्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनापि बाधते ॥ ७८ ॥ सम्प्र
दायविगमादुपेयुषीरेष नाशमविनाशिविग्रहः । स्मर्तुमप्रतिहत
स्मृतिः श्रुतीर्दत्त इत्यभवदत्रिगोत्रजः ॥ ७९ ॥ * * * *

च्छेदमुपेयुषीः प्राप्ताः । उगितश्चेति ङीप् । श्रुतीर्वेदान् । श्रुतिः स्त्री वेद आम्नाय इत्यमरः । स्मर्तुं श्रुतिसंप्रदायं प्रवर्तयितुमित्यर्थः । दत्त इति ख्यात इति शेषः । अत्रिगोत्रे जातोऽत्रिगोत्रजोऽभवत् । दत्तात्रेयोऽभूदित्यर्थः । अत्रानपायित्वस्मृत्यप्रतिघातयोर्विशेषणगत्याश्रुतित्वात्काव्यलिङ्गम् ॥ ७९ ॥ ************************ ॥

॥ परशुरामावतारमाह ॥ रेणुकेति । अयं हरिः रेणुकातनयतां परशुरामत्वमुपागतः सन् । अर्जुनः कार्तवीर्यार्जुनः । अर्जुनः ककुभे पार्थे कार्तवीर्ये मयूरयोरित्यनेकार्थेऽपि । रेणुकेयविरोधान्निश्चयः । तदुक्तं हरियोगिना संयोगो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः । सामर्थ्यमौचदेशश्च कालो व्यक्तिः स्वरादयः । शब्द

स्थानवच्छेदे विशेषस्मृतिरिति तद्धर्मि । सएव वनं तत् सादितानिच्छिन्नाःप्रचुरपत्रसंहतिर्येनसमूहःपर्णसंघातस्तथयस्मात्तत् । पत्रंस्याद्दाहनेपर्णमित्यमरः । लूनाश्छिन्नाभूरयःप्रचुरभुजाएवशाखायस्मात्तत् । उज्झितात्यक्तायाकांतिरचनातपस्तथयस्मात्तत्तथाव्यधात्विहितवान् । दधातेर्लुङ्गितिस्थेत्यादिनासिचोलुक् । छायास्यूर्य्यप्रियाकान्तिःप्रतिबिम्बमनातपरित्यमरः । तत्रसमस्तवस्तुविषयसावधानमयंरूपकंव्यक्तं । तच्छायेतिपदेतिचश्लेषप्रतिभोत्थापितामेदातिशयोक्त्यानुप्राणितमितिसङ्करः ॥ ८० ॥ *** ॥

॥ रामावतारमाह ॥ एषइति । किंचचार्थः । रक्षितप्रजः । एषदशरथस्यापत्यंपुमान्दाशरथीरामः । अतइञ् । तस्यभावःदाशरथिभूयंरामत्वं । भुवोभावेइतिक्यप्

रेणुकातनयतामुपागतःसादितप्रचुरपत्त्रसंहतिः । लूनभूरिभुजशाखमुज्झितच्छायमर्जुनवनव्यधादयम् ॥ ८० ॥ एषदाशरथिभूयमेत्यचध्वंसितोद्धतदशाननामपि । रक्षसीमवततरक्षितप्रजस्तेजसाधिकविभीषणांपुरीम् ॥ ८१ ॥ *********

। एत्यप्राप्य । ध्वंसितोहतउद्धतोदृप्तोदशाननोरावणोयस्यास्तामपि । रक्षसीरक्षःसंबंधिनीपुरींलङ्कांतेजसास्ववीर्येणअधिकविभीषणांअक्षतेतिविरोधः । भयहेतोरुद्धतस्यरावणस्यध्वंसनात् । अधिकोमहान्विभीषणोरावणानुजोयस्यांतामविरोधः । अतएवविरोधाभासोलङ्कारः ॥ ८१ ॥ ********************** ॥

॥ अथपञ्चभिःप्रस्तुतार्चनकृष्णावतारमाह । निःप्रहंतुमिति । अथरामावतारानन्तरंअयंहरिः । अमरेशविद्विषांनिःप्रहंतुंचैद्यादीनिन्द्रशत्रून्हंतुमित्यर्थः । जासिनिप्रहणनाटक्राथपिषांहिंसायामितिकर्मणिषष्ठी । स्वयंभुवाब्रह्मणास्वयमात्मनैवार्थितःसन्संप्रतीदानींवसुदेवरूपिणोवसुदेवमूर्त्तिधरःकश्यपस्यपुत्रवतांव्रजति । तस्यरूपे

णेतिभावः । अत्रस्वयंभूप्रार्थनयोर्विशेषणगत्यावसुदेवपुत्रत्वनंप्राप्तिहेतुत्वात्पदार्थहेतकङ्काव्यलिङ्गम् ॥ ८२ ॥ ************************** ॥

॥ नानेति ॥ सुरौघवल्लभः सुरगणप्रियः जगत्पतिर्योहरिः सुरैर्देवैर्बल्लवैर्गोपैः सहैनो त्पादनकहेनित्यहे । उदधिविलोडनंसमुद्रमथनंप्रतिनोइतिनिषेधेदधिविलोडनं उदधिमंथनंचप्रतित्वद्विनात्वांविहायेत्यर्थः । पृथक्त्विनेत्यादिनाविकल्पात्पंचमी । अथवयंनोत्सहामहेनक्षमामहेइतिजगदेगदितं । अथात्रहरिः सवर्णनांगत्वेनसुराणांबल्लवानांचप्रकृतानामेवनोदधिशब्दमूलभेदाध्यवसायत्वादधि उदधिविलोडनाक्षमत्व

> निःप्रहन्तुममरेशविद्विषामर्थितः स्वयमथस्वयम्भुवा । सम्प्रतिश्र यतिसूनुतामयङ्कश्यपस्यवसुदेवरूपिणः ॥ ८२ ॥ नानतो दधिविलोडनम्प्रतित्वद्विनाथवयमुत्सहामहे । यः सुरैरितिसुरौ घवल्लभोवल्लवैश्चजगदेजगत्पतिः ॥ ८३ ॥ नात्तगन्धमवधू यशत्रुभिः छाययाचविजितामरश्रमम् । योभिमानमिववृत्रविद्विषः पारिजातमुदमूलयद्दिवः ॥ ८४ ॥ ✻✻✻✻✻✻✻✻

त्सामान्याद्यन्योपम्यचारुत्पजोगितभेदःनेनचहरेर्दधिमन्थनकलानामुदधिमंथनमपि इतिवस्तुनाव्यज्यतइत्यलङ्कारेणवस्तुध्वनिः ॥ ८३ ॥ ************ ॥

॥ नात्तगंधमिति ॥ किंचिच्चार्थः योहरिः शत्रुभिरवधूयाभिभूयनात्तगंधमनाघ्रातः तैर भंअनभिभूतञ्च । आत्तगंधोभिभूतः स्यादित्यमरः । नञर्थस्यनशब्दस्यसुप्सुपेतिसमासः । छायया अनातपेन । छायास्यादातपाभावेप्रतिबिंबार्कयोषितोः । पालनोत्कर्षयोःकांतिःसच्छोभापंक्तिषुस्त्रियामितिविश्वः । शमितामरश्रमंनिवारितसुरखेदं । पारिजातं वृत्रद्विषः शक्रस्याभिमानमहंकारमिवदिवः स्वर्गादुदमूलयत्उन्मूलितवानिति । पारि

ज्ञानहारिरयोक्तिः। श्लेषस्तविशेषणमुपमेतिकेचित्। श्लेषवद्वान्ये॥ ८४ ॥ ****
॥ यमिति॥ किंचेतिचार्थः। ललाटमेवरेखातयाललाटरेखया। ललाटलेशेनसंभो
विभ्रमंसौन्दर्यंबिभ्रतः। ललाटलोचनइत्यर्थः। चैदिपस्यशिशुपालस्यलोचनं।
तृतीयवेशंकरं वयंहरिंचंडमारुतंचंडमारुतमिवत्तमेत्यप्रदीपवत्। प्रदीपेनतुल्यमिति
वतिप्रत्ययः निरवात्समनष्टमित्यर्थः। निरपूर्वाद्वाधानोलुङ्। निरकायतिक्वाचित्कपा
ठःयद्वाप्रक्रियाविरोधाद्वाप्रेररोरयंगतार्थत्वादिति। अनेकार्थैचेयमुपमा॥ ८५॥
॥ यइति॥ योहरिःकोलतांवराहत्वं। वराहःसूकरोघृष्टिःकोलःपोत्रिःकिरिःकिटिरि
त्यमरः। बल्लवतांगोपालत्वंवदिभ्रत्। आमुदंष्ट्राभुजांचयथासंख्यमितिभावः। उ

दंरमेत्यचललाटलेखयाबिभ्रतःसपदिशम्भुविभ्रमम्। चण्डमारुत
मिवप्रदीपवच्चेदिपस्यनिरवाहिलोचनम्॥ ८५॥ यःकोलता
म्बल्लवतांचबिभ्रद्दंष्ट्रामुदस्यामुभुजाञ्चगुर्वीम्। मग्नस्यतोयाप
दिदुस्तरायाङ्गोमण्डलस्योद्धरणञ्चकार॥ ८६॥ *****

दस्तोयम्यदुस्तरायांतोयापदिजलसंकुलेएकत्रसमन्ततायां वर्द्धनतायामितिच मग्नस्यगो
मण्डलस्यभूगोलस्यधेनुवृन्दस्यचोद्धरणंचकार। अत्रकोलत्वबल्लवत्वयोःप्रकृतयोरेवश्ले
षमूलाभेदाध्यवसायेनगोमण्डलोद्धरणस्यविम्बभावेनदंष्ट्राभुजोद्यमनस्यैवसाम्यान्ख्ये
षश्लेषमूलाभेदाध्यवसायेनगोमण्डलोद्धरणस्य विम्बभावेनदंष्ट्राभुजोद्यमनस्यचसाम्या
दौपम्यगम्यतायांतुल्ययोगितासतीयथासंख्येनसंकीर्यते। इन्द्रवज्रवृत्तंस्यादिन्द्रवज्रोय
दितौजगौगः॥ ८६॥ ****************************** ॥
॥ एतदेवंस्तुत्वानन्तरंकर्त्तव्यमुपदिशति॥ धन्योसीति। धनंलब्धाधन्यःपुन्यवानसि
। सुभगनिपुण्यवान्धन्यइत्यमरः। धनगणंलब्धाइतियत्प्रत्ययः। यस्यतेएषःहरिःसम

क्षुरएवअक्ष्णाःसमीपेएवपुरतएवेत्यर्थः। स्थितइतिशेषः। समीपेऽव्ययीभावःअव्ययीभ
वेशरत्प्रभृतिभ्यइतिसमासान्ताः। अतएवतृतीयासप्तम्योर्बहुलमितिसप्तम्याअमभावः।
अन्यत्रकोविशेषः। तत्राह योहरिर्दूरादपिपरोक्षेपिक्रतुप्रयोगेषु। यज्ञैर्निर्विधिवदिष्टव
द्भिः। यज्ञातुविधिनेष्टवानित्यमरः। सुयजोर्ङ्वनिविनिङ्वनिप्प्रत्ययः। इज्यतेपू
ज्यतेइतिधन्यः। धन्यमत्यर्थःफलितमाह। अत्रभवतेपूज्यायेत्यर्थःपूज्यस्तत्रभ
वानितिसज्जनः। इतरेभ्योपिदृश्यतेइतिसार्वविभक्तिकस्तल्प्रत्ययेनितमान्यः अर्घं
पूजांदत्वाऽत्रयावत्संसारमण्डलंवर्त्तते। तावदितिशेषः। भुवनेषुसाधुवादःशब्दःतंसाधु
वादंअवाप्नुहि। समाख्यालभस्वेत्यर्थः। अत्रराज्ञोधन्यतयायस्येत्यादिवाक्यार्थहेतुकङ्का

धन्योसियस्यहरिरेषसमक्ष एवदूरादपिक्रतुषुयज्वभिरिज्यतेयः
। दत्वार्घमत्रभवतेभुवनेषुयावत्संसारमण्डलमवाप्नुहिसाधुवादम्
॥ ८७॥ भीष्मोक्तमित्यदितिवचोनिशम्यसम्यक्साम्राज्यश्रियमथवि
भ्रतान्नृपेण। दत्तेऽर्घमहतिमहीभृतांपुरोपित्रैलोक्येमधुभिदभूद
नर्घएव ॥ ८८ ॥ ✻✻✻✻✻✻✻✻✻✻✻✻✻✻✻✻

व्यलिङ्गमलङ्कारः। वसंततिलकावृत्तं ॥ ८७ ॥ ✻✻✻✻✻✻✻✻✻✻✻✻✻✻ ॥
॥ भीष्मेति ॥ येनेष्टंराजसूयेनमण्डलस्येश्वरस्यच। शास्तियश्चाज्ञयाराज्ञःसम्राडभि
धीयतेइत्यमरः। सम्राजोभावःसाम्राज्यंतदेवश्रीस्तांश्रियंविभ्रताभुजता। नृपेणयुधि
ष्ठिरेण। इतिभीष्मोक्तंतद्वचःसम्यक्निसम्यश्रुत्वा। महीभृतांराज्ञांपुरोग्रेमहतिअर्घेपू
जायांदत्तेपि। मधुभिद्धरिःत्रयोलोकास्त्रैलोक्यंचातुवर्ण्यादित्वात्स्वार्थेष्यञ्प्रत्ययः।
तत्रत्रैलोक्येकस्मेऽनर्घेनपूजारहितएवअभूदितिशेषः। अमूल्यएवाभूदित्यविरोधः।
मूल्येपूजाविधिरर्घइत्यत्रापिअमरः। अत्रार्थयोरभेदाध्यवसायाद्विरोधः। तदाभास

त्वायादविरोधः। इतिविरोधाभासोलङ्कारः प्रहर्षिणीवृत्तं॥ ८८ ॥ ****** ॥

इतिश्रीशिशुपालवधेमहाकाव्येकृष्णार्घदाननामचतुर्दशः सर्गः ॥ १४ ॥ ****************

॥ इतिश्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितेमाघकाव्यव्याख्यानेसर्वंकषाख्येचतुर्दशः सर्गः ॥ १४ ॥ ********** ॥



॥ अथेति ॥ अथ हरिपूजानन्तरं । चेदिपतिः शिशुपालः । तत्र सदसि सभायां पाण्डु
सुतेन युधिष्ठिरेण विहितम्मुरद्विषो हरेर्मानं पूजां नासहत ईर्ष्यां चकारेत्यर्थः । परोत्कर्षा
क्षमेर्ष्या स्याद्दोर्जितस्यात्मनोऽपि वेति लक्षणात् । तथाहि । मानिनामहंकारिणां मनः ।
परवृद्धिमत्सरि परसुभद्वेषि खलु वेत्यर्थः सामान्येन विशेषणसमर्थनरूपोऽर्थान्तरन्यासः ।
अस्मिन् सर्गे उद्गता वृत्तं । सजसादिमे सलघौ च नसजगुरुकैरथोद्गता । अंघ्रिगत
भुवनजलाघगयुताः सजसाजगौ चरणमेकतः पठेदिति लक्षणात् ॥ १ ॥ ***** ॥
॥ पुर इति ॥ पुरः पूर्वमेव । शार्ङ्गिणि सवैरं सक्रोधममुं चैद्यं । अथ पुनः अतःपरं तदर्चया ह

अथ तत्र पाण्डुतनयेन सदसि विहितम्मधुद्विषः । मानमसहत न चे
दिपतिः परवृद्धिमत्सरि मनो हि मानिनाम् ॥ १ ॥ पुर एव शार्ङ्गि
णि सवैरमथ पुनरमुं तदर्चया । मन्युरभजदवगाढतरः समदोषकाल
इव देहिनं ज्वरः ॥ २ ॥ अभितर्ज्जयन्निव समस्तनृपगणमसाव
कम्पयत् । लोलमुकुटमणिरश्मि शनैरशनैः प्रकम्पितजगत्त्रयं शि
रः ॥ ३ ॥ ******************

रिपूजया अवगाढतरो निविडतरो मन्युः क्रोधो रौद्ररसस्य स्थायीभाव इति भावः । देहिनं श
रीरिणं समौ मिलितौ दोषौ पथ्यसेवाकालः कर्मविपाकस्य यस्य स ज्वर इवाभजत् । उप
मालङ्कारः ॥ २ ॥ ******************************** ॥
॥ अथाष्टभिः स्वगात्रारंभक्रोधचेष्टां प्रपंचयति ॥ अभीत्यादि । असौ चैद्यः । सम
स्तनृपगणमभितर्ज्जयन्निवेत्युत्प्रेक्षा । तर्ज्जभर्त्सने चौरादिकस्यानुदात्तत्वेनाप्यस्य विशेष
चक्षिङादेशस्य गाङ्कुटादिनिवद्भावानादरेण पुनर्ङित्करणसामर्थ्यादनित्यत्वज्ञापनात्पर
स्मैपदं । अत एव तर्जसे तर्जयतीत्यपि दृश्यते नेकविम्बितिभट्टमल्लः । अशनैरतिमात्रं । प्र

कंपितंजगत्त्रयंयेनसतन्त्रैलोक्यभीषणंशिरः । शनैर्लीलास्वपक्षामुकुटमणिरश्मयोयस्मि
न्कर्मणितद्यथातथाअकम्पयत् । क्रोधाग्निरेकादिविभावः ॥ ३ ॥ ******* ॥
॥ सइति ॥ रुषारोषेणश्रमम्नुमुंचन् । घनघर्मेणसान्द्रेणक्रोधोष्मणाविगलत्स्रवद्रुक्
गण्डमण्डलंयस्यसःखिद्यत्कपोलइत्यर्थः । स्वेदजलकणैःस्वेदबिंदुभिःकरालकरोदंतुर
हस्तःसचैद्यःत्रिधानेकहस्तदोःप्रभिन्नमदआविमत्तः । प्रभिन्नोमत्तःस्यादितिवैजयन्ती ।
कुञ्जरइवव्यरुचत् । रुचेर्द्युद्भ्योलुङीतिविकल्पात्परस्मैपदं । एतेनस्वेदाख्यःसात्त्विक
उक्तःउपमालङ्कारः ॥ ४ ॥ ************************ ॥
॥ सइति ॥ राज्ञांसमूहोराजकं । गोत्रक्षत्रियेत्यादिनावुञ्प्रत्ययः । तदवधूतमभिभू

सवमन्रुषाम्बुघनघर्मविगलद्रुग्गण्डमण्डलः । स्वेदजलकणक
रालकरोव्यरुचत्प्रभिन्नइवकुञ्जरस्त्रिधा ॥ ४ ॥ सनिकामघर्मित
मभीक्ष्णमबधुवद्वधूतराजकः । क्षिप्तवक्रजलजलबिन्दुवपुःप्रलया
र्णवोत्थितइवादिसूकरः ॥ ५ ॥ ***********

तंयेनसस्तथोक्तः । चैद्योनिकामंघर्मितंसंजातघर्ममुद्भवत्स्वेदमित्यर्थः । घर्मःस्यादातपे
ग्रीष्मास्वेदांभसोरपीतिविश्वः । तारकादित्वादितच्प्रत्ययः । वपुःप्रलयेअर्णवस्तस्मादु
त्थितःआदिसूकरइव । क्षिप्ताःप्रेरिताःबहुलाःसांद्रजलबिन्दवोयस्मिन्कर्मणितद्य
थातथाभीक्ष्णमबधुवत्कोपादधुवनिस्म । धुवगतिस्थैर्ययोरितिधातोःकुटादित्वाल्लङ्
। अत्रापिस्वेदसात्त्विकएवोक्तः । उपमालङ्कारः ॥ ५ ॥ ************ ॥
॥ क्षणमिति ॥ चदितंनियोजितंयत्कैलशिखरवत्कठिनमंसमण्डलंयस्यसअंसो
चैद्यःउपहितावगाहिताविधूनिःकंपोयस्मिंस्तं । अधिकमत्यंतावधूनिताकंपिताःसमस्ताः
संसदःसभायेनतंसंभ्रंक्षणं । आश्लिषत्श्लिष्टवान् । तेनाहतवानित्यर्थःअतएवकाठिनांस

मंडलइति विशेषणं च । पुंवादित्वान्ङीरङादेशः । आलिङ्गनार्थत्वेनुश्लिषआलिङ्ग नइतिक्सादेशःस्यात् । कोधांधाःकिमुतकुर्वन्तीतिभावः । अत्रासकाठिन्यस्यविशेषण गत्यास्तंभाश्लेषहेतुत्वात्काव्यलिङ्गं शैलशिखरेऽयमासङ्कीर्यते ॥ ६ ॥ ******** ॥

॥ कनकेति ॥ कनकस्याङ्गदयोःकेयुरयोःद्युतिभिः पिशंगतांपिंगलवर्णताङ्गमितंप्रापि तमितितद्गुणालङ्कारः । अस्यचैद्यस्यबाहुमण्डलंक्रोधमयशिखिशिखापटलैःक्रोधाग्नि ज्वालाजालैःपरितःपरीतंपरिवृत्तमिवाऽऽसत् । इत्युत्प्रेक्षा । द्युद्भ्योलुङीतिपरस्मैपदं ॥ ७ ॥ ******************************** ॥

क्षणमाश्लिषद्घटितशैलशिखरकठिनांसमण्डलः । स्तम्भमुपहित विघूर्तिमसावधिकावधूनितसमस्तसंसदम् ॥ ६ ॥ कनकाङ्गद द्युतिभिरस्यगमितमरुचत्पिशङ्गताम् । क्रोधमयशिखिशिखापट लैःपरितःपरीतमिवबाहुमण्डलम् ॥ ७ ॥ कृतसन्निधानमिवत स्यपुनरपितृतीयचक्षुषा । क्रूरमजनिकुटिलभ्रुगुरुभ्रुकुटीकठोरित ललाटमाननम् ॥ ८ ॥ **************

॥ कृतेति ॥ कुटिलेभ्रुवौयस्यतत्कुटिलभ्रु । उपसर्जनस्यह्रस्वः । गुर्वाभ्रुकुट्याभ्रुभंगेन कठोरितंभीषणीकृतंललाटंयस्यतत् । तस्यचैद्यस्याननंपुनरपितृतीयचक्षुषाकृतसन्नि धानं । कृतसंसर्गमिवेत्युत्प्रेक्षा । क्रूरमजनिभयंकरमभूत् । जनिकर्त्तरिलुङ् । दीप जनेत्यादिनाविकल्पाच्चिण्प्रत्ययः ॥ ८ ॥ ********************* ॥

॥ अतिरक्तेति ॥ अमुष्यचैद्यस्यदृष्टिः । अतिरक्तस्यभावस्तमतिरक्तभावंरणानिरोधाद् व्याहरणमेव्यसाहसेयुद्धेकृतमतिः । सर्वथागमिष्यामिहरिंविहनिष्यामिइतिकृतनि श्चयार्थःनिर्द्धारणमतिरिति । अगणितमविचारितंभयंश्चेगुरुजनाचययासासनीव

मर्यासमीपीअस्तिलतांसखीमिवावलंबतेस्म । स धनन्वेनसखीं चकार । क्रोधाज्जिह्मांतया
खड्गमद्राक्षीदित्यर्थः । अत्र प्रस्तुतदृष्टिविशेषणसाम्यादप्रस्तुतानायिकाप्रतीतेः समा
सोक्तिरुपमासंकीर्णा ॥ ९ ॥ ************************ ॥

॥ करेति ॥ अयं दैत्यः उरुतरो महत्तरो नगाश्मशैलशिलेव कर्कशमित्युपमा । तं निजमा
त्मीयमूरुं । सक्थ्यस्त्रीवे पुमानूरुरित्यमरः । करकुड्मलः इत्युपमितसमासः । तेन सह
प्रसारितांगुलिनापाणितलेनेत्यर्थः । त्रस्तोभीतः । अतएव चपलं चंचलं चलमानेन
कानेनश्रुतोभीमना दोभयङ्करध्वनिर्यस्मात् कर्मणितथायानयाच्चकैरहत्वआहितवान्

अतिरक्तभावमुपगम्य कृतमतिरमुष्य साहसे । दृष्टिररिणिातभयाश्रि
तामवलम्बतेस्मसमया सखीमिव ॥ ९ ॥ करकुड्मलेन निजमू
रुमुरुतरनगाश्मकर्कशम् । त्रस्तचपलचलमानजनश्रुतभीमनाद
मयमाहतोच्चकैः ॥ १० ॥ इति चुक्रुधे भृशमनेन न तु मदरवा
प्यविप्रियम् । याति विकृतिमपि संवृतिमत्किमु यच्चिसर्गनिरवग्र
हं मनः ॥ ११ ॥ ************

। अलब्धलक्ष्याः क्रोधांधाः स्वात्मानमेव घ्नन्तीति भावः । आङ्पूर्वाद्धन्तेर्लङ् । आङो
यमहनइति अकर्मकाधिकारेपि स्वांगकर्मकाच्चेति वक्तव्यमस्मादात्मनेपदे अनुदात्तेत्या
दिनाऽनुनासिकलोपः ॥ १० ॥ ************************ ॥

॥ इतीति ॥ इतीत्थमनेन प्रकारेण । अनेन चैत्येन भृशं चुक्रुधे । भावे लिट् । संवृतिम
दपि । संवृतिर्विकारगुप्तिः । तद्वदपि धीरमपीत्यर्थः । मनो मदस्य विप्रियं अप्रियमवाप्य
विकृतिं विकारं याति न तु प्राप्नोति खलु । यन्मनो निसर्गात्स्वभावादुरवग्रहं चपलमित्यर्थः
। ग्रहेः खलप्रत्ययः । तद्दिनिश्चयः किमु विकृतिं यातीति किमु वक्तव्यमित्यर्थः । चपलचित्त

ष्यार्यचैद्यइतिभावः। चैद्यकोपस्यनर्मित्यादिवाक्यार्थहेतुत्वात्काव्यार्थहेतुकंकाव्यलिङ्गम्॥ ११ ॥ ************************** ॥

॥ एवंगात्रारंभविकारवल्लावागारंभत्वम्चकमुपोद्धरतीति ॥ प्रथममिति। नव्यथेनविभेतीतिअव्यथी। जिहृक्षीत्यादिनानञ्पूर्वाद्व्यथेरिनिः। असौचैद्यःप्रथमंशरीरजैर्विकारैःपूर्वोक्तैःशिरःप्रकम्पनादिभिः कृतोमुकुलबंधोमुकुलप्रादुर्भावोयस्यतत्। भाविफलदस्यरणस्यैवफलयोगोयस्यतत्। अक्षिपांसमरांनीपरणःफलदविग्रहाविग्रमरः। कोपएवकुसुमन्तत्वचनेनयदपूपुजइत्यादिवक्ष्यमाणवाक्येनव्यचीकसत्। विकासयतिस्म। कसेर्णौचङ्युपधायाह्रस्वःदीर्घोलघोरित्यभ्यासदीर्घः। अत्रविकारफलदत्वच

प्रथमंशरीरजविकारकृतमुकुलबन्धमव्यथी। भाविफलदफलयोगमसावचनेनकोपकुसुमम्व्यचीकसत् ॥ १२ ॥ ध्वनयन्सभामथसनीरघनरवगभीरवागभीः ॥ वाचमवददितिरोषवशाद्‌तिनिष्ठुरस्फुटतराक्षरमसौ ॥ १३ ॥ ✻✻✻✻✻✻✻✻✻✻✻

नकोपेषुमुकुलफलविकासकुसुमत्वरूपणात्समस्तवर्तिसावयवरूपकं ॥ १२ ॥ ✻ ॥

॥ ध्वनयन्निति ॥ अथसनीरघनरवगभीरवाक्सजलमेघगर्जितगर्वस्वरइत्यर्थः। अभीःनिर्भीकःअसौचैद्यःसभांस्थानंध्वनयन्अतिरोषवशात्अतिनिष्ठुराणिअतिपुरुषाणिस्फुटतराणिचाक्षराणियस्यास्तांवाचमवदत् घनस्वरगम्भीरेत्युपमालङ्कारः॥१३॥

॥ वाचमवदित्युक्तंअथतामेवप्रपञ्चयतिपञ्चभिःपाण्डवोपालंभमाह। ॥ यदित्यादि। हेपार्थपृथापुत्र। मातृप्राधान्येनामंत्रणंमर्मोद्धाटनार्थत्वं। सतामपूजितंसद्भिरपूज्यमानइत्यर्थः। मतिबुद्धिपूजार्थेभ्यश्चेतिवर्तमानेक्तः। क्तस्यचवर्तमानइतिषष्ठी। मुरजितंकृष्णंइदसत्सदसियद्यस्मादपूपुजः। पूजसिस्म। णौचङ्युपधायाह्रस्वः। ततस्मात्

महत्प्रेमविलसतिस्फुरति । खलुयस्मात् जनोलोकः यदितं प्रियंगुणीतिमन्यतेअगुणीम
अपीत्यर्थः अन्यथाकथमास्वयंहाम्सः प्रेम्णापूजितोनगुणादितिभावः । अत्रप्रेमविलास
नस्योत्तरवाक्यार्थहेतुकङ्गाव्यलिङ्गम् ॥ १४ ॥ ****************** ॥

॥ यदगि ॥ अराज्ञिअभिषेकादिराजगुणविरहिणीत्यर्थः । नञत्रत्पुरुषादितिसमा
सानप्रतिषेधः । इहास्मिन्मुरद्विषिकृष्णे । अपात्रद्योतनार्थमसंप्रदानविवक्षितिर्दि
ष्टः राजानमर्हतीतिराजवत्राजार्हे । तदर्हमितिवतिप्रत्ययः । नञ्जितस्यासर्वविभक्तिरि
त्यव्ययत्वं । यदिदमर्घ्यमर्चार्थद्रव्यंअर्हणमित्यर्थः । उपहितमर्पितदर्घ्यमयंहंसः । म

यदपूपुजस्त्वमिहपार्थमुरजितमपूजितंसताम् । प्रेमविलसतिम
हतदहोदयितज्जनःखलुगुणीतिमन्यते ॥ १४ ॥ यदराज्ञिरा
जवदिहार्घ्यमुपहितमिदम्मुरद्विषि । ग्राम्यमृगहविरिवदयमभज
तेज्वलत्सुनमहीशवह्निषु ॥ १५ ॥ अनृताङ्गिरन्नगदसीतिज
गतिपटहैर्विघुष्यसे । निन्द्यमथचहरिमर्चयतस्तवकर्मणैवविक
शत्यसत्यता ॥ १६ ॥ *************

हीशावह्नयस्रावनीपाअग्नयः इवतेषुमहीशवह्निषुज्वलत्सुमहीशेषु । वह्निष्विवज्वल
त्स्वित्यर्थः । उपमितसमासः । ग्राम्यमृगःश्वनकोहविरिवंनभजते । नप्राप्नोतिउपमा
लङ्कारः ॥ १५ ॥ ************************** ॥

॥ अनृतामिति । हेपार्थअनृतामसत्यांगिरंनगदसीतिजगतिलोकेपटहैर्वाद्यविशेषैर्वि
घुष्यसे । उद्घोष्यसे । अथचतथापि । निन्द्यंहरिमर्चयतस्तवकर्मणा । अपूज्यपूजाकर
णेनैवासत्यताहीनताविकसतिप्रकाशते । अत्रासत्यप्रसिद्धसत्याचरणयोर्विरूपयोर्घट
नारूपोविकारालङ्कारः ॥ १६ ॥ ******************* ॥

॥ नवेति ॥ हे पार्थ न वेदं धर्मराज इति नाम कथमपष्ठुं असत्यमेव पठ्यते । अपष्ठुः स्तुभ्यस्थ इत्यौणादिकः कुप्रत्ययः । अंबांबगोभूमीत्यादिना षत्वं । यद्वायुक्तमेवेत्याह । अथवा जनाः भृशमप्रशस्तमपि भौमदिनमंगारकवारं मंगलं अभिदधति व्यपदिशन्ति तद्वदिदमपीत्यर्थः । लोकैरप्रशस्तां प्रशस्तशब्देन विरुद्धार्थेनापि व्यपदिश्यते । तदुच्चारणदोषान्याधूलिवृक्षशब्देन तद्वद्धर्मराजस्यापि ते धर्मराजव्यपदेश इति भावः । अत्र धर्मराजभौमदिनयोर्निरपेक्ष्यवाक्यद्वये प्रतिबिम्बकरणात् दृष्टान्तालङ्कारः ॥ १७ ॥ **

॥ यदिवेति ॥ हे पृथासुताः कौन्तेयाः एषः शौरिर्वा शौरिरिति वेत्यर्थः । वाशब्दो विकल्पोपमयोरेवार्थे च समुच्चये इति विश्वः । किमपि कथमपि भवतामर्चनीयतमो यदि पूज्यश्चेत्

ननु धर्मराज इति नाम कथमिदमपष्ठुम्पठ्यते । भौमदिनमभिदधत्यथवा भृशमप्रशस्तमपि मङ्गलं जनाः ॥ १७ ॥ यदि वार्चनीयतम एष किमपि भवतां पृथासुताः । शौरिरवनिपतिभिर्निखिलैरवमाननार्थमिह किं निमन्त्रितैः ॥ १८ ॥ **********

। तर्हीति शेषः अवमानस्तिरस्कारः तस्मै तदर्थमेव । अर्थेन सह नित्यसमासः सर्वलिङ्गता चवक्तव्या क्रियाविशेषणं । निमन्त्रितैराहूतैर्निखिलैरवनिपतिभिरिह किं कोर्थः । साध्य इत्यर्थः । अतएव साधनक्रियापेक्षया करणत्वे तृतीया प्रागस्यपानक्रियापेक्षविकारकवृत्तिरिति न्यासोद्योत्यते । अत्र सकलराजनिषेधस्य पूर्ववाक्यार्थहेतुकत्वात्काव्यलिङ्गभेदः ॥ १८ ॥ ***************************** ॥

॥ अथ त्रिभिर्भीष्मोपालम्भमाह ॥ अयेत्यादि । अथवा बालिशाः मूर्खाः यूयमिति शेषः । सुबोधोन भवतीत्यसुबोधो दुर्बोधः समयश्चाचारो यस्य तं धर्मं नावयात न जानीत । अव पूर्वाद्याधातोर्लोट् लोटस्तस्थस्थमिपां तान्तंतामः । किंतु वृथा निःफलं पलितं यस्य स वृथा

पलितःवृथापरिणमेइत्यर्थः। पलितंजरयाशौक्ल्यमित्यमरः। वृथात्वेहेतुःहतबुद्धिनं ष्टमतिरयंसरित्सुतोभीष्मोपिकाममप्रणिहितोनवहितः प्रमत्तः नानार्थानजानन्हतबु द्धित्वयापिनजानातीतिचित्रमित्यर्थः। अतएवसत्यमपिकारणेनकार्यंतुइत्याद्विशेषोक्त्य ङ्कारःनयापिवाक्तिश्चधर्मदर्शित्वेनयोविशेषणगत्याधर्माधर्माज्ञानहेतुत्वात्काव्यलिङ्गंचे त्यनयोःसापेक्षत्वात्सङ्करः ॥ १९ ॥ ********************* ॥

॥ स्वयमेवेति ॥ हेशंतनुतनूजभीष्मस्वयमेव। त्वमेवेत्यर्थः। यमपिगणांवर्गमर्घ्यमथा र्हिपूज्यंदंडादिभ्योयइतियप्रत्ययः। अभ्यधाःउक्तवान्विकादिगणेअयंमुररिपुरुक्तवानिकत

अथवानधर्ममस्तुबोधसमयमवयानवाग्मिशः। काममयमिहवृ थापलितोहतबुद्धिरप्रणिहितःसरित्सुतः॥ १९ ॥ स्वयमेवश न्तनुतनूजइहापिगणमर्घ्यमभ्यधाः। तच्चमुररिपुरयंकारमोयमनि न्द्यवन्दिवदभिष्टुषेवृथा ॥ २० ॥ अवनीभृतांत्वमपहायगणम तिजडस्समुन्नतम्। नीचिनियतमिहयच्चपलोनिरतःस्फुटमेवतद्व सिनिम्नगासुतः ॥ २१ ॥ ***********

मःकोपीत्यर्थमास्तुपलंभेकोहेतुरतआह। अयंमुररिपुःअनिंद्यवंदिवदित्यप्रगल्भवैता लिकवदित्युपमा। अभिष्टुषेअस्तौषीः। अनर्हमेवोपलभ्यनेइतिभावः। उपसर्गात्सु नोतीत्यादिनाषत्वं ॥ २० ॥ ********************* ॥

॥ अवनीति ॥ अतिजडोतिमूढश्चपलोअस्थिरःसत्वरश्चत्वं। समुन्नतंउन्नतमवनीभृ तांराज्ञांभूधराणांचगणमपहाय। न्यंचतिन्यङ्तस्मिन्नीचिनीचवृत्तेनिम्नेच। अच इत्यकारलोपेचाविति दीर्घः। इहलोकेयद्यस्मान्नियतंनित्यंनिरतोनुरक्तः। प्रणत्वश्च इतिशेषः। निम्नंनीचंगच्छतीतिनिम्नगानदी। अन्यत्रापिदृश्यतइतिडप्रत्ययः।

नखाः सुतेभवसि स्फुटमुक्तः । नीचनिरतत्वादिधर्मसंक्रमादिति भावः । उक्तंच । नपि
ध्यमनुवर्त्ततेमानृकश्चिदपदाइति ॥ २१ ॥ ******************** ॥
प्रतिपत्तुमिति । हेअङ्ग । नवन्दपयोग्यं राजादेर्महर्णपूजनंप्रतिपत्तुं स्वीकर्त्तुं नचघटतेन
युज्यते । नन्वहमपिराजैवकथंयुक्तंनत्राहकृष्णेति । हेकृष्णअहंकइतिकलय । अहंक
ज्ञानवेतिनिजस्वरूपमालोकयेत्यर्थः अन्यत्रार्थमाह । अनात्मवेदिताअनात्मज्ञत्वंआ
पदांपदंस्थानंस्फुटंव्यक्तमित्यर्थः । अनात्मवेदितत्वंआत्मनोऽज्ञानित्वंपशुपालकत्वादि
तिभावः । अतोनिजस्वरूपंचिंत्यमितिहेतुमद्भावात्काव्यलिङ्गमिति ॥ २२ ॥ **
॥ असुरइति । मधुःकोपसुरस्त्वयान्यवधिहतः ॥ आत्मनेपदेष्वन्यतरस्यामितिहंते

प्रतिपत्तुमङ्गघटतेनचतवन्दपयोग्यमर्हणाम् । कृष्णकलयतत्तुकोऽ
हमितिस्फुटमापदास्पदमनात्मवेदिता ॥ २२ ॥ असुरस्त्वया
न्यवधिकोपिमधुरितिकथम्प्रतीयते । दण्डदलितसरघःप्रथसेमधु
सूदनत्वमितिसूदयन्मधु ॥ २३ ॥ *********

र्लुङिविकल्पाद्वधादेशः । इतिकथंप्रतीयतेविश्वस्यतेकथंचिदित्यर्थः । प्रत्ययेविश्वस
पथज्ञानविश्वासहेतुष्वित्यमरः । दण्डदलितसरघःदण्डेनध्वस्तासरघामधुमक्षिकायेन
तूशस्त्वं । अतएवमधुक्षुद्रं सूदयनपीडयन्मधुसूदनइति । प्रथसेप्रथितोसि । मक्षि
कासूदनमेवमधुक्षुद्रंसूदनसंज्ञाप्रवृत्तिनिमित्तं ननुमधुनाम्नोदैत्यस्यसूदनमित्यर्थः
। अत्रमधुसूदनसंज्ञयाप्रसिद्धार्थनिषेधस्योत्तरवाक्यस्यान्यथाव्युत्पादनहेतुकत्वाद्वाक्या
र्थहेतुकत्वाद्वालिङ्गम् ॥ २३ ॥ ********************** ॥
॥ मुचुकुन्देति ॥ हेअवलबलहीन । कुतःमुचुकुन्दोनामकश्चिद्राजा । यस्यासुरविज
यश्रान्तेनिद्रायमाणस्यदेवतावरप्रसादात् निद्राविघातकारीदृष्टिपाताद्भस्मीभवति ।

नस्यतल्पंशय्यातदेवशरणंरक्षकंयस्यतस्यचकालयवनविद्रावितस्येत्यर्थः । तथामगधप तिनाजरासंधेनशान्तिनोजसः । अष्टादशकृत्वोनष्टवीर्यस्य । नवरौहिणीतनयस्यबली परनाम्नोबलभद्रस्यसाहचर्यतःसाहचर्यात्सबलत्वंसिद्धं । ननुसबलसंपन्नस्येत्यर्थः । अ होकारणंविनाकार्योत्पत्त्याद्यंश्चर्यंअतएवविभावनालङ्कारः । एषोर्यं शोलभ्यतेइतिभावः ॥ २४ ॥ ******************************** ॥

॥ छलयन्निति ॥ अन्टतेनप्रजाश्छलयन् । इन्द्रजालंवेत्तीतिऐन्द्रजालिकः । अतएव कपटपटुर्वंचनाकुशलस्त्वं । प्रतीतेप्रथितख्यातवित्तविज्ञातविश्रुताइत्यमरः । नग्नजितो

मुचुकुन्दतल्पशरणस्यमगधपतिशान्तितोजसः । सिद्धमबलसबल त्वमहोतवरौहिणीतनयसाहचर्यतः ॥ २४ ॥ छलयन्प्रजास्त्व मन्टतेनकपटपटुरैन्द्रजालिकः । प्रीतिमनुभवसिनग्नजितःसुत येष्टसत्यइतिसम्प्रतीयसे ॥ २५ ॥ धृतवान्नचक्रमरिचक्रभयचकि तमाहवेनिजम् । चक्रधरइतिरथाङ्गमदःसततम्बिभर्षिभुबनेषुरू ढये ॥ २६ ॥ ****************

नग्नजिन्नाम्नोराज्ञः । सुतयासत्यभामयासत्यापराख्यया प्रीतिमानंदंअनुभवसि । इष्टस त्यइतिसंप्रतीयसेसत्याइष्टायस्यतनुइष्टंसत्यंयस्येत्यर्थः । अत्रहरेःसत्यसंबंधेपितदसं बंधोक्तेःसंबंधेअसंबंधरूपातिशयोक्तिः ॥ २५ ॥ ************** ॥

॥ धृतवानिति ॥ आहवेयुद्धे । अरिचक्रात्रिसैन्याद्भयेनचकितंसंभ्रमंयस्यतत् । चकितं भयंसंभ्रमं । निजमात्मीयंचक्रंसैन्यंनधृतवान्नावलंबितवान्नरक्षितवानित्यर्थः । किंतुचक्रधरइतिभुवनेषुरूढयेसिद्धये । अदःइदंचरथांगंचक्रपराख्यंसततंविभर्षिद धासि । वृथाभारमितिभावः । चक्रंसैन्यरथांगयोरितिविश्वः । अयोविकारधरःचक्रध

रौभवान्नतुभीनचक्रधारकत्वादित्यर्थः । अत्रहरौभगवतिचक्राधरणसंबंधेप्यसंबंधोक्तेर
तिशयोक्तिः ॥ २६ ॥ ************************** ॥
॥ जगतीति ॥ श्रियाराजलक्ष्म्याविरहितोपि । यदूनांययातिशापत्वादितिभावः ।
ज्ञातिजनेनवंधुजनेनजनितंप्रवर्त्तितंनामश्रीरितिपारितोषिकः संज्ञाशब्दोयस्यास्तांउद्
धिसुतांअब्धिकन्यां । यद्यस्मादुपाययाः । विवाहःकृतवानित्यर्थः । विवाहोपयमौ
समाविन्यमरः । उपाद्यमःस्वकरणेइत्यात्मनेपदं । तनादिभ्यस्तथासोरितिसिचोलुक्
। अनुदात्तोपदेशइत्यादिनाअनुनासिकलोपः । अतोजगतिश्रियःपतिरितिप्रथांख्या
तिमगाःप्राप्तवानसि । इणोगालुङीतिगादेशः । नराज्ञांनरवद्राज्यलक्ष्मीयोगात्तवश्रीप

जगतिश्रियाविरहितोपियदुदधिसुतामुपायथाः । ज्ञातिजनज
नितनामपदान्त्वमतःश्रियःपतिरितिप्रथामगाः ॥ २७ ॥ अभिश
त्रुसंयँतिकदाचिदविहितपराक्रमोपियत् । व्योम्निकथमपिचक
र्थपदन्व्यपदिश्यसेजगतिविक्रमीत्यतः ॥ २८ ॥ *** ***

तित्वं । किंतुश्रीसंज्ञिकायाःकस्याश्चिद्दारकायाःपरिग्रहादितिभावः । अत्रउग्रसेनस्याभिषे
कसंस्कारेपि त्रैलोक्यप्रतिष्ठापकस्यहरेरेवसकलराज्यश्रीधुरंधरत्वात्सम्बन्धेपसम्बन्धो
क्तेरतिशयोक्तिः ॥ २७ ॥ ************************ ॥
॥ अभीति ॥ संयतियुद्धे । कदाचित्कदापि । अभिशत्रुशत्रुमभि । आभिमुख्येअव्य
यीभावः । अविहितपराक्रमोप्यकृतपौरुषोपि । यद्यस्मात्कथमपिमहताप्रयत्नेनव्योम्नि
पदंपादक्षेपंचकर्थकृतवानसि । च्रहतोभारद्वाजस्येतिइट्प्रतिषेधःपित्वाद्गुणः । अतो
जगतिविक्रमीविक्रमवानितिव्यपदिश्यसेनतुपराक्रमयोगादित्यर्थः । अत्रापिपराक्रम
सम्बन्धेपिअसम्बन्धोक्तेरतिशयोक्तिः ॥ २८ ॥ *************** ॥

॥ पृथिवीमिति ॥ पूर्वंप्रागपिसंतीतिभावः । पृथिवींविभर्षियदिभूतनवांचेत् । भूर्नोदि
टिभारद्वाजीयइइप्रतिषेधः पित्वाद्गुणः । इदंपूर्वंधारणमधिगुणायोत्कर्षायवर्त्तते । भू
तपूर्वंगत्यापिव्यपदेशत्वात्तदपिनास्तीतिभावः । प्रत्युतपरैःशत्रुभिःहारितभूःपरहारित
भूमिकः । जरासंधेनमथुरानगरान्निःकाशितत्वादितिभावः । अत्रहर्तुरिवाहरणंक्षमत्वमे
वाहारयितृत्वमितिराजयौपपत्तिंच । जनैः । कथमन्यथाअर्थेवैपरित्येनभूमिभृदिति
वदाह्रियस्वउदाह्रियथाः । संभावनायांलोट् । असंभावितमेवेत्यर्थः । अत्रापिभूधर
णसम्बन्धेयसम्बन्धोक्तेरतिशयोक्तिः ॥ २९ ॥ ****************** ॥
॥ नवेति ॥ नवधन्यतापुण्यवता । कथंसर्वेन्द्रपतिभिस्तुलितोपित्वं । क्षणंक्रान्तेभारवत्त

पृथिवीम्बिभर्षियदिपूर्वमिदमधिगुणायवर्त्तते । भूमिभृदितिपरहा
रितभूस्त्वम्मदाह्रियस्वकथमन्यथाजनैः ॥ २९ ॥ नवधन्यतेयम
पिसर्वेन्द्रपतितुलितोपियत्क्षणाम् । क्रान्तकरतलधृताचलकः पृथि
वीतलेतुलितभूभृदुच्यसे ॥ ३० ॥ **********

थैवक्रान्तेकरतलेधृतअचलोयेनसः । सन्पृथिवीतलेतुलितभूभृदुद्धृतराजकस्त्वउच्यसे ।
अत्रसर्वेन्द्रपतितुलितोपितत्तोलकइतिविरोधाभू
इतियतद्द्वयमप्यपगतिधन्यतेत्यर्थः । अत्रसर्वेन्द्रपतितुलितोपितत्तोलकइतिविरोधाभू
भृदितिश्लेषमूलाभेदाध्यवसायोत्थापितरतिविरोधातिशयोक्तेरसङ्करः तेनगोवर्द्धनोद्धर
णमपितातीवाद्भुतंवाकुवलशालिनामितिवस्तुव्यज्यते ॥ ३० ॥ ******** ॥
॥ त्वमिति ॥ हेअशुभकर्मनियतपापाचरणपर । अतएवाकुशलमतिदुर्बुद्धिस्त्वं । परि
पाकेफलपाकेदारुणंविचित्रपापनामत्वाङ्कयङ्कुरमित्यर्थः । स्यान्नारकस्तुनरकोनिरयो
दुर्गतिःस्त्रियामित्यमरः । जेतुमशक्नुवन् । पापिष्ठैर्दुर्जनत्वादितिभावः । यशसेनर
कविजयोतिप्रसिद्धाय । भुवःस्तुतन्नरकाख्यंअजयःजितवानसिपरलोकप्रतारणमा

यपरौनपरलोकसाध्योसीतिभावः। अत्रनिरयापरख्यानरकविजयाशक्तेर्विशेषणगत्या
नज्जयस्यार्थिनोहोनरकासुरविजयप्रवृत्तिहेतुकत्वात्पदार्थहेतुकञ्चाव्यलिङ्गम्। नरक
नरकस्यश्लेषमूलाभेदात्तदुत्थापितमितिसङ्करः ॥ ३१ ॥ ************ ॥

॥ सकलैरिति ॥ हेअपगुणनिर्गुण। सकलैर्दोषैःसमुदितंतवेदंवपुःसकलैर्गुणैःशौर्यादि
भिस्त्यक्तंसर्वगुणान्निवर्तितमेवेत्यर्थः। एवंसतिगुणत्रयस्यत्यजनेत्यागेयःप्रयासःतंमुधावृ
थाकिंकिमर्थमुपयासिमुमुक्षयेतिभावः। अत्रसकलगुणस्यत्यागस्तत्रगुणत्रयस्यत्यागेन
गत्यासिद्धएवअन्यथासाकस्यव्याघातादित्यर्थः। स्वभावतोनिर्गुणस्यपरवस्तुनःकुतो

त्वमशक्नुवन्नशुभकर्मनियतपरिपाकदारुणाम्। जेतुमकुशलमति
र्नरकयथशसेघिलोकमजयःस्तुनभुवः ॥ ३१ ॥ सकलैर्वपुःसक
लदोषसमुदितमिदङ्गुणैस्तव। त्यक्तमपगुणगुणत्रितयत्यजनप्र
यासमुपयासिकिंमुधा ॥ ३२ ॥ त्वयिपूजनञ्जगतिजाल्मकृतमि
दमपाकृतेगुणैः। हासकरमघटनेतिनरांशिरसीवकङ्कणमपेतमू
र्द्धजे ॥ ३३ ॥ *************

गुणत्रयचिंतेतिध्वनिः। गुणत्रयत्यागनिषेधस्यसकलैरित्यादिवाक्यार्थहेतुकत्वात्काव्य
लिङ्गभेदः ॥ ३२ ॥ ************************** ॥

॥ त्वयीति ॥ हेजाल्मअसमीक्ष्यकारिन्। जाल्मोअसमीक्ष्यकारीस्यादित्यमरः। गुणैर
पाकृतेनिरस्तेगुणैर्हीनेत्वयिपूजनंकृतं। जगतिहासकरंपरिहासकरंपूजनकंइदंपू
जनं। अपेतमूर्द्धजेअपगतकेशेशिरसिकंकतंदारुदन्तमयःकेशप्रधानविशेषः। प्रसाध
नेकंकतिकेतिविश्वः। मेरौकंकतिमेवकंकतिकं। कंकणमितिपाठेशेखरमित्यर्थः। कंकणं
शेखरेहस्तसूत्रमण्डनयोरपीतिविश्वः। तदिवनितरामघटनेनसंगच्छतेइत्यर्थः। न

ष्टीनलोपश्चिलिङ्क्षेपेइत्युपसंख्यानमितिनिंदायांनिङ्योगेपिनलोपः उपमा ॥ ३३ ॥
॥ संप्रतिराज्ञांदोषमुत्पादयन्नाह ॥ मृगेति। हेभुवोधिपाःराजानःमृगविद्विषांसिंहा
नामिवपश्यतांभवतांमिषतोयुष्मान्अनादृत्येत्यर्थः। षष्ठीचानादरेइतिविकल्पाङ्गाव
लक्षणेषष्ठी। इत्यम्पृथास्तुतैःकौंतेयैःपरिरभ्यमाणैरितिभावः। अस्यकृत्स्नस्यवनश्चुनइ
ववनश्चुनकस्येवापचितिःपूजाअजनिजनिताकृतेत्यत्। जनेर्ण्यन्तात्कर्मणिलुङ्। ए
षभवतांपरिभावःपरिभवः। परौभुवोऽवज्ञानेइतिविभाषाचप्रत्ययः ॥ ३४ ॥ ***
॥ अवधीदिति ॥ हनवृषेहनस्तुहनः। स्तुहनंवृषभेवृषेइतिविश्वः। एषकृत्स्नोजनंगम
श्चाण्डालइव। चाण्डालप्लवमातंगदिवाकीर्त्तिजनंगमाइत्यमरः। गमेश्चेतिजनपूर्वाद्

मृगविद्विषामिवयदित्थमजनिमिषतांपृथासुतैः। अस्यवनश्चुन
इवापचितिःपरिभावएषभवतांभुवोधिपाः ॥ ३४ ॥ अवधीज्ज
नङ्गमइवैषयदिहनवृषोवृषन्ननु। स्पर्शमशुचिवपुरर्हतिनप्रतिमा
ननान्तुनितरान्नृपोचिताम् ॥ ३५ ॥ *********

मधातोःखच्प्रत्ययः। अरुर्द्विषदित्यादिनामुमागमः। वृषंवृषभरूपिणंअरिष्टाख्यमसु
रमवधीत्हतवांश्चेत्। लुङिचेतिहनोवधादेशः। अशुचिवपुरशुद्धात्मास्पर्शन्नार्हति
। ननुन्टपोचितांराजार्हांप्रतिमाननांपूजांतुनितरांनार्हतिइति। स्पर्शायोग्यःकथंपूज्य
इत्यर्थः ॥ ३५ ॥ **************************** ॥
॥ यदीति ॥ अस्यकृत्स्नस्यमतिः। पूतनानामबालग्रहविशेषःतांप्रतिअङ्गनाइतिहेतो
र्दुःकृपार्द्रनानाजनियदिनजानाचेत्। जनेर्ण्यन्तात्कर्त्तरिलुङ्। दीपजनेत्यादिना
चिण्प्रत्ययः। अघृणमनसोनिर्घृणचित्तस्य। स्तनेभवंस्तन्यंपयः। शरीरावयवाच्चेतियत्प्र
त्ययः। पिबतोऽस्यसापूतनाधर्मतःशीलतोऽङ्गनन्यपिमाताचभवति। खलुशब्दोनिकृपाभावे

पिमातेति जुगुप्साथस्य नालीयहेन केवलस्त्रीहना किंतु मातृहंता चायंस्तनप्रदा उपमातृची दितिभावः । अत्र स्तनपानस्य विशेषणगत्या जननीत्वहेतुकत्वात्काव्यलिङ्गम् ॥ ३६ ॥

॥ शकटेति ॥ तरलस्सपलोयंकृष्णः । शकटव्युदासःशकटासुरमर्द्दनं । तरुभंगोयमलार्जुनभंजनं । धरणिधरधारणंगोवर्द्धनोद्धरणनान्यादिर्यस्य तत्तथोक्तं यत्कर्म अकरोत् । तेन कर्मणा स्थिरचेतसांस्थिरचित्तानां कइवविस्मयो न कोपीत्यर्थः । अथ स्थिरचेतसानां विशेषणगत्या विस्मयनिषेधहेतुत्वात्काव्यलिङ्गं वृत्त्यनुप्रासेन संसृज्यते ॥ ३७ ॥

॥ अयमिति ॥ अपरोन्यः । नापम्पुरिवन्द्रपम्पुरित्युपमितसमासः । कार्याकार्यविवेकस्पू

यदिनाङ्गनेनिमतिरस्य मृदुरजनिपूतनाप्युति । स्तन्यमघृणमनसःपिबतःकिलधर्मतोभवतिसाजनन्यपि ॥ ३६ ॥ शकटव्युदासतरुभङ्गधरणिधरधारणादिकम् । कर्मयदयमकरोत्तरलःस्थिरचेतसाङ्कइवतेनविस्मयः ॥ ३७ ॥ अयमुग्रसेनतनयस्यनृपपशुरपरःपशूनवन् । स्वामिवधमसुकरम्पुरुषैःकुरुतेस्मयत्परममिदमद्भुतम् ॥ ३८ ॥ **************

न्यत्वंचेतइत्यर्थः । अयंकृष्णः । उग्रसेनतनयस्य कंसस्य पशून् अवन् गाःपालयन । पुरुषैरसुकरंलोकादनवगीतत्वात् । दुःकरं स्वामिवधंयत्कुरुतेस्मचकारेतियावत् । एतत्परममद्भुतं । अभूतपूर्वादितिभावः । अयस्त्ववधस्य विशेषणगत्या कंसकृष्णयोःस्वामिभृत्यभावहेतुकत्वात्काव्यलिङ्गं ॥ ३८ ॥ ********************* ॥

॥ इतीति ॥ सोढःक्षान्तोरिपूणांबलभरोवीर्यातिशयोयेनसः । नसहतइतिअसहनःअर्हहिस्सुःचैद्यः । इतीत्थंउद्धतंअवद्धंनिष्ठुरंयथातथावाचंजरीर्यसपदिवेणुदारिणानरकात्मजेनसहरत्नकरनालंपरस्परकरताडनंयस्मिन्कर्मणि । तद्यथातथाउच्चकैस्ता

रंजहास । उच्चस्वरेणोद्धतवदनहर्षोद्गहासंचकारेत्यर्थः । स्वभावेक्तिः ॥ ३९ ॥ *
॥ ननुसर्वएवेति॥ ननुहेकुरुनरेन्द्र सर्वएवकमपिसत्वादिकङ्गुणमवेक्ष्यपूज्यतामेतिप्राज्ञो
पिसौर्य्यादिगुणयुक्तःपूज्यःस्यात्अयनुसत्वादिगुणरहितस्यअतोऽस्यहरेःश्रीकृष्णस्यपू
जयाकोगुणः । अर्थाद्भामादिनैवकार्य्यसिद्धिरित्यर्थः कीदृशस्यसर्वगुणविरहितस्यस
र्वैर्गुणैःसत्वादिभिःश्चुनःशौर्य्यादिभिर्विरहितस्यत्यक्तस्य । परिपूजयाकोगुणःअपितुनको
पि । अत्रमहिमासूर्य्यस्यकर्तृप्रत्ययनिर्देशोविसेषात् । केवलंतद्दाच्यतयाऽशौकर्तृव्या
पारोविवक्षितःभिन्नकर्तृकात्वगुणः । केचित्तुकर्तृक्रियायारनुशासनत्वमपिभ्रमहेतुरित्य
र्थः । निन्दास्तुतिरयमलङ्कारः ॥ ४० ॥ ************************** ॥

इतिवाचमुद्धतमुदीर्यसपदिसहवेणुदारिणा । सोऽरिपुबलभरेऽ
सहनःसजहासदत्तकरतालमुच्चकैः ॥ ३९ ॥ ननुसर्वएवस
मवेक्ष्यकमपिगुणमेतिपूज्यताम् । सर्वगुणविरहितस्यहरेःपरिपू
जयाकुरुनरेन्द्रकोगुणः ॥ ४० ॥ नमहानयन्नचविभर्निगुण
समतयाप्रधानताम् । स्वस्यकथयतिचिरायप्रियजनतान्जगत्यभि
मानतान्ह्वघत् ॥ ४१ ॥ रहितङ्कलाभिरखिलाभिरद्यतरसभाव
सम्बिदम् । श्वेचविदमुपदिशन्तिजनाःपुरवाह्यमेनमङ्गचविदग्ध
नाम् ॥ ४२ ॥ अतिभूयसापिहृतेनदुरपचारएषशक्यते । म
क्रिश्चुचिभिरुपचारपरैरपिनगृहीतुमभियोगिभिर्न्नृभिः ॥ ४३ ॥
व्रजतिसतामनुचितेपिसविनयमुपासितोजनैः । नित्यमपरिचित
चिन्तयापरएवसर्वजगतस्तथाप्ययम् ॥ ४४ ॥ उपकारिणन्निरु
पकारमनरिमरिप्रियमप्रियम् । साधुमितरमवुधम्बुधमित्यविशेष
तःसततमेषपश्यति ॥ ४५ ॥ ***********

रुपकारकस्य द्यतोऽपिवक्रगुणान्याप्रधानताम् । दुःखमनिशम
यमाप्नुवतोनपरस्यकिञ्चिदुपकर्तुमिच्छति ॥ ४६ ॥ स्वयमक्रि
यःकुटिलमेघनृणामपिविघातुमक्षमः । भोक्तुमविरतमलज्जतयाफ
लमीहतेपरकृतस्यकर्मणः ॥ ४७ ॥ यइमंसमाश्रयतिकश्चि
दुदयविपदोर्निराकुलम् । तस्यभवतिजगतीहकुतःपुनरुद्भवोवि
कारणात्त्वमीयुषः ॥ ४८ ॥ गुणवन्तमध्ययमपास्यजनमखिलम
व्यवस्थितैः । यातिसुचिरमतिवालतयाधृतिमेकएवपरिवारितोज
नैः ॥ ४९ ॥ सुकृतोपिसेवकजनस्यवक्रदिवसखिन्नचेतसः ।
सर्वजनविहितनिर्विद्यसत्कादेवदर्शनमुपैतिकस्यचित् ॥ ५० ॥
स्वजनेषुसंखिष्वनुगतेषुनियतमनुरागवत्स्वपि । स्नेहममृदुहृदयः
क्षपयन्निरपेक्षएषसमुपैतिनिर्वृतिम् ॥ ५१ ॥ क्षणमेषराजसत
येवजगदुदयदर्शिताद्यः । सत्वहितकृतमतिःसहसातमसावि
नाशयतिसर्वमावृतः ॥ ५२ ॥ अभिहन्यतेयदभिहन्तिपरित
पतियच्चनिस्तप्यते । नास्यभवतिबचनीयमिदञ्चपलात्मकाकृति
रेवहीदृशी ॥ ५३ ॥ अतिसत्त्वयुक्तइतिपुम्भिरयमतिशयेनव
र्ण्यते । सूक्ष्ममतिभिरथचापगतेसमुपैतिनाल्पमपिसत्त्वसङ्करम्
॥ ५४ ॥ प्रलयम्परस्यमहतोपिनियतमिहनिःसुखेगुणाः । या
न्तिजगदपिसदोषमदःस्वरूचैवपश्यतिगुणान्द्विषन्नयम् ॥ ५५ ॥
क्षितिपीठमम्भसिनिमग्नमुदहरतयःपरःपुमान् । एषकिलसइति
कैरबुधैरभिधीयमानमपितत्प्रतीयते ॥ ५६ ॥ ******

नरसिंहमूर्त्तिरियमेवदितिसुतमदारयन्नखैः । आप्तजनवचनमेत
दपिप्रतिपत्तुमोसितिजनोयमर्हति ॥ ५७ ॥ अपहायतुङ्गम
पिमानमुचितमवलम्ब्यवीचताम् । स्वार्थकरणपटुरेषपुराबलिनाध्वरे
णसहसम्प्रयुज्यते ॥ ५८ ॥ क्रमतेनभोरभसयैवविरचयतिविश्व
रूपताम् । सर्वमतिशयगतङ्कुरुतेस्फुटमिन्द्रजालमिदमेषमाय
या ॥ ५९ ॥ किलरावणारिरियमेवकिमिदमियदेवमिष्यते ।
सत्वमधिबलमधिज्यजियत्तदशेषमेषइतिघृष्टमुच्यताम् ॥ ६० ॥
चलतैषपादयुगलेनगुरुशकटमीषदस्पृशत् । दैवकल्पितमथचोद
लसहल्लितोरुभाण्डचयमात्मनैवतत् ॥ ६१ ॥ स्तणावतामुनास्तन
युगेनजनितजननीजनादरा । स्त्रीतिसदयमविधायमनस्तदकारि
साधुयदघातिपूतना ॥ ६२ ॥ अभिनत्तरूकथमिवैषबालचरिता
रिङ्गणःक्षणात् । वाच्यमिदमपिनवालकश्चनुदेवताविधिरयम्बिजृ
म्भते ॥ ६३ ॥ बिहरन्वनेविजनएवमहतिदधदेषगोपता । ना
मजगतिमधुसूदनइत्यगमद्धतेनमधुनामहीयसा ॥ ६४ ॥
अवमृष्यगोवधसमुत्थमघमयममीभरद्रुषा । रष्टमुपगुसमुपोढमद
द्यँदसैकिलाक्षुरदतिप्रमार्ष्टितत् ॥ ६५ ॥ मुखकन्दरान्तरगतो
पिविकटदशनेनकेशिना । नास्यसपदियदखादिभुजस्तदहोतिर
स्मिसहजैवमूढता ॥ ६६ ॥ किमिवाश्चचित्रमयमन्नमचलमह
कल्पितयँदि । प्राशनिखिलमखिलेपिजगत्युदरगतेवकुम्भजोस्य
नव्यथा ॥ ६७ ॥ यददस्यबाकुमयमेकमघृतगिरिमद्भुतन्नत
न । भूरिसलिलमविषह्यमियञ्जलदेविमुञ्चतिगवांसभाग्यता ॥ ६८ ॥

अमुनाकरेणपृथुदन्तमुशलमुद्खानिदन्तिनः । तेनयद्वधिसए
वपुनर्वलशालिनाङ्कइवतचविस्मयः ॥ ६९ ॥ शिशुरेवशि
क्षितनियुद्धकरणमज्ञातक्रियःस्वयम् । मल्लमलघुकठिनांसतटन्य
वधीद्यदेषतदतृष्टकारितम् ॥ ७० ॥ यदयुध्यमानमपिसन्तमुप
हितसुरौघसाध्वसम् । कंसमभयमयमभ्यभवत्समुदाजनेनतदपिप्र
शस्यते ॥ ७१ ॥ इतिनिन्दितुङ्कृतधियापिवचनममुनायदाद
दे । स्तोतुमनिशमुचितस्यपरैःस्तुतिरेवसामघुनिघातिनोऽभवत् ॥
७२ ॥ यदुवाचदुष्टमतिरेषपरिविवदिषुर्मुरद्विषम् । ह्यर्थमपिस
दसिचेदिपतेस्तदतोपराधगणनामगाद्वचः ॥ ७३ ॥ * * *
कटुनापिचैद्यवचनेनविकृतिमगमन्नमाधवः । सत्यनियतवचसम्ब
चसासुजनञ्जनाश्चलयितुङ्कईशते ॥ ७४ ॥ नचतन्तदेतिशप
मानमपियदुन्नपाःप्रचुक्रुधुः । शौरिसमयनिगृहीतधियःप्रभुचित्त
मेवहिजनोऽनुवर्त्तते ॥ ७५ ॥ * * * * * * * * * * *

॥ कटुनेति ॥ माधवःकटुनाचैद्यवचनेनविकृतिंनावगमत् । गमेर्लुङिपुषादित्वाच्चेरङा
देशः । सत्येनियतवचसंअस्खलितवचसंसत्यसंधं । सुजनंकेजनाः । वचसातीक्ष्णेनापी
तिभावः । चलयितुमीशतेशक्नुवन्तेनकेपीत्यर्थः । सहिष्येशतमागांसीतिप्रतिज्ञानंगतया
सहिस्नेतिभावः । सामान्येनविशेषणसमर्थनरूपोऽर्थान्तरन्यासः ॥ ७४ ॥ * * * ॥
॥ नचेति ॥ तदानन्कालेइत्थंशपमानमाक्रोशमानमपि । शपतेरपिविशपतेक्रोश
नस्वापिशपमानइतिभट्टमल्लः । तंचैद्यं । यदुन्नपाःयादवाः । शौरेःकृष्णस्यसमयेनसं
केतेननिगृहीतधियोनिरुद्धबुद्धयःसन्तोनप्रचुक्रुधुः । क्रुधद्रुहोरुपसृष्टयोःकर्मेतिकर्मत्वं

। तथाहिजनोलोकः । प्रभुचित्तमेवअनुवर्त्तते । यदुविशेषणार्थंकाव्यलिङ्गमर्थान्तर
न्यासेनसंकीर्यते ॥ ७५ ॥ ************************ ॥
॥ विहितेति ॥ अलङ्घ्येननिजवचनदाम्नास्वप्रतिज्ञापाशेनसंयतोऽच्युतः । मुहुर्विहि
तागसः । पूर्वंसहस्रशःकृतापराधस्यापि । तस्यचैद्यस्यापराधंसएवप्रथमोयस्मिन्कर्म
णितत्प्रथमं । यथाकतिथः । कतीनांपूरणइतितस्यपूरणेडइइतिडट्प्रत्ययः । षट्क
तिकतिपयचतुरांथुगितिथुगागमः । मनसासमाख्यत् । अस्यतिवक्तिख्यातिभ्योऽङिति
च्लेरङादेशः । अत्रप्रतिज्ञापाशबद्धस्यविशेषणगत्याप्राचीनापराधानंत्येपितात्कालिकोप
राधानगणनाहेतुत्वात्काव्यलिङ्गभेदः ॥ ७६ ॥ ***************** ॥

विहितागसोमुहुरलङ्घ्यनिजवचनदामसंयतः । तस्यकतिथइति
तत्प्रथमम्मनसासमाख्यदपराधमच्युतः ॥ ७६ ॥ स्मृतिवर्त्मतस्य
नसमस्तमपकृतमियायविद्विषः । स्मर्तुमधिगतगुणास्मरणाःपटवो
नदोषमखिलङ्खलूत्तमाः ॥ ७७ ॥ ********

॥ स्मृतीति ॥ विद्विषश्चैद्यस्यसंबंधिसमस्तमपकृतमपकारजातं । नपुंसकेभावेक्तः ।
तस्यहरेःकृष्णस्यस्मृतिपथंनेयायनप्राप । ततमपकारंसस्मारेत्यर्थः । अर्थान्तरंन्यस्यति
। अधिगतगुणस्मरणाःपरिचितोपकारस्मृतयः । उत्तमाःसज्जनाःअखिलंदोषमपकारं
स्मर्तुंनपटवोनालंभूताइत्यर्थः । पर्याप्तिवचनेष्वलमर्थेष्वितितुमुन्प्रत्ययः उपकारमेवस्म
रन्तिसाधवोनापकारमित्यर्थः ॥ ७७ ॥ ***************** ॥
॥ न्वपतावितिः ॥ अथनृपतौचैद्ये । शौरिंहरिंअधिक्षिपतिसति । सुरसरित्सुतोभी
ष्मः । मरुतिप्रलयमारुतेभुवंचलयतिकम्पयतिसतिक्षुभितस्योदधेर्गलयस्यांभोनिधेर्नादम
नुकुर्वन्तद्वद्गंभीरंवचः । आहस्मउवाच । लटस्मेभूतार्थेलट् । ब्रुवःपञ्चानामादि

तमाहेत्युवदितिणलश्चाहादेशौ। यद्यपिनस्यादेशोणलादयइत्याहवामनः। तथापिकवि
शैठ्यायनासवादादौप्रयोगः। उपमालङ्कारः ॥ ७८ ॥ ********* ॥
॥ उक्तमेवार्थवक्तुरन्यथाविःकारार्थमाह ॥ अथेति। अथशिशुपालप्रलापानंतरंमुर
रिपुतिरस्कारेणेतहरिनिन्दयाक्षुभितःकलुषमनाः। जाह्नवीसुतोगांगेयः। गौरवेणधै
र्येण। तदात्मनःपरिवादंकाममयमपिवृथापचितइत्यादि। स्वनिंदामपरिगणयन्
तिवक्ष्यमाणप्रकारंवाचं। प्राहस्पष्टोक्तवानुक्तमेतत्। धीरत्वमपिस्वनिंदामेवसहि
तेनगुरुदेवादिनिंदामितिभावः। अत्रक्षोभस्यविशेषणगत्याक्षहेतुत्वात्काव्यलिङ्ग

नृपतावधिक्षिपतिशौरिमथसुरसरित्सुतोवचः। प्राहचलयतिभुव
महतिक्षुभितस्यनादमनुकुर्वदम्बुधेः ॥ ७८ ॥ अथगौरवेण
परिवादमपरिगणय्यस्तदात्मनः। प्राहमुररिपुतिरस्कारक्षुभितःस्म
वाचमितिजाह्नवीसुतः ॥ ७९ ॥ विहितंमयाद्यसदसी
दमपमृषितमच्युतार्चनम्। यस्यनमयतुसचापमयच्चरणःकृतःशिर
सिसर्वभूभृताम् ॥ ८० ॥ *************

मलङ्कारभेदः ॥ ८९ ॥ ************************ ॥
॥ विहितमिति ॥ मयाअद्यसदसिविहितंकृतंइदंअच्युतार्चनं। यस्यापमृषितमतिति
क्षितमसोढमित्यर्थः। मृषतितिक्षायामितिधातोःकर्मणिक्तः। उपसर्गवशाद्विपरीता
र्थता। अतएवमृषतितिक्षायामेव,किन्वनिषेधादतितिक्षार्थाङ्गत्वाद्गुणेन। मतिबुद्धि
पूजार्थेभ्यश्चेतिचकाराद्वर्तमानार्थेक्तःक्तस्यचवर्तमानेइतिषष्ठी। सापमृषाःपुरुषास्सा
पंनमयतुआरोपयतु। सर्वभूभृतांनृपाणामितिभावः। शिरस्सुयच्चरणःकृतःन्यस्तः। अ
यमितिभूमौपात्यमानस्यहस्तेननिर्देशः। अयंकोवामर्षइत्यनुसंधेयं ॥ ८० ॥ * ॥

॥ इतीति ॥ इतीत्थंभीष्मेणभाषितस्योक्तस्यवचसोऽर्थमर्थाभिधेयंशिरसिपादन्यासरूपे
क्षणात्। अधिगतवतांप्राप्तवतामिवशिरसिपादेनहतानामिवस्तनामित्यर्थः। शिशुपा
लस्यवर्गीयपृथिवीभृतोराजानः। तेषामसौगणोनिमात्रंक्षोभंक्रोधंविकारमगमत्। ए
तेनआत्मविनाशस्वावस्थायांग्रेरौद्रस्थायीक्रोधःप्रादुरभूदित्युक्तं। इत्यन्वेक्षा ॥ ८१ ॥
॥ अथैवंदशभिर्गीतारंभक्रोधानुभावानाह ॥ शितीत्यादि। शितिःश्यामायातारका
कनीनिकातयाअनुमितंअनुमायितंनाम्नंनयनंयस्यतत्सर्वमुखरक्तत्वात्। क्रुधाक्रोधेन
अरुणीकृतंवाणवदनंवाणोऽन्दपःतस्य। तारकाक्ष्णःकनीनिकेत्यमरः। सचकीलेनवर्ति

इतिभीष्मभाषितवचोऽर्थमधिगतवतामिवक्षणात्। क्षोभमगमदति-
मात्रमथोशिशुपालपक्षपृथिवीभृतांगणः ॥ ८१ ॥ ***
शितितारकानुमितताम्रनयनमरुणीकृतंक्रुधा। बाणवदनमुददी
पिभियेजगतःसकीलमिवसूर्यमण्डलम् ॥ ८२ ॥ प्रविदारिता
रुणतरोग्रनयनकुसुमोज्ज्वलःस्फुरन्। प्रान्तरहिमकरताम्रतनुर्वि
षजद्रुमोपरइवाभवद्द्रुमः ॥ ८३ ॥ *********

तेइतिसकीलं। सूर्यमण्डलमिव। जगतोभियेभयाय। उददीपिप्रजज्वाल। दीप्यतेः
कर्त्तरिलुङ्दीपजनेत्यादिनाचिण्प्रत्ययेनलुक्। नयनयोःस्वभावस्यत्यागेनारुण्यश्री
कारणदुत्तगुणःतत्सापेक्षत्वादुत्पानिकसूर्यमण्डलोपमासङ्करः ॥ ८२ ॥ **** ॥
॥ प्रवीति ॥ प्रवीदारितेविकासितेअरुणतरेक्रोधादतिरक्ततरे। अतएवोग्रेभयंकरेयेन
यनेएवकुसुमेनाभ्याभुज्ज्वलोदीप्तः। स्फुरन्स्वतेजसादीप्यमानः। प्रान्तरहिमकरता
म्रतनुःप्रभानारुणविग्रहःप्रसिद्धः। द्रुमोद्रुमाख्योनृपःअपरोविषजद्रुमइवाभवत्इवोत्प्रे
क्षारूपसङ्कीर्णा ॥ ८३ ॥ ************************* ॥

॥ अनिशान्तेति ॥ अनिशान्तोऽनिर्वाणो वैरदहनो विरोधाग्निर्यस्य तेन । अत एवांतरस्मिन् मरे । आर्द्रं तं सारस्यां विरहितनवतात्यक्तवता । रहयते क्तवतुप्रत्ययः । कोपेमरुद्भिर्व तेनाभिहतः प्रज्वलितः । तेन नरकात्मजेन वेणुदारिणा । तरुणा वृक्षेणेव भृशं जज्वले । भावेलिट् ॥ ८४ ॥ ****************************** ॥

॥ अभीति ॥ अभिधातुमिच्छतः । दधातेः सन्नन्तात् लटः शत्रादेशः । उत्तमौजसो नाम राज्ञः संबंधि राक्रुवदनविहितं व्यात्तत्वाद्व्याकुर्वतः अवन् । करालं उपलसंती लक्ष्ममाणा सिताद्दंतपंक्तिर्यस्य तन्मुखं । ग्रस्तशशधरमिव दंष्ट्रचन्द्रमिव व्यभाव्यत तर्कयत । इत्युत्प्रेक्षा ।

अनिशान्तवैरदहनेन विरहितनवतान्तरार्द्रतम् । कोपमरुदभि
हतेन भृशन्नरकात्मजेन तरुणेव जज्वले ॥ ८४ ॥ अभिधित्सतः
किमपि राक्रुवदनविहितम्व्यभाव्यत । ग्रस्तशशधरमिवोपलसत्सि
तदन्तपङ्क्तिमुखमुत्तमौजसः ॥ ८५ ॥ कुपिताकृतिम्प्रथममेव
हसितमशनैररहचयत् । क्रुद्धमशनिदलिताद्रितटध्वनिरन्तव
क्त्रमरिचक्रभीषणम् ॥ ८६ ॥ ************

॥ ८५ ॥ ****************************** ॥

॥ कुपितेति ॥ प्रथमं प्राग्गेवा कुपिताच्छायामपीत्यर्थः । कुपितस्येवाकृतिर्मुखरागो यस्योत्युपमा । अरिचक्रभीषणं परबलभयंकरं । दंतवक्त्रं दंतवक्त्रनामराजानं । अशनिदलितस्य वज्राहतस्याद्रितटस्य ध्वनिर्यस्यात इत्युपमा । अशनैरुच्चैर्हसितं महाहासः क्रु
द्धमसूचयत् । सर्वदामुखरागस्य विशेषादनुभावाच्चैद्यः क्रुद्ध इत्यर्थः । अत्र कोपरंज
कारसम्बंधोक्तेरतिशयोक्तिरुपमासंकीर्णा ॥ ८६ ॥ ************ ॥

॥ प्रतिघेति ॥ प्रतिघः कोपः । कोपक्रोधामर्षरोषप्रतिघा इत्यमरः । कुतोऽपि समुपेत्या

गत्य। नरपतिगणांराजमंडलंसमाश्रयत्। समाविशत्। हक्मिणस्तुयाभिःखसा। यामिः खसृकुलस्त्रियोरित्यमरः। तस्याहक्मिण्याहरणेनजनितोनुशयोहाकष्टमस्तत्कदानि र्यातयामीतिअनुतापोयस्मिन्सः। अथानुशयोदीर्घद्वेषानुतापयोरित्यमरः। निजो नित्यएवप्रतिघः। निजमात्मीयनित्ययोरितिविश्वः। समुद्राचवारसमुद्रि‍ह्रेभीष्म वाक्यमन्येषांकोपोत्पादकमासीत्तहक्मिणस्तुप्रागेवरूढकोपस्तोह्दीपकमासीदित्यर्थः। अत्रानुशयस्यविशेषणगत्याकोपोद्दीपनहेतुत्वात्काव्यलिङ्गभेदः॥ ८७॥ ***॥ ॥ चरणेति॥ सुबलोनामराजा। महीधारयन्तिमहीधाःपर्वताः। कप्रकरणेमूलविभु

प्रतिघःकुतोपिसमुपेत्यनरपतिगणांसमाश्रयत्। यामिहरणजनिता
नुशयःसमुद्राचवारनिजएवरुक्मिणः॥ ८७॥ चरणेनह
न्तिसुबलःस्मशिथिलितमहीध्रबन्धनाम्। तीरनरलजलराशिज
लामवभुग्नभोगिफणमण्डलाम्भुवम्॥ ८८॥ कुपितेषुराजसुत
थापिरथचरणपाणिपूजया। चित्तकलितकलहागमनोमुदमा
ऊक्किःसुहृदिवाधिकात्द्वेषा॥ ८९॥ *********

जादिभ्यउपसंख्यानमितिकप्रत्ययः। शिथिलितानिविश्लेषितानिमहीध्राणांबन्धनानि सन्धयोयस्यास्तां। तीरेणतरलानिभूकम्पाच्चलितानिजलराशेरंबुधेर्जलानियस्यास्तां। अवभुग्नंकुटिलंभोगिफणांमण्डलंसर्पफणसमूहोयस्यास्तांभुवंचरणेनहंतिस्मजघान। त दस्तेनिभूतार्थेलट्। अत्रापादाघाताद्भुवःकंपासंबंधेतत्संबंधोक्तेरतिशयोक्तिः॥ ८८॥ *॥ ॥ कुपितेष्विति॥ रथचरणपाणेश्चक्रपाणेःपूजया। राजसुतयाकुपितेष्वपि। चित्ते कलितंनिश्चितंकलहागमनंयुद्धलाभोयेनसः। आक्रुकिः। आक्रुकिर्नामराजा। शोभि नहृदयंयस्यसशङ्कहृत्। मित्रमिवतत्पक्षपातीत्यर्थः। सुहृद्दुर्हृदौमित्रामित्रयोर्नि

पानः । अधिकमुदन्धै । क्षुद्रःसदापिह्लोकर्षैःकलहमूलपाहीरश्चकैर्न्वोर्हैंतुरगणी
ष्पर्यः । उपमालङ्कारः ॥ ८९ ॥ ********************** ॥
॥ गुर्विति ॥ विवक्षतः किमपिवक्तुमिच्छतः । वचेःसन्नन्ताल्लटःशत्राद्देशः । अस्तिय
वनस्यकालयवनस्यराज्ञःसम्बन्धि । सर्वंजगदशितुम्भक्षितुमिवव्यात्तंविवृत्तं । विकराले
अतिविस्तृतं । करालोदन्तुरेतुंगेविशालेविकृतेऽपिचेतिवैजयन्ती । गुरुणाकोपेनरुद्धपदंप्र
तिबद्धं । आस्यकुहरंवक्त्रविवरंरौद्रताम्भयकरतामापत् । अत्राशितुमिवातिफलोत्प्रेक्षा
। व्यादानक्रियानिमित्ता ॥ ९० ॥ ************************ ॥
॥ विवृतेति ॥ अखिलंनृपतीन्हन्तुं । विवृतःप्रसारितःऊरुर्वाहुरेवपरिघमायुधविशेषो

गुरुकोपरुद्धपदमापदसितयवनस्यरौद्रताम् । व्यात्तमशितुमिवस
र्वजगद्विकरालमास्यकुहरम्विवक्षतः ॥ ९० ॥ विवृतोरुवाहु
परिघेणसरभसपदन्निधित्सता । हन्तुमखिलन्नृपतीन्वसुनावसने
विलम्बिनिनिजेविचस्खले ॥ ९१ ॥ *********

येनतेन । सरभसपदंसत्वरंयत्पदन्निधित्सतानिधातुमिच्छता । दधातेःसन्नन्ताल्लटःश
त्रादेशः । वसुनावसुनाम्नाराज्ञा । विलंविनिप्रलम्बमानेवसुविस्रंसनि । निजेवसनेवस्रा
ञ्चलेविचस्खलेस्खलितं । तद्दुरस्यदुर्निमित्तमितिभावः । भावेलिट् । अत्रवस्त्रञ्च
लस्यविशेषणगत्यास्खलनहेतुत्वकाव्यलिङ्गान्तराङ्गपरिघेतिरूपकेसंसृज्यते ॥ ९१ ॥
॥ इतीति ॥ इतीत्यनन्तरान्तस्मिन्काले । विहतरूपंरोषभीषणाकारन्तद्राजमण्डलं ।
मारवलमिवमदनसैन्यमिव । मदनोमन्मथोमारइत्यमरः । अभिन्नचेतसमविकृतचि
त्तं । बोधिसत्वःबुद्धस्तुश्रीघनःशास्त्रोबोधिसत्वोत्रिनायकइतिवैजयन्ती । सहरिरेवत्यु
पमितसमासः । तंहरिंबोधिसत्वमभितःसमक्षः । अभिरभागेइत्यभेःकर्मप्रवचनीयत्वात्

योगे द्वितीया । भयंकरोतीति भयंकरः । मेघर्त्तिभयेषूपपदेष्विति खच्प्रत्ययः मुमागमः । त
स्यभावस्तत्तामभजत् । उपमालङ्कारः तेन भवतो युद्धस्य समाधिभङ्गाय प्रवृत्तं मारबलं यथा
तेनभग्नं तथा राजमण्डलमपि हरिणा भज्यत इति वस्तु व्यज्यते ॥ ९२ ॥ **** ॥
॥ रभसादिति ॥ अनुचिता अपरिचिता भीर्येषां निर्भया इत्यर्थः । अतएव युद्धमभिलाषु
काः युद्धार्थिनः । लषपतेत्यादिना उकञ् प्रत्ययेन लोकेत्यादिना षष्ठीप्रतिषेधः । सद
सि मेदिनीभृतः सदसि स्थिता श्चैद्यपक्षीया राजानः । सान्द्रो मुकुटकिरणैरुच्चलितस्फटि
कांशवः । येनाभित्तिस्फटिकमयूखाः येषां ते तथोक्ताः रभसाद्वेगात् । उदस्थुरुत्थिताः उ

इति तत्तदाविष्कृतरूपमभजत्तदभिन्नचेतसम् । मारबलमिव भय
ङ्करतां हरिबोधिसत्त्वमभिराजमण्डलम् ॥ ९२ ॥ रभसादुदस्थुर
थ युद्धमनुचितभियोऽभिलाषुकाः । सान्द्रमुकुटकिरणोच्छलित
स्फटिकांशवः सदसि मेदिनीभृतः ॥ ९३ ॥ स्फुरमाणनेत्रकु
सुमोष्ठदलमभृतभूभृदङ्घ्रिपैः । धूतपृथुभुजलतस्त्वजिनैर्द्रुतवातपा
तवनविभ्रमं सदः ॥ ९४ ॥ *************

द्धोऽनूर्द्धकर्मणीत्यस्य प्रत्युदाहरणमेतत् । अत्र युद्धाभिलाषुकस्य विशेषणगत्यानु
गुणत्वात्काव्यलिङ्गभेदः ॥ ९३ ॥ ********************** ॥
॥ स्फुरमाणेति ॥ स्फुरमाणानि नेत्राण्येव कुसुमान्योष्ठा एव दलानि च यस्मिन्कर्मणि त
त् । धूताः कम्पिताः पृथवो भुजा एव लताः शाखा यस्मिन् कर्मणि तत् । तथा चलितैः भूभृतो
राजानस्त एव अंघ्रिपाः पादपास्तैः । सदः सभामण्डलं । शीघ्रं वातपातेवात्मप्रचारो यस्य
तस्य वनविभ्रमं शोभां । विभ्रमः संशये भ्रान्तौ शोभायां चेति वैजयन्ती । अभृतवभार । भृञो
लुङि तङ् अतस्वेति सिचः कित्वाद्गुणाभावः ह्रस्वादङ्गादिति सलोपः । अत्र वनविभ्रमम

तितादृश्याक्षेपाद् संभवव स्तुतमन्याध्यानिदर्शनेन कुसुमोत्पादिरूपकोस्यापिनेतिसङ्करः

॥ ९४ ॥ ****************************** ॥

॥ हरिमिति ॥ मानतुलितभुवनत्रितया अहंकारात् धारितं जगत्त्रयं । भूभुजस्तैर्ष्यपक्ष्या

राजानः । हरिमपितृणायामंसततृणसममन्यत । तथा लघुतेति । इति अनादरोक्तिः

। मन्यतेः कर्तरि लुङि च्लेः सिच् । अनुदात्तत्वादिट्प्रतिषेधः । मन्यकर्मण्यपि इति चतुर्थी ।

कुरुपतिं च नाजीगणत धर्मराजं नागणयन्नीत्यर्थः । गणेरणौ चङि च गणइत्यभ्यासस्येकारः

। सरितः सुताद्भीष्मादपिनाविभयुर्नत्रपूर्वकाद्भीधातोर्लुङि झस्यावेति द्विर्भावे सिजभ्य-

स्तविदिभ्यश्चेति झेर्जुसादेशः । जुसि चेति गुणः । अत्र राजसु हर्षवमानाद्यनेकक्रिया

हरिमयमंसत तृणाय कुरुपतिमजीगणन्नवा । मानतुलितभुवनत्रि-

तयाः सरितः सुताद् विभयुर्न भूभृतः ॥ ९५ ॥ गुरु निःश्वसन्न-

थ विलोलसद्वपुर्वचो विषम् । कीर्णदशनकिरणाग्निकणः फणावा-

निवैत्य विससर्ज चेदिपः ॥ ९६ ॥ *********

यौगपद्यात्समुच्चयः इति सर्वे स्वकारः ॥ ९५ ॥ ************** ॥

॥ गुरुरिति ॥ अथैव चेदिपः फणवान्फणी । गुर्वधिकं निःश्वसन् । फूत्कुर्वन् । विलो-

लं सकंपं सद्वपुस्तनापं वपुर्यस्य स विलोलसद्वपुः । द्वितीयश्च । कीर्णा विक्षिप्ता दशनकि-

रणा अग्निकणा इव यस्य सः । तथा स वचो विषमिव वचो विषं विससर्ज विषप्रायं वचउज्जहा-

रेत्यर्थः । अतः फणवानिवेतिव्यस्तोपमा लिङ्गात्सर्वत्रोपमितसमासाश्रयणं ॥ ९६ ॥

॥ अथैवम्बध्यं वचो विषमेव चतुर्भिराह । किमित्यादि । हे नृपाः अमीभिः पंचभिरुपपति-

भिः सुतैः समं जारजैः सह पाण्डवानां क्षेत्रजत्वादित्यंप्रलापः । अनया स्थविरराजकन्यकाक्षे-

त्रियां गनया च सह । कन्याकुमारिका नार्योरितिविश्वः । भीष्मस्योध्वरिजस्तुत्वात्क्लीवत्वेन

निन्दा । वध्यनार्हं अराज्ञो राजार्हणग्रहणपरादिति भावः । राजत्वं व्यनक्ति अमुं भुजिष्यं किंकरं कंसपशुपालनादिति भावः । भुजिष्यः किंकरो मत इति हलायुधः । किंच नाभिहन्त किमिति न मारयत किन्तु अभिहनेत्यर्थः । हन्तेर्वध्यर्थे लोट् लोटो लङ्वदिति थस्य तादेशः अनुदात्तोपदेशेत्यादिनाऽनुनासिकलोपः । अहो अनिवध्योऽपि न हन्यत इत्याश्चर्ये अत्र मामर्षानुभावे वागात्रारम्भः क्रोधः । कृतापराधेषु स्थिरो मर्षः इतीर्यते ॥ ९७ ॥ *** ॥

॥ अथवेति ॥ अथवा । अगणितमहद्भ्यौजसः अनवधारितसुरसंघाः युयमाध्वमेव ननु नूनमीतिष्ठतैव खलु । आसनेर्लोटि धिचेति सकारलोपः । इदं कृत्स्नहननं कियद

किमहो नृपाः सममभीभिरुपपतितुं तैर्न पञ्चभिः । वध्यमभिहत
भुजिष्यममुं सह चानया स्थविरराजकन्यया ॥ ९७ ॥ अथवा
ध्वमेव खलु यूयमगणितमहद्भ्यौजसः । वस्तु कियदिदमयं न मृधे
मम केवलस्य मुखमीक्षितुं क्षमः ॥ ९८ ॥ विदतुर्यमुत्तममशे
षपरिषदि नदीजधर्मजौ । जातु निकषमधियुद्धमसौ वचनेन किम्भ
वतु साध्वसाधु वा ॥ ९९ ॥ ***********

स्तु कियत्कार्यं अल्पमित्यर्थः । कुतः अयं कृष्णो मृधे युद्धे । मृधमास्कन्दनं संख्यमिति युद्धपर्यायेष्वित्यमरः । केवलस्यैकाकिनो ममैव मुखमीक्षितुं न क्षमः युष्माकं कावार्तेति भावः एतेनास्य बलं वा व्यज्यते आत्मनोत्कर्षोऽन्यस्य न्यक्कारो लावण्यविभूतिभिरिति लक्षणात् ॥ ९८ ॥

॥ विदतुरिति ॥ किंच यं नदीजधर्मजौ भीष्मयुधिष्ठिरौ । अशेषपरिषदि सर्वस्यामपि राजसभायां कृष्णमुत्तमं विदतुः वृत्तिः विदितइत्यर्थः । विदो लटो वेति नसोतुसादेशः । असौ कृष्णः । अधियुद्धं युद्धे । विभक्त्यर्थेऽव्ययीभावः । निकषं यातु परीक्ष्यतामित्यर्थः । ततः साधूत्कर्षो असाध्वनुत्कर्षो वा । भवतु व्यक्तमस्त्वित्यर्थः । वचनेन वृथा वाग्वीर्येणालमित्यर्थः

अत्रापिगर्वामिषेणोच्यते ॥ ९९ ॥ ********************* ॥

॥ अचिरादिति ॥ किंच। मयासहसमरं गतस्योरगारिलक्ष्मणःगरुडध्वजस्यसंबंधि । तीक्ष्णैःविशिखमुखैःपीतंमद्बाणोच्छिष्टमित्यर्थः । असृक्रक्तमुर्वराभूमिः । उर्वरासर्वसस्याढ्याभूमौसाङ्गभिमात्रिकाइतिविश्वः । पतनांगणैःपक्षिसमूहैः। पतत्पत्ररथाण्डजा इत्यमरः। सार्द्धमचिरात्पिबतु । अद्यैवाहमेनंहनिष्यामीत्यर्थः अत्रापिअमर्षएवमे तिभावः॥ १०० ॥ ************************** ॥

॥ अभिधायेति ॥ सचैद्यइतिपर्यंतदृश्यंपरुषमभिधायततःपृथासुतैःपार्थैरीरितामुक्ता

अचिरान्मयासहगतस्यसमरमुरगारिलक्ष्मणः । तीक्ष्णविशिखमुखपीतमसृक्पतनाङ्गणैःपिबतुसार्द्धमुर्वरा ॥ १०० ॥ अभिधायरूक्षमितिमास्मगमइतिपृथासुतेरिताम्। वाचमनुनयपरांसततःसहसावकर्ण्यनिरियायसंसदः ॥ १०१ ॥ गृहमागतायक्षपयाचकथमपिनिसर्गदक्षिणाः । क्षान्तिमहितमनसोजननीस्वसुरात्मजायचुक्रुधुर्नपाण्डवाः ॥ १०२ ॥ ********

मनुनयपरामास्मागमोनगच्छेतिवाचं। स्मोत्तरेलङ्चेतिचकाराल्लमेरशिषिचलुङिपुषादिस्यात्रेरङादेशःनमाङ्योगेइत्यडभावः । अवकर्ण्यअवज्ञायअनादरेणश्रुत्वा। सहसासंसदःसदसोनिरियायनिर्ययौ । अमर्षादेवेतिभावः ॥ १०१ ॥ ********* ॥

॥ गृहमिति ॥ निसर्गदक्षिणाःस्वभावतोदाक्षिण्यसम्पन्नाःपरच्छंदानुवर्तिनइत्यर्थः । दक्षिणेसरलोदारौपरच्छंदानुवर्तिषुदक्षिणाइतिवैजयन्ती । किंचक्षांत्याक्षमयामहितमनसःपूजितचित्ताःक्षमावन्तःपाण्डवाः । किंचगृहमागतायाभ्यागतायेत्यर्थः । किंचजननीस्वसुर्मातृष्वसुरात्मजायशिशुपालाय । अत्यन्तात्रपयाच। कथमपिअसह्यापराधेपी

त्यर्थः नचुक्रुधुः नचचुक्षुभुः । सद्योवध्यमपितमभ्यागतत्वान्मनृवंधुत्वान्स्वयंक्षमत्वात्तदा
क्षिण्यात्कृपया चकथमपित्जिघांसांनचक्रुरित्यर्थः । क्रुधद्रुहेत्यादिनातस्प्रदानचाच
तुर्थीअत्राभ्यागतत्वादितिविशेषणानांसाभिप्रायत्वात्कोपहेतुत्वाच्च परिकाव्यलिङ्गंसति
सापेक्षत्वात्संकीर्य्यते ॥ १०२ ॥ ************************** ॥

॥ चलितमिति ॥ अथचैद्यनिर्याणानंतरं । अवनीशसूनवः । तद्गुणराजपुत्रास्ततस्त
स्याः । अवनिपतेःयुधिष्ठिरस्ययज्ञभूमितोयज्ञभूमिदेवयजनात् । पञ्चम्यास्तसिल ।
अनभिहतेच्छमप्रतिहतमनोरथंययातथाचलितंप्रस्थितं । इमचोपसूनुंशिशुपालंपर
लोकमिवययुरश्वोश्वमेधीयः । ययुरश्वोश्वमेधीयइत्यमरः । याद्वेचेतियातेरौणादिक

चलितस्ततोऽनभिहतेच्छमवनिपतियज्ञभूमितः । तूर्णमथययुमि
वनुययुर्दमघोषसूनुमवनीशसूनवः ॥ १०३ ॥ विशिखान्त
राण्यतिपपातसपदिजवनैःसवाजिभिः । द्रष्टुमलघुरभसापतिताव
निताश्चकारनसकामचेतसः ॥ १०४ ॥ ************

उक्प्रत्ययश्च । तंययुमिवतूर्णमनुययुःययुरपिराजकैराजपुत्रैःगताइतिभ्रतेःअश्वमेधा
********************** ॥
श्वोपमा ॥ १०३ ॥ ********************************

॥ विशिखान्तराणीति ॥ सचैद्यःसपदिजवनैर्वेगशालिभिर्वाजिभिरश्वैर्विशिखांतराणिर
थ्यांतराणि । रथ्याप्रतोलीविशिखेत्यमरः । अतिपपातअतिचक्राम । अतएवद्रष्टुमल
घुरभसेनाभिवेगेनापतिताआधावन्तीर्वनिताःसकामानिसाभिलाषानिचेतांसिचित्तवृत्त
योयासांताःसकामचेतसःसफलमनोरथाइत्यर्थः । नचकारअतिशाठ्यायदर्शनाभा
वेनतासांचित्तप्रोतिर्न्नासीदित्यर्थः । अतएतवाक्यार्थहेतुकंकाव्यलिङ्गम् ॥ १०४ ॥
॥ क्षणमिति ॥ असौचैद्यःपथिकिमिदमितिमिथः । जल्पताकोयमनर्थःसंवृत्तइतिप

र स्त्वरमाणगमनात्जनेनक्षणमीक्षितःसन् । शिबिरं स्वकटकं प्राप्य विशंकिमना निःशंकवि
त्तः । द्रुतं शीघ्रं । अनीकिनीसेनां समनीनहत् । सन्नाहयतिस्म । नह्यतेस्संपूर्वकान्सन्
णौ चङ्युपधाया ह्रस्वः अभ्यासदीर्घश्च । शिबिरं शकटमितिकेचित् । एतेनास्य शौर्यस्था
यिनः कोपस्य प्ररूढत्वं वेदितव्यं ॥ १०५ ॥ ****************** ॥

॥ त्वरमाणेति ॥ शंखवादनं शिल्पमस्येति शांखिकः । तदस्य शिल्पमिति ठक् । त्वरमाण
स्य शांखिकस्य यः सवेगो वदनपवनो मुखमारुतः । तेनाभिपूरितः प्रध्मातः । शैलानां कट
कतटेषु नितंबप्रदेशेषु भिन्नरवो मूर्च्छितप्रतिध्वनिरस्य चैद्यसंबंधि । सन्नहनं प्रयोजनमस्ये

ष्यणमीक्षितः पथिजनेन किमिदमिति जल्पता मिथः । प्राप्य शिबि
रमविशङ्किमनाः समनीनहद्द्रुतमनीकिनीमसौ ॥ १०५ ॥ त्वर
माणशाङ्खिकसवेगवदनपवनाभिपूरितः । शैलकटकतटभिन्नरवः
प्रणनाद सान्नहनिकोऽस्य वारिजः ॥ १०६ ॥ जगदन्तकालस
मवेतविषदविषमेरितारवम् । धीरनिजरवविलीनगुरुप्रतिशब्दम
स्य रणतूर्यमावधि ॥ १०७ ॥ *********

ति सान्नहनिको योद्धानां रणसन्नाहप्रवर्त्तक इत्यर्थः । तदस्य प्रयोजनमिति ठक् । वारिज
मुखशंखः । वारिजः शंखपद्मयोरिति विश्वः । प्रणनाद दध्वान । सन्नहनशंखं दध्मा वित्य
र्थः । उपसर्गादसमासेपि णत्वं । एतेनास्य महानुत्साहो वीररसस्थायी व्यज्यते ॥१०६॥

॥ जगदिति । जगदंतकाले कल्पांते । समवेता मिलिता ये विषदाः पुष्कलावर्त्तकादयो मेघाः
। विषं तु गरले तोये इति विश्वः । तैर्विषमं दारुणं यथा तथेरित उत्पादितो य आरवः स इवा
रवो यस्य तत् । धीरे गंभीरे निजरवे विलीना अन्तर्गता गुरवः प्रतिशब्दाः शब्दांतराणि यस्य तत्
। अस्य चैद्यस्य । रणतूर्यं रणदुन्दुभिमावधि आहतं । आहतेः कर्मणि लुङ् । आत्म

नैपदेश्यन्यतरस्यामितिह्नोवधादेशः । अत्राप्युत्साहोव्यज्यते । उपमालङ्कारः ॥ १०७ ॥ ***************************** ॥

॥ सहसेति ॥ अथरणदुंदुंभिनादनानंतरं । सहसाझटितिससंभ्रमंव्यग्रंयथातथावि लोलयाचलयासकलयाजनतयाजनसमूहेनसमाकुलंसंकीर्णंतत्स्थानं । परितः । च लितंप्रस्थितंउडुमंडलंज्योतिस्समूहंयस्मिन्तत्स्यनभःस्थलस्योपमासादृश्यमगमत् । अ चोडुमण्डलस्यचलनासंबंधेसंभावनयातत्संबंधोक्तेरतिशयोक्तिः उपमात्रयाद्राजीविताद्य नीतिमात्रसारतदंगं । तत्रैवचमत्कारस्फुरणात्पुष्यंप्रवालोपहितंयदि स्यादित्यादिवत् ॥

सहसाससम्भ्रमविलोलसकलजनतासमाकुलम् । स्थानमगमदथ तत्परितस्खलितोडुमण्डलनभस्थलोपमम् ॥ १०८ ॥ दधतोभया नकतरत्वमुपगतवतःसमानताम् । धूमपटलपिहितस्यगिरेःसम वर्मयन्सपदिमेदिनीभृतः ॥ १०९ ॥ परिमोहितापरिजनेन वर्मकरतलयुगेनमहत्तनुदुर्ग्रापेषमपिष कथमपिचिरादुपाहृतम् । वर्मकरतलयुगेनमहत्तनुवुर्णापेषमपिष ***************** क्षुधापरः ॥ ११० ॥ ************ ॥

१०८ ॥ ************************ ॥

॥ दधतइति ॥ मेदिनीभृतोराजानः । धूमपटलेनपिहितस्यछादितस्य । अतएवभया नकतरत्वं । उपगतवतोगिरेःसमानतांसादृश्यंदधतोदधानः । समवर्मयन्सुसमवर्मय न्निस्सम्यग्वर्माण्यामुंचन्नित्यर्थः । सत्यापपाशेत्यादिनाचिण् । उपमालङ्कारः ॥ १०९ ॥ ***************************** ॥

॥ परीमोहितेति ॥ परोऽन्योन्दपः । परिमुह्यतीतिपरमोहि । सपूर्वाच्चेत्यादिनाइन् प्रत्ययः । क्षुधापरिजनेनकथमपिकष्टस्यचिरादुपाहृतंआनीतं । येनकरतलयुगेन

पाणितलद्वयेन महत्त्वर्मसन्नाहमनुचूर्णपिष्ट्वा मनुचूर्णपेषं । मुक्तचूर्णरूक्षेषु पिषइ
तिणमुल्प्रत्ययः । अपिवत चूर्णितवानतचूर्णेदुर्निमित्तमितिभावः । कषादिषु यथावि
ध्यनुप्रयोगइत्यनुप्रयोगः । पिषेर्लुङि पुषादित्वाच्लेरङादेशः अत्र वर्मनिःपेषणसम्बन्धे
पितत्सम्बन्धोक्तेरतिशयोक्तिरूपमामानुषवीर्यमस्य व्यज्यते ॥ ११० ॥ ***** ॥

॥ रणेति ॥ रणेनरणारंभेनयः संमर्दोहर्षः । प्रमदसंमर्दौहर्षैइतिनिपातः । तस्योदये
नजन्मना विकाशिभिर्विसारिभिर्बलकलकलैः सैन्यकोलाहलैराकुलीकृतेसंक्षोभिते ।
अतएव मदस्थ्योतनी तिमदच्युतिमदस्राविणि । क्विप् । द्विरदेगजे । जनः परिजनः शारिं
शारिः पर्याणविहगेस्त्रीशारिश्शकुनावपीतिवैजयन्ती । शारिर्नाऽक्षोपकरणे स्त्रियां शकु

रणसम्मर्दोदयविकाशिबलकलकलाकुलिताने । शारिमशकद्धिरो
पयितुन्द्विरदेमदच्युति जनः कथञ्चन ॥ १११ ॥ परितस्फुरेत
मुखरुक्मविलसद्धिमांशुमण्डलाः । तेनुरतनुवपुषः पृथिवीं स्फु
टलक्ष्यतेजस इवात्मजाः श्रियः ॥ ११२ ॥ *******

निकांतरे । युद्धार्थे गजपर्याणे व्यवहारान्तरे क्वचिदितिविश्वप्रकाशस्य । अधिरोपयितुंक
थंचनकृच्छ्रादशकत् । शशाक । शकेर्लुङि पुषादित्वाच्लेरङादेशः । अत्र विशेषणयोगे
नकलस्य मदहेतुत्वान्मदस्य च शारिदुरारोपत्वहेतुत्वाच्च काव्यलिंगद्वयं सत्सापेक्षत्वात्संकी
र्यते ॥ १११ ॥ ************************ ॥

॥ परितइति ॥ किंचेति चार्थः । धौतेषुशोधितेषु मुखरुक्मेषु मुखस्थरुक्माभरणेषु विलस
त्प्रत्येकं विकसद्धिमांशुमण्डलानर्कबिंबयेषां तेतथोक्ताः । अतएव स्फुटलक्ष्यमनारहि
त्वाद्बहिः स्फुरितं तेजोऽन्तःसारो येषां तेइवस्थिताइत्युत्प्रेक्षा । तेजोव्याख्यातं पञ्चमीतेजो
निरोधेत्यत्र । अतनुवपुषो महाकायाः श्रियः आत्मजाः अश्वाः । लक्ष्मीपुत्रास्तुअश्वाइति

वैजयन्ती । परितःपृथिवीं । तेनुःव्याप्तवन्तइत्यर्थः ॥ ११२ ॥ ****** ॥
॥ प्रधीति ॥ चक्रधाराप्रधिर्नेमिरितिहलायुधः । प्रधिमण्डलैर्नेमिवलयैरुद्धता उत्था
पिताःपरागाःपांसवएवघनामेघास्तेषांवलयानिमण्डलानितेषांमध्यवर्त्तिनः । गुरुभिर्नि
स्वनैःस्वघोषैः व्यथिताभीषिताजंतवःप्राणिनोयैस्तेरथाअशनयः वज्राइवाशनकैःपेतु
स्तीव्रमधावन् अत्ररथानामशनित्वेनोत्प्रेक्षा । परागःसुमनोरजइत्यमरः ॥ ११३ ॥
॥ दधतइति ॥ अतएवशशांकितोमृगलांछितोयःशशांकःइंदुस्तस्यरुचिरिवरुचिर्यं
स्तेत्युपमानतलसत्शोभमानःउरश्छदोयत्रतत् । तद्वपुर्दधतोदधनाःराजानः । पुरं
धिजनैरङ्गनाजनैःसह । अयथार्थाअसत्यासिद्धिर्निष्पकार्योत्पत्तिर्यस्मिन्तद्यथार्थ

प्रधिमण्डलोद्धतपरागघनवलयमध्यवर्त्तिनः । पेतुरशनयइवाश
नकैर्गुरुनिस्वनव्यथितजन्तवोरथाः ॥ ११३ ॥ दधतःशशा
ङ्कितशशाङ्करुचिलसदुरश्छदम्वपुः । चक्रुरथसहपुरन्ध्रिजनैर
यथार्थसिद्धिसरकम्महीभृतः ॥ ११४ ॥ ******

सिद्धिसिद्धिरहितंअनिवृत्तचित्तत्वात्उन्मादकमित्यर्थः । सरकंमधुपानंचक्रुः । उत्सा
हवर्द्धनार्थमितिभावः । मणौशीधौमधुपानेसरकंमधुभाजनमितिवैजयन्ती ॥ ११४ ॥
॥ अथसर्गसमाप्तेःप्रयाणेकामंमंत्रणायप्रियासङ्गतानांभटनाशागम्यसुभसूचकानितः
निकाचित्चेष्टांनिर्णयति । दयितायेत्यादि । दयितायप्रेयसे । उदकंपानार्थमुत्क्षि
प्तं । सासवंसमद्यंअतएवोपहितेवासनार्थंनिहितेसरोजेपतद्भ्रमरौघएवभारस्तेनगुरुर्दु
र्भरंगुरुस्तुङ्गपतौश्रेष्ठेगुरोपितरिदुर्भरइतिशब्दार्णवे । कांस्यंपानभाजनं । कांस्योस्त्री
पानभाजनमित्यमरः । वृतवदिहनिकमिकषिभ्यःसइतिकमेर्द्धातोरौणादिकःसप्रत्य
यः । तस्मैहितंकंसीयंलोहविशेषःप्रोक्तानयन्छप्रत्यय । तस्यविकारः । कांस्यंपानपा

र्थः । कांसीयपरशब्दयोर्वैत्रत्रैग्लुक्रेति । क्स्यचलुक् । राजयोषितः कस्याश्चिद्राजवधूसंबं धिनः कराद्‌अवसादिनः शैथिल्यभाजकात् पतन्तत्तद्दुर्निमित्तमितिभावः । एतेनाख्या भाविविरहशोकादेवाप्रसन्नदृष्टेः काचिनव्यज्यते । अत्रावसादभारगौरवादयो विशेष णागत्यापात्रपातहेतुत्वात्काव्यलिङ्गं विरहभावनाप्रस्तुता ॥ ११५ ॥ **** ॥

॥ भृशमिति ॥ आशुचविरहभावनाप्रस्तुताकस्याश्चिदिति शेषः । मदमपास्य उत्पत्तेः प्र भिवुध्यानदीयंगुणंतद्धर्मंमदकार्यमभूतमित्यर्थः । अङ्गसादं मृगशैथिल्यं कपोलयोरस्त्र त्वमसकलमसमासवाक्यं चात्मनाख्यं । प्रस्तात्यादिभ्यस्तपसंख्यानात्तृतीया । भृशंविदधुः

दयितायसासवमुदस्तमपतद्‌वसादिनः करात् । कांस्यमुर्पाहितसरो जपनद्धमरोघभारगुरुराजयोषितः ॥ ११५ ॥ भृशमङ्गसादम स्रतांत्वमविसदृशः कपोलयोः । वाक्यमसकलमपास्यमदंविद धुस्तदीयगुणमात्मनाश्रुच ॥ ११६ ॥ सुदृशः समीकगमनाय युवतिरथसम्बभाषिरे । शोकपिहितगलरुद्धगिरस्तरसागताश्रुज लकेवलोत्तरः ॥११७ ॥ ************

अविसदृशः विदधुरिनिच अविसदृशः अर्थात्कामिन्याः कपोलयोरित्यर्थः । अन्यथाकर णेन शृङ्गारोलिरस्तताइत्यर्थः । अत्र मदभावेपितत्कार्योदयात्तस्यावशोकर्तनिमित्तक त्वोत्तयांउक्तानिमित्ताख्योविभावनाभेदः ॥ ११६ ॥ ************** ॥

॥ सुदृश इति ॥ अथास्मिन्नवसरे युवतिः । समीकगमनाय युद्धगमनाय । समीकं सांप रायिकमित्यमरः । सुदृशः । शोकपिहिते शोकावृते गलेकंठे रुद्धगिरा प्रतिबुद्धोत्तरवाच स्तयापि तरसावेगेनागतमश्रुजलमेव केवलं निभीकमुत्तरं यासां ताः नीभीकं केवलं चोक्ताभि निर्विघ्नः । सम्बभाषिरे संभाषिताः । योद्धृगच्छ इत्यामंत्रिता अत्र नाहनिष्ठामङ्इमेवा

निमदर्शनमितियावत्सुभेष्यमधुपानेनैवाक्षरंदत्तोत्तरस्यादित्यर्थः अत्राप्यमधुपानादुर्नि
मित्तमितिभावः । एतेनगंतव्यंचेनगम्यतां वयंयुष्मत्सालोक्यकामाइत्यनिष्टविध्याभासरू
पाक्षेपालंकारो व्यज्यते अनिष्टविविध्याभासश्चेतिरूढेनेष्टनिषेधाभासवदस्यापिलक्षणा
त् ॥ ११७ ॥ ****************************** ॥

॥ विपुलेति ॥ जिगमिषुभिर्युद्धायगन्तुमिच्छुभिः । प्रियैःकर्तृभिःअङ्गनाःविपुलंयदचल
स्थलंतदद्वनेनदृढेनउरसानिजवक्षसाकरणेन । पीनेकुचतटेनिपीडोनितरांपीड
नंतेनदलनेविदार्यमाणोवरश्रेष्ठावारवाणःकंचुकायस्मिन्कर्मणितद्यथातथा । कंचु
कोवारवाणोस्त्रीत्यमरः । आलिलिंगिरे आलिङ्गिताः । अत्रवारवाणाङ्गानदनांतद

विपुलाचलस्थलघनेनजिगमिषुभिरङ्गनाःप्रियैः । पीनकुचतटनि
पीडदलदवारवाणमुरसालिलिङ्गिरे ॥ ११८ ॥ नमुमोचलोच
नजलानिदयितजयमङ्गलैषिणी । जातमवनिमवसन्नभुजान्नगल
द्विवेदवलयम्बिलासिनी ॥ ११९ ॥ ***********

लनासंबंधेपिसंबंधोक्तेरतिशयोक्तिः ॥ ११८ ॥ ************** ॥

॥ नेति ॥ दयितस्यप्रियस्यजयेसंगलंतदर्थमंगलमित्यर्थः । अम्बुधासादिवत्तदर्थेषष्ठीस
मासः । तदिच्छतीतितदेषिणी विलासिनीकाचिदङ्गना । लोचनजलान्यश्रूणिनमुमो
च अश्रुपातस्यामंगलत्वादितिभावः । अमंगलंतदन्यतःप्राप्तवृत्तमेवेत्याहजातमिति । अ
वसन्नभुजात्क्लेशकशिथिलात्करात्गलद्भ्रश्यदेवावनिम्भुवंजातंप्राप्तंवलयंकंकणंनविवेद ।
अवश्यंभाविनांकोनिवारकइतिभावः । एषाचदैवचिन्ताइतिअत्रावसन्नमस्यविशेषण
गत्यावलयपातहेतुकात्काव्यलिंगम् ॥ ११९ ॥ ************** ॥

॥ प्रेति ॥ अचिरोढसुन्दरीकाचिन्नवोढास्त्री । प्रविवत्सतःप्रवासंकर्तुमिच्छतःप्रवा

मात्रोपमानस्येत्यर्थः। वसेःस्तनंताछ्नइत्यादेशः। प्रियतमस्यप्रतिपादयुग्मं। विभक्त्यर्थे व्ययीभावः। नीलनलिनदलदामरुचिनीलोत्पलमालासदृक्छायइत्युपमा। निगडमिदं त्यं बलमिव चक्षुर्नेत्रमक्षिपत्अप्रेरयदित्यर्थः। चक्षुःसङ्गवपदमपिगन्तुमशक्तेत्यर्थःत न्दुर्निमित्तमितिभावः उक्तोपमासापेक्षा चक्षुषोर्निगडत्वोत्प्रेक्षयोरिति सङ्करः॥ १२० ॥

॥ व्रजतइति ॥ जनन्यायात्राभंयात् निभर्त्सनाद्विवृद्धमन्युनाप्रवृद्धमन्युनाप्रवृद्धकोपेन शिशुनाबालकेनहेतात। तातस्तुजनकःपितेत्यमरः। कव्रजसिकुत्रव्रजसिइत्यस्फुटंउ दितमुक्तं। वदेःकर्मणिक्तःवचिस्वपीत्यादिनासंप्रसारणं। व्रजसीतिसरेफपदंव्रजसी

प्रविवत्सतःप्रियतमस्यनिगडमिवचक्षुरक्षिपत्। नीलनलिनदल दामरुचिप्रतिपादयुग्ममचिरेणसुन्दरी॥ १२०॥ व्रजतःक्वतात व्रजसीतिपरिचयगतार्थमस्फुटम्। धैर्यमभिनदुदितंशिशुनाज ननीनिर्भत्सनविवृद्धमन्युना॥ १२१॥ शठनाकलोकललनाभि रविरतरसंरिरंससे। तेनवहसिमुदमित्यवद्दुणरागिणंरमणमि र्ष्ययापरा॥ १२२॥ ❋❋❋❋❋❋❋❋❋❋❋❋❋

तिबालकेनरेफानुच्चारिणमित्यर्थः। तथापिपरिचयादभ्यासात्पाठत्वाद्गतार्थं। पितृभ्यां वावगताभिप्रेयंवचनमितिशेषंव्रजतःप्रस्थातुः। धैर्यप्रयाणोत्साहअभिनत्तस्यदुर्निमित्त त्वादितिभावः। उक्तंचयोगयात्रायां। यानात्पुरानिपतनंवृहतीक्वचित्गर्भच्युनारीवह नीस्वपरःश्रुताक्वोआगच्छतिष्ठकुतइत्यमङ्गलवाचिशब्दाःसरजगमनेप्रतिषेधकाः स्युरिति। अत्रदंपत्योर्विषादचिन्ताशंकादयःसंचारिणोनुसंधेयः॥ १२१॥ ❋❋

॥ शठेति ॥ अपराङ्गी। रणरागीणं। हेशठवंचक। नाकलोकललनाभिरप्सरोभिस्सहे त्यर्थः। सहयुक्तेऽप्रधानइतिसहार्थेतृतीया। वृद्धोयुनेतिवत्। अविरतरसमविच्छि

न्नस्तुरतंयथाभवतितथारिरंसते। रन्तुमिच्छसिरसेःस्तनंताद्भूद । पूर्ववत्स्तनइत्यान्म
नैपदंतेनरिरंसाकारणेनमुदंवहसीती र्षयापत्न्याक्षमयाअवदतमुदंवारयत् अर्थाद्दिर
घाल्हनयाप्रस्थानप्रतिषेधपर्यायाहतमिदमेवास्यमरणंतंसिती उरस्यमुभभवतीति
भावंइर्ष्यात्रकंठेरोक्तःएवसंचारः ॥ १२२ ॥ ****************** ॥
॥ ध्रियमाणमिति ॥ दयितेचलतिप्रतिष्ठमानेसतिनतभ्रुवःवध्वंअश्रुध्रियमाणममंगल
भियाधार्य्यमाणमपि। धरतेःकर्म्मणिलटःशानजादेशः। अगलदस्रवत् शोकातिरेका
द्धारयितुमशक्यमासीदित्यर्थः । तथाहिअक्लतरसमकृत्रिमरागंस्नेहंप्रेमदधतांअतएव
अतिमुग्धचेतसांअत्यंताकपटबुद्धीनांइदमेवसंवरणंयुक्तं । अन्यथास्नेहव्याघातेनत

ध्रियमाणमप्यगलदश्रुचलतिदयितेनतभ्रुवः । स्नेहमकृतरसदध
तामिदमेवयुक्तमतिमुग्धचेतसाम् ॥ १२३ ॥ सहकज्जलेनवि
रराजनयनकमलाम्बुसन्ततिः । गण्डफलकमभितःस्तनतोःपदवी
वशोकमयकृष्णवर्त्मनः ॥ १२४ ॥ *********

त्कालविरुद्धमश्रुमोचनमनुचितमितिभावः । रसस्नेहयोगप्रेमपरमानन्दोरवस्थाभेदा
त्भेदःरागस्तत्संबंधःप्रेमतद्धियोगासहिष्णुतेतिरसरागयोःसामान्येनसमर्थनरूपोर्थान्त
रन्यासः ॥ १२३ ॥ ************************ ॥
॥ सहेति ॥ स्तनतोःस्तुभंगाः । गण्डफलकमभितोगण्डस्थलयोरित्यर्थः । अभितः
परितइत्यादिनाद्वितीया। नयनकमलांबुसंततिरश्रुधारा । कज्जलेनसहशोकएवशो
कमयस्तस्यकृष्णवर्त्मनः शोकाग्नेर्निःशरणमार्गइवतेनवर्त्मनिगच्छतितिकृष्णवर्त्मनितिकृ
ष्णवर्त्मनःपदवीइवविरराजसुशुभे । अत्राश्रुपातनिमित्तमितिभावः ॥ १२४ ॥*
॥ क्षणेति ॥ कतिपयंचतत्पदंचतत् । जातावेकवचनंकतिचित्पदानीत्यर्थः । पदशब्द

स्यानद्रवच्छिन्नदेशवां चिवाद्र्यंतसंयोगेद्वितीया । चलितेनप्रस्थितेनकेनचिद्विशे

षः । क्षणमात्रेऽधिक्षणमात्रप्रबंधकं । प्रणादकजीविनामवसरे सत्यधिकंस्तनुमनै

चित्यादिनिभावः । सस्ताद्गलतावुनिविलंबनेभुजयुगलनांप्रकोष्ठाग्रेइष्टकाग्रेचततांव

लयानांस्वनितंस्तनितंप्रतिक्षुतमिवउपमुश्रुवे । उपश्रुतं । द्वौहत्क्षुतंक्षवःपुंसीत्यम

रः । अकारेक्षुतमित्यादिनिवृत्तंक्षणमात्रेशुनइत्यर्थः । अक्षतक्षुतशब्दाभ्यामिदंवलं

कारःदैन्यनिषादायास्याःसंचारिणः ॥ १२५ ॥ ************* ॥

॥ अभीति ॥ वल्लभतमस्यप्रियतमस्याभिवर्त्माभिमार्गे । विगलदंगत्यागात्स्रंसमानमम

लमायतंचांशुकंवस्त्रंयस्याःअत्रविशीर्य्यमाणाअमलाउज्ज्वलाःआयतादीर्घभूताअंशवो

क्षणमात्रेऽधिचलितेनकतिपयपदव्रजनभुवः । सस्तभुजयुगस्वलद्

वलयस्वनितम्प्रतिक्षुतमिवोपशुश्रुवे ॥ १२५ ॥ अभिवर्त्मवल्लभ

तमस्य विगलदमलायतांशुका । भूमिनभसिरभसेनयतीविरराजका

चनसममहोल्कया ॥ १२६ ॥ ************

रश्मयोयस्याःसाअंशुधिका । कप्रत्ययः । भूमिर्नभइव । तस्मिन्भूमिनभसिरभसेनह

र्षेणयतीयाताः । इणःशतवुगितश्चेतिङीप् । काचनमहोल्कयासमंसदृशंविरराज ।

अत्रप्रस्थानुरग्रेसकांतायामुक्तासादृश्यभवतेचदुर्निमित्तमितिभावः । उपमालङ्कारः

॥ १२६ ॥ ************************* ॥

॥ समरेति ॥ नृपजनेसमरेऽद्युकेपितस्यन्दपगणस्यानुमरणेसहमरणेउद्यतेोद्युक्ताअ

नश्रुवैकामुख्याधीर्यस्याःसा । दीनेषशोभनायशोच्यनपरिजनेनक्ताश्रुजलामुक्तबाष्पो

ऽभिरर्च्यमानइत्यर्थः । तथापिसर्वस्थिरमनाअचलितचित्ताभटीजनोभटीस्त्रीलोकः

। जातावेकवचनंपुंयोगादाख्यायामितिङीप् । नविचक्रामेनत्रस्तःसमृत्युप्रियाप्रिया

स्तांकुनः संज्ञा यद्द इति भावः । अत्र मरणोत्कस्य विशेषणगत्या अन्वमत्वहेतुत्वात्काव्यलिङ्गं भेदः ॥ १२७ ॥ ************************* ॥

॥ विदुषीति ॥ युवतिः कापि वदंगना । अमुष्य पत्युर्दर्शनं पुनः पश्चादतिदुर्लभमत्र स्यात्पुनरावृत्तिरिति भावः । विदुषीव जननाद्वेत्युत्प्रेक्षा । विदेः शतुर्वसुरिति वस्वादेशः उगितश्चेति ङीप् । अविनृप्तमना अवितृप्तं चित्तं यस्याः सा आदृशः पथः आदृष्टिपथात् दृष्टिपथातिक्रमपर्यंतमित्यर्थः । आङ् मर्यादाभिविध्योरिति विकल्पाद् अव्ययीभावसमासः । भृशमनिमिषमीक्षते स्म ॥ १२८ ॥ ********** ॥

समरोत्सुकेन्द्पजने पितदनुमरणोद्यतैकधीः । दीनपरिजनहृता
श्रुजलो नमटीजनः स्थिरमना विचक्रमे ॥ १२७ ॥ विदुषीवद
र्शनममुष्य युवतिरतिदुर्लभम्पुनः । यान्तमनि मेषमवितृप्तमनाः पति
मीक्षते स्म भृशमादृशः पथः ॥ १२८ ॥ सम्प्रत्युपेयाः कुशली पुन
र्युधः सस्नेहमाशीरिति भर्तुरीरिताः । सद्यः प्रसह्याद्वितयेन नेत्रयोः
प्रत्याचचक्षे गलना भटस्त्रियाः ॥ १२९ ॥ *******

॥ संप्रतीति ॥ संप्रतीदानीमेव । कुशली अक्षतः सन् युधो युद्धात्पुनः उपेयाः प्रत्यावर्तस्वेति सस्नेहं भर्तुरीरिताः सर्वैः प्रयुक्ता आशीः आशीर्वादः सद्यः प्रसह्य गलता गलदंभसाश्रवद्रूपेण नेत्रयोर्द्वितयेन प्रत्याचचक्षे प्रत्याख्याता भटस्त्रियाः एव च असौ निष्प्रतिषेधानदीत्वाड्डागमः । गलितेति क्षेप्रत्याक्षने अमंगलेनाश्रुपातेन निष्फलीकृतैव त्वयवश्यं भवनियं भवत्येवेति भावः । गलितेति विकल्पान्नचक्षिङः ख्यान्नादेशः अत्राश्रुपातस्य नेत्रविशेषणद्वारा आशीःप्रत्याख्यानहेतुत्वात्काव्यलिङ्गविशेषः ॥ १२९ ॥ ******************* ॥

॥ काचिदिति ॥ काचित्स्त्री रजोभिरार्त्तवैरंगसंस्कारत्यागात्पांसुभिर्विकीर्णा । स्याद्

जः पुष्पमार्त्तवमित्यमरः। पांसुर्नाना द्वयोः रजस्त्यमरः। दिवस्तौन्यानि कपांसुवर्षेणाद्‍
जः कीर्णा। वक्त्रमिन्दुरिव मन्यत्र वक्त्रमेवेन्दुस्तस्य लक्ष्मीर्यस्याः सा वक्त्रेन्दुलक्ष्मीस्सा
भिन्ना यस्या इति वहुवचनानां चयोर्बहुव्रीहिः। एवमपि एकवचनान्तस्यैव लक्ष्मीशब्द
स्योरः प्रभृतिषु पाठाननन्निमित्तो वा कप्रत्ययः। शेषविकल्पस्तु वैभाषिकः स्त्यविरोधः। काचि
न्नारी दिवमनुविदधे अनुचकार। कश्चिन्नार्य्यः दिश इव अश्रीका वीतशोभाः। उद्भ्रान्तचि
त्ता उद्भ्रान्तजन्तुकाश्च सत्यः। अन्तरात्मनि मध्ये दाहं सन्तापं। अन्यन्नैत्यानि कं ज्वलनं दधि
रे दधुः अन्या वात्या इव वातसमूहा इव। शाखादिभ्यो यद् इति यप्रत्ययः। प्रतिदिशं दिशि
दिशि। अव्ययीभावे शरत्प्रभृतिभ्यः टच् इति समासान्तो टच् प्रत्ययः। भ्रेमुर्बभ्रमुः। वाजृम्भमु

काचित्कीर्णा रजोभिर्दिवमनुविदधे भिन्नवक्त्रेन्दुलक्ष्मीरश्रीकाः काश्चि
दन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः। भ्रेमुर्वात्या इवान्याः प्रतिप
दमपरा भूमिवत्कम्पमापुः प्रस्थाने पार्थिवानामशिवमिति पुरोभाविनार्यः
शशंसुः॥ १३०॥ ❋❋❋❋❋❋❋❋❋❋❋❋❋❋

त्रसामिति विकल्पादेत्वाभ्यासलोपौ। अपरा नार्यो भूम्यातुल्यं भूमिवत् कंपमापुः इत्थं पा
र्थिवानां प्रस्थाने प्रयाणे नार्यो भाव्यशुभं पुरः पूर्वं शशंसुः सूचयामासुरित्यर्थः। अत्र नारी
णां भाव्यशुभसूचनस्य रजोदाहादिवाक्यार्थहेतुकं काव्यलिङ्गं तत्र नारीणां द्युनिदिगाद्यु
पमाभिस्तद्रजोदाहादिच नारीरजोदाहादीनां अशुभसूचकत्वमित्युपमाकाव्यलिङ्गयो
रंगांगिभावेन शङ्करः। संचारिणश्चापूर्ववद्विपर्ययादयः सुगमाः। अत्र काचित्कीर्णार
जोभिर्दिवमनुविदधुः क्षामवक्त्रेन्दुलक्ष्म्यो निश्रीकाः कश्चिदिति पाठे काचित्कीर्णेत्येकवचन
प्रक्रमभंगे दोषो नास्ति न चैवमुपमानोपमेययोर्भिन्नवचने दोषः लोकेषु चंद्रादिष्वेकत्वनिपा
तेषु दोषवुद्ध्यानुदयात् यथाह दंडी न लिंगवचने भिन्ने न हीनाधिकतापि वा उपमादूषणाय

भितयोर्द्विपक्षोनधीयतामितिस्त्रग्धरावृत्तं।मुम्नैर्यानांत्रयेणत्रमुनियतियुतास्रग्धराकीर्त्ति
तेयमितिलक्षणात् ॥ १३० ॥ ************************ ॥

इतिश्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचि
तेमाघकाव्यव्याख्यानेसर्वंकषाख्यानेपञ्चदशःसर्गः ॥ १५ ॥ ********** ॥

इतिदत्तकसूनोर्माघस्यकवेः शिशुपालवधेमहाकाव्येपञ्चदशः
सर्गः ॥ १५ ॥ ****************



॥ अथानन्तरसर्गे हरेः सैन्यदूतसंवादं वर्णयति ॥ दमघोषेत्यादि । अथ सन्नाहानन्तरं दमघोषसुतेन शिशुपालेन प्रतिशिष्टः प्रतिहितः प्रतिभानमस्यास्तीति प्रतिभानवान् अवसरोचितोत्तरस्फुरणशक्तिमानित्यर्थः । कश्चन कश्चिद् दूतः हरिं कृष्णमुपगम्य प्राप्य सदसि सभायां । स्फुटौ भिन्नार्थौ प्रियाप्रियरूपौ यस्मिंस्तत् स्फुटभिन्नार्थं । युगपदुभयार्थाभिधायकमित्यर्थः तथैव वक्ष्यति उभयं युगपन्मयोदितं तत्त्वरया सान्त्वमथेतरच्च ते । अतः इदं वक्ष्यमाणं वचः उदाहरत् । अत्राह कामंदकः यः सामान्यं वदन हीनो दूतस्तु निविधानतः । स्ववाक्यं परवाक्यं च निर्निवेत्ति च विन्दयेत् । अस्मिन्सर्गे वैतालीयाख्यं मात्रावृत्तं । षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः । समम्भर्त्तुः शासनो गच्छेद् दूतवत्युत्तरोत्तरः ।

दमघोषसुतेन कश्चन प्रतिशिष्टः प्रतिभानवानथ । उपगम्य हरिं सदस्यदः स्फुटभिन्नार्थमुदाहरद्वचः ॥ १ ॥ अभिधाय तदा तदप्रियं शिशुपालोऽनुशयम्परङ्गतः । भवतोऽभिमनाः समीहते सरुषः कर्त्तुमुपेत्य माननाम् ॥ २ ॥ ************

चापरा सैव कलावैतालीयमनेरलौ गुरुरिति लक्षणात् ॥ १ ॥ ************ ॥

॥ स्फुटभिन्नार्थमुदाहरद्वच इत्युक्तं तदेव चतुर्दशभिः श्लोकसंख्याभिरभिधत्ते । अभिधायेत्यादि । शिशुपालस्तदा अर्घस्वीकारकाले । तदप्रियमभिधाय । परमनुशयं केवलं नस्तप्तव्यः किंतु हन्तव्यस्त्वमिति दीर्घद्वेषं गतः । रंध्रे शङ्के चानुशयो दीर्घद्वेषानुतापयोरिति भयत्रापि च अमरः । अभिमनाः उत्कंठितचित्तः सन् भवतः उपेत्य माननां पूजां कर्तुं समीहते अनुचेष्टुमिच्छतीत्यर्थः सरुषः क्रोधेन सह वर्त्तमानस्य । अयं मधुरोऽर्थः । पुरुषस्तदा तदप्रियमभिधाय परं अनुशयं अनुतापं गतः अत एव नास्ति भीर्यस्येत्यभिनिर्भीकं मनो यस्य सोऽभिमनाः निःशङ्कचित्तः सन् उपेत्य स्वयमेवागत्य सरुषः सकोपस्य माननां कः भवतः कर्त्तुं समीहते

ईहते भवंतं हन्तुमिच्छतीत्यर्थः मनस्तम्भेइति धातोश्चौरादिकात् ल्युट्‌इणलुक् अत्र चतुर्ह
श्लोक्यां परहृदयपरीक्षापराणां दूतानां प्रियाप्रियेद्वे अपि वक्तव्ये चमत्कारायतु श्लेषभंग्या
भिधीयते। इति प्रियाप्रिययोर्द्वयोरपि प्रकृतत्वाद्भिधेयत्वाच्छब्दमात्रसाधर्म्याच्चकेवल
प्रकृतमेवपरः प्रकृताप्रकृतोभयगतमुक्तत्वेच्छब्दमात्रसाधर्म्यं श्लेषोयमितिलक्षणात् नचोभ
यार्थं निबद्धस्तुत्योरत्यन्तरगम्यतया गत्वा नात् इहतु भयंयुगपन्मयोदितं त्वरयातान्तमये
नरच्चोइति वक्ष्यमाणलिङ्गादुभयोर्वा च्यागमादत्तं प्रपञ्चेन ॥ २ ॥ ******* ॥
॥ विपुलेनेति ॥ उन्मनाः उत्सुकचेताः। स चैद्यः परितः प्रचुरं प्रभूतं यथा तथा प्राप्ताङ्ग
निर्वृतिः सुहृत्सम्बन्धमङ्गसुखं येन तं। त्वा त्विपुलेन विशिष्टपुलकेनापि। विपुलन्तुपु

विपुलेननिपीड्यनिर्दयमुद्गमायातुनितान्तमुन्मनाः। प्रचुराधिग
ताङ्गनिर्वृतिम्परितस्त्वाङ्गबविग्रहेणसः ॥ ३ ॥ प्रणतः शिरसा
करिष्यतेसकलैरन्यसमं नराधिपैः। तवशासनमाशुभूपतिः परवान
ड्डायतस्त्वयैवसः ॥ ४ ॥ **************

लकेप्यवदितिविश्वः। विग्रहेणवपुषा निर्दयं गाढं निपीड्यालिङ्ग्य नितान्तं मुद्गमायातु ख
लु। पुरुषस्तु उन्मना मनस्वी चैद्यः प्रचुरेणाधिना मनोव्यथया गताङ्गनिर्वृतिं विगतशरीर
सौख्यं त्वां विपुलेन महता विग्रहेण समरेण। विग्रहः समरे काये इति विश्वः। निर्दयं निपी
ड्य हत्वा मुद्गमायातु ॥ ३ ॥ ********************* ॥
॥ प्रणत इति ॥ भूपतिः चैद्यः सकलैर्धराधिपैस्समं सह प्रणत्यागत्य। शिरसाप्रणतः प्रणामं कृ
तवान्। कर्त्तरिक्तः। आशु तव शासनमाज्ञां करिष्यते त्वदाज्ञाकरो भविष्यति। कुतः यतः स
चैद्योऽस्मिन् अवसरे त्वय्येवपरवान् त्वय्येकपरतन्त्रः। पुरुषस्तु शिरसा प्रणतो नराधिपैरि
तिभावः कर्मणिक्तः भूपतिस्तव शासनं शास्तिं शिक्षां करिष्यते यतस्त्वय्येव परवान् शत्रुमान्

त्वमेकैवास्यशत्रुरवशिष्टइतिभावः। अन्यत्सुगमं । शासनंराजदत्तोर्व्यालेखाशासनशा
स्त्रिष्विति विश्वः ॥ ४ ॥ ******************************** ॥

॥ प्रणामे हेतुमाह ॥ अधीति । अधिगतंवह्निपतङ्गयोरग्निभान्वोरिवतेजोयेनतस्यतत्तु
ल्यतेजसइत्यर्थः नियतोखान्तोनियतचित्तः संचासौसमर्थकर्म्माच । साधुत्वेनिरवद्यगु
णवद्विशेषणसमासः तस्ययथोक्तस्यसर्वेविधेयवर्त्तिनोवशवर्त्तिनः कर्म्मकरायस्यतवभूभृ
तः प्रणतिंनविभ्रतिसर्वेपिविभ्रतीत्यर्थः। पुरुषस्तुप्रणामेहेतुमाह। अधिवह्निपतङ्गस्यश
लभस्येवतेजःपौरुषंयस्यतस्यसः। पतङ्गःशलभेभानाविति विश्वः। नियतेअव्यभिचारे
स्वान्तेस्वविनाशेसमर्थेहेतुभूतंकर्मयस्यतस्यसर्वेषांविधेयेवर्त्तते विधेयंवर्त्तयतीवसर्वविधेय

अधिवह्निपतङ्गतेजसोनियतस्वान्तसमर्थकर्मणः । तवसर्वविधेय
वर्त्तिनः प्रणतिम्बिभ्रतिकेनभूभृतः ॥ ५ ॥ जनताम्भयशून्यधीः प
रैरभिभूतामवलम्बसेयतः । तवकृत्स्नगुणास्ततोनरैरसमानस्यदध
त्यगुण्यताम् ॥ ६ ॥ **************

वर्त्तिनः सर्वकिंकरस्यनिष्पौरुषतरस्यतवकेनगुणेनभूभृतः प्रणतिम्बिभ्रतिनकेनापीत्यर्थः
॥ ५ ॥ ************************************ ॥

॥ जनतामिति ॥ हेक्षमहेहरे भयशून्यधीर्निर्भीकचित्तःसन् । परैःशत्रुभिरभिभूतां
जनतांजनसमूहं । ग्रामजनेत्यादिनासमूहेतल्प्रत्ययः। यतोऽवलम्बसेपरिगृह्णासिर
क्षसीत्यर्थः। ततोहेतोर्नरैरसमानस्यअमानुषमहिम्नइत्यर्थः । तवगुणाःआर्त्तभरणा
दयःअगुण्यतामसंख्येयतांदधति। पुरुषस्तुहेमलिनात्मकभयशून्यधीर्मूढबुद्धिःपरैस्त्व
दन्यैः। परंदूरात्मसुखेषुपरोऽरिपरमात्मनोरित्युभयत्रापिवैजयन्ती। अभिभूतांअव
धारितांजनतांस्वप्रजापालनेपरदारादिगमनेपृथक्जनत्वं। भावेयैतल्प्रत्ययः। यतोऽ

वंदन्वसेआश्रयति । ततोनरैरसमानस्ततनोपिहीनस्येत्यर्थः । नवगुणाःलेशेनःस्वभा
वतोपीतिभावःअगुरुत्वतामनादरणीयतान्दधति ॥ ६ ॥ ********** ॥
॥ अहितादिति ॥ त्वयासदृशोऽन्योगुणवान्गुणाढ्यःकुतःनकुत्रापीत्यर्थः । कुतस्त्वंअ
हितादनर्थात्त्रसन्अधर्मभीरुरित्यर्थः । अपत्रपोनभवतीतिअनपत्रपस्त्रपावान्अका
र्य्येजुगुप्सुरित्यर्थः । अतिमात्रमत्यन्तमुज्झितभीरुत्यक्तारिभयइत्यर्थः । नअस्तिमति
रस्येतिनास्तिकःनास्तिपरलोकः । अस्तिनास्तिमतिरितिठक् । सनभवतीत्यनास्ति
कःआस्तिकइत्यर्थः । विनयेनानौद्धत्येनोपहितोविशिष्टविनयवानित्यर्थः । विस्मयो
विशिष्टगर्वोनभवतीतिअविस्मयोनिर्गर्वः । पुरुषस्तु । त्वयासदृशोऽन्योगुणवानभव

अहितादनपत्रपस्त्वमतिमात्रोज्झितभीरनास्तिकः । विनयोप
हितस्त्वयाकुतःसदृशोऽन्योगुणवानविस्मयः ॥ ७ ॥ स्तुतगोप
वधूरतेर्घ्नतोवृषमुग्रेनरकेऽपिसम्प्रति । प्रतिपत्तिरधःकृतैनसोज
नताभिस्तवसाधुवर्ण्यते ॥ ८ ॥ *********

तीत्यगुणवानिर्गुणःकुतःकुत्रनकुत्रपीत्यर्थः । त्वमहितात्वक्त्रोसन्भीरुः । नास्तित्र
पालज्जाविशेषोयस्येत्यनपत्रपःनिर्लज्जःलज्जासापत्रपान्यनइत्यमरः । अतिमात्रेणप्र
णामेनैवोज्झितभीरपाहृतारिभयः । ननुपराक्रमेणेतिभावः । अस्तिमतिरस्येत्यास्तिको
अस्तिपरलोकः । पूर्ववत्ठक् । नभवतीत्यनास्तिकइत्यर्थःविनयेनयोतीतःअपहितोहि
तानयेनःविस्मयेविगमोनभवतीतिअविस्मयोगर्वीअत्राहितइत्यर्थस्येयःअन्यत्रशब्दस्येय
योरित्यनयोःसङ्करः ॥ ७ ॥ ****************** ॥
॥ स्तुतेति ॥ गोपएववध्वोगोपवध्वः । स्त्रियाःपुंवदित्यादिनापुम्वद्भावः । तासुरति
स्तुतेयेनतस्यगोपीजनवल्लभस्येत्यर्थः । वृषंवृषभरूपिणंअरिष्टाख्यंअसुरंघ्नतोमारयतः ।

॥ हन्तेर्वटः शत्रादेशः ॥ अधःकृतैनसो निरस्तकल्मषस्य तवाग्रे भयङ्करेण नरकेण नरकासुरे
प्रतिपत्तिः प्रवृत्तिः पुरुषाकार इति यत्। सम्प्रति जनताभिर्जनसमूहैः साधु वर्ण्यते । अहो
महद्दुष्करं कृतमित्युपश्लोक्यते। पुरुषस्तु गोपानां वधूपुरतिष्कृताये ननन्यार दारिकस्य वृषं
धर्मं वृषभं वा घ्नतः। सुकृते वृषभे वृष इति विश्वः । अत एव कृतैनसः पापकृतः । तेन उग्रेण दारु
णेन नरकेण निरयेऽधःप्रतिपत्तिरधःप्राप्तिः । प्रतिपत्तिः पदप्राप्तौ पौरुषेऽपि चेति विश्वः । ज
नताभिः साधु वर्ण्यते दुस्तरो दुष्टस्य नरकपापिष्ठस्य नरकपाताद् इत्युद्घोष्यत इत्यर्थः । अ
त्रागोऽथः परदारकोऽप्यधःकृतिना इति विरोधाभासः श्लेषेण सङ्कीर्यते ॥ ८ ॥ **** ॥
॥ विहितेति ॥ सहानुचरैः सानुचरस्त्वं भूत्वा महीभृता चैद्येन विहितापचितिः कृतपूजा

विहितापचितिर्महीभृता द्विषतामाहितसाध्वसो बलैः । भव सानु
चरस्त्वमुच्चकैर्महतामप्युपरि क्ष्माभृताम् ॥ ९ ॥ घनजाल
निभैर्दुरासदाः परितो नागकदम्बकैस्तव । नगरेषु भवन्तु वीथयः प
रिकीर्णा वनजैर्मृगादिभिः ॥ १० ॥ ********

। लोकवेदयोः सानुचरस्त्वं राज्ञः पूज्यश्चेत् प्रसिद्धेरिति भावः । बलैः सैन्यैर्द्विषतामाहित
साध्वसो जनितभयः सन् अत एव उच्चकैरुन्नतस्त्वं महतामपि क्ष्माभृतां राज्ञामुपरितयास्त्वं।
क्षमो भवेत्यर्थः । पुरुषस्तु महीभृता चैद्येन विहितापचितिः कृतहानिः । भवेदपचितिः पू
जाव्ययहानिषु निष्कृताविति विश्वः । अत एव द्विषतां बलैराहितसाध्वसो भीषितः सन्मह
तां भूधराणामुपरि । सानुषु चरतीति सानुचरः सानुचारी भव । चरेष्टः अत्रापि शब्दार्थ
श्लेषसङ्करः ॥ ९ ॥ ************************** ॥
॥ घनेति ॥ तव नगरेषु वीथयो रथ्याः । घनजालनिभैर्मेघसमूहकल्पैः । वनजैर्वनभवै
र्मृगादिभिः । मृगप्रभृतिभिर्भद्रो मन्द्रो मृगश्चेत्येवं त्रिविधैरपीत्यर्थः । नागकदम्बकैर्गजवृ

न्दैः परितः परिकीर्णाः व्याप्ताः। अतएव दुरासदाः दुष्प्रवेशा भवन्तु। राज्ञः सन्धानेमत्वदैरेव
र्थ्यंते भविष्यन्तीत्यर्थः। पुरुषस्तु घनजालनिभैः सान्द्रातापपीनैः जालसमूहैः अनायद्वत्वम
रः। नागकदम्बकैः सर्पसङ्घैः वनजैर्मृगादिभिर्मृगव्याघ्रपुलिन्दप्रभृतिभिः। अथवा मृगाद्
दिभिः मृगभक्षकैः शार्दूलादिभिः दुरासदा भवन्तु राजविग्रहादरण्यं गम्यतामित्यर्थः ॥१०॥
॥ सकलेति ॥ उन्नतमुदारं धीरमविकारं चेतो यस्य। तेन तव रिपुः सकलैरपिहितं निरस्त
नं स्वपौरुषं यस्य सः। नियतव्यापदो विशिष्टापदो यस्य सः। अवर्द्धितोदयः असम्पूरिता
भ्युदयः। सततव्याधिः सततरोगः। अनीतिनीतिरहितः एवम्विधास्तु। पुरुषस्तु। अवे
गतः अमनस्विनः तेरिपुस्तैन्यः सकलैरपिहितः स्वपौरुषः अनिरस्तकृतात्मविक्रमः। वर्द्धिभा

सकलापिहितस्वपौरुषो नियतव्यापदवर्द्धितोदयः। रिपुरुन्नत
धीरचेतसः सततव्याधिरनीतिरस्तु ते ॥ ११ ॥ विकचोत्पलचारु
लोचनस्तव चैद्येन घटामुपेयुषः। यदुपुङ्गवबन्धुसौहृदात्त्वयि पाता
सद्गुणेन वासवः ॥ १२ ॥ ***********

गुरिरङ्गोपमवाध्योरुपसर्गयोरित्यलोपेन समासः। नियतं नित्यमिति यावत्। विगताप
द् अवर्द्धितोदयः छिन्नोदयः। वृधुवृद्धाविति धातोः कर्मणि क्तः। उन्नतधीरुदारबुद्धिः
सततव्याधिर्विगताधिर्मनोव्यथारहितः। अनीतिरितिबाधरहितोस्तु। अतिवृष्टिरना
वृष्टिः शलभा मूषकाः खगाः। प्रत्यासन्नाश्च राजानः षडेते ईतयः स्मृताः। अत्र सर्वत्र पदभ
ङ्गेनार्थद्वयप्रतिपादनाज्जतुकाष्ठवदभङ्गश्लेषप्रतीतेः शब्दश्लेषः ॥ ११ ॥ **** ॥
॥ विकचेति ॥ पुमान्गौरिव पुङ्गवः पुरुषर्षभः। उपमितसमासः। गोरतद्धितलुकीति स
मासान्तटच्प्रत्ययः। यदुषु पुङ्गवः यदुश्रेष्ठः। श्रेष्ठोऽक्षौरशपुङ्गवावितिवैजयन्ती। चै
द्येन कर्णेन घटां च नसन्धिं उपेयुषस्तव सम्बन्धीनि विकचोत्पलानि वासनार्थं विहितानि तान्ये

चारुलोचनानियस्यसः । सहसुरयामाध्वीगौड्यावासस्तुरः । गौडीपैष्टीचमाध्वीचविज्ञे
यासासुरात्रिधेतिवचनात् । अत्रराजन्यवैश्ययोःपैष्ट्यामेवनिषेधः । नवासवेनवमद्यं
नालिकेरादिकमितिसुरासवयोर्नपौनरुक्त्यं । बन्धुसौहृदान्बन्धौत्वयिस्नेहात्पानाया
श्यतित्वद्गृहेसहपानंकरिष्यतेसंप्रतितेसप्रतिलक्षत्वादितिभावः । पिबतेःकर्मणिलुङ् ।
पुरुषस्तु । हैयदुपुङ्गवयादववलीवर्द्द । चैद्येनसहघटांउपेयुषःसमराभियोगङ्गतस्य ।
नवविकचोत्पलचारुलोचनः । ससुरःसद्वेवावासवोपिबन्धुसौहृनात्उपेन्द्रोर्चयिसौभ्रा
तृत्वादित्यर्थः । पानान्नानानकिन्तुपुनर्मंशङ्काभीष्मादयइतिभावः । पानेस्तु चसुहृदस्य
भावःसौहृदमितिविग्रहःयुवादित्वादणप्रत्ययः । हृदयस्यहृल्लेखेतिहृद्भावःसौहृदा
द्भावविधानसामर्थ्यान्नहृद्भगेत्युभयपदवृद्धिः अतएवसौहृददौहृदशब्दाभ्यामणिहृ

चलितानकदुन्दुभिःपुरस्तबलस्त्वंसहसारणेनतम् । समितौरभसा
दुपागतस्सगदस्सम्प्रतिपत्तुमर्हसि ॥ १३ ॥ ******

द्भावाविनिवामनःसुहृदस्तुसौहृदमेवशब्दार्थश्लेषसङ्करः ॥ १२ ॥ ****** ॥
॥ चलितेति ॥ रभसाद्धर्षादुपागतःप्राप्तस्तंचैद्यंत्वं । पुरश्चलितानकदुन्दुभिःपुरोग
तवसुदेवः । वसुदेवोऽस्यजनकःसएवानकदुन्दुभिरित्यमरः । सबलोबलभद्रसहितः ।
सारणेनसारणाख्येनपुत्रेणसह । सगदःगदाख्येनअनुजेनसहितः । समितौसभायांस
म्प्रतिपत्तुंसम्भावयितुंअर्हसि । सर्वबन्धुसमेतःप्रत्येतुमर्हसीत्यर्थः । पुरुषस्तु । समितौस
मरेरभसाद्वेगादुपागतः । रभसोवेगहर्षयोः । समितिसमरे साम्येसभायामपिसंगतइत्य
भयश्चापिविश्वः । तंचैद्यंपुरतः । चलिताआनकाःपटहाःदुन्दुभयोभेर्य्यश्चयस्यसः ।
आनकःपटहोस्त्रीस्याद्भेरीस्त्रीदुन्दुभिःपुमानित्यमरः । सबलःससैन्यः । सगदःगदया
कौमोदक्यासहितःसन्सहसाहठादिति । रणेनयुद्धेनसम्प्रतिपत्तुमभियोक्तुमर्हसि । अ

आपिशब्दार्थस्त्वेषसङ्करः ॥ १३ ॥ ********************* ॥

॥ समरेष्विति ॥ किञ्च । समरेषुरिपून्विनिघ्नताअनिखुरेणेत्यर्थः । शिशुपालेनस
मेत्यैक्यंप्राप्य । सम्प्रतिसुचिरंबहुकालं । सत्वतःअपत्यानिपुमांसःसात्वताःयादवाः । उ
त्सादिभ्योऽञ् । तैःसर्वैःसर्वसात्वतैःसहविश्वस्तविलासिनीजनः । शिशुपालभयनि
वृत्तिविस्रब्धविलासिनीजनोभव । समौविश्वस्तविस्रब्धावित्यमरः । पुरुषस्तु । रिपुघाति
नाशिशुपालेनसहसमरेषुसमेत्यसङ्गत्यसम्प्रत्येव । सर्वसात्वतैःसहविश्वस्तविलासिनीज
नोभव । विश्वस्ताविधवासमेत्यमरः । आदित्सेतिचकारादनुक्तसमुच्चयार्थाच्छ्रश्रेर्नि
ष्ठायामिड्प्रतिषेधः । शिशूनामनुद्धतानामेवायंपालयितानोद्धतानामितिसर्वथाप्यद्

समरेषुरिपून्विनिघ्नताशिशुपालेनसमेत्यसम्प्रति । सुचिरंसहस
र्वसात्वतैर्भव विश्वस्तविलासिनीजनः ॥ १४ ॥ विजितक्रुधमीड्य
मानमसौमहतान्त्वामहितम्महीभृताम् । असकृज्जितसय्यँतम्पुरोमु
दितःसप्रमदम्महीपतिः ॥ १५ ॥ *********

वानष्टैवहनिष्यतीतिभावः ॥ १४ ॥ ****************** ॥

॥ विजितेति ॥ असौमहीपतिश्चैद्यःविजितक्रुधंमित्रवर्गानिरस्तक्रोधः । महतांमही
भृतांमहितंपूजितं । मतिबुद्धीत्यादिनावर्तमानेक्तःतद्योगेषष्ठी । असकृद्बहुशोजितः
संयतआजयोयेनसस्तं । समुदायःस्त्रियासंयत्तमित्याजिसमित्युधरित्यमरः । सप्रमदं
सहर्षत्वावां । द्वितीयाःचादेशः । पुरोग्रेमुदितःईक्षतांपश्यतां । पुरुषस्तु । विजितक्रु
धंत्यक्तक्रोधं । महतांमहीभृतांचैद्यादीनांमहितमरिमसकृज्जितश्चासौसय्यँतश्च ।
स्नानानुलिप्तवत्पूर्वकालेतिसमासः । बद्धोनद्धस्सय्यँतइतिवैजयन्ती । सप्रमदंसस्त्रीकं
त्वामितिपदच्छेदःसहृदीक्षतामाख्यतताम् ॥ १५ ॥ ************** ॥

॥ इतीति ॥ इतीत्थंभूतांगांवाचंअर्ज्जुन् । नेत्रद्रिग्वाणवाग्वारिपुगैामैनेनिविश्वः । अभिधायजोषमवस्थितं । तूष्णींजोषंभवेन्मौनइतिवैजयन्ती । द्विषःप्रणिधिंदूतं । सात्य किःकृष्णानुजः । अथदूतवाक्यानन्तरं । रथाङ्गंचक्रंपाणौयस्यतेनरथाङ्गपाणिनाहरि णा । प्रहरणार्थेभ्यःपरेनिष्ठासप्तम्यौभवतइतिपाणेःपरनिपातः । चलितात्प्रेरिताएका भ्रूर्यस्मिन्कर्म्मणितत् । गोस्त्रियोरुपसर्जनस्येतिह्रस्वः । चोदितःअस्योत्तरंदेहिइतिभ्रू संज्ञयाप्रेरितस्सन्नित्यर्थः । वाचःवदतिस्मावादीत् ॥ १६ ॥ ************ ॥

॥ कितान्द्वचस्तदेकविंशतिश्लोकैराह । मधुरमित्यादिना । कृतिनाकुशलेनत्वयावहिः प्रकाशे । मधुरंप्रियं । अन्तर्गर्भेअप्रियंवचस्तथातेनप्रकारेणवाचिउक्तं । वचेःकर्मणि

इतिजोषमवस्थितन्द्विषःप्रणिधिङ्गामभिधायसात्यकिः । वदति स्मवचोऽथचोदितश्चलितैकभ्रुरथाङ्गपाणिना ॥ १६ ॥ मधुर म्बहिरन्तरप्रियङ्कृतिनावाचिवचस्तथात्वया । सकलार्थतयाविभाव्य तेप्रियमन्तर्बहिरप्रियय्यँथा १७ ॥ **********

कुण्ठिचिणिवृद्धिः । यथायेनप्रकारेणसकलार्थतयासम्पूर्णाभयार्थतयाहेतुना । अन्तः प्रियंबहिरप्रियंविभाव्यतेअवधार्य्यते । प्रियगर्भप्रियंतथोक्तंतदस्माकंतुप्रियगर्भमप्रियमे वप्रतीयते । इदमुक्तचातुर्य्येनवैवेत्यभिप्रेत्योक्तंकृतिनेति अतोनश्रद्धेयमिदंवचइतिभावः ॥ १७ ॥ ********************************** ॥

॥ अथवाबहिरेवप्रियंअन्तरेवाप्रियंतथापिनग्राह्यमित्युपमयाव्यनक्ति ॥ अतीति । एक तोवहिरतिकोमलं । अन्यतःअन्तःसरसमाङ्गेयदंभोरुहस्यवृन्तंप्रसववंधनंतद्विककर्कशंप रुषं । एकमेवतेनवचनंइषदसमाप्तंशाकपलाशमहापत्रस्यतरुपत्रतुल्यं । शाकःपला शःसारःस्यात्वरदारुकरच्छदः । महापत्रोमहाशाकः वरदारुस्थिरच्छदइत्यभिधा

नंरत्नमालायां। ईषदसमाप्तौकल्पपदेश्यदेशीयरइतिदेश्यप्रत्ययः। कल्पदेश्यदेशी यानित्यादृश्यवाचकानीतिदण्डी। तस्यभावस्तत्तनांस्फुटंवहति। अतःपुरुषस्यबहि र्माधुर्य्यंयथाशाकपलाशवदितिभावः। अत्रशाकपलाशोपमायाःपद्मवृत्तोपमासापेक्ष त्वात्सङ्करः॥ १८ ॥ ************************ ॥

॥ नन्वप्रियगर्भेपितवाक्येगुणगृह्यैःप्रियमेवगृह्यतांहंसैःक्षीरमिवाम्भसीत्याशंक्याह॥ प्रक टमिति। प्रकटंप्रकाशं। मृदुनाममृदुकल्पंजल्पतःकथयतः। अन्तरान्तःपरुषमनिष्टम र्थंसृजतः। ईदृशाज्जन्तःसुधियस्यात्पुरुषादीदृशःशकुनादिववहिःसुभंकरंकुर्वतो।

अतिकोमलमेकतोऽन्यतःसरसाम्भोरुहवृन्तकर्कशम्। वहतिस्फु
टमेकमेवतेवचनंशाकपलाशदेश्यताम्॥ १८ प्रकटम्मृदुनाम
जल्पतःपरुषंसृजतोऽर्थमन्तरा। शकुनादिवमार्गवर्त्तिभिःपुरु
षादिजितव्यमीदृशात्॥ १९ ॥ हरिमर्चितवान्सभूपतिर्यदिप
ज्ञस्तवकोऽत्रमत्सरः। न्यसनायससौरभस्यकस्तरुसूनस्यशिरस्य
सूयति॥ २० ॥ ****************

न्तःपरुषंसृजतःपिङ्गलादिपक्षिणइवमार्गवर्त्तिभिःपिञ्जरध्वगैस्तद्विजितव्यंतवाण तोपिग्राह्यंविषयसंपृक्ताभ्रतावदरिवलस्यानर्थहेतुत्वादितिभावः। विजइडीनोद्वि त्वान्नगुणः॥ १९ ॥ ************************ ॥

॥ एवंदूतंनिर्भर्त्स्यअथचैद्यंतद्दोषोद्घाटनपूर्वकंभर्त्सयते। हरिमित्यादिना। सभूपति र्युधिष्ठिरोहरिमर्चितवान्यदिपूजितवांस्तेन्। अत्रहर्य्यर्चनेनतवराज्ञश्चैद्यस्यमत्सरःकः निरर्थकइत्यर्थः। ससौरभस्यपरिमलयुक्तस्यतरुसूनस्य। तरुग्रहणंसूनस्यसाधार णद्योतनार्थं। शिरसिन्यसनायार्पणायकोऽसूयतिनकोपीत्यर्थः। क्रुधद्रुहेत्यादिना

सम्प्रदानसंज्ञा। सर्वत्रगुणानहत्सुगुणाश्रैर्वक्रमन्यनेतदस्थानां किमत्रवृथासन्तापेनेतिभा
वः। अत्रहरितरवन्नयोर्वाक्यद्वयेबिम्बप्रतिबिम्बभावेनार्चनान्शिरोधारणरूपसमान
धर्मनिर्देशान्दृष्टान्तालङ्कारः॥ २० ॥ ********************* ॥
॥ अथकथंमहान्महतःपूजांसहतइत्याशङ्क्यहरिचैद्ययोर्महदन्तरंमनसिनिधायस
मान्यतःसुजनदुर्जनयोरन्तरंचतुर्भिराह। सुकुमारमित्यादि। लघीयसामल्पीयसां
हृदयंसुकुमारंननु। कुतःयतोऽमीलघीयांसखलुदुर्गंहृदयगतंअप्रियं। सहसैवबहिः
स्येवसमुद्गिरन्तिसमुच्चारयन्ति। मनीषिणस्तुदप्रियंकथंचित्सम्भाव्यमानमपीतिशेषः
अन्तरेचक्षपयन्तिजरयंतिनतूद्गिरन्तीत्यर्थः। अहोइत्याश्चर्य्ये। चैद्यस्योद्गिरंतिनैवकृ

सुकुमारमहोलघीयसांहृदयन्तदगतमप्रियय्यँतः। सहसैवसमुद्गि
रन्त्यमीक्षपयन्त्येवहितन्मनीषिणः॥ २१ ॥ उपकारपरःस्व
भावतःसततंसर्वजनस्यसज्जनः। असतामनिशन्तथाप्यहोगुरुहृ
द्रोगकरीतदुन्नतिः॥ २२ ॥ ************

रिरितिअहोमहदन्तरमनयोरितिभावः। अतएवाप्रस्तुतात्सामान्यप्रस्तुतविशेषप्रती
तिप्रतिपत्तिरूपोयमप्रस्तुतप्रशंसाभेदः। अप्रस्तुतस्यकथनात्प्रस्तुतंयत्रगम्यते। अप्रस्तुत
स्यप्रशंसेयंसाख्यातिर्यन्त्रिनेतिलक्षणात्। आदिशब्दात्सामान्यविशेषसंग्रहःएवमुत्त
रश्लोकत्रयेपिद्रष्टव्यंविशेषन्तुवक्ष्यामः॥ २१ ॥ ***************** ॥
॥ उपकारेति॥ किञ्च। सज्जनःस्वभावतःसततंसर्वजनस्योपकारपरोभवति। ननुअ
स्वयाधिपरःकदाचित्कस्यचिदेवेतिभावः। तथासर्वोपकारित्वेपितदुन्नतिस्तस्यसज्जन
स्योत्कर्षः। असतामसाधूनामनिशं। गुरुहृद्रोगकरीअन्यन्तहृदयसन्तापकारिणी। त
थापिअहोआश्चर्य्यं। हृज्जोहेत्वित्यादिनाटच्छ्रव्येटप्रत्ययेटिड्ढाणञित्यादिनाङीप्

। हरिश्चैद्ययोरेवंवैरभूतावितिसैवाप्रस्तुतप्रशंसा ॥ २२ ॥ ************ ॥

॥ परितप्यतइति ॥ किञ्च । उत्तमःपरवृद्धिभिर्नपरितप्यते । नव्यथतेएवंउत्तमस्यापर मुभद्देषएवनास्तीत्यर्थः । अपरोमध्यमएवेत्यर्थःपरितप्तोपि । शोभनासंवृत्तिःपरितापगोपनंयस्यसःसुसम्वृत्तिःसन्तप्तमपि । परमुभद्देषंनप्रकाशयतीत्यर्थः । अधमस्तु । परवृद्धिरहितव्यथःउत्पादितसन्तापः । तथास्फुटनिर्भिन्नःप्रकाशितोदुराशयःपरमुभद्देषलक्षणोदुरभिप्रायोयस्यसःपरमुभद्देषंप्रकाशयतिचेत्यर्थः । चैद्यश्चाधमोहरिस्तूत्तम इतिप्रतीतिःपूर्वोक्तएवालङ्कारः ॥ २३ ॥ ***************** ॥

॥ ननुमानितांपरोत्कर्षेपरद्वेषोभूषणमेवेत्याशंक्यनेत्याह ॥ अनिराकृतेति । अनिराकृता

परितप्यतएवनोत्तमःपरितप्तोप्यपरःसुसम्वृत्तिः । परवृद्धिभिरहितव्यथःस्फुटनिर्भिन्नदुराशयोऽधमः ॥ २३ ॥ अनिराकृततापसम्पदंफलहीनांसुमनोभिरुज्झिताम् । खलतांखलतामिवासतींप्रतिपद्येतकथंबुधोजनः ॥ २४ ॥ ✲✲✲✲✲✲✲✲

अनिवारितातापसन्तापातिशयोययातां । एकत्रसन्तापजननैकस्वभावादपरत्रासतच्छत्रयाविरहाच्चेतिभावः । तथाफलहीनांतांइहामुत्रयोरुपकारशून्यां । प्रत्यनेभयत्राप्यनर्थकारीचेतिभावः । अन्यत्रसर्वस्वहरितां । सुमनोभिर्बुधैरुज्झितांचान्यत्रपुष्पैर्वर्जितां । सुमनाःपुष्पमालतीःपुष्पमाल्योःस्त्रीदेवयुद्धयोःपुमानितिवैजयन्ती । असतींदूष्टांअन्यत्रनिरूपाख्यां । खलस्यभावःखलतातांखलतांदुर्जनत्वं । खस्यलतातांखलतांगगनलतिकामिवबुधोजनःसदसद्विवेककुशलोजनःकथंप्रतिपद्येतावलम्बेत । कथमपीत्यर्थः । वृथामत्सरोनकस्यापिगुणइतिभावः । तथापिखलतांप्रतिपद्यतेनचैवंहरिरितिप्रतीतेःसैवाप्रस्तुतप्रशंसाखलतामिवेत्युपमायाःसङ्कीर्य्यतेसत्यासत्यविज्ञानमर्थेशद्वःकरोतिहीं

न्निन्यायाद्सत्याखलनिकायाःखलतोपमत्वमपिप्रतीतिरत्याप्रसिद्धिः ॥ २४ ॥ ** ॥

॥ नन्वेवंमहानुभावोहरिःकिमर्थंतथासद्सिराज्ञानिर्भर्त्स्यमानोमौनमास्थितइत्याशङ्क्य मनादरान्ननुकानर्थ्यादित्याह । प्रतीति । केशवः । शपमानायक्रोशते । खरितत्वा दात्मनेपदं । चेदिभूभुजे । क्रियाग्रहणात्सम्प्रदानत्वं । प्रतिवाचंप्रत्युत्तरंनादत्त । केस रीसिंहोघनध्वनिमनुहुंकुरुतेप्रतिगर्जति । गोमायुरुतानिशिवारुतानितानुहुंकुरुते । स्त्रियांशिवाभुरिमायुःगोमायुर्मृगधूर्त्तकाइत्यमरः । महतामधमेष्ववज्ञैवेतिभावःदृष्टा न्तालङ्कारः ॥ २५ ॥ ************************** ॥

प्रतिवाचमदत्तकेशवःशपमानायनचेदिभूभुजे । अनुहुंकुरुतेघन
ध्वनिंनहिगोमायुरुतानिकेसरी ॥ २५ ॥ जितरोषरयामहा
धियःसपदिक्रोधजितोलघुर्जनः । विजितेनजितस्यदुर्मतेर्म
तिमद्भिस्सहकाविरोधिता ॥ २६ ॥ वचनैरसतामहीयसोनख
लुव्येतिगुरुत्वमुद्धतैः । किमपैतिरजोभिरौर्वरैरवकीर्णस्यमणेर्महा
र्घताम् ॥ २७ ॥ ***************

॥ किञ्चराज्ञोहरिणाविरोधोपितयोग्यइत्याह ॥ जितेति । महाधियः । सुधियोजित रोषरयायैस्तेचोक्ताः । लघुरल्पोजनस्तुसपदिक्रोधजितः । एवंविजितेनजितक्रोधेन जितस्येत्यर्थः । दुर्मतेर्मूर्खस्यमतिमद्भिःपण्डितैःसहविरोधितास्पर्द्धाका । मूर्खपण्डित योर्मैत्रीचस्पर्द्धापीनसंगतेत्यर्थः । मूर्खस्यायंचैद्यइतिअप्रस्तुतात्सामान्यविशेषप्रतीतेरप्र स्तुतप्रशंसाभेदः ॥ २६ ॥ ************************* ॥

॥ नापिचैद्यप्रलापैःकृष्णस्यकिञ्चिल्लाघवमित्याशयेनाह । वचनैरिति । उद्धतैर्निष्ठु रैरसतांदुर्जनानांवचनैर्महीयसोमहत्तरस्यगुरुत्वंगौरवंनव्येतिनापैतिखलु । और्वरैर्भौ

मैः । उर्वरासर्वशस्याढ्या भूमीस्यादुर्विमात्रकाइति विश्वः । रजोभिरवकीर्णस्य स्वच्छस्य मणेर्महार्घतां मूल्यतां । मूल्ये पूजाविधावर्घमित्यमरः । अपैतिकिंनापैतीत्यर्थः अत्र मणिमहीयसोर्वाक्यभेदेनप्रतिबिम्बकरणाद्दृष्टान्तालङ्कारः । महीयसइतिसामान्याद्धरेरपिविशेषप्रतीतेरप्रस्तुतप्रशंसा चेतिसङ्करःहरिमणयोरुपमानाच्चेतिभावः ॥ २७ ॥ * ॥ युक्तञ्चैतत्वादृश्यं दुरात्मनामित्याह ॥ परीति । यस्यदेहिनोजन्तोःपरितोषयितापरेषामानन्दयिता । स्वगतोगुणःकश्चनकश्चिदपिनास्ति । अल्पकःतुच्छः सइतिशेषःयत्तदोर्नित्यसम्बन्धात् । परदोषकथाभिरन्यजनदोषोक्तिभिः स्वजनंमहीयसइतिसामान्याद्धरेरितिविशेषप्रतीतेरप्रस्तुतप्रशंसा चेतिसङ्करःतनुमध्यस्थमितिभावः । तोषयितुमिच्छ

परितोषयितानकश्चनस्वगतोयस्यगुणोऽस्तिदेहिनः । परदोषकथाभिरल्पकःस्वजनंतोषयितुंकिलेच्छति ॥ २८ ॥ सहजान्धदृशःस्वदुर्नयेपरदोषेक्षणदीव्यचक्षुषः । स्वगुणोच्चगिरोमुनिव्रताःपरवर्णग्रहणेष्वसाधवः ॥ २९ ॥ * * * * * * * * *

तिकिलइहतेखलु । अतोऽवश्यकर्त्तव्यमित्यस्येत्यर्थःचैद्यस्यापिनिर्गुणत्वात्परदूषणंतुक्तमितिअतएवाप्रस्तुतप्रशंसाभेदः ॥ २८ ॥ * * * * * * * * * * * * * * * * ॥ ॥ नन्वात्मनोनिर्दोषत्वाभिमानादित्थंविजृम्भणमित्याशङ्क्याह ॥ सहजेति । असाध्वःखलाः । स्वदुर्नयेस्वदोषेमहत्यपीतिभावः । सहजास्वाभाविकोअन्धाअपश्यन्तीदृग्येषांतेजात्यन्धइत्यर्थः । परदोषाणांसूक्ष्माणामपीतिभावः । ईक्षणेदर्शनेदिव्यचक्षुषोऽप्रतिहतदृष्टयः । किञ्चस्वगुणेषूच्चगिरःआत्मप्रशंसायामतिप्रगल्भवाचालइत्यर्थः । मुनिव्रतामौनव्रतिनःपरवर्णग्रहणेषुपरस्तुतिवचनेषु । स्तुतौवर्णान्तुवाक्षरइत्यमरः । मुनिव्रतामैनव्रतिनःअर्शआदिभ्योऽच् । चैद्यश्चैवंविधइतिप्रतीतेरप्रस्तुतप्रशंसा ॥ २९ ॥ * * * * * ॥

॥ साधवस्तु नैवमित्याह ॥ प्रकटानीति । आर्य्यचेतसां सुमनसां प्रकटान्यपि प्रकाशानिप
रवाच्यानि दूषणानि चिरयगोपितुं गोपायितुं सञ्चरितुमित्यर्थः । आयादय आर्द्धधातुके
वेति विकल्पादायप्रत्ययाभावः । मह नैपुण्यं कौशलं । अथेति वाक्यारम्भे । अथात्मनो गु
णान् विवरीतुं प्रकटयितुं आत्मप्रशंसां कर्तुमित्यर्थः भृशमाकौशलमत्यन्तमकौशलं साधवो
नपरन्निन्दन्ति । नवात्मानं प्रशंसन्ति । आत्मप्रशंसां परगर्हामिति वर्जयेदित्यापस्त
म्बीये निषेधस्मरणादिति भावः । नन्नः सुचिरमरक्षेत्रत्तु कुशलानिपुणानामिति विकल्पा
न्नन्पूर्वपदस्यापि वृद्धिः कुशलस्यैवम्भूतइति विशेषप्रतीतेरप्रस्तुतप्रशंसैव ॥ ३० ॥ * ॥

॥ किमिति ॥ किञ्च । महामनो महात्मा । अखिललोककीर्त्तितं खलु एव सर्वैर्लोकैः

प्रकटान्यपि नैपुणं महत् परवाच्यानि चिरय गोपितुम् । विवरीतुम
थात्मनो गुणान्भृशमाकौशलमार्य्यचेतसाम् ॥ ३० ॥ * * *

किमिवाखिललोककीर्त्तितं कथयत्यात्मगुणं महामनाः । वदि
ता न लघीयसोऽपरः स्वगुणं तेन वदत्यसौ स्वयम् ॥ ३१ ॥ * *

व्याख्यानमात्मगुणं न वदिता न वक्ता किमिति किमर्थं कथयति एव खलु एव सर्वैः लोकैः कीर्त्यमा
नत्वादित्यर्थः । लघीयसस्तु च स्वगुणं वदिता वक्ता । वदेस्तृन्प्रत्ययः । अत एव न
लोकेत्यादिना षष्ठीप्रतिषेधः । अपरोऽन्यो नास्ति तेन कारणेनासौ लघीयान् स्वगुणं स्वय
मेव वदति न केवलं निषेधात् किञ्च प्रयोजनाभावात् किञ्च प्रयोजनाभावादपि महान् आत्म
प्रशंसां न करोति तुच्छस्तु तदपि स्वयमेव प्रलपतीत्यर्थः पूर्वार्द्धे पदार्थहेतुकं काव्यलिङ्गं उत्त
रार्द्धे वाक्यार्थहेतुकं चोन्नेयं कुशलचैद्ययोर्वैरवध्याविति विशेषणं प्रतीतेरप्रस्तुतप्रशंसा चेति स
ङ्करः ॥ ३१ ॥ ******************************* ॥

॥ किञ्च महात्मनः क्रुद्धाः कालेपराम क्रमं तिदुरात्मनस्तु केवलं प्रलपन्तीत्याह ॥ विसृज

त्मीति । परे नराः सत्पुरुषाः विषमाशीविषवत्क्रूरसर्पवद्विषोपमा । अविकत्थिनः नात्म
श्लाघिन एव क्रुधं कोपं विसृजन्ति वमन्ति पराक्रमन्तीत्यर्थः । अन्तरभ्यन्तरे । असाररूप
तां निःसाररूपतां दधतो दधनाः । नाभ्यस्ताच्छतुरिति नुमभावः । इतरे जना दुर्जनाः
पटहा इव ध्वनेरेव सारो बलं येषां ते ध्वनिसारा वाक्शूरा एव न तु बलशालिन इति भावः अत्रा
पीदृशीकृत्य चैद्याविषयप्रस्तुतसामान्यादप्रस्तुतविशेषप्रतीतेरप्रस्तुतप्रशंसाभेदः ॥ २२ ॥
॥ अभिधायतदा तदप्रियमित्यादिना यदुक्तं तत्र उभयं युगपत्प्रियाप्रियं भिहितं तत्रोत्तरमाह
॥ नरकेति । स महीपतिश्चेदिभूपतिर्येन विधिना येन प्रकारेण सन्धिविग्रहेण । नरकच्छि
दं नरकान्तकं किमन्येषामशक्तानामिति भावः । ईक्षितुं इच्छति तस्य विधेः सदृशमुत्तरं त्र

विसृजन्त्यविकत्थिनः परे विषमाशीविषवन्नराः क्रुधम् । दधतोन्तर
साररूपतां ध्वनिसाराः पटहा इवेतरे ॥ २२ ॥ नरकच्छिद
मिच्छतीक्षितुं विधिना येन स चेदिभूपतिः । द्रुतमेतु न हापयिष्यते
सदृशं तस्य विधातुमुत्तरम् ॥ २३ ॥ * * * * * * *

त्रिक्रियां स्नेहो विरोधो वा विधातुं न हापयिष्यति । अविलम्बेन विधास्यत इत्यर्थः जहातेर्ण्य
न्तात्कर्मणि लृट् । विधानक्रियया अनभिधानेऽपि प्रधानभूतक्रियया अभिहितत्वादुत्तर
मिति कर्मणि द्वितीया । द्रुतं शीघ्रमेतु आगच्छतु आगमनेऽस्य यमेव हीयत इति भावः ॥
२३ ॥ * * * * * * * * * * * * * * * * * * * * * * * * * * * * * * * * * * ॥
॥ नन्वभिधायेत्यादौ मया सान्त्वमेव विवक्षितं न विग्रहस्तत् किमुभयाभ्युक्तयेत्याशङ्क्याह
॥ समनह्येति ॥ अङ्ग्यामन्त्रणे । असौ भूपतिश्चैद्योऽमुना हरिणा सह सन्धित्सुर्यदि
सन्धातुमिच्छुः स्यात् । दधातेः सन्नन्तादुप्रत्ययः । किं समनह्यत् किमर्थं सन्नद्धवान् ततो नायं स
न्धित्सुरिति भावः । नह्यतेः स्वरितेत्वात्कर्त्तरि लुङि तङ् झलो झलीति सकारलोपः ।

कृत्स्नेभीषणार्थं सन्नाह इत्यत आह । हरिः कृष्णस्सिंहश्च केनाक्रमणेनाभिभवेन याभी
त्या सन्नतिं नम्रतां बिभ्रीत बिभृयादित्यसम्भवः सम्भवो नास्ति खल्वित्यर्थः ॥ ३४ ॥ * ॥
॥ अथाक्रमणेऽनिष्टमाचष्टे ॥ महत इति । कुधीरसन्नविनाशत्वाद्विपरीतबुद्धिमा
न् । महतो महानुभावान् । तरसा बलेन । तरसा बलरंहसी । तेन विलङ्घयन्नाक्रमयन्नि
जदोषेण स्वापराधेनैवोल्लङ्घनरूपेण विनश्यति । तथाहि इद्धदीधितिर्दीप्तार्चिरग्निः स्वे
च्छया शलभान् पतङ्गान् । समौ पतङ्गशलभावित्यमरः । इन्धनं दाह्यं न कुरुते खलु कि
न्तु ते एव निजौद्धत्यादग्निं पतन्तः दह्यन्त इत्यर्थः इतः परं न क्षम्यत इति भावः दृष्टान्तालङ्कारः
॥ ३५ ॥ ****************************** ॥

समनद्ध किमङ्ग भूपतिर्यदि सन्धित्सुरसौ सहामुना । हरिरक्रमणेन
सन्नतिं किल बिभ्रीत भियेत्यसम्भवः ॥ ३४ ॥ महतस्तरसा विलङ्घय
न्निजदोषेण कुधीर्विनश्यति । कुरुते न खलु स्वयेच्छया शलभानिन्ध
नमिद्धदीधितिः ॥ ३५ ॥ यदपूरि पुरा महीपतिर्न मुखेन स्वयमाग
सां शतम् । अथ सम्प्रति पर्यपूरयत्तदसौ दूतमुखेन शार्ङ्गिणः ॥ ३६ ॥

॥ ननु सहने शार्ङ्गिणः शतापराधसहनप्रतिज्ञाभङ्गः स्यादित्यत आह ॥ यदिति । पुरापू
र्वं महीपतिश्चैद्यो मुखेन स्ववाचा आगसां अपराधानां शतं । आगोऽपराधो मन्तुश्चेत्यमरः ।
शार्ङ्गिणः कृष्णस्य स्वयं नापूरि नापूरयदित्यर्थः । पूरयतेः कर्त्तरि लुङ् दीपजनेत्यादिना
विकल्पाच्चिण्प्रत्यये चिणो लुक् । अथ स्वप्रलापानन्तरं । सम्प्रतीदानीमसौ चैद्यः दूतमुखे
न दूतवाचा आगसां शतं पर्यपूरयत् पूरयामास । दूतमुखत्वात् राज्ञा तेनैव सक्रोधाद्वस
रस्यानेन महदुपक्रान्तमायुष्मतेति भावः । पूरयतेर्लुङि णौ चङ्युपधाया ह्रस्वः अभ्यासदीर्घः ॥
३६ ॥ ****************************** ॥

॥ निगमयन्फलितमाह ॥ यदिति । अनर्गलमविष्कम्भं विक्तृतमितियावत् । तद्विष्कम्भेऽर्गलं तन्नेत्यमरः । तद्गोपुरं पुरद्वारं तद्देवाननं यस्य सः वाच्यावाच्यविवेकशून्य इत्यर्थः । त्वमितः इतःपरं । यदप्रियं वक्ष्यसि तदप्रियं विवरिष्यति । चिरस्य चिरात्प्रभृति । चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः इत्यव्ययेत्वमरः । समयोद्वीक्षणेन संविद्गतोक्षणेन रक्षिता निरुद्धामित्यर्थः । समयाः शपथाचारकालसिद्धान्तसंविद इत्यमरः । कुधं क्रोधं विवरिष्यति । वृतो वेति दीर्घविकल्पः । इतःपरं त्वमपि दंड्य एवेति भावः ॥ २७ ॥

॥ निशमय्येति ॥ एतस्मामनाप्तुः असंस्पृष्टुः सत्यवादिन इतिभावः । आप्तोनेसूचु ।

यदनर्गलगोपुराननस्त्वमितो वक्ष्यसि किञ्चिदप्रियम् । विवरिष्यति नश्चिरस्य नः समयोद्वीक्षणरक्षिता क्रुधम् ॥ २७ ॥ निशम य्य नदूर्जितं शिनेर्वचनं तन्नप्तुरनाप्तुरेतसाम् । पुनरुज्झितसाध्वसो द्विषामभिधत्ते स्म वचो वचोहरः ॥ २८ ॥ विविनक्ति न बुद्धिदुर्विधः स्वयमेव स्वहितं पृथग्जनः । यदुदीरितमप्यदः परैर्न विजानाति तदद्भुतं महत् ॥ २९ ॥ ************

शिनेर्नाम्नः कस्यचिद्यादवस्य नप्तुः प्रपौत्रस्य सात्यकेरितिभावः । यदूर्जितं अर्थयुक्तं वचनं निशमय्य श्रुत्वा । ल्यपि तघुपूर्वादिति णेरयादेशः । पुनर्भूयोऽप्युज्झितसाध्वसं त्यक्तभयं यथा तथा । द्विषां वचो हरतीति वचोहरो दूतः । हरतेरनुद्यमनेऽच । वचोऽभिधत्ते स्माभिहितवान् ॥ २८ ॥ *********************** ॥

॥ विविनक्तीति ॥ बुद्ध्या दुर्विधो दरिद्रः बुद्धिशून्य इत्यर्थः । निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतस्स इत्यमरः । पृथक्जनः पामरजनः । स्वयमेव परोपदेशं विनैवात्महितं न विविनक्ति न बुध्यतमेवेति भावः । किन्तु परैरुदीरितं उपदिष्टमप्यदो हितं न जानातीति निव

तत्त्वमहदद्भुतं । यतःस्वोक्तंनगृह्णातीतिभावः ॥ ३९ ॥ ************ ॥

॥ अथकिमङ्गुतंमूर्खेष्विव्याशयेनाह ॥ विदुरिति । बुधाःबुद्धिमन्तः । एष्यत्तमागामि
नंअपायमनर्थमात्मनास्वयमेव । प्रकृत्यादिभ्यउपसंख्यानात्तृतीया । विदुर्वेदन्ति । वि
देर्लटोवेतिविकल्पाज्जुसादेशः । अथवापरतोऽन्यस्माद्वाप्तात्श्रद्दधतेविश्वसन्तिआप्तो
क्तंगृह्णन्तीत्यर्थः । श्रदन्तरोपसंख्यानमितिउपसर्गसंज्ञोपसंख्यानाद्धेतोःप्राक्प्रयोगः ।
अल्पधीर्मूढस्तुअनुभवादृतेस्वानुभावंविना । अन्यारादितरर्त्तेइतिपञ्चमी । नप्रमिमी
तेनजानाति । स्वतःप्रमातोउत्तमःपरतःप्रमातामध्यमःअधमस्तुस्वानुभविकप्रमाणइत्य
र्थःअधमस्त्वमितिभावः । अतएवाप्रस्तुतसामान्यात्प्रस्तुतविशेषप्रतीतेरप्रस्तुतप्रशंसाभेदः

विदुरेष्यदपायमात्मनापरतःश्रद्दधतेऽथवाबुधाः । नपरोपहित
न्नचस्वतःप्रमिमीतेऽनुभवादृतेऽल्पधीः ॥ ४० ॥ कुशलङ्खलुतु
भ्यमेवतद्वचनङ्कृष्णयदभ्यधामहम् । उपदेशपराःपरेष्वपिस्वविना
शाभिमुखेषुसाधवः ॥ ४१ ॥ **********

********************** ॥
॥ ४० ॥ ******************************

॥ अतःप्रस्तुतेकिमायातंतत्राह ॥ कुशलमिति । हेकृष्ण अहंयद्वचनमभ्यधांअभिधाये
त्यादिनाराज्ञासन्धिगुणार्थविग्रहस्त्वनर्थायेत्येवमवोचमित्यर्थः । तद्वचनंतुभ्यमेवकुश
लंहितं । चतुर्थीचाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैरितिचतुर्थी । ननुहितेषु
हितोपदेशात्प्रत्ययःकथमित्याशंकामर्थान्तरन्यासेनपरिहरति । साधवःसुजनाःस्ववि
नाशाभिमुखेषुप्रवर्त्तविरोधादात्मविनाशहेतुभूतकर्मप्रवृत्तेष्वित्यर्थः । परेषुशत्रुष्वपि
उपदेशपराःउपदिशन्तेकृपालुत्वादितिभावः ॥ ४१ ॥ ************* ॥
॥ तथापिअर्थद्वयेत्वद्वाक्येकिङ्ग्राह्यंतत्राह ॥ उभयमिति । मयासांत्वंसामादि । अ

र्थत्रिपक्षान्तरेइनरद सांत्वं विग्रहं चेत्यर्थः । युगपदुदितं त्वन्नुमनीषयाबुद्ध्यापृथग्भेदेन
प्रविभज्य विविच्य यत्स्वगुणं तत्त्वद्वये पित्वरयायत्क्षुभोदर्कं तत्करिष्यसि । किलखलु हंसः
क्षीरमिवाम्भसीतिभावः ॥ ४२ ॥ ******************** ॥
॥ अथवा सुजनः स्वभावात् कृतोपिहितोपदेशोमूर्द्धैपुनिष्फलइत्याह ॥ अथवेति । अ
थवा अभिनिविष्टबुद्धिषुदुराग्रहग्रस्तचित्तेषु विषयेषु । सुभाषितं हितोपदेशवचनं । र
विरागिवुतपनानुरक्तेषु कमलाकरेषु शीतरोचिषः शीतभानोः करजालमिव व्यर्थकतां निर
र्थकतां व्रजति । तस्मात्त्वमेव त्वयि हितोपदेशश्चिन्त्यइतिभावः ॥ ४३ ॥ **** ॥

उभयं युगपन्मयोदितं त्वरया सान्त्वमथेतरच्च ते । प्रविभज्य पृथङ्म
नीषया स्वगुणं यत्किल तत्करिष्यसि ॥ ४२ ॥ अथवाभिनिविष्ट
बुद्धिषु व्रजति व्यर्थकतां सुभाषितम् । रविरागिषु शीतरोचिषः कर
जालं कमलाकरेष्विव ॥ ४३ ॥ अनपेक्ष्य गुणागुणौ जनः स्वरु
चिं निश्चयतोनुधावति । अपहाय महीशमार्चिचत्सदसि त्वा ननु
भीमपूर्वजः ॥ ४४ ॥ ***********

॥ नन्वभिनिविष्टोऽपि सुजनैर्बलादपि हिते प्रवर्त्तयितव्य इत्याशंक्य न शक्यत इत्याह ॥
अनपेक्ष्येति । जनस्त्वादृशः पृथक् जनः । गुणागुणौ गुणदोषौ विप्रतिषिद्धत्वात् अधिकर
णवाचीतिद्वन्द्वैकवद्भावः । अनपेक्ष्य विमृश्य निश्चयतः स्वनिश्चयादेव स्वरुचिं स्वेच्छा
मनुधावतिनिनुस्वहितमनुसरतीत्यर्थः । तत्र पार्थ एव प्रमाणमित्याह । भीमपूर्वजः भी
माग्रजो युधिष्ठिरः मूर्खाग्रणीरितिभावः । महीशं चेदिपं अपहाय सदसि त्वामार्चिचत् अ
र्चितवान् खलु । अर्चयतेर्णौ चङ्यजादेर्द्वितीयस्येत्यत्राः संयोगादेरितिरेफवर्जितस्यै
काचो द्विर्भावः विशेषेण सामान्येन समर्थरूपो र्थान्तरन्यासः ॥ ४४ ॥ ***** ॥

॥ पार्थानादरादेवंराज्ञोलाघवार्णवलब्धमित्याशंक्यपरिहरति ॥ त्वयीति । हेकृष्णत्वयि
भक्तिमताप्रेमवता । कुरूणांराट् । सत्सुद्विषेत्यादिनाक्विप् । तेनकुरुराजाकुरुराज्ञापा
र्थेनजसत्कृतोनार्चितश्चेदिपोगुरुरेवपूज्यएव । तथाहिप्रियंमांसंयस्यतेनप्रियमांसमृगे
नमृगाधिपेनसिंहेनोज्झितस्त्यक्तः । करिकुम्भजोमणिर्मुक्तामणिरवद्योगर्ह्यः किंअनव
द्यएवेत्यर्थः मूर्खानादरान्नमहतांकिञ्चिल्लाघवमित्यर्थः । कुपूयकुत्सिताऽवद्यखेटगर्ह्याण
काःसमाइत्यमरः । अवद्यपण्येत्यादिनानिपातः दृष्टान्तालङ्कारः ॥ ४५ ॥ *** ॥
॥ विदुषांतुपूज्यएवचैद्यइत्याशयेनाह ॥ क्रियतइति । धवलोनिर्मलोधवलैर्निर्मलैरेव

त्वयिभक्तिमतानसत्कृतःकुरुराजागुरुरेवचेदिपः । प्रियमांसमृगा
धिपोज्झितःकिमवद्यःकरिकुम्भजोमणिः ॥ ४५ ॥ क्रियते
धवलःखलूच्चकैर्धवलैरेवसितेतरैरधः । शिरसाधमधत्तशङ्करःसु
रसिन्धोर्मधुजित्तदङ्घ्रिणा ॥ ४६ ॥ अबुधैःकृतमानसंविद
स्तवपार्थैःकुतएवयोग्यता । सहसिप्लवगैरुपासितन्नहिगुञ्जाफल
मेतिसोष्मताम् ॥ ४७ ॥ ✳✳✳✳✳✳✳✳✳✳✳✳✳

। उच्चकैरुन्नतैःक्रियतेखलु । सितेतरैर्मलिनैरधःक्रियते । तथाहिशङ्करःशिवःसुरसि
न्धोर्गङ्गांमन्दाकिनीपूरंशिरसाअधत्तउभयोर्निर्मल्यादितिभावःमधुशत्रुर्विष्णुस्तदङ्घ्रिंअ
ङ्घ्रिणाअधत्तस्वयंमलिनत्वादितिभावः । अतोविशेषविदुषांराज्ञापूज्यएवेतिभावःविशे
षणसामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४६ ॥ ************ ॥
॥ किञ्चयथापार्थानादराद्राज्ञोनकिञ्चिल्लाघवंतथातदादराच्चनकिञ्चिद्गौरवमित्याह ॥
अबुधैरिति । अबुधैरज्ञैःपार्थैः । कृतमानसंविदःपूजातोषणंयस्यतस्य । संभाषणेसम्वि
दर्थेधिनिविश्वः । नवगोग्यताकुतएवनकुतोपीत्यर्थः । तथाहिसहसिमार्गशीर्षे । मार्ग

र्विसदृशामार्गेइत्यमरः । प्लवगैरुपासितंसेवितंगुञ्जाफलंकाकफलानि । जातावेकवचनं
। काकचिञ्चीगुञ्जेतुकृष्णलेत्यमरः । सोऽमुनामुष्मनांनहिनैनिपुणंमूढपरिग्रहायपरिग्र
हेोगैरवयोः प्रयोजकाविनार्थः अत्रहारगुञ्जाफलयोर्विशेषणयोरेववाक्यभेदेनप्रतिबिम्ब
कारणानुदृष्टान्तालङ्कारः ॥ ४७ ॥ ********************* ॥

॥ यत्पूर्वोदित्यादिनापत्साम्यकिनात्वपराधक्षमत्वमुक्तंतत्रोत्तरमाह ॥ अपराधेति ।
नृपश्चेद्यः अपराधस्यशतक्षमंराज्ञः शतापराधसहिष्णुभवंतं । एकयाक्षमयाएकापराधसह
नेनेत्यर्थः । अत्येतिअतिक्रामति । अपराधकोटीनामपितन्नाशेनापिसाम्यसम्भवादिति
भावः । तामेवक्षमांदर्शयति । त्वयिभीष्मकात्मजांरुक्मिणींहृतवत्यपिसमर्थप्रतीकारक्षमए

अपराधशतक्षमन्नृपः क्षमयात्येतिभवन्तमेकया । हृतवत्यपिभीष्म
कात्मजान्त्वयिचक्षामसमर्थएवयत् ॥ ४८ ॥ गुरुभिः प्रतिपादि
तामवधूमपहृत्यस्वजनस्यभूपतेः । जनकोऽसिजनार्द्दनस्फुटह
तधर्म्मार्थतयामनोभुवः ॥ ४९ ॥ ********

वसन्नपिचक्षामक्षाम्यतिस्मेतियत्तयाक्षमयेत्यर्थः ॥ ४८ ॥ ********** ॥
॥ राक्षसः क्षत्रियस्यैवमितिस्मरणात् राक्षसोद्वाहस्यक्षात्रधर्मत्वाद्रुक्मिणीहरणेकोऽस्माक
मपराधः राज्ञोवाकाअत्रक्षमेत्याकांक्षायामाह ॥ गुरुभिरिति । हेजनार्द्दन । गुरुभिःपि
त्रादिभिः पित्राप्रतिपादितांराज्ञेदत्तां । अतएवस्वजनस्यबंधोर्भूपतेर्महाराजस्यवधूंजा
यामपहृत्य । हतौधर्मार्थौयेनततत्तयाहेतुनाहतधर्मार्थतयास्फुटमनोभुवः कामस्यजनको
ऽसिहतधर्मार्थबाधेनकाममात्रनिष्ठोऽसीत्यर्थः । नायंराक्षसोविवाहः । हत्वाछित्वाचभि
त्वाचक्रोशन्तीरुदतींतथा । प्रसह्यकन्याहरणंराक्षसोविधिरुच्यतेइतिकन्याहरणस्यैर
स्सक्तत्वलक्षणात् । अयन्तुपरदारापहरणोबन्धुद्रोहोराजद्रोहश्चेत्यहोपापिष्ठस्यकामा

त्यन्तेपरमसाहसिकत्वमितिभावः ॥ ४९ ॥ ***************** ॥

॥ सत्यमीदृशोवाहंतनः किमित्याशंक्यकिमन्यद्याधादित्याह ॥ अनिरूपितेति । अनिरू

पितरूपसम्पदः शैलघनजरूपधारित्वादज्ञानरूपविशेषस्यावाङ्मनसगोचररूपवैभव

स्येतिगम्यते । अन्यत्तत्स्वरूपमारोपितंतमः अभावस्तमइतिचमतद्वयेपिप्रमाणःनवधून

रूपसम्पदइत्यर्थः । अन्यभूतस्त्वदस्वकवेः कोकिलपक्षकानोस्तवनमसोवातिमिरस्येव ।

सादृश्यात्विकल्पोपमयोरितिविश्वः । सर्वगतस्यक्षितिपस्यैरिपोऽभीषुमानंमुमानिव ।

हस्ततो दूरानीमेवक्षिप्नुःक्षेप्ता आहतेत्यर्थः शास्ताद्दूरत्मनामितिभावः । चसिगृधिधृषिक्षि

पेःक्नुरितिक्नुप्रत्ययः । नलोकेत्यादिनाकृद्योगषष्ठ्यानिषेधेवेतिशेषेषष्ठीपर्य्यवसानानुक्त

अनिरूपितरूपसम्पदस्तमसोवान्यभृतस्त्वदस्वकवेः । नवसर्वगत

स्यतस्यतिक्षितिपःक्षिप्नुरभीषुमानिव ॥ ५० ॥ क्षुभितस्यमहि

भृतस्त्वयिप्रशमोपन्यसनम्बृथामम । प्रलयोल्लसितस्यवारिधेःपरि

वाहोजगतःकरोतिकिम् ॥ ५१ ॥ *********

मेत्वलाभःअभीषुःप्रग्रहेरश्माविन्यमरः । विश्वप्रकाशादयःसर्वेप्यभिधानिकामूर्द्धन्यान्ते

षुयेलोकवेदयोस्तालव्यान्तादृश्यन्ते । अभीशूनांमहितमित्यादि ॥ ५० ॥ **** ॥

॥ नह्यस्मदर्थत्वयाराजासांत्वयितव्यइत्याशंक्यनेत्याह ॥ क्षुभितस्येति । त्वयिविषये ।

क्षुभितस्यातिक्रुद्धस्यमहीभृतोराज्ञोममप्रशमोपन्यसनंशान्तोपदेशोवृथानिष्फलः । तथा

हिप्रलयोल्लसितस्यकल्पान्तेक्षुभितस्यवारिधेः । जगतःपरिवाहोजगत्कृतोजलनिर्गममा

र्गःकिङ्करोतिनकिञ्चिदित्यर्थः । महतांततमूलपक्षंनिवर्त्तनइत्यर्थः । दृष्टान्तालङ्कारः

॥ ५१ ॥ *************************** ॥

॥ नह्येवंन्वित्कनारस्याकिमर्थंभवानिहप्रहितस्तत्राह ॥ प्रहितइति । प्रधनाययुद्धाय

। माधवान्यादवानाकारयितुमाह्वायितुं । युधमायोधनंजन्यंप्रधनंप्रविदारणं । इत्य
मरः । आकारणाह्वानं इत्यमरः । महीभृताराज्ञात्वंप्रहितःप्रेरितःननुरन्ध्रेहन्तव्याःशत्रवःन
त्वाह्वातव्याइत्यत्राह्वानेति । महौजसोमहावीराःपरेषुशत्रुषुमलिम्लुचाःपाटच्चराइव । पा
टच्चरमलिम्लुचाइत्यमरः । छलात्कपटात्नापकुर्वन्ति । तस्मादाह्वानंकर्त्तव्यमिति
वाक्यार्थहेतुकत्वात्काव्यलिङ्गमुपमालङ्कारसङ्कीर्णं ॥ ५२ ॥ **********॥
॥ तदेवागमनप्रयोजनमुक्त्वाहितमुपदिशति । तदयमिति । तत्तस्माद्युद्धार्थत्वादयंभू
पतिश्चैद्यः । पयसाम्पूरःप्रवाहइवानिवारितःसमुपैतिहि । हेमाधवत्वमविलम्बितंशीघ्रंचे
तसःचेतसोऽधिभवतच्छत्रुस्तस्मादात्मानंरक्षेत्यर्थः । अस्त्वेवमिहशिचिदिद्धिःध्वसेरिच्छावभ्यास

प्रहितःप्रधनायमाधवानहमाकारयितुम्महीभृता । नपरेषुमहौज
सःछलादपकुर्वन्तिमलिम्लुचाइव ॥ ५२ ॥ तदयंसमुपैतिभूप
तिःपयसाम्पूरइवानिवारितः । अविलम्बितमेधिचेतसस्तनुबन्माध
वमास्मभज्यथाः ॥ ५२ ॥ ***********

लोपश्चेतिएत्वंधिचेतिसकारलोपःमाधवत्वंतनुवत्तनुरिवमास्मभज्यथाः । भजेःकर्मणि
लोपश्चेतिएत्वंधिचेतिसकारलोपः । अतःआत्मानंनविनाशयेदित्यर्थः । स्मो
त्तरेलङ्चेतिलङ्उपमालङ्कारः ॥ ५३ ॥ ****************॥
॥ ननुराज्ञिशिशुपालेयूनांममकलंकमित्याशंक्याह ॥ परिपातीति । सशिशुपालःकेवल
मित्यवधारणेक्रियाविशेषणं । शिशूनपरिपातीतिशिशून्नेवपालयतीतितन्नामनीनस्तु
शिशुपालसंज्ञामास्मविश्वसीःमाविश्वासंकुर्वित्यर्थः । श्वसेःस्मोत्तरेलङ्चेतिलङ्चपच
म्यइतिइडागमःचकारात्लङ्वाअस्तिसिचोऽपृक्तेइडागमःइत्यनक्षणश्वसजागृणिश्वे
दितामितिवृद्धिप्रतिषेधःनमाङ्योगेइत्यडभावः । किन्तुक्षमीक्षमावान् । बोह्लादित्वा

दिनिः । शरणेरक्षणेसाधुःशरण्यःरक्षणक्षमः । तत्रसाधुरितियत्प्रत्ययः । शरणमुपागताः शरणंरक्षितारमागतान्प्रपन्नान । शरणंगृहरक्षित्रोःशरणंरक्षणेगृहइत्युभयत्रापिवि श्वः । द्विषःशत्रूनत्तस्त्वान्यूनोपरिरक्षतिअतोनिःशङ्कंशरणमागच्छेत्यर्थः ॥ ५४ ॥ ॥ननुवयंदोग्धारःकिलसेोऽप्यतिष्ठुभितःकिलकथंनःपालयेदित्याशंक्याह ॥ नेति । स्वा र्थपराःस्वार्थनिष्ठाःपरेशत्रवोमहतोऽधिकस्यकथंअप्रियंकस्यअशंकंअपकारंनविदध्युः कुर्य्युरेवकार्य्यवशान्महतोमहतामित्यर्थः । किंतुउदारधीर्महामतिः । उदारोदातृमह तोरित्यमरः । सराजाकुपितोपिनतिमात्रकेणप्रणतिमात्रकेणअनुनीतिंअनुनयनंभजते

परियातिसकेवलंशिशून्नितिनामनिमास्मविश्वसीः । तत्त्वान्
परिरक्षतिक्षमोसशरण्यःशरणागतान्द्विषः ॥ ५४ ॥ नविद
ध्युरशङ्कमप्रियम्महतःस्वार्थपराःपरेकथम् । भजतेकुपितोप्युदार
धीरनुनीतिन्नतिमात्रकेणसः ॥ ५५ ॥ हितमप्रियमिच्छसिश्रु
तयँदिसन्धित्सपुरंविनश्यसि । अनृतैरथतुष्यसिप्रियैर्जयता
ज्जीवभवावनीश्वरः ॥ ५६ ॥ ************

अनुगृह्णातीत्यर्थः । प्रणिपातःप्रतीकारःसंरंभोहिमहात्मनामितिभावः ॥ ५५ ॥ * ॥ किंबहुनानवायंहितोपदेशसंग्रहइत्याशंक्याह ॥ हितमिति । अप्रियंश्रुतं । हितमि च्छसियदिअप्रियंश्रुतमाप्ताद्वाकर्णितंगृहीतुमिच्छसिचेदित्यर्थः । सन्धित्सराज्ञानन्त्वे हिपुरंविनश्यसिअन्यथाविनंक्ष्यसीत्यर्थः । यावत्पुरानिपातयोर्लडितिभविष्यदर्थेलड् । अथेतिपक्षांतरे । अनृतैरसत्यैःप्रियैस्तुष्यसियदिजयतान्जयतु । तुह्योस्तातङाशिष्य न्यतरस्यामितितोस्तातङादेशः । जीवअवनीश्वरःसार्वभौमोभव । ततःकिमेभिःप्रिया लापैःअप्रियमपिप्रियमेवगृहाणेतिभावः ॥ ५६ ॥ ************** ॥

॥ ननु कंसाद्यनेकविजयी हरिः कथं विजेष्यते शङ्कैत्याशङ्क्याह ॥ प्रतिपक्षेति । प्रतिपक्षजिदनेकारिजेतापि भवान् । असंशयं संशयो नास्ति । अर्थाभावेऽव्ययीभावः । युधि संग्रामे चैद्येन शिशुपालेन विजेष्यते । जयतेः कर्मणि लृट् । शेषे प्रथमा । ननु पितमांस्यपहन्तीति तमोपहं सर्वतमोपहारिणं । अपक्लेशतमसोः परिहन्तेर्डप्रत्ययः । अहां पतिमहर्पतिं सूर्यं । अहरादीनां पत्यादिषूपसंख्यानमिति विकल्पको रेफादेशः । राहुः स्वर्भानुरूपं तमः । आख्याहे अभिधानं चेत्यमरः । ग्रसते गिलति हि । अत्र हरिसूर्ययोश्चैद्यराह्वोश्च वाक्यभेदेनाप्रतिबिम्बकरणाद्दृष्टान्तालङ्कारः ॥ ५७ ॥ ******** ॥

॥ किं च न भवानेक एव विजेष्यते किन्तु स्वैर्यादवैः सहेत्याह ॥ अचिरादिति । स क्षितिपः

प्रतिपक्षजिदप्यसंशयं युधि चैद्येन विजेष्यते भवान् । ग्रसते हि तमोपहं मुहुर्ननु राहुर्महर्पतिं तमः ॥ ५७ ॥ अचिराज्जितमीनकेतनो विलसद्वृष्णिगणैर्नमस्कृतः । क्षितिपः क्षयितान्धकोहरलीलां सविडम्बयिष्यति ॥ ५८ ॥ ******

राजा । अचिरादविलम्बितमेव जीतो मीनकेतनः कार्ष्णिः प्रद्युम्नः स्मरश्च येन सः । वृष्णयो यादवभेदास्तेषां गणैः संघैर्नमस्कृतो भीत्या प्रणतः सन् । अत एव विलसन्दीप्यमानः । अन्यत्र वृष्णी निपदृच्छेरः वृष्णिरुक्षणि विलसन्वृषारूढ इत्यर्थः । गणैः प्रमथैर्नमस्कृतः । गणाः प्रमथसंख्यौघा वृष्णौ वृष्णिस्तु रेन्दुयेद्गिति वैजयन्ती । क्षयिता नाशिता उद्धृता दोषा अन्धकाया यादवभेदाः । अन्यत्रान्धकासुरो येन सः । हरलीलां शम्भुविभ्रमं विडम्बयिष्यत्यनुकरिष्यति । अत्र हरलीलामिति शाब्दृश्यापेक्षा निदर्शना श्लेषसंकीर्णा ॥ ५८ ॥

॥ ननु देवासुरैरप्यजय्याया यादवाः कथं त्वयाजेष्यन्ते मत्वाह ॥ निहतेति । क्षितिपस्ते द्विषो निहतो उन्मदो दुष्टः कुञ्जरः कुवलयापीडाख्यो येन तस्मात् । अन्यत्र हतानेकमत्तमातङ्गा

म् । अतएव क्रमार्जितं भूरि विपुलं यशः धत्ते हरेः कृष्णात् संग्रामे चेति ध्वनिः । रणे न बिभेति धर्षितो दृप्तश्चैव खरदूषणादिषु धातुविषु मेघेषु च । वृष्णिस्तु यादवे मेघे इति विश्वः । कागणना कुलमवगणयतीत्यर्थः वाक्ये इत्यर्थः अत्र कुञ्जरघातिनः सिंहस्य कालकथानिमेघेष्वित्यर्थान्तरप्रतीतिर्ध्वनिरेव श्लेषः हरेर्वृष्णिविशेषस्यापि श्लिष्टत्वाल्लुप्तकर्मात्प्रकृत न श्लेषेनदन्ताङ्गीकारादित्युक्तं प्राक् ॥ ५९ ॥ ****************************** ॥

॥ हरेरपि न बिभेतीत्युक्तं न देवसम्भावयितुं नस्य पराक्रमानास्य गतमानेर्वर्णयति ॥ नैति । युधि रणे वैरिभिया ऽस्य मुखं न पश्यन्तीति यत्तन्नाद्भुतं अत्र कुतः सोऽपि द्रवतां भियापलायमा

निहतोऽद्भुतदृप्तकुञ्जरो हि घते भूरि यशः क्रमार्जितम् । न बिभेति रणे हरेरपि क्षितिपः का गणना त्ववृष्णिषु ॥ ५९ ॥ न तदद्भुतमस्य यन्मुखं युधि पश्यन्ति भिया न शत्रवः । द्रवतां ननु पृष्ठमीक्षते वदनं सोऽपि न जातु विद्विषाम् ॥ ६० ॥ प्रतनूल्लसिता चिरद्युतिः शरदं प्राप्य विखण्डितायुधाः । दधते ऽरिभिरस्य तुल्यतां यदि नासारभृतः पयोभृतः ॥ ६१ ॥ ***********

नानां विद्विषां पृष्ठं कायपार्श्वाङ्गं ईक्षते । जातु कदाचित् वदनं न ईक्षते खलु न तु द्वयोरन्यतरमुखे ष्वन्योन्यस्य मुखविलोकनासम्भवात् स्वयं विद्विषां अभिमुखस्याप्यस्य मुखदर्शनादृष्टमित्यर्थः अतएव वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ६० ॥ ************ ॥

॥ प्रतन्विति ॥ शरदं शारदऋतुं प्राप्य विखंडितायुधाः खंडितेन्द्रचापाः अन्यत्र शरान् द्दातीति शरदस्तं शरदं शरवर्षिणं प्राप्य खण्डितशस्त्राः । प्रतनूल्लसिता चिरद्युतोऽल्पस्फुरितविद्युतः । अन्यत्र प्रतनूल्लसिताल्पोल्लसिता सोऽइव चिरद्युतो स्थिरद्युतः । पयोभृतो मेघा असारभृतः वृष्टिमन्तः न यदि शरीरिणां शरदनुष्टिमून्यत्वादिति भावः । सुहृद

न भून्याइत्यर्थः अतार प्रहरे वेगवृद्धौ सुहृद्दलइति वैजयन्ती । अस्यारिभिस्तुल्यतां दध ते । अत्र द्वयेऽभृतः उपमानानामुपमेयभावोक्तः प्रदीपालङ्कारः तेषामसारसम्बन्धेऽपि संभाव नयातद्रूपसम्भवोक्तेरतिशयोक्तिभेदस्येति सङ्करः ॥ ६१ ॥ ************ ॥

॥ त्रिभिः कुलकमाह ॥ मलिनमित्यादि । मुक्ताः सकृत् । रणरेणुभिर्मलिनं । अतएव द्विषताम् अङ्गनाश्रुभिः क्षालितं स्वारीन् रणान्निवर्त्तितइतिभावः । यस्याङ्घ्रियुगं चरणयुग लं । अपरेणुक्षालितानां नृपाणां प्रणतानां राज्ञां मौलिमरीचयो मुकुटमणिरश्मयः स्वैरेववर्णै कैर्विलेपनैः सुन्दनैः । चारणो चापि वर्णकमिति विश्वः । विलिप्यते विशेष्यते । अत्रां घ्रियुगस्य विशेषेण महिम्ना स्नानानुलिप्तनत्पुरुषसाम्यप्रतीतेः समासोक्तिः ॥ ६२ ॥ * ॥

मलिनं रणरेणुभिर्मुहुर्द्विषताङ्क्षालितमङ्गनाश्रुभिः । नृपमौलिम रीचिवर्णकैः खलु यस्याङ्घ्रियुगम्बिलिप्यते ॥ ६२ ॥ समरायनिका मकर्कशाङ्कणमाक्रुष्टमुपैति यस्य च । धनुषा सममाशु विद्विषाङ्कुलमा शङ्कितभङ्गमानतिम् ॥ ६३ ॥ ***********

॥ समरायेति ॥ किञ्चेति चार्थः । निकामकर्कशमतिकठिनं दुर्नमित्यर्थः । समरायसंप्र दायायाकृष्टमाकृतमावर्जितं क्षणं । आशंकितभंगमनतोऽपेक्षितस्वपराजयं । अन्यत्रानि कर्षात्संभावितदलनं यस्य विद्विषां कुलं धनुषासममानतिं नम्रतामुपैतिआशु अत्र धनुर्नम नकार्यस्य द्विषन्नमनस्य तत् सहभावोक्तः कार्यकारणयोः पौर्वापर्यविपर्ययनिमित्तरूपा तिशयोक्तिमूलात्सहोक्तिरलङ्कारः ॥ ६३ ॥ ************** ॥

॥ तुहिनेति ॥ अमुमेवंविधं चेद्यं सुहृज्जनाः । तुहिनांशुं कलयन्तिआह्लादकत्वाच्चन्द्रं मन्यन्ते । विरोधिनः उग्रकरत्वात्तपनं कलयंति । एकस्यानेकप्रतीतिमुपमिमीते । क्षान्ति भिः कुशलैरैन्द्रजालिकादिभिः कृतदृष्टिविभ्रमाः जनितदृष्टिविपर्ययाः एके नराः यथास

ङ्गमालां कलयन्नित्यर्थः अपरे भुजगं कलयन्ति एकमेव रज्ज्वादिकमिति शेषः उपमालङ्कारः वि वेकस्य निमित्तवशात् हीनमेनेदन्तादृत्तानेकथा लिखनात्स्त तेनोक्तं खः संकोर्त्यते ॥ ६४

॥ ************************************ ॥

॥ दधत इति ॥ अमुम भलक्ष्यागमाः दुर्लभगृहप्राप्तयः । अन्यत्रामरत्वात् दुर्लभनाशयोगाः । नित्यापवर्गाक्षयाविद्यमरः । एकान्तरं भयाद्विजनस्थानेनितरां । अमानुषीं काशीमालिन्यादिविशेषा वादिवस्तुनीवमानां । अन्यत्रैकान्तरतां नियतन्तरतां नित्यमंगाममानुषीं दिव्यांतनुं दधतोदधानाः । भुविसंप्रतिष्ठचनप्रतिष्ठिताः राज्यभ्रंशान्तकापि

तुहिनांशुमम्मुं सुहृज्जनः कलयन्त्युज्झकरम्बिरोचिनः । कृतिभिः कृतदृष्टिविभ्रमाः स्रजमेके भुजगद्यँथापरे ॥ ६४ ॥ दधतोऽमुभलक्ष्यागमास्तनुमेकान्तरतामसानुषीम् । भुविसम्प्रतिनप्रतिष्ठिताः सदृशायस्य सुरैरराजयः ॥ ६५ ॥ अतिविस्मयनीयकर्म्मणो न्नृपतेः पश्य विरोधिचेष्टितम् । यदमुक्तनयोनयत्यसावहितानाङ्कुलमक्षयक्षयम् ॥ ६६ ॥ **************

स्थितिमप्राप्ताः अन्यत्र वनभुवंतस्पर्शेनइत्यर्थः देवत्वात् यस्याराजयः सुरसदृशाः मत्रायमुमितिपूर्वेणसंबन्धः श्लिष्टविशेषणोवमुपमाश्लेषएवेत्यन्ये ॥ ६५ ॥ ******** ॥

॥ अतीति ॥ अतिविस्मयनीयकर्मणोऽत्यन्तविस्मितपौरुषस्य । स्मयतेरनीयरप्रत्ययः । न्नृपतेस्त्वत्स्वविरोधिचेष्टितं पश्यद्वेषिरूपं नकिंचिदस्तीत्यर्थः यस्मादमुक्तनयोऽत्यक्तनीतिमार्गोसोऽक्षयमविनाशिपूर्वकेनापिक्षयं ननीन मित्यर्थः अहितानां कुलंशत्रुजालंक्षयंनाशंनयति । नीतिपौरुषाभ्यांद्विषन्निर्मूलयितुरस्यकाविरोधिवार्त्तेतिभावः अक्षयमपिक्षयं भवतीति विरोधस्यनेमूभेदेनपरिहाराद्विरोधाभासोलङ्कारः ॥ ६६ ॥ **** ॥

॥ चलितेति ॥ असौ चैद्यश्चलिता प्रवृत्ता ऊर्ध्वं चलिता कबन्धसम्पदः शिरोहीनकलेवरसं
घा एव कबन्धसम्पदः उदकसमृद्धयो येषु तान् श्लिष्टरूपकं । कबन्धं सलिले ऽकमपमूर्द्ध
कलेवरमिति वैजयन्ती । मकरव्यूहाः मकराकारसैन्यविन्यासाः अत्र च मकरव्यूहा इति वि
ष्टरूपकं । व्यूहः सैन्यसमूहविन्यासा विति वैजयन्ती । निरुद्धवर्त्मनो निरुद्धप्रवेशमार्गान् ।
अत एव महतो दुस्तरान् संगरसागरान् रणसमुद्रान् स्वभुजौजसा निजभुजबलेनैव मकराण
हान् अतरत् स्वभुजेनाविनरणमहद्भवर्त्मन्यद्भुतमिति भावः । अत्र कबन्धा एव मकरव्यूहा
इति श्लिष्टरूपकसंगरेषु सागररूपेण हेतुना कबन्धादिष्वारोपपरंपरितरूपकं ॥ ६७ ॥ **

चलितोर्ध्वकबन्धसम्पदो मकरव्यूहनिरुद्धवर्त्मनः । अतरत्स्वभु
जौजसा मुहुर्महतः सङ्गरसागरानसौ ॥ ६७ ॥ न चिकीर्षति
यः स्मयोद्धतो नृपतिस्त्वच्चरणोपगं शिरः । चरणं कुरुतेतरां स्मयः स
समं वैवत तदीयमूर्द्धनि ॥ ६८ ॥ स्वभुजद्वयकेवलायुधश्चतुरङ्गा
मपहाय वाहिनीम् । बहुशः सह शक्रदन्तिना स चतुर्दन्तमगच्छदा
वहम् ॥ ६९ ॥ ****************

॥ नेति ॥ स्मयोद्धतो गर्वेण दुर्विनीतो नृपतिः । शिरो निजोत्तमांगं । तस्य शिशुपालस्य
चरणमुपगच्छतीति तच्चरणोपगं तत्पादगतं यो न चिकीर्षति कर्तुं नेच्छति । तदीयं तस्य नृप
तेः सम्बन्धिनि मूर्द्धनि गतस्मयो निगर्वोऽसौ शिशुपाल एव स्वं चरणं कुरुते निधत्ते इत्यर्थः अ
नम्रान् स्वद्वेष्टॄन् नमयति नत्वा सरतीति तात्पर्यं ॥ ६८ ॥ ************** ॥

॥ स्वेति ॥ स चैद्यः स्वचार्य्यगानि हस्त्यादीनि यस्यास्तां चतुरंगां वाहिनीं सेनामपहाय । स्व
भुजद्वयं केवलमेकमायुधं यस्य सः । सह शक्रदन्तिना ऐरावतेन सह । चत्वारो दन्ता यस्मि
न् तं चतुर्दन्तं आवदं रणं बहुशोऽगच्छत् चतुर्दन्तेन शक्रदन्तिना दोर्द्वयेन योद्धुं चैद्यं विना

कोऽन्यःशक्तइतिभावः।दंतिनोराहवइत्युक्तंतदन्यदन्तिनोरपिचतुर्दन्तइतिविरोधः सच
शक्रदन्तिनःपरितःतस्यचतुर्दन्तत्वादितिविरोधाभासः ॥ ६९ ॥ ******** ॥
॥ अविचालितेति ॥ अविचालितंपरैरपर्य्यास्तितंअतएवचारुशोभनंचक्रंसुदर्शनंराष्ट्रं
चययोस्तयोः। चक्रंराष्ट्ररथांगयोरितिविश्वः। श्रियाकमलयासंपदाचानुरागादुपगूढ
योराश्लिष्टयोर्युवयोस्तव। त्यदादीनिसर्वैर्नित्यमित्येकशेषः। इदमेवभिद्यतेविशेष्यते।
कर्मकर्त्तरिलट्। किंतदित्याह। त्वमुपगतइंद्रउपेन्द्रइन्द्रानुजःतदनुचरतीतियावत्।
सतुअतिक्रांतइन्द्रःअतीन्द्रइन्द्रविजयतीतियत् इदमेवभिद्यतेइतिसम्बन्धःइन्द्रकिंकरे
न्द्रजयिनोःकासाम्यकथेतिभावः। अत्रोपमानात्कृष्णादुपमेयस्यचैद्यस्याधिक्याद्दे

अविचालितचारुचक्रयोरनुरागादुपगूढयोःश्रिया। युवयोरिदमेव
भिद्यतेयदुपेन्द्रस्त्वमतीन्द्रएवसः ॥ ७० ॥ भृतभूतिरहीनभोग
भाग्विजितानेकपुरोपिविद्विषाम्। रुचिमिन्दुदलेकरोत्यजःपरि
पूर्णेन्दुरुचिर्महीपतिः ॥ ७१ ॥ ∗∗∗∗∗∗∗∗∗∗

श्राधान्यसाधर्म्योक्तेर्व्यतिरेकालङ्कारः ॥ ७० ॥ ****************** ॥
॥ किञ्चत्वत्तोप्यधिकोराजेत्यवाच्योयमर्थः। यदीश्वरादप्यधिकइत्याह। भृतेति। भृता
भूतिर्भस्मसंपच्चयेनसभृतभूतिः। भूतिर्भस्मनिसंपदीत्यमरः। अहीनांभोगिनामीनोऽही
नःशेषःतस्यभोगंकायंभजतीत्यहीनभोगभाक्शेषभूषणइत्यर्थः। अन्यत्रनहीनमहीन
मन्यूनंभोगंसुखानुभवंभजतीतिअहीनभोगभाक्। भोगःसुखेस्त्र्यादिभृतावहेश्चफणका
ययोरित्यमरः। विद्विषांविजितानेकपुरःविजितानेकविद्विट्पुरइत्यर्थःएकत्रत्रिपुर
विजयादन्यत्रशत्रुनगरविजयाच्चेतिभावः। सापेक्षत्वेपिगमकत्वात्समासः। एवंभूतोप्य
जोहरः। अजाविष्णुहरच्छागाइत्यमरः। इन्दुदलेचन्द्रखण्डेविषयेरुचिमभिलाषंकरो

तिइन्दुदलेयारुचिःशोभानांकरोतिदधनीति चार्थःसामान्यशब्देनविशेषलक्षणः । महीपतिलुपरिपूर्णेन्दोरुचिरिवरुचिः शोभायस्यसःतस्मिनरुचिरभिलाषोयस्येतिचपूर्णेन्दुरुचिः । रुचिर्मयुखेशोभायामभिषंगाभिलाषयोरितिविश्वः । अत्रहरःखण्डेन्दुरुचिःराजापूर्णेन्दुरुचिरितिव्यतिरेकःसचरुच्योरभेदाश्रयादिंतिश्लेषमूलाभेदातिशयोक्तिसङ्करः ॥ ७१ ॥ **************************** ॥

॥ अथचतुर्भिःकुलकमाह ॥ नयतीत्यादि । यःतटद्रुमैःसरितांपूरइत्येवभूभृतांगणैःक्रीडतीतिचतुर्थेवक्ष्यतितत्क्रीडाप्रकारंत्रिभिर्वर्णयति । अभंगुरोदयःस्थिरवृद्धिःयउद्धतिश्चितउद्धत्यभाजःअनम्रानितियावत् । अयतेःक्विप् । न्टपान्द्रुमांश्चेत्यर्थः । द्रुतंशीघ्रं

> नयतिद्रुतमुद्धतिश्रितःप्रसभम्भङ्गमभङ्गुरोदयः । गमयत्यवनीतलस्फुरद्भुजशाखम्भृशमन्यमुन्नतिम् ॥ ७२ ॥ अधिगम्यचरन्ध्रमन्तरञ्जनयन्मण्डलभेदमन्यतः । खनतिक्षतसंहतिःक्षणादपिमूलानिमहान्तिकस्यचित् ॥ ७३ ॥ *******

प्रसभंप्रसह्यभङ्गंनयति । अवनीतलेस्फुरन्तौभुजौशाखेइवभुजशाखेयस्यतंभुजौप्रसार्यभुविप्रणिपतितमित्यर्थः । अन्यंन्टपंद्रुमंवेतसादिकंभृशमुन्नतिंगमयति ॥ ७२ ॥

॥ अधिगम्येति ॥ किंचेतिचार्थः । अंतरामण्डलमध्येआलवालमध्येचरंध्रमवकाशंशुचिरंचाधिगम्य । अन्यतःमण्डलस्यामात्यादिचक्रस्यभेदमुपजापंजनयन्अन्यत्रमण्डलस्याधारदेशस्यभेदंविदारणंकुर्वन्नित्यर्थः । क्षतासंहतिरैकमत्यंमूलानामाश्लेषश्चयस्मिन्कर्मणितत्तथाक्षणात्कस्यचिद्राज्ञःद्रुमस्यमहांतिमूलानिमुख्यान्जनानपिखनतितमिवअन्यत्राङ्गीनपिखनत्यवदारयति ॥ ७३ ॥ ********************** ॥

॥ घनेति ॥ घनानिसान्द्राणिपनाणिवाहनानिपर्णानिचविभ्रतीतिघनपत्रभृतः । कां

घनत्वपानद्रुमान्च। तरसाबलेनवेगेनच। तरसाबलरंहसोरितिविश्वः। आक्षयानु गामिनोनुचरान्करोति। दृढंयथानयाप्रतिष्ठितंप्रतिष्ठांगतमपि। प्रतिकूलंप्रतिकूल्य भाजं। अपरंत्वपंद्रुमंचनितरांनिरस्यतिउत्पाट्यान्यतःक्षिपतिद्रुमपक्षेप्रतिकूलकाले क्षिपतीतिचार्थः ॥ ७४ ॥ **************************** ॥

॥ इतीति ॥ इतीत्थं। क्वचनाप्यखंडितप्रसरःसर्वत्राखण्डितप्रवृत्तिरित्यर्थः। महानयं शिशुपालः। प्रावृषिजातःप्रावृषिजः। सप्तम्यांजनेर्डइतिडप्रत्ययः। प्रावृट्शरत्काल दिवांजइत्यलुक्। प्रावृषिकइतिपाठेतत्रजातइत्यर्थेप्रावृषःठगितिठक्प्रत्ययःठस्येकः।

घनपत्रभृतोनुगामिनस्तरसाक्षय्यकरोतिकाँश्चन। दृढमप्यपरम्प्र तिष्ठितम्प्रतिकूलन्नितरान्निरस्यति ॥ ७४ ॥ इतिपूरइवोद क्षय्यःसरिताम्प्रावृषिजस्तटद्रुमैः। क्वचनापिमहानखण्डितप्रस रःक्रीडतिभूभृताङ्गणैः ॥ ७५ ॥ कुलकम्। अलघूपलपङ्क्ति शालिनीःपरितोरुद्धनिरन्तराम्बराः। अधिरूढनितम्बभूमयोन विमुञ्चन्तिचिरायमेखलाः ॥ ७६ ॥ *********

सरितामुदकक्षयःपूरस्तटद्रुमैरिवभूभृतांराज्ञांगणैःसाधनैःक्रीडति। महनद्यागामि श्लोकेसमहीपतिरित्यनेनास्यसंबन्धः ॥ ७५ ॥ ****************** ॥

॥ अथत्रिभिःकुलकमाह ॥ अलघ्वित्यादिना। यस्यारिस्त्रियःसतंपश्यन्तुभूतायद्यप नुभवन्तीतिवक्ष्यतितत्प्रकारमेवाह। अधिरूढनितम्बभूमयःउन्नतश्रोणिभागाः। अल घुभिःउपलानांमणीनांपाषाणानांचपङ्क्तिभिःशालंतइतितच्छालिनीः। उपलोमणिपा षाणाविनिविश्वः। परितोरुद्धमावृतंनिरन्तरंसान्द्रंसंनिहितंचअम्बरंवस्त्रमाकाशं चयाभि स्ताःअधिरूढनितम्बभूमिराक्रान्तश्रोणिभागाःप्राप्तकटकाश्चेतिविभक्तिविपरिणामः। मे

खलारश्चनाःपर्वतमध्यभूमिश्चचिरायनमुंचंति । अत्रसंपदाद्यविषयत्वेनोभयेषामपिमेख लानांवर्णत्वेनप्रकृतत्वात्केवलप्रकृतगोचरश्लेषः ॥ ७६ ॥ ************ ॥

॥ कटकानीति ॥ किंच । नवमुक्ताफलानिनूतनमौक्तिकानिभूषणानितद्येषांतैश्चारु भिःभुजैःकटकानिवलयानिभजंति । अन्यत्रनवमुक्तान्यचिरत्यक्तानिकुतःअफलानिवै धव्यान्निष्फलानिआभरणानियैस्तैर्भुजैरुपलक्षितानिकटकानितटानिभजंति । किं चेतिचार्थःपृथुगण्डशैलतःपृथुगंडस्थलेषुचित्रकैःपत्ररचनाभिर्नियतमवियोगंसम्पर्कंद धते । अन्यत्रस्थलोपलेषुचित्रकैर्मृगविशेषैःसदवासंदधते । अत्रापिप्रकृतगोचरश्लेषः

कटकानिभजन्तिचारुभिर्नवमुक्ताफलभूषणैर्भुजैः । नियतन्दध तेचचित्रकैरवियोगम्पृथुगण्डशैलतः ॥ ७७ ॥ इतियस्यसस म्पदःपुरायदवापुर्भवनेष्वरिस्त्रियः । स्फुटमेवसमस्तमापदातदि दानीम्पृथ्वीध्रमूर्द्धसु ॥ ७८ ॥ कुलकम् । महतःकुकुरान्धका न्द्रुमानतिमात्रन्दववद्दहन्नपि । अतिचित्रमिदम्मधीपतिर्यदक्षा स्नाम्पृथिवीङ्करिष्यति ॥ ७९ ॥ ⁂⁂⁂⁂⁂⁂⁂⁂

॥ ७७ ॥ ****************************** ॥

॥ इतीति ॥ यस्यारिस्त्रियःपुरापूर्वैसतसम्पदःसश्रीकःभवनेषुसद्नेषुयदवापुर्मीखलादि कमनुबभूवुः । समस्तमशेषंतदिदानीमापदाअवनीध्रमूर्द्धसुशैलमूर्द्धसु । इतीत्थंस्फुट मेवावापुः । नह्यस्यवैरिणांजीवितात्तेतिभावः । अस्यापुत्तरश्लोकेनान्वयः ॥ ७८ ॥

॥ महतइति ॥ यत्तदोर्नित्यसम्बन्धात् । समधीपतिर्महतोऽधिकान् । कुकुरान्धका स्यायादवभेदास्तानेवद्रुमानतिमात्रंदववत्दवाग्निवत् । दवदावौवनारण्यवह्नीत्यमरः । दहन्नपि । अवनीमक्षस्नामयादवांकरिष्यतिइतियत्इदमतिचित्रंविरुद्धमित्यर्थःक्षम

रहितामितिविरोधः अतएवविरोधाभासोऽलङ्कारः कुकुराध्वकैः सहलक्ष्महनिष्यतीतिध्येयं कार्यः ॥ ७९ ॥ ****************************** ॥

॥ अथयुग्मेनाह ॥ परितइति । प्रकर्षेणमिताक्षरापिएकत्रमितभाषितत्वादन्यत्रतुरुद्ध त्वाच्चाल्पाक्षरापि । सर्वविषयंराष्ट्रकार्य्यप्रदेशश्चपरितो व्याप्तवतीसर्वत्रप्रवृत्तेत्यर्थः । प्रतिष्ठांप्रमाणंस्थितिंगता । गरीयसीभूयिष्ठार्था । यदाज्ञायस्यराज्ञः शासनंपरिभाषाच अनियमनिवारकोन्यायविशेषः सेवकुत्रचित् कुत्रापिनप्रतिहन्यते खलुनवाध्यतेहिपरिभाषा चतच्छ्रीकदेशस्थितासर्वशास्त्रमभिज्ज्वलयतिदीपयतीतिभाष्यकारः इकोगुणवृद्धीत्यादिकापरिभाषासचवृद्धिरित्यादिविषयः उपमालङ्कारः उपजातिवृत्तं ॥ ८० ॥

परितः प्रमिताक्षरापिसर्वंविषयम्प्राप्तवतीगताप्रतिष्ठाम् । नखलु
प्रतिहन्यतेकुतश्चित्परिभाषेवगरीयसीयदाज्ञा ॥ ८० ॥ यामूढ
वानूढवराहमूर्त्तिर्मुहूर्त्तमादौपुरुषःपुराणः । तेनोह्यतेसाम्प्रतम
क्षतैवक्षतारिणासम्यगसौपुनर्भूः ॥ ८१ ॥ *******

॥ यामिति ॥ यांभुवमादौपूर्वं । पुराणपुरुषोविष्णुः ऊढवराहमूर्त्तिः धृतवराहमूर्त्तिः धृतवराहशरीरः सचनतुस्वरूपेणेतिभावः । मुहूर्त्तंक्षणमात्रंऊढवान्धृतवान् । क्षतारिणासंहृतसकलविक्षेपेण अतएवैनांपुनस्तेनराज्ञाअविक्षतेतिभावः । अक्षतैवविपक्षैरनुपभुक्तैव असौभूःसाम्प्रतमद्यापिनतुमुहूर्त्तमितिभावः । सम्यक्तयाशास्त्रमुह्यतेधार्य्यते । वहेः कर्मणिलट्वचिस्वपीत्यादिनासंप्रसारणं अत्रराज्ञोविष्णोराधिक्यकथनाद्व्यतिरेकःअत्र ध्वनिःकश्चिद्वृद्धः सचोढवराहोगामविक्षतायामादौप्रथमंमुहूर्त्तमूढवान् परिणीतवानितिभावः । अतएवअक्षतापूर्वेणअक्षतयोनिका । अतएवासौपूर्वोढक्षतारिणाशौर्य्यादिगुणाढ्येनेत्यर्थः तेनकेनचिद्युनासांप्रतंपुनरुह्यतेपुनःपरिणीयतेसाचेदंक्षतयोनिःस्यात्तु

न संस्कारमर्हतीति स्मरणादिति भावः । सा पुनर्भूरुच्यते इति योज्यं । पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषुः पतिरित्यमरः । अत्राभिधायाः प्रकृतार्थ एव नियंत्रणादप्रकृतार्थप्रतीतिर्ध्वनिरेव ॥ ८१ ॥ ************************** ॥

॥ भूयांस इति ॥ ह्वयेपि समुद्रोर्नद्यो गुणोर्मयश्चेति छिन्नया अस्य ऊर्मय इति । द्वे त्रयप्रत्यये द्विनिभ्यामित्यनेन अयचादेशः प्रथमचरमेत्यादिना जसि विभाषा सर्वनामसंज्ञा । भूयांसो बहुतराः क्वचिदप्यस्खलंतो प्रतिहतप्रसरा इत्यर्थः । कामंतु कृत्वं दध्रुनियद्यपि दध्वेव यद्यपीत्यवधारणे इति केशवः । तथापीति शेषः । सलिलनिधेः समुद्रस्य कल्लोला महोर्मयः । अथोर्मिषु महत्सूल्लोलकल्लोल इत्यमरः । पारं तीरमवाप्य शीर्य्यन्ते विलीयन्ते । शी

भूयांसः क्वचिदपि काममस्खलन्तस्तुङ्गत्वं दधति च यद्यपि द्वयेपि ।
कल्लोलाः सलिलनिधेरवाप्य पारं शीर्यन्ते न गुणमहोर्मयस्त्वदीयाः ॥
८२ ॥ लोकालोकव्याहतं घर्मरश्मेः शालीनं बाधामनालम्ब्य सर्तुम् । लोकस्याग्रे पश्यतो धृष्टमाशु क्रामत्युच्चैर्भूभृतो यस्य तेजः
॥ ८३ ॥ ********************

र्यते ईवादिकात्कर्त्तरि लट् । त्वदीया गुणमहोर्मयस्तु पारमवाप्य न शीर्य्यन्ते अत्र गुणमहोर्मीणां भूयस्त्वादि निसाधर्म्येण गुरुत्वेन समुद्रस्याधिक्याद्व्यतिरेकः अनेन राज्ञोपि समुद्राधिक्यं व्यज्यते प्रहर्षणी वृत्तम् ॥ ८२ ॥ ********************** ॥

॥ अथ युग्मेनाह ॥ लोकालोकेत्यादि । लोक्यते आलोक्यते च पार्श्वांतरेणेति लोकालोकः । लोकालोकश्चक्रवाल इत्यमरः । विशेषणसमासः । तेन व्याहतं निरुद्धप्रसारं लोकस्यालोकेन चक्षुःप्रकाशेन व्याहतमित्यपि स्फुरंति । अत एव शालीनमधृष्टतया लज्जया मग्नं धार्ष्ट्यमित्यर्थः । शालीनकौपीनयोरधृष्टाकार्य्ययोरिति निपातः इवार्थे वा शब्दः तद्दुत्प्रेक्षा

। घर्मरश्मेर्धाम तेजः पश्यतो लोकस्याग्रे । उच्चैर्भूभृतः पर्वतानां राज्ञश्च प्रसत्तुं व्याप्तुं नालंनस मर्थः । लोकालोकव्याप्तस्य लोकाग्रे संचरत्वादित्यर्थः । यस्य राज्ञस्तु तेजः पश्यतो लोकस्याग्र म एव धृष्टं केनाप्यवाहतत्वात् प्रगल्भं सत् उच्चैर्भूभृतो राज्ञः पर्वताश्चामुं कामं नित्यं प्राप्नोति । अ त्राप्रतिहतप्रतापत्वेन राज्ञः सूर्याद् आधिक्याद् व्यतिरेकः स्फुटद्वयो लोकालोकयोर्द्वयानां भूभृ तां अभेदाध्यवसायात् श्लेषमूलातिशयोक्त्यापि नयाश्रालीनत्वोत्प्रेक्षया संकीर्य्यते शालिनी वृ त्तमेतत् ॥ ८३ ॥ ****************************** ॥

॥ विच्छित्तिरिति ॥ वपुषा नवचन्दनेन विच्छित्तिर्वियोग आपदि अन्यत्र चन्दनालेप नमित्यावत् । अधरोष्ठः अलक्तकैः लाक्षारागैर्भिन्नो वियुक्तः अन्यत्र युक्तः । नयने च पति ताञ्जने गलितकज्जले । अत एवाच्छाच्छे अच्छप्रकारे । गुणवचनस्येति द्विर्भावः कर्मधा

विच्छित्तिर्नवचन्दनेन वपुषो भिन्नाधरोलक्तकैरच्छाच्छे पतिताञ्जने

च नयने श्रोण्योलसन्मेखलाः । प्राप्तो मौक्तिकहारमुन्नतकुचाभोगस्तदी

यद्विषामित्थन्नित्यविभूषणा युवतयः सम्पत्सु चापत्स्वपि ॥ ८४ ॥

रयवत् सुपो लुक् । अन्यत्र अच्छाच्छे नयने पतिताञ्जने प्राप्ताञ्जने । श्रोण्यो नितम्बाः लस न्मेखला नभवन्तीत्यलसन्मेखला इत्यर्थः । अन्यत्र लसन्मेखला इति पदच्छेदः उन्नतः उन्न ता कुचाभोगः कुचविस्तारो मौक्तिकानां हारं हरणं प्राप्तः । अन्यत्र मुक्ताहारं प्राप्तः । इत्थ मुक्तरीत्या द्विषां युवतयः । सम्पदि वापद्यपि नित्यविभूषणाः । अत्रापत्संपदा प्रकृताप्रकृत योः युवतिद्वारको विशेषणनित्यविभूषणात् श्लेषः शार्दूलविक्रीडितं वृत्तं लक्षणमुक्तं ॥ ८४ ॥

॥ सत्यमीदृशस्ते राजा ननु किमित्याशंक्य तद्धितत्वमाकर्णयेत्याह ॥ विनिहत्येति । ऊ र्जितश्रीरचिकैश्चर्य्योसौ राजा । युधि भवन्तं रुद्धो विनिहत्य । रुदतां क्रन्दतां भवदंगनाग णानां करुणां तः करुणाः कृपाविष्टचित्तः सन् शिशुपालेनां यथार्थीकरिष्यते अंगनागणानां

प्रतितच्छिशुपालेननिजांशिशुपालसंज्ञामन्वर्थां करिष्यतीत्यर्थः । अत्रेदं नकरणाप
द्रार्थयोर्विशेषणगत्याऽक्रमात्करणशिशुपालनहेतुकत्वात्काव्यलिङ्गयोः सङ्करः औपच्छ
न्दसिकं वृत्तम् ॥ ८५ ॥ ****************************** ॥

॥ इतिश्री पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिवि
रचिते माघकाव्यव्याख्याने सर्वङ्कषाख्ये षोडशः सर्गः ॥ १६ ॥ ************ ॥

विनिहत्यभवन्तमूर्ज्जितश्रीर्युधिसद्यः शिशुपालतायथार्थाम् । रु
दतामभवदङ्गनागणानाङ्करुणान्तः करुणाः करिष्यतेऽसौ ॥ ८५ ॥
इतिशिशुपालबधेमहाकाव्येषोडशः सर्गः ॥ १६ ॥ ***



॥ इतीति ॥ इतीत्थं वचसि अमुना वचस्विना वाग्मिना मनस्विनेति पाठे मनस्विना धीरेण उक्ते युगक्षये कल्पान्ते क्षुभित उद्धूतो मरुत्तद्वद्गरीयसि ईरिते सति । तदम्बुराशिना युगक्षयवर्ज्जिना । समं तुल्यं यथा तथा सदो हरेरास्थानं । महाप्रलये सर्वसंहारे समुद्यन्नमुद्यत् तां न्सपदि प्रचुक्षुभे प्रचुकोप । कल्पोद्धूतमहामारुतेन महार्णव इव तद्वचनेन तत्सदः क्षुभितमासीदित्यर्थः । उपमा रुचिरावृत्तं । चतुर्ग्रहैरिह रुचिरा जभौ जगाविति लक्षणात् ॥ १ ॥ ****************************** ॥

॥ अथाष्टादशभिः सभाक्षोभं वर्ण्णयति ॥ सरागयेत्यादि । नृपा राजानः । सहरागेण

इतीरिते वचसि वचस्विनाऽमुना युगक्षयक्षुभितमरुद्गरीयसि । प्रचुक्षुभे सपदि तदम्बुराशिना समं महाप्रलयसमुद्यतं सदः ॥ १ ॥ सरागया स्रुतघनघर्म्मतोयया कराहतिध्वनितपृथूरुपीठया । मुहुर्मुहुर्दशनविखण्डितोष्ठया रुषा नृपाः प्रियतमयेव भेजिरे ॥ २ ॥ अलक्ष्यत क्षणदलिताङ्गदे गदे करोदरप्रहितनिजांसधामनि । समुल्लसच्छकलितपाटलोपलस्फुलिङ्गवान्स्फुटमिव कोपपावकः ॥ ३ ॥

पाटलिम्ना अनुरागेण च सरागया । तेन सहेति तुल्ययोगे तिबहुब्रीहिः । स्रुतं घनं सान्द्रं घर्म्मतोयं स्वेदोदकं यस्यां सा तया कराहत्या पाणितलास्फालनेन ध्वनितं पृथुमहदूरुपीठमिव ऊरुपीठं यस्यां तया । मुहुर्मुहुर्दशनविखण्डितोष्ठया दन्तदष्टाधरया । रुषा प्रियतमयेव भेजिरे । आविष्टा नाविष्टा स्वरौद्रस्थायी क्रोधः । प्रादुर्भूत इत्यर्थः उपमालङ्कारः ॥ २ ॥

॥ अथ सप्तदशभिः राज्ञां क्रोधानुभावानाह ॥ अलक्ष्यतेत्यादि । करोदरप्रहितं पाणितलास्फालितं निजमंसधाम स्वांशप्रदेशो येन तस्मिन् । अत एव क्षणात् दलितांगदे भग्नकेयूरे । गदे गदाख्ये कृष्णानुजे । समुल्लसद्भिरुत्पतद्भिः शकलितैः शकलीकृतैर्दलदंगगलितैः पा

ष्टलोपस्थैःपद्मरागैःकोपपावकःस्फुलिंगवानिवस्फुटंक्षणमलक्ष्यतेत्युत्प्रेक्षा । त्रिषुस्फुलिं

गोऽग्निकणइत्यमरः ॥ ३ ॥ ******************************* ॥

॥ अवज्ञयेति ॥ बलोबलभद्रःसमुल्लसन्समंततःप्रसरद्दशनमयूखमण्डलःदन्तरश्मिपट

लंयस्यसः । अवज्ञयाअनादरेणउच्चैःअहसदितियत् । तेनहासेनरुषारुणीकृतमपि

निजंवपुः । तत्क्षणंतस्मिन्क्षणे । अत्यन्तसंयोगेद्वितीया । पुनर्निजांरुचिंधावल्यमेवा

नयत्अत्रवपुषः स्वधावल्यत्यागेनदन्तधावल्यस्वीकारात् तत्क्षणंस्वगुणत्यागादन्योत्कृष्ट

गुणादूतिरितिलक्षणात् ॥ ४ ॥ ******************************* ॥

॥ यदिति ॥ उल्मुकोनामराजाउत्पतदुल्लटत्पृथुतरंहारमण्डलंमुक्ताकलापोयस्मिन्

अवज्ञयायदहसदुच्चकैर्बलस्समुल्लसद्दशनमयूखमण्डलः । रुषा

रुणीकृतमपितेनतत्क्षणान्निजम्बपुःपुनरनयन्निजांरुचिम् ॥ ४ ॥

यदुत्पतत्पृथुतरहारमण्डलम्व्यवर्त्ततद्रुतमभिदूतमुल्मुकः । बृह

च्छिलातलकठिनांसघट्टितन्ततोभवद्भ्रमितमिवाखिलंसदः ॥ ५ ॥

ततोविवर्त्तमानादखिलंसदः

कर्मणि । अभिदूतंदूताभिमुखंव्यवर्त्ततविवृतइतिद्रुतंयत् ततोविवर्त्तमानादखिलंसदः

बृहच्छिलातलकठिनेनांसेनस्कन्धेनघट्टितंभ्रमितमिवाभवत् । विवर्त्तवेगवशात्यादंस

घट्टनाद्भ्रमितमिवाभूदित्युत्प्रेक्षा ॥ ५ ॥ ******************* ॥

॥ प्रकुप्यतइति ॥ कुप्यतोऽतिक्रुध्यतोयुधाजितोनामराज्ञोवदनसरोजंश्वसनसमीरणस्य

निश्वासमारुतस्याहतिभिःस्फुटःप्रकटःउष्मत्वंउष्मायेषांतैः । ततुवसनांतमारुतैःस्व

क्षमवस्त्रांचलवातैः । कृतपरिपूर्णवीजनंशीघ्रविधूननंयस्यतत् । अतिशीघ्रंवीजमानम

पीत्यर्थः । पुनस्तरांपुनरेवतं । अव्ययादाम्प्रत्ययः । अखिदत्खिद्यतिस्म । खिदेर्दु

ङिपुषादित्वादङ्प्रत्ययः । अत्रोष्मविशेषणगत्यास्वेदहेतुत्वात्काव्यलिङ्गंवीजनेपिखेद

इतिविरोधः तेनतच्छ्रद्दइतिश्लेषोक्तिसङ्करः । बीजनमित्यज्जेर्वीअस्यरूपमितिकेचित्
तस्माद्विजिरन्यएवायंचुरादिषुअन्वेषणीयः ॥ ६ ॥ ************* ॥

॥ प्रजेति ॥ जनःसपदिविद्विषांवधायसमुद्यतमुद्युक्तंउद्भूतंअतएवातिक्रुधमधिकोधम
तैषधमप्रतीकारमित्यर्थः । निषधंनिषधाख्यंन्टपं । प्रजापतिक्रतुनिधनार्थंदक्षाध्वरध्वं
सनार्थमुत्थितंरुद्रस्येमंरौद्रंरुद्रसम्बन्धिनंज्वरमिववीरभद्ररूपिणमित्यर्थः । व्यतर्कय
त्अत्रराज्ञोपिप्रजापतित्वात्पुनः प्रजापतिक्रतुनिधनार्थमुत्थितः साक्षाद्दक्षाध्वरविध्वं
सीवीरभद्रइवायमितिउत्प्रेक्षितवानित्यर्थःउपमा ॥ ७ ॥ ********** ॥

प्रकुप्यतःश्वसनसमीरणाहतिस्फुटोष्ठभित्तनुवसनान्तमारुतैः । यु
धाजितःक्षतपरिपूर्णवीजनम्पुनस्तरम्बदनसरोजमस्विदत् ॥ ६ ॥
प्रजापतिक्रतुनिधनार्थमुत्थितम्व्यतर्कयज्ज्वरमिवरौद्रमुद्धतम् । स
मुद्यतंसपदिबधायविद्विषामतिक्रुधन्निषधमतैषधञ्जनः ॥ ७ ॥
परस्परम्परिकुपितस्यपिषतःक्ष्तोर्मिकाकनकपरागपङ्क्तिलम् । क
रद्वयंसपदिसुधन्वनोनिजैरनारतश्रुतिभिरधाव्यताम्बुभिः ॥ ८ ॥

॥ परस्परमिति ॥ परिकुपितस्यातिक्रुद्धस्य । अतएवपरस्परंपिषतःपीडयतःकरद्वय
मित्यर्थः । सपदिसुधन्वनोराज्ञःक्षतानांपिष्टानामूर्मिकाणामङ्गुलीयकानांकनकपरागे
णसुवर्णचूर्णेनपङ्क्तिलंपङ्कवत् । पिच्छादित्वान्मत्वर्थीयइलचप्रत्ययः । अंगुलीयकमू
र्मिकेत्यमरः । करद्वयंपाणियुग्मंनिजैःकरद्वयजन्यैरेवानारतश्रुतिभिरविरतस्रावैरम्बु
भिःस्वेदोदकैरधाव्यताक्षाल्यत । धावुगतिशुद्ध्योरितिधातोःकर्मणिलङ् अत्रोर्मिकाणां
करद्वयस्यचपरागत्वपंकिलत्वासम्बन्धेपिसम्बन्धोक्तेरतिशयोक्तिःनयोःसङ्करः ॥ ८ ॥ *
॥ निरेति ॥ आङ्कोनामराजा । निरायतप्रसारितांअनवशिखाऽग्निज्वावानद्गुं

ज्ज्वलांज्वलयंतीभिर्नखप्रभाभिः कृतापरिवेषसम्पत्परिधिशोभायस्यास्तां । अतएवभ्रम नोऽनलोल्मुकस्यालातस्येवाकृतिः संस्थानायस्यास्तां । अंगारेऽलातमुल्मुकमित्यमरः । प्र देशिनीजगद्भ्रमिवेत्युत्प्रेक्षा । अविभ्रमत्भ्रमयतिस्म । भ्रमेर्णौचङ् । दूतसंतर्जनाय भ्राम्यमाणानखप्रभापटलातर्जनीजगद्दाहायभ्राम्यमाणालातचक्रवदलक्ष्यतेत्यर्थः ॥ ९ ॥ ****************************** ॥

॥ दुरीक्षतामिति ॥ मन्मथः प्रद्युम्नावतारः कामस्तथादुरीक्षतां दुर्दर्शनत्वं । ईक्षतेः खलन्तात्तलप्रत्ययः । अभजतयथा हरोऽपिपुरापूर्वजन्मनिपरिचितमभ्यस्तं दाहधार्ष्ट्यं दहनसाहसंयस्यास्तयातृतीययादृशा । सशरममुंमन्मथंध्रुवंपुनर्वीक्षितुंनव्यसहतनशक्तः । परि

निरस्यतामनलशिखोज्ज्वलाज्ज्वलन्नखप्रभाकृतपरिवेषसम्पदम् । अ
विभ्रमद्भ्रमदनलोल्मुकाकृतिम्प्रदेशिनीञ्जगदिवदग्धुमाकुलः ॥
९ ॥ दुरीक्षतामभजतमन्मथस्तथायथापुरापरिचितदाहधार्ष्ट्य
या । ध्रुवम्पुनः सशरममुन्तृतीययाहरोऽपिनव्यसहतवीक्षितुन्दृ
शा ॥ १० ॥ ****************

निविभ्यः सेवस्तितस्यसिवुसहसुद्दस्तुसंजांसिवादानांवाडववावेपिड्नि विकल्पात्षत्वं ॥ अजयोत्प्रेक्षायांरुद्रस्यापिभीषणः किमुतान्येषामितिवस्तुव्यज्यते ॥ १० ॥ *** ॥

॥ विचिन्तयन्निति ॥ पृथुर्नामराजा । उपनतंप्राप्तंआहवंयुद्धं । रसाद्रणरागात्विचिन्तयन्कदेतिध्यायन् । कठिनेनकर्कशेनकठोरेणप्रवृद्धेनकामिन्याः कुचस्थलेनप्रमुदितमुपगूढंतंचन्दनंयस्यतत् । एतेनास्यसुरतसमरयोः समरसत्वंव्यज्यते । अतएवस्फुरत्तनुरुहमुद्दलत्पुलकमुरः । अग्रस्यासौपाणिश्चेतिसमानाधिकरणसमासः । अतएवहस्ताग्रमग्रहस्तादयोगुणगुणिनोर्भेदाभेदयोरितिवामनः । तेनाग्रपाणिनापाणितलेनपरामृश

न्परामृष्टवान् । रणाकण्डूलपाणित्वादितिभावः । अतएवयदन्येषांराजनकण्डूलवाक्यंत
द्वागामिरणकारणतयास्यहर्षैकहेतुरितिश्लेषार्थः ॥ ११ ॥ ************ ॥
॥ विलङ्घितेति ॥ गुरुंस्वभावतोधीरमपिसमंरूक्ष्ययापरुषयारिपोर्गिरादूनवाचा । विल
ङ्घितस्थितिमुल्लंघितमर्य्यादंक्रोधादुन्मर्य्यादंविकुर्वाणमित्यर्थः । गान्दिनीसुतमक्रूरम
भिवीक्ष्यस्वजनैस्तदाअक्रूरविक्रियालोकनसमये । युगपरिवर्त्तवायुभिःकल्पान्तवातैर्वि
वर्त्तिताःस्थानाच्चालिताःगिरिपतयोऽद्रयःप्रतीयिरेविश्वसिरे । अक्रूरविक्रियाद
र्शनादनलममियुगान्तसंभावितमेवेतिजनैर्विश्वस्तमित्यर्थः । प्रत्ययोधीनशपथज्ञानवि

विचिन्तयन्नुपनतमाहवंरसादुरःस्फुरत्तनुरुहमग्रपाणिना । पर
मृषत्कठिनकठोरकामिनीकुचस्थलप्रमुषितचन्दनम्पृथुः ॥ ११ ॥
विलङ्घितस्थितिमभिवीक्ष्यरूक्ष्यारिपोर्गिरागुरुमपिगान्दिनीसुत
म् । जनैस्तदायुगपरिवर्त्तवायुभिर्विवर्त्तितागिरिपतयःप्रतीयिरे ॥ १२
॥ विवर्त्तयन्मदकलुषीकृतेदृशौकराहतिक्षितिनिहतभैरवारवः । क्रुधा
दधत्तनुमतिलोहिनीमभूत्प्रसेनजिद्गजइवगैरिकारुणः ॥ १३ ॥

श्वासहेतुष्वित्यमरः । प्रतिपूर्वादिणःकर्मणिलिट् । अत्रकल्पान्तपवनविक्रियाकल्पे
यमक्रूरविक्रियेत्यवाक्यभेदेनसादृश्यापेक्षयानिदर्शनालङ्कारः । तेनाक्रूरस्यलोकोत्तरं
धैर्य्यंनैसर्गिकमितिवस्तुव्यज्यते ॥ १२ ॥ ************** ॥
॥ विवर्त्तयन्निति ॥ मदोमद्यविकारोदानंच । मदोमद्येभदानयोरितिविश्वः । तेनकलु
षीकृतेआकुलीकृतेदृशौविवर्त्तयन्घूर्णयन् । करेणपाणिनाशुंडादंडेनचाहतायांक्षितौ
भूमौकृतोभैरवारवोभयङ्करःध्वनिर्येनसः क्रोधात्तध्वानंकरेणक्षितिमाघ्नन्नित्यर्थः । क्रु
धाक्रोधेनअतिलोहिनीमतिलोहितां । वर्णादनुदात्तात्तोपधात्तोनइतिविकल्पात्ङीप

नकारस्यचनकारः । ननुंबपुर्दधत्प्रसेनजिन्नामराजा।गैरिकारुणोधातुरक्तोगजइवाभू

नत्तद्वल्लभ्यनइत्यर्थः ॥ १३ ॥ *************************** ॥

॥ सकुंकुमैरिति ॥ सप्रसिद्धोगवेषणोनामराजा । सकुंकुमैःसर्वाङ्गेकाश्मीरजलेपैरित्यर्थः

। अतएवपरिणतदाडिमारुणैःपरिपक्वदाडिमबीजरक्तैरंबुबिन्दुभिः क्रोधसात्विकैःस्वेद

विंदुभिरित्यर्थः । मत्सरेणांतःसंवृत्तेनात्युत्कटवैरेणस्फुटितान्निर्भिन्नान्वपुषोविनिःसृ

तैरसृजांलवैरसृग्विन्दुभिरविरलन्निरंतरंनिचितोव्याप्तइतिचिरंबभौउत्प्रेक्षा ॥ १४ ॥

॥ ससंभ्रममिति ॥ शिनिःसात्यकेःपितामहः ससंभ्रमंससत्वरंचरणतलाभिताडनेनपाद

तलाभिघातेनस्फुटन्त्याद्दलन्त्यामह्याविवरैः छिद्रैः वितीर्णवर्त्मभिर्दत्तमार्गैस्तच्चप्रसरणे

सकुङ्कुमैरविरलमम्बुविन्दुभिर्गवेषणः परिणतदाडिमारुणैः । समन्त

रस्फुटितवपुर्विनिःसृतैर्बभौचिरन्निचितइवासृजाल्लवैः ॥ १४ ॥

ससम्भ्रमञ्चरणतलाभिताडनस्फुटन्महीविवरवितीर्णवर्त्मभिः । रवेः

करैरनुचितनापितोरगम्प्रकाशतांशिनिरनयद्रसातलम् ॥ १५ ॥

रित्यर्थः । रवेःकरैःकिरणपदार्थकमुख्यविशेषणंगत्याक्रमात्किरणमनुचितमिदंपूर्वंयथा

तथानापितःसंतापगमिताःउरगायस्मिन्तत्तरसातलंप्रकाशतांप्रकाशत्वमनयत् । अत्र

महीरविकरैरगरसातलानांक्रमेणस्फुटनान्तःप्रवेशनाप्रकाशत्वैरसम्बन्धेपिसम्बन्धोक्तेर

तिशयोक्तिःपादाहतैरमानुषीतिवनांव्रजति ॥ १५ ॥ ************ ॥

॥ प्रतीति ॥ शारणोनामराज्ञिप्रतिक्षणंशिरोविधुवतिक्रोधात्कम्पयतिसति । धुवस्तौरादि

काल्लटःशत्रादेशःअचिश्नुधात्वित्यादिनाउवङादेशः । शिखिवत्द्योततइतिशिखि

द्युतोऽग्निप्रभाः । क्विप् । कनककिरीटरश्मयोनीराजनकर्त्तारः । अमीभूपाःअधुनाअ

शङ्कितंनिःशङ्कंयुधमाजि । समित्याजिसमिद्युधइत्यमरः । विशन्तितिक्षमापतीन्निरस्य

जयन्तइवनीराजयन्तिस्मेत्युत्प्रेक्षा । नीराजनानाविजयइत्यागमः ॥ १६ ॥ *** ॥

॥ दधाविति ॥ विततेविस्तृतेवृहत्यौभुजेललेइवभुजेलतेवयस्सविदूरथोनामराजा । वि

वक्षयाकिमपिवक्तुमिच्छयाविदारितंव्यावृतं । अतएवचलन्तीपृथुर्महतीरसनाजिह्वाय

स्मिन्तत् । रसनारसज्ञाजिह्वेत्यमरः । प्रतिभयंभयंकरमास्यंकन्दरइवास्यकन्दरस्तं ।

दरीतुकंदरोवास्त्रीइत्यमरः । तत्‌चलत्फणाधरःफणीयस्मिन्‌कोटरमिव । निष्कुरःकोट

रंवानेत्यमरः । दधावित्रौतीपूर्णोपमा ॥ १७ ॥ *************** ॥

॥ समाकुलइति ॥ परोदितैःशत्रुवाक्यैः । सदसिस्थाने । तथासमाकुलेक्षुभितेपि । मु

प्रतिक्षणम्बिधुवतिशारणेशिरःशिखिद्युतःकनकिरीटरश्मयः ।
अशङ्कितस्युर्घमधुनाविशन्त्वमीक्ष्मापतीनितिनिरराजयन्निव ॥
१६ ॥ दधौचलत्पृथुरसनाम्बिवक्षयाविदारितम्बिततवृहद्भुजाल
तः । विदूरथःप्रतिभयमास्यकन्दरञ्चलत्फणाधरमिवकोटरन्तरुः॥
१७ ॥ समाकुलेसदसितथापिबिक्रियाम्मनोगमन्नमुरभिदःपरोदि
तैः । घनाम्बुभिर्बहुलितनिम्नगाजलैर्जलन्नहिव्रजतिविकाशमम्बु
धेः ॥ १८ ॥ *****************

रभिदोहरेर्मनोविक्रियांक्षोभंनागमत् । तथाहिबहुलितानिवर्द्धितानिक्षोभितानि

निम्नगाजलानियैस्तैर्घनाम्बुभिःमेघोदकैरम्बुधेर्जलंविकारंनव्रजति । यथावर्षोदकैर्न

क्षुभ्यतिसमुद्रस्तद्वदितिभावः दृष्टान्तालङ्कारः ॥ १८ ॥ ********* ॥

॥ परानिति ॥ अमीखलाः । परानन्याननपवदन्तोनिन्दन्ति । अपादइतिआत्मनेप

दं । आत्मनःस्वानिस्तुवन्तिचेतियत्असावमीषांखलानांस्थितिःप्रकृतिरितिइतिमत्त्वेत्य

र्थः । गम्यमानार्थत्वादप्रयोगःअन्ययापीनत्क्षयमित्यलङ्कारिकाः । विस्मितेनानभनौनि

अविस्मितेऽद्भुतप्रतापैर्विस्मयं न गतः उद्धवः स्मितं स्मेरं । उभयत्र कर्त्तरि क्तः । अत एव शर
च्छशधरमुग्धं शरदिन्दुसुन्दरमित्युपमा । मुखं विकृतिं न निनाय न प्रापयामास । नहि
महतां निन्दास्तुती विकारकारणे इति भावः ॥ १९ ॥ ************** ॥
॥ निरस्तत इति ॥ नत्वसत इति । इतीत्थं प्रकोपिभिरतिक्रुद्धैर्यदुभिः विद्विषां स्पशेश्चरे ।
अपसर्पश्चरः स्पश इत्यमरः । निरस्तते अधिक्षिप्ते शनैर्गतवति गच्छति सति । सागमोऽपि दू
तस्यावध्यत्वादिति भावः । अथ दूतागमनानन्तरं । स्वनितेन ध्वनिना भयंकराः भयानकाः
आनकाः पटहा यस्मिन् तत् मुरद्विषो बलं क्षणात् जये युद्धे च समनह्यत सन्नद्धम् ॥ २० ॥

परानमीयदपवदन्त आत्मनः स्तुवन्ति च स्थितिरसतामसाविति । नि
नाय न विकृतिम् विस्मितः स्मितम्मुखं शरच्छशधरमुग्धमुद्धवः ॥
१९ ॥ निरस्तते यदुभिरतिप्रकोपिभिः स्पशे शनैर्गतवति तत्र वि
द्विषाम् । मुरद्विषः स्वनितभयानकानकम्बलं क्षणादथ समनह्यता
जये ॥ २० ॥ मुहुः प्रतिस्खलितपराङ्मुखायुधि स्थवीयसीरचल
नितम्बनिर्भराः । अदंशयन्नरहितशौर्यदंशनास्तनूरयन्नय इति
वृष्णिभूभृतः ॥ २१ ॥ ************

॥ मुहुरिति ॥ वृष्णिभूभृतो यदुनरेन्द्राः । मुहुरसकृद्युधि प्रतिस्खलितपराङ्मुखाः भग्नप्रति
पक्षायुधाः । स्थवीयसीः स्थूलतराः पराक्रमानुरूपप्रकर्षवतीरित्यर्थः । स्थूलदूरेत्यादिना
पूर्वस्य गुणलोपौ । अचलनितम्बनिर्भराः अद्रिकटकनिबिडाः अतः भारवतीरित्यर्थः । अ
हितमत्यक्तं शौर्यमेव दंशनं वर्म यासां तास्तनूर्देहान् अयं नय इति वर्मधारणं नीतिरिति हेतो
र्नतु भयादिति भावः । अदंशयन् अवर्मयन् । दंशेरनुदात्तत्वात्परस्मैपदं चिंत्यमित्याहुः
अत एव भट्टमल्लः संवर्मयति सन्नह्यत्यात्मने सज्जनीत्यमी दंशयते दंशयते सन्नाहे पदं च

कमिति । केचित्तु उरोदिघ्नूभयपदिषु पठंति । अत्र साभिप्रायविशेषणत्वात्परिकरालङ्का
रः ॥ २१ ॥ ****************************** ॥
॥ दुरुद्वहा इति ॥ महिमभृतां मैश्वर्य्यवतां । महीभुजां राज्ञां सम्बन्धिनी रणश्रवणान्युद्ध
श्रवणात् । आशु शीघ्रं उपचयं वृद्धिं बिभ्रति बिभ्राणे वपुषि । अपरैरन्यैः क्षणं क्षणमं पदुरु
द्वहा दुर्भरा मुदः संतोषाः अंतरा न संममुः तदन्तरे बहिः कंचुकास्तु न संममुः नमान्ति स्म नो वर्त्त
न्तेत्यर्थः । पूर्वत्र आधेयाधिक्यादुत्तरत्राधाराधिक्यादिति विवेकः अत्र मुदां कंचुकानां च प्र
कृतानामेव विशेषणसाम्यादौपम्यगम्यतायां केवलप्रकृतास्पदा तुल्ययोगिता ॥ २२ ॥
॥ सकल्पनमिति ॥ द्विरदगणं । सह कल्पनया सकल्पनं । कवचादिसन्नाहसहितं ।

दुरुदहाः क्षणमपरैस्तदन्तरे रणाश्रवादुपचयमाशु बिभ्रति । मही
भुजां महिमभृतां न सम्ममुर्मुदोन्तरे वपुषि बहिश्च कञ्चुकाः ॥ २२
॥ सकल्पनं द्विरदगणं वरूथिनस्तुरङ्गिणो जयनयुजश्च वाजिनः
। त्वरायुजः स्वयमपि कुर्वतो नृपाः पुनः पुनस्तदधिकृतानतत्वरन् ॥
२३ ॥ ****************

कल्पनासज्जना समाइत्यमरः । वरूथो रथगुप्तिर्येषामस्तीति वरूथिनो रथान् । रथ
गुप्तिर्वरूथिनीत्यमरः । तुरंगिणोऽश्वयुक्तान् वाजिनोऽश्वान् जयनयुजः पल्ययनादिस
न्नाहनादिसंयुक्तान् । संपदादिभ्यः क्विप् । जयनः स्यात्तुरंगादिसन्नाहे विजयेपि चेति वि
श्वः । स्वयं त्वरायुजः । त्वरायुक्तान् स्वतः कुर्वतोपि स्वत एव त्वरया कुर्वाणानपीत्यर्थः तदधिकृ
तान् हस्त्यादिषु नियुक्तपुरुषान् नृपाः पुनः पुनरतत्वरन् त्वरयंति स्म तेषां तयारणोत्सेका
दितिभावः । त्वरेणौँ चङि अत्स्मृदृत्वर प्रथम्रदस्तृस्पशामित्यभ्यासस्याकारः ॥ २३ ॥
॥ युद्धइति ॥ अथ परैः सह युद्धे युद्धाय दृढबद्धा कक्षा मध्यबंधनं यस्यास्तया । कक्षावृ

दनिकाय्यां स्यात्कांच्यां मध्येभवंधनेइतिविश्वः । अन्यत्रदृढोद्योगायेत्यर्थः । कलंकाण भामधुपकुलेनालिगणेनोपगीतयावंदिमागधस्तुतयावेतिगम्यते । द्विपघटयाकर्त्र्यासवं सवारिभिःसोदकैःकरोदरैःपुष्कराग्रैःपाणितलाग्रैश्चाक्षयमपरिमितंदानंमदःसंदीयतेइ तिदानंद्वयंचाद्दीयतद्त्त । अत्रप्रस्तुतगजघटाविशेषणसाम्येनाप्रस्तुतरणदानकर्त्तृप्र तीतेःसमासोक्तिरलङ्कारः ॥ २४ ॥ ********************** ॥

॥ सुमेखलाइति ॥ शोभनामेखलावंधनरज्जुचाणिकांच्ययस्यायासांताःसुमेखलाः । मेखला खड्गवंधेस्यात्कांचीशैलनितम्बयोरितिविश्वः । सिततरैर्दन्तैर्दन्तमयतनुभिर्दर्शनैश्चार

युद्धेपरैःसहदृढबद्धकक्ष्ययाकलङ्कणान्मधुपकुलोपगीतया । अदी यतद्विपघटयासवारिभिःकरोदरैःस्वयमथदानमक्षयम् ॥ २४ ॥

सुमेखलाःसिततरदन्तचारवःसमुन्नसत्तनुपरिधानसम्पदः । रणै षिणाम्पुलकभृतोधिकन्धरन्नलम्बिरेसदसिलताःप्रियाइव ॥ २५ ॥

मनोहरैःप्रकृतिमनोरमाकृतिर्भयप्रदैःसमितिषुभीमदर्शनः । अधि दैवतैःसततमथानपायिभिर्निजाङ्गवन्मुरजिदसेव्यतायुधैः ॥ २६ ॥

वःउल्लसन्त्यःतनवःसूक्ष्माःपरिधानसंपदःकोशसंपदोवस्त्रसंपदश्चयासांताः । पुलकभृ तः । पुलकःकृमिभेदेस्याद्गल्वर्कमणिदोषयोरित्यमरः । छायाभृतःरोमांचधारिणश्च द्सिलताःचारुखड्गावल्यःप्रियाइवरणैषिणांरणाकांक्षिणांकंधराखधिकंधरं अधिकन्ध रं अधिकरणं । विभक्त्यर्थेऽव्ययीभावः । ललम्बिरेलग्नाइत्यर्थः । श्लेषःश्लिष्टोपमावामन भेदान् ॥ २५ ॥ *************************** ॥

॥ मनोहरैरिति ॥ अथप्रकृतिमनोरमाकृतिःस्वभावसुन्दरमूर्त्तिः । समितिषुयुद्धेषु । भीमंदर्शनंयस्यसभीमदर्शनोमुरजिन्मध्वरिर्मनोहरैःप्रकृतिमनोहरैःसमितिषुभयप्रदैः

अधिदैवतैः अधिदेवतायुक्तैः आयुधैः शार्ङ्गादिभिर्निजांगवत्पृथगवस्थितैः सततं अनपायि भिःशरीरैरिवेत्युत्प्रेक्षा। असेव्यतासेवितः ॥ २६ ॥ ************** ॥

॥ अवारितमिति ॥ अथयुद्धसन्निधानानन्तरं । सहरिरुभयेषुद्वयेषुद्विविधेष्वित्यर्थः क्ष्माभृतांराज्ञांगिरीणांचकटकांतरेष्वपिशिविराभ्यन्तरेषुनितम्बावकाशेषु। भूरिश्रःवद्धश्रः। अवारितमप्रतिहतंगतंप्रस्थितं । मुकुरसकलयुधिक्षतानांसुरशत्रूणामसुराणां शोणितैःप्लुताःसिक्ताःप्रधयोनेमयोयस्यतं । चक्रधाराप्रधिर्नेमिरितिहलायुधः । रथमधिरोहतिस्मआरुरोह ॥ २७ ॥ *********************** ॥

अवारितङ्गतमुभयेषुभूरिश्रःक्ष्माभृतामथकटकान्तरेष्वपि। मुकुर्युधिक्षतसुरशत्रुशोणितप्लुतप्रधिंरथमधिरोहतिस्मसः ॥ २७ ॥

उपेत्यचसत्वनगुरुपक्षमारुतन्दिवस्त्विषाकपिशितदूरदिङ्मुखः। प्रकम्पितस्थिरतरयष्टितत्क्षणाम्पतत्पतिःपदमधिकेतनन्दधौ॥२८॥

गम्भीरताविजितमृदङ्गनादयास्वनश्रियाहतरिपुहंसहर्षया । प्रमोदयन्नथमुखराक्कलापिनःप्रतिष्ठतेनवघनबद्धथःसमः ॥२९ ॥

॥ उपेत्येति ॥ किंचेतिचार्थः। पतत्पतिःअंडजमण्डलेश्वरः । पतत्पत्ररथांडजाइत्यमरः । त्विषाकान्त्याकपिशितानिकपिलीकृतानिदूराणिदिङ्मुखानियेनसः। स्वनेन गुरुर्महान्पक्षमारुतोयस्मिन्कर्मणितत्तथादिवःस्वर्गादुपेत्यागत्यतत्क्षणंतस्मिन्क्षणेप्रकम्पिताःस्थिरतरानिश्चलायष्टिरावासस्तम्भोयस्मिन्तत्तथाअधिकेतनंअधिकेतने । विभक्त्यर्थेऽव्ययीभावः। पदंदधौनिहितवान् ॥ २८ ॥ *********** ॥

॥ गम्भीरतेति ॥ अथगरुडागमनानन्तरंसरथोनवघनेननवाम्बुदेनतुल्यं। तेनतुल्यमिति वतिप्रत्ययः । गम्भीरतयागाम्भीर्येणविजितोमृदङ्गनादोयया । तथाहतोरिपुहंसानां

हंसानामिवरिपूणां हर्षीयया । तथा स्वनश्रियाध्वनिसम्पदामुखरान्कूजतः । क्वापि नोमयूरान्प्रमोदयन्प्रतिष्ठते स्म ततोरथोप्रतस्थे । समवप्रविभ्यः स्थइत्यात्मनेपदंलट् स्मेइ निभूतेलड् । नञ्जितगनाश्रीनापूर्णोपमा ॥ २९ ॥ ************ ॥

॥ निरन्तरेति ॥ ततोरथप्रस्थानानन्तरं निरन्तरं निरंध्रंस्थगितानिआच्छादितानिदिग न्तराणियेनतत् । उच्चलितं प्रतिष्ठमानंतद्बलं सैन्यंअवलोकयन्जनोलोकः । प्रकृतःप्र क्रान्तोमहाप्लवोमहापूरोजगत्संप्लवरूपोयेनतस्मिन् । विशृंखलमप्रतिघातंप्रचलितं क्षुभितंयत्सिन्धोरब्धेर्वारितस्मिन्विकौतुकोनिवृत्तकौतूहलोऽभवत्कल्पान्तक्षुभितवारि धिर्वारिवद्बलस्यसकलजगत्संहारशंकामलक्ष्यतेइत्यर्थः । अन्यत्रदर्शनेभ्यःदिदृक्षुर्निवृ

निरन्तरस्थगितदिगन्तरन्ततस्समुच्चलद्बलमवलोकयञ्जनः । विकौ
तुकः प्रकृतमहाप्लवेभवद्विशृङ्खलप्रचलितसिन्धुवारिणि ॥ ३० ॥
बवृंहिरेगजपतयोमहानकाःप्रदध्वनुर्जयतुरगाजिहेषिरे । असं
भवद्गिरिवरगह्वरेष्वभून्तदारवैर्द्दलितइवस्वआश्रयः ॥ ३१ ॥

त्तेर्बलताद्धिवारिणोरनेकत्वाक्षेपेवाधात् सादृश्यापेक्षयात् वाक्यभेदेनप्रतिबिम्बकरणात् निदर्शनालङ्कारः ॥ ३० ॥ ************************** ॥

॥ बवृंहिरेइति ॥ गजपतयःबवृंहिरेबवृंहुःबृंहणंचक्रुरित्यर्थः । बृंहिवृद्धौशब्दे चात्म नेपदंचिंत्यं । अतएवभट्टमल्लःदिग्गतेबृंहणेस्वानांहस्तिनांबृंहणोचेति । महानकाःप्रद ध्वनुर्जयशीलास्तुरगाजयतुरगाजिहेषिरेहेषांचक्रुरित्यर्थः । हेषृह्रेषृअव्यक्तेशब्दे । त दास्मिन्कालेअसंभवन्त्यंतर्द्धातुमपर्याप्नुवन्तिगिरिवरगह्वराणियेषांतेषुगिरिवरगह्वरे षुअहेमाद्रिवर्त्तमानेष्वित्यर्थः । रवैर्बृंहणादिघोषैः । स्वआश्रयःस्वसमवायिकारणमा काशोदलितविदारितइवभूदित्युत्प्रेक्षाजयानेघामतिनीवत्तंवक्ष्यते ॥ ३१ ॥ ** ॥

॥ अनारतमिति ॥ मधुद्विषो हरेर्दुन्दुभौ रणभेर्य्यां । जयाय यानारतमश्रान्तं रसतिध्वन तिसति । फलंतः संक्रमन्तो ऽलघवो महान्तः प्रतिस्वनाः प्रतिध्वनयो येषु तैः । विनिःपतन्तः स्वे भ्यो निर्गच्छंतः मृगपतयः सिंहा येभ्यस्तैर्गुहाभिरेव मुखैरद्रयः परां मुदं गताः सन्तः अहसन्निव सिंहानां धावल्याद्धि नियोगाच्च हासत्वोत्प्रेक्षा ॥ ३२ ॥ ************* ॥

॥ जडीकृत इति ॥ दिवमोको येषां तेषां दिवौकसां देवानां कंदरान्तर्गतानामित्यर्थः । जडीकृतश्रवणपथे बधिरीकृतदिवौकसां श्रोत्रमार्गे । सापेक्षत्वेपि गमकत्वात्समासः । चमूरवे सेनाघोषे सुराद्रिकंदराः मेरुगह्वराणि विशति सति । विदग्धकामिनीनां प्रौढाङ्गना

अनारतं रसति जयाय दुन्दुभौ मधुद्विषः फलदलघुप्रतिस्वनैः । विनिःपतन्मृगपतिभिर्गुहामुखैर्गताः परां मुदमहसन्निवाद्रयः ॥ ३२ ॥
जडीकृतश्रवणपथे दिवौकसां चमूरवे विशति सुराद्रिकन्दराः । अनर्थकैरजनि विदग्धकामिनीरतान्तरक्वणितविलासकौशलैः ॥ ३३ ॥
अरातिभिर्युधि सहयुध्वनो हतान् जिघृक्षवः श्रुतरणतूर्य्यनिःस्वनाः । अकुर्वत प्रथमसमागमोचितं चिरोज्झितं सुरगणिकाः प्रसाधनम् ॥ ३४ ॥ ****************

नां रतान्तरे सुरतमध्ये क्वणितविलासाः कूजितसंपद्रूपास्तु यानि कौशलानि तैरनर्थकैरजनि जातं प्रेयसां बाधिर्य्यादिति भावः । अत्र श्रोत्रजाड्यस्य विशेषणगत्या क्वणितानर्थक्यहेतुत्वात् काव्यलिंगं तदुपजीवितेन क्वणितानामानर्थक्यासंबन्धेपि सम्बन्धोक्तेरतिशयोक्तेरुत्थापितयोरनयोरंगांगिभावेन शङ्करः ॥ ३३ ॥ ********************* ॥

॥ अरातिभिरिति ॥ सहयुध्यन्त इति सहयुध्वनः । सहे चेति क्वनिप् । अत एवारातिभिर्युधि हतान् जिघृक्षवो गृहीतुमिच्छवः स्वयंवरणकामाः । ग्रहेः सन्नन्तादुप्रत्ययः । सुरग

गिताः अश्वास्सः पुनरग्णतूर्य्यनिःस्वनाः संत्यश्चिरोज्झितंप्रायेणप्रवीरसंवादाभावादि तिभावः। प्रथमसमागमोचितंमतिमोहनमित्यर्थः। प्राथम्यंचपुंसामिदंप्रथमत्वादितिभा वः। प्रसाधनंअकुर्वनापरिस्कृतवन्यइत्यर्थः। प्रतिकर्मप्रसाधनमित्यमरः। अत्रसयंव रे ऽयतूर्य्यश्रवणयोर्विशेषणगत्याप्रसाधनहेतुत्वात्काव्यलिङ्गम्॥ ३४॥ *****॥

॥ प्रचोदिताइति॥ परिचितंयन्तृकर्मसादिकृत्यंयैस्तैः सभ्यस्तगजशास्त्रैरित्यर्थः। अत एवविदितेयतांकुशक्रियेयतयानाख्येपदांकुशकर्मणियैस्तैः। यादकर्मयतंप्रोक्तंयातमं कुशवारणमितिहलायुधः। निषादिभिर्यन्तृभिःप्रचोदिताःप्रेरिताःगजाःसकृदेकवारमेव करतललोलाभिः पाणितलचलिताभिर्लालिकाभिरंतर्नाडिकाभिर्हतास्ताडितास्तथाप्य

प्रचोदिताःपरिचितयन्तृकर्म्मभिर्निषादिभिर्विदितयताङ्कुशक्रियैः।
गजास्सकृत्करतललोललालिकाहतामुहुःप्रणदितघण्टमाययुः॥
३५॥ सविक्रमक्रमणचलैरितस्ततःप्रकीर्णकैःक्षिपतइवक्षितेर
जः। व्यरंसिषुर्नखलुजनस्यदृष्टयस्तुरङ्गमादभिनवभाण्डभारिणः
॥ ३६॥ ********************

सकृत्प्रणदितामुहुरूर्ध्वंनयन्तोघण्टायस्मिन्कर्मणितत्तथाआययुः। प्रस्थानुमागताःस्व भावोक्तिः॥ ३५॥ ********************************॥

॥ सविक्रमइति॥ सविक्रमेणसांघ्रिविन्यासविशेषेणक्रमणेनचलैःप्रकीर्णकैश्चामरैः। चामरंतुप्रकीर्णकमित्यमरः। क्षितेरजःस्वखुरोद्धतमितस्ततःक्षिपतोनिरस्यतइवास्थिता रित्युत्प्रेक्षा। अभिनवभांडभारिणःप्रत्यग्राभरणधारिणः। स्याद्भाण्डमाभरणमित्यमरः ।तुरंगमात्तुरंगमेभ्यः। जातावेकवचनं। जुगुप्साविरामप्रमादार्थानामुपसंख्यानमित्यपा दानत्वं। जनस्यदृष्टयोनव्यरंसिषुर्ननिवारिताःखलु। रमेर्लुङिव्याङ्परिभ्योरमइतिप

एखैपदंयमरमनमानांसक्तेनिवसःसिचःइटिनेटीनिवृद्धिप्रतिषेधः ॥ ३६ ॥ *** ॥

॥ अथत्रिभिःश्लोकैःकुलकमाह ॥ चलेत्यादि । स्फुटंक्वतंकर्णतालःकर्णताडनंययातया द्विपघटयाकर्त्र्या । चलांगुल्यएवकिशलयायस्मिन्कर्मणितत्तयोद्धतैःकरैःहस्तैरन्दन्य तआनर्त्ति । भावेलङ् । मदोदकेनद्रावाख्याद्रीसुकटभित्तिषुगंडस्थलेषुसंगिभिरास क्तैःमधुपगणैर्भ्रमरगणैःकलस्वरंमधुरस्वरमगीयतगीतं । भावेलङ् ॥ ३७ ॥ *** ॥

॥ असिच्यतेति ॥ धृतौनवौपूर्णकुम्भौशिरःपिंडौकलशौययातयाद्विपघटयाकर्त्र्या । कुम्भौघटेभमूर्द्धानावित्यमरः । प्रशमितपांसुभिर्मदाम्बुभिर्महीअसिच्यतसिक्ता । आ

चलाङ्गुलीकिशलयमुद्धतैःकरैरन्दन्यतस्फुटक्वतकर्णतालया । म दोदकद्रवकटभित्तिसङ्गिभिःकलस्वरम्मधुपगणैरगीयत ॥ ३७॥

असिच्यतप्रशमितपांसुभिर्म्महीमदाम्बुभिर्द्धृतनवपूर्णकुम्भया । अ वाद्यतश्रवणसुखंसमुन्नमत्पयोधरध्वनिगुरुतूर्य्यमाननैः॥३८ ॥

उदासिरेपवनविधूतवाससस्ततस्ततोगगनलिहस्तुकेतवः । यतःपु रःप्रतिरिपुशार्ङ्गिणःस्वयम्व्यधीयतद्विपघटयेतिमङ्गलम्॥३९॥*

ननैर्मुखैःकरणैःश्रवणयोःसुखयतीतिसुखंसुखकरं । सुखहेतौसुखेसुखमितिशब्दार्ण वे । समुन्नमत्पयोधरध्वनिगुरुउद्यन्मेघगर्जितगंभीरंतूर्य्यंअवाद्यतवादितं । स्वमुखवृंह णैरेवतूर्य्यसम्पादितमित्यर्थः ॥ ३८ ॥ ********************* ॥

॥ उदासिरेइति ॥ पवनेनविधूतवाससःकम्पितवासः । गगनलिहोऽभ्रंकषाःकेतवोध्व जास्ततस्ततरुदासिरेउत्क्षिप्ताइतीर्थद्विपघटयाप्रतिरिपुरिपून्प्रति । आभिमुख्येऽ व्ययीभावः । यतोगच्छतः । इणोलटःशत्रादेशः । शार्ङ्गिणःपुरोऽग्रेस्वयंमंगलंव्यधीयत विहितं । अत्रश्लोकत्रयेप्रस्तुतद्विपघटाविशेषणसाम्यादप्रस्तुतमङ्गलाचरणपरपुरंध्री

प्रतीतेः समासोक्तिरलङ्कारः ॥ ३९ ॥ ************************ ॥

॥ नेति ॥ प्रभूततां प्रमाणं दधति दर्भा नेवलेसैन्ये चलति प्रतिष्ठमानेपि । अस्तैनिवेशभूः सेनानिवेशभूमिः शून्यतां रिक्ततां नागमत् । तथा हि यगाव घौ बुगां ते पयसि भुवमभिद्रव त्यभिद्रवमानेसति । सरित्पतिः समुद्रो रिक्ततां न समुपैति हि । दृष्टान्तालङ्कारः ॥ ४० ॥

॥ यियासितामिति ॥ अयमधुभिद्धरिरेव विवस्वान् तेन यियासितां यातुमिष्टां जिगमिषितां । यातेः सन्नन्तात्कर्मणि क्तः । पततो भिधावतः परबलस्य शत्रुसैन्यस्य रेणून्मलान् धारयतीति तन्मालिनी । मलतेर्णिनिप्रत्ययः । अतएव जरतो वृद्धस्य महिषस्य विषाणवद्धूस

कुलकम् । नशून्यतामगमद् सेनानिवेशभूः प्रभूततान्दधति बले चलत्यपि । पयस्यभिद्रवति भुवं युगावधौ सरित्पतिर्न हि समुपैति रिक्तताम् ॥ ४० ॥ यियासितामथमधुभिद्विवस्वता जनो जरन्महिषविषाणधूसराम् । पुरः पतत्परबलरेणुमालिनीमलक्ष्ययद्दिशमभिधूमितामिव ॥ ४१ ॥ मनस्विनामुदितगुरुप्रतिश्रुतिश्रुतस्तथा न निजमृदङ्गनिस्वनः । यथा पुरः समरसमुद्यतद्विषद्बलानकध्वनिरुदकर्षयन्मनः ॥ ४२ ॥ ※※※※※※※※※※※※※※※※※※

रां धूम्रां । पुरोऽग्रे दिशमभितो धूमोऽस्याः संजातस्तामभिधूमितामिव जनो लोकोऽलक्षयत् । मधुभिद्विवस्वतेति रूपकोत्थापित अग्रदिशि धूमित्वोत्प्रेक्षेति सङ्करः । अत्राङ्गः अङ्गारिणी दिक् जविविप्रयुक्तां यस्यां रविस्तिष्ठति सा प्रदीप्ता प्रधूमता या स्युनियां दिनेशः शेषाः प्रशस्ताः शुभदास्तताः स्युरिति ॥ ४१ ॥ ****************** ॥

॥ मनस्विनामिति ॥ उदिता उत्पन्ना गुरुर्महती प्रतिश्रुतिः प्रतिध्वनिर्यस्य सः । निजमृदङ्गनिस्वनः स्वसेनातूर्यघोषः श्रुतः सन् तथा मनस्विनां मनो नोदकर्षयत् नाचकर्ष । द्विषद्

स्वार्थत्वं तः। यथा पुरो ग्रे तमरसत्युग्र तमरोत्पुक्रे द्विषद्ध ते एतु सैन्ये ये आनका नेषां ध्वनिह
ह्रकर्षयन्। एतेनैव वीरस्थायी महोत्साह उक्तः। अत्र भयं करस्यापि परसैन्य घोषस्योत्सा
हजनकत्वं महावीरेषु न विरुद्धमिति विरोधाभासोलङ्कारः भयानुत्पत्तेर्विशेषोक्तिः॥४२॥
॥ यथायथेति॥ हरिर्वरो नाम नेव हरिवरः। वरेणनामात्र रिवर्गयोरिति निविस्त्रः। तस्या
ग्रतःसरतीत्यग्रतः ऽयेतरं। पुरोग्रतो ग्रेषसर्त्तेरिति टच्प्रत्ययः। सपूर्वोक्तः पटहरवो यथा
यथा यावद्यावत्समीपतामासन्नतामुपागमत्। तथा तथा तावत्तावद्विषतांचमूर्जनीव भूरि
व। जनी सोमनितनीव भूरिर्निविस्त्रः। चेतसा मुदाकुला आनन्दाकुला हसितवपुरोमां
चितांगी। हृषेर्लोमस्विति डागमः। अजनिजाता। जनेःकर्त्तरि लुङ्दीपजनेत्यादिना

यथायथापटहरवःसमीपतामुपागमत्स हरिवराग्रतःसरः। तथातथा
हसितवपुर्मुदाकुला द्विषांचमूरजनि जनीव चेतसा ॥ ४३ ॥ प्र
सारिणी सपदि नभ स्थले ततः समीरणभ्रमितपराग रूषिता। व्यभाव्य
तमलयजकालिकाकृतिर्विदूरतः प्रतिबलकेतनावलिः ॥ ४४ ॥

चिण्प्रत्ययः। बभूवरसं नागमनन्तरं प्रतिद्वंद्विनमागमे महोत्साहयुद्धं तावीरसैन्ययानड्
युपमार्थः। तेन सैन्ययोरन्योन्यशब्द श्रवणकारिणी प्रत्यासत्तिरसोदिति व्यज्यते॥४३॥
॥ प्रसारिणीति ॥ ततः श्रवणानंतरं सपद्यविलंबे नभस्थले प्रसारिणी व्याप्ता। समीरणेन
वायुना भ्रमितेन परागेण रूषिता रूक्षीकृता। अत एव प्रलयजायाः कल्पान्तप्रादुर्भूतायाः का
लिकाया महाकाल्या आकृतिरिवाकृतिर्यस्याः सा। प्रतिबले प्रतिपक्षसैन्ये केतनावलिर्ध्वज
पंक्तिर्विदूरतो दूरादलक्ष्यत। एतावता प्रत्यासत्तिरसोदित्यर्थः। उपमालङ्कारः॥
४४ ॥*********************************** ॥
॥ क्षणेनेति ॥ अभिमुखस्याभिमुखस्य तिग्मरश्मेः कवांशोः प्रतिप्रभाभिः प्रतिफलितदीप्ति

भिः स्फुरद्भिर्दैदीप्यमानैरसिभिः खड्गैर्दुःखंदुष्कारंदर्शनंयस्याःसादुर्दर्शेत्यर्थः। असाव सुरचमूर्दैत्यसेनाक्षणेनचचमूभृतांहरिसैनिकानां। भृशंभयंकरेतीनभयंकरापि। मेघ र्तिभये कृत्रःखच्प्रत्ययः। दर्शनीयतांमनोहरतामितिविरोधः। दृष्टिविषयतांययावि त्यविरोधः अतएवविरोधाभासोलङ्कारः॥ ४५ ॥ *************** ॥

॥ पयोमुचामिति॥ अथासुरसेनादर्शनानन्तरं। समविषमेषुनिम्नोन्नतेषुसमक्रमस्तुल्यसं चारः। बलजलराशिःसैन्यसागरः। दिविव्योम्निद्रुतमभिपततामभिधावतांपयोमुचांसंब न्धीआतपस्यविपर्य्ययःच्छायेवपरितःक्षणात्क्षमातलंभूतलंव्यानशे। अभ्यूयात्॥ अत

क्षणेनचप्रतिमुखतिग्मदीधितिप्रतिभास्फुरदसिदुःखदर्शना। भयङ्करभृशमपि दर्शनीयताय्ययावसावसुरचमूश्चमूभृताम्॥ ४५॥

पयोमुचामभिपततान्दिविद्रुतम्बिपर्य्ययःपरिगतइवातपस्यसः। समक्रमःसमविषमेष्वथक्षणात्क्षमातलम्बलजलराशिरानशे॥४६॥

ममैःपुरःक्षणमिवपश्यतोमहत्तनूदरस्थितभुवनत्रयस्यतत्। विशालतान्दधतिनितान्तमायतेबलन्द्विषाम्मधुमथनस्यचक्षुषि॥४७॥

आदेरित्यभ्यासदीर्घःअश्नोतेश्चेतिनुमागमः उपमालङ्कारः ॥ ४६ ॥ ***** ॥

॥ ममैरिति ॥ पुरोऽग्रेक्षणमिवपश्यतःक्षणमात्रंविलोकयतः। इवशब्दोवाक्यालङ्कारे तनोःक्षौद्रदीपस्योदरेकुक्षौस्थितंभुवनत्रयंयस्यतस्यमधुमथनस्यहरेःसंबंधिनिविशालतां वैपुल्यंदधतिदधाने। नितान्तमायतेदीर्घेऽक्षिणिचक्षुषिमहत्द्विषांबलंममौववृते। क्षु णामीक्षणादेवपरवलेइयत्तापरिविच्छेदेत्यर्थः। क्षौद्रंदीपस्यपिकुक्षौभुवनत्रयपरिच्छि दनःहरेरतिमहतिचक्षुषिअल्पवलपरिच्छेदःकियानितिभावः। अत्रभुवनत्रयापेक्षया धेयस्यकुक्षरल्पत्वाच्चक्षुरपेक्षयाधेयस्यवलस्याल्पत्वाच्चाधिकारःसंकीर्य्यते॥ ४७ ॥ * ॥

॥ भृशेति ॥ क्षितिपचमूवोवध्वइवेत्युपमितसमासः । रतेरिवेति लिंगात् । तासांगणाःमुखेमुखेयुद्धाग्रेभरतेर्मुखेरन्यारंभइवसपदिभृशंखिन्नंतीतिभृशखिन्नः । क्विप् । पुलकविकाशिमूर्त्तयोरोमांचोदंचितगात्रारसः वीरशृंगारस्तेनाधिकेनिर्भरेमनसितिनिविष्टसाध्वसाःप्रविष्टधाष्टर्याः । ससंभ्रमाःसत्वराश्चाभवन् । यावद्वीवधूनांसुरतरसःकर्मण्यकुंठतातादृशीचमूनांसमरकर्मण्यु रमार्थःतेनांसमरसुरतयोःसमरसत्वंव्यज्यते ॥ ४८ ॥ *

॥ ध्वजांशुकैरिति ॥ अरयःचैद्यपक्ष्याःअनुकूलमरुद्भिःतनप्रसारितैःध्वजांशुकैर्ध्रुवंप्रसभेनबलात्कारेणकृतोपहूतयःकृताह्वानाइवेत्यर्थः । यदूनअभियाद्वानप्रतिद्रुतनरमुद्यतायुधाःउद्धिष्नायुधास्संतः । क्रुधाक्रोधेनपरंअधिकंरयंवेगंप्रपेदिरे । ध्वजांशुकदर्शनोत्थक्रोधहेतुकस्यशीघ्राभिपातस्यध्वजाह्वानहेतुकत्वमुत्प्रेक्षतेध्रुवमिति ॥ ४९ ॥ *

भृशखिन्नःपुलकविकाशिमूर्त्तयोरसाधिकेमनसिनिविष्टसाध्वसाः ।
मुखेयुधःसपदिरतेरिवाभवन्ससम्भ्रमाःक्षितिपचमूबधूगणाः ॥
४८॥ ध्वजांशुकैर्ध्रुवमनुकूलमारुतप्रसारितैःप्रसभकृतोपहूतयः ।
यदूनभिद्रुततरमुद्यतायुधाःक्रुधापरंरयमरयःप्रपेदिरे ॥ ४९ ॥
हरेरपिप्रतिपरकीयवाहिनीमधिश्रयदम्प्रववृतिरेचमूचराः । विलम्बितुन्नखलुसहामनस्विनोविधित्सतःकलहमवेक्ष्यविद्विषः ॥
५० ॥ *********************

॥ हरेरिति ॥ हरेरपि । चमूषुचरंतीतिचमूचराःसैनिकाः । चरेष्टः । परेषामिमापरकीयाःवाहिनीःसेनास्ताःप्रतिअधिश्रयदंअधिकरयंयथातथा । तरसीतुरयस्यदइत्यमरः । प्रववृतिरेप्रवृत्ताःतथाहिमनस्विनोधीराः । कलहंयुद्धं । विधित्सतःविधातुमिच्छतः । इधानेःसन्नंताच्छटःशतरिरूपं । तान्द्विषःशत्रूनअवेक्ष्यविलम्बितुं । शकधृषेत्यादिनातु

मुन्यन्वयः । सहन्ते इति सहाः क्षमाः । पचाद्यच् । न खलु । सामान्येन विशेषस्य समर्थनरूपोऽर्थान्तरन्यासः ॥ ५० ॥ ************************* ॥

॥ उपाहितैरिति ॥ रणाजिरे रणाङ्गने । नरपतयो सन्नाहो वपुषि उपाहितैरामुक्तैः स्फुरन्तो मणिप्रसृता रत्ननिर्गतास्तिमरीचय एव सूचयो येषां तैः निवातवर्मभिः अच्छिद्रकंचुकैः निवातो दृढसन्नाहे निर्वाते वाश्रयेपि चेति विश्वः । तनुत्रं वर्म कंचुकमित्यमरः । निरंतरं नीरन्ध्रं शरनिकरैश्चिताः प्रोता इव रराजिरे । फणानां च षण्णामिति विकल्पादेत्वाभ्यासलोपाभावः । मणिरश्मिविषया हि शरनिकरत्वोत्प्रेक्षा ॥ ५१ ॥ ********** ॥

॥ अथेति ॥ अथानन्तरं उच्चैरुन्नतं जरठकपोतकन्धरातनूरुहप्रकरविपाण्डुरद्युतिः जी

उपाहितैर्वपुषि निवातवर्मभिः स्फुरन्मणिप्रसृतमरीचिसूचिभिः ।
निरन्तरं नरपतयो रणाजिरे रराजिरे शरनिकरैश्चिता इव ॥ ५१ ॥
अथोच्चकैर्जरठकपोतकन्धरातनूरुहप्रकरविपाण्डुरद्युतिः । बलैश्च
लच्चरणविधूतमुच्चलद्घनावलीरुदचरत क्ष्मारजः ॥ ५२ ॥ *

र्णपारावतकंधरारोमनिकरधूसरच्छायमित्युपमा । पारावतः कलरवः कपोत इत्यमरः । बलैः सैन्यैः स्खलद्भिश्चरणैर्विधूतमुद्धूतमेरितं उच्चलदुत्पतत् क्ष्मारजो भूरेणुर्घनावलीर्घनपंक्तीरुदचरत प्रचक्राम इत्यर्थः । उदश्चरः सकर्मकादित्यात्मनेपदं । अस्य प्रत्युदाहरणमुच्चरदिति । अत्र भूरेणोर्मेघमण्डलाक्रमणसंबंधेऽप्यसंबंधोक्तेरतिशयोक्तिरुपमासंकीर्णा ॥ ५२ ॥ ************************* ॥

॥ विषंगिभिरिति । चलाचलैश्चटुलैः खुरैरनुपदं प्रतिपदं आहताः उद्धताः भूः भूमिर्नरेनरं परस्परं निरन्तरमिति पाठे अयाथार्थ्यमितो निरन्तरं नीरन्ध्रं विषंगिभिर्मिथः श्लिष्टैस्तुरङ्गमैरुपरि निरुद्धो निर्गमो यासां ताः धूलयः क्वचित् चिरमध एव विबभ्रमुर्निरुत्पेतुरिति भावः । अ

योद्धृणां अधोभ्रमणविरोधस्योपरिनिर्गमरोधेन विरोधपरिहारात्काव्यलिङ्गसंकी
र्णो विरोधाभासोलङ्कारः ॥ ५३ ॥ ********************** ॥

॥ गरीयस इति ॥ गरीयसः सर्वलोकपितामहत्वात्पूज्यतरस्य । अन्यत्र महत्तरस्य । प्रचुर
मुखस्य चतुर्मुखस्येत्यर्थः । अन्यत्र बहुप्रवाहस्य । रागिणो रक्तवर्णस्य अन्यत्र रणे रागिणो
नुरागवतः । एवम्भूतस्य सरसिजजन्मनो ब्रह्मणो जगन्ति सिसृक्षतः जगत्स्रष्टुमिच्छतः ।
स्व नेःसम्बन्धात्कटःप्रचारे यः । व्यवहितसत्त्वं तिरस्कृतसत्त्वगुणकं । अन्यत्र तिरोहितजंतु
कं । रजो रजोगुणो रेणुश्चोत्कटमुद्रिक्तमभवत् । बलस्य सैन्यस्य तु जगत्क्षयमपनेतुमि

विषङ्गिभिर्भृशमितरेतरङ्क्वचित्तुरङ्गमैरुपरिनिरुद्धनिर्गमाः । च
लचलैरनुपदमाहताः खुरैर्विबभ्रमुश्चिरमध एव धूलयः ॥ ५३ ॥
गरीयसः प्रचुरमुखस्य रागिणो रजोऽभवद्व्यवहितसत्त्वमुत्कटम् । सिसृ
क्षतः सरसिजजन्मनो जगद्बलस्य तु क्षयमपनेतुमिच्छतः ॥ ५४
॥ पुरा शरक्षतिजनितानि संयुगे नयन्ति नः प्रसभमसृञ्जि पङ्कताम् ।
इति ध्रुवं व्यलघिषुरात्तभीतयः खमुच्चकैरनलसखस्य केतवः ॥ ५५ ॥

च्छतः सतोऽभवत् अत्र ब्रह्मबलयोर्गरीयस्त्वादिसाधर्म्येऽपि रजःशब्देन एकस्य सिसृक्षोरन्यस्य
संजिहीर्षोरिति व्यतिरेकः श्लेषेणाव्यापितसङ्करः ॥ ५४ ॥ ************** ॥
॥ पुरेति ॥ संयुगे सङ्ग्रामे शरक्षतिजनितानि क्षतजानि असृञ्जि रुधिराणि नोऽस्मा
न् प्रसभं प्रसह्य पंकतां पुरा नयन्ति नेष्यन्ति । यावत्पुरानिपातयोर्लडिति भविष्यदर्थे लट् ।
इतीत्यमालोक्य ध्रुवमात्तभीतयः प्राप्तभयाः सन्तोऽनलसखस्याग्निमित्रस्य वायोः केतवो रेणवः
मञ्जिं गत्वा तस्येति भावः । उच्चकैरुन्नतं खमाकाशं व्यलघिषुः वियदारूढा इत्यर्थः । ध्रुवमि
त्युत्प्रेक्षायां ॥ ५५ ॥ ***************************** ॥

॥ क्वचिदिति ॥ क्वचिल्लसत् घननिकुरम्बवन्नवाभ्रपटलवत्कर्बुरः शबलः । क्वचिद्धिरण्मयकणपुंजपिंजरः कनकराशिवत्पिशः । क्वचिच्छरन् शशधरखंडपांडुरः खुरक्षतस्य क्षितितलस्य रेणुरुद्ययौ उज्जगाम । अत्रोपमात्रयस्य संसृष्टिः ॥ ५६ ॥ ******* ॥

॥ महीयसामिति ॥ महति अनीकजे सेनासमुत्थे रजसि महीयसां । दिगंता एव दन्तिनः तेषां मुखानि पुरोभागा एव मुखान्याननानि इति श्लिष्टरूपकं । तेषु अनुषंगिणि लग्ने सति । कोकिलावलीवन्मलीमसा मलिना जलदा दिक्षु वसंगिनः एव ये मेघास्त एव मदांबुराज केमदरेखा विसारिणां समरत्वमजिहत अगच्छन् प्राप्ता इत्यर्थः । पांसुपानस्य दन्तिनां मदहेतुत्वादिति भावः । तदुक्तं महाभारते । स्त्रियो जारेण तुष्यंति गावः स्वच्छंदचारतः ।

क्वचिल्लसद्घननिकुरम्बकर्बुरः क्वचिद्धिरण्मयकणपुञ्जपिञ्जरः । क्वचिच्छरच्छशधरखण्डपाण्डुरः खुरक्षतक्षितितलरेणुरुद्ययौ ॥ ५६ ॥ महीयसामहति दिगन्तदन्तिनामनीकजे रजसि मुखानुषङ्गिणि । विसारिणाम जिहत कोकिलावलीमलीमसा जलदमदाम्बुराजयः ॥ ५७ ॥ ****************

कुञ्जराः पांसुवर्षेण ब्राह्मणाः परनिन्दयेति । दिगन्तलंबितो मेघाः सेनारजोमेलनाद्दू लीवभूवुरित्यर्थः । अत्र दिगंतेषु दन्तित्वेनारोपितेषु तदनुचरदंतित्वतन्मदत्वरूपणात् समस्तवस्तुवर्त्ति सावयव रूपकं मुखमेव मुखमिति श्लिष्टपरंपरितमिति संकरः । अजिहतेति ओहाङ्गतौ लङि तङ् श्नाभ्यस्तयोरात इत्याकारलोपः । अदभ्यस्तादित्यदादेशः ॥ ५७ ॥ ****** ॥

॥ शिरोरुहैरिति ॥ अमी युवानः शिरोरुहैरलिकुलकोमलैः मृधामृधे । मृध इति युद्धपर्यायेष्वमरः । मामृधत न म्रियतां । म्रियतेर्माङि लुङि तमाङ्योगे इत्यडभावः उश्चेति सिचः कित्वान्न गुणः । इतीत्यमालोचेत्यर्थः वलोद्धतं रजः कर्तृ धवलितमूर्द्धजान् धवलीक

तकेशान् जनान् जरत इवाकरोत् वृद्धानिवाकरोदित्यर्थः । ध्रुवमित्युत्प्रेक्षायां अनायासात्
एणार्थत्वान्न तथैवान्वयः । इवौपम्ये ऽवधारणेऽइतिविश्वः । प्रवयाः स्थविरो वृद्धो जानो
जीर्णो जरन्नित्यमरः । जीर्य्यतेरतृन्निति अतृन्प्रत्ययः ॥ ५८ ॥ ********** ॥
॥ खसंवृतैरिति ॥ धामतेजो ध्वजपटपिधानेऽपि । तेजस्वीअपीत्यर्थः । परैः शत्रुभिः सुसंवृ
तैः सुसंगतैः परेरैक्यं गतैः स्वपक्षभिस्तिरस्कृतिं नीयते । असंशयं निश्चितं । अर्थाभावेऽव्ययी
भावः । कुतः यतः अपएव खं आनक्षिते । अवयवसंपदोरेणुसमृद्धयः क्षितेर्निधेः स्वर्य्यस्यापि
वपुरावरीषत आच्छादितवन्तः । वृङोलुङि तङ्कृते वेति इट् दीर्घः विशेषणसामान्यसम

शिरोरुहैरलिकुलकोमलैरमी मुधा मृधे मृषत युवान एनमा । बलो
द्धतं धवलितमूर्द्धजानिति ध्रुवं जनाञ्जरत इवाकरोद्रजः ॥ ५८ ॥
खसंवृतैर्ध्वजपटपिधानमीयते निरस्य तिग्मरुचिभिरसंशयम्परैः । यतः
क्षितेरवयवसम्पदो गुणत्तया ध्वधेरपि वपुरावरीषत ॥ ५९ ॥
द्रुतद्रवद्रथचरणाक्षुण्णक्षमातलोल्लसद्बहुलरजोवगुण्ठितम् । युग
क्षयक्षणनिरवग्रहे जगत्पयोनिधेर्ज्जलइवमग्नमाबभौ ॥ ६० ॥

र्थनरूपोऽर्थान्तरन्यासः ॥ ५९ ॥ ************************* ॥
॥ द्रुतेति ॥ द्रुतं शीघ्रं द्रवतां धावतां रथानां चरणैश्चक्रैः क्षुण्णात् क्षुण्णात् । क्षमातलादुल्ल
सता पतता बहुलेन सान्द्रेण रजसावगुण्ठितमाच्छादितं । जगद्युगक्षयक्षणे कल्पान्तकाले
निरवग्रहे निःप्रतिबन्धे पयोनिधेर्ज्जलेमग्नमिवाबभावित्युत्प्रेक्षा ॥ ६० ॥ ****** ॥
॥ समुल्लसदिति ॥ समुल्लसन्तो दिवाकरस्येव वक्त्रयस्तां निर्यासुंताः । रजो रेणुरेव रज
आर्त्तवमासामस्तीति निरजः स्त्रियाः । रज कृष्यासुतिनिपरिषदो वलजिनित्यादिना मत्वर्थीयो वल
च्प्रत्ययः । धूलिधूसराः उदक्यास्तु । परिमलिनाः परितः संजातमला अम्बरस्याकाशस्याव

भर खवतप्रभीर्यासांतः । अतएवाविलोकनक्षमाविलोकनानर्हाः । दिश एवांगनाः दिगंगनाः शरीरिणः प्राणिनां क्षणमीषत्कालं अविहरणीयतामगम्यतांययुः तस्मात् मदत्र अक्लान्तमानसंवदेनेवादिनि ने धादिनिभावः । श्लिष्टपरंपरितरूपकं ॥ ६१ ॥ ** ॥

॥ निरीक्षितुमिति ॥ त्रिदशगणैर्दैवगणैः समरमुखे रणारंभमध्यीभूतां राज्ञां रणकर्मं निरीक्षितुं म्रियन्ते कौतुकात् समेत्य । रजस्तुतैः रजस्तोमेन निमिषवंत्या निमिषाणि पक्ष्मपातानि यानि । निमेषः पाक्ष्मचपुटादिस्वान्नगुणः । तेषां लोचनोत्पलानां यथाक्रमं निर्दुःखकारि क्षणांतस्यां । क्षणंः क्षिप् । पलायनमधावनं । पत्रपूर्वोदयनेर्लङ्गित उपसर्गस्थावनं

समुल्लसद्दिनकरवक्त्रकान्तयोरजः खलाः परिमलिनाम्बरश्रियः । दिगङ्गनाः क्षणमविलोकनक्षमाः शरीरिणाम्परिहरणीयतां ययुः ॥ ६१

॥ निरीक्षितुं म्रियन्ते समेत्य कौतुकात् रणकर्मं समरमुखे मध्ये भूताम् । रजस्तुतावनिमिषले चनोत्पलं ययुः क्वचिद् गणैः पलायत ॥ ६२

॥ विषङ्गिणि प्रतिपदमापिबत्यपो हताचिरद्युतिनि समीरलक्ष्मणि । शनैः शनैरुपचितपङ्कभारिकाः पयोभृतः प्रययुरपेतवृष्टयः ॥ ६३ ॥

विनिरेकस्यतत्वं । अत्र लोचनोत्पलानां यथायथा तत्सन्धेपिपतत्सन्धोक्तेरतिशयोक्तिभेदः ॥ ६२ ॥ *********************************** ॥

॥ विषंगिणीति ॥ विषंगिणि विषक्ते । अतएव हताविरद्युतिनि निविरमिनाचिरद्युतिनि सीरलक्ष्मणि वानकेतौ रजसि । प्रतिपदं प्रतिक्षणं । अपोऽम्भांसि आपिबत्याकर्षति सति अतएव अपेतवृष्टयो निवृत्तवर्षाः पयोमुचः । उपचिताः प्रवर्द्धिताः पंकभारिकाः पंकभृत्याभिर्येषां ते उपचितपंकभारिकाः संतः । पर्यायाद्बैणोत्पत्तिः पुरखुलिप्यहरणार्थे खलुप्र स्ययः अद्यपंचकरणस्तेनाअतएव भारात् शनैः शनैः प्रययुः प्राप्ताः । अत्र पयोमुचां पंकभरस्य

सम्बन्धेपिसम्बन्धोक्तेरतिशयोक्तिः ॥ ६३ ॥ ********************* ॥

॥ नभोनदीति ॥ नभोनदीव्यतिकरेणाकाशगङ्गयाअवगाहेनधौतमूर्त्तिभिःक्षालितांगैः

। वियद्गतैःखेचरैःअतएवदिग्गजैरनधिगतानिअनुभूतानिचरणानिचलच्चमूतुरगखुरै

राहतंअतएवोत्पतदूर्द्ध्वंच्छत् महीरजस्तेनस्नपनमभिषेचनंतेनयानिसुखानितानिलेभि

रे। कुञ्जराःपांसुवर्षेणाभ्युदाहृतं । अत्रापिदिग्गजानांरजःस्नपनसम्बन्धेपिसम्बन्धोक्तेर

तिशयोक्तिः ॥ ६४ ॥ ************************** ॥

॥ गजेति ॥ यद्वास्माद्गजव्रजानांआक्रमणभरेणपादक्षेपगौरवेणावनम्रयाभुवाखिलंरसा

नभोनदीव्यतिकरधौतमूर्त्तिभिर्वियद्गतैरनधिगतानिलेभिरे । चल

च्चमूतुरगखुरहतोत्पतन्महीरजःस्नपनसुखानिदिग्गजैः ॥६४॥

गजव्रजाक्रमणभरावनम्रयारसातलंयदखिलमानशेभुवा । नभस्त

लंबहुलतरेणरेणुनाततोगमत्त्रिजगदेकतामिव ॥ ६५ ॥ सम

स्थलीकृतविवरेणपूरितामहीभृताम्बलरजसामहागुहाः । रहस्त्र

पाविधुरवधूरतार्थिनांनभःसदामुपकरणीयतांययुः ॥ ६६ ॥ ※

तलंपातालमानशेव्याप्तं । यथानभस्थलंबहुलतरेणरेणुनाततःकारणात्त्रिजगत्जगत्त्र

यं । तद्धितार्थेत्यादिनासमाहारेद्विगुःसमाहारेद्विगुरेकवचनं । एकतांभूलोकतामिवा

गमत्स्फुटमित्युत्प्रेक्षायां ॥ ६५ ॥ ********************* ॥

॥ समेति ॥ समस्थलीकृतानिविवराणिनिम्नगानियेनतेन । बलरजसापूरिताःमहीभृ

तांभूधराणांमहागुहाः । रहोरहसि । अत्यंतसंयोगेद्वितीया । त्रपयाविधुराणांविल

क्षणानांवधूनांरतंसुरतमर्थयतइतिरतार्थिनांनभःसदांसुराणांउपकरणीयतामुपकार

कत्वंययुःतासांरजःपूरणात्पुंसामंधकरणत्वादितिभावः । कृत्यल्युटोबहुलमित्यनीयरक

र्थितात्रत्ररजःपूरणस्यविशेषणगत्योपकारकत्वात् काव्यलिङ्गभेदस्तथोपकारकत्वासंबंधेपिसंबंधोक्तेरतिशयोक्तिसङ्करः ॥ ६६ ॥ ****************** ॥

॥ गतइति ॥ छाद्यतेऽनेनेतिछदःमुखस्यछदोमुखच्छदः । पुंसिसंज्ञायांघःप्रायेणेतिघप्रत्ययःछादेर्घेऽद्व्युपसर्गस्येतिह्रस्वः । सचासौपटश्चतत्सादृशीतादृश्यं । ब्राह्मणादित्वात्ष्यञ् । चित्करणादीकारोवकुलवचनाद्वैकल्पिकः । गतेप्राप्ते । गजानांयुद्धपूर्वकालेमुखाच्छरणकारणात्तत्सदृशेघनेसांद्रेरजसिदृशोदृष्टेःपथोमार्गान्निरोद्धनिरुद्धत्यपि । अधिमधोःअधिकमकरन्दस्यचूतस्यैवगंधोयेषांतैः । उपमानाच्चेतिगंधस्येत्वेतदेकांतग्रहणंत्वव्यभिचारि । मदानिलैरभिजातैर्द्विपान्द्विपान्गजान्प्रतिरंहसावेगे

गतेमुखच्छदपटसादृशीन्दृशःपथस्तिरोदधतिघनेरजस्यपि । मदा
निलैरधिमधुचूतगन्धिभिर्द्विपाद्विपानभिययुरेवरंहसा ॥ ६७ ॥
मदाम्भसापरिगलितेनसप्तधागजाञ्जनःशमितरजस्यथानघः । उप
र्य्यवस्थितघनपांसुमण्डलानलोकयत्ततपटमण्डपानिव ॥ ६८ ॥

णाभिययुरेव । अत्रनिरोहितदृष्टेरभिधानरोधस्यमदानिलैःपरिहाराद्विरोधाभासोलङ्कारः ॥ ६७ ॥ ****************************** ॥

॥ मदाम्भसेति ॥ सप्तधाकरात्कटिभ्यांमेढ्रात्तुनेत्राभ्यांमदस्रुतिरितिपालकाव्ये । सप्तभिःस्रोतोभिःपरिगलितेनस्रुतेनमदाम्भसाअथःशमिनारजस्ययेनैसात्तुउपर्य्यवस्थितानितथैवस्थितानिघनानिसांद्राणिपांसुमण्डलानिपूर्वोत्थरजःपुंजायेषांतान्गजान्जनोलोकस्ततउपरिविततःपटमण्डपाःयेषांतानिवेत्युत्प्रेक्षाअलोकयत् ॥ ६८ ॥ ***॥

॥ अन्यूनेति ॥ अन्यूनोन्नतयोमहोच्छ्रायाःअतिमात्रपृथवोऽत्यन्तविपुलाःअतएवपृथ्वीधरश्रीभृतःशैलशोभाधारिणइतिनिदर्शनालङ्कारः । कनकावलीभिरावरणहेतुहेमरश्मि

भिःकरणैः। सुदाम्नापर्वतेनैकदिशःसौदामिन्योविद्युतः। तेनैकदिगित्यणप्रत्ययेङीप्। तामभिर्दामभिरिवसौदामिनीदामभिर्विद्युल्लताभिःउपमांसादृश्यंतन्वंतः। तडित्सौदामिनीविद्युदित्यमरः। अनुलोपमाभ्यामितिसदृशवचनस्यैवनिषेधादिहसादृश्यवाचित्वात्तृतीया। उपलसंतःशृंगाराःसिंदूरादिमंडनानिएवलेखायुधानिहरधनूंषिबेषांतेनथोक्ताः। शृङ्गारःसुरतेनेघेरसेचगजमंडले। लेखालेख्येऽसुरइतिचविश्वः। कालियस्यकालियनागस्यकायवत्कालवपुषःकृष्णदेहाः। गजाएवअम्भोमुचोमेघाःकालेयोग्यकालेवर्षंतोमहान्तुमुंचन्तःपांसुन्शमंशांतिंआनयन्प्रापयन्रूपकालङ्कारः शार्दूलविक्रीडितंवृत्तमुक्तं ॥ ६९ ॥ ************************* ॥

इति श्रीपदवाक्यप्रमाण पारावारपारीणधुरीणश्रीमल्लिनाथसूरिविरचितेमाघकाव्यव्याख्यानेसर्वङ्कषाख्येसप्तदशःसर्गः ॥ १७ ॥ ******************* ॥

अन्यूनोन्नतयोतिमात्रपृथवःपृथ्वीधरश्रीभृतस्तन्वन्तः कनकावलीभिरुपमांसौदामिनीदामभिः। वर्षन्तःशममानयन्नुपलसत्शृङ्गारलेखायुधाःकालेकालियकायकालवपुषःपांसून्गजाम्भोमुचः॥६९

॥इतिशिशुपालवधेयदुवंशक्षोभणोनामसप्तदशःसर्गः ॥ १७ ॥



॥ अथाग्रिमसर्गेतु मुख्ययुद्धवर्णनाय सेनयोर्मेलनं तावदाह ॥ संजग्मातइति । अपायोऽ पगमो युद्धादपसरणं तस्यानपेक्षौ नमतिक्रान्तौ युद्धानिवर्त्तिनावित्यर्थः । इक्षतेः पचाद्य च्नत्र्समासः । धीरनादौ गम्भीरघोषौ तौ सेनांभोधी सेनासागरौ । पक्षच्छेदात्पूर्वं । पश्चादसंभवादितिभावः । एकत्रदेशे एकस्थाने निलेतं वक्तुं । लिङ्गनार्विनिधातोस्तु मुन्प्रत्यये गुणः । वाञ्छन्तौ विच्छन्तौ । सह्योविंध्यो वा सह्यविंध्याख्यौ पर्वताविव । वा स्याद्विकल्पोपमयोरितिविश्वः । संजग्माते मिलितवन्तौ । संपूर्वाद्गच्छतेरकर्मकात्समि समोगमृच्छीत्यादिना आत्मनेपदं अत्र सह्यविंध्ययोरथैकत्र मिलनस्याप्रसिद्धस्य संभाव नामात्रेणोक्तत्वादुपमानाप्रसिद्धेनोपमा किन्तूत्प्रेक्षेति सङ्करः । अस्मिन्सर्गे शालिनीवृ

सञ्जग्मातेतावपायानपेक्षौ सेनाम्भोधीधीरनादौरयेण । पक्षच्छेदा त्पूर्वमेकत्रदेशेवाञ्छन्तौवाविन्ध्यसह्यौनिलेतुम् ॥ १ ॥ पत्तिःप त्तिंवाहमेयायवाजिनागंनागःस्यन्दनस्थोरथस्थम् । इत्थंसेनाव ल्लभस्येवरागादङ्गेनाङ्गंप्रत्यनीकस्यभेजे ॥ २ ॥ ****

त्तं शालिन्युक्ताम्तौजगौगोविलोकैरितिलक्षणात् ॥ १ ॥ ************* ॥

॥ सेनांभोधी संजग्माते इत्युक्तं तत्संनिप्रकारं तावद्वर्णयति ॥ पत्तिरिति । पत्तिः पदा तिः । पत्तिं पदातिं । पदातिपत्तिपदगपदातिकपदाजयइत्यमरः । इयाय प्राप । आङ्पूर्वादिणो लिट् । वाजी अश्ववाहमियाय । वाजिवाहार्वगंधर्वेत्यमरः । नागो गजो नागमियाय । स्यन्दनस्थो रथस्थमियाय न तु व्युत्क्रमेण धर्मयुद्धत्वादितिभावः । इत्थमुक्त रीत्या सेना रागाद्रणरागात् रतिरागाच्च । अंगेन स्वांगेन पत्त्यादिना करचरणादिना च वल्ल भस्य प्रियतमस्येव प्रत्यनीकस्य प्रतिबलस्य । वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियामित्य मरः । अंगं पत्त्यादिकं करचरणादिकं च भेजे । यथा कांता कांतस्योरुमुरुणा करं करेणानु

खंमुखेनभजन्तितथासैन्यस्यपत्तिंपत्तिनाअश्वमश्वेनेत्यादिकमेणभेजेनतुव्युत्क्रमेणेत्यर्थः। वल्लभस्त्वोयुपमावाःसमरस्तरतयोःसमरसत्वंव्यज्यते ॥ २ ॥ ************ ॥

॥ रथ्येति ॥ ततंव्योमव्यापीगगनस्पृक्। अन्यत्र सर्वगतइत्यर्थः । दुन्दुभीनांरणभेरीणांप्रणादोमहाघोषः । उपसर्गादसमासेपिणोपदेशस्येतिणत्वं । रथानांसमूहोरथ्या । त्रिपुद्देपादयोरथ्यारथकड्यारथव्रजेइत्यमरः । खलगोरथादितियतप्रत्ययःसमूहार्थे । तासांघोषैःवारणानांबृंहणैःकंठघोषैः। बृंहणंगजगर्जितमितिवैजयन्ती । वाजिनामश्वानांह्रेषयाहेषणेनच । ह्रेषाहेषाचनिस्वनइत्यमरः। गुरोश्चहलइतिघञ्त्वा । ऐक्यमेकत्वंगच्छन्। अन्यत्रतत्वपदार्थशोधनाद्द्वितीयत्वंगच्छन्। ईशितेइशवि

रथ्याघोषैर्बृंहणैर्वारणानामैक्यङ्गच्छन्वाजिनांह्रेषया च । व्योमव्यापीसन्ततन्दुन्दुभीनामव्यक्तोभूद्रीशितेवप्रणादः ॥ ३ ॥ रोषावेशाद्गच्छतःप्रत्यमित्रन्दूरोत्क्षिप्तस्थूलबाहुध्वजस्य । दीर्घास्तिर्य्यग्वैजयन्तीसदृश्यःपादातस्याभेजिरे खड्गलेखाः ॥ ४ ॥ *****

ताईश्वरत्वोपाधिमान्परमात्मेव । ईशेस्तृच् । अव्यक्तोभूत्अयंदुन्दुभिघोषइतिदुर्भेदोबभूव । अन्यत्रजीवेश्वरोपाधिविलापादयमीश्वरोऽयंजीवइतिभेदरहितोभूदित्यर्थः । अत्रैक्यगमनस्यविशेषणगत्याअव्यक्तहेतुत्वात्काव्यलिङ्गमुपमाङ्गमितिसङ्करः ॥ ३ ॥

॥ रोषावेशादिति ॥ रोषावेशात्प्रत्यमित्रमभिशत्रुं। आभिमुख्येऽव्ययीभावः । गच्छतःधावतांइवतांदूरादुत्क्षिप्ताः उद्यताः स्थूलाःपीवराःबाहुध्वजाः स्तंभाइववाहवोयैस्तेषांपादातानांपादातिसमूहानां। पादातंपत्तिसंहतिरित्यमरः। भिक्षादिभ्योऽण् । तिर्य्यग्दीर्घाःतिर्य्यगायताइत्यर्थः । लेखाइवखड्गाःखड्गलेखाःवैजयन्तीसदृश्यःपताकासदृश्यइत्यर्थः। वैजयन्तीपताकास्यादित्यमरः। दृशेःकञ्चवक्तव्यइतिसमानशब्देपपदात्

दृशेःकन्प्रत्ययः। दृक्षेचेतिचक्तव्यइतिसमानस्यसभावः। भेजिरेरेभिरे। भ्राजृदीप्तौ विनिधानोःकर्त्तरिलिड्फणांनांचसप्तानामितिविकल्पादेत्त्वाभ्यासलोपौ। अर्थोयमुपमा॥ ४॥ ********************************* ॥

॥ वर्द्धैति ॥ धौरितेनधौरितारव्येनगतिविशेषणेनप्रयानांधावनां। यानेर्ल्युटःश्नादेशः। अम्बीयानामम्श्वसमूहानां। केशाश्वाभ्यांयञ्छावन्यतरस्यामितिछप्रत्ययः। उच्चकै रुच्चलन्तोगतिविशेषादूर्द्ध्वमुत्पतंतः। वर्द्धतेइतिवर्द्धीणिप्रयाणंवर्द्धनवरत्राः। वर्द्धत्रपु वरत्रयोरितिविश्वः। वृधुत्रपुभ्यांरन्निति रन्प्रत्ययः। लघूपधगुणोरपरः। तेष्वावर्द्धाः स्था पितारौक्माःसौवर्णाः स्थासकाःबुद्बुदाकारमण्डलानिवाप्तदेहस्यसर्वागीनस्यमूर्त्तिभाजो

वर्द्धावर्द्धाधौरितेनप्रयानामम्बीयानामुच्चकैरुच्चलन्तः। रौक्मारेजुः
स्थासकामूर्त्तिभाजोदर्पस्येवव्याप्तदेहस्यशेषाः॥ ५ ॥ सान्द्रत्वक्का
स्तल्पलाश्लिष्टकक्ष्याआजग्मुशोभामाप्नुवन्तस्तुर्थीम्। कल्पस्यान्ते
मारुतेनोपनुन्नाश्चेलुश्चण्डन्गण्डशैलाइवेभाः ॥ ६ ॥ ***

मूर्त्तिमूलस्यदर्पस्यअंतस्यतेजसःशेषाः अंतरमानाद्बहिर्निर्गताअतिरेकाइवरेजुरित्युत्प्रे क्षा ॥ ५ ॥ ********************************* ॥

॥ सांद्रेति ॥ सांद्रत्वक्काःसान्द्रवर्माणः। शैषिकःकप्रत्ययः। तल्पलाःपृष्ठवंशाःतेषुश्लि ष्टाःकक्ष्याःमध्यबन्धवरत्रायेषांते। दूष्याकक्ष्यावरत्रास्यादित्यमरः। गजानांविंशत्युत्त रशनायुषांद्वादशदशभवंतितत्र चतुर्दशारूढप्रौढाःस्तदेवाह अथचतुर्थीमांगीशारी रीशोभामाप्नुवन्तःचत्वारिंशदूर्द्धवेश्याइत्यर्थः। इभाःगजाःकल्पस्यांतेमारुतेनोपनुन्नाः प्रलयमारुतप्रेरिताः। गण्डशैलाःस्थूलोपलाइवचंडंतीव्रंचेलुःप्रनस्थिरेइत्युपमा॥ ६॥

॥ संक्रीडंतीति। संक्रीडंतीसंघर्षात्कूजन्ती। समोकूजनेचवक्तव्यमितिवचनात्कूजने

क्रीडानुसंपरिभ्यश्चेतिनात्मनेपदं । रंहोभाजं वेगभाजां स्यन्दनानां रथानामक्षस्य च क्राधारकाष्ठस्य धूरयमक्षधूः । अक्षं रथांगआधार इति वैजयन्ती । अनक्षे इति निषेधात् ऋक्पूरित्यादिनानसमासान्तः । रागात् आरां प्रमोदमुद्यम्यते जिताञ्चत्साहिता अभ्याये ननस्य । अग्रं चासौ कायश्च स उत्थितो यस्य न स्रोत्थितपूर्वकायस्येत्यर्थः । आहिताग्न्यादित्वात्साधुः । प्राजितुः सारथेः । नियंता प्राजिता यंता सूतः क्षत्ता च सारथिरित्यमरः । हाहाकार मुत्साहवर्द्धनार्थं हाहाकारशब्दं एवं कार इत्यत्रैवग्रहणस्योपलक्षणत्वात् । अन्यत्रापि यथादर्शने शब्दनिर्देशात्कार प्रत्ययः । अथवा हाहाकारं हाकरणं । भावे घञ् प्रत्य

सङ्क्रीडन्तीते जिताम्बुस्य रागादुद्यम्याग्रमग्रकायोत्थितस्य । रंहोभाजामक्षधूः स्यन्दनानां हाहाकारम्प्राजितुः प्रत्यनन्दत् ॥ ७ ॥
कुर्वाणानां साम्परायान्तरायम्भूरेणूनाम्मृत्युनामाज्र्जनाय । सम्मार्ज्जन्योन्यूनमुद्धूयमाना भान्तिस्मोच्चैः केतनानाम्पताकाः ॥ ८ ॥ उद्यन्नादन्धन्विभिर्निष्ठुराणि स्थूलान्युच्चैर्मण्डलत्वन्दधन्ति । आस्फाल्यन्ते कार्मुकाणि प्रकामं हस्त्यारोहैः कुञ्जराणां शिरांसि ॥ ९ ॥

यः । प्रत्यनन्दत् साधु साध्वित्यनुमोदनं किमित्युत्प्रेक्षा ॥ ७ ॥ ********** ॥

॥ कुर्वाणानामिति ॥ उच्चैरुन्नताः केतनानां ध्वजस्तंभानां पताका वैजयन्त्यः । सांपरायान्तरायं युद्धविघ्नं कुर्वाणानां । अनीकं सांपरायिकमित्यमरः । भूरेणूनां मार्जनार्थं प्रमार्जनार्थं मृत्युनाअजकेनोद्धूयमानाः प्रकम्प्यमानाः संमार्जन्यः शोधिन्य इव भांति स्म । संमार्जनी शोधिनी स्यादित्यमरः । न्यूनमित्युत्प्रेक्षा ॥ ८ ॥ **************** ॥

॥ उद्यन्नादमिति ॥ धन्विभिर्धनुष्मद्भिः । व्रीह्यादित्वादिनिप्रत्ययः । निष्ठुराणि कर्कशानि स्थूलानि पिवराणि च उच्चैरुन्नतानि मण्डलत्वं दधानानि वर्तुलत्वं दधानानि । एकत्राक

षेणादन्यत्र सभावाच्चेति भावः । कर्मणि प्रभवन्तो नि कार्मुकाणि धनूंषि । उक्तञ्च । उच्चैरारादुज्जृम्भमाणा दीर्घं यथा तथा कामम् आस्फाल्यन्ते स्म । पाटवपरीक्षार्थं पाणिभिरास्फालितानि । हस्तिनं रोहन्तीति हस्त्यारोहैर्निषादिभिः । कर्मण्यण् । कुञ्जराणां शिरांसि आस्फाल्यन्ते स्म उत्साहार्थमिति भावः । अत्र कार्मुकानां कुञ्जरशिरसां प्रकृतानामेव निष्ठुरत्वादि विशेषसाम्यमौपम्यावगमात् केवलप्रकृतास्पदा तुल्ययोगिता ॥ ९ ॥ **** ॥

॥ घण्टानाद इति ॥ घण्टानादः किङ्किण्यादि घोषः डिण्डिमानां वाद्यविशेषाणां निस्वनः । ग्रीवासु भवानां ग्रैवेयाणां कण्ठशृङ्खलानां । ग्रीवाभ्यश्चेति ढञ्प्रत्ययः । आरवः बृंहितानि बृंहणानि गजानामुत्साहार्थमाधोरणस्य हस्तिपकस्य । आधोरणा हस्तिप

घण्टानादो निस्वनो डिण्डिमस्य ग्रैवेयाणामारवो बृंहितानि । आमे
त्येवम्प्रत्यवोचन्गजानामुत्साहार्थम्वाचमाधोरणस्य ॥ १० ॥ या
तैश्चातुर्विध्यमस्त्रादिभेदाद्व्यासङ्गैस्सौष्ठवाल्लाघवाच्च । शिक्षाश
क्तोः प्राहरन्दर्शयन्तो मुक्तामुक्तैरायुधैरायुधीयाः ॥ ११ ॥ **

का इत्यमरः । वाचं बृंहणादिशब्दं आमेति प्रत्यवोचन्निवैवमेवेत्यनुकूलमूचिरे इवेत्युत्प्रेक्षा । आमानुगुण्ये स्मरण इत्यमरः ॥ १० ॥ ********************** ॥

॥ यातैरिति ॥ आयुधेन जीवन्तीत्यायुधीयाः आयुधजीविनः । शस्त्राजीवे काण्डस्पृष्टायुधीयायुधिकाः समा इत्यमरः । आयुधाच्छ चेति छप्रत्ययः । शिक्षाशक्तिमभ्यासपाटवं दर्शयन्तः । अस्त्रादिभेदादस्त्रमहास्त्रादिकभेदाच्चातुर्विध्यं यातैः प्राप्तैः । सुष्टुभावः सौष्ठवं । लोहयुद्धे शिक्ष्यादिगुणत्वं । तस्मादुद्गात्रादित्वादञ्प्रत्ययः । लाघवाद्वेगवत्त्वाच्च दृगन्तलघुपूर्वादित्यण्प्रत्ययः । अव्यासङ्गैरप्रतिषिद्धैः । वधैः मुच्यन्त इति मुक्तानि शरादीनि न मुच्यन्त इत्यमुक्तानि खड्गादीनि च तैः सैर्मुक्तामुक्तैरिति द्वन्द्वः । आयुधैः प्राहरन् ।

स्वभावानुप्रासयोःसंसृष्टिः ॥ ११ ॥ ********************** ॥

॥ रोषावेशादिति ॥ कौचित् योधौ रोषावेशात्कोपपारवश्यादाभिमुख्येन रंहसा वेगेनैवोपजातौ मिथः प्रत्यासन्नौ अत एव पाणिग्राहमन्योन्यपाणिं गृहीत्वा । द्वितीयायां चेति णमुल्प्रत्ययः । हेतीः शस्त्राणि हित्वा त्यक्त्वा वैकल्यादिति भावः । हेतिस्तु शस्त्रेऽद्वयोरिति केशवः । मल्लवन्मल्लाभ्यां तुल्यं । तेन तुल्यमिति वतिप्रत्ययः । मुष्टिभिर्हत्वा । मुष्टिघातं । करणे हन इति णमुल्प्रत्ययः । घ्नन्तौ प्रहरन्तौ । हनोर्लटः शत्रादेशः कषादित्वादनुप्रयोगः मुष्टिभिर्घ्नन्तावित्यर्थः । बाहुभ्यां बाहुभ्यां प्रहृत्य प्रवृत्तमिदं युद्धं बाहूबाहवि बाहुयुद्धं । तत्र तेनेदमिति सरूपे इति बहुव्रीहिः । इच् कर्मव्यतीहारे इतीच्प्रत्ययः समासान्तः अन्येषा

रोषावेशादाभिमुख्येन कौचित्पाणिग्राहं रंहसैवोपजातौ । हित्वा हेती-
र्मल्लवन्मुष्टिघातं घ्नन्तौ बाहूबाहवि व्यासजेताम् ॥ १२ ॥ शुद्धाः
सङ्गं न क्वचित्प्राप्नुवन्तो दूरान्मुक्ताः शीघ्रतां दर्शयन्तः । अन्तःसेनं वि-
द्विषामाविशन्तो युक्तं चक्रुः शायका वाजितायाः ॥ १३ ॥ **

मपि दृश्यत इति दीर्घः तिष्ठद्गु प्रभृतिषु पाठादव्ययीभावत्वादव्ययत्वं । तत्र व्यासजेतां व्यासक्तवन्तौ । कर्तरि कर्मव्यतीहार इत्यात्मनेपदं । मल्लवदिति तद्धितगता श्रौती पूर्णोपमा ॥ १२ ॥ ******* *************************** ॥

॥ शुद्धा इति ॥ शुद्धा निर्विषाः वक्रगतिभिर्नापि दग्धैर्नाग्निज्वलिततेजनैरिति निषेधादिति भावः । अन्यत्र जात्या इत्यर्थः । क्वचित्कुत्रापि सङ्गं प्रतिबन्धं न प्राप्नुवन्तः न प्राप्ताः दुर्वारा इत्यर्थः । दूरान्मुक्ता दूरत एव विसृष्टाः । स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेनेति समासः पञ्चम्याः स्तोकादिभ्य इत्यलुक् । शीघ्रतां जवनत्वं दर्शयन्तः । विद्विषां सेनास्वन्तः अन्तःसेनं । विभक्त्यर्थेऽव्ययीभावः । आविशन्तः सेनामध्यं प्रविशन्त इत्यर्थः । शायकाः बाणाः

। वाजितायाःपक्षवत्तायाःअश्ववचस्यच । वाजिनास्त्वनपक्षवोरितिविश्वः । युक्तमनुरूपंकर्मचक्रुः । एवंविधास्तेनाप्रवेशस्यवाजिनामसंभवादितिभावः । अन्यत्राभिधायाःप्रहृतनपदपक्षनामात्रोपक्षीणत्वात् द्वात्रिंशाद्देनप्रहृताइवप्रहृमीतिध्वनिरेवेतिनश्लेषावकाशः । किंतुमद्धादिपदाज्यपुनकस्यविशेषणगत्याशायकानांयुक्ताकारितहेतुत्वात्पदार्थहेतुकङ्काव्यलिङ्गम् ॥ १३ ॥ *********************** ॥

॥ आक्रम्येति ॥ मानभाजोअभिमानवन्तः । उच्चैरुन्नतंआजेर्युद्धस्याग्रिमस्कन्धमग्रभागमंसप्रदेशंदाक्रम्यारुह्य । वीतशंकंशिरःकायमास्थायारुह्य । हेलासुयुद्धलीलासुचलोलाउत्सुकाःसंतःअतिमर्त्यंवर्त्मगत्वाअमानुष्यंमुद्धंकृत्वेत्यर्थः । अन्यत्रामानुष्यगम्यमा

आक्रम्याजेरग्रिमस्कन्धमुच्चैरास्थायाथोवीतशङ्कंशिरस्च । हेला
लोलावर्त्मगत्वातिमर्त्यन्द्यामारोहन्मानभाजःसुखेन ॥ १४ ॥
रोदोरन्ध्रव्यश्नुवानानिलोलैरङ्गस्याङ्गमांसपिण्डैःस्थावराणि । केचिद्गु
र्वीमेयसय्यांनिषद्याङ्क्रीणन्तिस्मप्राणमूल्यैर्यशांसि ॥ १५ ॥ *

रोहणमार्गंगत्वासुखेनानायासेनद्यांस्वर्गमभ्रंकषंगिरिशिखरादिक्रीडास्थानं । द्यौःसुखंस्वर्गवर्त्मनोरितिविश्वः । आरोहन्नारूढाः । युद्धमानाःपरंशक्त्यास्वर्गयांत्यपराङ्मुखाइतिमनुस्मरणादितिभावः । यथाकयंविकस्यचित्स्कन्धमूर्द्धारोहणक्रमेणकिंचिद्दूरारोहमहत्तटादिकमारोहतितद्वदितिप्रहृतविशेषणमहिम्नागतःसमासोक्तिः ॥ १४ ॥

॥ रोदोरंध्रमिति ॥ केचिद्वीराःगुर्वीं महतीसंयतेयुद्धएवनिषीदंत्यासुइतिनिषद्यांआपणान् । आपणस्तुनिषद्यायामित्यमरः । संज्ञायांसमजनिषदेत्याद्दिनाक्यप् । एन्यप्राण । आङ्पूर्वादिणःक्तोल्यप् । देहस्यांतरभ्यंतरेमापितैःपरिच्छिन्नैः । मानैर्माङ्मेवाय । आङ्पूर्वादिणःक्तोल्यप् । देहस्यांतरभ्यंतरेमापितैःपरिच्छिन्नैः । मानैर्माङ्मेवाशयन्तात्कर्मणिक्तः । अर्त्तीत्यादिनापुगागमः । लोलैरस्थिरैःप्राणैरेवमूल्यैःप्राणमूल्यैरि

एस्त्रोर्द्यावापृथिव्योरंधमन्तरालंव्यश्नुवानानिव्याप्नुवन्ति । अश्नोतेर्लटःशानजादेशःस्था वराणि । स्थिराणियशांसिकीर्णानिरश्मस्त्रीचकुरित्यर्थः । अत्रन्यूनैःप्राणैःतनोधिकय शःपरिवर्त्तनात्न्यूनपरिवृत्तिरलङ्कारः । समन्यूनाधिकानांचयदाविनिमयोभवेत् । साकंसमाधिकन्यूनैःपरिवर्त्तिरसौमतेतिलक्षणात् ॥ १५ ॥ ************ ॥

॥ वीर्य्योत्साहेति ॥ संग्रामाग्रेरणरंगेवीर्य्योत्साहाभ्यांश्लाघ्यते इतिश्लाघिविक्रमाहङ्कार शोभी । अवदानंमहत्कर्म कृत्वा । अवदानंमहत्कर्मवृत्तमित्यमरः । लज्जितानांमानि त्वात्स्वनामाख्यानेसंकोचवतामित्यर्थः । शत्रुभिरज्ञातानांअज्ञातनामकानां । मानिनां मानशालिनांशूराणांसम्बन्धिश्रीमत्शौर्य्यश्रीयुक्तंनामनग्नाःबन्दिनः । वंदिनिक्षपणेनग्न

वीर्य्योत्साहश्लाघिकृत्वावदानंसंग्रामाग्रेमानिनांलज्जितानाम् ।
अज्ञातानांशत्रुभिर्युक्तमुच्चैःश्रीमन्नामश्रावयन्तिस्मनग्नाः ॥ १६ ॥
आधावन्तस्सम्मुखन्धारितानामन्यैरन्येतीक्ष्णकौक्षेयकाणाम् । व
क्षःपीठैरात्सरोत्मनैवक्रोधेनान्धाःप्राविशन्पुष्कराणि ॥ १७ ॥

इतिविश्वः । उच्चैस्तरांश्रावयन्तिस्म । अयमसाविनिकथयामासुरित्यर्थः । युक्तंसर्वमेत द्वचनमित्यर्थः । अत्रलज्जामानाज्ञातयोरविशेषणगत्यावंदिश्रावणहेतुत्वात्काव्यलिङ्ग भेदः ॥ १६ ॥ ****************************** ॥

॥ आधावंतइति ॥ क्रोधेनांधाःअपश्यन्तोऽन्येभटाःआधावंतोऽभिधावंतोऽभिमुखमाप तन्तःसन्तःसैन्यैःप्रतिद्वंद्वाभिसंमुखंधारितानांभृतानां । तीक्ष्णकौक्षेयकाणांनिशितासी नां । कुक्षिकुक्षीग्रीवाभ्यश्चाश्चालंकारेष्वितिढक्प्रत्ययः । पुष्कराणिफलानि खड्गमुखानी त्यर्थः । पुष्करंतूर्य्यवक्त्रेचकाण्डेखड्गफलेपिचेतिविश्वः । वक्षांसिपीठानीववक्षःपीठैःवक्ष स्थलैःआत्सरोआमुष्टेः । त्सरुःखड्गादिमुष्टौस्यादित्यमरः । आङ्मर्य्यादाभिविध्योरि

तिविकल्पादसमासः । आत्मनास्वयमेवपरप्रयत्नंविनेत्यर्थः । प्राविशन्प्रविष्टाः । अ
त्रक्रोधांधकारविशेषणगत्यापुष्करप्रवेशहेतुत्वात्काव्यलिङ्गभेदः ॥ १७ ॥ *** ॥

॥ मिश्रीभूतइति ॥ तत्रयुद्धे । सैन्यद्वयेपिमिश्रीभूतेमिलितेसतिप्रायेणायंविशेषोसाधार
णधर्मोव्यक्तमासीत् । कःपुरस्तादग्रेयेपरांचःपराङ्मुखाःपरेपीतिभावः । तेआत्मीयाअव
ध्याइत्यर्थः । तभीतंनपराकृत्तमितिवधनिषेधश्रवणात् । यःपुरस्ताद्व्यावृत्तिःकिंतुसम्मु
खोभिमुखःस्वकीयोपीतिभावः । असौपरःशत्रुपरःशत्रुर्वध्यइत्यर्थः । प्राणलुब्धस्यखा
मिद्रोहित्वादित्यर्थः ॥ १८ ॥ ************************* ॥

मिश्रीभूतेतत्रसैन्यद्वयेऽपिप्रयेणायमव्यक्तमासीद्विशेषः । आत्मी
यास्तेयेपराञ्चःपुरस्ताद्व्यावर्तिमिम्मुखोयःपरोसौ ॥ १८ ॥ सद्वंश
त्वादङ्गसंसङ्गिनीत्वन्नीत्वाकामङ्गैरवेणावबद्धा । नीताहस्तम्बत्व
यित्वापरेणाद्रोहन्त्वक्रेकस्यचित्स्वाकृपाणी ॥ १९ ॥ नीतेभेदं
न्धौतधारासिपातादम्भोदाभेशात्रवेणापरस्य । सास्त्रग्राजिस्तीक्ष्ण
मार्गस्यमार्गोविद्युद्दीप्तःकङ्कटेलक्ष्यतेस्म ॥ २० ॥ ****

॥ सदिति ॥ सद्वंशत्वात्कुङ्काकारत्वात्कुलीनत्वाद्यांगसंसंगिनीत्वमंगसंबन्धित्वंनीत्वा ।
अगुणत्वविवक्षायांत्वनलोगुरुवचनस्येतिनपुंवद्भावः । कामंगैरवेणादरेणावबद्धासंयता
चकस्यचित्स्वास्वकीयाकृपाणीअसिलता । परेणान्येनवंचयित्वाप्रतार्यहस्तंनीतास्वा
यत्तीकृतास्तनीद्रोहंहिंसांव्यभिचारंचक्रेकृतवती । अत्रप्रकृतकृपाणयस्तिविशेषणसाम्या
दप्रकृतनारिणीप्रतीतेःसमासोक्तिः ॥ १९ ॥ **************** ॥

॥ नीतइति ॥ शात्रवेणशत्रुणा । प्रज्ञादित्वात्स्वार्थेऽणप्रत्ययः । धौतायाउत्तेजिता
याःस्वखङ्गधारायाःअसिपातातअभिघातात्भेदंनीतेविदारितेअम्भोदाभेमेघश्यामेअपर

पिविरोधोऽनएवविरोधाभासोऽलङ्कारः ॥ २२ ॥ *************** ॥

॥ कुन्तेनेति ॥ आजानेयःकुलीनाश्च । आजानेयाःकुलीनाःस्युरित्यमरः । शुभ्रादि
भ्यश्चेतिढक्प्रत्ययः । सादिनाअश्वारोहेणकर्त्रा । उच्चैरुन्नतेनकुन्तेनप्रासेनकरणेन
हन्तुंप्रहर्त्तुमिष्टादभिप्रेतात्हन्तिनोनत्रस्यन्तिस्मनत्रस्ताः । वाभ्रासेत्यादिनाश्यनप्रत्ययः
। तथाहिजात्याःकुलीनाः । भवार्थेयत्प्रत्ययः । कीर्त्तयेउदारंकर्ममहापौरुषंकर्त्तुकामो
येषांतान्कर्त्तुकान् । तुंकाममनसोरपीतिमकारलोपः । स्वमेवामस्तीतिस्वामिनोभर्तॄन्
स्वामिन्नैश्वर्य्यइतिनिपातः । ह्रेपयन्तिलज्जयन्तिकिंनह्रेपयन्तीत्यर्थः । अर्त्तिह्रीत्या
दिनापुगागमः । सामान्येनविशेषणस्तत्र्यनरूपोऽर्थान्तरन्यासः ॥ २३ ॥ *** ॥

कुन्तेनोच्चैःसादिनाहन्तुमिष्टान्नाजानेयाद्न्तिनस्त्रस्यन्तिस्म । क
र्मोदारङ्कीर्त्तयेकर्त्तुकामान्किंवाजात्याःस्वामिनोह्रेपयन्ति॥२३॥
जेतृञ्जैत्राशशङ्किरेनारिसैन्यैःपश्यन्तोधोलोकमस्तेषुजालाः । नागा
रूढाःपर्वतानिश्रयन्तोदुर्गाणीवत्रासहीनास्त्रसानि ॥ २४ ॥ *·*

॥ जेतृमिति ॥ जेतारएवजैत्राः । जयशीलाः । जेतृप्रकृतान्प्रज्ञादित्वात्स्वार्थेऽण्प्रत्ययः ।
लोकंजनमधःपश्यन्तःस्वयमुपर्य्यवस्थानात्लोकमधोदेशेपश्यन्तःअधः कृतमन्यमानाश्च
। अस्तेषुजालाःक्षिप्तशरनिकराःत्रासहीनादुर्गस्थत्वान्निर्भीकाः । नागारूढाःगजारोहाः
त्रस्यन्तिगच्छन्तीतित्रसानिजंगमानि । चरिष्णुजंगमंचरत्रसमिंगंचराचरमित्यर्थः । पर्व
तानिपर्वतसम्बन्धीनिदुर्गाणीत्यर्थः । अयंतोधिनिष्ठंतइतिउत्प्रेक्षा । तेयेवंभूताएवेति
भावः । अरिसैन्यैःकर्तृभिःजेतृनंनशेकिरेअशङ्कावभूवुरित्यर्थः । शकेःकर्मणिलिट् । अ
त्रमनुः । धनुर्दुर्गंमहीदुर्गमदुर्गंवनमेवच । न्टदुर्गंगिरिदुर्गंचतमाश्रित्यवसेन्नृपः ।
सर्वेणैवंप्रकारेणगिरिदुर्गंसमाश्रयेत् । तेषामेवहिबहुगुण्येनगिरिदुर्गंविशिष्यतेइति

॥ २४ ॥ ****************************** ॥

॥ विष्वगिति ॥ एकः कोपि वीरः। विष्वगञ्चतीति विष्वद्र्यञ्चीः सर्वव्यापिनीः। विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये इति टेरद्रिआदेशः धातोरर्थं चेति उपसंख्यानादुगितश्चेति ङीप् अचइत्यकारलोपे चाविति दीर्घः। सैन्यानि वीचिरिव सैन्यवीचीरित्युपमितसमासः। सिन्धौ वेमिलिङ्गाम्बिक्षिपन्नपाकुर्वन्। अन्तराजौ मध्ये क्वापि दूरं प्रयातं इष्टं बन्धुं दिदृक्षुर्द्रष्टुमिच्छुः सन्। दृशेः सन्नन्तादुप्रत्ययः। क्वापि प्रयातं नग्नं नौमं गोमण्डलं भूगोलं दिदृक्षुराद्धौ वराहः सिन्धौ वा समुद्र इव। उपमायां विकल्पे वेत्यमरः। आजौ वभ्राम एकवीरस्य कुतो भयमित्यर्थः ॥ २५ ॥ *********************** ॥

विष्वग्द्रीचीर्विक्षिपन्सैन्यवीचीराजावन्तः क्वापि दूरम्प्रयातम्। ब
भ्रामैको बन्धुमिष्टं दिदृक्षुः सिन्धौ वाद्धौ मग्नमङ्गं वराहः ॥२५॥
यावद्दक्रे नाञ्जनम्बोधनाय व्यवस्थानज्ञो हस्तिपारी मदस्य। सेना
स्नानाद्दन्तिनामात्मनैव स्थूलास्तावत्प्रावहद्दानकुल्याः ॥ २६ ॥

॥ यावदिति ॥ व्यवस्थानं गजोत्थापनं जानातीति व्यवस्थानज्ञः हस्तिनि चरतीति हस्तिपारी यन्ता। मदस्य बोधनायोत्थापनायां जनमुद्दीपनकर्म यावन्न चक्रे तावत्प्रागेव। साकल्येविधाविन्यर्थः। सेनास्नानात्सेनाकलकलश्रवणादित्यर्थः। दन्तिनामात्मनाखयमेव स्थूला महत्यो दानकुल्या मदसरितः प्रावहन् इति दन्तिनामुत्साहातिरेकोक्तिः अञ्जनात् प्रागदानसम्बन्धोक्तेरतिशयोक्तिः ॥ २६ ॥ ****************** ॥

॥ क्रुध्यन्निति ॥ दूरात् दूरत एव गन्धात् मदगन्धात् घ्राणात् अन्यनागाय प्रतिगजाय क्रुध्यन् तं जिघांसुरित्यर्थः। क्रुधद्रुहइत्यादिना संप्रदानत्वं। नागो धूतमूर्द्धा विधूतमस्तकः सन्। आरोढारं यन्तारं अवमत्य अवधूय। घोरारावैर्दारुणक्रन्दनैः ध्वानिताशेषदिशा

येनतस्मिन्नतयाउच्चैरक्रोशन्तीत्यर्थः । शैषिकःकप्रत्ययः । स्वस्वकीयएवस्वपूर्द्धाएवेत्य र्थः । पूर्वादिभ्योनवभ्योवेतिविकल्पान्नस्मिन्नादेशः । अतएव स्वेस्वपुत्रैविष्कइतिस्त्रिष्ट मत्याव्याख्यायपुत्रस्यापिज्ञातित्वान्नसर्वनामसंज्ञेतिवल्लभेक्तिः । प्रमादिर्नोबिकबिंशतिब र्वैडिभेविष्कोविंशतिकर्षकइतिवैजयन्ती । पर्य्यगांसीत्तिर्य्यक्प्रजहारेत्यर्थः । तिर्य्यग्द न्तप्रहारस्तुगजःपरिणतोमतइतिहलायुधः । यमरमनमानमक्षेतिनमेसुंडिसगिडाग मेनेटीतिवृद्धिप्रतिषेधः ॥ २७ ॥ ************************ ॥

॥ प्रत्यासन्नेइति ॥ प्रतिपक्षेप्रतिपक्षस्यबन्धिनि । तस्येदमित्यण् । दन्तिनिगजेप्रत्या

क्रुध्यन्तान्धाद्न्यनागायद्रष्टारोणरन्ध्रूत्मूर्द्धावमत्य । धोरएतध्वा नितारोषदिष्को वेष्कोनागःपर्यगांसीत्स्वएव ॥ २७ ॥ प्रत्यासन्ने दन्तिनिप्रतिपक्षेयत्क्रानागःप्रास्तवक्त्रच्छदोपि । क्रोधाक्रान्तःक्रू रनिर्दारिताक्षःप्रेक्षाञ्चक्रेनैवकिञ्चिन्मदान्धः ॥ २८ ॥ तूर्ण य्याँवन्नापनिन्ये निषादीवासस्तच्चक्षुर्वारणाम्वारणस्य । तावत्पुरैरन्यना गाधिरूढःकादम्बानामेकपतिरसीव्यत् ॥ २९ ॥ ⁕⁕⁕⁕

सन्नेसतियत्क्रास्तादिनाप्रास्तवक्त्रच्छदोपि । निरस्तमुखच्छदोपिमुखपटोपिक्रोधाक्रा न्तःअतएवक्रूरंघोरंनिर्दारिताक्षःतथापिमदान्धोनागोजगोनकिंचिदप्रेक्षांचक्रे । कि मपिपुरोगतंप्रतिपक्षमन्यद्वानददर्शेत्यर्थः । आवरणांतराभावेपिसदावरणस्यानपाया दितिभावः । इजादेस्तगुरुमतोऽनृच्छइत्याम्प्रत्ययः । अत्रानावृतोन्मिलिताक्षस्याप्यदर्श नविरोधस्यमदांधेनविरोधाद्विरोधाभासोलङ्कारः ॥ २८ ॥ ********* ॥

॥ तूर्णमिति ॥ निषादीयंतावारणस्यगजस्यचक्षुर्वारणंनेत्रवारणंवासोमुखपटंयावत्तूर्णं नापनिन्येनापचकार । तावदन्यनागाधिरूढःप्रतिगजाधिरोहःएकःएककालीनःपातोये

र्यानैरेकपानैर्युगपत्पानिभिरितिशीघ्रोक्तिः । कादम्बानांशराणां । कादम्बमार्गणशरा इत्यमरः । पूगैर्वातैरेकपानैरसीव्यत् । चक्षुषासहतद्भासःस्यूतवानित्यर्थः । सीव्यतेर्ल ङ् अत्र चक्षुषःसीवनासम्बन्धेपिसम्बन्धोक्तेरतिशयोक्तिः ॥ २९ ॥ ******** ॥

॥ आस्थेति ॥ यत्नाप्रमत्तःसन् । अरीभमरिगजंप्रति । अभिमुखेऽव्ययीभावः । यातु र्गेतुः । यातेस्तृच् । द्विपस्यदृष्टेराच्छदमावरणं । पुंसिसंज्ञायांघः । आस्यत्निरस्तवा न् । अस्यतिवक्तिख्यातिभ्योऽङितिच्लेरङादेशः । अस्यतेस्थुगितियुगागमः । मग्नस्यमु खनिमग्नस्य ग्रंकोःशल्यायुधस्य । वापुंसिशल्येशंकुर्नैत्यमरः । उच्चैर्वर्हभारेणपिच्छपटले नवीक्षणेचक्षुषोक्षणेनावव्रातेआवृतेइव । वृणोतेःकर्मणिलिङ् । अन्योन्यसमुच्चयचका

आस्थद्दृष्टेराच्छदस्त्वप्रमत्तोयन्तायातुःप्रत्यरीभङ्गजस्य । मग्न स्योच्चैर्वर्हभारेणशङ्कोरावव्रातेवीक्षणेचक्षणेन ॥ ३० ॥ यत्नाद्र क्षन्सुस्थितत्वाद्नाशन्निश्चित्यान्यश्चेतसाभाबितेन । अन्त्यावस्था कालयोग्योपयोगद्धेभीष्टन्नागमापद्धनन्वा ॥ ३१ ॥ ***

राभ्यांआवरणनिराशेपुनरावरणयोरेककालेतम्बन्धोक्तेरतिशयोक्तिः ॥ ३० ॥ *** ॥

॥ यत्नादिति ॥ अन्यःगजारोहःभावितेनालोचितेनचेतसासुस्थितत्वादनापदेशत्वा दनाशमनपायं । निश्चित्ययत्नाद्रक्षन्त्वंचकेभ्यस्त्रायन् । अंत्यावस्थाकालेसाधनांत रकालेनाशकालेयोग्योपयोगं अतएवाभीष्टं नागंगजमापद्धनंवापद्धनमिवरधेअन्यतोप सार्य्यधारयामास । धरतेःखरिनेतत्वात्कर्तरिलिड्तङ् ॥ ३१ ॥ ******* ॥

॥ अन्योन्येषामिति ॥ इभागजाःअन्योन्येषांपरस्परेषां । कर्मव्यतीहारेसर्वनाम्नोद्वेभव तइतिवक्तव्यात् द्वित्वंसमासवच्चबहुलमितिविकल्पात्समासत्वपक्षेपूर्वपदस्यप्रथमैकवच नंवक्तव्यं । उञ्जिचंनेएघितिउद्धेदः । अकर्तरिचकारकेसंज्ञायामित्यकरणार्थघञ्प्र

त्ययः । दानोद्रेदात्कटादिमदस्थानानिपुष्करैर्हस्ताग्रैः । पुष्करंकरिहस्ताग्रमित्यमरः । आमृशन्तःस्पृशन्तउच्चकैरुन्नताभुग्नवालाः । वालःकेशेशिशौमूर्खेबालावाजीभपुच्छयोः । प्रह्वीकृतपुच्छाः । उन्मूर्द्धानः उन्नतमस्तकाःसंतःस्पष्टदन्तध्वनिःगजाःसन्निपत्यापरान्तैः सहप्रायुद्ध्यन्तेइतिभावः । स्वादित्वात्कर्तरिलिट्स्वभावोक्तिः ॥ ३२ ॥ **** ॥

॥ द्राघीयांसइति ॥ द्राघीयांसोदीर्घतराः । प्रियस्थिरेत्यादिनादीर्घस्यद्राघादेशः । संहताःसुघटिताःअतएवस्थेमभाजःस्थैर्यभाजः । प्रियस्थिरेत्यादिस्थिरशब्दस्थेमनिचस्थादेशः । चारवोरम्याउदग्राउन्नताःतेचारूदग्राः । विशेषणसमासः । ती

अन्योन्येषाम्पुष्करैरामृशन्तोदानोद्रेदादुच्चकैर्भुग्नवालाः । उन्मू
र्द्धानःसन्निपत्यापरान्तैःप्रायुध्यन्तस्पष्टदन्तध्वनीभाः ॥ ३२ ॥
द्राघीयांसःसंहताःस्थेमभाजश्चारूदग्रास्तीक्ष्णतामत्यजन्तः । द
न्तादन्तैराहतास्सामजानाम्भङ्गञ्जग्मुर्नस्वयंसामजाताः ॥ ३३ ॥
मातङ्गानान्दन्तसङ्घट्टजन्माहेमच्छेदच्छायचञ्चच्छिखाग्रः । ल
ग्नोप्यग्निश्चामरेषुप्रकामम्माञ्जिष्ठेषुव्यज्यतेनस्मसैन्यैः ॥ ३४ ॥

क्ष्णतांतैक्ष्ण्यंअत्यजन्तः । सामजानांगजानांदन्तादन्तैःप्रतिगजविषाणैराहताःसन्तोभंगंभेदंजग्मुःबभ्रमुः सामजाताःदन्तिनस्तुस्वयंभंगंपराजयंनजग्मुः दन्तभङ्गेपिस्वयंनपराबर्त्तन्तइत्यर्थः । अत्रापरवर्णितत्वेनवर्ण्यतयाप्रकृतत्वादुपमेयानांदन्तिनामुपमानादंतापेक्षयाअभग्नत्वेपितनाधिक्योक्तेर्व्यतिरेकस्तुल्ययोगितायाबाधकइतिगमयितव्यं ॥ ३३ ॥ ॥

॥ मातङ्गानामिति ॥ दंतिनांदंतसंघट्टजन्मासंघर्षोत्थःहेमच्छेदच्छायानिकनकपरागवर्णानिचञ्चन्तिचलन्तिचशिखाग्राणिज्वालाग्राणियस्यसोग्निः । मञ्जिष्ठयाओषधिविशेषेणरक्तेषुमाञ्जिष्ठेषु । तेनरक्तंरागादित्यण्प्रत्ययः । मञ्जिष्ठाविकसाजिंगीत्यमरः । चामरे

पुलशेपिसैन्यैःप्रकामंनव्यज्यतेनर्विविच्यतेसावर्ण्यादितिभावः। अतःसामान्यालङ्कारः। सामान्यंगुणसाम्येनयत्रवस्त्वन्तरैकतेतिलक्षणात्तच्चविशेषणविशेषणेमंजिष्ठविशेषणेचकाव्यलिङ्गाचसङ्करः ॥ ३४ ॥ ************************ ॥

॥ ओघामासेइति ॥ मत्सरोवैरमेवोत्पातवानाकस्मिकवायुस्तेनाश्लिष्यतांसंयुज्यमानानांद्दन्तानामेवक्ष्मारुहाणां घर्षणेनोत्थाजन्मयेषांतैर्वह्निभिर्योगानैर्वाबुगांतभवैर्वह्निभिरिववारणानामुच्चैरुन्नतैःमूर्द्धाव्योमेवतस्मिन्मूर्द्धव्योम्निनक्षत्रमालाहार.बरोषः। सैवनक्षत्रमालाख्यात्सप्तविंशतिमौक्तिकेरित्यमरः। ज्योतिर्मंडलंचओघामासेऊबोषद्ग्धेत्यर्थः। उषदाहेइतिधातोःकर्मणिलिङ्। उषविद्जागृभ्योऽन्यतरस्यामित्याम्प्रत्ययः

ओघामासेमत्सरोत्पातवाताश्लिष्यद्दन्तक्ष्मारुहाङ्घर्षणोत्थैः । यौ
गान्तैर्वावह्निभिर्वारणानामुच्चैर्मूर्द्धव्योम्निनक्षत्रमाला ॥ ३५ ॥
सान्द्राम्भोदश्यामलेसामजानाम्वृन्देनीताःशोणितैःशोणिमानम् । द
न्ताश्शोभामापुरम्भोनिधीनाङ्कन्दोद्भेदाविद्रुमावारिणीव ॥ ३६ ॥

। लघूपधगुणःकृञ्चानुप्रयुज्यतेलिटीत्यस्तेस्यानुप्रयोगः। अत्रनक्षत्रमालयोरभेदाध्यवसायेननिर्दिशरूपश्लेषसंकीर्णेयमुपमा ॥ ३५ ॥ *************** ॥

॥ सांद्रांभोदेति ॥ सांद्रेचनदंभोदश्यामलंचतस्मिन्। सामजानांगजानांवृन्देशोणितैःशोणिमानमारुण्यंनीताःदंताः अंभोनिधीनांवारिनिधीनांवारिणीवविद्रुमाणांप्रवालानांद्रुमेवैद्रुमाः। मुक्ताथविद्रुमःपुंसिप्रवालंपुनपुंसकमित्यमरः। कंदोमूलपिंडस्तस्योद्भेदाःप्ररोहाइवशोभामापुरित्युपमा ॥ ३६ ॥ *************** ॥

॥ आकंप्राग्रैरिति ॥ आकंप्राणिदंतोत्खननंसंक्षोभाङ्कुशकंपाण्यग्राणियेषांतैः। केतुभिर्ध्वजैःसंनिपातंसंयोगंव्रजंतइतिदुःखदेतूक्तिः। नागाःगजास्तारमुच्चैरुदीर्णाःउत्पन्नाक्षैः

यासां ग्रीवासूत्पन्नानां शृंखलभूषणादीनां नादो यस्मिन् कर्मणि तत्तया । अन्यद्विपानां प्रतिगजानां अंगे गाढं मग्नान् अंतःप्रविष्टान् दंतान् दुःखादुत्खनंति स्म ते यांगाढमग्नत्वात्स्वयं बेतुभिः पादौकानत्वाच्चक्रत्कृच्छ्रादुज्जह्रुरित्यर्थः । अत्रोक्तभारमज्जनयोर्विशेषणगत्या दुःखेत्खननहेतुत्वात्काव्यलिङ्गम् ॥ ३७ ॥ ******************** ॥

॥ उत्क्षिप्येति ॥ ईषेलांगलदण्डाविवदन्तौ यस्य स ईषादंतो महादन्तो दन्ती । ईषालांगलदण्डः स्यादित्यमरः । प्रस्फुरन्तं प्राणोत्क्रमणाद्दुःखादुल्लसन्तं । शात्रवस्येदं शात्रवीयं कुञ्जरं । रदाभ्यां दन्ताभ्यां उच्चैरुत्क्षिप्योर्द्ध्वमुद्यम्य शृङ्गे शिखरे प्रोतः स्यूतः प्रावृषेण्यः प्रावृषि

आकम्प्राग्रैः केतुभिः सन्निपातन्तारोदीर्णग्रैवनादम्प्रजन्तः । मग्नान्
ङ्गे गाढमन्यद्विपानान्दन्तान्दुःखादुत्खनन्ति स्म नागाः ॥ ३७ ॥
उत्क्षिप्योच्चैः प्रस्फुरन्तं रदाभ्यामीषादन्तः कुञ्जरं शात्रवीयम् । शृ
ङ्गप्रोतप्रावृषेण्याम्बुदस्य स्पष्टम्प्रापत्साम्यमुर्वीधरस्य ॥ ३८ ॥
भग्नेपीभे स्वे परावर्त्य देहं युद्धात्सार्द्धं व्रीडयामुञ्चतैषून् । साकञ्ज
न्तुः सम्मदेनानुबन्धी दूनोऽभीक्ष्णम्बारणः प्रत्यरेधि ॥ ३९ ॥

भवेंबुदो यस्तस्य । प्रावृषएण्यइत्येण्यप्रत्ययः । उर्वीधरस्य गिरेः सादृश्यं साम्यं स्पष्टं प्रापत् । आप्नोतेर्लुङि पुषादित्वाच्च्लेरङादेशः उपमा ॥ ३८ ॥ ******** ॥

॥ भग्नेपीति ॥ स्वे स्वकीये पीभे गजे मग्नेपि । देहं स्वांगं परावर्त्य प्रतिपक्षाभिमुखमावर्त्य । कृ ञेरण्यन्ताल्ल्यप् अण्यंतस्त्वपपाठः अकर्मकस्य कर्मानन्वयात् । व्रीडया सार्द्धं मिषून् मुंचत । इ षुमोक्षणे । स्वगजभङ्गव्रीडानिरस्यतेत्यर्थः । योधामग्नेभस्तेनभदेनकर्त्रा अभीक्ष्णं दूनः इषुभिस्तप्तः । स्वादिभ्यइति निष्ठानत्वं । अनुबध्नातीत्यनुबन्धी । वारणो जन्तुः प्रति गजारोहस्य संमदेन साकं स्वेभजयजन्येन हर्षेण सह । प्रमदसंमदौ हर्षइति निपातः ।

भ्यरोधिप्रतिरुद्धःतत्प्रतिरोधेनतत्संमर्दस्यापिप्रतिरोधव्याप्तेरितिभावः । साकंसार्द्धंसमं
सहेत्यमरः । अत्रव्रीडितेषुभोत्स्ययोःसंमर्दयंतुप्रतिरोधयोश्चकार्य्यकारणयोस्तत्पौर्वापर्य्य
रूपातिशयोक्त्यातहभावोक्तेःसहोक्तिसंकोर्य्यते ॥ ३९ ॥ *************॥
॥ व्याप्तमिति ॥ वारणःकश्चिद्दन्तीसंरम्भित्वान्कोपित्वान्। संरम्भःसंभ्रमेकोपेइतिविश्वः
। धीरोनिर्भीकःसन्नुरत्यागत्यविपुलंतथापिलोकैःजनैःअन्यत्रभुवनैश्चव्याप्तं । लोकस्तु
भुवनेजनेइत्यमरः । अतोदुःखलभ्योपसारोपसरणंयत्र । तत्तेनामध्यंप्राक्पुराआदिदे
वस्यउदरांतउदराभ्यन्तरंब्रह्मात्तदेवगाहनेस्मप्रविवेश ।पुराकिलयथाब्रह्मासिसृक्षुःअ
ह्मापूर्वस्सृष्टिरिदृक्षयायदन्तर्गतंविष्णोःकुक्षिंप्राविशदितिपौराणिकोकथाकेंचन्ब्रह्मा

व्याप्तहन्नेकैर्दुःखलभ्यापसारंसंरंभित्वादेत्यधीरोमहीयः । सोनाम
ध्यङ्गाहतेवारणःस्मब्रह्मेवप्रागादिदेवोदरान्तः ॥ ४० ॥ भृङ्गश्रे
णीश्यामभासांसमूहैर्नाराचानाम्बिद्धनीरन्ध्रदेहः । निर्भीकत्वा
द्दाहवेनाहतेच्छोहृष्यन्हस्तीहृष्टरोमेवरेजे ॥ ४१ ॥ ***

ब्रह्मा ।मार्कण्डेयइतिव्याचक्षतेसोपिभगवन्महिम्नावलोकन कौतुकात्तदनुज्ञयामहाप्र
लयेतदुदरंप्रविश्यबभ्रामेत्यागमः । ब्रह्माविष्णुप्रजापतिरित्यमरःउपमालङ्कारः ॥४०॥
॥ भृङ्गेति ॥ भृङ्गश्रेणीवश्यामभासांकृष्णवर्णानांनाराचानामयोमयेषुविशेषाणांसमूहैः
विद्धोदरइवनीरंध्रोनिर्विवरोदेहोयस्यसः । तथापिनिर्भीकत्वादाहवेनाहतेच्छअ
व्याहतोत्साहः । अतएवहृष्यन्मोदमानोहस्तीहृष्टरोमेवहर्षात्पुलकितेवेत्युत्प्रेक्षा ।
हृषेर्लोमस्वितिविकल्पादिडभावः । रेजेशुशुभे । फणाद्वसप्तानांविकल्पादेत्वाभ्यास
लोपौ ॥ ४१ ॥ ***************************** ॥
॥ आताम्राभेति ॥ रोषभाजःकुद्धस्यनागराजस्यमहेभस्यकटांतात्गण्डस्थलान्निःश्चोतं

शीघ्रागमेवस्रवन्ती । दानस्यमदस्यधाराआताम्राभाक्रोधादरुणवर्णाजज्ञेजाताआहोधूर्ग
तेनपुरोगतेनयंत्रामार्गणेशरैआमूलंवक्षनेलोहितस्यक्षनजस्येवधाराजज्ञे । ज्ञनेःकर्त्तरि
लिट् । किमिवंक्रोधारूणामदधाराशरैर्द्धरणजन्मारक्तधारेत्युभयकारणसंभवात्साद्दृ
श्याच्चसंशयःसचविकल्पेनसादृश्यमूलेत्यलंकारः ॥ ४२ ॥ ********** ॥

॥ क्रामन्निति ॥ मृत्युशय्यातलस्यांतकपर्य्यंकरूपस्य । अधःस्वरूपयोरत्नीनतमित्यम
रः । ईषादंडावायतौभवदारुविशेषौतत्सदृशाविव्यर्थः । दंतिनोदंतौ । सहसावर्त्तत
इतिसाहसिकःकुञ्जरः । ओजःसहोंभसावर्त्ततइतिठक्प्रत्ययः । तस्यभावात्साहसिक्या

आताम्राभारोषभाजःकटान्ताद्आमूर्वक्षानेमार्गणौघैर्गतेन । निर्म्धोत
न्तीनागराजस्यजज्ञेदानस्याहोलोहितस्येवधारा ॥ ४२ ॥ क्राम
न्तौदन्तिनःसाहसिक्यादीषादण्डेमृत्युशय्यातलस्य । सैन्यैर
न्यस्तत्क्षणादाशशंकेस्वर्गस्योच्चैरर्द्धमार्गाधिरूढः ॥ ४३ ॥ कुर्व
ज्योत्स्नाविप्रुषांतुल्यरूपस्तारस्तारजालस्तारमिवद्याम् । खड्गाघा
तैर्दारिताद्दन्तिकुम्भादाभातिस्मप्रोच्छलन्मौक्तिकौघः ॥ ४४ ॥ ❋

त् । क्रामन्साहसवानित्यर्थः । अन्यस्तत्क्षणादुच्चैरर्द्धस्यस्वर्गस्यअर्द्धस्यासौमार्गस्चेति
तदर्द्धमार्गाधिरूढइतिसैन्यैराशशंकेतन्त्रेक्षिताइत्युत्प्रेक्षा ॥ ४३ ॥ ******* ॥

॥ कुर्वन्निति ॥ ज्योत्स्नाविप्रुषांतुल्यरूपःचंद्रिकाविंदुस्वरूपःतारःशुद्धः । तारोमुक्तादि
संशुद्धाविनिविश्वः । खड्गाघातैर्दारिताद्दंतिकुंभात्प्रोच्छलदुत्पतन्मौक्तिकौघोमुक्तापुं
जोद्यामाकाशंतारजालसारांनक्षत्रशतबहुलांतारंतारकितांकुर्वन्नित्युत्प्रेक्षा । सारःसबल
बानयोरितिविश्वः । आभातिस्मबभौ ॥ ४४ ॥ **************** ॥

॥ दूरोत्क्षिप्तेति ॥ मत्तोहस्तिराजःकरीन्द्रःदूरादुत्क्षिप्तेनप्राप्तेनअतएवक्षिप्रेणसत्वरेण च

केणहतं। अतएवभूमौलोलमानंलुठमानं। लोलतेरात्मनेपदित्वात्ताच्छिल्यवयोवचनश

क्तिषुचानशितिनाच्छील्येचानशप्रत्ययः । अतएवलोलमानादयस्तानशोनिवानतः।

भीमंभयङ्करं। स्वस्वकीयमेवहस्तं। सरोषःसन्पादेनांघ्रिणाअसृक्पंकेनपंकीभूतेनासृजा

। असृक्पंकपेषं। स्नेदनेपिषइतिणमुल्। पिपेष। कषादित्वादनुप्रयोगः । रक्तपंकेनस्ने

हद्रव्येणमर्दयेत्यर्थः। क्रुद्धमत्तयोःकुतोविवेकइतिभावः। अत्रविशेषणसंबन्धेपिसंबन्धो

क्तेरतिशयोक्तिः ॥ ४५ ॥ *************************** ॥

॥ आपस्कारादिति ॥ गात्रमूलमापस्कारं। आपस्कारादामूलात्। आङेगविकल्पादसमा

दूरेऽक्षिप्तक्षिप्रचक्रावक्रान्तम्मन्तोहस्तंहस्तिराजःस्वमेव। भीमम्भूमौ

लोलमानंसरोषःपादेनासृक्पङ्कपेषम्पिपेष ॥ ४५ ॥ आपस्कार

लूनगात्रस्यभूमिन्निःसाधारङ्गच्छतोबाहुकस्य। लब्ध्वायामन्दन्त

योर्युग्यमेवस्वन्नागस्यप्रापदुत्तम्भनत्वम् ॥ ४६ ॥ लब्धस्पर्शम्भू

व्यधादव्यथेनस्थित्वाकिंचिद्दन्तयोरन्तराले। ऊर्द्ध्वोर्द्ध्वासिच्छिन्न

दन्तप्रवेष्टंजित्वोत्तस्थेनागमन्येनसद्यः ॥ ४७ ॥ ****

सःलूनगात्रस्यच्छिन्नजंघस्य। द्वौपूर्वपश्चाज्जंघादेशौगात्रःपरेक्रमादित्यमरः। अतए

वाबाहुकस्यसतःसाधारंसावलम्बनंभवतीतिनिःसाधारंयथातथाभूमिंगच्छतःपततइ

त्यर्थः। नागस्यलब्ध्वायामंप्राप्तदैर्घ्यंआयतमित्यर्थः। स्वंस्वकीयंदन्तयोर्युग्ययुग्ममेवोत्त

म्भनत्वमवलम्बनत्वंप्रापत्। जंघाच्छेदेपिदन्तावष्टंभादायततमइत्यर्थः। अत्रस्वभावा

तिशयत्त्योःसंसृष्टिः ॥ ४६ ॥ *************************** ॥

॥ लब्धस्पर्शमिति ॥ भूव्यधाद्दन्ताभ्यांभुवंविद्धत्वादित्यर्थः। व्यधजपोरनुपसर्गेयोरित्य

प्रत्ययः। अव्यथेनस्वयमविद्धत्वादव्यथेनसतादन्त्येनकेनचिद्भटेनदन्तयोरन्तरालेकिंचि

गलस्थस्यशौर्यशालिन् कर्मणितृतीयाभ्यांभटस्यशौर्यंयथातथास्थित्वाअर्द्धेनोर्द्ध्वंप्रसारितेनोर्द्ध्वं

र्द्धोत्सितनाखड्गैकदेशेनच्छिन्नः चूर्णितोदन्तप्रवेष्टंदन्तवेष्टनंयस्यतंनागंजित्वास्वयंएवउत्त

स्थौउत्थितं । भावेलिट् । अत्रापितयोरत्यानासम्बन्धेपिसम्बन्धोक्तेरतिशयोक्तिः ॥ ४७ ॥

॥ हस्तेनेति ॥ व्यालोदुष्टदन्ती । व्यालोदुष्टगजेसर्पइतिविश्वः । अग्रेवीतभीतिंनिर्भी

कंभीरोःस्वर्गाभावादितिभावः । कंचिद्वीरंहस्तेनगृहीत्वाउर्द्ध्वमुपर्य्युच्चैःक्षिप्तवान् । उत्पे

क्ष्यतेतस्यैवहेतोस्तेनैवहेतुनातद्वारणार्थंएवेत्यर्थः । सर्वनाम्नस्तृतीयाचेतिचकारात्षष्ठी

। व्योम्निआसीनानामवस्थितानां । ईदासःइतिशानचईकारः । स्वर्गस्त्रीणाममरना

रीणामर्पयामासनूनं ॥ ४८ ॥ ************************* ॥

हस्तेनाग्रेवीतभीतिंगृहीत्वाकश्चिद्व्यालःक्षिप्तवानूर्द्ध्वमुच्चैः । आ

सीनानांव्योम्नितस्यैवहेतोर्दिव्यस्त्रीणामर्पयामासनूनम् ॥ ४८ ॥

कश्चिद्दूरदायतेनद्रढीयःप्रासप्रोतस्तेनसान्तःक्षतेन । हस्ताग्रेण

प्राप्तमेवाग्रतोभूदानैश्वर्य्यन्वारणस्यग्रहीतुम् ॥ ४९ ॥ *

॥ कश्चिदिति ॥ दूरदायतेनांतःक्षतेनप्रदूनेनअतएवद्रढीयसाप्रासेनप्रोतस्तेनान्तं

तेन । हस्ताग्रेणकरशेणअग्रतःप्राप्तमपिकंचिद्भटंग्रहीतुंआदातुंवारणस्य । अनीश्व

रस्यभावअनैश्वर्य्यंअसामर्थ्यमभूत्ततः । सुवीश्वरेत्यादिनानञ्पूर्वपदोभयपदवृद्धिः ।

अत्रापिअनैश्वर्य्यसम्बन्धोक्तेरतिशयोक्तिः ॥ ४९ ॥ ************* ॥

॥ मत्वाइति ॥ गजेनस्फोटितायाःविदारितायाःपुंसःकस्यचिद्वीरस्यतन्वाःशरीरात्कंसे

नस्फोटितायाःनन्दकन्यायाइवोत्पतन्तीदिव्यामूर्त्तिःचण्डिकेवनन्दकन्याशरीरादाविर्भ

वन्तीनिकालिकेवस्मितैर्व्योमगैःखेचरैर्वीक्षामासेविक्षिता । ईक्षतेःकर्मणिलिट्इजादेश्च

गुरुमतोऽनृच्छइत्याम्प्रत्ययः । मनुष्यभावमुत्सृज्यदेवभावंगतइत्यर्थ । उपमाव्यक्ताचु

रकिलदुरात्मनः कंसस्यप्रतारणायभगवदाज्ञयातन्मायाशक्तिर्नन्दगोपाज्जातापंसेनद्दि सिनेतिपौराणिकाः ॥ ५० ॥ ************************ ॥

॥ आक्रम्येति ॥ दारुणात्माकुर्द्धचितोदन्तीएकांजंघामग्रपादेनाक्रम्यान्यांजंघामुच्चैः सन्नतेनकरेणद्दानःआकर्षयन् । सास्थिस्थानंभज्यमानंवीकटपटपटाकारमुक्तंयथा तथा । कंचिद्वीरंदारुवत्काष्ठवन्मध्यात्पाटयामासमध्यंविभज्यपाटयामासेत्यर्थः । स्थ श्लोपेपञ्चमी । उपमा ॥ ५१ ॥ ********************** ॥

॥ शोचित्वेति ॥ चट्टकृतौव्यर्थः । अर्थ्यःस्वामीवैश्ययोरितियप्रत्ययान्तोनिपातः । समक्ष

नन्वाःपुंसोनन्दगोपात्मजायाःकंसेनेवस्फोटितायागजेन । दिव्या मूर्त्तिर्व्योमगैरुत्पतन्तीवीक्षामासेविस्मितैस्थण्डिकेव ॥ ५० ॥ आ क्रम्यैकामग्रपादेनजङ्घामन्यामुच्चैरुद्दानःकरेण । सास्थिस्थान न्दारुवद्दारुणात्माकञ्चिन्मध्यात्पाटयामासदन्ती ॥ ५१ ॥ शो चित्वाग्रेभृत्ययोर्मृत्युभाजोरर्थ्यःप्रेम्णानेनतथावल्लभस्य । पूर्वङ्कात्वा मेनरस्यप्रसादम्पश्चात्तापादापदाहव्यथान्तः ॥ ५२ ॥ **

भेवमृत्युभाजोमरणंगतयोर्भृत्ययोःशोचित्वा । वल्लभस्यैतयोःप्रियभृत्यस्यसम्बन्धिनाप्रेम्णा तद्गतप्रेम्णेत्यर्थः । तथानेनप्रकारेणान्तर्दाहंसंतापंनोआप । यथायेनप्रकारेणइतर स्यावल्लभस्यपूर्वंजीवनकालेप्रसादम्प्रीतिदानाद्यनुग्रहं नहत्वापश्चात्तापाद्धेतोयमस्याभि रमेणितएवप्राणान्प्रादादित्यनुशयात् । दाहमाप । प्रियभृत्यमरणादप्यसंमानित मरणमेवस्वामिनोदुःसहदुःखहेतुरासीदित्यर्थः स्वभावोक्तिः ॥ ५२ ॥ ***** ॥

॥ उन्मुच्येति ॥ अर्द्धचंद्रेणवाणेनलूनेछिन्ने । तथापिकोधेनदष्टओष्ठोयैस्तेदंतायस्यत स्मिन् । अन्यस्यअधस्यवक्त्रेआरादितिदूरमुत्प्लुत्योत्प्लुत्य । आराद्दूरसमीपयोरित्यम

रः । भूयःपुनरपिकरठस्यछेदः किन्नदेशःनननवोनेस्थिनेसनिबलात्तान्दत्यनःसासिःपा
णिर्यस्यतस्मात्कवंधाद्पमूर्द्धकलेवरात् । भीत्रार्थानांभयहेतुरितिपञ्चमी । सैन्यैर्बिभ्ये
भीतं । भावेलिट् । नूनस्यापिभावस्यपुनःखनिपातिचावज्ञनातिचाराभ्यांरणाभ्यांकव
न्धादपकबन्धत्वान्त्यासैर्वैबिभ्युरित्यर्थः । अतएवभ्रांतिमदलङ्कारः ॥ ५३ ॥ ** ॥

॥ तूर्य्यारवैरिति ॥ आहिताःसंपादिताःउत्तालाःप्रस्फुटाःतालाःकरपुटादिकालक्रि
यामानानियेषुनैः । तालकालःक्रियामानइत्यमरः । तूर्य्यारवैर्मृदङ्गादिवाद्यघोषैस्त
थाकाहलंभृशंगायंतीभिःकाहलाभिःसुषिरैर्वाद्यविशेषैस्सकारणैः । काहलंभृशमुष्कयोः
। वाद्यभांडविशेषेनुकाहलाःकाहलःखलइतिविश्वः । काये । अपमूर्द्धिकलेवरेइत्य

उत्तुयारदर्द्धचन्द्रेशालूनेवक्त्रेन्यस्यक्रोधदष्टोष्ठदन्ते । सैन्यैःक
रठच्छेदलीनेकवन्धात्भूयोविभ्येबलात्तःसासिपाणेः ॥ ५३ ॥ तू
र्य्यारवैरहितोत्तालतालैर्गायन्तीभिःकाहलङ्काहलाभिः । न्टत्ये
चक्षुःशून्यहस्तप्रयोगङ्कायेकूजन्कम्बुरुच्चैर्जहास ॥ ५४ ॥ *

मरः । अतएवचक्षुःशून्येदृष्टिरहितःहस्तप्रयोगोयस्मिन्कर्मणितत्तथान्टत्येन्टत्यतिस
ति । कर्त्तरिक्तः । कूजन्ध्वनन्कंबुःशंखस्तटस्थाइत्यर्थः । उच्चैस्सांजहास । दृष्टिशू
न्याभिनयस्यनाट्यशास्त्रविरोधात्अट्टहासमकरोदित्यर्थः । व्यञ्जकयोगात्गम्योत्प्रेक्षा
। अंगैरालम्बयेद्गीतंहस्तेनार्थंप्रदर्शयेत् । दृष्टिभ्यांभावयेद्भावंपादाभ्यांतालनिर्णयइ
तिनाट्यविदः ॥ ५४ ॥ ************************* ॥

॥ प्रत्यावृत्तमिति ॥ स्वसैन्येभंगभाजिसति । प्रत्यावृत्तमभ्यमित्रंकंचिद्वीरंतुल्यमेककालं
मुक्तैःस्वसपुङ्खैःशरविशवैःएकौघेनएकप्रहारेणद्विपंतःआकिरंतिस्म । सिद्धाःखेचरः
साज्येर्दिव्यमालाभिः । चातुर्वर्ण्यादित्वात्ष्यञ्प्रत्ययः । आकिरंति । द्वयेपिद्विषंतः

सिद्धास्त्रसाभुवादैः साधुसाध्विति वाक्यै रा किरं तिस्म । एकं त्रितयमपि युगपत्प्रवृत्तमित्य र्थः । अत्र स्वर्ग पुंखास्तुर माल्यसाधुवादानां प्रकृतानामेव तुल्यकाले कौघ प्रवृत्तसाम्यादौ पम्यावगमात्केवल प्रकृतास्पदा तुल्ययोगिता ॥ ५५ ॥ *************** ॥

॥ वाणेति ॥ वाणैरक्षिप्ताः पातिता स्वरोहाः सादिनो येभ्यस्तानि अत एव शून्यानि रिक्ता न्यासनानि आस्तरणानि येषां । अत एवान्यैः सैन्यैः परसैनिकैर्गृहीतं । प्रक्रान्तानामारब्धा नां समन्तादवरुध्यमानानामित्यर्थः । अत एव संख्यानां क्षुभितानां । अत एव आजिभू मौ भ्राम्यतां अनवतिष्ठमानानां वारणानां वारैर्वृन्दैः वारी बन्धनस्थानं । वार स्त्र्यादिदिव

प्रत्यावृत्तभङ्गभाजि स्वसैन्ये तुल्यमुक्तैः किरन्ति स्म कश्चित् । एकौ घेन स्वर्गपुङ्खैर्द्विषन्तः सिद्धा माल्यैः साधुवादैर्द्वयेपि ॥ ५५ ॥ बा णाक्षिप्तारोहशून्यासनानां प्रक्रान्तानामन्यसैन्यैर्गृहीतम् । संर ब्धानां भ्राम्यतामाजिभूमौ वारीवारैः सस्मरे वारणानाम् ॥ ५६ ॥ पौनः पुण्याद्दस्त्रगन्धेन मत्तो मृद्नन्कोपाद्दाकमायोधनोर्व्याम् । पादे लग्नामत्रमालामिभेन्द्रः पाशीकल्पामायतामाचकर्ष ॥ ५७ ॥

सैवारी वर स वृन्दयोः । वारी कटी भस बन्धन्यो रिति विश्वः । सस्मरे स्मृता । तद्धर्मयोगा दिति भावः । कर्म्मणि लिट् । अन्यत्र शून्यासनत्वादीनां वारीसहचरिताविशेषेण गन्त्या वारीस्मरणहेतुत्वात्काव्यलिङ्गम् ॥ ५६ ॥ ******************* ॥

॥ पौनःपुण्यादिति ॥ आयोधनोर्व्यां युद्धभूमौ पौनःपुण्यात् पुनःपुनरावृत्तेरित्यर्थः । ब्राह्म णादित्वात् ष्यञ् प्रत्ययः अव्ययानां भमात्रे टिलोपः । सा च प्रातिपदिकार्थे उपसंख्या नमिति टिलोपः । अस्रगंधेन रक्तगंधाघ्राणादित्यर्थः । मत्त इभेन्द्रो महागजः कोपाद्दा कां जनं मृद्नन् क्षुंदन् । पादे लग्नां ईषदसमाप्तां । पाशीकल्पां पाशबंधनसदृशीं ।

पाशः अश्वादिबन्धनमिति विश्वः। वह्वादिभ्यश्चेति विकल्पादीकारः अभाषितपुंस्कत्वात् घरूपेत्यादिना ह्रस्वो न भवति। आयतां दीर्घां अत्रमालामाचकर्ष। पाशीकल्पेत्यर्थेन द्विनगतापूर्णोपमा ॥ ५७ ॥ ************************ ॥

॥ कश्चिदिति ॥ गाढप्रहारो वध्यस्तः कश्चिद्वीरो मूर्छामेत्य। वारणस्य शीतैः शीकरैः पुष्करतुषारैः सिक्तः। उच्छ्वासः उच्छ्वासउज्जीवितस्सन् किंतु नं मूर्छामागतं जिघृक्षुर्ग्रहीतुमिच्छुः। ग्रहेः सनंतादुप्रत्ययः। प्रस्थितानान्तं वरीतुमागतेत्यर्थः। नाकनारीव्यर्थाकूलानदुज्जीवनादिफलमनोरथा सती मुमूर्छ। अत्र कूतविपर्य्ययस्य विशेषणगत्या नाकनारीमूर्छाहेतुत्वात्काव्यलिंगं मूर्छासम्बंधातिशयोक्त्या संकीर्य्यते ॥ ५८ ॥ ** ॥

कश्चिन्मूर्छामेत्य गाढप्रहारः सिक्तः शीतैः शीकरैर्वारणस्य। उच्छ्वासः प्रस्थितान्तं जिघृक्षुर्व्यर्थाकूता नाकनारी मुमूर्छ ॥ ५८ ॥

लूनग्रीवात्सायकेनापरस्य द्यामत्युच्चैराननादुत्पतिष्णोः। चक्रे सैमुग्धैः सैंहिकेयानुकारः दाकाशस्थैरभ्रे वक्त्रचन्द्रैः ॥ ५९ ॥ ** ॥

॥ लूनग्रीवादिति ॥ सायकेन लूनग्रीवाच्छिन्नकण्ठात्। अतएव द्यामाकाशं प्रति आशुउच्चैरुत्पतिष्णोरुत्पतनशीलात्। अलंकृञित्यादिना इष्णुच्प्रत्ययः। अतएव सिंहिकाया अपत्यं पुमान् सैंहिकेयो राहुः। तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुंतुद इत्यमरः। स्त्रीभ्यो ढक्। तमनुकरोतीति तदनुकारास्तत्सदृशादित्यर्थः। कर्मण्यण्प्रत्ययः। रौद्रकारात्भीवर्णीकृतेऽपरस्य वीरस्य आननानमुग्धैः सुन्दरैः। अप्सरसां वक्त्रैरेव चंद्रैस्तेसे। भावेलिट्। अत्र राहुहेतुकत्वत्राणस्य चंद्र एव संभावात् वक्त्रचंद्रैरिति रूपकं सिद्धं तस्य सैंहिकेयानुकारादिति स्पष्टोपमापेक्षत्वात् सङ्करः ॥ ५९ ॥ ************* ॥

॥ वृत्तमिति ॥ काचिदप्सरा। युद्धे वृत्तं मृतं। मृतेनानीतेन दृष्टे स्थानेवर्तुलेपि वृत्ते मृते ह्र

चिविम्बः । शूरमाश्लिष्य रंतुं सुमेरुकुञ्जं जगाम । यावत्तद्वियोगासमर्थानद्दि
रहासहापत्नी सद्योग्नौ देहं बह्वानैनिस्म । नाजगाम । अत्र मेरुकुञ्जसम्बन्धेपि सम्बन्धो
क्तेरतिशयोक्तिः ॥ ६० ॥ ************************** ॥

॥ त्यक्तेति ॥ संयुगे युद्धे त्यक्तप्राणं कंचिद्वीरं । हस्तिन्यां तिष्ठतीति हस्तिनीस्था करिणी
मारूढा सती । वीक्ष्य प्रेम्णा तत्क्षणादुद्गतासुर्गतप्राणा सा । सैव पुरंध्री सभार्ये वस
तीत्वात्पतिव्रतत्वादखंडमक्षयं देवभूयं देवत्वं । भुवो भावे इति क्यप् । प्राप्याश्लिक्षत् । स्वी
यांपतिव्रत्यमेव पतिसालोक्यनिदानं नाग्निप्रवेशादिकमिति भावः । अत्र सतीत्वस्य विशे

वृत्तयुद्धे शूरमाश्लिष्य काचिद्रन्तुं सम्मेरुकुञ्जं जगाम । त्यक्त्वा
नाग्नौ देहमेतेन सार्धं यावत्पत्नी सद्यस्तद्वियोगासमर्था ॥ ६० ॥ त्य
क्तप्राणं संयुगे हस्तिनीस्था वीक्ष्य प्रेम्णा तत्क्षणादुद्गतासुः । प्राप्या
खण्डं देवभूयं सतीत्वादाश्लिक्षत्स्वैव कश्चित्पुरन्ध्री ॥ ६१ ॥ स्व
र्गे वासं कारयन्त्या चिराय प्रत्यग्रत्वं प्रत्यहं धारयन्त्या । कश्चिद्वीरो
दिव्यनार्या परस्मिल्लोके लोकं प्रीणयन्त्येह कीर्त्या ॥ ६२ ॥ *

षणगत्या देवभूयहेतुत्वानुक्तेर्नकाव्यलिङ्गं न तिशयोक्त्यादिकं तु यथासम्भवमूह्यम् ॥ ६१ ॥

॥ स्वर्गे इति ॥ कश्चिद्वीरश्चिराय चिरकालं स्वर्गे वासं । अयवासवासिष्वकालादिति निक
ल्पादलुक् । कारयन्त्यानुभावयन्त्या । अहन्यहनि प्रत्यहं । नपुंसकादन्यतरस्यामि
त्यव्ययीभावः समासांतो टच् प्रत्ययः । अव्ययानां भमात्रे टिलोप इत्युक्तं । प्रत्यग्रत्वं नूत
नं धारयन्त्या परप्रेमास्पदत्वादिति भावः । लोकं प्रीणयन्त्या अह्लादं प्रापयन्त्या । प्रीञो
ण्यन्ताल्लटः शतरि ङीप् धूञ्प्रीञोर्नुग्वक्तव्य इति नुगागमः । दिव्यनार्या परस्मिल्लोके इ
ह लोके कीर्त्या च भेजे प्राप्ता । भजेः कर्मणि लिट् । रमणरमणाल्लोकद्वयमपि जिगायेत्य

र्थैः । अत्र दिव्याङ्गनाकोर्त्त्यौः प्रकृतनयोरेव तुल्यधर्मसम्बन्धात् केवलप्रकृतास्पदानुल्ययोगि ता ॥ ६२ ॥ ****************************** ॥

॥ गत्वेति ॥ मूर्च्छाभाजामन्तरात्माजीवः रम्यं वैबुधं सद्म दिवः भवनं गत्वा आजगाम । मूर्च्छासमये सुरलोकं रमणीयत्वं दृष्ट्वा जगाम नूनमुत्प्रेक्षा । कुतः यत्र यस्मात्प्राप्तसंज्ञां लब्धचेताः सन्तः । दृष्टप्रत्ययाः दृढविश्वासाः । भूयः पुनरपि साधीयो गाढान्तरं । गाढादीयसुनि अन्तिकवाढयोर्नेदसाधाविति साधादेशः । रणाय रणं कर्त्तुमाद्रियन्ते उत्सहिरे इत्यर्थः । कर्त्तरि लट् श्यन् प्रत्ययः । कथंचिदुपजीविनानां पुनर्मृत्युम्प्राप्यनादरं विश्वयोर्दर्शनहेतुकेति भावः ॥ ६३ ॥ ****************************** ॥

गत्वा नूनम्वैबुधं सद्म रम्यम्मूर्च्छाभाजामाजगामान्तरात्मा । भूयो दृष्ट
प्रत्ययाः प्राप्तसंज्ञाः साधीयस्ते यद्रणायाद्रियन्ते ॥ ६३ ॥ कश्चि
च्छस्त्रपातमूढोपरोद्धुर्लब्धाभूयस्तेन नामाह्वयाय । व्यावर्त्तिष्टक्रोशतः
सख्युरुच्चैस्त्यक्तप्राणास्साकाचलोकानुवृत्तिः ॥ ६४ ॥ *** 

॥ कश्चिदिति ॥ शस्त्रपातमूढः प्रहारमूर्च्छितः कश्चिद्वीरस्तेन नां संज्ञां लब्धा अपरोद्धुर्मूर्च्छासमये युद्धभूमेरपनेतुं सख्युर्मित्रस्योच्चैः क्रोशतः आगच्छ त्वा क्रोशति सति । षष्ठी चानादरे इति षष्ठी । क्रोशंतमनादृत्येत्यर्थः । भूयः पुनपरि आह्वाय रणाय व्यावर्त्तिष्ट । आत्मादेहस्त्यक्तस्तनथा हि का च लोकानुवृत्तिः स्वकार इत्यर्थः । सुहृज्जनानुरोधस्तु गर्हितार्थिनः परिच्छेत्तुं वृथेत्यर्थः सामान्येन विशेषणसमर्थनरूपोर्थान्तरन्यासः ॥ ६४ ॥ * ॥

॥ भिन्नोरस्काविति ॥ शत्रुणा दूरादाकृष्यासन्नत्वात्तयोरित्यर्थः । सन्निकृष्टत्वादेकेषुणैव भिन्नोरस्कौ विदारितवक्षसौ । कौचिद्वीरावन्योन्यावष्टम्भ एव सामर्थ्येन स्वयोगात्स्वभावाद् ध्वौवेव निष्ठनावेव स्वर्गनावपि मृतावभूतां अपि स्वार्थः । उभौ दस्वर्गनास्वमुचनेनितनत्रमृत

वीरूर्द्धं विस्थानाम्सम्बंधोपसम्बन्धोक्तेरनिश्चयेक्तिः ॥ ६५ ॥ ************॥

॥ भिन्नानिति ॥ अन्येवीराअस्त्रैर्भिन्नान्विदारितान्। अतएवमोहभाजोमूर्च्छांगाजोमू

र्च्छांगतानभिजातानकुलीनान्। अभिजातस्तुनीत्यावेकुलीनप्राज्ञरूपयोरितिविश्वः

। हन्तुंलोलंचञ्चलंस्वर्गंवारयन्तः। जीवग्राहंगृहीत्वाजीवग्राहंग्राहयामासुःजीवनेवग्राह

यामासुरित्यर्थः। समूलाहन्तजीवेषुहन्ग्रहइतिणमुलप्रत्ययःकषादित्वादनुप्रयोगः

जीवग्रहणप्रयोजनमर्थान्तरन्यासेनाहतथाहि। योग्येनार्थःजनेनहेतुनाकस्यपुंसोर्थः

कोर्थोरिप्रयोजनंनस्यात्स्वादेवसर्वस्यापीत्यर्थः हननिषेधादितिभावः अनेवीरणां

भिन्नोरस्त्रैःशत्रुशास्त्रष्यद्रणदासन्नत्वात्कोचिदेकेषुशैव। अन्योन्या

वष्टम्भसामर्थ्ययोगादूर्द्ध्वेवस्वर्गतावप्यभूताम् ॥ ६५ ॥ भिन्ना

नस्त्रैर्मोहभाजोभिजातान्हन्तुंलोलान्वारयन्तःस्वर्गम्। जीवग्रा

हंग्राहयामासुरन्येयोग्येनार्थःकस्यनस्याज्जनेन ॥ ६६ ॥ भग्नै

र्द्दण्डैरातपत्राणिभूमौपर्य्यस्तानिप्रौढचन्द्रद्युतीनि। आहारायप्रे

तराजस्यरौप्यस्थालीनीवस्थापितानिवभान्ति ॥ ६७ ॥ **

रोप्यपिपरिनरक्षणमेवश्रेयःनान्तेनानिपरिरक्षितमिति ॥ ६६ ॥ *********॥

॥ भग्नैरिति ॥ भग्नैर्द्दण्डैर्हेतुनाभग्नदण्डत्वादितिभावः। भूमौपर्यस्तानिवृत्तानयानिया

निप्रौढचंद्रद्युतीनिपूर्णेन्दुप्रभाणिआतपत्राणिछत्राणीत्यर्थः। प्रेतराजस्यांतकस्य

आहारायभोजनायस्थापितानिविहितानिरौप्यस्थालीनिराजतभाजनानीवभांतिशोभन्ते

॥ ६७ ॥ ***************************॥

॥ रेजुरिति ॥ व्यस्तूनांमृतानांपार्थिवानांवक्षसोभ्रष्टाःपतिताः। कुङ्कुमांकाःकुङ्कुमाह

णिताइत्यर्थः। मुक्ताहाराःपूर्वकामस्यसकलराजकंहारास्तस्यकलमनोरथस्य। अतएव

पीतं रक्तमेवासवो येन तस्य मृत्योः दन्ता इव हासा लक्ष्म्यास्ता इवाहं मन्ये इति दन्तास्तैराननं रेजुरिति मन्ये इत्युत्प्रेक्षा ॥ ६८ ॥ *************************** ॥

॥ निम्नेष्विति ॥ भूमौ निम्नेषु नम्रस्थलेषु और्वीभूतं राशीभूतं अस्रक्षतानां सम्बन्धि यदस्रं रक्तं चकासां चकार दिदीपे । चकास्तेर्दीप्तार्थविनिधानोऽलिङ्कात्ययनेकाचामवक्तव्यमित्याम्प्रत्यये कृञोऽनुप्रयोगः । तदन्तमन्तकान्तःपुरस्य कृतान्तावरोधसंख्यानानामुत्तरीयाणां रागार्थं रञ्जनार्थं कुसुम्भस्येदं कौसुम्भं अम्भः किंनु कुसुम्भद्रवो नु वेत्युत्प्रेक्षा ॥ ६९ ॥ ** ॥

॥ रामेणेति ॥ रामेण भार्गवेण । सामर्थ्यात् त्रीन् वारान् त्रिः । द्वित्रिचतुर्भ्यः सुजिति सु

रेजुर्भ्रष्टाः वक्षसः कुङ्कुमाङ्का मुक्ताहाराः पार्थिवानां व्यसूनाम् । हा

सा लक्ष्म्याः पूर्णकामस्य मन्ये मृत्योर्दन्ताः पीतरक्तासवस्य ॥ ६८ ॥

निम्नेष्वौर्वीभूतमस्रक्षतानामस्रं भूमौ यच्चकासाञ्चकार । रागार्थं त

त्किन्नु कौसुम्भमम्भः सम्ख्यानानामन्तकान्तःपुरस्य ॥ ६९ ॥ रा

मेणात्रिः सप्तकृत्वो ह्रदानां त्रिश्चक्रे पञ्चकं क्षत्रियास्रैः । रक्ताम्भो

भिस्तर्पणादेव तस्मिन्सङ्ख्येऽसङ्ख्याः प्रावहन्द्वीपवत्यः ॥ ७० ॥

च्प्रत्ययः । त्रिरावृत्ताः सप्त त्रिः सप्तकृत्वः एकविंशतिवारानित्यर्थः । संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुजिति कृत्वसुच्प्रत्ययः । क्षत्रियास्रै राजन्यरक्तैः त्रिचमङ्क्तं ह्रदानां पञ्चपरिमाणमस्य पञ्चकं । संख्यायाः संज्ञासंघसूत्राध्ययनेष्विति संचार्थे कन्प्रत्ययः । चक्रे कृतं । तस्मिन् संख्ये युद्धे । मृधमास्कन्दनं संख्यमित्यमरः । तत्क्षणादेव रक्तैरेवाम्भोभिः असंख्या द्वीपवत्यो नद्यः प्रावहन् प्रासरन् रामेण बहुकालेन चकास्यमन्तपंचकाख्यं ह्रदपंचकमेव कथंचित् कृतं । अत्र तु क्षणमात्रेणासंख्या नद्यः प्रवृत्ता इत्युपमानादुपमेयस्याधिक्योक्तेर्व्यतिरेकालङ्कारः ॥ ७० ॥ ************************** ॥

॥ संदानितादिति ॥ शिक्षितास्त्रैरभ्यस्तास्त्रविद्यैरस्त्रिभिरायुधीयैः । अथः इभानामध स्तादाविश्य प्रविश्य संदानितात् बंधनप्रदेशात् गल्मदेशमधिकृत्येत्यर्थः । शातं शीतं । शाछोरन्यतरस्यामिति विकल्पादित्वाभावः । तेन शस्त्रेणावलूनाः छिन्नाः । इभानामिमे ऐभाः अंघ्रयश्चरणाः असृङ्मयीनां नदीनामन्तरभ्यन्तरे व्यक्तं कूर्मौपम्यं कमठोपमं । स्वार्थेष्य ञ्प्रत्ययः । अतएवौपम्यादयः चातुर्वर्ण्यवदिति वामनः । प्रापन् प्राप्ताः । आपोलुङ्पु षादित्वात् च्लेरङादेशः । उपमा ॥ ७१ ॥ ******************** ॥

॥ पद्माकारैरिति ॥ उच्चैर्वीचिषु तरङ्गेषु प्लवमानैः । पद्माकारैः कमलकल्पैर्योधवक्त्रैर्भट मुखैरिभानां करेभ्यो भ्रष्टैश्चामरैर्हंसैः । सोपस्काराः सपरिकाराः । संपर्युपेभ्यः करोतौ

सन्दानितादस्त्रिभिः शिक्षितास्त्रैराविश्याधः शातशस्त्रावलूनाः । कू
र्मौपम्यं व्यक्तमन्तर्नदीनामैभाः प्रापन्नङ्घ्रयोऽसृङ्मयीनाम् ॥ ७१ ॥
पद्माकारैर्योधवक्त्रैरिभानाङ्करभ्रष्टैश्चामरैरेव हंसैः । सोपस्काराः
प्रावहन्नस्ततोयाः स्रोतस्विन्यो वीचिषूच्चैस्तरद्भिः ॥ ७२ ॥ **

भूषणे इति सुडागमः । अस्रतोयाः रक्तस्रोतस्विन्यो नद्यः प्रावहन् । अत्र रूपकोपमयोः सङ्करः सुगमः ॥ ७२ ॥ **************************** ॥

॥ उत्क्रांतानामिति ॥ पत्राणि वहन्तीति पत्रवाहाः पत्रिणः । आमिषाय आमिषमत्तुं । क्रियार्थोपपदस्य च कर्मणि स्थानिन इति चतुर्थी । उत्क्रांतानां मृतानां उपरिष्टादध्या काशमाकाशे । विभक्त्यर्थेऽव्ययीभावः । बभ्रमुः भ्रेमुः । वा जॄभ्रमुत्रसामिति विकल्पादे त्वाभ्यासलोपाभावः । अत्रोत्प्रेक्ष्यते । दारुणास्त्रैः घोरास्त्रैः कायं त्याजिना विसर्जिना । त्य जेर्ण्यन्तात् द्विकर्मकादपि क्तः । ण्यन्ते कर्तुश्च कर्मणामिति वचनात् । मूर्त्ताः मूर्त्तिमन्तः । प्राणा अद्येदानीमपि कायमवेक्षमाणाः पूर्वाभिमानात्पुनः कायप्रवेशप्रेप्सवः पक्षिणो मूर्त्ताः प्राणा

एवं नूनमारुरुक्षुमन्तीत्युत्प्रेक्षार्थः । इजादेश्च गुरुमतेऽ न्च्छ इत्यामप्रत्ययः । कृञ्चानुप्रयुज्यते लिटीत्यस्तेरनुप्रयोगः आम्प्रत्ययवदित्यत्र न कृञ्ग्रहणमेवेति नियमादस्तेर्नात्मनेपद ॥ ७३ ॥ *********************************** ॥

॥ आतन्वद्भिरिति ॥ दिक्षु पत्त्रायमानादं पक्षान्तघोषं । आतन्वद्भिर्विस्तृण्वद्भिर्दूरदाम्प्राप्तैः रणगतैरजीवं त्यजीवैरचेतनैः । पत्त्राद्युजं नेतनञ्समासः । पत्त्रिपूगैर्बाणवानैरित्यर्थः । तीक्ष्णैर्मुखाग्रैः फणाग्रैः करणैः सैनिकानां रक्तमपायि पीतं । पिबतेः कर्मणि लुङ् आतो युक् चिण्कृतोरिति युगागमः । पश्चाज्जीवैश्चेतनैः पत्त्रिपूगैः पक्षिसंघैः कर्तृभिस्तीक्ष्णैर्मुखाग्रै

उत्क्रान्तनामामिषायोपरिष्टादध्याकाशम्बभ्रमुः पत्त्रवाहाः । मूर्त्तैः
प्राणान्नूनमद्याप्यवेक्षमाणाः काय क्लान्तिदारुणास्त्रैः ॥ ७३ ॥
आतन्वद्भिर्दिक्षु पत्त्रायमानादम्प्राप्तैर्दूरदान्तीक्ष्णैर्मुखाग्रैः । आ
दौ रक्तं सैनिकानामजीवैर्जीवैः पश्चात्पत्त्रिपूगैरपायि ॥ ७४ ॥ ओ
जोभाजांयद्रणे संस्थितानामाद्तीवं साद्धमङ्गैर्ननूनम् । ज्वालाव्या
जादुद्धमन्तीनदन्तस्तेजस्तारं दीप्तजिह्वा बवाशे ॥ ७५ ॥ **

ञ्चञ्चुपुटैः करणैरपायि । अत्रोभयेषां पक्षिणां प्रकृतत्वात्केवलप्रकृतविषयश्लेषः ॥ ७४॥

॥ ओजोभाजामिति ॥ दीप्ता ज्वलन्ती जिह्वा यस्याः सा दीप्तजिह्वा शिवा । रणे संस्थितानां मृतानामोजोभाजामोजस्विनां । अंगेन गात्रेण सार्द्धं यत्तीव्रं तिग्मं तेन आदद भक्षयत् अदेर्लुङ् अदः सर्वेषामित्यडागमे पूर्वस्य आडजादीनामित्याडागमेऽङ्गस्य आट इति वृद्धिः । नदन्नारन्नारे ऽन्तरितं तेजो यत् ज्वालाव्याजामुखोल्काकुलादुद्धमन्तीनारमुच्चैर्ववाशेरौति । तिरस्वांवासितं रुतमित्यमरः । नूनमित्युत्प्रेक्षायां अत्र व्याजशब्देन ज्वालानापह्नवेन तेजस्तोत्प्रेक्षणे सापह्नवोत्प्रेक्षणेति सर्वस्वकारः ॥ ७५ ॥ ************* ॥

॥ नैरन्तर्य्येति ॥ नैरन्तर्य्येणाविच्छेदेनच्छिन्नदेहस्यान्तरसंयस्मिन्कर्म्मणितत्तथा। वारणैः प्रोतंस्यूतं। अतएवदुर्भक्ष्यस्यभक्षितुमशक्यस्य। दुष्कृच्छ्रार्थेखल्प्रत्ययः। याद्धर्यो श्च स्यतम्बन्धिनासंज्वालितनाज्वालावतावासितेनहुतेनशिवानांवासनेजिह्वाज्वलतीतिप्रसिद्धिः। आदिष्यप्रज्वाल्य। वाणदाहायमांसपाकायचेतिभावः। अतएवपाकेनापूर्वोऽभिनवस्वादोरुचिर्यस्यतत्तथाशिवाभिर्गोमायुभिः। स्त्रियांशिवाभूरिमायुर्गोमायुर्मृगधूर्त्तकाइत्यमरः। आदेजघांसेभक्षितमित्यर्थः। निष्ठान्यतरस्यामितिविकल्पाददेर्नघस्लृआदेशः। वासितेच्छायाजिह्वाज्वालादग्धेषुप्रतिवंधेपाकरुचिरंजघास इत्यर्थः अत्र पाकापूर्वोस्वादाद्यसंबंधेपिसम्बंधोक्तेरतिशयोक्तिः ॥ ७६ ॥ ********* ॥

नैरन्तर्य्यच्छिन्नदेहान्तरसंदुर्भक्षस्यज्वालितावासितेन। योद्धुर्वाणप्रोतमादीप्यमांसम्पाकापूर्वस्वादमादेशिवाभिः ॥ ७६ ॥ ग्लानिच्छेदीक्षुत्प्रबोधायपीत्वारक्तारिष्टंशोषितजीर्णशेषम्। स्वादुङ्कारङ्कालखण्डोपदंशङ्क्रोष्टाडिम्बव्यश्वणाद्यस्वनच्च ॥ ७७ ॥

॥ ग्लानीति ॥ क्रोष्टाजंबुकः। क्षुत्प्रबोधायग्लानिच्छेदीखेदहारीशोषितेजरितःअजीर्णशेषोयेनतद्रक्तमेवारिष्टंपानविशेषरूपमितिरूपकं। तत्पीत्वा। स्वादुंकारंस्वादुंकृत्य। स्वादुमिणमुल्। कालखंडेनयकृताउपदंशंकालखंडोपदंशंकालखण्डमुपदंशंकृत्वेत्यर्थः। कालखंडंयकृत्तुल्येसमइत्यमरः। उपदंशस्तृतीयायामितिणमुल्। कालखंडस्यदंशनक्रियाकर्मत्वेपिभुजिक्रियाकरणत्वात् तृतीयोपपदंतृतीया प्रभृतीन्यन्यतरस्यामितिविकल्पेनोपपदसमासः। डिम्बंकलेवरंव्यश्वणनभुक्तवानित्यर्थः। वेःस्वनोभोजनइतिषत्वं। व्यस्वनदवादयन्नवेतिसमुच्चयःअभोजनार्थत्वात्षत्वंन ॥ ७७ ॥ *** ॥

॥ क्रव्यादिति ॥ क्रव्यमदंतीतिक्रव्यादोमांसभक्षकाःकङ्कगृध्रादयः। क्रव्येचेतिविटप्रत्य

यन्तेषांपूगैःकर्तृभिः । मेदसोवसायाः । मेदस्तुवपावसेत्यमरः । प्रत्याशाभिस्तृष्णाभिर्दारितानिमेदस्विन्तभ्रंत्यापाटितान्यानकानांतूर्य्याणांपुष्कराणिमुखानि । पुष्करंकरिहस्ताग्रेवाद्यभांडेमुखेजलेइत्यमरः । प्राणिनःकरितुरगादीन् । प्रत्यवस्यन्अभ्यवहरन् । बाह्यानभ्यवहारःप्रत्यवस्यनंभोजनंजग्धिरिति हलायुधः । कालोंतकः । आभीलानिभयंकराणि । आभीलंभीमकृच्छ्रयोरितिविश्वः । आननानिव्याददौविजहार । आङोदोनास्यविहरणइत्यस्यप्रत्युदाहरणमेतत् । यानिविदारितानिपुष्कराणितान्येवाननानिनूनमित्युत्प्रेक्षायां ॥ ७८ ॥ ************************ ॥

॥ कीर्णेति ॥ अप्राणद्भिरजीवद्भिःछिन्नत्वान्निष्प्राणैरित्यर्थः । अनप्राणनेइतिधातोर्ल

क्रव्यात्पूगैःपुष्कराण्यानकानाम्प्रत्याशाभिर्मेदसोदारितानि । आ
भीलानिप्राणिनःप्रत्यवस्यन्कालोनूनम्व्याददावाननानि ॥ ७८ ॥
कीर्णारेजेसाजिभूमिःसमन्तादप्राणद्भिःप्राणभाजांप्रतीकैः । वह्वार
म्भैरर्द्धसंय्योजितैर्वारूपैःस्रष्टुःसृष्टिकर्म्मान्तशाला ॥ ७९ ॥

टःशत्रादेशः । प्राणभाजांप्राणिनांप्रतीकैरवयवैः । अंगप्रतीकोऽवयवइत्यमरः । समन्तात्कीर्णासाजिभूमिःईषदसमाप्तमारब्धैरितिवह्वारम्भैःकिंचदूर्द्धैरित्यर्थः । विभाषासुपोबहुच्पुरस्तात्तुइतिबहुचप्रत्ययः । तथार्द्धसंयोगितैरर्द्धघटितैःस्वरूपैःकारकैःआकारैः । रूपःस्वरूपेसौन्दर्य्येआकारश्लेषयोरपीतिविश्वः । कीर्णास्रष्टुःधातुःसृष्टिकर्मान्तशालावा । सृष्टिकर्मणोनियतागारमिवरेजेइत्युत्प्रेक्षा ॥ ७९ ॥ ******* ॥

॥ आयन्तीनामिति ॥ इत्यमुक्तरीत्याअविरतरयमविच्छिन्नवेगंययातथा । आयन्तीनामभिधावन्तीनामौद्धत्यभाजामुग्रभाजांप्रागल्भ्यभाजां । राज्ञांसमूहाराजकानि । गोत्रोक्षोष्ट्रादिनावुञ्प्रत्ययः । तेषामनीकिन्यःसेनास्तासांराजकानिकिनीनां । अलघुभिर्सद

ङ्गिरूर्मिमद्भिः श्रीपतेः कृष्णस्य सैन्यैः समं सेनाभिः सह । अपां समूहो आपः । भिक्षादि भ्येण । आपेन गच्छन्तीति आपगा नामुक्तविशेषणविशिष्टानां वारिधेरोघैः प्रवाहैः कृतो गुरुतरध्वनिर्महाध्वनिर्यस्मिन् तत्कर्म हृद्दोलायुद्धं अनियतजयपराजययुद्धं संकुरासीत् उ पमा मन्दाक्रान्तावृत्तमेतत् ॥ ८० ॥ ********************** ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणधुरीणश्रीमच्छेपाध्यायकोलाचलमल्लिनाथसूरि विरचिते माघकाव्यव्याख्याने सर्वङ्कषाख्याने ऽष्टादशः सर्गः ॥ १८ ॥ ****** ॥

आयन्तीनामविरतरयं राजकानि किनीनामित्थं सैन्यैः सममलघुभिः
श्रीपतेरूर्म्मिमद्भिः । आसीदोघैर्मुहुरिव महद्वारिधेरापगानां
दोलायुद्धं कृतगुरुतरध्वानमौद्धत्यभाजाम् ॥ ८० ॥ ****

इति शिशुपालवधे महाकाव्ये सङ्कुलयुद्धो नामाष्टादशः सर्गः ॥
१८ ॥ ****************

**************************

**************************

॥ नवैवमष्टादशसर्गेतुमुलयुद्धमभिधायेदानीमेकोनविंशे सर्गे द्वन्द्वयुद्धं नानुष्टुपेनक्
न्दसा चित्रबन्धनवर्णयितुमारभते ॥ अथेत्यादि । अथैवं तुमुलयुद्धानन्तरं । रणोऽट
वीवेत्युपमितसमासः । अग्निवदित्यत्र क्लीबौपम्यलिंगात् । एवमुत्तरत्रापि द्रष्टव्यं । तस्यां
रणाटव्यां । असुहृदः शत्रवो वेणवो वंशा इव । वेणुमस्करतेजनाइति वंशपर्यायेष्वमरः ।
तान्दारयतीति तस्तेनासुहृद्वेणुदारिणा वेणुदारिणा कृष्णाग्रजेन । नृपा अङ्घ्रिपा इवाङ्घ्रिपाः पादपा
द्रुमैते षामोघात्संघात्तेषां संघर्षात्सम्मर्दात्तेषाच्च । अग्निवदग्नितुल्यः । तेन तुल्यमिति तु
ल्यार्थे वतिप्रत्ययः । उत्तस्थे उत्थितं । भावे लिट् । अत्राग्निवदिति तुल्यार्थे वतिना धर्म
व्यवधाने सादृश्यप्रतिपादिनाऽपमानोपमेयसमानमुख्यसादृश्यप्रतिपादकानां चतुर्णां चो
पमानाद्येयमर्थान्तर्निर्द्धिन्नगम्यापूर्णोपमा । सा च रणाटव्यादिसमासगतोपमासापेक्षेति

अथोत्तस्थे रणाटव्यामसुहृद्वेणुदारिणा । नृपाङ्घ्रिपौघसंघर्षाद्
ग्निवद्वेणुदारिणा ॥ १ ॥ आपतन्तममुं दूराद्दूरीकृतपराक्रमः ।
बलोऽवलोकयामास मातङ्गमिव केसरी ॥ २ ॥ ******

सङ्करः । सर्गेऽस्मिन् श्लोकानामनुष्टुप्वृत्तं । पंचमं लघु सर्वेषु सप्तमं द्विचतुर्थयोः । गुरु ष
ष्ठं च सर्वेषामेतत् श्लोकस्य लक्षणमिति लक्षणात् । अत्रैकान्तरक्रमेण यमकाद्यन्यतमशब्दा
लङ्कारनियमः सर्वत्र यथासम्भवः सर्वालङ्कारसूत्रे यमकलक्षणमुक्तं दण्डिना । अव्यपेतव्य
पेतात्मा वृत्तिर्वर्णसंहितेर्यमकं तच्च पादानामादिमध्यान्तगोचरं । एकद्वित्रिचतुष्पा
दं यमकानां विकल्पना । आदिमध्यान्तमध्यान्तमध्याद्यादान्तसर्वत इति यत्रेदं समपादा
न्तं यमकं द्विपादयमकभेदः ॥ १ ॥ *********************** ॥

॥ आपतन्तमिति ॥ आपतन्तमाधावन्तं अमुं वेणुदारिणं । दूरात् दूरीकृतपराक्रमोऽङ्गी
कृतपौरुषस्तेन सहानुगतसंप्रहार इत्यर्थः । बलो बलभद्रः । केसरी सिंहो मातङ्गं

भजमिवावलोकयामास । अनयो रिवबदन्तार मितिभावः । अतोऽलङ्कारेणवस्तुध्वनिः

॥ २ ॥ ********************************* ॥

॥ जजाविति ॥ ततोऽवलोकनानन्तरं । जजन्तीतिजजाः योधाः । जजयुद्धेपचाद्यच् ।

जजानामोजस्तेजाजानाजजौजोजा । तामजिजयन्तीतिजजौजोजाजिजित् । जयतेःक्विप् ।

जजन्तीतिजाजीयोधा । ताच्छील्येणिनिः । अतितनानतुदन्तान् । अतितदन्तीतिअति

व्यथयन्तीति अतिनुत् तितुत् । तुदतेःक्विप् । भस्यभेवाभायस्यसभाभोनक्षत्रकांतिः । नक्ष

त्रमृक्षंभंतारमित्यमरः । नास्तिभीर्येषांतेऽभीतिर्भीकास्तानिभानगजान्अभिभवतीतिअ

भीभाभिभूः । क्विप् । तस्याःभाभूस्तेजस्तेभूःस्थानंअभीभाभिभूभाभूः । अरःतंत्र्येषामि

जजौजोजाजिजिज्जाजी तन्ततोऽतितताततुत् । भाभोभीभाभिभू

भाभूरारारिरिरीररः ॥ ३ ॥ एकाक्षरपादः॥ भवन्भयायलोका

नामाकम्पितमहीतलः । निर्घातइवनिर्घोषभीमस्तस्यापतद्रथः ॥

४ ॥ ***************************

त्यरिणस्तान्कारीणतैरिणंमिगच्छन्तीतिअरिरयोरयाः । रीगतिरेषणयोरितिधातोःक्विप्

। तेषांइरं प्रेरणंरातिअरिरीरररेरथिकःआतोनुपसर्गेकः । अरिःशत्रुर्वलभद्रतवेणअरि

रीआरयोद्धुमासतारइत्यर्थः । चद्दगताविति धातोविङ्द्विर्भावऽतोणलिवृद्धिःअभ्यास

स्योरदत्वेअतआदेरितिदीर्घपुनःसवर्णदीर्घःभिन्नैकाक्षरपादाख्योऽनुप्रासभेदःभाभङ्ग

र्युपमानुप्रासयोरेकवाचकानुप्रवेशलक्षणसङ्करः ॥ ३ ॥ ************ ॥

॥ भवन्निति ॥ लोकानांजनानांजगतांच । लोकस्तुभुवनेजनेइत्यमरः । भयायभवन

भवनसंपद्यमानःभयंजनयन्नित्यर्थः । क्लृपिसंपद्यमानेचतुर्थीचवक्तव्येतिक्लृपेरर्थनिर्देशा

च्चतुर्थी । आकम्पितमहीतलोभूकम्पंकुर्वन्नित्यर्थः । निर्घोषेणभीमोभयंकरः । तस्यबल

भद्रस्यरयोर्निर्धनउन्पानइवापतन्प्रधावन् । श्रौतीपूर्णोपमा ॥ ४ ॥ ****** ॥

॥ रामइति ॥ रिपुर्वेणुदारी । आजिमहेषुरणोत्सवेष्विनिरूपकं । महउद्धवउत्सवइ त्यमरः । विचिक्ष्यइतिविचक्षणेप्रगल्भे । कर्त्तरिल्युडितिन्यासङ्कुरः । अनयोस्त्वप्रतिषेधो वक्तव्यइतिचक्षिङख्यान्न्यादेशाभावः । रामेबलभद्रेआशांचक्षेप । अस्यतेर्लिट् । अ तआदेरित्यभ्यासदीर्घस्सवर्णदीर्घः । कोपात्तरामएनंवेणुदारिणंशितयाशानया । शा क्कोरन्यतरस्यामितीत्वं । महेष्वासामहेषुणा । पत्रीरोपइषुर्द्वयोरित्यमरः । विचक्षणे जघान । क्षणुहिंसायामितिधातोःकर्त्तरिलिट् । अभिन्नत्वमपादानामपादाभासयम कभेदः । एवमुत्तरत्रापिद्रष्टव्यम् ॥ ५ ॥ ****************** ॥

रामेरिपुश्शरंनाजिमहेष्वासविचक्षणे । कोपादथैनंशितयामहेष्वा सविचक्षणे ॥ ५ ॥ दिशमर्कमिवावाचीमच्छ्रीगतमपाहरत् । म न्द्रप्रतापन्तंसूतःशीघ्रमाजिविहायसः ॥ ६ ॥ कृत्वाशिनेःशा ल्वश्चमूंसप्रभावाचमूर्जिताम् । ससर्ज्जवक्त्रैःफुल्लाब्जसप्रभावाचमू र्ज्जिताम् ॥ ७ ॥ *************

॥ दिशमिति ॥ मूर्च्छांगतंरामेषुपातान्मोहमुपगतं । अतएवमंदप्रतापमल्पप्रकाशंतंवेणु दारिणंअवाचीदक्षिणांदिशंप्राप्तं । अतएवमंदप्रतापार्कमिवसूतःसारथिरनुरूपश्चआ जौविहायसःआकाशादिवाजिविहायसइत्युपमितसमासः । शीघ्रमपाहरत्अपसारित वान् । उपमा ॥ ६ ॥ ************************* ॥

॥ कृत्वेति ॥ प्रभावेनसहवर्त्तनइतिसप्रभावामहानुभावा । शिनेःसात्यकिपितामहस्य चमूःसेना । शाल्वोनामचैद्यपक्षोराजातस्यचमूंसेनांजितांकृत्वाजित्वेत्यर्थः । अतएवव क्त्रैर्मुखैः । येनांगविकारइतितृतीया । विकासस्यापिविकारत्वात् । फुल्लाब्जस्यप्रफुल्ला

रविंद सत्समानप्रभाहर्षविकाशिनवक्कास्तीत्यर्थः । जर्जिनामुदारंबाचंसस्यंगूयम सादयइत्यादुच्चैर्गर्जगर्जजगादेत्यर्थः । उपमायमकयोःसंसृष्टिः ॥ ७ ॥ **** ॥

॥ उल्मुकेनेति ॥ दिक्षुतेजःप्रभावःप्रकाशश्चप्रकिरताविक्षिपता उल्मुकेनभागवतेनराज्ञा आलातेनच । सकुचंतीपत्रसंचयंपत्रसंपद्वाहनसंपत्पर्णसमृद्धिश्चयस्यतं । सप्रतापंसप राक्रमंप्रकटनापसहितंच । इंमंद्रुमाख्यंराजानंवृक्षंचप्राप्यादीप्यतप्रजज्वले । भाविलङ्क ॥ अत्राभिधायाःप्रकृतार्थनियंत्रणादप्रकृतार्थप्रतीतिध्वनिरेवश्लेषः ॥ ८ ॥ *** ॥

॥ पृथोरिति ॥ रुक्मीभीष्मकात्मजोरुक्मिणीभ्राता । उदायुधःउद्यतायुधःसन् । यया बाचापृथोराज्ञ्स्त्रापमध्यक्षिपत्धिगिदंवृथाकष्टमितिनिनिन्द । अपगतमुदस्मात्सया

उल्मुकेनद्रुमस्प्राप्यसङ्कुचत्पचसञ्चयम् । तेजःप्रकिरतादिक्षुसप्रता पमदीप्यत ॥ ८ ॥ पृथोरध्यक्षिपद्रुक्मीययाचापमुदायुधः । त येवबाचापगमथ्यैयाचापमुदायुधः ॥ ९ ॥ समंसमन्ततोराज्ञामा पतन्तीरनोकिनीः । कार्ष्णिःप्रत्यग्रहीदेकःसरस्वानिवनिम्नगाः ॥ १० ॥ ***********************

अपमुदानिरुत्साहयातयैववाचाबुधोयुद्धादपगममपसरणंययाच । मांत्राहिपलायमा नंशरणागतोस्मीतिप्रार्थयामासेत्यर्थः । याचिञभयपदी ॥ ९ ॥ ******* ॥

॥ सममिति ॥ समंयुगपत्समंततआपततीरागच्छन्तीराज्ञांचैद्यपक्षाणामनीकिनीःसेनाः । कृष्णस्यापत्यंपुमान्कार्ष्णिःप्रद्युम्नः । अनइन् । निम्नगाःनदीःसरस्वान्समुद्रइवै कोऽसहायःप्रत्यग्रहीत्प्रत्यवरोध ॥ १० ॥ ****************** ॥

॥ रथानैरिति ॥ चलंतिआयसानिअयोमयानिदंशनानिवर्माणियेषां तैः । तनुत्रंवर्मदं शनमित्यमरः । अतएवघनसादृश्यंकार्ष्ण्यान्मेघसाम्यंरथानैसैसैनिकैःतत्रकार्ष्णौ कां

घनसाच्छायासुवर्णवर्णा। शरएवाशनिः विद्युत्तस्य जेउत्सृष्टा। उपमारूपकयोः संसृष्टिः। ओष्ठ्यवर्णविरहान्निरोष्ठ्यं चित्रभेदः। शब्दालङ्कारः॥ ११ ॥ ***** ॥

॥ नखेति ॥ नखांशवो मंजर्य इव ताभिः कीर्णां व्याप्तां। अधिरूढाः शिलीमुखा बाणाश्च षट्पदाश्च यस्यां तां। अलिबाणौ शिलीमुखावित्यमरः। धनुः शाखेव तां बिभ्रत्सौ कार्त्तिकेयः वृक्षैकदेशः तरुरिव बभौ। तरुरिवेति लिंगात्सर्वत्रोपमितसमासः। शिलीमुखेति श्लिष्टविशेषणेयमुपमा॥ १२ ॥ ************************** ॥

॥ प्राप्येति ॥ अरिपूगानां शत्रुसंघानामन्तकः अरिपूगांतकोऽसौ कार्त्तिकः। भीमं भयंकरं

दृप्तानैर्धनसादृश्यत्वसदायसदंशनैः। तत्रकाञ्चनसच्छायासत्तुजैतैः शराशनिः॥ ११॥ निरोष्ठ्यः॥ नखांशुमञ्जरीकीर्णामसौतरुरिवोच्चकैः। बभौ विभ्रद्धनुः शाखामधिरूढशिलीमुखाम्॥ १२॥ प्राप्यभीममसौजन्यं सौजन्यद्धृदयानने। विध्यन्नमुमोचनरिपूनरिपूगान्तकः शरैः॥ १३॥ छन्नस्यसर्वक्षितिपैर्विजयाशंशयापुरः। अनेकस्यचकारसौबाणैर्बाणस्यखण्डनम्॥ १४॥

जन्यं युद्धं प्राप्य। युद्धमायोधनं जन्यमित्यमरः। आनने नम्रे सौजन्यं सौहार्द्दं दधन्। ननु विध्यन्। नक्लीवं कृताञ्जलिमिति निषेधादिति भावः। रिपून्प्रतिपक्षान् शरैर्विध्यन्प्रहरन्नमुमोचनररक्षेत्यर्थः। संकीर्णयमकभेदः॥ १३ ॥ ******* ॥

॥ छन्नस्येति ॥ असौ कार्त्तिकः सर्वक्षितिपैर्विजयाशंसया विजयाशंकया। पुरोऽग्रे छन्नस्य नियुक्तस्य प्रयुक्तस्य वा। अनेकस्यानेकाकिनः ससहायस्येत्यर्थः। अन्यत्रानेकस्य बहुसंख्यस्य। बाणस्य बाणासुरस्य शरजालस्य बाणसमूहस्य च बाणैः खण्डनं च्छेदं चकार। अनयोर्द्वयोरपि प्रकृतत्वात्केवलप्रकृतश्लेषः॥ १४ ॥ ************ ॥

॥ येति ॥ यासेना । कृतानेकमायाकृतबहुकपटासती । ससारनांसारवतांबभार । तांसे नांसकार्ष्णिःधनुःकर्षन् धनुषाविध्यन्नित्यर्थः । आयासेनरहितमनायासंशत्रुं यथातथा ससारअभियुक्तवानित्यर्थः । बाणंभंक्त्वानत्तेनांविभञ्जुवेत्यर्थः ॥ १५ ॥ *** ॥

॥ ओजइति ॥ महौजामहाबलःप्रद्युम्नः । चकमौजानामराज्ञःओजसन्दक्षणाद्देवाघः कृत्वाभिभूय । अजौयुद्धेअमुख्यत्वमप्रधानत्वंकुर्वन् । अथवाअमुख्यत्वंमुख्यार्थत्वंतत्वा त्तःकुर्वन् । नामनिजंप्रद्युम्ननामधेयंमुख्यतांप्रधानतांप्रसिद्धार्थंनामनयत् । प्रकृष्टं द्युम्नंबलंयस्येतिप्रद्युम्नइतिस्वामी ॥ १६ ॥ ****************** ॥

याबभारकृतानेकमायासेनासंसारताम् । धनुःसकर्षन्नहितमायासे नाससारताम् ॥ १५ ॥ ओजोमहौजाःकृत्वाधस्तक्षणाद्रुक्मनो जसः । कुर्वन्नाजावमुख्यत्वमनयन्नाममुख्यताम् ॥ १६ ॥ दूरा द्देवचमूर्भल्लैःकुमारोहन्तिसस्मयाः । नपुनःसांयुगीनाःस्मकुमारो हन्तिसस्मयाः ॥ १७ ॥ निपीड्यतरसातेनमुक्ताःकाममनास्थ या । उपाययुर्विलक्षत्वंविद्विषोनशिलीमुखाः ॥ १८ ॥ *

॥ दूरादिति ॥ सकुमारःप्रद्युम्नःसस्मयाःसगर्वाःयास्समूर्दूराद्देवभल्लैर्बाणविशेषैर्हन्तिस्म जघान । नास्मन्तःपुनर्भूयः । सांयुगस्येमांसांयुगीङ्कुपृथ्वीरणभुवमित्यर्थः । गोत्राकुःपृ थिवीपृथ्वीत्यमरः । नआरोहंतिस्मनारूढाः ॥ १७ ॥ ************ ॥

॥ निपीड्येति ॥ तेनप्रद्युम्नेनतरसाबलेनकामंनिपीड्य । अनास्थयाअनादरेण । मुक्ता नाजौनपरिहन्तव्यमितिनिषेधेनावध्याइतिजीवन्तोमुक्ताइत्यर्थः । विद्विषोविलक्षत्वं सत्रपत्वमाययुः । विलक्षस्तुत्रपान्वितइत्यमरः । शिलीमुखाबाणास्तुविलक्षत्वंलक्ष्यभिन्न त्वंनाययुः । अत्रद्वयोरपिविलक्षत्वयोरभेदाध्यवसायादयंच.ने.ऽपिविद्विषांशिलो

गुणानां प्रकृतानां तुल्ययोगितायामुपमाभिनदनितदङ्करः ॥ १८ ॥ ******** ॥

॥ तस्येति ॥ समरे तस्य प्रद्युम्नस्यावदानैरत्युग्रकर्मभिः करणैः । सहसा सद्यः रोमहर्षिभिः रोमांचवद्भिः । व्योमस्थैः सुरैः महर्षिभिः सहसा सार्द्धं तारो बलमशंसि शंसितम् ॥ १९ ॥ *

॥ सुगन्धयन्निति ॥ दिशः सुगंधयन् सुगंधाः कुर्वन् । सुगंधन्तमकरोतित्यन्तात् लटः शत्रादेशः । शुभ्रं धवलं । अम्लानिम्लानिरहितं । भूरि प्रभूतं कुसुमं दिवोऽन्तरीक्षात्तत्र प्रद्युम्ने अपतत् । तस्मात्प्रद्युम्नाद्यशः पूर्वोक्तगुणयुक्तं दिवमन्तरिक्षं प्रत्युत्पपात । अत्र द्युप्रद्युम्नयोः कुसुमयशोभ्यामन्योन्योपकारजननादन्योन्यालङ्कारः । परस्परं क्रियाजननेऽन्यो

तस्यावदानैः समरे सहसा रोमहर्षिभिः । सुरैरशंसि व्योमस्थैः स
हसा रोमहर्षिभिः ॥ १९ ॥ सुगन्धयन्दिशः शुभ्रमम्लानिकु
सुमं दिवः । भूरि तत्रापतत्तस्मादुत्पपात दिवं यशः ॥ २० ॥
सोढुं तस्य द्विषो नालमपयोधरवारणम् । ऊर्णुनाव यशस्सद्यामप
योधरवारणाम् ॥ २१ ॥ केशप्रचुरलोकस्य पर्य्यस्कारि विकाशि
ना । शेखरेणेव युद्धस्य शिरः कुसुमलक्ष्मणा ॥ २२ ॥ *** 

न्यमिति लक्षणात् ॥ २० ॥ ************************* ॥

॥ सोढुमिति ॥ अपगता भयान्निवृत्ता ये धानां रवाः सिंहनादा येषां ते अपयोधरवाः द्विषः शत्रवः । तस्य कार्ष्णेः रणं सोढुं नालमशक्ताः । अतएव यशः स्वं अविद्यमानं पयोधराणां वारणं मेघप्रतिघातो यस्य तत् अपयोधरवारणं । सद्यां मूर्णुनाव । मेघमण्डलं व्यतीत्य स्वर्गमाच्छादयामासेत्यर्थः । ऊर्णोतेर्लिट् । अजादेर्द्वितीयस्येति द्वितीयस्याचो द्विर्भावः । नुषङ्गावादाम्रनिषेधः । यमकवाक्यार्थहेतुकयोः काव्यलिङ्गयोः संसृष्टिः ॥ २१ ॥

॥ केशेति ॥ विकाशिना विविधमार्गचारिणा विकस्वरेण च । कुसुमलक्ष्मणा पुष्पकेतुना

प्रद्युम्नेन । अन्यत्र कुसुमचिह्नेन तन्मयेनेत्यर्थः । केशवस्य चरमभूता अक्षोका जनावलि नतस्य युद्धस्य शिरोग्रभूमिः । अन्यत्र केशैः प्रचुरस्य केशाढ्यस्य लोकस्य जनस्य शिरःशेखरेणापीडेनेव शिखामाल्येनेवेत्यर्थः । शिखास्वापीडशेखरौ विवमरः । पर्यस्कारि परिष्कृतं भूषितमित्यर्थः । परिपूर्वात्करोतेः कर्मणि लिङ् । संपर्युपेभ्यः करोतौ भूषणे इति सुडागमः । अडभ्यासव्यवायेऽपीति नियमात्परिनिविभ्य इत्यादिना षत्वे सिवादीनां वाड्व्यवायेऽपीति विकल्पः । उपमा ॥ २२ ॥ ************************ ॥

॥ सादरमिति ॥ सादरं साभिनिवेशं युध्यमानापि संप्रहरन्त्यपि । अरं दुर्नं शठादि निपातनं । रसात् रणे रागात् हीयमाना अपकृष्यमाणा प्रद्युम्नमहितेनेति भावः । अनस्वार विरोधाभासोऽलङ्कारः । जहातेः कर्त्तरि लटः शानजादेशः । सा पृतना चैद्यसेना तेन प्रद्युम्नेन । अ

सादरं युध्यमानापि तेनान्येन रसादरम् । सादरम्पृतनानिन्ये हीयमाना रसादरम् ॥ २३ ॥ इत्थमालिङ्गितामालोक्य जयलक्ष्म्या भमध्वजम् । क्रुद्धयेव क्रुधा सद्यः प्रपेदे चेदिभूपतिः ॥ २४ ॥

न्येषां नटस्यातामपि नराणां । सा दरं निर्भयं यथा तथा निन्ये आनीतान्यनराद् रणं । आङ्गेतु परगे च इति कप्रत्ययः । दरोऽस्त्रियां भये श्वभ्रे इत्यमरः । निन्ये नीता । नयतेः प्रधाने कर्मणि लिट् । प्रधानकर्मण्याख्येये लादीन्याहुर्द्विकर्मणामिति वचनात् । विरोधाभासयोः संसृष्टिः ॥ २३ ॥ ************************ ॥

॥ इत्थमिति ॥ इत्थं । जयलक्ष्म्या आलिङ्गितं भमध्वजं मत्स्यकेतुं प्रद्युम्नम् । पृथुरोमा भषो मत्स्य इत्यमरः । आलोक्य सद्यः क्रुद्धया सपत्न्यागमात्कोपितयेवेत्युत्प्रेक्षा । क्रुधा प्रद्युम्नाश्रितया लक्ष्म्या कर्त्र्या चेदिभूपतिः प्रपेदे प्राप्तः तं विहायेति शेषः । कामिन्यः प्रायेण तादृशिक्यः सपत्नीगंधमसहमानाः सद्यः पुरुषान्तरमाश्रयन्ते इति भावः । विजयितं प्रद्युम्नं

ष्टोसिद्धचैद्यसुकोपेत्यर्थः ॥ २४ ॥ ************************ ॥

॥ अहितानिति ॥ मानीअभिमानवान्सकुद्धचैद्यः । वल्गन्तः प्लवन्तः प्लवमानाः कलभस्य मा कलभप्रमाणाः । अतएवानीचाउच्चासुरङ्गायस्यांनियावल्गात्कलभसमानी चतुरंगया ॥ चत्वार्यङ्गानि हस्त्यादीनियस्यास्तयाचतुरङ्गयावाहिन्याकरणेन ॥ अहितानभिशत्रून्प्रतिचचाल । कलभसमित्युपमायमकोनसंसृष्टिः ॥ २५ ॥ *********** ॥

॥ अथचतुर्भिःकुलकेनसैन्यंवर्णयति ॥ ततस्तनइत्यादि । ततश्चैद्यचलनानन्तरं । तता नामातिष्टनांधनुर्मौर्वीणां विस्फारैःस्फाराःप्रभूताःनिस्वनाःयेषां तैस्तूर्य्यैः । युगक्षयेकल्पान्ते । क्षुभ्यतमुद्वेलितमकूपारंसमुद्रमनुकरोतीतितदनुकारिणीसा तेनेत्युत्तरेणान्वयः स्वपमा ॥ २६ ॥ ************************** ॥

अहितानभिवाहिन्यासमानीचतुरङ्गया । चचालवल्गात्कलभसमानीचतुरङ्गया ॥ २५ ॥ ततस्ततधनुर्मौर्वीविस्फारस्फारनिस्वनैः । तूर्य्यैर्युगक्षयेक्षुभ्यदकूपारानुकारिणी ॥ २६ ॥ ****

॥ सकारेति ॥ पुनःकीदृशी । कारैवधैनिक्षयेचवलेयत्नेरनाथयोनिविभ्रमः । सकाराः सयत्नाःसोत्साहाः । नानानानाविधाश्चये । आराअरीणांसमूहाः । भिक्षादिभ्योऽण् । तेषांकारागतिभेदाः । कायाविग्रहास्तयेषां । सादंददतीतिसाददाःनासकारकसायका यस्यांसानयोक्ता । रसेनरागेणाहवेयस्याःसारसाहचारणरागिणीत्यर्थः । वाहसारणां चलश्चेष्ठानां वैनादाह्रेषाघोषास्तेषांवादंकलहंददातीतिवाददानि । तैःसहकलहाय मानानिवादनानिवाद्यानियस्यांसावाहसारनादवाददवादना । तूर्य्यवादघोषेत्यर्थः । अतएवतेषांतुल्यतोतोरनिश्चयोतिःसर्वतोभ्रमणात्सर्वतोभद्राख्यश्चित्रबन्धः । अतएवद्दृढी । तदिदंसर्वतोभद्रंभ्रमणंयदिसर्वतइति । उद्धारस्तु । चतुःकोष्ठेचतुरङ्गबन्धो

नं दधानः अलंसंपदं दधौ । सर्वांपि निःशंकमाक्रमतइत्यर्थः । अत्रखड्गेक्षयाविशेषणग त्यानिःशंकप्रभृतिहेतुत्वात्काव्यलिंगंतद्यमकेनसंसृज्यते ॥ ३१ ॥ ******* ॥

॥ क्षतेति ॥ सेनायांसमवेताःसैनिकाःसैन्याः । सेनायाःपाक्षिकष्ठक् । बाहुभिःपरिघै रिवबाहुपरिघैः बाहुदण्डैः । विपक्षंशत्रुंजंघाभिःप्रसृताभिः । जंघातुप्रसृतेत्यमरः । इतरेतरमन्योन्यंसयूथ्यांश्च । क्षतउरुर्महान्वेगःस्ववेगोयस्मिन्कर्मणितत्तथा । युगप ज्जिगीषन्तःविजेतुमैच्छन् । अहमहमिकयायुद्धमधावन्नित्यर्थः । विपूर्वाज्जयतेःसन न्तात्लुङिपूर्ववत्सनइत्यात्मनेपदं । अत्रविपक्षसयूथयोर्बाहुजंघस्यप्रकृताकेवलप्रकृ तास्पदातुल्ययोगिता ॥ ३२ ॥ *********************** ॥

द्विषमिच्छन्नयुधागन्तुंक्षेमलामलसम्पदम् । दधौदधानोसिलता क्षेमलाममलसम्पदम् ॥ ३१ ॥ क्षतोरुवेगंयुगपज्जिगिषन्त सैनिकाः । विपक्षंबाहुपरिघैर्जङ्घाभिरितरेतरम् ॥ ३२ ॥ वा हनाजनिमानासेसाराजावनमाततः । मत्तसारगराजेभेभारीहाव ज्जनध्वनिः ॥ ३३ ॥ ************

॥ वाहनेति ॥ ततोनन्तरं । मानमभिमानंअस्यतिक्षिपतीतितस्मिन्मानासेपराहंकार हारिणि । कर्मण्यण् । मत्ताःसारगाःबलभाजश्चराजेभानृपगजायस्मिन्मत्तसारगराजेभे । साराजौश्रेष्ठयुद्धे । आजेःपुंलिंगताज्ञेया । भारीभारवान्पूर्णः । ईहावतामुत्साहवतां जनानांध्वनिर्यस्मिनतत्भारीहावज्जनध्वनिर्यथातथा । ततमतीत्यतमाअभंगुराः । प जनानेतनतन्तत्रासः । वाहनानिर्वाहयितृत्वं । ण्यासग्रंथोयुच । अजनिजातासैनि कानामित्यर्थःसिद्धं । जनेःकर्त्तरिलुङिदीपजनेत्यादिनाचिण् ॥ ३३ ॥ *** ॥

॥ एतत्प्रातिलोम्येनश्लोकांतरमाह ॥ निध्वनदिति । निध्वनंतोवृंहन्तोजवाजवनाः

हारिणोमनोहरास्तेभायस्यांसानिध्वनज्जवहारीभाः। ततोविस्तृतैमानवजैमनुष्यजनैः आरसःकलकलोयस्यांसाततमानवजारसा। मानिनांमानवनांजनानामाह्वोयस्यांसामानिजनाह्वा। सेना। रज्यतेऽनेनेतिरागः क्रोधः सएवरसस्तस्मात्रागरसात्तमोमोहंभेजे। क्रोधांधाजनाइत्यर्थः। अत्रप्रातिलोम्येनपूर्वश्लोकावृत्तेःश्लोकप्रतिलोमयमकं। तदुक्तंदण्डिना। आवृत्तिःप्रातिलोम्येनपादार्द्धश्लोकगोचरा। यमकंप्रतिलोमत्वात्प्रतिलोममितिस्मृतमिति ॥ ३४ ॥ ************************* ॥

॥ अभग्नेति ॥ अभग्नाअभंगुराचवृत्तावर्तुलाग्राचयासाअभग्नवृत्ताः। विशेषणसमासः। अप्यनावलितचरित्रा। बहुव्रीहिः। मुष्टिग्राह्यामुष्टिधार्य्योमध्याधनुर्लतायासांताः। अन्यत्रमुष्टिमध्याधनुर्लताः। यौवनेनोद्धतैर्धृष्टैदृप्तैश्च। प्रसभाद्बलादाकृष्टाःसंत्यः

निध्वनज्जवहारीभाभेजेरागरसात्तमः। ततमानवजारसासेनामानिजनाह्वा ॥ ३४ ॥ अभग्नवृत्ताःप्रसभादाकृष्टायौवनोद्धतैः। चक्रदुरुच्चकैर्मुष्टिग्राह्यमध्याधनुर्लताः ॥ ३५ ॥ करेणुःप्रस्थितोनेकोरेणुर्घण्टाःसहस्रशः। करेणुःशीकरोजह्रेरेणुस्तेनशमय्यँयौ ॥ ३६ ॥ ********************

। एकत्रगुणोऽन्यत्रकबेषुचेतिभावः। उच्चैस्तरांचक्रंदुर्धनुःषुकुभुसु। अत्रप्रस्तुतधनुर्लताविशेषणाद्प्रस्तुतधूर्त्ताक्रंदितपतिव्रताप्रतीतेः समासोक्तिःआकर्षणस्यविशेषणगत्याक्तंरनहेतुत्वात्काव्यलिङ्गत्वांगाङ्गीभावेनसङ्कीर्य्यते ॥ ३५ ॥ ******* ॥

॥ करेणुरिति ॥ अनेकोबहुःकरेणवःप्रस्थितः। जातावेकवचनं। असंख्याताःकरिणोयोद्धुंययुरित्यर्थः। करेणुरिभ्यांस्त्रीनेभेइत्यमरः। सहस्रशोघण्टाःकरिकण्ठस्थारेणुर्ह्लवनुः। अतएकत्वमध्येऽनादेशादेर्लिंदीत्वेत्वाभ्यासलोपौ। करेपुष्करेअणुरल्पः।

शीकरैर्वा करैर्जज्ञे । जातावेकवचनं । करेषु गणवः शीकरा जाता इत्यर्थः । जनेः कर्त्तरि लि
ट् । तेनाणुना शीकरेण रेणुः रजः शमं ययौ । एतेन करिणां बाहुल्यं व्यज्यते ॥ ३६ ॥ *
॥ धृतेति ॥ धृतः प्रत्यग्रः शृङ्गाररस एव रागो यैस्तैरपीति विरोधः । रौद्रशृङ्गारयोर्विरोधत्वा
त् धृतरसंरञ्जनैरित्यविरोधः । अतएव विरोधाभासोऽलङ्कारः । शृङ्गारः सुरते नाट्येन
थैव गजमज्जने । शृङ्गारं चूर्णसिन्दूरे लवङ्गकुसुमेपि चेति विश्वः । सरोषसंभ्रमैः द्विपैः
रणे । रौद्ररस एव क्रोधरस एव बभ्रे भृतः । कर्मणि लिट् ॥ ३७ ॥ ******* ॥
॥ तेति ॥ भर्त्तृतः स्वामिनः । प्राप्तो मानसम्प्रतिपत्तिः पूजासौमनस्यं यैस्तेषु प्राप्तमान
सम्प्रतिपत्तिषु । रणैकसर्गेषु नियतोत्साहेषु नियतनिश्चयेषु वा । सर्गस्तु सज्जनाध्याय

धृतप्रत्यग्रशृङ्गाररसरागैरपि द्विपैः । सरोषसम्भ्रमैर्बभ्रे रौद्र एव रणे र
सः ॥ ३७ ॥ ततस्थौ भर्त्तृतः प्राप्तमानसम्प्रतिपत्तिषु । रणैकसर्गे
ष्वभयम्मानसम्प्रतिपत्तिषु ॥ ३८ ॥ बाणाहिपूर्णतूणीरकोटरैर्धृ
त्विशाखिभिः । गोधाश्लिष्टभुजाशाखैः रभूद्भीमा रणाटवी ॥ ३९ ॥

स्वभावोत्साहनिश्चया इति वैजयन्ती । पत्तिषु पदातिषु । मानसंप्रतिपत्तीनां मानसैरित्य
र्थः । कर्म्मप्रवचनीययुक्ते द्वितीया । भयं ततस्थौ । पूर्वोपकारस्मारिणो रणाय निर्भीकाः
प्रतिष्ठन्ते इत्यर्थः । अन्यथा यस्तु भीतो निपरावृत्तः संग्रामं हन्यते परैः । भर्तुर्यद्दुष्कृतं किञ्चि
त्तत्सर्वं प्रतिपद्यते । यदस्य सुकृतं किञ्चिदमुत्रार्थमुपार्जितम् । भर्त्ता तत्सर्वमादत्ते परावृ
त्तहतस्य त्विति निषेधस्मरणादिति भावः । अत्र मानसप्रतिपत्त्योर्विशेषणगत्या भयानवस्था
नहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गं । यमकेन संसृज्यते ॥ ३८ ॥ ******** ॥
॥ बाणेति ॥ रणमेवाटवी रणाटवी । बाणैरेवाहिभिः पूर्णास्तूणीराः निषंगा एव कोटराः
कुहराणि येषान्तैः । गोधास्तलानि निहाकाश्च । गोधा तले निहाकायामिति विश्वः । नवं

व्याघातवारणम्। मतंगोघास्वगोघइतिश्लिष्टरूपकं। ताभिरश्लिष्टाभुजास्वशाखा येषां तैर्धन्विभिर्धानुष्कैरेवशाखिभिर्वृक्षैर्भीमाभयंकराअभूत्। समस्तवस्तुवर्तिनिसावयव रूपकम् ॥ ३९ ॥ **************************** ॥

॥ नानेति ॥ इहाख्यां। नानाविधायां। आजौचित्रयुद्धे। ओजसातेजसा। अवजा नानावज्ञांकुर्वती। अकर्मकाच्चेत्यात्मनेपदम्। जनौघैर्घनानासाद्भ्राःजनौघघनावज्ञ जनाइत्यर्थः। अहानिरभया। वियाततयावैयात्येनधार्ष्ट्येनान्विताधृष्टेत्यर्थः। धृष्टेधृष्णुर्वियातश्चेत्यमरः। साचैद्यसेनानानाभरान्भरीन्आपप्राप। अत्रप्रतिपादंपादा र्द्धस्यैवावृत्तेरर्द्धपादप्रतिलोमयमकम् ॥ ४० ॥ ****************** ॥

नानाजाववजानानासाजनौघघनौजसा। परानिहाहानिरापता न्वियाततयान्विता ॥ ४० ॥ प्रतिलोमानुलोमपादः। विषमंसर्व तोभद्रचक्रगोमूत्रिकादिभिः। श्लोकैरिवमहाकाव्यंव्यूहैस्तदभव द्बलम् ॥ ४१ ॥ संहत्यासात्वताश्चैद्यंप्रतिभास्वरसेनया। व बलेयोद्धुमुत्पन्नप्रतिभास्वरसेनया ॥ ४२ ॥ *****

॥ विषममिति ॥ तद्बलंचैद्यसेना। सर्वतोभद्रचक्रगोमूत्रिकादिभिः। आदिग्रहणान्मु रजबन्धनादिसंग्रहः। श्लोकैर्महाकाव्यंशिशुपालवधादिकमिवव्यूहैःसर्वतोभद्रादिभिर्बे बबलविन्यासैः। व्यूहस्तुबलविन्यासइत्यमरः। विषमंदुरवग्रहमभवत्। नगगणवादि वर्णनयुक्तं। लक्षणंमहाकाव्यम् ॥ ४१ ॥ ******************* ॥

॥ संहत्येति ॥ भास्वरातेजिष्ठासेनायस्यास्तयाभास्वरसेनया। सात्वतांवहूनांसंहत्यासं घेन। चैद्यंप्रतिबदलेप्रबेले। बलचलनेइतिधातोर्भावेलइनशशददवादिगुणानाभि तिचकारसेत्वाभ्यासलोपयोःप्रतिषेधः। यावदूनांसंहत्या। स्वरसेनस्वभावेनयोद्धुमु

ःप्रतिभासंज्ञानमितियाखयंरणकंडुलासापराङ्गनाकथंनिवर्त्ततइतिभावः ॥ ४२ ॥ *
॥ अथयद्सेनायाःप्रतिवेलाभियोगंयुग्मेनाह ॥ विस्तीर्णमित्यादि । आयामवतीद्राघी
यसी । लोललोकनिरन्तराचलज्जनसंकुलासासेनेत्युत्तरश्लोकेनान्वयः । सायद्सेनावि
स्तीर्णद्विषतांबलं । नरेन्द्रमार्गेराजपथं । रथ्याशिखेवपपातसंजगाम । उपमानेपिवि
शेषणंयोज्यम् ॥ ४३ ॥ ************************ ॥
॥ वारणेति ॥ कीदृशीसेना । वारणैरेवागैरचलैर्गभीरादूरवगाहावारणागगभीरा ।
सासाराश्रेष्ठा । नभियंगच्छन्तीत्यभीगानांनिर्भीकाणांगणानांजन्तुसंघानामारवोयस्यां
सासारभीगगणारवा । कारितारिवधा । कृतशत्रुवधा । रामोराज्यमकारयदितिवत्

विस्तीर्णमायामवतीलोललोकनिरन्तरा । नरेन्द्रमार्गेरथ्येवपपातद्वि
षताम्बलम् ॥ ४३ ॥ वारणागगभीरासासारभीगगणारवा । का
रितारिवधासेनानासेधावरितारिका ॥ ४४ ॥ युग्मम् । अधिना
गम्प्रजविनोविकशत्पिच्छिलारवः । पेतुर्बर्हिणदेशीयाःशङ्कवःप्रा
णहारिणः ॥ ४५ ॥ ************

स्वार्थेणिच् । नास्त्यासेधःप्रतिषेधोयस्यांसानासेधाअनासेधावावदुरित्यर्थः । नञर्थस्य
नशब्दस्यबहुव्रीहिः । वरितारिकाईप्सितशत्रुका । अनेनाहंयोत्स्येइतिस्वयंवृत्तप्रतिभ
रेत्यर्थः । शैषिकःकप्रत्ययः । सासेनापपातेतिपूर्वेणान्वयः । अत्रप्रातिलोम्येनअर्द्धावृत्तिः
अर्द्धप्रतिलोमयमकमेनतल्लक्षणमुक्तं । निध्वनदित्यादिश्लोकप्रतिलोमयमके ॥ ४४ ॥
॥ अधीति ॥ प्रजवन्तीतिप्रजविनोऽतिजवनाः । प्रजोरिनिरितिइनिप्रत्ययः । विक
सद्भिःपिच्छैःकलापैरारवः । अतएवईषत्समाप्तवर्हिणोवर्हिणदेशीयामयूरकल्पाः
ईषदसमाप्ताविन्यादिनादेशीयरप्रत्ययः । प्राणहारिणःशंकवः । शल्यायुधानि । वा

सुसिराध्यंशंकुर्नोइत्यमरः। नागेष्वितिनागम् । विभक्त्यर्थेऽव्ययीभावः। गजेषुसर्पेषु चनिपेतुःसर्पेषुबर्हिणइत्यर्थः । अतएवोपमालङ्कारः। यद्वोग्राहिगजानागाइतिवैजयन्ती ॥ ४५ ॥ ******************************** ॥

॥ प्रवृत्तेति ॥ विकसत्जृम्भमाणोध्वानोध्वनिर्यस्मिनन्तया। साधनेसंप्रहारेप्रवृत्तेप्य विषादिभिर्विषादरहितैर्विषाणिभिर्दन्तिभिर्युद्धंआपप्राप्य। विकसत्प्रभूतंदानमदोव वृषे। युद्धारम्भेवनदानञ्चध्वन्यते। सत्वसंपन्नत्वात्साधनेपिअविषादस्याविरोधाद्विरोधाभासः। गोमूत्रिकाचित्रवंधोयम्। वर्णानामेकरूपत्वंयद्येकान्तरमर्द्धयोः। गोमूत्रिके

प वृ त्ते वि क स द्ध्वा नं सा ध ने प्य वि षा दि भिः।
व वृ षे वि क स द्दा न युद्ध मा प्य वि षा णि भिः ॥४६॥
गोमूत्रिकाबन्धः। पुरःप्रयुक्तैर्युद्धन्तच्चलितैर्लब्धशुद्धिभिः। अला पैरिवगान्धर्वमदीप्यतपदातिभिः ॥ ४७ ॥ केनचित्स्वासिना न्येषाम्मण्डलाग्रानवद्यता । प्रापेकीर्त्तिर्द्युतमहीमण्डलाग्रानवद्य ता ॥ ४८ ॥ ************

नितत्याकुर्द्दुष्करन्तद्विदोविदुरितिलक्षणात्। षोडशकोष्ठद्वयेपंक्तिद्वयेऽर्द्धद्वयंक्रमेण विलिख्यैकान्तरंविनिमयेनवाचनेश्लोकनिष्पत्तिरित्युद्धारः ॥ ४६ ॥ ***** ॥

॥ पुरइति ॥ तद्युद्धंपुरःप्रयुक्तैःगजादिभिःप्राक्प्रवर्त्तितैः। अन्यत्रगानात्पूर्वमुच्चारितैः। चलितैःमण्डलचारिभिः। अन्यत्रमुञ्छावर्त्तितैरित्यर्थः। लब्धशुद्धिभिःकातर्यकपटादिदोषरहितैरित्यर्थः। अन्यत्राविक्तैरागानुगुणैरित्यर्थः। पदातिभिःगान्धर्वंगानमा लापैरालापिभिरिवाक्षरविशेषैरिवादीप्यताशोभत ॥४७॥ ********** ॥

॥ केनचिदिति ॥ स्वासिनास्वखड्गेन। अन्येषांमण्डलाग्रान्अवद्यताखण्डयता।

स्थानेष्वटःशत्रादेशः । केनचिद्वीरेणकीर्त्तिस्फुतंयशोव्याप्तंमहीमण्डलाग्रंभूपृष्ठंययासा ।
कीर्त्तिस्फुतमहीमण्डलाग्रा अनवद्यता अनिंद्यता प्रापे प्राप्ता ॥ ४८ ॥ ******* ॥
॥ विहन्तुमिति ॥ केनचिद्वीरेणविद्विषोविहन्तुंतीक्ष्णोनिशितःपरिच्छेत्ताचखड्ग
श्च । सुसंहतेःसुघटितात्सुष्ठुसंबंधीभूताच्च । परिवारात्कोशात्परिजनाच्च । परिवारःप
रिजनेखड्गकोशेपरिच्छदे इतिविश्वः । सममेवपृथक्चक्रेउद्धृतः । आत्माचपृथक्
चक्रेविभक्तः । खड्गमुत्कृष्यस्वसैन्यान्निर्गत्यारिमध्येपपातेत्यर्थः । अत्रखड्गात्मनोःप्रकृ
तयोःमानक्रियायोगात्केवलप्रकृतास्पदतुल्ययोगिता ॥ ४९ ॥ ******* ॥
॥ अन्येनेति ॥ अन्येनवीरेण । विलासिनाविलसनशीलेन । उद्धूर्णेनउद्धतेनअ

विहन्तुम्विद्विषस्तीक्ष्णःसममेवसुसंहतेः । परिवारात्पृथक्चक्रेख
ड्गस्तात्माचकेनचित् ॥ ४९ ॥ अन्येनविद्धेरीणामतिमात्राविलासिना । उद्धूर्णेनचमूस्तस्मिन्मतिमात्राविलासिना ॥ ५० ॥
सहस्रपूरणःकश्चिल्लूनमूर्द्धासिनाद्विषः । तस्थोर्द्ध्वएवकाबन्धीम
भजन्नर्तनक्रियाम् ॥ ५१ ॥ ************

सिनाखड्गेन । मात्रामतिक्रान्तातिमात्राअपरिमाता । अरीणांचमूःसेनाः । नृसंशीर्षं
। अतिमात्रमत्यन्तमाविलाकलुषाअतिमात्राविलाअत्याविलाविद्धेत्यन्ता ॥ ५० ॥
॥ सहस्रेति ॥ पृणातीतिपूरणः । पृपालनपूरणयोःकर्त्तरिल्युट् । सहस्राणांपूर
णःपालयितापूरयितावासहस्रपूरणः । सहस्ररक्षी । सहस्रहेतोर्वाकश्चिद्भटःकबन्धस्तु
सहस्रपूरणःसहस्रसंख्यापूरकःसहस्रशःशहस्रादेकःकवन्धोनृत्यतीतिप्रसिद्धिः । अ
सिनाखासिना । द्विषोलूनमूर्द्धालूनशत्रुमूर्द्धाआसन्नित्यर्थः । सापेक्षत्वेपिगमकत्वात्स
मासः । कवन्धस्तुद्विषोअसिनालूनमूर्द्धातत्रतथाकवंधवदेवोर्द्ध्वएवतिष्ठते । कवन्धस्य

ङ्कौ कावन्धीं नृत्तं नृत्तक्रियाम भजन्। विजयहर्षात्स्वयमपि कबन्धवन्नृत्तं नृत्यन्नित्यर्थः । अत एव शरीरदृश्याक्षेपात् संभवद्वस्तुसंबन्धाख्यो निदर्शनाभेदः । कबन्धो स्त्री क्रियायुक्तमपमूर्धकलेवरमित्यमरः ॥ ५१ ॥ ****************************॥

॥ शस्त्रेति ॥ शस्त्रव्रणमया स्तद्रूपाणि । स्वार्थे मयट् । तैरेव श्रीमद्भिः शोभावद्भिरलङ्कारैरलङ्कारैर्भूषितोऽलंकृतः शस्त्रव्रणालंकृत इत्यर्थः । अन्यः कश्चित्त अविद्यमानालंकारस्यः श्य अलंके निवह्रुव्रीहिः । अत एव स्त्रियाः पुंवदित्यादिना पुंवद्भावः । सारणभूषितस्यामुषितः स्थितो ऽलंकरणभूषितः । वसेर्निवासार्थात्कर्तरि क्तः वचिस्वपीत्यादिना संप्रसारणं । रावणवत् ददृशे दृष्टः । सर्वाङ्गीणव्रणभूषणत्वेन रावण एवायं लंकास्वमन्ध।

शस्त्रव्रणमयश्रीमदलङ्करणभूषितः । ददृशेऽन्योरावणावदलङ्करणभूषितः ॥ ५२ ॥ द्विषद्विशसनच्छेदनिरस्तोरुयुगोऽपरः । सिक्त स्वाखैरुभयथाबभूवारुणविग्रहः ॥ ५३ ॥ ******

विरहानुव्यतिरेकइत्यर्थः । उपमाव्यतिरेकयमकानां संकरः ॥ ५२ ॥ ****॥

॥ द्विषदिति ॥ निर्वापणं विशसनं मारणं प्रविघातनमित्यमरः । द्विषद्विशसनच्छेदेनारिशस्त्रप्रहारेण निरस्तमूरुयुगं यस्य सः । अत एवाखैरसृग्भिः सिक्तोऽपरो वीरः उभयथा उभयाभ्यां प्रकाराभ्यां । प्रकारे गुणवचनस्येति थाल । अरुणस्यानुरेरिव तया अरुणोऽरुणवर्णस्य विग्रहो यस्य सोऽरुणविग्रहो बभूव । अरुणोऽर्कसारथ्योररुणो लोहितेन्यवदिति विश्वः । अत्रोरुच्छेदाखसिक्तयो विशेषणगत्योभयथारुणविग्रहाभावहेतुत्वात्काव्यलिङ्गमुपमाश्लेषाभ्यां सङ्कीर्यते ॥ ५३ ॥ **************॥

॥ भीमेति ॥ अंभोधिसमो सागरसदृशो महान् आहवस्तस्मिन् अंभोधिसमे महाहवे । स्वरयोऽधिनमहाः संवर्द्धिततेजाः । अपरो वीरः दक्षप्रजापतेरयं दाक्षस्तस्मिन् दाक्षे हवे जज्ञे।

इवौजसेनयाह्वानइतिविश्वः । समेधितमहाःसन्दीपिततेजाःशिवस्यकोपइववीरभद्र इवेत्यर्थः । भीमतांभयंकरतांअधितधृतवान् । बिभ्यत्यस्मादितिभीमः । भियःषुग्वेत्यौणादिकेमप्रत्ययेभीमोभीष्मश्च ॥ भीमादयोऽनपादानइतिनिपातनादपादानार्थता । उपमायमकयोःसंसृष्टिः ॥ ५४ ॥ ******************** ॥

॥ दन्तैरिति ॥ परेषांनिस्त्रिंशैःखड्गैर्निर्लूनकरवालाःछिन्नखड्गाः । पादाभ्यामततीति पदातयःपत्तयः । अज्यतिभ्यांपादेचेत्यौणादिकइण्पादस्यपदाज्यातिगोपहतेषुइतिपदादेशः । कोपात्गजाइव । प्रतिपक्षंशत्रुं । दन्तैर्दशनैर्बिबाधेरचिच्छिदिरेच

भीमतामपरेभ्योधितसमेधितमहाह्वे । दाक्षेकोपःशिवस्येवसमेधि तमहाह्वे ॥ ५४ ॥ दन्तैश्चिच्छिदिरेकोपात्प्रतिपक्षंगजाइव । परनिस्त्रिंशनिर्लूनकरवालाःपदातयः ॥ ५५ ॥ रणेरभसनिर्भिन्न द्विपपाटविकासिनि । नतत्रगतभीःकश्चिद्विपपाटविकासिनि ॥ ५६ ॥ यावन्नसत्कृतैर्भर्तुःस्नेहस्यानृण्यमिक्ष्वुभिः । अमर्षा दितरैस्तावन्नत्यजेयुधिजीवितम् ॥ ५७ ॥ *******

चिच्छिदुः । ततयावृत्ताइतिभावः ॥ ५५ ॥ **************** ॥

॥ रणइति ॥ रभसोवेगहर्षयोरितिविश्वः । रभसेनवेगेननिर्भिन्नद्विपाःपाटितगजाः पाटविकानांपाटवतांअसवोयस्मिन् । पाटवशब्दान्मत्वर्थीयठन्प्रत्ययः । विकासिनि प्रवृद्धेतस्मिन्रणेगतभीर्निर्भीकः । अतएवकश्चित्कोपि । नविपपाटनपाटयामासनप्र लायत । अतःगतभीकत्वस्यविशेषणगत्याअपलायनहेतुत्वात्काव्यलिंगं । द्विपदलनेपि रणेनिर्भीकइतिविरोधस्ययमकेनसंसृज्यते ॥ ५६ ॥ ************ ॥

॥ यावदिति ॥ सत्कृतैःस्वस्वामिनापूर्वसम्मानितैःअतएवभर्तुःस्नेहस्यस्वामिप्रेम्णःआनृ

यमनृशंसत्वमिच्छुभिर्वैरिभिर्विशेषः। युधिजीवितंयावन्नत्यजेत्यर्थः। नाथैरितरैरसत्कृतैर मर्षादसत्कारक्रोधाज्जीवितंनत्यजे ॥ अथवास्मान्पश्यतितिस्वामिनमुपालभ्यस्वयमेवप्रा क्प्राणान्प्राजह्रुरित्यर्थःसत्कारादिविशेषणोत्यकाव्यलिंगंसुगमम् ॥ ५७ ॥ ** ॥

॥ अथैवंविधानांमरणस्यैवकर्त्तव्यतामुपपादयति ॥ अयशइति । अयःशुभावहोवि धिरिति । अयःशोभीभाग्यवान्सचासौदुर्गलोकसौजःस्थित्वादुर्दृशस्येति । विशेष णसमासः। तस्मिन्अयशोभिदुर्गलोके। कोपधामकोपाश्रयःकुपितइत्यर्थःअथाच्यकौ ये भीरुत्वापानात्। अतएवरणमादृतःरणादृतःरणार्थीत्यर्थः। कर्त्तरिक्तः। कोपधा मचासौरणादृतस्तस्मिन्कोपधामरणादृतेलोकेएवंविधेवीरलोके। अयशोभिदुर्गला

अयशोभिदुर्गलोकेकोपधामरणादृते। अयशोभिदुर्गलोकेकोपधा मरणादृते ॥ ५८ ॥ समुद्गबन्धः । स्खलन्तीनक्वचिन्नैस्त्राद्या दभ्यग्रफलशालिनी। अमोचिशक्तिःशाक्तीकैर्लोहजानशरीरजा ॥ ५९ ॥ ********************

म्यनादरनिमित्तापकीर्त्तिनिवृत्ता। विदिभिदिछिदेःकुरच्। उपधाउपायेमरणादृते प्राणत्यागंविनेत्यर्थः। कातकापीत्यर्थः । अन्यारादितरर्त्तेतिपञ्चमी। अत्रायशोभित्वा दिनालोकविशेषणद्वारानर्द्दतिनामुपजीविनामवसरेजीवत्यागहेतुत्वात् काव्यलिंगंयम काप्रवेशेनसंकीर्य्यते। समुद्गयमकभेदोयं। अर्द्धाभ्यासःसमुद्गःस्यादस्यभेदास्त्रयोमता इतिलक्षणात्। अत्राद्ययमकेभेदःसमेभेदान्तवक्ष्यति ॥ ५८ ॥ ******** ॥

॥ स्खलन्तीति ॥ शक्तिःप्रहरणंयेषांतैःशाक्तीकैः। शाक्तीकःशक्तिहेतुकइत्यमरः। शक्ति यष्ठ्योरीकगितिप्रहरणार्थेईकक्प्रत्ययः। तैक्ष्ण्यात्नैपुण्यात्क्वचिदपितस्खलन्तीप्रतिह तिंनप्राप्नुवन्ती। अभ्यग्रेसमग्रेयत्फलंशल्यंतेनशालते। अन्यत्रअभ्यग्रेणासंगेनफलेन

श्रेयताशालनइति अभ्ययफलशालिनी। लोहजाअयोमयीशक्तिरायुधविशेषः। अमो

चिशत्रुषुमुक्ताः। शरीरजाशक्तिःसामर्थ्याख्यातुनामोचि। अनिवायामेयक्षीणशक्तिरा

एवायुध्यनेत्यर्थः। अत्रद्वयोरपिप्रकृतत्वात्केवलमप्रकृतश्लेषः ॥ ५९ ॥ ** ॥

॥ आपदीति ॥ नृपाःराजानःआपदिव्यसनेपि। व्यापृतनयाःप्रवृत्तनीतिकाएवंसन्तः।

नतुव्यापद्वृत्ते,तिभावः। पृतनयासेनयासाधनेन। वाक्यान्तरस्थस्यापिपृतनाशब्दस्या

र्थावृत्तेरोढव्यः। तथानेनप्रकारेणयुधिष्ठिरेसंप्रजग्मुः। ययःदिवाजनताअन्तरिक्ष

कौसिद्धविद्याधरसंघोविस्मयमाप। अमानुषंयुद्धंचक्रुरित्यर्थः। अयञ्चपादाभ्यासय

मकभेदः ॥ ६० ॥ ******************************* ॥

॥ स्वगुणैरिति ॥ त्रिषुस्थानेषुमध्येषुनताःत्रिणताःशार्ङ्गाणि। पूर्वपदात्संज्ञायामिति

आपदिव्यापृतनयास्तथायुयुधिरेनृपाः। आपदिव्यापृतनयावि

स्मयञ्जनतायथा ॥ ६० ॥ स्वगुणैरफलप्राप्तेरवाप्यगणिकाइव।

कामुकानिवनालीकांस्त्रिणताःसहसामुचन् ॥ ६१ ॥ **

णत्वम्। गणिकावेश्याइवताअपित्रिणतामध्येभुग्नत्वात्। नालीकान्त्रिषुविशेषा

न्। नालीकःशरसल्ययोरितिविश्वः। कामुकानिव। स्वगुणैर्ज्याभीरूपलावण्यादि

भिश्च। गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतंतुषितिवैजयन्ती। आफलप्राप्तेरशल्यस

र्शाद्धनलाभाच्च। आकृष्यकर्णान्तिकंमौर्व्यावशीकृत्यचसहसाअमुचन्। अत्याक्षुः।

मुचेर्लुङिपुषादित्वात्च्लेरङादेशः। अनेकेचोपमा ॥ ६१ ॥ ********** ॥

॥ वाजिनइति ॥ द्रुतंबजन्तीतिद्रुतवाजिनःशीघ्रगामिनः। बजगत्याविनिधातोर्णिनिः।

वाजिनोऽश्वाः। वाजिनःपक्षवन्तःशराश्च। पक्षोवाजस्त्रिषूत्तरइत्यमरः। समार

ब्धानवाअपूर्वाआजियुद्धंयेनतस्समारब्धनवाजिनः। शत्रुसैन्यस्यमध्यमविशन्। अत्र

4 N 2

वाजिनां शरणाश्चप्रवेशाख्यतुल्ययोगिनाभेदोयमकेनसंसृज्यते ॥ ६२ ॥ **** ॥

॥ पुरस्कृत्येति ॥ फलं शल्यं पुरस्कृत्य पुरोधाय । अन्यत्र फललाभं पुरस्कृत्य संभाव्येत्यर्थः । प्राप्तैरागतैः सत्पक्षाश्रयणेन साधु कंकादिपत्रग्रंथनेन । अन्यत्र साधु सहायावलम्बेन शालनेइ तितथोक्तैः । मार्गणैः सायकैरर्थिभिश्च । मार्गणः सायकार्थिना वित्यमरः । ङ्खपुंखनया सुवङ्कर्त्तरीकनया । पुंखस्य कर्त्तरीपुंख इत्यमरः । पादपौ अन्यत्र कुशलत्वेत्यर्थः । लक्ष्यं शरव्यमपि लेभे न तु सरूपशोभेवेति भावः । अन्यत्र लक्ष्यं संख्यामपि धनं लेभे शताधिकं किमुत वक्तव्यमिति भावः । लक्ष्यं शरव्ये संख्यायामिति विश्वः । अत्रापि द्वयोः प्रकृतार्थनियं च णार्थान्तरप्रतीतेर्ध्वनिरेव ॥ ६३ ॥ *************** ॥

वाजिनः शत्रुसैन्यस्य समरंश्चनवाजिनः । वाजिनश्च शरमध्यमवि शन्द्रुतवाजिनः ॥ ६२ ॥ पुरस्कृत्य फलम्प्राप्तैः सत्पक्षाश्रयशालिभिः । ङ्खपुङ्खतया लेभे लक्ष्यमप्याशुमार्गणैः ॥ ६३ ॥ रक्तस्तुतिञ्जपास्तूनसमरागामिषुव्यधात् । कश्चित्पुरः सपत्नेषु समरागामिषुव्यधात् ॥ ६४ ॥ ************

॥ रक्तेति ॥ कश्चिद्वीरः पुरोग्रे । समरागामिषु समरमागतेषु सपत्नेषु । इषुव्यधात्‌ वाणप्रहारान् । ... नुपसर्गे इत्यप्रत्ययः । जपास्तूनसमरागां रक्तस्तुतिं शोभां व्यधात् विहितवान । ... लुङि गातिस्थेत्यादिना सिचो लुक् । उपमायमकयोः संसृष्टिः ॥ ६४ ॥ ************************** ॥

॥ रयेणेति ॥ रणमात्मन इच्छन्तौ रणकाम्यन्तौ । काम्यचेति रणशब्दात्काम्यच्प्रत्ययेस नाद्यन्तद्धातुत्वाल्लटि शत्रादेशः । रयेण दूरादुपगतौ । इभावन्तरा उभयोर्मध्ये । अन्तरा अन्तरेणयुक्ते इति द्वितीया । गतास्तुमूर्तेनोदन्तोदैवान्मध्यवर्ती हस्तिकुशपइत्यर्थः ।

वरखण्डकोन्तरवेदिरिवाभवत् । वरखण्डकोन्तरवेदिः संदोहसुखरागयोरिति विश्वः । अ भ्यासकालेकाञ्चनवेदिमन्तर्द्धयेदन्तिनीयोधयतः इति प्रसिद्धं उपमा ॥ ६५ ॥ * ॥

॥ भूरिभिरिति ॥ भूरिभिः भूयोभिः । भारिभिः पताकाभिः स्वरणादिभारवद्भिः । मत्वर्थीयइनिप्रत्ययः । भियंराती तिभीरैः भयदैः । रादाने । आतोनुपसर्गेकः । भूभारैः महाकायत्वाद्भुवोभारायमाणैः । भेरीचरेभन्तेध्वनन्तीतिभेरीरेभिभिः । रेभृशब्देताच्छील्येणिनिः । अभ्राभैर्मेघाभैर्मेघमेचकैरितिचोपमाद्वयम् । अभीरुभिर्निर्भीकैः । इभैर्गजैः । इभाःप्रतिगजाः तान्द्रष्टाइवअभिरेभिरेअभियुक्ताः । उपमानुप्रासयोःसंकरः ।

रयेणरणाकान्यन्तोदूरादुपगताविभौ । गतास्त्वन्तरदन्तीवरखण्डका इ वाभवत ॥ ६५ ॥ भूरिभिर्भारिभिर्भीरैर्भूभारैरभिरेभिरे । भेरी रेभिभिरभ्राभैरभीरुभिरिभैरिभाः ॥ ६६ ॥ द्व्यक्षरः । निशितासि लतालूनैस्तथाहस्तैर्नहस्तिनः । युध्यमानायथादन्तैर्भग्नैरपुर्विह स्तताम् ॥ ६७ ॥ * * * * * * * * * * * * * * * *

द्व्यक्षरानुप्रासः ॥ ६६ ॥ * * * * * * * * * * * * * * * * * * * * * * * * ॥

॥ निशितेति ॥ युध्यमानाः संप्रहरन्तः । हस्तायेषांसन्तीतिहस्तिनः । हस्ताज्जातावि नो निप्रत्ययः । यथाभग्नैर्दन्तैः विषाणैः । विहस्ततांहस्तहीनत्वमितिकर्तव्यतामूढत्वमापुः । विहस्तव्याकुलौसमावित्यमरः । तथानिशिताभिरसिलताभिर्लूनैश्छिन्नैर्हस्तैः शुण्डा दण्डैर्विहस्ततांनापुः । हस्तेऽन्योपिदण्डानामेवप्रहारसाधनत्वादितिभावः । अत्रह स्तच्छेदेवैहस्त्येनहस्तच्छेदइतिविरोधः प्रतिपत्तिमूढतयासमाहित इतिविरोधाभासोल ङ्कारः ॥ ६७ ॥ * ॥ * * * * * * * * * * * * * * * * * * * * * * * * * ॥

॥ निपीडनादिति ॥ इभानांवपुषां अदयापातान्निर्दयाभियोगाद्धेतोः । मिथोनिपीडना

दिवस्त्रादिनिपीडनादिवेत्युत्प्रेक्षा। अनारतमश्रान्तं। दाननीयमगलत्स्वस्रवत्निर्द्व यापानेपिमदातिरेकइतिगजानामुत्साहातिशयोक्तिः। अत्रसंयोगाभावादसंयोगश्चि त्रभेदः। इतीनतराःसंयोगः॥ ६८ ॥ ********************** ॥

॥ रणेति ॥ गजोमदवारिस्राव्राविततमुक्षितं। रणाङ्गणंशरइवपृथुनाकरेणाहृष्टानि शतपत्राणिअग्निवाहनानि अन्यत्रशतपत्राणिकुशंशयानिचयस्मिन्कर्म्मणितत्तथार णाङ्गणमलोडयत्मक्षोभयत्। स्रेष्यविशेषणेयमुपमा ॥ ७९ ॥ ******* ॥

॥ शरक्षतेइति ॥ तत्ररणेगजेशरैःक्षतेप्रहृते। अतएवविषादिनाविषादवता। विषा

निपीडनादिवमिथोदाननीयमनारतम्। वपुषामदयापातादिभाना मभितोगलत् ॥ ६८ ॥ असंयोगः। रणाङ्गणंशरइवस्त्राविततम्मद वारिभिः। गजःपृथुकराहृष्टशतपत्रमलोडयत् ॥ ६९ ॥ शर क्षतेगजेभृङ्गैस्सविषादिविषादिभिः। हतव्याजेनहृदितत्कचासीद तिसिद्दति ॥ ७० ॥ अन्तकस्यपृथौतत्रशयनीयइवाहवे। दश नव्यसनाद्दीर्घुमेत्कुणात्वम्मतङ्गजाः ॥ ७१ ॥ ******

दिनायत्राद्यइवर्त्तनेयस्मिन्सविषादि। तत्ररणेअतिसीदतिअतितरांसतिमृतेसतीत्य र्थः। सदेर्लटःशत्रादेशः। भृङ्गैःकर्तृभिः। नलोकेत्यादिनाषष्ठीप्रतिषेधः। हतव्या जेनतत्तत्कलेनहृदितंरोदनमासीत्। स्वाश्रयनाशदुःखाद्रोदनंकृतमिवेत्युत्प्रेक्षा। व्यञ्जकप्रयोगाद्गम्या। साचहतव्याजेनेत्यपह्नवपूर्वकत्वात्सापह्नवेतिसर्वस्वकारः ॥ ७० ॥ ******************************* ॥

॥ अन्तकस्येति ॥ अन्तकस्यमृत्योःसंबन्धिनि। शेतेऽस्मिन्निति शयनीयेतल्पइवस्थित इत्यर्थः। कृत्यल्युटोबहुलमित्यधिकरणेऽनीयर। पृथौविशालेतत्राहवे। मतंगजाः

इत्यवशनादिषाणांभंगाद्देतोःमत्कुणत्वमीयुःमत्कुणाइववृष्टाइत्यर्थः । सुन्दरकीण

यिनइत्यर्थः । खट्वाश्रयाःकीटविशेषामत्कुणाः । कालेयजातइनेवशय्याजन्तोचम

त्कुणास्तस्मादृश्याइनेषुतयात्वेकरूपकंअन्तकस्यशयनीयइवेत्युत्प्रेक्षा । सापेक्षेतिसङ्क

रः ॥ ७१ ॥ ******************************* ॥

॥ अथयुग्मेनाह ॥ अभीकेत्यादि । अभीकानिर्भीकामतिर्यस्यतेनाभीकमतिकेननिर्भय

चित्तेन । शैषिकःकप्रत्ययः । इद्धेदीप्ते । भीतानन्दस्यनाशने । नशेर्ण्यन्तात्कर्तरि

ल्युट् । कननीदीप्यमानासकामाविजयत्वात्पूर्णकामाचसेनायत्रतस्मिन्कनत्सकामसे

| अ | भी | का | म | ति | के | ने | द्धे |
|---|---|---|---|---|---|---|---|
| भी | ता | न | न्द | स्य | ना | श | ने |
| क | न | त्स | का | म | से | ना | के |
| म | न्द | का | म | क | म | स्य | ति |

॥ ७२ ॥ अर्द्धभ्रमकः । दधतोपिरणेभीममभीक्ष्णमभावमासुर

म् । हताःपरैरभिमुखाःसुरभूयमुपाययुः ॥ ७३ ॥ ***

नाके । पूर्ववत्कः । मन्दकामकंमंदोत्साहं । पूर्वदेवकः । अस्यतिनिराकुर्वाणेरणइत्यनु

कारेणसंबन्धः । अत्रसर्वतोभद्रवत्सर्वपादभ्रमणाभावात्पदार्द्धानामेवभ्रमणादर्द्धभ्रमकाम

। उद्धारस्तुसर्वतोभद्रवत्स्यादेव ॥ ७२ ॥ ****************** ॥

॥ दधतइति ॥ रणेपूर्वोक्तप्रकारे । अभीक्ष्णमत्यन्तं । भीमंभयंकरं । आसुरमसुर

संबन्धिभावंपुरुषकारलक्षणं । भावोलीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषुइतिवैजयन्ती ।

असुरत्वञ्चप्राप्तेनतद्धतःदधनाःअपि । परैःशत्रुभिः । अभिमुखाएवस्थिताःहताःवी

राइतिशेषः । अतएवसुराणांभावस्तत्सुरभूयंसुरत्वंदेवत्वमायुः । स्वर्गयान्त्यपराङ्मुखा

ष्टुनिस्मरणादित्तिभावः । भुवोभावेइतिक्यप् । अत्रासुरभावेपिसुरभूयत्वेययुरितिवि
रोधस्यभावशब्दस्यार्थान्तरत्वेनपरिहाराद्विरोधाभासः ॥ ७३ ॥ ********* ॥
॥ येनाङ्गेति ॥ त्सरुचासहवर्त्ततेयस्तेनसत्सरुचानेजस्विना । येनवीरेण । परतोमरैःशत्रुशस्त्रैः
। व्रणवत्सव्रणमंगमूहेऊढे । वहेःकर्म्मणिक्तिलिट्संप्रसारणम् । खड्गत्सरौखड्गमुष्टौचापेर
नः । खड्गत्सरुचापरनःखड्गप्रहारेणयुद्धंकुर्वन्नित्यर्थः । त्सरुःखड्गादिमुष्टौस्यादित्यमरः
। सवीरोमरैःसमत्वंययौपैरूपेणेतिभावः । उपमायमकयोःसंसृष्टिः ॥ ७४ ॥ ** ॥
॥ निपातितेति ॥ निपातितावीरशय्यांगमिताःसुहृदादयोयत्रतत्तयोक्तं । अभिमु
खवंधोरपिरणेवध्यत्वादितिभावः । अन्यत्रनिपातितालक्षणाभावेशब्दसाधुत्वायसूत्रक्र
मात्सूत्रस्वरूपेणोच्चारितासुहृदादिशब्दायत्रतदित्यर्थः । अतएवतत्समराजिरंरणाङ्ग
णं

युग्मम् । येनाङ्गमूहेव्रणवत्सरुचापरतोमरैः । समत्वंसययौखड्गत्स
रुचापरत्तोमरैः ॥ ७४ ॥ निपातितसुहृत्स्वामिपितृव्यभ्रातृमातु
लम् । पाणिनीयमिवालोकिधीरैस्तत्समराजिरम् ॥ ७५ ॥ *

णं । पाणिनिनाप्रोक्तंपाणिनीयंअष्टाध्यायीव्याकरणमिव । तेनप्रोक्तमितिछप्रत्ययः । धी
रैर्धृष्टैरेवालोकिदृष्टं । उभयत्रापिधीरैर्दुरवगाहत्वादितिभावः । शोभनंहृदयंयस्यसःसु
हृत् । सुहृद्दुर्हृदौमित्रामित्रयोरितिहृद्भावशब्दस्यहृद्भावोनिपातितः । स्वमस्या
स्तीति । स्वामीईश्वरः । स्वामिन्नैश्वर्येइतिमत्वर्थीयनिपातः । पितुर्भ्रातापितृव्यःस्या
न्मातुर्भ्रातातुमातुलइत्यमरः । पितृव्यमातुलमातामहपितामहाइतिव्यङ्डुलजन्तानिपा
ताः । विभक्तौनिभ्राता । नप्तृनेष्टृत्यादिसूत्रेत्वादौणादिकोनिपातः ॥ ७५ ॥ *** ॥
॥ अभावीति ॥ संध्याभ्रसदृक्संध्यामेघसदृशं । रुधिरमेवतोयंयस्यास्तया । संध्यारक्ता
नद्या । अभावि । भूतेभावेलुङ्चिण् । ययासंध्यादृशोरुणद्धीतिदृग्रुधिरं रुधिरोधकः

। ष्वेः क्विप् । पांशौरजसिहन्तेसति । सजनोवीरलोकोयोद्धुंरतः उत्सुकः अभूदितिशे
षः । उपमायमकयोःसंसृष्टिः ॥ ७६ ॥ ******************* ॥
॥ विदलदिति ॥ विदलद्भिर्विदीर्य्यमाणैःपुष्करैःकरिहस्ताग्रैः । अन्यत्रविलसदि
तिपाठेविकसद्भिःपद्मैराकीर्णाःव्याप्ताः । पतद्भिःशंखकुलैःललाटास्थिसंघैःकंबुसंघैश्च
समाकुलाः । तरन्तिप्लवमानानिपत्त्राणिवाहनानिरथाश्च । अन्यत्रपत्त्ररथाअण्डजा
यासुताः । रक्तवारिजाःरुधिरतोयजन्याः । अन्यत्ररक्तानिवारिजानियासुताःनद्यःप्रा
सर्पन्प्रावहन् । अत्रनदीनांरक्तनदीनांचश्लेषः ॥ ७७॥ ********* ॥
॥ अस्रगिति ॥ अस्रक्षतिमान्अस्त्रप्रहारवान् । जनोवीरजनोऽस्रग्रक्तं । जवसाद्

अभाबिसिन्ध्वासन्ध्याभ्रसदृग्रुधिरतोयया । हन्तेयोद्धुरुत्सुकःपांशौ
सदृग्रुधिरतोयया ॥ ७६ ॥ विदलत्पुष्कराकीर्णाःपतत्कम्बुसमाकु
लाः । तरत्पत्त्ररथानद्यःप्रासर्प्पन्नक्तवारिजाः ॥ ७७ ॥ अस्र
ग्जनोस्त्रक्षतिमानवमज्जवसादनम् । रक्षःपिशाचंमुमुदेनवमज्ज
वसादनम् ॥ ७८ ॥ ***************

नंजवस्यचेष्टावेगस्यसादनंतादृकंयथास्यात्तथाअवमत् । नवयोर्मज्जवसयोर्मेदोरस्य
योरदनंभक्षकं । कर्त्तरिल्युट् । रक्षांसिचपिशाचाश्चरक्षःपिशाचं । समाहारेद्वंद्वैक
वद्भावः । मुमुदेजहर्ष । अत्रमोदस्यवमनवाक्यार्थहेतुत्वाद्वाक्यहेतुकंकाव्यलिङ्गंसच
यमकेनसंसृज्यते ॥ ७८ ॥ ************************** ॥
॥ चित्रमिति ॥ अपेतज्यैरपगतमौर्वीकैः । मौर्वीज्याशिञ्जिनीगुणइत्यमरः । चापै
श्चित्रंविचित्रंस्फुरन्तिरक्तान्येवशस्त्राः शंपायस्मिन्तत् । शंपाशतह्रादिनीत्यमरः ।
नत्प्रकृतंवीरःआशंसनेअत्रेनिवीराशंसनं । भयंकरायुद्धभूमिःसावीराशंसनंयुद्धभूमिरति

भवप्रदेत्यर्थः । पयोदजालमिवाबभौ ॥ ७९ ॥ **************** ॥

॥ वन्धाविति ॥ इतसैन्येवंध्रौविपन्नेमृतेसति । अनेकेननरेणअनेकैर्नरैरित्यर्थः । जा तावेकवचनम् । तदंतिकेतस्यपृतस्यवन्धोरन्तिकेअशोचि । किंच । हतादन्तिनोयत्र तस्मिन्हतदन्तिकेसैन्ये । घण्टाभिर्नरेणेनदध्वने । रणतेर्भावेलिड् ॥ अत्रदन्तिहते विशेषणगत्याघण्टारणेनाहेतुत्वात्पदार्थहेतुकङ्काव्यलिङ्गम् । यमकेनसंसृज्यते ॥ ८० ॥

॥ छन्नैरिति ॥ छन्नैःछिन्नैः । दन्तिनांदन्तैर्गात्रैस्वकीर्णामहीरणभूमिः । क्षुस्याः पि ष्टाःलोकास्वेजनप्राणायेस्तैः । मृत्योर्मुसलोलूखलैःकीर्णैरिवरेजे । अत्रोग्रामुसलोखी

चित्रत्वापिरपेतज्यैःस्फुरद्रुक्शतहृदम् । पयोदजालमिवतद्वीरणं सनमाबभौ ॥ ७९ ॥ बन्धौविपन्नेनेकेननरेणेहतदन्तिके । अशोचिसैन्येघण्टाभिर्नरेणेहतदन्तिके ॥ ८० ॥ छन्नैःकीर्णाम हीरेजेदन्तैर्गात्रैस्वदन्तिनाम् । क्षुस्तलोकास्तुभिर्मृत्योर्मुसलो लूखलैरिव ॥ ८१ ॥ युद्धमित्थम्बिधूतान्यमानवानभियोगतः । चैद्यःपराणपराजिग्येमानवानभियोगतः ॥ ८२ ॥ ****

स्यादुलूखलमित्यमरः । अत्रमुसलोलूखलैरितिरजदन्तादिपाठेपिसमुद्राभ्रावदृत्वा दित्वादेवव्यभिचारादज्ञापकात्परनिपातव्यत्ययः ॥ ८१ ॥ ********** ॥

॥ युद्धमिति ॥ मानवानभिमानवान् । चैद्योयुद्धङ्गतःप्राप्तःसन् । इत्थंविधूताअभिभू ताअन्येचैद्यातिरिक्तामानवायेस्तान् । विधूतान्यमानवान्अभियःनिर्भीकान्परान्नरान् अभियोगतोऽभियोगादन्यबरोधात्पराजिग्येजिगायेत्यर्थः । विपराभ्यांजेरित्यात्मनेपद म् । सन्लिटोर्जेरितिकुत्वम् ॥ ८२ ॥ ************************ ॥

॥ अथभगवदभियोगंपञ्चभिःकुलकेनाह ॥ अथेत्यादि । अथचैद्यजयानन्तरं । वसु

धारराजापरःपुमान्अदृश्यतेनिपञ्चमेनसम्बन्धः। तद्वपुस्तावत्त्रिभिर्विशिनष्टि। बक्षोम णेःकौस्तुभस्यच्छाययाच्छुरितानिव्याप्तानिपीनवासांसिपीताम्बराणियस्यतेन। अतएव स्फुरनाइन्द्रनीलधनुषाभिन्नाःसंगतास्तडितोयस्यतेनतडित्वतामेघेनेवनाद्दृश्योनेवस्थि मेनेत्यर्थः॥ ८३ ॥ ****************************** ॥

॥ नीलेनेति ॥ पुनःकीदृशेनवपुषा। नीलेनश्यामलेन। नयाअनालंनालरहितंयन्न लिनंतत्रनिलीनाआसन्ना। उल्लसन्तीत्युल्लसन्तास्वलास्यालयोयस्यतेनअनालनलि ननिलीनोल्लसनालिनामुखसौरभलोभपरिभ्रमाद्भ्रमरेणेत्यर्थः। ललनानांविला सिनीनांस्त्रीणांलालनेनउपलालनेनवशीकरणेनेत्यर्थः। अलमत्यन्तंलीलालोलेन

अथवक्षोमणिच्छायाच्छुरितापीतवाससा। स्फुरदिन्द्रधनुर्भि न्नतडितेवतडित्वता ॥ ८३ ॥ नीलेनानालनलिननिलीनोल्ल सनालिना। ललनालालनेनालङ्लीलालोलेनलालिना॥ ८४॥ द्यक्षरः॥ अपूर्वयेवतत्कालसमागमसकामया। दृष्टेनराजन्वपुषा कटाक्षैर्विजयश्रिया ॥ ८५ ॥ ***********

क्रीडालोलुपेनलीलानांविलासानामालांनेनालापेनेत्यर्थः। लालयतिभक्तानितिलाली नाभक्तानुकम्पीवेत्यर्थः। द्यक्षरानुप्रासोलङ्कारः॥ ८४ ॥ ********* ॥

॥ अपूर्वयेति ॥ किंच। अपूर्वयेवाभूतअपूर्वसमागमयेवतत्कालसमागमे। सकामया साभिलाषया। विजयश्रियाचैद्यविरक्तयेतिभावः। कटाक्षैरपाङ्गैर्दृष्टेनालोकितेनवपुषा राजन्दीप्यमानः। अत्रप्रस्तुतजयश्रीविशेषणसाम्याद्प्रस्तुतानुरक्तमानिनीप्रतीतेःस मासोक्तिःप्रतीयमानाभेदाध्यवसायाद्पांगदर्शनोत्पत्तिः॥ ८५ ॥ ******* ॥

॥ विभावीति ॥ विभावोऽस्यास्तीतिविभावीप्रभावसम्पन्नः। विभवोऽस्यास्तीतिविभवीरै

र्थ्यवान् । भस्याभैवाभायस्यसभाभेनक्षत्रवदुज्ज्वलइत्यर्थः । विभांविशिष्टाभांभावयति सम्पादयतिविस्मृत्येतिविभाभावी । तस्यभासासर्वमिदंविभातीतिश्रुतेः । भुवेर्ण्यन्तात् णिनिः । विनापक्षिणावातिगच्छतीतिविवः । पक्षिवाहनइत्यर्थः । आतोनुपसर्गे कः । विभीर्निर्भीकः । भवंसंसारंअभिभवतीतिभवाभिभावोभक्तानांसंसारनिवर्त्तकइत्य र्थः । भुवोखिनिः । भावान्जन्तून्अवतीतिभाबावःविस्मृत्राता । भावोलीलाक्रियाचेष्टा भूत्यभिप्रायजन्तुष्विति वैजयन्ती । अवतेःकर्मणिअण् । भवाभावोऽस्यास्तीतिसंसारदुः खैरस्पृष्टइत्यर्थः । अर्शादित्वाद् च्प्रत्ययः । भुवोभूमेर्विभुर्भर्त्ता ॥ ८६ ॥ *** ॥ ॥ उपैत्विति ॥ एवंभूतःपरःपुमान्परमपुरुषोहरिःतत्पारंतस्यहरेःपारं । अन्तमुपेतु

विभाबोविभवीभाभोविभाभाबोविवोविभीः । भवाभिभावोभःबावोभवा भावोभुवोविभुः ॥ ८६ ॥ द्व्यक्षरः ॥ उपैतुकामैस्तत्पारंनिश्चि तैर्य्योगिभिःपरैः । देहत्यागकृतोद्योगैरदृश्यतपरःपुमान् ॥ ८७ ॥

कामैस्संजिगीषुभिः । अन्यत्रदिदृक्षुभिरित्यर्थः । तुङ्काममनसोरपीतिमकारलोपः । निश्चितैर्योद्धुकृतनिश्चयैरित्यर्थः । अन्यत्रनिश्चिततत्त्वः । सकर्मकादप्यविवक्षितेकर्मणि क्तः । यद्वापीतागावःविभक्ताभ्रातरःइत्यादिवदूह्यम् । तयंस्फुटीकृतं पैलत्याकर्षंटा पयेतवर्णलिंगीविदितइत्यत्र । देहत्यागकृतोद्योगैर्मरणोद्योगैः । अन्यत्रमुमुक्षुभिरित्यर्थः । योगिभिःसन्नाहवद्भिरुपायवद्भिर्वा । अन्यत्रध्यानवद्भिः । योगःसंहननोपायध्यानसंगतियुक्तिष्वित्यमरः । परैःशत्रुभिः । अन्यत्रपरमयोगिभिःअदृश्यतपरैर्भ्यस्थितैरित्यर्थः । अन्यत्रसाक्षात्कृतःतमेवविदित्वातिमृत्युमेतीतिश्रुतेः । अर्थान्तरप्रतीतिर्ध्वनिरेवस्त्रेवः । अत्राभिधायाःप्रकृतार्थेनियन्त्रणात् ॥ ८७ ॥ ********* ॥ ॥ युग्मेनाह ॥ नमिति । घनयाआनन्दसान्द्रया । अनल्पहर्षाअक्षीणकान्त्या । सार

तयासारत्वेनसर्वोत्कर्षगुणेन । तयाव्याप्तया । चारुस्तनयारम्यकुचया । स्वाङ्गाद्योपस्र्जनाद्संयोगोपधादिर्निर्विकल्पाद्नीकारः । अनघयानिर्दोषया । यातयाप्रसिद्धया श्रियारमया । तरसात्वरया । तंश्रितमालिंगीतंहरिमुद्वीक्ष्येयुत्तरेणसंबन्धः । अत्रापि प्रातिलोम्येनार्द्धावृत्तेरर्द्धप्रतिलोमयमकं । एतल्लक्षणनुप्रागेवोक्तम् ॥ ८८ ॥ * ॥
॥ विद्विषइति ॥ तंपूर्वोक्तंहरिंउद्वीक्ष्य । विद्विषःशत्रवः । अदिपुःद्विषनिरस्त । लुङिद्विषस्येतिविकल्पेनभर्जुसादेशः । तथापिद्विषतोपि । निरेनसोनिष्पापाः आसन् । द्विषवीक्षणसामीप्येनैानिवर्त्तकत्वंदृष्टान्तेनाह । रोचतइतिरुच्यं । राजसूये त्यादिनाक्यवन्तोनिपातितः । अरुच्यमरुच्यमानमपि । भेषजमौषधं । भेषजौषधभैष

तंश्रियाघनयानस्तरुचासारतयातया । यातयातरसाचारुस्तनयात
घयाश्रितम् ॥ ८८ ॥ गतप्रत्यागतम् ॥ विद्विषोद्विषुरुद्वीक्ष्यतमा
प्यासन्निरेनसः । अरुच्यमपिरोगघ्ननिसर्गादेवभेषजम् ॥ ८९ ॥
युग्मम् ॥ विदितन्द्विबिकेनोकेतंयातन्निर्जिताजिनि । विगदङ्गवि
योद्धारोयोधायोनतिमेतिन ॥ ९० ॥ * * * * * * * * *

ज्यानीत्यमरः । निसर्गात्स्वभावशक्तेरेव । रोगंहन्तीतिरोगघ्नंआरोग्यकारी । हरिर्हरतिपापानीतिवचनादितिभावः । अमनुष्यकर्तृकेचेतिटप्रत्ययः ॥ ८९ ॥ * * * * ॥
॥ विदितमिति ॥ किंच । योधावीरायेहरिःनतिंपरेषांनम्रतांनैतिनायेति । तितदुरिजिताआजयोयेनतस्मिन्निर्जिताजिनि । अनेकजयिन्यपि । अनीकेसैन्ये । वरूथिनीबलंसैन्यंचक्रंचानीकमस्त्रियामित्यमरः । यातंयोद्धुमागतम् । दिविस्वर्गेपिविदितंप्रख्यातं । विगदंनिरामयं । तंहरिंगविभुवि । योद्धारोजेतारःकेनकोपीत्यर्थः । प्रातिलोम्ये चैतदेवपदार्थवाक्यार्थाः । एतदपिश्लोकःप्रातिलोमयमकमेवपदपदार्थादिसत्वादस्तु

वैचित्रीविशेषः। लक्षणन्तु निध्वनःजनहारीत्यत्रैवोक्तमनुसंधेयम् ॥ ९० ॥ ** ॥

॥ नियोज्यमानेति ॥ पुरोग्रे। अनिगरीयसिकर्मणि। अन्यत्रदुःकरेकस्मिंश्चित्कृत्यवस्तुनि नियोज्यमानेनव्यापारयिष्यताआज्ञापयिताच। भर्त्रास्वामिना। आरोप्यमाणोऽधिक्रियमाणःउरुर्महान्गुणोज्यायस्मिन्नतत्। अन्यत्रवर्ण्यमानसौन्दर्य्यादिकं। कर्मणेप्रभवतीतिकार्मुकंधनुः। कर्मक्षउकञ्। आनमत्। गुणाकर्षणावकुंचितकोटिकमभूत्। अन्यत्रप्रणतइत्यर्थः। अत्रप्रकृतकार्मुकविशेषणसाम्यादप्रस्तुतनियोज्यपुरुषप्रतीतेः समासोक्तिः ॥ ९१ ॥ ************************ ॥

॥ तत्रेति ॥ तत्रकार्मुके। शोभनानिपरूंषियेषांतेसुपरुषःसुपर्वाणः। अतएवचारबो

प्रतिलोमेनायमेवार्थः। नियोज्यमानेनपुरःकर्म्मण्यनिगरीयसि। आरोप्यमाणोरुगुणभर्त्राकार्मुकमानमत् ॥ ९१ ॥ तत्रबाणाःसुपरुषःसमधीयन्तचारवः। द्विषामभूत्सुपरुषस्तस्याकृष्टस्यचारवः ॥ ९२ ॥ पश्चात्कृतानामप्यस्यनराणामिवपत्रिणाम्। योयोगुणेनसंयुक्तःसस्कर्णान्तमाययौ ॥ ९३ ॥ *******

ऽनिरम्यावाणाःसमधीयन्तनिहिताः। आकृष्टस्यतस्यकार्मुकस्यचारवश्चद्विषां। सुष्ठुपरुषःसुपरुषोऽतिकर्कशोभूत्। यमकविशेषणालङ्कारः ॥ ९२ ॥ ****** ॥

॥ पश्चादिति ॥ नराणांपुंसामिव। पश्चात्कृतानांनिषंगिसंगिनयापृष्ठस्थापितानामपि। अन्यत्रावधीरितानामपि। पत्रिणामिषूनांमध्येइत्यर्थः। योयःपत्रीनरश्चगुणेनज्यया दाक्षिण्यादिनाचसंयुक्तःसंबद्धःसस्पत्रीनरश्चास्यहरेःकर्णान्तंकर्णसमीपमाययौआगतः। गुणयोगादाकर्णमाकृष्टः। अन्यत्राप्तनगाइत्यर्थः। श्लेषसंकीर्णोपमा ॥ ९३ ॥

प्रापेइति ॥ पुरापूर्वं। रूपीमत्स्यकुर्म्माद्यनेकरूपवान्। अरेपाःनिष्पापः। परिपूरय

निकामैर्भक्तानितिपरिपूरीभक्तवरदः । पूरयतेर्णिनिः । परःपरमपुरुषोहरिः । परैः
शत्रुभिःप्रापेप्राप्तःअवरुद्धइत्यर्थः । अपरैरन्यैःशत्रुभिःकर्तृभिःअपारैरनन्तैरोपैरिषुभिः
। पत्रीरोपइषुर्द्वयोरित्यमरः । पुरोग्रेउपरिचपुपूरेपूरितः । पूनातेःकर्मणिलिट् ।
श्चक्षरानुप्रासोलङ्कारः ॥ ९४ ॥ ********************* ॥
॥ दिगिति ॥ सहरिर्दिङ्मुखव्यापिनोदिगन्तव्यापकान् । अतितीक्ष्णान्निशितान्कु
रांश्च । ह्रादनोइतिह्रादनःपक्षनादवतःसिंहनादवतश्च । मर्मभेदिनोमर्मस्थानवि
दारकान् । सायकानिषून । अहितानरीश्च । एकक्षणेनैव । चिक्षेपनिरास । अत्रसा
यकानामहितानांचप्रकृतानामेवतुल्यधर्मयोगादीपकोपमातुल्ययोगिनाभेदः ॥ ९५ ॥

प्रापेरूपीपुरएरोपाःपरिपूरीपरःपरैः । रोपैरपारैरुपरियुपूरेपिपुरोपरैः
॥ ९४ ॥ दिङ्मुखव्यापिनस्तीक्ष्णान्ह्रादिनोमर्मभेदिनः । चिक्षेपै
कक्षणेनैवसायकानहितांश्चसः ॥ ९५ ॥ शरवर्षीमहानादःस्फुर
त्कार्मुककेतनः । नीलच्छविरसौरेजेकेशवच्छलनीरदः ॥ ९६ ॥

॥ शरेति ॥ शरवर्षीवाणवर्षीनीरवर्षीच । शरंनीरेशरोवाणइतिविश्वः । महान्नादः
सिंहनादोगर्जितंचयस्यसमहानादः । स्फुरन्तीकार्मुककेतनेधनुर्ध्वजौयस्यसः । अन्य
त्रैन्द्रचापचिह्नइत्यर्थः । नीलच्छविःश्यामकान्तिः । अस्यकेशवस्यच्छलंकपटंयस्यसः
नीरदः । केशवच्छलनीरदोहरिर्मेघोऽसौरेजे । रणरागात्सर्वोत्कर्षेणदिदीपेइत्यर्थः ।
अत्रछलशब्देन हरिचापचिह्नेनमेघत्वारोपणाच्छलादिशब्दैरसत्वचप्रदिपादनरूपोप
ह्नवालङ्कारः । त्रिपाद्यनार्गतस्तुर्थपादाक्षरत्वाद्गुढचतुर्थाख्यस्त्रिनविशेषःशब्दालङ्का
रश्चेतिसङ्करः ॥ ९६ ॥ ************************ ॥
॥ नेति ॥ लघुशीघ्रंसंधत्तेयस्तस्यलघुसंधायिनस्तस्यहरेःकेवलंधनुरेव । एकानानमू

डलीकृतं । शीघ्राकर्षान्नियमेनवलयीकृतं । जनैनैक्षि । कर्मणिलुङ् । किन्तुद्विषांव
लमपिमण्डलीकृतंत्रासादेकत्रपुञ्जीकृतमैक्षि । अत्रधनुर्वलयोःप्रकृतयोरेवतुल्यधर्म
योगात्केवलप्रकृतास्पदातुल्ययोगिता ॥ ९७ ॥ ***************** ॥

॥ सुम्मनाह ॥ लोकेति । लोकानालोकतेइतिलोकालोकी । त्रैलोक्यदर्शी । कलोम
धुरभाषी । कल्केनपापेनदम्भेनवाकलिलोनभवतीतिअकल्ककलिलः । कल्कःपापाशये
पापेदम्भेइतिविश्वः । अलिकुलालकः । अलिकुलनीलमूर्द्धजइत्यर्थः । कालोनीलव
र्णःकालात्मकोवा । नास्तिकलायस्यसोकलःनिरंशइत्यर्थः । अकलिरकलहःस्वयम
कलहशीलइत्यर्थः । कालेप्रलयकाले । कोलकेल्यावराहलीलयाकिलनिक्रीडति

गूढचतुर्थः । नकेवलञ्जनैस्तस्यलघुसन्धायिनोधनुः । मण्डलीकृ
तमैक्षि द्विषामपि ॥ ९७ ॥ लोकालोकीकलोऽक
ल्ककलिलोऽलिकुलालकः । कालोऽकलोऽकलिःकालेकोलकेलिःकि
लःकिल ॥ ९८ ॥ द्व्यक्षरः । अक्षिनाराचविव्याधद्विषतः
सतनुत्रिणः । दानेष्वस्थूललक्ष्यत्वन्नहितस्याशरासने ॥ ९९ ॥

कोलकेलिःकिलः । किलशब्दःखल्वर्थो । विव्याधेत्युत्तरेणसम्बन्धः । द्व्यक्षरानुप्रासः
॥ ९८ ॥ ****************************** ॥

॥ अक्षीति ॥ सपूर्वोक्तगुणविशिष्टोहरिः । तनुत्राणिएषांसन्तीतितनुत्रिणोवर्मिणः ।
तनुत्रंवर्मदंशनमित्यमरः । तान्द्विषतःशत्रून् । अक्षिनाराचेनेत्रकनीनिकास्विव्याध
। प्रजहार । तथाहि । तस्यहरेःदानेषुवितरणेष्वेवस्थूललक्ष्यत्वंविपुलविषयत्वं । शरा
सनेशरक्षेपेतुन । किन्तुसूक्ष्मलक्ष्यत्वमेव । अतोक्षिनाराचवेधित्वमस्ययुक्तमित्यर्थः ।
अतोवाक्यार्थहेतुकंकाव्यलिङ्गम् । स्युर्वदान्यस्थूललक्ष्यादानशौण्डाबहुप्रदइत्यमरः ॥

९९ ॥ ****************************** ॥

॥ वररइति ॥ वरान्रातीतिवररोवरप्रदः । रादाने । आतोनुपसर्गेकः । अविवरोनिर्वि वरोनीरंध्रः । वैरिणःशत्रून्विवारयतिवैरिविवारी । वारिणिरातीतिवारिरः । पूर्ववत्कः । तस्येवारवोयस्यसवारिररवः । वरःश्रेष्ठोवीरःशूरःसत्रासः । और्वःसर्वशस्त्राव्येत्यमरः । तस्यांभवःऔर्वरःपृथ्वीभवः । रविरिववैरंवैरिणांवृन्दंविववार । विवारयामास । जघानेत्यर्थः । द्व्यक्षरानुप्रासः ॥ १०० ॥ ************** ॥

॥ मुक्तेति ॥ मुक्तानेकशरंक्षिप्तवहुवाणम् । तस्यहरेरिदंतदीयंधनुः । भूयसांद्विषांप्राणानहरत् । वाणेत्यपिपाठःसुगमः । तथाहिअन्यस्यपरस्यसजीवनांनसेहे । अथ

युग्मम् ॥ वररोऽविवरोवैरिविवारीवारिररवः । विववारवरोवैरंवीरोरविरिवौर्वरः ॥ १०० ॥ द्व्यक्षरः ॥ मुक्तानेकशरस्प्राणानहरद्भूयसान्द्विषाम् । तदीयन्धनुरन्यस्यनहिसेहेसजीवताम् ॥ १०१ ॥ राजराजीरुरोजाजेरजिरेजोजरोरजा । रेजारिजूरजोर्जाजीरराजर्जुरजर्जरः ॥ १०२ ॥ ************

वाअन्यस्यधनुषःसजीवनांसज्याकत्वंनसेहे । त्रिषुजीवनिजीवस्यान्मौर्वीज्यौनिवैजयन्ती । वाक्यार्थहेतुकंकाव्यलिङ्गम् ॥ १०१ ॥ ****************** ॥

॥ राजेति ॥ नजायतेइत्यजोऽनादिः । अन्येष्वपिदृश्यतेइतिजनेर्डप्रत्ययः । नञोर्थेतेइत्यजरःअनन्तः । पचाद्यच् । नास्तिरजोयस्येत्यरजारजोगुणरहितः । रेजन्तीतिरेजाःतेजिष्ठाः । रेजृदीप्तौपचाद्यच् । तेचतेअरयस्तेषांजूरोहिंसनंतेनजातंरेजारिजूरजं । तदूर्जोबलंअर्जयतीतिरेजारिजूरजोर्जाजी । अर्जेर्णिनिः । जुरर्जवान् । जर्जरोनभवतितेअजर्जरोदृढःसहरिः । आजेरजिरेरणांगणे । राजराजीराजश्रेणी । हरोजव

भंज । रुजोभंगेलिङ् । अतएवरराजदिदीपे । द्व्यक्षरानुप्रासः ॥ १०२ ॥ *** ॥

॥ उद्धतानिति ॥ उद्धतानदृप्तान् । द्विषतःशत्रून्निघ्नतोहिंसतः । जातिनिप्रहन्नाटे तिस्रत्वेनिप्रोत्संधानविपर्यस्तव्यस्तग्रहणोपदेशग्रहणानुवृत्तेरशेषकर्मणिद्वितीयैव । तस्य हरेःशराः । पानार्थेधातोःपापानेङ्तिधातोःक्तनिरुधिरंरक्षार्थेधातोःपारक्षणेङ्तिभुवनंज गच्चेतिद्वितयंययुः । रुधिरंतपिवन्भुवनमरक्षंस्तेतिश्लेषार्थः । अत्रपानयोरभेदाध्यवसा येनरुधिरभुवनयोस्तुल्ययोगितालङ्कारः ॥ तत्रपानार्थइत्यादिवाक्यस्यशत्रुवधेनभुवन मरक्षन्निनितस्क्ष्मार्थगर्भत्वात्सौक्ष्म्यन्नामगुणः । अतःसंजल्परूपत्वंशब्दानांसौक्ष्म्यमुच्य तइतिलक्षणात् ॥ १०३ ॥ ************************ ॥

॥ अथयुग्मेनाह ॥ क्रूरेति । क्रूरान्अरीन्किरतिविक्षिपतिङ्तिक्रूरारिकारी । किर

द्व्यक्षरः ॥ उद्धतान्द्विषतस्तस्यनिघ्नतोद्वितयंययुः । पानार्थेरु धिरन्धातोरक्षार्थेभुवनंशराः ॥ १०३ ॥ क्रूरारिकारीकोरेककारकः कारिकाकरः । कोरकाकारकरकःकारीरःकर्करोऽर्करुक् ॥ १०४ ॥

तेर्णिनिप्रत्ययः । कोभूमेरेककारकःएककर्त्ता । करोतेर्ण्वुल् ॥ कारिकायातनाःकरोति दुष्टानामितिकारिकाकरः । कारिकायातनावृत्त्योरित्यमरः । कृञोहेतित्याद्विनाता च्छील्येटच्प्रत्ययः । कारिकाक्रिया । धात्वर्थनिर्देशेण्वुल् । तत्करइतिकेचित् । को रकाकारौकरौयस्यसकोरकाकारकरकः । कमलमुकुलरमणीयपाणिरित्यर्थः । शैषिकः कप्रत्ययः । करीणोगजानीरयतिक्षिपतिङ्तिकरीरः । कर्मण्यण् । कर्करोरणकर्कश इत्यर्थः । अर्कस्येवरुक्अस्यसोऽर्करुक् । इत्युपमा । द्व्यक्षरानुप्रासः ॥ १०४ ॥ *

॥ विधातुमिति ॥ भुवोभूमेर्लघिमानंलघुत्वंभारावतरणंविधातुमवनीश्वरांपिभुविजातोऽघसौ पूर्वोक्तगुणोभगवान्हरिः । अनेकंवक्रमरिसंघातंभूमिवर्द्धतां । भूभारमकरोत्इतिविरोधः

। मृत्तमकरोदित्यविरोधः । अतएवविरोधाभासोऽलङ्कारः ॥ १०५ ॥ ******* ॥
॥ दारीति ॥ दारीवकुद्दारवान् । भूमार्थेमत्वर्थीयः । दरेणभयेनदरिद्रोनिर्भीकः ।
दरोस्त्रियांभयेश्वभ्रइत्यमरः । उदारोमहान्दानावा । उदारोदातृमहतोरित्यमरः ।
अद्रिवत्दुःखेनरद्यतेदूरदोदुर्भेदोऽद्रिदूरदः । रदविलेखनेखल्प्रत्ययः । अरौदःता
भूनांसौम्यः । रोदसीरुणद्धीतिरोदोरुद् । विश्वव्यापी । रुधेःक्विप् । ददातीतिदारुदा
ता । ददातेरौणादिकोरुप्रत्ययः । आदरोऽस्यास्तीतिआदरी । सन्मार्गादिआदरवा
न्सहरिः । अरिरेवदारुकाष्ठमरिदारु । दूरादेवअददरन्दारयन्निस्म । दारयतेर्लौ
चङ्अत्स्मृदृत्वरप्रथम्रदस्तृस्पशामित्यभ्यासस्यात्वं । अरिदारुविनिरूपकमर्थान्तरालङ्का

द्व्यक्षरः । विघातुमवनीसौंऽपिलघिमानमसौभुवः । अनेकमरिस
ङ्घानमकरोद्भूमिवर्द्धनम् ॥ १०५ ॥ दारीदरदरिद्रोरिदारुदारोऽ
द्रिदूरदः । दूरादरौद्रोददरद्रोदोरुद्दारुणदरी ॥ १०६ ॥ द्व्य
क्षरः । एकेषुणासंघनिर्यान्द्विषोभिन्दन्द्रुमानिव । सजन्मान्तरस
मस्यचक्रेसदृशमात्मनः ॥ १०७ ॥ ***********

रोद्व्यक्षरानुप्रासश्च ॥ १०६ ॥ ************************ ॥
॥ एकेषुणेति ॥ सहरिरेकेषुणाएकेनैवशरेण । संघानांपूरणान्संघनियान्संघशः
स्थितानित्यर्थः । वहुपूगगणसंघस्यतिथुगितितिथुगागमादेवह्यापकादसंख्यात्वेप्रत्ययः
। द्विषःशत्रून् । द्रुमानिवेत्युपमा । भिन्दन्विदारयन् । जन्मान्तरेरामस्यदाशरथेरात्म
नःसदृशंचक्रे । एकशरेणानेकद्रुमभेदेनास्यजन्मान्तरभावनायातमितिभावः । विभेद
चपुनस्तालान्सानिकेनमहेषुणेतिरामायणे ॥ १०७ ॥ ************* ॥
॥ सूरइति ॥ सूरणातीतिशरारुःदुष्टघातुकः । शरारुर्घातुकोहिंसइत्यमरः । सूर्वंधौ

रुरित्यारुप्रत्ययः। श्रीशरीरस्येशः श्रीशरीरेशः लक्ष्मीप्राणनाथः। शूरो वीरः। शौरिः कृष्णः। अशिशिरैस्तीक्ष्णैः। आशादिशोऽश्नुवन्ति व्याप्नुवन्तीत्याशाशैर्दिगन्तव्यापकैः। अश्नोतेः कर्मण्यण्। शरैर्बाणैः अरिशिरः शत्रुशिरांसि। जातावेकवचनं। राशिशः संघशः। आशु शीघ्रं। शुशूरे जघान। शूरि हिंसास्तम्भनयोरिति धातोर्लिट्। द्व्यक्षरानुप्रासः॥ १०८॥ ******************************॥

॥ व्यक्तेति॥ तदा तस्मिन्समये। एषां अरीणामरिनाशत्रुणा। मुकुन्देन व्यक्ता आसीत्। यद्यस्मात्तस्य हरेरिमे तदीयाः पत्रिणो बाणाः। मनो हरन्ति कायाद् दूरं हरन्तीति मनोहृतो मनो

> शूरः शौरिरशिशिरैराशाशैराशु राशिशः। शरारुः श्रीशरीरेशः शुशूरे रिशिरः शरः॥ १०८॥ द्व्यक्षरः। व्यक्तासीदरिनारिणा यैस्तदियास्तदा मुक्तः। मनोहृतोऽपि हृदये लेगुरेषां न पत्रिणः॥ १०९॥ नामाक्षराणां मलिनाभूद् भर्तुरतः स्फुटम्। अगृह्णन्परशङ्काना नामसून्न सन्नमार्गणाः॥ ११०॥ ******

हारका इत्यर्थः। हरतेः क्विप्। मनोज्ञाः प्रतीयन्ते। अत एव मनोहृतो हृदये मनसि न लेगुर्न लग्नाः। वक्षो निर्भिद्य निर्जग्मुरित्यर्थः। हृदयं वक्षसि स्वांगे इति विश्वः। विरोधाभासोऽलङ्कारः॥ १०९॥ ******************************॥

॥ नामेति॥ भर्तुः स्वामिनो नामाक्षराणां फलकेषु लिखितानां नामवर्णानां मलिना मालिन्यं तिरोधानं माभूदिति बुद्ध्येत्यर्थः। अतः नाम असन्न मार्गणाः हरिशराः। परशङ्कानां शत्रुशराणां। असून्प्राणान्। अगृह्णन्। ग्रहेर्लङ्। तदासुभावनिमित्तस्यानरप्रभावल्लेयस्य स्वामिनामाक्षरमालिन्यपरिहारार्थत्वमुत्प्रेक्ष्यत स्फुटमिति। अनतालव्यवर्णाभावात्तालव्यद्व्यक्षरभेदः॥ इत्युच्यमानानां तालव्यतिड्वर्णस्यापि तालुत्वेऽपि व्यंजनापेक्षया

षार्थनियमइतिनदोषः ॥ ११० ॥ ********************** ॥

॥ आच्छिद्येति ॥ आशुगाःबाणाः। योधसार्थस्यवीरवर्गस्य। प्राणसर्वस्वंआच्छिद्य। ऐकागारिकाश्चौराः। चौरैकागारिकाःस्तेनइत्यमरः। एकागारिकःचौरइत्यर्थेनियमो निपात्यतेइत्येके। इकञ्प्रत्ययेवृद्धिश्चनिपात्यतेइत्यपरे। तैस्तुल्यमैकागारिकवत्। तुल्यार्थेवति। दूराद्भूमावदर्शनमदृष्टत्वमदृश्यतांजग्मुः ॥ १११ ॥ ***** ॥

॥ भीमेति ॥ जिनोहरिःअवतारान्तरेनाम्नाव्यपदेशः। भीमाअस्त्रराजयोयस्यसभीमास्त्र राजिनः। इकोऽचिविभक्तावितिनुमागमः॥ ध्वजैराजतेयत्तस्यध्वजराजिनः। ताच्छी ल्येणिनिः। कृताघोराआजियुद्धंयेनतस्यकृतघोराजिनः। पूर्ववन्नुमागमः। तस्यबलस्य

अतालब्यः। आच्छिद्ययोधसार्थस्यप्राणसर्वस्वमाशुगाः। ऐका गारिकवद्भूमौदूराज्जग्मुरदर्शनम् ॥ १११॥ भीमास्त्रराजिनस्त स्यबलस्यध्वजराजिनः। कृतघोराजिनश्चक्रेभुवःसरुधिराजिनः ॥११२॥ मांसव्यधोचितमुखैःशून्यतान्दधदक्रियम्। शकुन्तिभि शत्रुबलम्व्यापितस्येषुभिर्नभः ॥ ११३ ॥ ***********

सैन्यस्यसंबंधिनोभुवस्तइराभूमिःसरुधिराःसासृक्चक्रे ॥ चतुष्पदान्तयमकम् ॥ ११२

॥ मांसेति ॥ मांसव्यधोमांसखण्डनम्। व्यधजपोरनुपसर्गेइत्यप्प्रत्ययः। तत्रोचितः निपरिचितानिमुखानिचञ्चवःशल्यानियेषांतैःशकुन्तिभिःपक्षिभिःकर्तृभिः। शून्यताम चेतनत्वं। अन्यत्रतुच्छत्वममूर्च्छत्वंवादधत्। अतएवअक्रियमस्पन्दं। शत्रुबलंव्यापि व्याप्तं। आप्नोतेःकर्मणिलुङ्। तस्यहरेरिषुभिःनभोव्यापि। अत्रेषुपक्षिणांनभोव्या त्योर्व्याप्तिस्तुल्यधर्मयोगित्वात्तुल्ययोगिताभेदः ॥ ११३ ॥ ********* ॥

॥ दादददिति ॥ दद्यतेइतिदादःदानं। दददानेइतिकर्मणिघञ्। दादंदद

नीतिदाददोदानप्रदः । आतोनुपसर्गेकः । दुद्दुद्दादी । दुद् उपतापः । दुदुन्उ पतापेक्किप् । नद्दुदं उपतापंददातीतिताभूतामितिदुद्दाःखलाः । पूर्ववत्कः । तेषां दुदं उपतापंददतइतिदुद्दुद्दादी । ददातेइतिधातोर्णिनिः । दादादः । दाःशु द्धिः । दैपशोधनेक्किप् । तांददतदादादः । ददातेकर्मण्यण् । दूददीददोः । दू परितापः । दुन्परितापेक्किप् । तांददातीतिदूदाःदुष्टाः । दीःक्षयः । दीङ्क्षयेक्कि प् । तांददतइतिदीददोःनाशदोः । उभयत्रातोनुपसर्गेकः । दूदानांदीदोदुष्टमर्द्दकौ दोषैभुजौयस्यसःदूददीददोःदुष्टभञ्जकभुजइत्यर्थः । ददाददददः । ददतेइति ददाःदातारः । नददतेइतिअददाअदातारःतेषांद्वयानामपिददोदानाददादद

दाददोदुद्दद्दादीदादादोदूददीददोः । दुद्दादद्ददद्देददा ददददोददः ॥ ११४ ॥ एकाक्षरः ॥ स्रुतेभकुम्भोरसिजेर्हृ दयक्षतिजन्मभिः । प्रावर्त्तयन्नदीरस्रैर्द्विषान्तद्योषितास्रुसः ॥ ११५ ॥ *********************

ददः । सर्वत्रददतेपचाद्यच् । अदत्तीवदा । वकासुरपूतनाप्रभृतयः । अदःप चाद्यच्तान्द्यतिखण्डयतीतिअददः । दोअवखण्डने । आतोऽनुपसर्गेकः । एवंभू तोहरिः । दुदंददातीतिदुद्दः । दुःखदःतस्मिन्दुद्देशत्रौ । दुदंददतइतिदुद्दास्त्र स्त्रं । ददाते । कर्मण्यण् । दद्देददौ । प्रयुक्तवानित्यर्थः । ददातेकर्त्तरिलिट् एकाक्षरानुप्रासोलङ्कारः ॥ ११४ ॥ ********************** ॥ ॥ स्रुतेति ॥ सहरिःस्रुताःच्युताःइभकुम्भाःउरसिजाताउरसिजाइभकुम्भाइवोरसि जाग्रयैस्तैः । हृदयक्षतिभिर्वक्षप्रहारैःमनोभङ्गैस्त्रविषादापादकैःजन्मयेषांतैः । हृद यंवक्षसिवाङ्गइतिविश्वः । द्विषांतद्योषितांचास्रैःशोणितैरस्रुभिश्च । अस्रुमश्रुशोणि

नइतिविग्रहः । नदीःप्रावर्त्तयन्प्रवाहयन् । अरिवधेनतन्नारीरोदयदित्यर्थः । मत
च्यानामथखाणांप्रक्रान्तत्वाप्रक्रान्तश्लेषः । नैरन्तैर्द्विषांनद्योयितांयथासंख्यसम्बन्धाद्यथा
संख्यालङ्कारः । नदुपजीवनेनद्विषान्नद्योयितांचाशोणितैःश्लेषमूलाभेदातिशयोक्तिम
हिम्नाअन्तरूपतुल्यधर्मयोगित्वात्तुल्ययोगितेत्संगाङ्गिभावेनसङ्करः ॥ ११५ ॥ ***
॥ सदेति ॥ सदामदोयस्यससदामदः । नित्यमदसंवलंबलभद्रंप्रीणातीतिसदामद
बलप्रायः । परत्वात्कर्मण्यण्प्रत्ययः । समुद्भूतारसाभूर्येनससमुद्भूतरसः । प्रतीताःप्रसि
द्धाःविक्रमाःपादन्यासायस्यसः । त्रिविक्रमइत्यर्थः । श्रीमान्मापतिःहरिःकृष्णोऽपरोऽ
न्योहरिरिन्द्रइवबभौ । सोपिसनामामदोदुःखदोयोबलासुरस्तस्यप्रायोनाशस्तंकरोती
तिसदामदबलप्रायः । तत्करोतीतिणिच्यनात्यचाद्यच् । समुद्भूतरसः । अमृतपानेनसन्ध्य

सदामदबलप्रायस्समुद्भूतरसोबभौ । प्रतीतविक्रमःश्रीमान्हरिर्हरि
रिवापरः ॥ ११६ ॥ ***************

गपहृतविषः । शृङ्गारादौविषेवीर्येद्रवेरागेगुणेरसइत्यमरः । प्रतीतविक्रमः । प्रसि
द्धपराक्रमः । श्रीमान्स्वराज्यलक्ष्मीयुक्तः । तथाऽपरोऽन्योहरिःकृष्णइवबभौ । सोपि
आमंरोगंद्यतिखंडयतीतिआमदः । बलंपृणातीतिबलप्रः । मूलविभुजादित्वात्कः । सतां
भक्तानामामदोबलप्रश्चअथवजस्वोयस्यससदामदबलप्रायः । सोदयेनसतामारोग्यप्र
द्धकारीत्यर्थः । उद्यन्नद्येत्यादिश्रुतेरितिभावः । समुद्भूतरसः । घर्मकालसंशोधितस
लिलः । प्रतीतविक्रमः । प्रसिद्धःस्वगतिः । यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषुशु
काहिकपिभेकेषुहरिर्नाकपिलेत्रिष्वित्यमरः । नदेवमुपमानयोरुपमेयेचार्थत्रयवचना
दर्थत्रयवाच्येषुत्रिभेदः । एतावदेवकवेर्विवक्षितमतोऽन्यदास्तुवाच्यमुपेक्ष्यमेव । अत्रा
परोहरिरिवेत्यपरशब्दप्रयोगादुत्प्रेक्षेनोपमा । अपरेन्द्रस्यार्कस्यवाप्रसिद्धेः । प्रसिद्धि

द्धसादृश्यवर्णनमुपमा । प्रसिद्धताद्रूप्यारोपेरूपकम् । प्रसिद्धताद्रूप्याभावनमुत्प्रेक्षा । अतएवलक्षयन्ति । अप्रकृतगुणक्रियाभिसंधानप्रकृतत्वेनप्रकृतस्याप्रकृतत्वाध्यवसायप्रतीतेरिवशब्देनतस्यसाध्यत्वप्रतीतेरुत्प्रेक्षेवेतिसर्वस्वकारः ॥ तस्मादिवशब्दमात्रप्रयोगएवोपमाद्वारशब्दमात्रप्रयोगोऽतिशयोक्तिः । उभयोःप्रयोगेतदुत्प्रेक्षैवेतिविवेकः । अतएवात्रानेकार्थवर्णनव्यवस्थिभिरपरशब्दस्यान्यार्थता व्यतिरेकेणार्थान्तरकल्पनापिनालङ्कारिकाणांपंथाः । श्लेषस्यात्रोत्प्रेक्षाबीजभूतंसाधर्म्यनिर्वाहमत्रोपक्षीणतयातदंगमेतिसङ्करइत्यलंप्रसक्त्या ॥ ११६ ॥ ************************ ॥

॥ द्विधेति ॥ शत्रवःएकमपि । तंहरिंद्विधाद्वित्वेन । त्रिधात्रित्वेनचतुर्द्धाचतुष्टयेनप

अर्थत्रयवाची । द्विधात्रिधाचतुर्द्धाचतमेकमपिशत्रवः । पश्यन्तः स्पर्द्धयासद्यःस्वयम्पञ्चत्वमाययुः ॥ ११७ ॥ सदैवसम्पन्नवपूरणेषु सदैवसम्पन्नवपूरणेषु । महोदधेस्तारिमहानितान्तंमहोदधेस्तारिमहानितान्तम् ॥ ११८ ॥ ***********

श्यन्तः । भयात्तथाभ्राम्यन्तइत्यर्थः । स्पर्द्धयामत्सरेणसद्यः । स्वयंपञ्चत्वंपञ्चधाभावंमरणमाययुः । मत्सरिणस्तदधिकमाचरन्तीतिभावः । स्यात्पञ्चधाकालधर्मोदिष्टान्तःप्रलयोऽत्ययः । अन्तोनाशोद्वयोर्मृत्युर्मरणंनिधनोस्त्रियामित्यमरः । पाञ्चभौतिकस्यशरीरस्यपञ्चधाभावःपञ्चता । अत्रस्पर्द्धेतिहेतोरुत्प्रेक्षासाचव्यञ्जकाप्रयोगाद्गम्यास्पर्द्धयेत्यर्थः ॥ ११७ ॥ ***************************** ॥

॥ सदेति ॥ सदैवसर्वदैव । संपन्नंसर्वलक्षणसमयंवपुर्यस्यससम्पन्नवपुर्नित्यपरिपूर्णमूर्तिः । संहितायांढ्लोपेपूर्वस्यदीर्घोऽणः । अस्तंनिरस्तमरीणांमहस्तेजोयेनासौअस्तारिमहाःमहानधिकः । सहरिः । दैवसंपत् भाग्यसंपत्तिःसैवनवंपूरणंप्रत्यग्रसाधनं

येषांतेषुदैवसंपन्नवपूरणेषुदैवसहायेषुरणेषु । महोदधेर्मर्हार्णवस्य । इतानंप्राप्तपारंस
मुद्रपारगामिनितानंतारिमतस्तेजोदधेर्धारयामास । अर्द्धाभ्यासलक्षणसमुद्गयमकभे
दः । अर्द्धाभ्यासःसमुद्गःस्यादस्यभेदास्त्रयोमताइत्युक्तं । उपेन्द्रवज्रावृत्तम् ॥११८॥

॥ इष्टमिति ॥ शार्ङ्गंपाणौयस्यशार्ङ्गपाणेःकृष्णस्य । प्रहरणार्थेभ्यःपरेनिष्ठासप्तम्यौभ
वतइतिपाणेःपरनिपातः । पत्रिणोबाणाःइष्टमर्थंशत्रुवधात्मकंकृत्वा । आधोमुख्यं
आधोमुखत्वमेत्यप्राप्यआशुभूमिमाविशन् । मुध्यालोहमुध्यायुक्तानां । तथापिभर्त्रा
स्वामिनावैरिवर्गस्यमध्येक्षिप्तानांपातितानांएतदेवआधोमुख्येनकाचिन्निलयनमेवानुरू
पमुचितं । सामान्येनविशेषणसमर्थनरूपोऽर्थान्तरन्यासः । जगतंवैश्वदेवीवृत्तं । प
ञ्चाश्वैश्छिन्नावैश्वदेवीममौयाविति लक्षणात् ॥ ११९ ॥ ************* ॥

इष्टङ्कृत्वार्थम्पत्रिणःशार्ङ्गपाणेरत्याधोमुख्यम्प्राविश
सम्पुटकम् । 
न्भूमिमाशु । मुद्धायुक्तानाम्वैरिवर्गस्यमध्येभर्त्राक्षिप्तानामेतदेवा
नुरूपम् ॥ ११९ ॥ ※※※※※※※※※※※※※※

॥ सत्वमिति ॥ भव्यःकल्याणमूर्त्तिः । नव्योऽघश्चयःश्रुद्विसयेनसनव्याघश्चयश्रुद्धः
श्रीवत्सस्यलाञ्छनविशेषस्यभूमिर्वक्षस्थलउद्धृततरउन्नततरायस्यसउद्धृततरश्रीवत्सभूमिः
धाममयात्तभीःनिर्भीकः । परेशत्रवएवमृगास्तेषांव्याधःमृगयुरित्यश्लिष्टरूपकम् ।
व्याधोमृगवधाजीवोमृगयुर्लुब्धकोपिचेतिअमरः । उदयीतिअभ्युदयवान् । नित्ययोगे
मत्वर्थीयः । सहरिःपूर्वंआजिरभसात्रणागात्मानविशिष्टमहंकारोद्धुरंसत्वंबलंआत्त
ध्यास्थीयमुदाउत्साहेनहरेःसिंहस्यनादंमुक्त्वासिंहनादंकृत्वेत्यर्थः । समकालमेकका
लं । अत्यन्तसंयोगेद्वितीया । एकओघोयेषांतेएकौघैः । एकप्रहारैरोपैरिवुभिरभ्र
माकाशंतदानस्मिन्काले । आततारेआच्छादयामास । चटत्कृतनामितिगुणः । चक्र

बंध्याख्यश्चित्रविशेषोलङ्कारः। पूर्वोक्तरूपकेणतंलक्ष्यते । चक्रबंधोद्धारस्तुदशमंडलरेखात्मकेनेनवमण्डलान्तरावलतिचक्रेनाभिस्थानेनसहैकोनविंशतिकोष्ठंप्रत्येकंद्व्यक्षरंपंक्तित्रयंसमरेखांलिखित्वातत्रैकस्यांपंक्तौवामपार्श्वप्रक्रमेणआद्यपादमालिख्यतथाप्रादाक्षिण्येनद्वितीयत्रितीययोर्द्वितीयातृतीयेलिखित्वातेनाभिस्थानेबाह्यवलयेनसाक्षरकोष्ठषट्केनसहाष्टादशकोष्ठवतीतृतीयपदं । तत्कोष्ठवर्त्तिमारभ्यप्रादाक्षिण्येनचतुर्थपादंलिखित्वातथैवसमापयेत्। तत्रनाभिस्थानेआद्यपदत्रयदशमाक्षरसंवादः। तत्राद्यनवमैः सहबाह्यवलयेचतुर्थपादोद्धारः। तृतीयान्तकोष्ठेनतद्वर्णेनचतुर्थाद्यन्तवर्णयोःसंवादः। तृतीयवलयेमाघकाव्यमिदं। षष्ठेशिशुपालवधइतिकविकाव्यनामोद्धारः।शार्दूलविक्रीडितंवृत्तम्॥ १२० ॥ ********************** ॥

॥ इतिश्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितेमाघव्याख्यानेसर्वङ्कषाख्येएकोनविंशतिःसर्गःसमाप्तः ॥ १९ ॥ ** ॥

सत्वम्मानविशिष्टमाजिरभसादालम्ब्यभव्यः पुरोलब्धाघक्षयशुद्धि
रुद्धततरश्रीवत्सभूमिर्म्मुदा । मुक्त्वाकाममयास्तभीःपरमृगव्याधः
सनादंहरेरेकौघैःसमकालमभ्रमुदयीरोपैस्तदातस्तरे ॥ १२० ॥
चक्रबन्धः ॥ इतिदत्तकसूनोर्माघस्यशिशुपालवधेमहाकाव्येएकोनविंशतिःसर्गः ॥ १९ ॥ ***********



। अथहरिशिशुपालयोर्युद्धंवर्णयितुमुपोद्घातंकरोति । मुखमिति । इतीत्थंसमितावा
जौ । समित्याजिसमिद्युधमित्यमरः । विक्रमान्मुरारेःपराक्रमान् । अमृष्यन्असहमा
नः । अतएवतिस्रोरेखास्त्रिरेखाः । दिक्संख्येसंज्ञायामितिसमासः । ताउल्लसितात्रिो
धादुद्गतायस्मिंस्तदुल्लसितत्रिरेखं । क्वचित्त्रिलोकमित्यपिपाठः । तथाभिदुरेणग्रंथि
लेनभ्रूयुगेनभीषणंभयंकरंउच्चैरुन्नतंमुखंदधानः । चेदिषुराजतेचेदिराट् । संपदादि
भ्यःक्विप् । यद्वा । चेदीनांराट्चेदिराट् । अन्येभ्योपिदृश्यतेइतिक्विप् । राजाराट्पा
र्थिवःक्ष्माभृदित्यमरः । गतभीःनिर्भीकःसन्मुरारिंहरिंआह्वत । अयमहंकालिमामभ्युपै
हीतिससर्जयाअमर्षादाकारयामासेत्यर्थः । विनाशकालेविपरीतबुद्धेर्दुर्वारत्वादिति

मुखमुल्लसितत्रिरेखमुच्चैर्भिदुरभ्रूयुगभीषणंदधानः । समितावि
तिविक्रमानमृष्यनगतभीराह्वतचेदिराण्मुरारिम् ॥ १ ॥ शितच
क्रनिपातसम्प्रतीक्षम्वहतःस्कन्धगतञ्चतस्यमृत्युम् । अभिशौरि
रथोथनोदिताश्वःप्रययौसारथिरूपयानियत्या ॥ २ ॥ ***

भावः । सर्ज्जयामाङ्इतिह्वयतेर्लुङिमङ् । आत्मनेपदेष्वन्यतरस्यामितिच्लेरङादेशः
अत्रामर्षस्यविशेषणगत्या आह्वानहेतुकंकाव्यलिङ्गम् । सर्गेस्मिन्नौपच्छन्दसिकंवृत्तंवै
तालीयेगुर्वाधिक्यात् । तदुक्तंवैतालीयंद्विस्वराअयुक्पादेयुग्वसठेतोगलऔपच्छन्दसिक
मिति ॥ १ ॥ ************************************** ॥
॥ शितेति ॥ अथआह्वानानन्तरं । शितचक्रनिपातंशितस्यसुदर्शनप्रहारंसंप्रतीक्षतइ
तिशितचक्रनिपातसंप्रतीक्षं । ईक्षतेःकर्मण्यण् । स्कन्धगतमस्यमृत्युंवहतः । तस्यचै
द्यस्यरथस्सारथिरूपयानियत्याविधिनेतिरूपकं । भाग्यंस्त्रीनियतिर्विधिरित्यमरः ।
नोदिताश्वःप्रेरिताश्वःसन् । अभिशौरि । शौरिमभि । आभिमुख्येअव्ययीभावः । अ

व्ययादाशुपङ्क्तिच्युपोन्तुक् । प्रत्ययौ प्रत्यये ॥ २ ॥ ****************** ॥

॥ अभीति ॥ अथ शौरेः कृष्णस्य रथोऽपि । जागुडो देशविशेषः तज्जयत्कुङ्कुमं तद्वदभिताम्रैररुणैरित्युपमा । यावककुङ्कुमेति पाठे यावककुङ्कुमाभ्यामभिताम्रैरित्यर्थः । गुरूणां नेमीनां चक्रधाराणां निपीडनेन नोदनेनावदीर्णेभ्यो व्यसूनां विगतप्राणानां देहेभ्यः स्रुतैः शोणितैरसृग्भिरवनिं विलिम्पन् उपदिग्धां कुर्वन् सन् । अभिचैद्यं चैद्यमभि । समासो वा विकल्पात् । अगात् । इणो गा लुङीति गादेशः ॥ ३ ॥ ********* ॥

॥ स इति ॥ निरायतोऽतिदीर्घः । केतनांशुकान्तः ध्वजपटाञ्चलो यस्य सः । कलनिःक्वाणैः मधुरस्वरैः करालाः कुशलाः प्रगल्भाः किङ्किण्यः क्षुद्रघण्टिका यस्य सतथोक्तः । न

अभिचैद्यमगाद्रथोऽपि शौरेरवनिं जागुडकुङ्कुमाभिताम्रैः । गुरुनेमिनिपीडनावदीर्णव्यसुदेहस्रुतशोणितैर्विलिम्पन् ॥ ३ ॥

स निरायतकेतनांशुकान्तः कलनिःक्वाणकरालकिङ्किणीकः । विरराज रिपुक्षयप्रतिज्ञामुखरो मुक्तशिखः स्वयन्नु मृत्युः ॥ ४ ॥ **

इत्यस्येति कप् । किङ्किणी क्षुद्रघण्टिकेत्यमरः । स रथः स्वयं रिपुक्षयस्य शिशुपालवधस्य प्रतिज्ञया मुखरो वाचालः । अत एव मुक्तशिखो मुक्तकेशः । विरराज । नाहमेनमहत्वा शिखाबन्धं करिष्यामीत्युद्घोषयन्नित्यर्थः । स्वयं साक्षान्मृत्युर्नान्तकः किमित्युत्प्रेक्षा ॥ ४ ॥ ************************** ॥

॥ सजलेति ॥ सजलो योऽम्बुधरः तस्यारवः गर्जितमनुकरोतीति तथोक्तः । तद्वद्गम्भीर इत्यर्थः । उपमालङ्कारः । आपूरितदिङ्मुखो व्याप्तदिगन्तो रथस्य यस्य स्वरः यस्य ध्वनिः कण्ठाः कण्ठाः येषां तैरूर्ध्वकण्ठैः । आकस्मिकघनरवलोभाद्विस्मयदर्धोन्नमितकन्धरैरित्यर्थः । शितिकण्ठैर्नीलकण्ठैः मयूरैः गुणीकृताः अनिताः रोचिताः केकायितैः केकाभिरुत्कर्णितद्वृथा नया

। केकावाणीमयूरस्येत्यमरः । उपकर्णयाम्बभूवे । मेघरवभ्रान्त्याश्रुतवैरित्यर्थः ।
एतेनभ्रान्तिमदलङ्कारेणव्यज्यतेइतिवस्तुनालङ्कारध्वनिः ॥ ५ ॥ ******** ॥
॥ अभीति ॥ चेदिराजःशिशुपालः । राजाहस्सखिभ्यःइच । विदर्भराजपुत्र्याहक्मि
ण्याःकुचयोर्यत्काश्मीरजंकुङ्कुमन्तच्चिन्हं यस्यतदच्युतोरःकृष्णवक्षःअभिवीक्ष्य । चिरसेवि
तयाचिरोपयुक्तापिरुक्मिणीहरणात्प्रभृतिसंभृतयापीत्यर्थः । रुषारोषेणतदैवतदानीमि
वेत्युत्प्रेक्षा । सहसायोगंसम्बंधमवाप । यथाकामीकामुक्यन्तरभोगविह्नदर्शनेनोद्दीप्तः
कान्तयासंयुज्यतेतद्वदित्यर्थः । परमार्थस्तुरूपएवकोपोवैदर्भीकुचकुङ्कुमदर्शनादुद्दी

सजलाम्बुधरारवानुकारी ध्वनिरापूरितदिङ्मुखोरथस्य । प्रगुणीकृत
केकमूर्ध्वकण्ठैः शिखिकण्ठैरुपकर्णयाम्बभूवे ॥ ५ ॥ अभिवी
क्ष्य विदर्भराजपुत्रीकुचकाश्मीरजचिन्हमच्युतोरः । चिरसेवितया
धिचेदिराजः सहसावापरुषातदैवयोगम् ॥ ६ ॥ जनिताशनि
शब्दशङ्कमुच्चैर्धनुरास्फालितमध्वनन्नृपेण । चपलानिलचोद्यमा
नकल्पक्षयकालाग्निशिखानिभस्फुरज्ज्यम् ॥ ७ ॥ ****

पकाइत्यर्थः । अत्रप्रस्तुतनविशेषणसाम्यादप्रस्तुतकान्ताप्रतीतेःसमासोक्तिः । उक्तोत्प्रे
क्षात्वंगम्यते ॥ ६ ॥ ************************** ॥
॥ जनितेति ॥ नृपेणचेदिपेनआस्फालितंसंघटितं । अतएवचपलानिलेनतीव्रानि
लेन चोद्यमानस्यप्रेर्यमाणस्यकल्पक्षयकालाग्नेर्याशिखाज्वालातयासमानंनिभा इति
नित्यसमासः । सास्फुरन्तीदोधूयमानाज्यामौर्वीयस्यतत्तथोक्तम् । धनुर्जनितोत्पा
दिताअशनिशब्दशंकायस्मिन्कर्म्मणितत्तथोक्तम् । उच्चैस्तारमध्वनत् । अत्राशनि
भेत्युपमायाअशनिशब्दशंकेतिभ्रान्तिमतएवास्फालितमध्वनदितिपदार्थहेतुकंकाव्यलि

ङ्गत्वस्तापेक्षत्वात्संकरः ॥ ७ ॥ ************************** ॥

॥ समेति ॥ अथधनुरास्फालनानन्तरं । नरस्त्रीवचवान्सचैद्यःसमकालमिवेत्युत्प्रेक्षा। अत्यन्तसत्त्व्यौंगेद्वितीया । अभिलक्षणीयादृश्याग्रहणंसंधानंमौर्व्यायोजनंविकर्षणमाकर्षणमपवर्गोमोक्षस्त्वयेषांतैःशरैः । साभिसरंसानुरवंउपेंद्रंहरिंनिरस्कर्तुमाख्यापयितुमभ्यवर्षत् ॥ ८ ॥ ************************** ॥

॥ ऋजुनेति ॥ ऋजुनामवक्रत्वंअकुटिलबुद्धित्वं । फलंश्रत्यंश्रेयस्तेनयोगः । शुद्धिर्दौर्हः शुद्धिर्निर्विषयत्वञ्च । अन्यत्रवाह्याभ्यन्तरंशुद्धिस्तांभजतोनिनद्वानां । गुरोर्महतःपक्षस्यकंकादिपत्रस्यसहायस्यचाश्रयः । आश्रयणमेषामस्तीतिगुरुपक्षाश्रयिणांशिलीमुखानांशराणां । गुणिनाज्यावतानतिमागतेनआकर्षणाकुञ्चितकोटित्वंविधेयत्वञ्चप्राप्तेनचापेनसहसंधिःसम्बन्धसमंजसःसाधीयान्बभूव । अवलवता[?]वलिनासहनम्रेणसंधिरेवोचितेतिभावः । अत्रप्रस्तुतचापशिलीमुखयोर्विशेषणसाम्यादप्रस्तुतारिविजिगिषुवस्तुप्रतीतेःसमासोक्तिः । नचसाम्यंवाच्यप्रतीयमानयोरभेदाध्यवसायात्सिद्धम् । नचात्रसमानालङ्कारशंकाकार्यासमानालंकृतिर्योगेवस्तुनोरनुपयोरित्यनुरूपयोरिववस्तुयोगेनतस्योपस्थापनात्संधेयाजिगीषुगुणयोगिनोरिवयोगादिभेदात् ॥ ९ ॥ **

समकालमिवाभिलक्षणीयग्रहसन्धानविकर्षणापवर्गैः । अथसाभिसरंशरैस्तरस्वीसनिरस्कर्तुमुपेन्द्रमभ्यवर्षत् ॥ ८ ॥ ऋजुनफलशुद्धियोगभाजाङ्गुरुपक्षाश्रयिणांशिलीमुखानाम् । गुणिनानतिमागतेनसन्धिःसहचापेनसमञ्जसोबभूव ॥ ९ ॥ **

॥ अविषह्येति ॥ वशिनास्वतंत्रेणचेदिपार्थिवेन । अविषह्यनमेदुष्करे कर्मण्यरिजयव्यापारेकृताधिकारंकृतनियोगंनियुज्यमानमित्यर्थः । अतएवदृढयोरत्नीः कोट्योःप्रव

भाकर्षणेनवेपमानाः दोधूयमानाजीवाज्यायस्तत् । अन्यत्रदृढाकर्षणताडनेनप्रसभाकर्ष णेनचवेपमानःकम्पमानोजीवाप्राणोयस्येत्यर्थः । आर्त्तिःपीडाधनुष्कोट्योरित्यमरः । जीवाप्राणोस्त्रीणांतुजन्तावात्मनिगियन्तौ । त्रिपुजीवतिगौर्व्यीस्त्रीनिवैजयन्ती । धनु रुच्चैरसरत् । अध्वनदाक्रन्दद्वा । यथाराज्ञानियुक्तोपराधीनःसंकुलवचादाक्रोशमा न कोशतितद्वदित्यर्थः । अत्रापिप्रकृतविशेषणसाम्यादप्रकृतापराधिकृतपुरुषप्रती तेःसमासोक्तिः ॥ १० ॥ **************************** ॥

॥ अन्विति ॥ अथाकर्षणानन्तरं । क्षितिभर्तुश्चैद्यस्यधनुषःसकाशात्अनुसन्तत्यापत

अविषह्यतमेकृताधिकारम्बशिनाकर्मणिचेदिपार्थिवेन । असरद्ध नुरुच्चकैर्दृढार्त्तिप्रसभाकर्षणवेपमानजीवम् ॥ १० ॥ अनुसन्त तिपातिनःपटुत्वन्दधतःशुद्धिभृतोगृहीतपक्षाः । वदनादिववादि नोथशस्त्राःक्षितिभर्तुर्धनुषःशराःप्रसस्रुः ॥ ११ ॥ गवलासित कान्तितस्यमध्यस्थितघोरायतवाङ्कदण्डनासम् । ददृशेकुपितान्त कोत्कमभ्रूयुगभीमाकृतिकार्मुकन्जनेन ॥ १२ ॥ ******

न्तीतिअनुसंततिपातिनोविच्छेदवर्त्तिनः । पटुत्वंलक्ष्यभेदपाटवंवाचकत्वञ्चदधतः शुद्धिभृतःलोहशुद्धिभृतःनिर्विषावा । अन्यत्रसाधवइत्यर्थः । गृहीतपक्षाःस्वीकृतकंका दिपत्राः । अन्यत्रगृहीतनित्यत्वादिसाध्यार्थाः । पक्षःपार्श्वगरुत्साध्यसहायबलभि त्तिषुचेतिवैजयन्ती । शराःवादिनःकथकास्यवदनात्वक्षाःप्रतिज्ञाहेत्वादयइवप्रसस्रुर्नि र्जग्मुः । श्लिष्टविशेषणेयमुपमेतिकेचित् । श्लेषएवप्रकृताप्रकृतविषयइत्यन्ये ॥ ११ ॥

॥ गवलेति ॥ गवलंमाहिषंशृङ्गमित्यमरः । तद्वदसितकान्तिःकृष्णवर्णः । मध्येस्थिता घोराभीमाआयताचवाङ्कदण्डनासानासिकेयस्मिन्तत्तथोक्तं । कुपितस्यान्तकस्यभृत्यो

रुमन्तं यद्भ्रूयुगं तद्वन्ती माः आकृतिर्यस्य तत्तस्य चैद्यस्य कार्मुकं जनेन ददृशे दृष्टं । स्वभयवि स्मयनिमित्तभावः । उपमालङ्कारः ॥ १२ ॥ ****************** ॥

॥ तडिदिति ॥ तडिद्वदुज्ज्वलात्दीप्ताज्जातरूपस्य हेम्नः पुङ्खाः कर्त्तर्यो येषां तैः । अयसा अयोवत्श्याममुखैः श्यामाग्रैश्चरद्भिर्ध्वनद्भिर्ध्वनिभिः स्वनत्सैर्गर्जद्भिश्च । रंहसा वेगेन पतद्भिर्धावद्भिः संहतिशालिभिः संघशालिभिः शरौघैर्जलदैरिव खमाकाशं पिदधे पिहित म् । कर्मणि लिट् । वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोरित्यपेरकारलोपः । उपमाल ङ्कारः ॥ १३ ॥ ***************************** ॥

॥ शितेति ॥ सुवर्णपुङ्खाः सुवर्णकर्त्तरिकाः शराः । शितैर्निशितैः शल्यमुखैः फलाग्रैः अव

> तडिदुज्ज्वलजातरूपपुङ्खैः खमयः श्याममुखैरभिध्वनद्भिः । जल
> दैरिव रंहसापतद्भिः पिदधे संहतिशालिभिः शरौघैः ॥ १३ ॥
> सितशल्यमुखावदीर्णमेघक्षरदम्भःस्फुटतीव्रवेदनानाम् । स्रवद
> स्रुततीव चक्रवालं ककुभामासुनुवुः सुवर्णपुङ्खाः ॥ १४ ॥ **

दीर्णा अवभिन्ना ये मेघास्तेभ्यः क्षरता स्रवता अम्भसा स्फुटा व्यक्ता तीव्रा वेदना यासां । ककुभां समाधिनो स्रवन्तो अस्रुततीस्रुसंतानिर्यस्य तद्विव शरप्रहारवेदनया रुदद्दिव स्थितमित्युत्प्रे क्षा । चक्रवालं मण्डलं मासुनुवुः आच्छादयामासुः । ऊर्णोतेर्लुङ्‌लीडागमेनस्य विभाषो र्णोरिति ङित्वपक्षे ऊर्णोतेर्विभाषेति वृद्धिविकल्पात्पक्षे गुणः अजादित्वाद्द्विः ॥ १४ ॥

॥ अमनोरमेति ॥ विशिखैश्चैद्यबाणैः कर्तृभिः । पिहिता हिमद्युतिस्तिरोहितार्का । अत एवामनोरमता यस्य प्राप्तवती । इणः शतरि उगितश्चेति ङीप् । द्यौराकाशं जनस्य भीमा लोकस्य लोकपथान् दृष्टिमार्गान् क्षणं रुरुधे रुद्धा । रुधेः कर्मणि लिट् । अत्र रोधस्यापा यत्वात् ध्रुवमपाये इति पञ्चमी । तया नरितामुनानिरोहितकला । अत एवामनोरमाय

नीधरित्रीनभःसदांबालोकपथान्रुरुधेवकारोजनसमुच्चयार्थः । अत्रद्युधरित्र्योःप्रक
नघारेवरोधाख्यतुल्यधर्मयोगात्तुल्ययोगितानाभेदःताभ्यामेवजनस्यनभःसदांयथासंख्याल
ङ्कारःतयासापेक्षत्वात्सङ्कीर्य्यते ॥ १५ ॥ ********************* ॥
॥ विनीति ॥ नराधिपेनसकलस्यापिमुरद्विषोहरेर्बलस्यसैन्यस्यविनिवारितोभानुना
येनतदेकमद्वितीयं । शरजालमयंबाणवृन्दात्मकंकरुमहत्सद्मेवसदयमिवेत्युत्प्रेक्षा ।
समंयुगपत्समन्तात्तेनेततमित्यर्थः । तनोतेःकर्मणिलिट् ॥ १६ ॥ ******* ॥

अमनोरमतांयतीजनस्यक्षणमालोकपथान्नभःसदांब । रुरुधेपि
हिताहिमद्युतिर्दीधितिर्विशिखैरन्तरिताच्युताधरित्री ॥ १५ ॥ वि
निवारितभानुतापमेकंसकलस्यापिमुरद्विषोबलस्य । शरजालम
यंसमंसमंतादुरुसद्मेवनराधिपेनतेने ॥ १६ ॥ इतिचेदिमही
भृतानदानीन्तदनीकन्दनुसूनुसूदनस्य । वयसामिवचक्रमक्रि
याकम्परितोरोधिविपाटपञ्जरेण ॥ १७ ॥ इषुवर्षमनेकमेक
वीरस्तदरिप्रच्युतमच्युतःपृषत्कैः । अथवादिकृतम्प्रमाणमन्यैःप्रणि
गसम्प्रतिवादिवत्प्रमाणैः ॥ १८ ॥ ********

॥ इतीति ॥ इतीत्थं । चेदिमहीभृताचैद्येन । तदानीन्तत्काले । दनुसूनुसूदनस्य
दानवान्तकस्यहरेस्तदनीकंबलं । वरूथिनीबलंसैन्यंचक्रञ्चानीकमस्त्रियामित्यमरः । व
यसांचक्रंपक्षिसंघइवअक्रियाकंनिश्चेष्टंयथातथा । विपाटयन्तीतिविपाटाःशराः । प
चाद्यच् । तैरेवपञ्जरेण । परितःसर्वतःअरोधिरुद्धः । रुधेःकर्मणिलुङ् । उपमा ॥ १७
॥ इष्विति ॥ अथानिकरोधनानन्तरं । एकवीरोमहाशूरोऽच्युतोहरिररिप्रच्युतंशत्रुग
लितंतदनेकमपरिमितमिषुवर्षंपृषत्कैर्बाणैः । वादिकृतंवादिनाप्रयुक्तंप्रमाणमथमानं

अन्यैःप्रमाणैःप्रत्यनुमानैःप्रतिवादीवप्रतिपरिताःपरिनिराकरोत्। इवेनसमासोविभक्त्यलोपश्चे
निसमासान्समासगतपूर्णोपमा ॥ १८ ॥ ****************** ॥

॥ प्रतीति ॥ प्रतिकुञ्चितकूर्परेणकुञ्चितकफोणिना। स्यात्कफोणिस्तुकूर्परइत्यमरः।
तेनहरिणा। श्रवणोपान्तिकंनीयमानाआकृष्यमाणागव्याज्यायस्यतत्। गव्यंगवांहि
तेगव्याज्यायांक्षीरादिकेगवामितिविश्वः। धनुःशार्ङ्गःघनान्तेशरदियेमत्ताः। प्रचुराभू
रयःकौञ्चास्तेषांरवमनुकरोतीतितदनुकारंकौञ्चकूजितसदृशंयथातथेत्यर्थः। कर्मणय
ण्। उच्चैस्तारंध्वनतिस्मध्वानाः। नदस्मेदनिभूतेतद। स्वभावोक्त्युपमयोःसङ्करः ॥
१९ ॥ ****************************** ॥

प्रतिकुञ्चितकूर्परेणतेनश्रवणोपान्तिकनीयमानगव्यम्। ध्वनति
स्मधनुर्घनान्तमत्तप्रचुरक्रौञ्चरवानुकारमुच्चैः ॥ १९ ॥ उरसा
विततेनपातितांसःसमयूराञ्चितमस्तकस्तदानीम्। क्षणमालिखितो
नुसौष्ठवेनस्थिरपूर्वापरमुष्टिनावभासे ॥ २० ॥ *****

॥ उरसेति ॥ तदानींधनुष्कर्षणसमये। विततेनविस्तारितेनोरसाउपलक्षितः। पाति
तांसोनमितस्कन्धः। मयूरवदञ्चितंमनोहरंमस्तकंयस्यसः। उन्नमितमूर्द्धेत्यर्थः।
स्थिरौदृढौपूर्वापरौअग्रिमचरणौमुष्टिगृहीतमस्तकंमौर्वीकोपार्श्वीयस्यसतहरिः। सुष्ठु
भावःसौष्ठवंतेनसौष्ठवेनस्थानकपाटवेनहेतुना। क्षणमालिखितोऽनुलिखितइवाबभौ
। नुशब्दोवितर्कार्थोऽनुपृच्छायांवितर्केचेत्यमरः। इवशब्दोपितादृशइत्युत्प्रेक्षालङ्कारो
यंव्यज्यते ॥ २० ॥ ****************************** ॥

॥ ध्वनतइति ॥ ध्वनतोगर्जतः। तडितइवाकारोयस्यसतडिदाकारः। चलनातेजो
मयत्वाच्चाचिरप्रभाकारस्चलतगुणोमौर्वीयस्यतस्मात्। मौर्वीज्यासिंजिनीगुणाइत्यम

रः । धनुषःशार्ङ्गात्गुर्व्योमहत्यः । असंख्याअपरिमिताइषवोऽम्बुधरान्मेघात्अम्बुधारा
इवाम्बुसतशब्दंन्यपतन्न्यस्रवान् । अत्रोपमानोपमेययोरेकलिंगतानयादिषुशब्दोऽपि
लिगे।पिस्त्रीलिङ्गएवप्रयुक्तइतिज्ञापनायगुर्व्यइतिविशेषणम् ॥ २१ ॥ ***** ॥
॥ शिखरेति ॥ शिखरंशृङ्गमिवोन्नतंनिष्ठुरंचांसपीठंयस्यसः । एकदिगन्तंदिग्भागंस्थ
गयन् । आयतान्तोदीर्घिष्ठःस्वरूपः । अन्तोऽस्यवसितेमृत्यौस्वरूपेनिश्चयेन्तिकइति
वैजयन्ती । सदाप्रसारितःनतुपुनःपुनरितिश्लेषोक्तिः । अस्यहरेरेकबाहुश्चापरेषाम
बाहुरित्यर्थः । चमूभिःक्षितिभर्त्तैवभूधरइवनिरवर्णिसाधुनिरीक्षितःइत्यर्थः । निर्व

ध्वनतानितरांरयेणगुर्व्यस्तडिदाकारचलद्गुणादसंख्या। इषवोधनु
षःसशार्ङ्गमाम्नुन्यपतन्नम्बुधरादिवाम्बुधाराः ॥ २१ ॥ शिखरोन्न
तनिष्ठुरांसपीठःस्थगयन्नेकदिगन्तमायतान्तः । निरवर्णिसदाप्रसा
रितोऽस्यक्षितिभर्त्तैवचमूभिरेकबाहुः ॥ २२ ॥ नमकुण्ठमुखाः
सुपर्णकेतोरिषवःक्षिप्तमिषुव्रजम्परेण । बिभिदामनयन्तकृत्यपक्ष
न्नृपतेर्नेतुरिवायथार्थवर्णाः ॥ २३ ॥ * * * * * * * * *

र्णनन्तुनिध्यानंदर्शनालोकनेक्षणमित्यमरः ॥ २२ ॥ ************* ॥
॥ नमिति ॥ अकुण्ठमुखानिशिताग्राःप्रगल्भगिरश्च । सुपर्णकेतोर्गरुडध्वजस्यहरेरि
षवः । परेणारिणाक्षिप्तंमुक्तंइषुव्रजं । अयथार्थवर्णाः । असत्याक्षराःकपटवचनाःउभ
यवेत्ताइत्यर्थः । नेतुर्नायकस्यजिगीषोः । नृपतेःकृत्यज्ञेयःयथावर्णास्तुचारःप्रणधिरे
वचेत्युत्पलमाला । पक्षंअमात्यादिभेदवर्गमिव । कृत्याक्रियादेवतयोस्त्रिषुभेद्येधनादि
भिरित्यमरः । बिभिदांभेदं । षिद्भिदादिभ्योऽङ् । अनयन्त । स्वरितइत्यात्मनेपद
म् ॥ २३ ॥ ************************** ॥

॥ दयितैरिति ॥ उज्ज्वलाः स्फुटाः अङ्गेषु लेखाश्चिह्नलेखा नखरेखा स्येषां तैः । मगरे विशिखैर्दयितैः प्रियैरिव । संमुखं समक्षमेव खण्डिताननना । अभ्यचावमानिता । अतएव विफलाविशल्या अलब्धकामाच । अतएव लघिमानमगुरुत्वं अल्पताञ्चोपेयुषी शरावलिः पृथिव्यां पपात । अत्र प्रकृतशरावलिविशेषसाम्यादप्रकृतखण्डितानायिकाप्रतीतेः समासोक्तिः । दयितैरिव खण्डितेत्युपमाविशेषणान्तःपातित्वादंगमेव । अतएव तच्छविशेषणसाम्यं श्लिष्टतया साधारण्ये नौपम्यगर्भत्वेनेव भवतीत्युक्तं सर्वस्वकारैः । ज्ञानेऽन्याऽसङ्कविक्षतेखण्डितैर्घ्नाकथाकथयितेतिसाम्येऽप्येवं पृथिव्यां पतनितद्वदितिभावः ॥ २४ ॥

॥ प्रमुखइति ॥ पत्राणिवहन्तीतिपत्रवाहाः पत्रिणस्तैश्शराः । कर्मण्यण् । माधवमुक्ता

> दयितैरिवखण्डितामुररे विशिखैः सन्मुखमुज्ज्वलाङ्गलेखैः । लघिमानमुपेयुषीपृथिव्याम्बिफलाशत्रुशरावलिः पपात ॥ २४ ॥ प्रमुखेभिहताश्चपत्रवाहाः प्रसभम्माधवमुक्तवत्सदन्तैः । परिपूर्णतरम्भुवोगतायाः परितः कातरवत्प्रतीपमीयुः ॥ २५ ॥ ******

वत्सदन्तैः शैरिक्षिप्तैः शरैः । प्रसभं बलात् । प्रमुखे शल्याग्रेवदनेचाभिहताः खण्डिताः सन्तः । अतएव कातरैः त्रस्तैस्तुल्यं कातरवत् । तुल्यार्थे वतिप्रत्ययः । परिपूर्णतरं गतायाः अगतत्वं गतायाइत्यर्थः । भुवोऽन्तरलंभूमेः परितः प्रतीपं प्रतिकूलमियुः प्रापुः परिगताश्च । माधवान्तिकात्प्रावृत्यजग्मुरित्यर्थः । चकारः पूर्वश्लोकोक्तपतनसमुच्चयार्थः । केचित्खण्डितास्तत्रैवपेतुः केचिन्मुखेषुप्रतिहताः प्रतिनिवृत्ताइत्यर्थः । कातरवदिति लिङ्गतगताश्रौतोपूर्णोपमा ॥ २५ ॥ **************************** ॥

॥ इतरेतरेति ॥ इतरेतरसन्निकर्षजन्मा । शराणामियः संश्लेषोक्तः । जन्मोत्तरपदत्वाद्व्यधिकरणोऽपिवहुव्रीहिरिष्यते । फलसंघट्टनेन शल्यसंघट्टनेन विकीर्णस्फुलिङ्गा यस्य

सः । कृशानुरग्निर्बलाहकानां पटलानि विहन् अस्वादयन् क्षपयन्नित्यर्थः अपरेषु शत्रुषु
। समरे ष्विति पाठे । समरेषु क्षणमुज्ज्वलन् अदीप्यत । अत्र समरबलाहकानां अग्निदाहा
भ्यामसम्बन्धेपि सम्बन्धोक्तेरतिशयोक्तिः । वारि वहन्तीति बलाहकाः । पृषोदरादित्वात्सा
धुः ॥ २६ ॥ ****************************** ॥
॥ शरदेवेति ॥ विभुना देवेन कर्त्रा शरश्रिया शरसंपदा करणेन । शरदेव शत्रुशिलीमु
खाअभ्राणि वनेषां जाले विभिन्ने सति । विकसन्ति मुखानि वारिजानि इव यासां ता याद्व
ध्वजिन्यः यदुसेना आशा दिश इव प्रकामं बभुः । अनेकेव उपमा ॥ २७ ॥ **** ॥

इतरेतरसन्निकर्षजन्माफलसङ्घट्टविकीर्णविस्फुलिङ्गः । पटलानि
लिहन्बलाहकानामपरेषुक्षणमुज्ज्वलत्कृशानुः ॥ २६ ॥
शरदेवशरश्रियाविभिन्ने विभुनाशत्रुशिलीमुखाभ्रजाले । विकसन्मु
खवारिजाः प्रकाममभ्भुराशा इव यादवध्वजिन्यः ॥ २७ ॥ सदि
वं समचिच्छिदत्स्वरोघैः ध्वाततिग्मद्युतिमण्डलापलापैः । ददृशेथ
च तस्य चापयष्ट्यामिषुरेकैव जनैः सकृद्विसृष्टा ॥ २८ ॥ **

॥ सदिति ॥ ध्वाततिग्मद्युतिमण्डलस्यापलापो यैस्तैराच्छादितार्कमण्डलैरित्यर्थः । शरौ
घैर्दिवमाकाशं समचिच्छिदत् आच्छादयत् निस्त्रंसहरिः । छादेर्णौ चङ्युपधाया ह्रस्वः । अ
त्वभावात्सन्यतइत्यभ्यासस्येत्वं । युक्तं चैतत् । लघुहस्तत्वाद्स्येत्याशयेनोत्प्रेक्षते ॥ अ
थास्मिन्नवसरे तस्य हरेश्चापयष्ट्याइषुः सकृदेकदा विसृष्टा मुक्ता एकैव जनैर्ददृशेदृष्टा च
। इषूनां पुंखापुंखनया द्राघीयानेक एवैषुरेकदैव गच्छतीत्युत्प्रेक्षा इदृशो लघुहस्तस्तस्य सं
च्छादनं युक्तमिति भावः ॥ २८ ॥ ********************** ॥
॥ भवतीति ॥ विपक्षाच्छत्रुकुलादागतः । सपक्षः कंकादिपत्रवान् सुहृत् । सपक्षः नि

दैर्नैर्विधानासुखकरो नभवतिहि यतः स्फुटं । तेनकारणेनकृतमुक्तसोमरौघः शिशुपालब
लानिस्तुतरां नतापदराह । अतः शत्रुकुलादागतः स्वजनोपिनविश्वसनीयइत्यर्थः ।
सपक्षोपिविवर्त्तकरइतिविरोधेपिशब्दः । विपक्षादागतइत्यपिविरोधाद्विरोधाभासः
॥ २९ ॥ ****************************** ॥
॥ गुर्विति ॥ गुरुवेगविराविभिः गुरुणावेगेनविरुवन्तिध्वनन्तीतितथोक्तैः । दैनैर्भिनिः
। शीघ्रवेगविरावबद्भिः । पतत्रैः पक्षैरुपलक्षिताकाञ्चनेनपुंखलिप्तेनपिंगलाङ्गभासः ।
अन्यत्रकाञ्चनरिति विग्रहः । इषवः शैरिशराः । विनतासुतवद्वैनतेयैस्तुल्यंव्यथिना

भवतिस्फुटमागतोविपक्षान्नसपक्षोपिहिनिर्घृणैर्विधाता । शिशु
पालबलानिहान्नमुक्तः स्तुतराम्नेनततापतोमरौघः ॥ २९ ॥ गुरु
वेगविराविभिः पतत्रैरिषवः काञ्चनपिङ्गलाङ्गभासः । विनतासुत
वत्तलम्भुवः सव्यथितभ्रान्तभुजङ्गमम्बिशन्ति ॥ ३० ॥ शतशः प
रुषाः पुरोविशङ्कं शिशुपालेनशिलीमुखाः प्रयुक्ताः । परमर्मभिदो
पिदानवारेरपराधाइवनव्यथाम्बितेनुः ॥ ३१ ॥ *·*·*·*·*

भोषिताः अतएवभ्रान्तामूढाभुजंगमायस्मिन्तत्तथाभुवस्तलंपातालंविशन्तिस्म । तद्विन
गताश्रौतिपूर्णोपमा । पातालप्रवेशासम्बन्धातिशयोक्त्यासंकीर्य्यते ॥ ३० ॥ *** ॥
॥ शतशइति ॥ शिशुपालेनपुरोग्रेविशंकंनिःशङ्कं । शतशः अपराधाःप्रयुक्ताःक्षिप्ताउ
च्चारिताः परुषाः निष्ठुराः परमर्मभिदोपि । शिलीमुखाः शराः । अपराधाः पक्षेदशसर्गो
क्ताः । अभिशापाइवदानवारेर्हरेर्व्यथांदुःखंनवितेनुः खलापकारमहतामकिंचित्करा
इतिभावः । समासगतोपमा ॥ ३१ ॥ ****************** ॥
॥ विहितेति ॥ नृपतिस्तैद्योविहिताअद्भुतालोकइहरिवमायायस्मिन्तस्मिन् । भुवन

क्षयकालेप्रलयकालेयोगनिद्रेऽचिन्तयोगनिद्रे इन्दिरानीमितिभावः । मुररौमायया जयमिच्छन्किल । नतुजेष्यतीतिभावः । स्वापयतीतिस्वापनंअस्त्रंआजहारप्रयुक्तवानित्यर्थः । अनादिमायाधारे सकलभुवनसृष्टिसंहारमहानाटकसूत्रधारे सर्वाङ्गुनतिनाने सकलकलुवधगणपटुनरनामिधानेनपुरणेन्द्र जालिकेभगवतिहरावपिमाययाजिगीषोत्साहोमहानस्ययामोहइतिभावः । अत्रहरिविशेषणैस्तस्यदूर्जयत्वसिद्धेःकाव्यलिङ्गम् ॥ २२ ॥ ****************************** ॥

॥ सलिलेति ॥ सलिलेनार्द्रौयोवराहदेहस्तद्वन्नीलः । भास्करंप्रकाशंकरोतीतिभास्करः । दिवाविभेत्यादिनाटप्रत्ययः । तमर्थशून्याभास्करत्वरूपप्रवृत्तिनिमित्तशून्यासंज्ञाभा

विहितारुड्लोकसृष्टिमायेजयमिच्छन्किलमाययामुररौ । भुवनक्षयकालयोगनिद्रेन्द्रपतिःस्वापनमस्त्रमाजहार ॥ २२ ॥
सलिलार्द्रवराहदेहनीलोविदधद्भास्करमर्थशून्यसंज्ञम् । प्रचलायतलोचनारविन्दम्बिदधेतद्वलमन्धमन्धकारः ॥ २३ ॥ ***

स्कराख्यायस्तंविदधत् । सौरलोकमभिभवन्नित्यर्थः । अन्धङ्करोतीतिअन्धकारः । स्वापनास्त्रप्रभवतमः । कर्मण्यण् । प्रचलानिनिद्राघूर्णितानिआयतलोचनानिएवारविन्दानियस्मिन्कर्मणितत्तथा । सूर्यैनिरोधानेऽरविन्दमुकुलीभावस्यावश्यंभावादितिभावः । तद्वलंहरिसैन्यंअन्धमपश्यंविदधेनिद्राप्राविशदित्यर्थः । अत्रान्धमंधेतिसद्यञ्जनयुग्मपौनरुक्त्यावृत्त्यनुप्रासभेदः । तस्यवराहदेहनीललोचनारविन्देत्युपमारूपकयोःसंसृष्टिः ॥ २३ ॥ ****************************** ॥

॥ गुरवइति ॥ गुरवोधीराःस्वापनयोपितनुपिनिबद्धगापिनानिदद्भुःसुषुपुरितियत्पुनतूनतुपिनिद्राणांवाच्यंनिद्वानभवतिः । कुतःह्रियस्वातेस्वापनयोजागृतोपिप्रबुद्धाअपि

। आगतैःशत्रुभिरस्त्रजक्षित्याद्यःषड्भ्यस्तसंज्ञानाभ्यस्ताच्छतुरितिनुमप्रतिषेधः । स्वपितापदिसर्वापन्निवारकइत्यर्थः । तत्रैवधनुषिनिषण्णाःसंश्रिताअभवन्ननुअत्रसदा धनुराश्रयवाक्यार्थस्यापायत्वमाहेतुत्वाद्वाक्यार्थहेतुकंकाव्यलिङ्गम् ॥ ३४ ॥ *** ॥

॥ स्वपतामिति ॥ अयेतिपूर्वोक्तधनुराश्रयणसमुच्चयेयथातेषांधनुराश्रयणंतथान्येषांधनुर्मलनत्वाभूदित्यर्थः । स्वपतांप्रयत्नशैथिल्यंव्रजतःभजतः । स्वांनिजांधारणशक्तिंवा हननसामर्थ्यंउज्झतःत्यजतः । परेषांराज्ञां । अग्रश्चासौपाणिश्चेतिसमानाधिकरणसमासः । हस्ताग्राग्रहस्तादयोगुणगुणिनोर्भेदाभेदादितिवामनवचनात् । तस्मादग्रपा

गुरवोऽपिनिषद्ययन्निदद्रुर्द्रुतंनुधिष्ण्यापतयोनवाच्यमेतत् । स्वपिता
पदिजाग्रतोऽपिनिद्रान्ननुतत्रैवहितेभवन्निषण्णाः ॥ ३४ ॥ स्व
पतांव्रजतस्तथापरेषामगलद्धारणशक्तिमुज्झतःस्वाम् । सुगृ
हीतप्रमादभाजामनसःशास्त्रमिवास्त्रमग्रपाणेः ॥ ३५ ॥ उचि
तस्वपनोऽपिनीरराशौस्वबलाम्भोनिधिमध्यगस्तदानीम् । भुवनत्रय
कार्यजागरूकःसपरस्तत्रपरःपुमानजागः ॥ ३६ ****

णेःसुगृहीतंसुदृढधृतमपि । अन्यत्रस्वभ्यस्तमपिआयुधंप्रमादभाजांगुणनिकाद्यवधानरहितानां । मनसश्च्युतान्शास्त्रंविद्येवअस्त्रमगलद्भ्रश्यदित्यर्थःनिद्रापारवश्यादित्यर्थः । इवेनसहनित्यसमासात्समासगताश्रौतीपूर्णोपमा ॥ ३५ ॥ ********* ॥

॥ उचितेति ॥ नीरराशौसमुद्रे । उचितस्वपनोऽपिपरिचितनिद्रोऽपि । तदानींसर्वनिद्रावसरेस्वबलाम्भोनिधिमध्यगः । स्वसेनासागरमध्यगतश्च । वटपत्रेशोनिधिरित्यपिपाठः ॥ भुवनत्रयकार्येत्रैलोक्यरक्षाविधौजागरूकःप्रबुद्धः । जागरूकइत्यूकञ्प्रत्ययः । परःपुमान्परमपुरुषः । परंकेवलंहरिरेवेत्यर्थः । परमव्ययमित्यर्थंनिकेवलंइतिविश्वः

। ननु निद्रानलोके अजागः जागर्त्तिस्म । सर्वान्धकारहारिणो नित्यप्रकाशचिदात्मनः सत्तापि कार्य्यग्रस्तस्य कुतो निद्रेति भावः । जागर्त्तेर्लङि तिपि यदादित्वाच्छ्यो लुकि सार्वधा तुकगुणे रपरे रकारलोपे हल्ङ्यादिलोपे च रेफस्य विसर्जनीयः । अत्र समुद्रनिद्रालोक स्यैव जागरे विरोधपरिहारमुखेन कार्य्यजागरूकत्वपरमपुरुषयोर्विशेषणगत्यानात्विकजा गरूकहेतुकत्वाद्विरोधाभासः संकीर्णकाव्यलिङ्गम् ॥ २६ ॥ ********** ॥

॥ अथेति ॥ अथान्धकारव्यासानन्तरं । तस्य हरेर्दृष्टौ चक्षुषि तेजसीत्यर्थः । सूर्यरुचौ सूर्यतेजसीव । कौस्तुभोदर्पण इवेत्युपमितसमासः । सूर्यरुचासलिंगात् । तं कौस्तु भदर्पणं गतायां प्रविष्टायां सत्यां ततः कौस्तुभात् । पटुसर्वांधकारद्रावणे समर्थं धाम तेजश्च

अथ सूर्यरुचीतत्स्य दृष्टावुदभूत्कौस्तुभदर्पणाङ्गतायाम् । पटुधाम
ततो न चाद्भुतमत्र दिभुरिन्दर्कविलोचनः किलासौ ॥ २७ ॥ महत
तः प्रणतेष्विव प्रसादः समगोरंश्च्युचयः ककुन्मुखेषु । व्यकसद्विकसद्वि
लोचनेभ्यो ददृदालोकमनाविलम्बलेभ्यः ॥ २८ ॥ ****

दभूदुदगात् । तद्धामोद्भवनं न चाद्भुतं । कुतः असौ विभुर्भगवान् अर्केन्दुविलोचनेय स्य सकिलखलु । अतस्तच्चक्षुषोरिव सूर्य्यात्मकत्वात्तदभिहितात् कौस्तुभाद्दर्पणादेरिव प्रादुर्भावो व्यज्यत इत्यर्थः । अतो वाक्यार्थहेतुकङ्काव्यलिङ्गम् ॥ २७ ॥ **** ॥

॥ महत इति ॥ सपूर्वांक्रमणोः कौस्तुभस्यांशुचयः । विकसंति उन्मीलयन्ति विलोचनानि येषां तेभ्यो बलेभ्योऽनाविलं प्रसन्नमालोकं दर्शनं तत्वज्ञानञ्च ददृशुः प्रयच्छत् । महतो म हात्मनः प्रसादोऽनुग्रहः । प्रणतेषु भक्तेष्विव ककुन्मुखेषु ककुभां प्रांगणेषु व्यकसत् । सू र्य्योपूर्वोपमा ॥ २८ ॥ ************************ ॥

॥ प्रकृतिमिति ॥ प्रकृतिं स्वभावं । प्रतिपादकैः प्रतिपद्यमानैः लक्षणपदैरित्यादिनाऽक

अप्रत्ययः । नलोकेत्यादिनाषष्ठीप्रतिषेधः । भानुमतोंशुमतःपादैरश्मिभिश्च । पुन
र्भूयःप्रसर्तुंचक्लृपेशेके । क्लृपूसामर्थ्येभावेलिडिरूपेरोचइतिचटकारस्यापिरेफस्यलका
रः । जीवलोकःप्राणिवर्गस्य । तमसोन्धकारस्याभिभवादभिभूतत्वादित्यर्थः । कर्तृकर्म
णोःकृतीतिकर्मणिषष्ठी । सहसैवमूर्च्छामपास्यउदजीवत्उदश्वसीत्अनोज्जीवनस्या
र्ककरप्रसारवाक्यार्थहेतुकङ्काव्यलिङ्गम् ॥ ३९ ॥ ************** ॥
॥ गतेति ॥ विषक्तसंततमसंसान्द्रान्धकारं । अवसमन्धेभ्यस्तमसइतिसमासान्तोचप्र
त्ययः । गतेतिपाठेगतंसंततमसंयेषान्तैः । यदुयोधैर्धैर्यादवभटैर्भूयःपुनरपि । जवेनयुधि ।

प्रकृतिस्थ्युतिपादुकैस्स्वपादैश्चक्लृपेभानुमतःपुनःप्रसर्तुम् । तमसोभि
भवादपास्यमूर्च्छामुदजीवत्सहसैवजीवलोकः ॥ ३९ ॥ गतस
न्तमसंजवेनभूयोयदुयोधैर्युधिरेधिरेद्विषन्तः । ननुवारिधरौघमुक्तः
स्तुतरामुत्पतेपतिःप्रभाणाम् ॥ ४० ॥ व्यवहारइवान्तताभियोग
स्तिमिरन्निर्जितवत्यथप्रकाशे । रिपुरुच्चणभीमभोगभाजाम्भुजगा
नाञ्जननोञ्जजापविद्याम् ॥ ४१ ॥ ********

द्विषन्तोरेधिरेजिहिंसिरेहताइत्यर्थः । राध्यतेःकर्मणिलिट् । राधोहिंसायामित्येत्वाभ्या
सलोपौ । तथाहिवारिधरौघान्मेघवारणान्मुक्तोद्युनीनांपतिरर्कःस्तुतरामुत्पतेएवंननु
प्रकाशतएवखलु । उद्विभ्यान्तपइत्यात्मनेपदं । अत्रयदुयोधानांद्युनिपतेश्चवाक्यभेदे
नप्रतिबिम्बकरणाद्दृष्टान्तालङ्कारः ॥ नचोपमानोपमेययोर्भिन्नवचनत्वदोषः । लोके
चन्द्रार्कादीनामुपमादुपमेयवक्त्रत्वेपिचन्द्राननादितिवत्प्रत्येकमौपम्यवदिति ॥ ४० ॥
॥ व्यवहारइति ॥ व्यवहारेन्यायवादे । अनृताभियोगंमिथ्याभिशंसनमिव । प्रकाशेकौ
स्तुभतेजसि । तिमिरंप्रख्यापनान्धकारंनिर्जितवतिनिरस्तवतिसतिअथैनत् । निरसनात

न्तरं । रिपुश्चैद्यउल्बणान्महतोभीमांस्वभोगान्फणान्कायांश्चभजतीतितद्भाजः । भो
गःसुखेस्त्यादिभृतावहेस्वफणकाययोरित्यमरः । भुजगानां जननीमुत्पादिकांविद्यांमंत्रं
जजापजापयतिस्मभुजगास्त्रमाजहारेत्यर्थः । उल्बणेत्यत्रक्वचिद्रुत्फणेतिपाठः । उप
मालङ्कारः ॥ ४१ ॥ ******************************** ॥
॥ पृथ्विति ॥ ततोभुजगास्त्रप्रयोगानन्तरं । पृथुदर्विभृतःमहाफणधारीणइत्यर्थः । अ
भएवदर्वीकरोदीर्घपृष्ठइत्यत्रदर्वीरूपः फणएवकरोहस्तोयस्यप्रकाशादाविनिव्याख्या
तं । आशीभिर्दंष्ट्राभिः । आशीउरगदंष्ट्रायामितिवैजयन्ती । अनारतमश्रान्तंव
मन्तःउद्गिरन्तःफणीन्द्राःमहासर्पाः । विलोलैश्चञ्चलैर्जिह्वापूगैर्लीढावास्वादिता

पृथुदर्विभृतस्ततःफणीन्द्राविषमाशीभिरनारतम्बमन्तः । अभवत्
युगपद्विलोलजिह्वापूगलीढोभयसृक्वभागमाविः ॥ ४२ ॥ ह्रातके
शविडम्बनैर्विहायोविजयन्तस्त्वरणमिच्छुभिश्छलेन । अमृताग्रभु
वःपुरेवपुच्छम्बडवाभर्तुरवारिकाद्रवेयैः ॥ ४३ ॥ ****

सृक्वभागावोष्ठप्रान्तदेशौयस्मिन्कर्मणितत्तथा । प्रान्तावोष्ठस्यसृक्वणीत्यमरः । आ
विरभवत् । अचोभादुदात्तोनित्यमितिनित्यग्रहणान्वृत्तिविषयेउभशब्दस्यस्थानेपुभय
शब्दस्यैवप्रयोगः । उभयपुत्रइत्यादिप्रयोगसिद्धेरितिकव्युक्तमस्माभिःप्रकटितंवऊधासं
र्जावन्यांघण्टापथेसर्वंकषायांचतत्रतत्रस्वस्वभावोक्तिरलङ्कारः ॥ ४१ ॥ **** ॥
॥ ह्रातेति ॥ ह्रातकेशविडम्बनैःकार्ष्ण्याद्विहितकेशानुकारैः । छलेनकपटेनविजयमि
च्छुभिरभिलाषुकैः । विन्दुरिच्छुरितिउप्रत्ययान्तोनिपातः । नलोकेत्यादिनाषष्ठीप्र
तिषेधः । विहायस्तत्क्षणांकाद्रवेयैःकद्रूपुत्रैःफणीन्द्रैः । स्त्रीभ्योढगितिढक् । पूरापूर्वमि
वअमृताग्रभुवोऽमृताग्रपयःवडवाभर्तुःउच्चैःश्रवसःपुच्छंकार्ष्ण्यं । अवारिआवृतं । वृतेःक

मैरेणबुद्ध्। पुराकिलकद्रुविनतयोःकश्यपभार्ययोरुच्चैःश्रवसःकार्ष्ण्यश्वैत्यविवादे दास्यप
दे काद्रवेयैःस्वमातुर्विजयायगृहीतवालाकारैरुच्चैःश्रवसःपुच्छच्छादनंचक्रेइतिकथापुरा
णादनुसंधेयाउपमा ॥ ४३ ॥ ************************ ॥

॥ दधतइति ॥ मुखेमुखभागेसन्धौच । विशालाःविस्तृताआनुपूर्व्याअनुक्रमेण । तनि
मानंतनुत्वं । मुखादन्यत्रशरीरेगोपुच्छवत् । उत्तरोत्तरमतनुत्वंदधतः । अन्यत्रप्रति
मुखादिसन्धिषुसंक्षिप्तत्वंदधानाः । अक्षिश्रवसःसर्पाः । भरतज्ञोनाट्यशास्त्रज्ञः । भर
तोनाट्यशास्त्रज्ञंचेतिविश्वः । तेनकविनाप्रणीतंप्रकल्पितंयत्काव्यंकविकर्मलक्षणंकाव्या
र्थः । तथाचास्तु । ब्राह्मणादित्वात्ष्यञ्प्रत्ययः । तेनग्रथितागुम्फिताःअंकाःपरिच्छे

दधतस्तनिमानमानुपूर्व्या बभुरक्षिश्रवसोमुखेविशालाः । भरतज्ञ
कविप्रणीतकाव्यग्रथिताङ्का इवनाटकप्रपञ्चाः ॥ ४४ ॥ सविष
श्वसनोद्धतोरुधूमव्यवधिम्लानमरीचिपन्नगानाम् । उपरागवतेव
तिग्मभासा वपुरौदुम्बरमण्डलाभमूहे ॥ ४५ ॥ *****

रूपाःअवान्तरसंदर्भविशेषायेषुतेतथोक्तानाटकप्रपंचानाटकविस्तारा इवबभुरित्युपमा ।
प्रबन्धेतिक्वचित्पाठः । प्रत्यक्षमेतुचरितोबिन्दुव्यक्तिपुरस्कृतः । अंकोनानाप्रकारार्थसं
विदंतरमाश्रयइति । अंकलक्षणंमुखप्रतिमुखंगर्भआमर्शोपसंहृतिरितिसंश्रयः ॥ ४४ ॥

॥ सइति ॥ तिग्मभासासूर्येणउपरागवताराहुग्रासवतेवराहुग्रस्तेनेवेत्यर्थः । उपरागो
ग्रहोराहुग्रस्तेत्विन्दौचपूष्णिचेत्यमरः । वचनंग्रासस्याप्युपलक्षणम् । पन्नगानांसविषैःश्व
सनैःफूत्कारैःउद्धतेनोरुधूमेनयोव्यवधिस्तिरोधानंतेनम्लानानिःप्रभामरीचयोयस्यतत् ।
अतएवौदुम्बरमण्डलाभंताम्रपिण्डसच्छायं । अथवाताम्रकंशुल्बंम्लेच्छमुखद्व्यष्टवरि
ष्ठोदुम्बराणिचेत्यमरः । वपुरूहेऊढः । वहेःकर्मणिलिट् । यजादित्वात्संप्रसारणम्

॥ ४५ ॥ **************************************** ॥

॥ शिखीति ॥ पुनःपुनर्लेहनशीलाः लेलिहानाः सर्पाः । लिहेर्यङ्लुगन्तात्ताच्छील्ये
शानच्प्रत्यये गुणो यङ्लुकोरित्यभ्यासस्य गुणः । लिहेर्लिटः कानजित्यत्र भ्रमः । तद्दा
नीमभ्यासगुणानुपपत्तिः भूतार्थासंगतिश्च । शिखिपिच्छैर्मयूरबर्हैः कृतेभ्यो ध्वजानामव
चूडेभ्यः प्रकीर्णेभ्यः क्षणं साशंकाः जीवन्मयूरभ्रान्त्या सभयाः अत एव विवर्त्तमानकायाः व्या
वृत्तदेहाः सन्तः । आशु वृष्णिगणेषु यादवसंघेषु बंधनाय । यमपाशैस्तुल्यं यमपाशवत् ।
कालपाशवदित्युपमा । न्यपतन् । निपत्य बबंधुरित्यर्थः ॥ ४६ ॥ ******** ॥

शिखिपिच्छकृतध्वजावचूलक्षणसाशङ्कविवर्त्तमानभोगाः । दम
पाशवदाशुबन्धनाय न्यपतन्वृष्णिगणेषु लेलिहानाः ॥ ४६ ॥
पृथुवारिधिवीचिमण्डलान्तर्विलसत्फेनवितानपाण्डुराणि । दधति
स्म भुजङ्गमाङ्गमध्ये नवनिर्मोकरुचिं ध्वजांशुकानि ॥ ४७ ॥
छन्नमण्डलबन्धमुल्लसद्भिः शिरसि प्रत्युरसं विलम्बमानैः । व्यरुच
ज्जनता भुजङ्गभोगैर्दलितेन्दीवरमालभारिणीव ॥ ४८ ॥ ***

॥ पृथ्विति ॥ भुजङ्गमांगमध्ये पृथोर्वारिधेर्वीचिमण्डलस्यान्तर्मध्ये विलसन्तः फेणङ्गव
वितानपांडुराणि शुभ्रवर्णानीत्युपमा । ध्वजांशुकानि नवनिर्मोकरुचिं नवकंचुकशो
भां दधति स्म । समौ कंचुकनिर्मोकावित्यमरः । निर्मोकरुचिमित्यत्रान्यधर्मस्यान्यत्रसं
बंधेन निर्मोकस्येवेति सादृश्याक्षेपादसंभवद्वस्तुसंबन्धा निदर्शनां तेन पांडुरोपमयाङ्गेन सं
कीर्यते ॥ ४७ ॥ ****************************** ॥

॥ छन्नेति ॥ जनता जनसमूहः । ग्रामजनेत्यादिना समूहे तल्प्रत्ययः । शिरसि छ
न्नो मण्डलबन्धो वलयीभावो यस्मिन्कर्मणि तत्तथा । उल्लसद्भिः । प्रत्युरसं उरसीति

। प्रतेहरसःसप्तमीस्थादिति समासान्तोऽच्प्रत्ययः । विलम्बमानैर्विशेषेणालम्बमानैः । भुजङ्गभोगैरहिकायैः ललितेन्दीवरमालधारिणीविकसितनीलोत्पलमालाधारिणीवेत्युत्प्रेक्षा । व्यहुचतथ्वरोचिषः । दुर्ज्ञोलुङीतिविकल्पात्परस्मैपदम् ॥ ४८ ॥ *** ॥

॥ परिवेष्टितेति ॥ किंचेतिचार्थः । मूलात्पादमारभ्येत्यर्थः । ल्यब्लोपेपञ्चमी । आशिरसःशिरोन्तं । अभिविधावाङ्विकल्पात्समासः । रत्नैरेवपुष्पैःसहवर्त्तन्तइतिरत्नपुष्पैः । तेनसहेतितुल्ययोगेइतिबहुव्रीहिः । उरगैःपरिवेष्टितमूर्त्तयोवेष्टिताङ्गाः । मनुजाआयतीभिर्बल्लीभिर्लताभिर्वेष्टितानांमहीरुहाणांउपमानंसादृश्यंदधुरित्युपमा ॥

परिवेष्टितमूर्त्तयस्स्वमूलादुरगैराशिरसःसरत्नपुष्पैः । दधुरायतवल्लिवेष्टितानामुपमानम्मनुजामहीरुहाणाम् ॥ ४९ ॥ बहुलाञ्जनपङ्कपट्टनीलद्युतयोदेहमितस्ततःश्रयन्तः । दधिरेफणिनस्तुरङ्गमेषुस्फुटपल्याणनिबद्धवध्रलीलाम् ॥ ५० ॥ प्रहृतंरभसादयोभिनीलाप्रतिपादस्फुरितोऽभिवेष्टयन्तीः । तनुरायतिशालिनीमहाहेर्गजमन्दुरिवनिश्चलञ्चकार ॥ ५१ ॥ *·*·*·*·*·*·*

४९ ॥ ****************************** ॥

॥ बहुलेति ॥ बहुलाञ्जनस्यसान्द्रकज्जलस्यपंकपट्टःपंकघनस्तद्वन्नीलद्युतयःश्यामभासः । देहंशरीरमितस्ततःपुच्छपार्श्वादिस्थानेषुश्रयन्तोभजन्तः । फणिनस्तुरंगमेषुस्फुटानिउज्ज्वलानियानिपल्याणेषुपल्ययणेषुनिबद्धवध्राणिवरत्राः । वध्रंत्रपुवरत्रयोरितिविश्वः । तेषांलीलांशोभांदधिरेदधुः । वध्रलीलामित्यत्रसंभवद्वस्तुसम्बन्धानिदर्शनोक्तलक्षणात् ॥ ५० ॥ ************************** ॥

॥ प्रहृतमिति ॥ अयोवन्ध्रयसाअभिनीला । पादेषुप्रतिपादम् । विभक्त्यर्थेऽव्ययीभा

वे: । अभिवेष्टयन्ती आयतेन आयतत्वाद्दीर्घेण शालतेयासा आयनिशशालिनी । अहाहेर्मे
होरगस्यतनुर्वपुरन्दुःशृङ्खलेव । अन्दुस्तुशृङ्खलावांभूषायष्टिपञ्जासपीतिवैजयन्ती ।
रभसात्प्रस्तं प्रचरमंगजं निश्चलं चकार । उपमा ॥ ५१ ॥ *************** ॥
॥ अथेति ॥ अथनागपाशबन्धनानन्तरं । माधवेनकृष्णेन । अवज्ञयाअकिञ्चित्कर
त्वादनादरेण । चलिताप्रेरिताएकाउन्नमिताउत्क्षिप्ता चभ्रूर्यस्मिन्कर्मणितत्तथा । गो
स्त्रियोरूपसर्जनस्येतिह्रस्वत्वम् । सस्मितं चैद्यचापस्यदर्शनात्समन्दहासवीक्षितात्नि
जकेतुशिरःश्रितः निजध्वजाग्रस्थितात् । श्रयतेःक्विप् । सुपर्णात्पक्षिणांराजानःतेषां
पक्षिराजांपक्षिराजानांगरुत्मतां । राजाराट्पार्थिवइत्यमरः । अन्येभ्योपिदृश्यतेइति

अथसस्मितवीक्षितादवज्ञाचलितैकोन्नमितभ्रु माधवेन । निजके
तुशिरःश्रितस्सुपर्णादुदभूवन्नयुतानिपक्षिराजाम् ॥ ५२ ॥ द्रुतहे
मरुचःखगाःखगेन्द्रादलघूदीरितनादरुत्पतन्तः । क्षणमैक्षिषतो
च्चकैश्चमूभिर्ज्वलतःसप्तरुचेरिवस्फुलिङ्गाः ॥ ५३ ॥ ***

क्विप् । अयुतानिअयुतसंख्यांउदपद्यन्तेतु: । पुषादित्वाल्लुङिच्लेरङादेशः । उदभूव
न्नितिपाठेभुवोवुग्लुङ्लिटोरितिवुगागमः । माधवस्यसुपर्णवीक्षणावस्थोचितभ्रूविक्षेपादिचेष्टाविवर
णात्स्वभावोक्तिः । तदुक्तंदण्डिना । नानावस्थंपदार्थानांरूपंसाक्षाद्विवृण्वती । स्व
भावोक्तिःस्वजातिश्चेति । जातिक्रियागुणद्रव्यस्वभावाख्यानमीदृशमितिच ॥ ५२ ॥
॥ द्रुतेति ॥ द्रुतहेमरुचःप्रतप्तकाञ्चनभासइत्युपमा । अलघूच्चैरुदीरितनादंउच्चरित
घोषंयथातथाखगेन्द्रात्गरुत्मतःउत्पतन्तःउद्भवन्तः खगाः सुपर्णाःज्वलतः प्रज्वलतःस
प्तरुचेःसप्तार्चिषःउच्चैरुद्धूताःस्फुलिङ्गाइव । चमूभिःक्षणमैक्षिषतइक्षिताः । इ
क्षतेःकर्मणिलुङ् । अत्रोपमयोःसङ्करः ॥ ५३ ॥ ****************** ॥

॥ उपमानमिति ॥ गगनमर्णवइवगगनार्णवस्तमन्तरा । तस्यमध्येइत्यर्थः । अन्तरा
न्तरेणयुक्तेइतिद्वितीया । अत्रार्णवस्यैकत्वेपितदेकदेशापेक्षयाभेदवत्त्वेनमध्यप्रतियोगि
त्वसंभवान्नद्वितीयानुपपत्तिः । लोलैःपक्षैःक्षणाद्विक्षिप्तामहाम्बुवाहामत्स्यायैस्तैर्गरुडै
र्गरुत्मभिः । सुमेरोःकुलजानांहेमाद्रिवंश्यानां । अन्येषामद्रिराजतयागरुडसाम्यासं
भवादित्यर्थः । इलाधराणांभूधराणांअर्णवान्तश्चराणामित्यर्थः । गौरिलाकुम्भीनोक्ष्मे
त्यमरः । उपमानंसादृश्यमलाभिअलंभि । लभेःकर्मणिलुङि विभाषा चिणमुलोरितिवि
कल्पान्नुमभावः । अत्रेलाधराणामुपमानमितिव्यस्तोपमायास्तल्लिङ्गनाभ्यांसमासगताभ्या
मङ्गाङ्गिभावेनसङ्करः ॥ ५४ ॥ *********************** ॥

उपमानमलाभिलोलपक्षक्षणविक्षिप्तमहाम्बुवाहमत्स्यैः । गग
नार्णवमन्तरासुमेरोःकुलजानाङ्गरुडैरिलाधराणाम् ॥ ५४ ॥ प
ततांपरितःपरिस्फुरद्भिःपरिपिङ्गीकृतदिङ्मुखैर्मयूखैः । सुतराम
भवद्दुरीक्ष्यबिम्बीतपनस्तत्किरणैरिवात्मदर्शः ॥ ५५ ॥ **

॥ पततामिति ॥ परिस्फुरद्भिःस्वविषयसंक्रमात्समंतादुल्लसद्भिः । अतएवपरिपिङ्गी
कृतानिसौवर्णत्वात्पिशंगीकृतानिदिङ्मुखानियैस्तैः । पततांपक्षिणांमयूखैः । तपनःस्व
र्णस्तत्किरणैस्तपनकिरणैःसंक्रान्तैरितिभावः । आत्मस्वरूपंदृश्यतेइत्यात्मदर्शोदर्पण
इवसुतरांदुरीक्ष्यबिम्बोऽभवत् । स्वतएवदुर्दर्शइदानीमतिदुर्दर्शोभूदित्यर्थः । अत्र
तपनस्यदुरीक्षत्वासंबंधेपिसंबंधोक्तेरतिशयोक्तिः ॥ ५५ ॥ ************ ॥

॥ दधुरिति ॥ उल्लसमानाभिर्दीप्यमानाभिर्वैनतेयानांसुपर्णानांद्युतिभिर्भिन्नाःसंवलिता
फणाभारिणःफणाभृतः । अंबुधिमंथनेसमुद्रमंथनेऽभद्रैर्मन्दरादेरेवमंथस्यमंथनदण्ड
स्यभ्रमणेनापसव्यानिःपीडितस्यफणीन्द्रस्यवासुकेः पित्तान् पित्तधातोर्जातास्तज्जाःसे

थां । वैशाखे मंथमन्थानमंथानामंथदंडकेत्यमरः । मथेर्भावादिकस्येदित्त्वान्नुमा
गमः । तेषां मणीनां मरकतानां रुचं दधुः । वैनतेयेपीतिसंभेदान्कक्षोरगमरकतकाया
मात्रैर्न्नित्यर्थः । अत्रान्यस्यान्यधर्मायोगेनरुचमिति सादृश्याक्षेपादसंभवद्वस्तुसंबन्धा
न्निदर्शनालङ्कारः ॥ ५६ ॥ ************************ ॥
॥ अभीति ॥ अभितः उभयतः । क्षुभितो योम्बुराशिः उद्वेलाम्बुराशिस्तद्वद्गीरध्वनिर्ग
म्भीरध्वनिरित्युपमा । आकृष्टाः पाटिताः समूलाः पादपौघास्तरुसमूहा येन । अत्र पाद
पोन्मूलनासम्बन्धेपि सम्बन्धोक्तेरतिशयोक्तिः । युगान्तशंकां जनयन् कल्पक्षयोत्प्रेक्षां जन

दधुरम्बुधिमन्थनाद्रिमन्थभ्रमणापत्तफणीन्द्रपित्तजानाम् । रुच
मुह्यसमानवैनतेयद्युतिभिन्नाः फणभारिणो मणीनाम् ॥ ५६ ॥ अ
भितः क्षुभिताम्बुराशिधीरध्वनिराकृष्टसमूलपादपौघः । जनयन्न
भवद्युगान्तशङ्कामनिलो नागविपक्षपक्षजन्मा ॥ ५७ ॥ प्रच
लत्पतगेन्द्रपत्त्रवातप्रसभोन्मूलितशैलदन्तमार्गैः । भयविह्वलमा
शु दन्दशूकैर्विवशैरविविशे स्वमेव धाम ॥ ५८ ॥ ✽✽✽✽

यन्नित्यपि सैवातिशयोक्तिः । नागविपक्षपक्षजन्मा गरुडपक्षोद्भवोऽनिलोऽभवदुद्भवदि
त्यर्थः । अत्रानिलस्य क्षुभिताम्भोधिध्वनिः ॥ ५७ ॥ ************** ॥
॥ प्रेति ॥ प्रचलतां पतगेन्द्रस्य यानि पत्त्रवातास्तैः प्रसभं उन्मूलितैराकृष्टैरुत्पादितैः शैलैर्द
न्तमार्गैरं ध्राणि येभ्यस्तैः । विवशैः परवशैर्निश्चेष्टैरित्यर्थः । भावगर्हितं दंशनिभृशमिति
दन्दशूकैः सर्पैः । दन्दशूको बिलेशय इत्यमरः । लुपसदचरेत्यादिना दंशेर्भावगर्हायां य
ङ् । जपजभदहदंशभञ्जपशां चेति अभ्यासस्यानुगागमः । यजजपदंशपदइति दंशेर्यङ
न्तादूकन्प्रत्ययः । भयेन विह्वलं विक्षिप्तं विचित्तं यथा तथा आशु समेव धाम पातालमेव

विवरे । तार्क्ष्यपत्रपवनोन्मूलितशैलरंध्रवर्त्मनिपातात्प्रविष्टमित्यर्थः । विशेःकर्मणि लिट् । रंदन्धूकानांविशिष्टांशेरंध्रप्रवेशासंबन्धेपिसम्बन्धोक्तेरतिशयोक्तिः ॥ ५८ ॥

॥ खचरैरिति ॥ खेचरंतीतिखचरैर्वैनतेयैः । चरेष्टः । तत्पुरुषेकृतिबहुलमितिलुग्वक्तव्यः । अक्षयेअनन्तेअहिसैन्येसर्पसंघे । सुकृतैःहरिस्मरणादिपुण्यैर्दुःकृतवद्ब्रह्महत्यादेनोवत् । मतनस्येवेतितत्रार्थेवतिप्रत्ययः । क्षयमुपनीतेनाशंगमितेसति । मदान्तकालेरुषासपौरुषविकल्पायेरेण । अयुगार्चिःसप्तार्चिरिवज्वलन्दीप्यमानःअसौरिपुरैद्यः । उदर्चिषरिरंमन्त्रमौदर्चिषमाग्नेयंमंत्रंआजुहावआहूतवान्जजापेत्यर्थः । हृयतेर्लिट् । अभ्यस्तस्यचेतिद्विर्वचनात्प्रागेवसंप्रसारणं । दुःकृतवदितितद्धितगता

खचरैःक्षयमक्षये हि सैन्ये सुकृतैर्दुःकृतवन्नदोपनीते । अयुगार्चिरिवज्वलन्नुवाथो रिपुरौदर्चिषमाजुहावमन्त्रम् ॥ ५९ ॥ सहसाद धदुद्धताट्टहासश्रियमुच्चासितजन्तुनास्वनेन । विततायतहेतिवाहुरुच्चैरथवैतालइवोत्पपातवह्निः ॥ ६० ॥ ******

श्रौतिपूर्णोपमा ॥ ५९ ॥ ****************************** ॥

॥ सहसेति ॥ अथाग्नेयास्त्राह्वानानन्तरं । उच्चासितजन्तुनाभीषितप्राणिकेनस्वनेन ध्वनिना । उद्धताट्टहासश्रियंमहाट्टहासंपदंदधत् । तेनैवाट्टहासवान्तत्तुल्यनादवानित्यर्थः । वितताःप्रसारिताःआयतादीर्घाःहेतयोज्वालाबाहवइववहेतिवाहवोयस्यसवह्निर्वैतालोभूतविशेषःसइवसहसाभटितिं । उच्चैरूर्द्ध्वमुत्पपातउत्तस्थौ । उपमा ॥ ६० ॥ ******************************** ॥

॥ चलितेति ॥ चलितस्खलच्चउद्धतमुन्नतञ्चभूमएवकेतनंकेतुर्यस्यसः । रभसाद्वेगाद्म्बरंरोहितानिअम्बररोहिज्वालाअम्बाइवरोहितोवाहनमृगायस्यसः । हुतमारुताः

शीघ्रवाताख्यसारथिर्यस्य सः । कनकस्यन्दनसुन्दरः कनकवद्रम्य इत्युपमा । अस्तीति खा ज्वाला अस्य सन्तीति शिखावान् । आमुमुक्षुरिम्सचाल ॥ ६१ ॥ ****** ॥

॥ ज्वलदिति ॥ जातं वेदो धनं यस्मात् जातवेदास्तनूनपात् । अम्बरं कोटरमिव तस्यान्तरं समभ्यन्तरं ज्वलत् दग्धुमनन्तः । वकुलाः सान्द्राः आर्द्राम्बुदाः पत्राणीव ते पुञ्जधूमं । परिदीपिताः प्रज्वलिताः दीर्घकाष्ठा दिशः काष्ठानीव यस्य । न दुः चैस्तमनं विश्वं जगत् । तरुणा तुल्यं तरुवत् तरुमिवेत्यर्थः । तुल्यार्थे वतिप्रत्ययः । उवोषददाह । उषदाहे लिट्लघूपधगुणोपस्थान् द्विर्भावः । अभ्यासस्यासवर्णे इयुवङादेशः अनादिष्टारचइति गुणस्य स्थानि

ज्वलितोद्धतधूमकेतनोऽसौ रभसादम्बररोहिरोहिताश्वः । द्रुतमा
रुतसारथिः शिखावान् कनकस्यन्दनसुन्दरश्चचाल ॥ ६१ ॥ ज्व
लदम्बरकोटरान्तराल बकुलार्द्राम्बुदपत्रबद्धधूमम् । परिदीपित
दीर्घकाष्ठमुच्चैर्वनवद्विश्वमुवोष जातवेदाः ॥ ६२ ॥ गुरुताप
विशुष्यदम्बुशुभ्राः क्षणमालग्नकृशानुताम्रभासः । खमसारतया
मसीभवन्तः पुनराकारमवापुरम्बुवाहाः ॥ ६३ ॥ ****

वत्वाभावादिति सप्तोपमालिङ्गान्सर्वत्रोपमितसमासः ॥ ६२ ॥ ******** ॥

॥ गुर्विति ॥ गुरुतापेनातिदाहेन विशुष्यदम्बवः क्षीयमाणोदकाः अतएव शुभ्राश्चेति । विशेषणसमासः । ततः क्षणमालग्नेन कृशानुना ताम्रभासो रोहितवर्णाः । अथासारतया अवसेषानिःसारतया मसीभवन्तः अम्बुवाहाः । पुनः खमाकारं नीलरूपमवापुः । अत्र मेघानां मसीभावाद्यसम्बन्धेपि सम्बन्धोक्तिरतिशयोक्तिः ॥ ६३ ॥ ****** ॥

॥ ज्वलितेति ॥ ज्वलितेन प्रज्वलता अनलेन अनेन बाधानेन बोलाः पल्लवान्ताः अंचलाग्राणि यासां ताः स्फुरद्भिर्दीप्यमानैरष्टापदपत्रैः कनकरचनाभिः पीतभासः पिङ्गलवर्णाः पता

क्वचित्क्षयः । अभावकाले विनाशकाले क्षणमात्रभवां क्षणमात्रभाविनीं क्षणमात्रस्थायिनीमित्यर्थः । आवर्तितं दैर्घ्यं तु नरमापुरित्यर्थः । प्रदीपवदिति भावः अष्ट सुलोहेषु पदं अस्त्येत्यष्टापदम् । अष्टनः संज्ञायामिति दीर्घः । स्वर्णं कार्तस्वरं जांबूनदमष्टापदोऽस्त्रियामित्यमरः ॥ ६४ ॥ ****************************** ॥

॥ निखिलामिति ॥ अथानन्तरं मुरारिः इतीत्थं निखिलां द्यामाकाशं । द्रुतचामीकरचारुतां प्रतप्तहेमकर्बुरामिवेत्युत्प्रेक्षा । चारुतामित्यत्र शारितामित्यपि पाठः । हिरण्यकुर्वतो ऽग्नेः प्रतिघातसमर्थं प्रशमनक्षमं । मेघान्करोतीति मेघकरं मेघजननं । मेघर्त्तिभयेषुक्ष

ज्वलितानललोलपल्लवान्ताः स्फुरदष्टापदपत्रपीतभासः । क्षणमात्रभवामभावकाले तु नरमापुरिवायतिम्पताकाः ॥ ६४ ॥
निखिलामिति कुर्वतस्सिरण्यद्रुतचामीकरचारुतामिवद्याम् । प्रतिघातसमर्थमस्त्रमग्रे रथमेघङ्करमस्यन्मुरारिः ॥ ६५ ॥ चतुरम्बुधिगर्भधीरकुक्षेर्वपुषः सन्धिषुलीनसर्वसिन्धोः । उदगुः सलिलात्मनस्त्रिधाम्नो जलवाहावलयः शिरोरुहेभ्यः ॥ ६६ ॥ ****

भ्यस्त्प्रत्ययः । अस्त्रं चिदजनस्यमुमितिमुमागमः । अस्त्रं वारणास्त्रं अस्यन् अध्याहरन् ॥ ६५ ॥ ****************************** ॥

॥ चतुरिति ॥ चत्वारः अम्बुधयः एव गर्भास्तेन धीरो गम्भीरः कुक्षिर्यस्य तस्य वपुषः संधिषु लीनाः सर्वाः सिन्धवो नद्यो यस्य तस्य सलिलात्मनस्तोयात्मकस्य । त्रीणि धामानि स्थानानि भूरादिनि सत्वादीनि वा यस्य तस्य त्रिधाम्नो हरेः । शिरोरुहेभ्यो जलवाहा जलावलयः मेघपरंपरा उदगुः उद्भूवुः । इणो गा लुङीति गादेशः इत्यादिना सिचोलुक् । वपुषकेशेषु जीमूतान् द्युः सर्वांगसंधिषु । कुक्षौ समुद्रास्चत्वार स्तस्मै तोयात्मने नम इत्यागमोक्तप्रमाणमिति भावः

******************************* ॥

॥ ६६ ॥ **************************************

॥ ककुभइति ॥ स्तननादं स्तनगर्जारावं यथा तथा ककुभः आस्तृणन्तः आच्छादयन्तः ।

स्तृणातेर्लटः शत्रादेशः । श्नाभ्यस्तयोरित्याकारलोपः । भानुभासामर्कांशूनां पटलानि

तिरयन्तस्तिरस्कुर्वन्तः । तिरःशब्दात्करोतीतिण्यन्ताल्लटः शत्रादेशः । णाविष्ठवद्भावा

ट्टिलोपः । अभ्रमाकाशं श्याममलिमानमानयन्तः श्यामलत्वं प्रापयन्तः । अभ्रसंघाः मेघौघाः

सपदि सद्यः उदनंसिषुरुत्पेतुः । उत्पूर्वान्नतेर्लुङि यमरमनमातां सक् चेति सगिडागमौ नेटी

ति वृद्धिप्रतिषेधः । स्वभावोक्तिः ॥ ६७ ॥ ********************* ॥

ककुभः स्तननादमास्तृणन्तस्तिरयन्तः पटलानि भानुभासाम् । उदनं

सिषुरभ्रमभ्रसंघाः सपदि श्याममलिमानमानयन्तः ॥ ६७ ॥

तपनीयनिकषराजिगौरस्फुरदुत्तालतडिच्छटाट्टहासम् । अनु

बद्धसमुद्धतान्बुवाहध्वनिताडम्बरमम्बरम्बभूव ॥ ६८ ॥ सवि

तुः परिभावुकैर्मरीचीनचिराभ्युन्नतमातङ्गजाङ्गभाभिः । जलदैरभितः

स्फुरद्भिरुच्चैर्विदधे केतनतेव धूमकेतोः ॥ ६९ ॥ ****

॥ तपनीयेति ॥ तपनीयस्य हेम्नो निकषराजयः कषणलेखा इव गौर्यः पीताः । गौरोऽरुणः सि

ते पीते इत्यमरः । स्फुरन्त्य उत्तालाउद्धतास्तडिच्छटा विद्युल्लता एवाट्टहासा यस्य तत्तथो

क्तं । अनुबद्धोऽनुस्यूतः समुद्धतः सारोऽम्बुवाहानां ध्वनिताडम्बरो गर्जिताडम्बरो यस्य । त

दम्बरं बभूव । तदम्बु भासे विद्युत्प्रभाभिर्गर्जिताडम्बरैः साम्बरमापतयाट्टहासं कुर्वद्भिरिव

भवेदित्यर्थः । व्यञ्जकाप्रयोगाद्गम्योत्प्रेक्षा ॥ ६८ ॥ ***************** ॥

॥ सवितुरिति ॥ सवितुः मरीचीन्मयूखान् । परिभावुकैस्तिरस्कारकैः । लषपतेत्यादिना

उकञ्प्रत्ययेन लोकेत्यादिना षष्ठीप्रतिषेधः । अचिराभ्युन्नतस्य सद्यः उन्नताभ्युद्गस्य मतङ्ग

आङ्गदे इत्यनागइवभासीविषांतिस्तथोक्तेः । भोभगोइत्यादिनारोर्यकारस्यहलिसर्वेषामितिलोपः । अभितःस्फुरद्भिर्जृम्भमाणैरुच्चैरुन्नतैर्ज्वलद्भिर्धूमकेतोरग्नेःकेतनतांकेतुत्वंविद्धेइवविहितेनेवधूमकेतोःकेतनत्वंकेतुत्वंप्राप्तमित्यर्थः । उत्प्रेक्षालङ्कारः ॥ ६९ ॥ **

॥ ज्वलतइति ॥ ज्वलतश्चित्रभानोरग्नेः । प्रशमनायप्रलयेकल्पान्तेयआप्लावमहापूरःतमभिदर्शयन्तइवेत्युत्प्रेक्षा । वृषवद्वृषभवन्नदन्तिगर्जन्तीतिवृषनादिनः । कर्त्तर्युपमानेइतिणिनिः । अतएवोपमा । वारिवहन्तीतिवारिवाहामेघाः । कर्मण्यण् । नदीनांप्रतटेषुप्रतीरेषुआरोपितानिभावितानिवारीणियस्मिन्नत्तथावववृषुः । प्रलयकालमेघवदववृषुरित्यर्थः ॥ ७० ॥ ************************* ॥

ज्वलतश्शमनायचित्रभानोःप्रलयाप्लावमिवाभिदर्शयन्तः । ववृषुर्वृषनादिनोनदीनाम्प्रतटारोपितवारिवारिवाहाः ॥ ७० ॥
मधुरैरपिभूयसासमेघैःप्रथममप्युन्नतवारिभिर्दिदिपे । पवमानसखस्ततःक्रमेणप्रणयक्रोधइवाशमद्विवादैः ॥ ७१ ॥ ***

॥ मधुरैरिति ॥ इतीत्यंसपवनइतिपवमानोवायुः । पूङ्यजोःशानच् । तस्यसखापवमानसखःअग्निः । राजाहस्सखिभ्यष्टच् । मैत्रीमात्रविवक्षायामयन्निर्देशः । सखसहकारिणीमैत्रीनियमात् । सहकारित्वेविवक्षायांवैपरीत्यात्बहुव्रीहौतुनसमासान्तः । सखामीनुरोहिताग्नेर्वायुसखेतिअसमासान्तपाठेनबहुव्रीहिमाह । अत्रापिपाठेनकश्चिद्दुपद्रवः । सोऽग्निःमधुरैःप्रियैरपिविवादैर्विविधवाक्यैः । प्रणयक्रोधःप्रणयप्रमुक्तकोपइव । मधुरैःस्वादुभिःअनुद्दीपकैरित्यर्थः । मेघ्यैर्मेघभवैः । दिगादिभ्योयत् । वारिभिःप्रथमंअप्युन्नतवैपरीत्येनापिप्रत्युतेनेतिवैपरीत्येनिगमव्याख्याने । भूयसेत्ययंभृशमित्यर्थः । दिदीपेप्रजज्वाल । ततःक्रमेणप्रशमनप्रशान्तोभूत् । शाम्यतेर्लुङिपुषादित्वात्च्लेरङादेशः

। जलाहतोऽग्निर्ज्वलितानलस्य निप्रत्ययकोपेपि प्रियैः भूशायित्वा शाम्यतीति प्रसिद्धं उपमा

॥ ७१ ॥ ****************************** ॥

॥ परितइति ॥ परितः प्रसभेन बलात्कारेण । शरवर्षैर्नीरसेकैः । शरं नीरे शरो बाणइ

तिविश्वः । अवसादमवसादं नीयमानः । कृतीकुशलः आशयमश्नातीति आश्रयाशो

ग्निः । कर्मण्यण् । प्रबलेषु मेघेषु घनेषु विद्युद्व्यपदेशेन तडित्छलेन अनुप्रवेशं चकार । अ

स्याग्निर्विद्युद्रूपेण मेघेष्वेव प्रविष्टः । बलवताभिभूतस्य विदेशगमनं तदनुप्रवेशोऽपि नीतिरिति

भावः । अत्र प्रबलाग्निविशेषणसाम्यात्प्रकृतदुर्बलत्वप्रतीतेः समासोक्तिः ॥ ७२ ॥

परितःप्रसभेननीयमानःशरवर्षैरवसादमाश्रयाशः । प्रबलेषुकृतीच

कारविद्युद्व्यपदेशेनघनेष्वनुप्रवेशम् ॥ ७२ ॥ प्रयतःप्रशमंहु

ताशनस्यक्वचिदालक्ष्यतमुक्तमूलमर्चिः । बलिभित्प्रहितायुधाभि

घातात्त्रुटितम्पक्षिपतेरिवैकपत्रम् ॥ ७३ ॥ व्यगमन्सहसादि

शाम्मुखेभ्यःशमयित्वाशिखिनङ्घनाघनौघाः । उपकृत्यनिसर्गतः

परेषामुपरोधन्नहिकुर्वतेमहान्तः ॥ ७४ ॥ ******

॥ प्रयतइति ॥ प्रशमं नाशं प्रयतः गच्छतः । प्रैतीति प्रयन् तस्य प्रयतः इणः शतरि यणादे

शः । हुताशनस्याग्नेः सम्बन्धि मुक्तमूलं त्यक्तत्रपम् अर्चिर्ज्वाला । ज्वालाभासोनपुंस्यर्चिरि

त्यमरः । बलिभिदा शक्रेण प्रहितस्य प्रयुक्तस्यायुधस्य वज्रस्याभिघातात् प्रहारात् त्रुटितं

छिन्नं पक्षिपतेः पक्षिराजस्य गरुत्मतः एकं पत्त्रं एकं पक्षमिव क्वचिदालक्ष्यत अदृश्यत इत्युप

मा । पुरा मातृदास्यविमोकाया मृतमाहरता गरुडेनेन्द्रप्रयुक्तवज्रगौरवादेकं पत्त्रं त्यजित

मित्यागमः ॥ ७३ ॥ ****************************** ॥

॥ व्यगमन्निति ॥ घनाघनौघाः वर्षुकाब्दाः । शक्रधानुकम्पनेभावर्षुकाब्दो घनाघनाः इत्यम

रः । शिखिनमग्निंशमयित्वासहसादिशांमुखेभ्योव्यगमनपगमन् । गमेर्लुङिपुषादित्वा
त्च्लेरङादेशः । तथाहि । महान्तोनिसर्गतःस्वभावादेवपरेषांउपकृत्यउपकारंकृत्वाभ
वरोधंनहिकुर्वते । महतांनिःफलावस्थानंपरोपरुद्धायेतिभावः । सामान्येनविशेषणसम
र्थनरूपोऽर्थान्तरन्यासः ॥ ७४ ॥ ******************** ॥

॥ कृतेति ॥ उदर्चिषोऽग्नेःशिखाभिःज्वालाभिःकृतदाहंविहिततपनं । ततोनवेनांभसा
मुहुःपरिषिक्तं । विगताअम्बुधराएवव्रणादोषायस्यतद्गगनंसंतापितास्तापंप्रापिताःस
न्तःपायिताःपानंकारिताः । पिबतेर्ण्यन्तात्कर्मणिक्तः । शाच्छासाह्वाव्यावेपांयुगितियु
गागमः । तेनतापितपायितस्यतप्तसिक्तस्यासेःखड्गस्यलक्ष्मींप्रपेदेप्रापे । इतिनिदर्शना

कृतदाहमुदर्चिषःशिखाभिःपरिषिक्तम्मुहुरम्भसानवेन । विगता
म्बुधरव्रणाम्प्रपेदेगगनन्तापितपायितासिलक्ष्मीम् ॥ ७५ ॥ इ
तिनरपतिरस्त्रव्यत्ययंद्रागविस्त्रकारप्रकुपितइवरोगः क्षिप्रकारीविकार
म् । भिषगिवगुरुदोषच्छेदिनोपक्रमेणक्रमविदथमुरारिःप्रत्यहंस्त
द्द्राक् ॥ ७६ ॥ ************

लङ्कारः । अंबुधरव्रणेतिरूपकसंकीर्णः ॥ ७५ ॥ ************** ॥

॥ इतीति ॥ इतीत्थं । क्षिप्रंकरोतीतिक्षिप्रकारीशीघ्रप्रयोक्ता । अन्यत्रकारकारी । नरप
तिश्चैद्यःप्रकुपितःप्रक्षुभितःसन्द्रागस्त्रंआविश्चकाररोगोविकारंइव । अथक्रमवित्परि
पाटीवेदीमुरारिर्भिषग्वैद्यइव । गुरुदोषच्छेदिनागुरुदोषप्रतिघातकेनसहायइवनिव
र्त्तकेनचोपक्रमेणचोपायेनप्रत्यस्त्रप्रयोगेणेत्यर्थः । अन्यत्रमहौषधप्रयोगेणतत्तदस्त्रंआ
शुशीघ्रंतद्विकारमेवेतिभावः । प्रत्यहन्प्रतिजघान । हन्तेर्लङ्अदादित्वाच्छपोलुक्
दुकारहल्ङ्यादिलोपौचोपमा ॥ ७६ ॥ ****************** ॥

॥ शुद्धिमिति ॥ तदा तस्मिन्समये । विपक्षोऽरिश्चैद्यः । परमुत्कृष्टां शुद्धिं लोहशुद्धिं गतैर्नर्जुभिरथ विघट्टितमर्मभिरस्पृष्टमर्मस्थानैः । तं हरिमजय्यं जेतुमशक्यं । क्षय्यजय्यौ शक्यार्थे निपातः । विदित्वा ज्ञात्वा तस्मिन्नवसरे । मर्माणि अतिगच्छन्तीति मर्मातिगैर्मर्मभेदिभिरनृजुभिरवक्रैः । नितरामशुद्धैरपवित्रैर्वाचएव सायकावाक्सायकैरितिरूपकंतु तोदव्यथयामास । चक्रप्रयोगस्यायशुद्धत्वादिति भावः । अत्र वाक्सायकानां प्रसिद्धसायकं व्यतिरेकोक्तिर्व्यतिरेकरूपयोः सङ्करः । वसन्ततिलकावृत्तम् ॥ ७७ ॥ ***** ॥ इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघकाव्यव्याख्याने सर्वङ्कषाख्याने विंशतितमः सर्गः ॥ २० ॥ ******* ॥

अशुद्धिं गतैरपि परामृजुभिर्विदित्वा बाणैरजय्यमविघट्टितमर्मभिस्तम् । मर्मातिगैरनृजुभिर्नितरामशुद्धैर्वाक्सायकैरथ तुतोद तदा विपक्षः ॥ ७७ ॥ राजस्त्रीस्तनयोरकारि सहसा येनान्यथा लिङ्गनव्यापारैकविनोददुर्ललितयोः कार्कश्यलक्ष्मीर्वृथा । तेनाक्रोशत एव तस्य मुरजित्तत्काललोलानलज्वालापल्लवितेन मूर्द्धविकलं चक्रेण चक्रे वपुः ॥ ७८ ॥ श्रियाजुष्टं दिव्यैः सपटहरवैरन्वितम्पुष्पवर्षैर्वपुष्पश्चैद्यस्य क्षणमृषिगणैः स्तूयमानं निरीय । प्रकाशेनाकाशे दिनकरकरान्विक्षिपद्विस्मिताक्षैर्नरेन्द्रैरौपेन्द्रं वपुरथ विशद्धाम वीक्षाम्बभूवे ॥ ७९ ॥ अथ कविवंशवर्णनम् । सर्वाधिकारी सुकृताधिकारः श्रीधर्मनाभस्य बभूव राज्ञः । सवाँक्तदृष्टिर्विरजाः सदैव देवोऽपरः सुप्रभदेवनामा ॥ ८० ॥ ********

कालेमितन्तथ्यमुदर्कपथ्यन्तथागतस्येवजनःसुचेताः । विनानुरोधात्स्वहितेच्छयैवमहीपतिर्यस्यवचश्चकार ॥ ८१ ॥ तस्याभवद्दत्तकइत्युदारःक्षमीमृदुर्धर्म्मपरस्तनूजः । यम्वीक्ष्यवैयासमजातशत्रोर्वचोगुणग्राहिजनैःप्रतीये ॥ ८२ ॥ सर्वेणसर्वाश्रयइत्यनन्द्यमानन्दभाजंजनितञ्जनेन । यश्चद्वितीयंस्वयमद्वितीयोमुख्यःसताङ्गौणमवापनाम ॥ ८३ ॥ श्रीशब्दरम्यकृतसर्गसमाप्तिलक्ष्मलक्ष्मीपतेश्चरितकीर्त्तनचारुमाघः । तस्यात्मजःसुकविकीर्त्तिदुराशयादःकाव्यंव्यधत्तशिशुपालवधाभिधानम् । इतिश्रीशिशुपालवधेश्र्यंकेमहाकाव्येश्रीदत्तकसूनुकविश्रीमाघविरचितेदिव्यास्त्रप्रयोगानन्तरं शिशुपालवधोनामविंशतिमःसर्गः ॥ २० ॥ ******



अत्रटीकायांपाणिनिव्याकरणानुजायिन्याप्रमापकाः ॥

| | | | |
|---|---|---|---|
| विष्णुपुराणम् | १ | क्षीरस्वामी | २३ |
| भागवतः | २ | काव्यप्रकाशः | २४ |
| पाणिनिसूत्रम् | ३ | नीतिवाक्यामृतम् । | २५ |
| वार्त्तिककारः | ४ | अलङ्कारसर्वस्व | २६ |
| भाष्यकारः | ५ | वाल्मिकी | २७ |
| कैयटः | ६ | रत्नावली | २८ |
| वामनः | ७ | वृत्तरत्नाकरः | २९ |
| हेमचन्द्रकोषः | ८ | कामन्दकः | ३० |
| अमरकोषः | ९ | श्रुतिः | ३१ |
| विश्वप्रकाशकोषः | १० | हयलीलावती | ३२ |
| हलायुधकोषः | ११ | दशरूपकः | ३३ |
| शाश्वतकोषः | १२ | वसन्तराजीयः | ३४ |
| वैजयन्तीकोषः | २४ | वौद्धः | ३५ |
| यादवकोषः | १५ | श्रुतिः | ३६ |
| केशवकोषः | १६ | जैमिनिः | ३७ |
| मनुः | १७ | हरिकारिका | ३८ |
| शाकटायनः | १८ | अभिधानचिन्तामणिः | ३९ |
| न्यासोद्योतः | १९ | हारवलीकोषः | ४० |
| काशिका | २० | मेदिनीकोषः | ४१ |
| दण्डी | २१ | त्रिकाण्डशेषकोषः | ४२ |
| सज्जनः | २२ | | |

इतिटीकाप्रमापकाः ॥

इतिसर्गसूची ॥

इतिपञ्चमसर्गस्यतात्पर्यार्थः ॥ ५ ॥ ********************॥

| | श्लोक | पत्र | पंक्ति |
|---|---|---|---|
| अथषष्ठसर्गस्यसूची ॥ | | | |
| अथऋतुवर्णनम् । अथेत्यादिना | १ | १९६ | ९ |
| प्रथमंवसन्तस्यवर्णनम् । नवेत्यादिभिः | २ | १९६ | १० |
| कश्चित्स्वयंप्रियांभिषयन्नाह । इदमित्यादिभिः | ११ | २०० | ९ |
| स्त्रीणांवर्णनम् । वदनेत्यादिभिः | १४ | २०१ | १० |
| प्रोषितभर्तृकायाबन्धुजनसमाश्वासनम् । हृदिधेत्यादिभिः | १७ | २०२ | ११ |
| मधुकरस्त्रीणांवर्णनम् । मधुरयेत्यादि | २० | २०४ | ८ |
| अथग्रीष्मवर्णनम् । रवीत्यादिभिः | २२ | २०४ | ११ |
| अथवर्षावतारमाह । स्फुरदित्यादिभिः | २५ | २०६ | ८ |
| शरद्वर्णनमारभते । ददनमित्यादिभिः | ४१ | २१२ | ९ |
| हेमन्तम्वर्णयति । गजपतीत्यादिभिः | ५५ | २१८ | ९ |
| पुनःकविःकौतुकितयाद्वादशभिर्ऋतुवर्णनम् । अतीत्यादिभिः | ६७ | २२३ | ९ |
| काव्यसन्दोध्यमयूरवर्णनम् । कुर्वन्तमित्यादिना | ७९ | २२९ | ९ |

इतिषष्ठसर्गस्यतात्पर्यार्थः ॥ ६ ॥ *********************** ॥

| | श्लोक | पत्र | पंक्ति |
|---|---|---|---|
| अथसप्तमसर्गस्यसूची ॥ | | | |
| कृष्णस्यसानुचरस्यवीहारलीलावर्णनम् । अन्वित्यादि | १ | २३० | ९ |
| सखीकयाद्वानांनगमनम् । दधतीत्यादिना | २ | २३० | ११ |
| स्त्रीणांनूपादधारणम् । अवसरमित्यादिना | ३ | २३१ | १० |
| तासांविभ्रमसम्पदंप्रपञ्चयति । नखेत्यादिना | ४ | २३२ | ८ |
| कुपितांप्रतिसखीवचनंपञ्चभिराह । नवेत्यादिभिः | ७ | २३३ | ९ |

इतिअष्टमसर्गस्यतात्पर्यार्थः॥ ८ ॥ ********************** ॥

अथनवमसर्गस्यसूची॥

इतिद्वादशसर्गस्यतात्पर्यार्थः ॥१२॥ ******************** ॥

इतिपञ्चदशसर्गस्यतात्पर्यार्थः ॥ १५ ॥ ******************** ॥

इत्येकोनविंशतिसर्गस्यतात्पर्यार्थः ॥ १९ ॥ ******************** ॥

अथविंशतिसर्गस्यसूची ॥

इति विंशतिसर्गस्य तात्पर्यार्थः ॥ २० ॥ इति सूचीपत्रं समाप्तम् ॥

# अथमाघकाव्यस्य शुद्धिपत्त्रम् ॥

| पत्त्र | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ३ | १८ | विभविना | विभाविना |
| ५ | ८ | हिभवान् | हिमवान् |
| ८ | ५ | सर्वन्ति | भवन्ति |
| ९ | १६ | आसनान् | आसनात् |
| १० | ६ | त्रिचू | त्रिच् |
| ११ | २० | शास्त्रन | यज्ञ |
| १३ | १७ | विफसने | विकसने |
| १३ | १८ | जीव | क्षीव |
| १७ | ५ | सस्थ | सुस्थ |
| १८ | ११ | व्रवन्तं | व्रुवन्तं |
| २० | १५ | क्रित्वा | कृत्वा |
| २० | २० | दाप् | आङ् |
| २२ | १ | ज्यासिनि | जासिनि |
| २२ | ९ | निजो | निजौ |
| २३ | १८ | लावुक | लाघुक |
| २८ | १३ | सन्नंता | सन्नन्ता |
| २९ | १४ | शानजा | शानज्भ्रा |
| ३७ | १४ | सवस्य | सवर्णस्य |
| ३९ | ११ | भुंजो | भुंजौ |
| ४५ | १ | ह्वादिः | ह्वादेः |
| ४६ | १४ | अर्त्तिहे | अर्त्तिह्री |
| ४७ | १९ | भन | भवन |
| ५१ | १६ | उद्धन् | उद्धान् |
| ५२ | १६ | अयद्ध्य | अर्यद्ध्य |
| ५३ | २० | दुर्गेध | दुर्गंध |
| ५४ | १४ | दुर्वलः | दुर्वलः |
| ७३ | १३ | मम्पदः | संपदः |
| ९२ | १६ | भागानक्तः | भागात्क्तः |
| ९३ | १२ | मानशी | मनशी |
| ९८ | ८ | याया | यांया |
| ९९ | ३ | रिरोधि | विरोधि |
| ९९ | १० | मोकी | मोरकी |
| ९९ | ११ | सुनपा | स्तनया |
| १०२ | १८ | अनेमि | आनेमि |
| १०५ | ४ | पछ्याचे | पछ्यावे । |
| १०५ | १६ | न्वादु | न्वानु |
| १०६ | १६ | वक्र | चक्र |
| १०७ | ७ | दृभिः | रिभिः |
| १०७ | ७ | घर्य | स्वार्य |
| १०८ | १० | ब्रीडा | ब्रीडा |

| पत्र | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १०८ | २० | वेना | वैना |
| १०९ | २ | च्छांति | च्छती |
| १०९ | ९ | मरू | हरू |
| ११० | ७ | भवन्ति | भवन्ती |
| ११० | १५ | विद्रू | चेद्रूया |
| ११५ | १४ | उपा | अपा |
| ११६ | ७ | रिपु | पुरि |
| ११६ | ८ | माबः | भावः |
| ११७ | १५ | श्रवः | श्रुवः |
| ११९ | ७ | ष्ठुष्ठु | ष्ठुष्टु |
| १२० | १ | पूषा | पुषा |
| १२८ | ३ | कर्भणि | कर्म्मणि |
| १३२ | ३ | मिना | अमिना |
| १३३ | १९ | सम्यक् | अम्यक् |
| १३५ | २० | मीश्वर | मीश्वर |
| १३७ | २० | नानाश्वा | नाश्वा |
| १४१ | १४ | लेक | लोक |
| १४१ | २० | इन | इनि |
| १४४ | १४ | औष्ठो | ओष्ठो |
| १४४ | १८ | दिङा | दियङा |
| १४५ | ६ | अन्नि | अस्मिन् |

| पत्र | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १४६ | २ | कन | कल |
| १४७ | ५ | नील | नील |
| १४८ | १६ | सहस्र | सहस्र |
| १४९ | ६ | हदि | हृदादि |
| १५२ | २ | त्कारीणी | त्कारिणी |
| १५३ | १८ | गान्तु | गातु |
| १५३ | २० | हर्तुं | कर्तुं |
| १५५ | ७ | नोच | इच् |
| १५६ | १६ | द्रवस्य | द्रावस्य |
| १६१ | १७ | नदत्तं | नदुत्तं |
| १६१ | १८ | दाभि | दान |
| १६२ | ७ | दच् | ष्यच् |
| १६३ | ८ | निरकः | किरः |
| १६३ | १४ | भीना | भीत्रा |
| १६४ | ९ | स्रिष्ट | ष्पिष्ठ |
| १६५ | १३ | नाड | नाड |
| १६६ | १६ | इड्भा | इड्डा |
| १६९ | २ | यास्तां | यासां |
| १७१ | २ | हड्डो | घुड्डो |
| १७४ | ६ | क्यादि | अदादि |
| | ९ | त्रिजि | त्रिज |

| पत्र | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १७७ | १० | घिङ्गै | घिङ्गै |
| १८२ | ५ | फुल्ले | फुल्लेति |
| १८५ | २ | पमीप | समीप |
| १८९ | २ | ङ्कार्त्थें | ङ्कार्त्थें |
| १९५ | १२ | ःःः | यिपुः |
| १९८ | १५ | नृग्ग | नुमुग्ग |
| २०२ | ११ | पेद्रे | पेदिरे |
| २०५ | ७ | यस्मन् | यस्मिन् |
| २३० | १० | सह | मह |
| २३० | १६ | भ्यनि | भ्यस्तैनि |
| २३१ | ३ | प्रमाणं | प्रयाणं |
| २३२ | १३ | मस्तुस | मस्तुस् |
| २३३ | २० | वियन | वितय |
| २३५ | १६ | भिषेध | निषेध |
| २३६ | १९ | नरच् | उनरच् |
| २३७ | ५ | असि | अशि |
| २३८ | ८ | उभ | उभय |
| २३८ | १५ | वोपर्ज | वोपसर्ज |
| २४४ | ८ | तादर्थे | नादर्थे |
| २४४ | ८ | वाह्वे | वाहे |
| २४५ | ११ | वाह्वे | वाहे |
| २४४ | २० | राजि | राजयो |
| २४५ | ९ | मयन्ति | नयन्ती |
| २५६ | ६ | कौसुमे | कुसुमे |
| २५६ | ६ | कुसुम | कौसुम |
| २५८ | १० | घन | घैन |
| २६६ | ३ | स्टष्वा | स्पृष्ट्वा |
| २६६ | १० | काला | करा |
| २७३ | २ | इनो | इणो |
| २८१ | ९ | अम्भामि | अम्भांसि |
| २९१ | १२ | धीरना | धीरिना |
| २९४ | ९ | सितैःर्भु | सितैर्भु |
| २९५ | १७ | मभिला | मभिला |
| २९८ | २ | सन्तना | सन्नता |
| ३०० | २ | निष्कलै | निष्फलै |
| ३०४ | ६ | नियुनं | मिथुनं |
| ३०५ | १० | गुन्थपा | गुन्पपा |
| ३१० | १ | महा | महान् |
| ३११ | १६ | क्षलान् | क्षणान् |
| ३२० | २० | अमि | अभि |
| ३२२ | १६ | न्रूहि | न्नूहि |
| ३३६ | ७ | मनुप् | ममप् |

| पत्र | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ३४० | १० | म्रधु | ऋधु |
| ३४१ | ६ | मल्य | मल्प |
| ३४२ | २ | यात्तः | यान्तः |
| ३४३ | १ | मभि | माभि |
| ३४६ | ८ | हिल्वा | हित्वा |
| ३४७ | १२ | अनुनं | अनूनं |
| ३४९ | ८ | क्तिया | क्रिया |
| ३५० | ८ | अजस्रं | अजस्रं |
| ३५२ | १२ | स्नुभने | स्नुघने |
| ३५२ | १९ | खदे | खरेह |
| ३५३ | १५ | वक्तना | वक्रना |
| ३५४ | ६ | निष्पीड | निष्पीड |
| ३५६ | १० | महियः | महीयः |
| ३५८ | १२ | करोत्व | करोत्य |
| ३६५ | १० | प्राप्य | प्राप्य |
| ३६६ | १० | प्राप्त | प्राप्य |
| ३६७ | ११ | नमेन् | नमेन |
| ३६९ | ११ | रप्य | रथ |
| ३७४ | २० | प्रविन्त | प्रवृत्त |
| ३७६ | १२ | कल्ये | कल्पे |
| ३७७ | ११ | ग्रीवा | ग्रीवमा |
| ३७९ | १६ | नित्य | मित्र |
| ३८० | २ | शक्ति | शत्रि |
| ३८० | ११ | लयाच | लायास्तु |
| ३८१ | १ | ज्ज्वाला | ज्वाला |
| ३९१ | ५ | नेन | तेन |
| ३९३ | २ | यज्ञ | यज |
| ३९४ | ११ | ज्ज्वाल | ज्वाल |
| ३९८ | ८ | योत्पते | योत्पल |
| ४०० | १८ | भुंयो | भूंयो |
| ४०१ | १२ | न्यस्य | न्यस्य |
| ४०२ | १५ | उलूको | उलूकः |
| ४०३ | १४ | निव्यतार्यः | दिव्यर्थः |
| ४०३ | १८ | कल्यान | कल्यान |
| ४०५ | ६ | वेवै | वेघै |
| ४०६ | ६ | गजिन्या | गनिन्या |
| ४०६ | ८ | नृविश्वे | नृपविश्वे |
| ४०६ | ११ | क्तनः | क्तैः |
| ४०७ | १६ | जगां | गजां |
| ४०९ | ४ | गण्डेचि | गण्डैश्चि |
| ४१० | ४ | नासिका | नसि |
| ४१० | ४ | किता | हित्वा |

| पत्र | पंक्ति | अशुद्ध | शुद्ध | पत्र | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|---|---|---|
| ४११ | १७ | स्वये | येस्व | ४४१ | १७ | द्वरेदं | दंवद्व |
| ४१२ | ११ | ताम्र | नाम्र | ४४२ | ६ | ग्रहभू | ग्रभू |
| ४१३ | ३ | चूडे | चूडेति | ४४२ | ९ | पुज्य | पूज्य |
| ४१६ | १२ | वन्येभे | वन्येभ | ४४३ | ३ | वक्ष्य | वक्ष |
| ४१६ | १९ | मूल | मूव | ४४३ | १६ | नानि | नानि |
| ४१६ | २० | वन्येभे | वन्येभ | ४४४ | ६ | द्याधि | द्यधि |
| ४२० | १८ | मुज्भ | मुज्भ्र | ४४४ | १३ | भर्त्तु | भर्त्तुं |
| ४२१ | ५ | द्यम्र | द्यम्र् | ४४५ | ११ | त्यरेण | त्यरेण |
| ४२२ | २० | अज्ञे | अजे | ४४७ | १० | परि | परिग |
| ४२३ | १६ | ढुम्र | ढुम्र् | ४४७ | १९ | भृम्नः | धृम्र् |
| ४२४ | ७ | स्खलन्त्यो | स्खलन्त्यौ | ४४८ | १ | चंक्रिण | चक्रिणा |
| ४२६ | ९ | मार्य्ये | मर्य्ये | ४४९ | ७ | नेवासि | अनेवासि |
| ४२७ | १७ | च्यय | व्यय | ४४९ | ८ | रूपर्दि | रूपर्दे |
| ४३३ | १२ | भानो | भास्व | ४५२ | ७ | दंभ्रु | दंभ्रु |
| ४३५ | १८ | अंसौ | अंसं | ४५३ | १८ | चलन | चलन् |
| ४३५ | १९ | ड्वय | द्वय | ४५४ | ७ | माघवे | माधवे |
| ४३९ | ५ | निर्विट्टु | निवेट्टु | ४५५ | ३ | ब्रह्म | ब्राह्म |
| ४४० | ५ | प्रचक्रान्त | चक्रप्रान्तो | ४५६ | १ | न्ययः | प्रत्ययः |
| ४४० | ११ | पणचा | पणवा | ४५७ | १४ | पल्लयो | पल्लवयो |
| ४४१ | १ | पणचा | पणवा | ४६० | ५ | लम्बानि | लम्बिनि |
| ४१ | ३ | कूलिना | कूजिना | ४६० | ९ | विभ्रभाः | विभ्रमाः |

| पत्र | पंक्ति | अशुद्ध | शुद्ध | पत्र | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|---|---|---|
| ४६१ | ४ | ग्रंलि | ग्रंलि | ४९३ | १४ | यावका | याचका |
| ४६१ | १६ | जम | याजम | ४९४ | १६ | कांच | कांचन |
| ४६२ | [illegible] | [illegible] | अंकुर | ४९५ | १६ | भूजं | भुजं |
| | ६ | वानी | वाणी | ४९६ | २ | र्त्तयन्ति | र्त्तयन्ति |
| | १६ | कर्त्तु | कर्तु | ४९९ | १८ | धमुश् | धमुन् |
| | १७ | राशीः | राशिः | ५०० | ११ | संतन | सन्ततः |
| ४७४ | ३ | लघ्व | लब्ध | ५०५ | १० | शुक्तयः | सुक्तयः |
| ४७७ | ३ | क्रतुं | क्रतुं | ५०६ | १४ | वावलो | वाचलो |
| ४७८ | ९ | क्रिया | क्रियाः | ५०७ | १७ | परमु | परमु |
| ४७८ | १० | वृत्ति | वृत्ति | ५१४ | ११ | भ्रुव | ध्रुव |
| ४७९ | १४ | लिवः | लिवः | ५१४ | १६ | ध्रुवगति | ध्रुविधु |
| ४८० | १२ | गक्तितुं | गदितुं | ५१७ | ८ | भास | भ्यास |
| ४८१ | ६ | कृम | कृत्रिम | ५१८ | १५ | रिवं | रयं |
| ४८२ | ६ | ऊंजो | भुंजो | ५१९ | ८ | नीत | नीयत |
| ४८२ | ८ | आताऽ | आऽभू | ५२० | ७ | यदि | यत्कि |
| ४८२ | १५ | वृह्मा | वृह्मा | ५२५ | ११ | भुधा | मुधा |
| ४८३ | ८ | प्रयः | प्रियः | ५२६ | ४ | रम्य | रम्य |
| ४८४ | १८ | सुराम्ब | सुराम्ब | ५२७ | १६ | त्रय | अत्रय |
| ४८५ | २० | वजं | व्रजं | ५३० | १ | मदा | निदार |
| ४८७ | १३ | उम्र्ये | उम्र्ये | ५३० | ३ | वीच | नीच |
| ४८८ | १ | व्राह्मण | ब्राह्मण | ५३४ | १७ | वीदा | विदा |
| ४८९ | १६ | विको | चिको | ५३४ | १८ | भुञ्ज | मुञ्ज |

| पत्र | पंक्ति | अशुद्ध | शुद्ध | पत्र | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|---|---|---|
| ५३८ | १७ | शाला | शाखा | ६१४ | ११ | ननी | मनी |
| ५३९ | १८ | म्बध्य | म्विभि | ६२१ | ९ | प्रेष | प्रेषया |
| ५४५ | ९ | कुचि | कुची | ६२[illegible] | [illegible] | [illegible] | [illegible] |
| ५५२ | १७ | मवति | भविन | ६३१ | ११ | व्यवस्था | व्यस्था |
| ५५३ | २ | लक्ष्यी | लक्ष्मी | ६३७ | ९ | सोना | सेना |
| ५५३ | ६ | ज्वल | ज्वन | ६३८ | १२ | विन[illegible] | [illegible] |
| ५५५ | २ | प्रनिहन | प्रहिन | ६३[illegible] | [illegible] | [illegible]नु | निम्न |
| ५५५ | १८ | पुरुष | परुष | ६४४ | १[illegible] | भीव | भीव |
| ५५६ | १४ | पुरु | परु | ६४८ | ४ | [illegible]ाख्य | काख्य |
| ५५७ | १५ | भूनां | भूतां | ६५४ | १५ | पेद | पेद |
| ५५७ | १९ | सुखे | मुखे | ६५७ | १६ | पेतामांप्रा | [illegible]ात्साया |
| ५५८ | १७ | पेनः | पेतः | ६५७ | १२ | कार्मि | कार्मि |
| ५६३ | ३ | नुजः | नुचरः | ६६४ | १२ | लायकं | लापपं |
| ५६५ | १४ | रूपे | रूपेनि | ६६७ | १२ | शाखेःर | शाखैर |
| ५६५ | १९ | अन्य | अवन्त | ६८३ | ९ | स्फार | स्फुर |
| ५७० | १ | नाम्ना | क्षाम्न | ६९६ | १० | स्पर्द्ध | स्पर्द्ध |
| ५७३ | ४ | ह्यानात् | दाम्नात् | ७१३ | १५ | इत्य | इत्य |
| ५७८ | ७ | शीर्ष | शीर्घ्र | ७१७ | १३ | भारी | भारिणी |
| ५७८ | १५ | लङ्के | लङ्के | ७१८ | ११ | वद्ध | वर्द्ध |
| ५८५ | ७ | जयती | जती | ७२१ | ९ | मर्गान | मर्गाना |
| ५९३ | ४ | ह्यत | ह्यन | ७३० | ८ | काव्ये | काव्य |
| ६०० | १५ | वद | वद्द | | | | |

इतिमाघकाव्यस्याशुद्धिपत्रम्

